काव्यमाला ७०.

श्रीसोमदेवसूरिविरचितं

# यशस्तिलकम् ।

श्रीश्रुतसागरसूरिकृतया व्याख्यया समेतम् ।

पूर्वखण्डम् ।

मूल्यं सपादत्रयं रूप्यकत्रयम् ।

65.

KÂVYAMÂLÂ. 70.

# THE YAS'ASTILAKA

OF

## SOMADEVA SÛRI.

WITH THE COMMENTARY OF S'RUTADEVA SÛRI.

Part I.

EDITED BY

MAHÂMAHOPÂDHYÂYA PAṆḌIT S'IVADATTA,
Head Pandit and Superintendent, Sanskrit Department,
Oriental College, Lahore,

AND

VÂSUDEVA LAXMAṆ S'ÂSTRÎ PAṆAS'IKAR.

PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS.

Bombay:

1916.

*Price 3¾ Rupees.*

काव्यमाला. ७०.

श्रीसोमदेवसूरिविरचितं

# यशस्तिलकम् ।

श्रीश्रुतसागरसूरिकृतया व्याख्यया समेतम् ।

## पूर्वखण्डम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादतनयेन
पं० केदारनाथशर्मणा, मुम्बापुरवासिपणशीकरोपाह्व-
लक्ष्मणशर्मात्मजवासुदेवशर्मणा च संशोधितम् ।

द्वितीयं संस्करणम् ।

तच्च
मुम्बय्यां
तुकाराम जावजी श्रेष्ठिभिः
स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये स्वायसाक्षरैर्मुद्रयित्वा प्रकाशितम् ।

शाकः १८३८, खिस्ताब्दः १९१६.



मूल्यं सपादत्रयं रुप्यकत्रयम् ।

# काव्यमाला ।



## श्रीसोमदेवसूरिविरचितं

# यशस्तिलकचम्पूकाव्यम् ।

श्रीश्रुतसागरसूरिकृतया चन्द्रिकाख्यया व्याख्यया समेतम् ।



### प्रथम आश्वासः ।

श्रियं कुवलयानन्दप्रसादितमहोदयः ।
देवश्चन्द्रप्रभः पुष्याज्जगन्मानसवासिनीम् ॥ १ ॥
श्रियं दिश्यात्स वः श्रीमान्यस्य संदर्शनादपि ।
भवेत्त्रैलोक्यलक्ष्मीणां जन्तुः कन्तु निकेतनम् ॥ २ ॥

---

विद्यानन्दिनमानन्दप्रदं सोमप्रभं जिनम् ।
प्रणम्य संप्रवक्ष्यामि यशस्तिलकचन्द्रिकाम् ॥

**श्रियमिति** । चन्द्रप्रभो देवः श्रियं पुष्यात् लक्ष्मीं करोतु । कथंभूतश्चन्द्रप्रभो देवः । कुवलयानन्दप्रसादितमहोदयः कुवलयं पृथ्वीमण्डलं तस्य आनन्दाय प्रसादितः प्रसन्नीकृतः महान् अस्तमयरहित उदयो येन स तथोक्तः । कथंभूतां श्रियम् । जगन्मानसवासिनीम् जगदेव मानसं जगन्मानसं तत्र वसतीत्येवंशीला जगन्मानसवासिनी तां तथोक्ताम् । उपमालंकारः ॥ १ ॥

**श्रियमिति** । स चन्द्रप्रभो देवो वो युष्मभ्यं श्रियमभ्युदयनिःश्रेयसलक्षणोपलक्षितां लक्ष्मीं दिश्यात् [सः] अतिसर्जयतु । कथंभूतश्चन्द्रप्रभो देवः । श्रीमान् । बाह्याभ्यन्तरसमवसरणकेवलज्ञानादिलक्ष्मीर्विद्यते यस्य स भवति श्रीमान् । यः स्वयं श्रीमान् भवति स भक्तेभ्यः श्रियं दातुं समर्थ इत्यर्थः । स कः । यत्तदोर्नित्यसंवन्धात् यस्य भगवतः संदर्शनादपि अवलोकनमात्रादपि सम्यक्त्वादपि च जन्तुर्जीवस्त्रैलोक्यलक्ष्मीणां धरणेन्द्रनरेन्द्रेन्द्रसंपदां कन्तु मनोहरं निकेतनं मन्दिरं भवति । अतिशयालंकारः ॥ २ ॥

श्रियं देयात्स वः कामं यस्योन्मीलति केवले ।
त्रैलोक्यमुत्सवोदारं पुरमेकमिवाभवत् ॥ ३ ॥
यस्याङ्घ्रिनखनक्षत्रविजृम्भाय नभस्यते ।
नमज्जगत्रयीपालकुन्तलाभोगडम्बरः ॥ ४ ॥
बालारुणायते यस्य पादद्वितयमण्डलम् ।
प्रह्वत्रिविष्टपाधीशकिरीटोदयकोटिषु ॥ ५ ॥
नखोज्जृम्भकराभोगकेसरं यत्क्रमद्वयम् ।
नम्रामरवधूनेत्रदीर्घिकास्वम्बुजायते ॥ ६ ॥
यत्पदस्मृतिसंभाराद्भुवनत्रयनायकाः ।
वाङ्मनोदैवसिद्धीनां सिद्धादेशादिवेशते ॥ ७ ॥

---

**श्रियमिति** । भगवान् चन्द्रप्रभो देवः वो युष्मभ्यं श्रियमभ्युदयोदय[स]लक्षणोपलक्षितां लक्ष्मीं देयात् ददातु । कथम् । कामं यथेष्टं तृप्तिपर्यन्तम् । स कः । यत्तदोर्नित्यसंबन्धात् यस्य भगवंतश्चन्द्रप्रभस्य केवले केवलज्ञाने उन्मीलति प्रादुर्भवति । तत्त्रैलोक्यमेकं पुरमिवैकनगरमिवाभवत् बभूव । एकत्र मिलितमित्यर्थः । कथंभूतं त्रैलोक्यम् । उत्सवोदारमुत्सवेन महोत्सवेन उदारमतिमनोहरमतिशयेन चित्तरञ्जकम् ॥ ३ ॥

**यस्येत्यादि** पञ्चभिः श्लोकैः कुलकम् । तत्रान्त्यश्लोके तस्मै जिनेन्द्राय पुनः पुनर्नमः इति क्रियाकारकसंबन्धः । यस्य जिनेन्द्रस्य अङ्घ्रिनखनक्षत्रविजृम्भाय नमज्जगत्रयीपालकुन्तलाभोगडम्बरो नभस्यते अङ्घ्रिनखा एव नक्षत्राणि अतिनिर्मलत्वात् तेषां विजृम्भाय प्रसृत्यै प्रसरणाय नमन्तो नम्रीभवन्तो ये जगत्रयीपाला धरणेन्द्रनरेन्द्रेन्द्रादयस्तेषां कुन्तलाभोगडम्बरः कुन्तलविस्ताराटोपो नभस्यते नभ इवाचरति चमत्करोति ॥ ४ ॥

**बालेति** । गौडीया रीतिः । यस्य भगवतो जिनेन्द्रस्य पादद्वितयमण्डलं चरणयुगलबिम्बं कर्तृभूतं प्रह्वत्रिविष्टपाधीशकिरीटोदयकोटिषु बालारुणायते प्रह्वा नम्रीभूता ये जगत्रयविष्टपाधीशास्तेषां किरीटानि मुकुटानि तान्येव उदय उदयाचलस्तस्य कोटिषु अग्रेषु बालारुणायते बालभास्कर इवाचरति । उपमालंकारः ॥ ५ ॥

**नखेति** । अम्बुजमिवाचरति । नम्राः प्रह्वीभूताः या अमरवध्वः शचीप्रभृतयो देवाङ्गनास्तासां नेत्राण्येव दीर्घिका जलभृतवापिकाः तास्तथोक्तास्तासु । कथंभूतं यत्क्रमद्वयम् । नखोज्जृम्भकराभोगकेसरम् नखानां उज्जृम्भाः प्रसरणशीला ये कराः किरणास्तेषामाभोग आटोपः स एव केसराणि किञ्जल्का यस्मिन् तत्तथोक्तम् । उपमालंकारः ॥ ६ ॥

**यद्दिति** । यत्पदस्मृतिसंभारात् यस्य भगवतो जिनेन्द्रस्य पदयोः स्मृतिरनुचि-

तस्मै सत्कीर्तिपूर्ताय विश्वदृश्वैकमूर्तये ।
नमः शमसमुद्राय जिनेन्द्राय पुनः पुनः ॥ ८ ॥

अपि च ।

भूर्भुवःस्वस्त्रयं यत्र वेलाचलकुलायते ।
अपाराय नमस्तस्मै जिनबोधपयोधये ॥ ९ ॥

किं च ।

मतेः सूतेर्बीजं सृजति मनसश्चक्षुरपरं
यदाश्रित्यात्मायं भवति निखिलज्ञेयविषयः ।
विवर्तैरत्यन्तैर्भरितभुवनाभोगविभवैः
स्फुरत्तत्वं ज्योतिस्तदिह जयतादक्षरमयम् ॥ १० ॥

---

न्तनं तस्याः संभारः प्राचुर्यं स तथोक्तस्तस्मात् । भुवनत्रयनायकाः धरणेन्द्रनरेन्द्रदेवेन्द्राः वाङ्मनोदैवसिद्धीनाम् । सिद्धिशब्दः प्रत्येकमभिसंवध्यते । तेनायमर्थः—वाक्सिद्धिर्मनःसिद्धिर्दैवसिद्धिस्तासां तथोक्तानां ईशते स्वामिनो भवन्ति । कस्मात् । उत्प्रेक्षते—सिद्धादेशादिव । अयमर्थ एवं भवति । नैमित्तिकं वचनं सिद्धादेश उच्यते तस्मादिव । इत्यनेन नीतिशास्त्रोक्तं सिद्धित्रयं भवति । उत्प्रेक्षालंकार उपमालंकारो वा ॥ ७ ॥

**तस्मा इति** । तस्मै त्रिभुवनप्रसिद्धाय जिनेन्द्राय जिनानां गणधरदेवादीनामिन्द्रः स्वामी जिनेन्द्रस्तस्मै जिनेन्द्राय पुनः पुनर्वारं वारं नमो नमस्कारोऽस्तु । कथंभूताय तस्मै । सत्कीर्तिपूर्ताय सती अवाधिता या कीर्तिः पुण्यगुणानुकीर्तनं तया पूर्तः परिपूर्णः स तथोक्तस्तस्मै । पुनः कथंभूताय तस्मै । विश्वदृश्वैकमूर्तये विश्वदृश्वनी एका अद्वितीया केवलज्ञानलक्षणा मूर्तिः स्वरूपं यस्य स तथोक्तस्तस्मै । पुनः कथंभूताय । शमस्य उत्तमक्षमायाः कर्मक्षयस्य वा समुद्रः तथोक्तस्तस्मै । अतिशयालंकारः ॥ ८ ॥

अपि च इदानीं केवलज्ञानं स्तूयते—**भूर्भुव इत्यादि** । तस्मै जिनवोधपयोधये नमः । जिनवोधः केवलज्ञानं स एव पयोधिः समुद्रः अपर्यन्तत्वात् गुणरत्नसंभृतत्वाच्च स तथोक्तस्तस्मै । कस्मै । यस्मिन् केवलनिवोधपयोधौ भूर्भुवःस्वस्त्रयं भूः पृथ्वीलोकः भुव अधोलोकः स्व ऊर्ध्वलोकस्तेषां त्रयं भूर्भुवःस्वस्त्रयं वेलाचलकुलायते वेलाचलाः समुद्रविकृतिताडनपर्वतास्तेषां कुलं समूहो वेलाचलकुलं वेलाचलकुलमिवाचरति वेलाचलकुलायते । कथंभूताय जिनवोधपयोधये । अपाराय लोकालोकव्यापकत्वात् पर्यन्तरहिताय । उपमालंकारः । रूपकालंकारः ॥ ९ ॥

अपि च इदानीं श्रुतज्ञानं स्तूयते—**मतेरित्यादि** । तद्गणधरदेवादीनां श्रुतकेवलिनां प्रसिद्धमक्षरमयं ज्योतिः श्रुतज्ञानमिहास्मिन् यशस्तिलकनाम्नि ग्रन्थारम्भे जयतात्

सर्वज्ञकल्पैः कविभिः पुरातनैरवीक्षितं वस्तु किमस्ति संप्रति।
ऐदंयुगीनस्तु कुशाग्रधीरपि प्रवक्ति यत्तत्सदृशं स विस्मयः॥ ११॥
कृतीः परेषामविलोकमानस्तदुक्तिवक्तापि कविर्न हीनः।
कृतेक्षणो राजपथेन सम्यक्प्रयानिव प्रत्युत विस्मयाय॥ १२॥
कृत्वा कृतीः पूर्वकृताः पुरस्तात्प्रत्यादरं ताः पुनरीक्षमाणः।
तथैव जल्पेदथ योऽन्यथा वा स काव्यचोरोऽस्तु स पातकी च॥ १३॥

---

सर्वोत्कर्षेण वर्तताम्। तस्मै अस्माकं नमस्कार इत्यर्थः। तत्किम्। यत् श्रुतज्ञानमक्षरमयं ज्योतिर्ज्ञानमाश्रित्य सेवित्वा ग्रन्थतोऽर्थतश्च आश्रित्य अनुशील्य पुनः पुनरभ्यस्य अयं योगिनां प्रत्यक्षः आत्मा जीवो मनस आत्मनः अपरमद्वितीयं चक्षुर्लोचनं सृजति। अयमात्मा (किंतु) निखिलज्ञेयविषयश्च भवति लोकालोकस्वरूपज्ञापको भवति। अपरं कथंभूतं अक्षरमयं ज्योतिः। स्फुरत्तत्वं स्फुरन्ति चमत्कुर्वन्ति तत्वानि जीवादिद्रव्याणि यस्मिन् ज्योतिषि तत्तथोक्तम्। कैः कृत्वा स्फुरत्तत्वम्। विवर्तैर्नरकादिपर्यायैः। कथंभूतैर्विवर्तैः। अत्यन्तैः पर्यन्तरहितैः। नतैरित्यर्थः। अपरं कथंभूतैर्विवर्तैः। भरितः पूरितः संपूरितः भुवनस्य त्रैलोक्यस्य आभोगविभवो विस्तारविभवस्वरूपो यैस्ते भरितभुवनाभोगविभवास्तैस्तथोक्तैः। द्रव्याणां पर्यायाणां च स्वरूपकमित्यर्थः। जात्यलंकारः। अतिशयालंकारः॥ १०॥

**सर्वज्ञकल्पैरित्यादि**। पुरातनैः कविभिः चिरंतनाचार्यैः गौतमस्वामिसमन्तभद्राकलङ्कदेवविद्यानन्दिभिश्चिरंतनाचार्यैः अवीक्षितं वस्तु अनवलोकितं वस्तु अविज्ञातः पदार्थः किमस्ति। अपि तु न किमप्यस्ति। कथंभूतैः पुरातनैः कविभिः। सर्वज्ञकल्पैः सर्वज्ञादीषदपरिसमाप्तैः सर्वज्ञसमानैरित्यर्थः। 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति वचनात्। ऐदंयुगीनस्तु कविः अस्मिन् युगे भवः ऐदंयुगीनः दुःखमयकालोत्पन्नः संप्रति कलौ काले कुशाग्रधीरपि कुशाग्रवत् दर्भाग्रवत् तीक्ष्णा धीर्बुद्धिर्यस्येति स तथोक्तः अतिसूक्ष्मबुद्धिः यत्तत्सदृशं प्रवक्ति चिरंतनाचार्यसदृशं ब्रूते काव्ये कवते स विस्मय आश्चर्यं वर्तते। आक्षेपालंकारः॥ ११॥

**कृतीरित्यादि**। परेषामपरकवीनां कृतीः काव्यानि अविलोकमानोऽनिरीक्षमाणः सन् तदुक्तिवक्ता अपि चिरंतनाचार्यकाव्यार्थवक्ता कविर्हीनो न भवति, किंतूत्कृष्ट एव भवति। कृतेक्षण उत्पादितचक्षुः पुमान् राजपथेन। कारकाणां विवक्षितत्वादाधारेऽपि तृतीया। राजमार्गेण सम्यक् अस्खलिततया प्रयानिव गच्छन्। इवशब्दः पादपूरणार्थः। प्रत्युत विशेषेण विस्मयाय आश्चर्यार्थं भवति। आक्षेपालंकारः॥ १२॥

**कृत्वेत्यादि**। स कविः काव्यचोरोऽस्तु भवतु। न केवलं काव्यचोरः स कविः पापवांश्च भवतु। स कः। यः कविः पूर्वकविकृताश्चिरंतनाचार्यनिष्पादिताः कृतीः

असहायमनादर्शं रत्नं रत्नाकरादिव ।
मत्तः काव्यमिदं जातं सतां हृदयमण्डनम् ॥ १४ ॥
उक्तयः कविताकान्ताः सूक्तयोऽवसरोचिताः ।
युक्तयः सर्वशास्त्रान्तास्तस्य यस्यात्र कौतुकम् ॥ १५ ॥
किंचित्काव्यं श्रवणसुभगं वर्णनोदीर्णवर्णं
किंचिद्वाच्योचितपरिचयं हृच्चमत्कारकारि ।
अत्रासूयेत्क इह सुकृती किं तु युक्तं तदुक्तं
यद्व्युत्पत्त्यै सकलविषये स्वस्य चान्यस्य च स्यात् ॥ १६ ॥

---

काव्यानि पुरस्तादग्रतः कृत्वा पश्चात् प्रत्यादरपूर्वकं यथा भवन्त्येवं ताः । पुनर्वारंवारमीक्षमाणोऽवलोकमानः सन् तथैव जल्पेत् अन्यथा वा जल्पेत् जल्पति रचयति । उपमालंकारः ॥ १३ ॥

**असहायमित्यादि** । इदं काव्यं **यशस्तिलक**नामधेयं काव्यं **यशोधरमहा**राजनामधेयचरितं च मत्तः श्री**सोमदेवाचार्या**ज्जातमुत्पन्नम् । कथंभूतमिदं काव्यम् । असहायमद्वितीयं सहायरहितं च । अपरं कथंभूतमिदं काव्यम् । अनादर्शं उपनिबन्धसामग्र्यनपेक्षकम् । अपरं कथंभूतम् । सतां विद्वज्जनानां हृदयमण्डनं हृदयस्थलविभूषणप्रायम् । कस्मात्किमिव । रत्नाकरात् समुद्रात् रत्नखनेश्च रत्नमिव माणिक्यमिव । उपमालंकारः ॥ १४ ॥

**उक्तय इत्यादि** । अत्रास्मिन् काव्ये यस्य पुरुषस्य कौतुकं विनोदो वर्तते तस्य पुरुषस्य उक्तयः काव्यकरणे नवीनार्थोद्भावना भवन्ति । कथंभूताः उक्तयः । कविताकान्ताः नवीनकाव्यकरणे मनोहराः । तथा—अवसरोचिताः प्रस्तावयोज्याः सूक्तयः सुभाषितानि भवन्ति । तथा—सर्वशास्त्रान्ता अवसानपर्यन्ताः सर्वशास्त्रसंबन्धिन्यस्तर्कव्याकरणच्छन्दोलंकारसिद्धान्तस्यादित्यादयस्तद्युक्तयो विचारणीयाश्च भवन्ति । अस्य शास्त्रस्य फलसूचनप्रायोऽतिशयालंकारः ॥ १५ ॥

**किंचिदित्यादि** । किंचिद्विवक्षितं वक्तुमिष्टं काव्यं वर्णनोदीर्णवर्णं सद्वर्णनया उत्कटा वर्णा अक्षराणि यस्मिन् वाक्ये तत्तथोक्तम् । श्रवणसुभगं कर्णामृतप्रायं शब्दडम्बरत्वात् कर्णसुखदं भवति । किंचिदपरं काव्यं वाच्योचितपरिचयं सदर्थबहुलतया हृच्चमत्कारकारि भवति सतां प्रीतिकरं भवति । अर्थबहुलत्वात् । अस्मिञ्शब्दाडम्बरसहिते काव्ये इह अस्मिन् संसारे को विद्वान् अत्रासूयेत् कोपं कुर्यात् । अपि तु न कश्चिदित्यर्थः । क्रोधात् असूयेत् कोपं कुर्यात् । शब्दाडम्बरकाव्यकोपः कर्तुं न युज्यते । किंतु विशेषमाह—[तत्र] उक्तं काव्यं युक्तं तत् काव्यं स्वस्य चान्यस्य सकलविषय इह अस्मिन् संसारे व्युत्पत्त्यै स्याद्भवेत् । अत्राप्याक्षेपालंकारः ॥ १६ ॥

आजन्मसमभ्यस्ताच्छुष्कात्तर्कात्तृणादिव ममास्याः।
मतिसुरभेरभवदिदं सूक्तिपयः सुकृतिनां पुण्यैः॥ १७॥
वाच एव विशिष्टानामनन्यसमवृत्तयः।
स्वस्यातिशायिनं हेतुमाहुः कान्ता लता इव॥ १८॥
वागर्थः कविसामर्थ्यं त्रयं तत्र द्वयं समम्।
सर्वेषामेव वक्तॄणां तृतीयं भिन्नशक्तिकम्॥ १९॥
लोको युक्तिः कलाश्छन्दोऽलंकाराः समयागमाः।
सर्वसाधारणाः सद्भिस्तीर्थमार्ग इव स्मृताः॥ २०॥

---

**आजन्मसमभ्यस्तादित्यादि।** मम सोमदेवसूरेः संबन्धिन्या अस्याः प्रत्यक्षीभूतायाः सकाशात् मतिसुरभेर्बुद्धिधेनुकायाः इदं प्रत्यक्षीभूतं सूक्तिपयः यशस्तिलककाव्यक्षीरं सुकृतिनां विद्वज्जनानां पुण्यैः कृत्वा अभवत्। मतिसुरभेः सूक्तिपयः काव्यक्षीरमपि कस्मादभवत्। आजन्मसमभ्यस्तात् जन्मपर्यन्तमास्वादितात् तर्कात् प्रमाणशास्त्रात् तृणादिव घासचर्वणादिव। सूक्तिक्षीरं बभूवेत्यर्थः। उपमारूपकालंकारादयं संकरालंकार इत्यर्थः॥ १७॥

**वाच इत्यादि।** विशिष्टानां वाच एव वाण्य एव स्वस्य आत्मनः अतिशायिनं अतिशयवन्तं हेतुं वक्तारमाहुर्ब्रुवन्ति। कथंभूता वाचः। अनन्यसमवृत्तयः न अन्यसमा अपरकविसदृशी वृत्तिः प्रवृत्तिर्यासां ताः तथोक्ताः। पुनः कथंभूता वाचः। कान्ता अतिमनोहरा अतिप्रौढिमयुक्ताः। अपरं कथंभूताः। उत्प्रेक्षिता लता इव यस्य वृक्षस्य ईदृश्यो लताः शाखा वर्तन्ते स वृक्षो महान् भविष्यतीति। अनुमानालंकारः॥ १८॥

**वागित्यादि।** काव्यकरणे काव्यरचनायां तावत् वाक् स्याद्यन्तश्च शब्दो विलोक्यते। अपरं अर्थो वाच्यं च विलोक्यते तत्र कविसामर्थ्यं द्विविधम्। तथा चोक्तम्—'संस्कारोत्थं स्वभावोत्थं सामर्थ्यं द्विविधं कवेः। तत्र शास्त्राश्रयं पूर्वमन्यदात्मोत्थसंश्रयम्॥' एतत्त्रयं काव्यरचनायां सामर्थ्यं विलोक्यते। तत्र त्रिषु सामर्थ्येषु मध्ये द्वयं शब्दार्थलक्षणं सामर्थ्यं सर्वेषामेव वक्तॄणां कवीनां समं साधारणं वर्तते। यतः सर्वेऽपि कवयः स्याद्यन्तत्याद्यन्तशब्दवन्तो भवन्ति। स्वस्वसिद्धान्तानुसारेण अर्थं वाच्यं जानन्ति। परं तृतीयं कविसामर्थ्यलक्षणं सामर्थ्यं भिन्नशक्तिकम्। अतिशयालंकारः॥ १९॥

**लोक इत्यादि।** लोको व्याकरणशास्त्रम्, युक्तिः प्रमाणशास्त्रम्, कला लिखितपठितादिशब्दाः सप्ततिसंख्याः, छन्दो मात्रावर्णभेदेन द्विविधम्, अलंकाराः शब्दालंकारा अर्थालंकाराश्च, समयागमाः जिनजैमिनिकपिलकणचरचार्वाकशाक्यानां सिद्धान्ताः, सर्वसाधारणाः सद्भिः स्मृताः कथिताः प्रतिपादिताः। क इव। तीर्थमार्ग इव। यथा तीर्थमार्गे गङ्गादिमार्गे ब्राह्मणाश्चलन्ति, चाण्डाला अपि गच्छन्ति, नास्ति तत्र दोषः।

अर्थो नाभिमतं शब्दं न शब्दोऽर्थं विगाहते ।
स्त्रीवृन्दमिव मन्दस्य दुनोति कविता मनः ॥ २१ ॥
दुर्जनानां विनोदाय बुधानां मतिजन्मने ।
मध्यस्थानां न मौनाय मन्ये काव्यमिदं भवेत् ॥ २२ ॥
सुकविकथामाधुर्यप्रबन्धसेवातिवृद्धजाड्यानाम् ।
पिचुमन्दकन्दलीष्विव भवतु रुचिर्मद्विधोक्तिषु बुधानाम् ॥ २३ ॥
न गद्यं पद्यमिति वा सतां कुर्वीत गौरवम् ।
किंतु किंचित्स्वसंवेद्यमन्यत्सुखमिव स्त्रियाः ॥ २४ ॥

---

तथा व्याकरणादिशास्त्रं जैनेन्द्रादिकं सर्वैरपि पठ्यते, न तत्र दोषः कोऽप्यस्ति। उपमालंकारः ॥ २० ॥

**अर्थ इत्यादि** । कविता कवीन्द्रत्वं मन्दस्य जडस्य कवेर्मनो दुनोति । अर्थोऽभिमतं न शब्दम्, शब्दोऽर्थं न विगाहते प्रवेशं न करोति । मन्दस्य नपुंसकस्य स्त्रीवृन्दमिव। यथा स्त्रीवृन्दं भोक्तुं न शक्नोति तथा च अनुभवितुं न शक्नोति । उभयशक्तिरहितत्वात् । उपमालंकारः ॥ २१ ॥

**दुर्जनानामित्यादि** । अहं एवं मन्ये । कथमिति चेत् । इदं काव्यं इदं प्रत्यक्षीभूतं यशस्तिलकनाम काव्यं दुर्जनानां मिथ्यादृष्टीनां विनोदाय कौतुकोत्पादनाय भवेत् भविष्यति । मध्यस्थानां मिश्रधर्माणां मौनाय न भविष्यति । तेऽपीदं पठिष्यन्ति इत्यर्थः । अतिशयालंकारः ॥ २२ ॥

**सुकवीत्यादि** । मद्विधोक्तिषु अहं सोमदेवसूरिः आचार्यः विधः प्रकारो येषां ते मद्विधाः मद्विधानामुक्तयः शास्त्राणि मद्विधोक्तयस्तासु । बुधानां विद्वज्जनानां रुचिरभिलाषः । श्रद्धेति यावत् । भवतु संजायताम् । कथंभूतानां बुधानाम् । सुकविकथामाधुर्यप्रबन्धसेवातिवृद्धजाड्यानाम् शोभनाः कवयः व्यासश्रीहर्षमाघकालिदासादयस्तेषां कथाः शास्त्राणि तत्र योऽसौ माधुर्यप्रबन्धः कर्णामृतप्रायरचना तस्याः सेवा आस्वादनं तया अतिवृद्धं अतिप्रकर्षमागतं जाड्यं जडत्वं येषां ते तथोक्तास्तेषाम् । मद्विधोक्तिषु कास्विवं । पिचुमन्दकन्दलीष्विव निम्बतरुपल्लवेष्विव । यथा मधुरमास्वादयन् पुमान् कण्ठे जाड्यवान् भवति, तद्विनाशार्थं निम्बपत्राणि कटुकान्यपि भक्षयति, तद्भक्षणे तस्य कण्ठजडता विनश्यति, तथेदं यशस्तिलककाव्यम् अधीयानानां मूर्खत्वं विनश्यति इति भावः । उपमालंकारः ॥ २३ ॥

**न गद्यमित्यादि** । इदं काव्यं गद्यमिति च भणित्वा पद्यमिति वा भणित्वा सतां विद्वज्जनानां गौरवमादरं न कुर्वन्ति । किंतु किं तर्हि भणित्वा गौरवं कुर्वन्ति इत्याह । अस्मिन् काव्ये किंचित् पूर्वं अनिर्वचनीयं अन्यत् अपरं सुखं परमानन्दलक्षणं वर्तते ।

त एव कवयो लोके येषां वचनगोचरः ।
सपूर्वोऽपूर्वतामर्थो यात्यपूर्वः सपूर्वताम् ॥ २५ ॥
ता एव सुकवेर्वाचस्तिरश्चामपि याः श्रुताः ।
भवन्त्यानन्दनिष्यन्दामन्दरोमाञ्चहेतवः ॥ २६ ॥
न चैकान्तेन वक्रोक्तिः स्वभावाख्यानमेव वा ।
बुधानां प्रीतये किं तु द्वयं कान्ताजनेष्विव ॥ २७ ॥
अबुधेऽप्युक्तियुक्तिज्ञे कवीनामुत्सवो महान् ।
गुणाः किं न सुवर्णस्य व्यज्यन्ते निकषोपले ॥ २८ ॥

---

कथंभूतं सुखम् । स्वसंवेद्यं आत्मनैवानुभवनीयम् । स्त्रिया इव । यथा स्त्रियाः भुज्यमानाया यत्सुखं गद्यं उक्तिगोचरं वचनगोचरं पद्यं चरणाद्यासनविन्याससंजातं सुखं न भवति, किं तु अन्यत् स्वसंवेद्यं सप्तमधातुक्षरणं सुखं भवति । उपमालंकारः ॥ २४ ॥

**त एवेत्यादि** । लोके संसारे त एव पुरुषाः कवयः कथ्यन्ते । येषां पुरुषाणां वचनगोचरः सपूर्वः सर्वलोकप्रसिद्धार्थः अपूर्वतां याति प्राप्नोति । अपूर्वः अर्थः अप्रसिद्धः अर्थः सपूर्वतां याति अनुभूतमिव चमत्करोति । अतिशयालंकारः ॥ २५ ॥

**ता एवेति** । ता एव सुकवेर्वाचो भवन्ति याः श्रुता आकर्णिताः सत्यः तिरश्चामपि पशूनामपि [आसतां तावन्मनुष्याः] आनन्दनिष्यन्दामन्दरोमाञ्चहेतवो भवन्ति । आनन्दः परमानन्दलक्षणं सौख्यं तस्य निष्यन्दः क्षरणम् आनन्दनिष्यन्दश्चामन्दो निबिडो योऽसौ रोमाञ्चो रोमहर्षणं आनन्दनिष्यन्दामन्दरोमाञ्चौ तयोर्हेतवः कारणानि भवन्ति । अतिशयालंकारः ॥ २६ ॥

**न चेत्यादि** । एकान्तेन वक्रोक्तिश्चतुरालापालंकारविशेषश्च स्वभावाख्यानमेव वा स्वभावाख्यानं चित्तार्पणं जातिनामालंकारश्च । बुधानां विद्वज्जनानां प्रीतये हर्षाय प्रेम्णे च न भवति । किं च द्वयं वक्रोक्तिः स्वभावाख्यानं च बुधानां प्रीतये भवति । कान्ताजनेष्विव । यथा कान्ताजनेषु एकान्तेन वक्रोक्तिः कुटिलवचनं प्रीतये न भवति, स्वभावाख्यानं वातिव्रीडतया स्वाभिप्रायार्पणं च प्रीतये न भवति । किंतु द्वयं प्रीतये भवति किंचिद्वक्रोक्तिः, किंचित्स्वभावाख्यानम्, एतद्द्वयं मिश्रं प्रीतये भवति शृङ्गाररसप्रधानम् । उपमालंकारः ॥ २७ ॥

**अबुधेत्यादि** । अबुधेऽपि अपण्डितेऽपि परम् । उक्तियुक्तिज्ञे उक्तीनां युक्तिं जानातीति उक्तियुक्तिज्ञस्तस्मिन् । कवीनां विद्वज्जनानां महानुत्सवो भवति । अमुमेवार्थं आक्षेपेण द्रढयति—सुवर्णस्य गुणाः वर्णिका निकषोपले कषपट्टिकापाषाणे किं न व्यज्यन्ते । अपि तु व्यज्यन्त एव । आक्षेपालंकारः । उक्तं च—'उक्तिर्यत्र प्रतीतिर्वा प्रतिषेधश्च जायते । आचक्षते तमाक्षेपमलंकारं बुधा यथा' ॥ २८ ॥

अवक्तापि स्वयं लोकः कामं काव्यपरीक्षकः ।
रसपाकानभिज्ञोऽपि भोक्ता वेत्ति न किं रसम् ॥ २९ ॥
वृथा वक्तुः श्रमः सर्वो निर्विचारे नरेश्वरे ।
प्राज्यभोज्यविधिः कः स्यात्तृणस्वादिनि देहिनि ॥ ३० ॥
यः पार्थिवत्वसामान्यान्माणिक्याश्मसमागमः ।
पार्थिवः पार्थिवो नूनं वृथा तत्र कवेः श्रमः ॥ ३१ ॥
अङ्गनावद्गिरोऽगण्याः प्रायेणान्यपरिग्रहात् ।
स्वयं विचारशून्यो हि प्रसिध्या रज्यते जनः ॥ ३२ ॥
यः स्वयं कवते नैव यश्चोक्तौ मूढधीश्वरः ।
मरणादपि दुःखाय काव्यकीर्तिस्तयोः पुरः ॥ ३३ ॥

---

**अवक्तापीत्यादि** । लोकः स्वयं अवक्तापि अकविरपि कामं यथेष्टं काव्यपरीक्षको भवति काव्यगुणदोषज्ञायकः स्यात् । अमुमेवार्थं आक्षेपेण द्रढयति—रसपाकानभिज्ञोऽपि शर्करापाकस्य अविज्ञायकोऽपि भोक्ता आस्वादकः पुमान् किं रसं न वेत्ति । अपि तु वेत्त्येव । अयमुक्तिनामा आक्षेपालंकारः ॥ २९ ॥

**वृथेत्यादि** । निर्विचारे नरेश्वरे विचाररहिते राजनि वक्तुः कवेः सर्वोऽपि परिश्रमः [किं पुनः स्तोकोऽप्यायासः] वृथा निरर्थको निष्फलो भवति । तृणस्वादिनि घासचर्विणि देहिनि पशौ प्राज्यभोज्यविधिः प्रचुरघृतभोजनविधानं कः स्यात् । अपि तु न कश्चिदपि स्यादित्यर्थः । अयमप्याक्षेप एव ॥ ३० ॥

**य इत्यादि** । यः पार्थिवो नरेन्द्रः पार्थिवत्वस्य सामान्यात् माणिक्याश्मसमागमो भवति ननु माविशेषरहितंभावात् । तत्र पार्थिवे राजनि कवेः कवीन्द्रस्य सर्वोऽपि श्रमः काव्यरचनाप्रयासो वृथा फल्गुर्भवति अन्तर्गडु स्यात् । रूपकालंकारः ॥ ३१ ॥

**अङ्गनावदित्यादि** । गिरो वाण्यः प्रायेण बहुलतया अन्यपरिग्रहात् विद्वज्जनस्वीकारादगण्या माननीया भवन्ति एतत् शास्त्रं एते विद्वांसः पठन्ति, इदं शास्त्रं विशिष्टं भवतीति काव्यं मानयन्ति । किंवत् । अङ्गनावत् । एषा स्त्री अनेन राज्ञा परिगृहीता वर्तते तर्हि एषा स्त्री अतीव रुचिरा भविष्यतीति मन्यते । अमुमेवार्थान्तरन्यासेन द्रढयति—हि यस्मात् कारणात् जनो लोकः स्वयं आत्मना विचारशून्योऽपि निर्विवेकोऽपि प्रसिध्या कृत्वा रज्यते रागं करोति । अर्थान्तरन्यासालंकारः ॥ ३२ ॥

**य इत्यादि** । यः पुमान् स्वयं आत्मना नैव कवते न नवीनं काव्यं करोति, यश्च पुमान् उक्तौ परकीयशास्त्रे मूढधीश्वरः व्याख्यानकर्ता न भवति, तयोर्द्वयोः पुरुषयोः

अन्तःसारं भवेद्रत्नं बहिःकाचं च सुन्दरम् ।
यथा तथा कवेः काव्यमकवेश्च विभाव्यताम् ॥ ३४ ॥
निःसारस्य पदार्थस्य प्रायेणाडम्बरो महान् ।
न हि स्वर्णे ध्वनिस्तादृक्कंसे यादृक्प्रजायते ॥ ३५ ॥
काव्यकथासु त एव हि कर्तव्याः साक्षिणः समुद्रसमाः ।
गुणगणमन्तर्निदधति दोषमलं ये बहिश्च कुर्वन्ति ॥ ३६ ॥
आत्मस्थितेर्वस्तु विचारणीयं न जातु जात्यन्तरसंश्रयेण ।
दुर्वर्णनिर्वर्णविधौ बुधानां सुवर्णवर्णस्य मुधानुबन्धः ॥ ३७ ॥

---

पुरः अग्रे काव्यकीर्तिः काव्यप्रशंसनं मरणादपि दुःखाय भवति दुःखनिमित्तं स्यात् । जात्यलंकारः ॥ ३३ ॥

**अन्तःसारमित्यादि** । यथा रत्नं अन्तःसारं भवेत्, काचं च बहिर्बाह्ये सुन्दरं मनोहरं भवेत्, तथा यथासंख्यं कवेः सुकवेरकवेश्च कुकवेः काव्यं विभाव्यताम्। विचार्यतामिति यावत् । उपमालंकारः ॥ ३४ ॥

**निःसारस्येत्यादि** । निःसारस्य निकृष्टस्य पदार्थस्य वस्तुनः प्रायेण बहुलतया महान् गुरुतर आडम्बर आटोपः प्रजायते उत्पद्यते । स्वर्णे कनके तादृक् तादृशो ध्वनिः शब्दो न प्रजायते नोत्पद्यते, यादृक् ध्वनिः कंसे धातुविकृतिविशेषे प्रजायते उत्पद्यते । कथम् । हि स्फुटमिति शेषः । दृष्टान्तालंकारः ॥ ३५ ॥

**काव्यकथास्वित्यादि** । काव्यकथासु काव्यपरीक्षासु त एव पुरुषाः साक्षिणः प्रतिभुवः कर्तव्याः करणीयाः । ते के । ये समुद्रसमा भवन्ति महार्णवतुल्या भवन्ति । ये साक्षिणो गुणगणम् औदार्यादिगुणरत्नसमूहम् अन्तर्मध्ये निदधति धरन्ति, ये च साक्षिणो दोषं कल्मषं बहिः कुर्वन्ति निष्कासयन्ति । कथम् । हि स्फुटमिति शेषः । उपमालंकारः ॥ ३६ ॥

**आत्मस्थितेरित्यादि** । आत्मस्थितेर्निजस्वरूपानुसारेण वस्तु काव्यादिकं विचारणीयम् । जातु कदाचित् जात्यन्तरसंश्रयेण अपरवस्तु परवस्त्वाश्रयेण न विचारणीयमित्यर्थः । न यथा तर्कशास्त्रपरीक्षाविषये व्याकरणशास्त्रपरीक्षा न कर्तव्या, व्याकरणशास्त्रविषये तर्कशास्त्रपरीक्षा न कर्तव्या । किं तर्हि तर्केण तर्कस्य, व्याकरणेन व्याकरणस्य, काव्येन काव्यस्य परीक्षा कर्तव्या । यथा अयं तर्कः समीचीनो न भवति काव्याग्रतः, इदं काव्यं समीचीनं न भवति तर्कस्याग्रतः । दुर्वर्णनिर्वर्णविधौ रूप्यपरीक्षाविधाने सुवर्णवर्णस्य अनुबन्धः परीक्षा बुधानां विद्वज्जनानां मुधा वृथैव भवति । दृष्टान्तालंकारः ॥ ३७ ॥

---

१. 'मणि' मू०.

गुणेषु ये दोषमनीषयान्धा दोषान्गुणीकर्तुमथेशते वा ।
श्रोतुं कवीनां वचनं न तेऽर्हाः सरस्वतीद्रोहिषु कोऽधिकारः ॥ ३८ ॥
अयं कविर्नैष कविः किमत्र हेतुप्रयुक्तिः कृतिभिर्विधेया ।
श्रोत्रं मनश्चात्र यतः समर्थं वागर्थयो रूपनिरूपणाय ॥ ३९ ॥
कवितायै नमस्तस्यै यद्रसोल्लासिताशयाः ।
कुर्वन्ति कवयः कीर्तिलतां लोकान्तसंश्रयाम् ॥ ४० ॥
निद्रां विदूरयसि शास्त्ररसं रुणत्सि
सर्वेन्द्रियार्थमसमर्थविधिं विधत्से ।
चेतश्च विभ्रमयसे कविते पिशाचि
लोकस्तथापि सुकृती त्वदनुग्रहेण ॥ ४१ ॥

---

**गुणेष्वित्यादि** । गुणेषु औदार्यसमताकान्त्यादिषु ये पुरुषाः दोषमनीषया खण्डितादिदोषबुद्ध्या अन्धाः निर्विवेकिनो भवन्ति, अथवा दोषान् खण्डितव्यस्तसंबन्धादिदोषान् गुणीकर्तुं ईशते अगुणान् गुणीकर्तुं समर्था भवन्ति, ते पुरुषाः कवीनां सुकवीनां वचनं वाक्यं श्रोतुमाकर्णितुमर्हा योग्या न भवन्ति । युक्तोऽयमर्थः । सरस्वतीद्रोहिषु सरस्वतीं द्रुह्यन्ति ते सरस्वतीद्रोहिणस्तेषु । भारतीभञ्जकेष्वित्यर्थः । कोऽधिकारः । श्रोतुं न कश्चिदधिकारो नियोग इत्यर्थः । आक्षेपालंकारः ॥ ३८ ॥

**अयमित्यादि** । अयं कविः सत्कविर्भवति । एष प्रत्यक्षीभूतः कविर्न भवति । कृतिभिर्विद्वद्भिः अत्र अस्मिन् काव्यशास्त्रे हेतुप्रयुक्तिर्हेतुप्रयोगो विचारो विधेया किम् । अपि तु न विधेयेत्यर्थः । यतः यस्मात् कारणात् वागर्थयोः रूपनिरूपणाय स्वरूपविज्ञानाय श्रोत्रं श्रुतिर्मनश्चित्तं च समर्थं वर्तते । यथासंख्यालंकारः ॥ ३९ ॥

**कवितायै इत्यादि** । तस्यै जगत्प्रसिद्धायै कवितायै नमः नमस्कारो भवतु । तस्यै कस्यै । यद्रसोल्लासिताशयाः कवयः यस्याः कविताया रसोऽनुरागः यद्रसः यद्रसेन उल्लासितो वृद्धिं प्रापितः आशयश्चित्तं येषां तथोक्ताः यदनुरागवर्धितचित्ताः कवयः विद्वांसः कीर्तिलतां कीर्तिरेव लता वल्ली स्वर्गादिफलदायिका कीर्तिलता तां कीर्तिलतां लोकान्तसंश्रयां त्रैलोक्यपर्यन्तव्यापिनीं कुर्वन्ति विदधति । अतिशयवद्रूपकालंकारत्वात् संकरोपमालंकारः ४०

**निद्रामित्यादि** । हे कविते हे पिशाचि हे व्यन्तरि, त्वं निद्रां विदूरयसि स्वप्नं विनाशयसि । शास्त्ररसं रुणत्सि प्रतिबन्धिका भवसि । सर्वेन्द्रियार्थं स्पर्शनरसनघ्राणचक्षुःश्रोत्राणामिन्द्रियाणामर्थं स्पर्शरसरूपगन्धशब्दादिकं असमर्थविधिं निर्बलविधानं विधत्से करोषि । तथा चेतश्च मनो विभ्रमयसे भ्रान्तिमुत्पादयसि । एतावद्दोषवती भवती त्वं वर्तसे । तथापि लोकः त्वदनुग्रहेण त्वत्प्रसादेन सुकृती पुण्यवान् भवतीति । विषमालंकारो निद्रास्तुतिर्वा ॥ ४१ ॥

कृतमतिविस्तरेण ।

अस्ति खल्विहैव सकलाश्चर्यैकपात्रे भरतक्षेत्रे चतुर्वर्गमार्गणोपकरणप्रसूतः समस्तप्रशस्तमहीवलयालंकरणभूतः सुरलोकमनोरथाविधेयो यौधेयो नाम धाम संपदो जनपदः ।

यत्र महानृपतय इव गोमण्डलवन्तः, चक्रवर्तिश्रिय इव महिषीसमाकुलाः, भरतप्रयोगा इव सगन्धर्वाः, सुगतागमा इवाविकल्पप्रधानाः का-

---

कृतमतिविस्तरेणेत्यादि । अतिविस्तरेण कृतं पूर्णं अतिवर्णनयालम् ॥ खलु निश्चयेन इहैव भरतक्षेत्रे जम्बूद्वीपसंबन्धिनि भरतक्षेत्रे । न तु धातकीखण्डपुष्करार्धसंबन्धिनि । यौधेयो नाम जनपदोऽस्ति विद्यते । कथंभूते भरतक्षेत्रे । सकलाश्चर्यैकपात्रे यथोक्तविशेषणविशिष्टे सकलानि समग्राणि आश्चर्याणि केवलज्ञानोत्पत्त्यादिकुतूहलानि तेषां एकमद्वितीयं पात्रं तत् तथोक्तम् तस्मिन् । कथंभूतो यौधेयो नाम देशः । चतुर्वर्गमार्गणोपकरणप्रसूतः चत्वारश्च ते वर्गाश्च धर्मार्थकाममोक्षलक्षणास्तेषां मार्गणोपकरणानि जिनप्रासादजिनप्रतिमादीनि तेषां प्रसूतं उत्पत्तिर्यत्र स तथोक्तः । अपरं कथंभूतो यौधेयो नाम देशः । समस्तप्रशस्तमहीवलयालंकरणभूतः समस्तानि परिपूर्णानि प्रशस्तानि प्रशंसनीयानि महीवलयानि पृथ्वीमण्डलानि तेषां अलंकरणभूतः आभरणसदृशः । अपरं कथंभूतो यौधेयः । यथोक्तविशेषणविशिष्टः सुरलोकमनोरथाविधेयः सुरलोकस्य स्वर्गस्य मनोरथाः अभिलाषाः अविधेयाः अकर्तव्या यस्मिन् देशे स तथोक्तः । भूयः कथंभूतोऽपि यौधेयः । संपदो धाम लक्ष्म्याः मन्दिरम् ॥

यत्र यस्मिन् यौधेयदेशे ग्रामाः सन्तीति क्रियाकारकसंबन्धः । कथंभूताः ग्रामाः । गोमण्डलवन्तः गावः सुरभयो मण्डलाः शुनकास्ते विद्यन्ते येषु ग्रामेषु ते गोमण्डलवन्तः । क इव । महानृपतय इव महामण्डलेश्वरा इव । यथा महानृपतयो गोमण्डलवन्तः पृथ्वीवलयसंयुक्ता भवन्ति । पुनः कथंभूता ग्रामाः । महिषीसमाकुला महिषीभिर्गवेरीभिः समाकुलाः संयुक्ताः । का इव । चक्रवर्तिश्रिय इव सार्वभौमलक्ष्म्य इव । यथा चक्रवर्तिश्रियो महिषीसमाकुलाः पट्टमहादेवीभिः समाकुलाः सहिता भवन्ति । पुनः कथंभूता ग्रामाः । सगन्धर्वा अश्वसंयुक्ताः । क इव । भरतप्रयोगा इव संगीतशास्त्राणीव । यथा भरतप्रयोगाः सगन्धर्वा गन्धर्वैः सहिता भवन्ति । पुनः कथंभूता ग्रामाः । अविकल्पप्रधानाः अवीनां कल्पाः समूहाः प्रधाना मुख्या येषु ग्रामेषु तेऽविकल्पप्रधानाः । क इव । सुगतागमा इव बौद्धशास्त्राणीव । यथा सुगतागमाः अविकल्पमानस्वर्गपुण्यपापप्रकृतयश्च भवन्ति । तथा च वक्ष्यति—'नाहं नैव परो न कर्मभिरिह प्रायेण बन्धः क्वचिद्बोक्ता प्रेत्य न तत्फलस्य च वदेदित्थं स बौद्धो यदि । कस्मादेष तपःसमुद्यतमनाश्चैत्यादिकं वन्दते किं वा तत्र तपोऽस्ति केवलमसौ धूर्तैर्जडो

मिनीनितम्बा इव करभोरवः, श्रुतय इवाजसंजनितविस्ताराः, श्रमणा इव जातरूपधारिणः, बृहस्पतिनीतय इवादेवमातृकाः, भागवता इव प्रतिपन्नकृष्णभूमयः, सांख्या इव समाश्रितप्रकृतयः, हरमौलय इव सुलभजलाः, संकर्षणरणकेलय इव हलबहुलाः, ब्रह्मवादा इव प्रपञ्चितारामाः, महायोगिन इव क्षेत्रज्ञप्रतिष्ठाः, सलिलनिधय इव विद्रुमच्छन्नोपशल्याः, स्वर्गव-

---

वञ्चितः ॥' पुनः कथंभूता ग्रामा। करभोरवः करभैरुष्ट्रैः उरवो गरिष्ठाः । क इव। कामिनीनितम्बा इव । यथा कामिनीनां नितम्बाः कटिपश्चाद्भागाः करभोरवः करभस्येव उष्ट्रस्येव उरवः सक्थीनि येषां नितम्बानां ते करभोरवः। पुनः कथंभूता ग्रामाः । अजसंजनितविस्ताराः अजैश्छागैः संजनितः सम्यक् प्रणीतो विस्तारो येषु ते अजसंजनितविस्ताराः । का इव । श्रुतय इव । यथा श्रुतयो वेदाः अजेन ब्रह्मणा संजनितविस्तारा भवन्ति । अपरं कथंभूताः ग्रामाः । जातरूपधारिणः सुवर्णधारिणः । क इव । श्रमणा इव। यथा श्रमणाः जातरूपधारिणो भवन्ति । पुनः कथंभूताः ग्रामाः । अदेवमातृकाः नदीजलनिष्पन्नसस्योपजीविनः । का इव । बृहस्पतिनीतय इव । यथा बृहस्पतिनीतयश्चार्वाकशास्त्राणि देवं सर्वज्ञादिविशेषं न मन्यन्ते । पुनः कथंभूता ग्रामाः। प्रतिपन्नकृष्णभूमयः प्रतिपन्ना अङ्गीकृता कृष्णा श्यामवर्णा क्षेत्रभूमिर्हलोपजीवैर्येषु ते तथोक्ताः । क इव । भागवता इव वैष्णवा इव। यथा भागवताः कृष्णभूमिं द्वारवतीक्षेत्रं षण्मासं सेवन्ते । पुनः कथंभूता ग्रामाः । समाश्रितप्रकृतयः समाश्रिता अङ्गीकृता प्रकृतिः अष्टादशभेदभिन्ना हलजीविकादिका प्रकृतिः प्रजा यैस्ते तथोक्ताः । क इव । सांख्या इव । यथा सांख्याः समाश्रितप्रकृतयो भवन्ति समाश्रिता प्रधानापरनामा बहुधातापरनामा चतुर्विंशतिभेदभिन्ना सत्त्वरजस्तमोप्रकृतिका ज्ञानवती चतुर्विंशतिभेदभिन्ना यैस्ते । पुनः कथंभूता ग्रामाः । सुलभजलाः सुलभानि जलानि उदकानि येषु ते तथोक्ताः । क इव । हरमौलय इव श्रीमहादेवमुकुटानीव। यथा हरमौलयः सुलभजडा जडवन्तो भवन्ति। डलयोरैक्यम् । अथवा हरमौलयो गङ्गाधरत्वात् सुलभजलाः । उक्तं च—'स्त्रीषु धन्यात्र गङ्गैव परभोगोपगा प्रिया । रत्नमालेव सोल्लासं ध्रियते मूर्ध्नि शंभुना ॥' पुनः कथंभूता ग्रामाः। हलबहुलाः हलैर्मित्रैर्बहुलाः हलबहुलाः। क इव । संकर्षणरणकेलय इव । यथा संकर्षणरणकेलयः संकर्षणस्य बलभद्रस्य रणकेलयः संग्रामक्रीडाः हलबहुलाः सीरबहुलाः भवन्ति । उभयपक्षेपि वा हलबहुलाः। पुनः कथंभूता ग्रामाः । प्रपञ्चितारामाः प्रपञ्चिताः विस्तारं नीता आरामा उपवनानि येषु ते तथोक्ताः । क इव । ब्रह्मवादा इव । यथा ब्रह्मवादा वेदान्तवादाः प्रपञ्चितो विस्तारं नीत आरामो विद्या येषु ब्रह्मवादेषु ते प्रपञ्चितारामाः । पुनः कथंभूता ग्रामाः । क्षेत्रज्ञप्रतिष्ठाः क्षेत्रज्ञानां हलाजीवानां प्रतिष्ठा शोभा येषु ते तथोक्ताः । क इव । महायोगिन इव। यथा महायोगिनो गौतमस्वामिप्रभृतयः क्षेत्रज्ञप्रतिष्ठाः भवन्ति आत्मनि तल्लीना भवन्ति । पुनः कथंभूता ग्रामाः । विद्रुमच्छन्नोपशल्याः विविधैर्द्रुमैर्वृक्षैर्विभिः पक्षि-

सतय इवातिथिप्रार्थनमनोरथाः, गगनमार्गा इव नक्षत्रद्विजराजिनः, कलत्रकुचकुम्भा इव भर्तृकरसंबाधसहाः, सुरेश्वरसेना इव स्वाम्यनुरक्ताः, सौराज्यदिवसा इव निष्कण्टकमहीभागाः, वियदापगाप्रवाहा इव विगतोपलसीमानः, सकलजगन्निर्माणप्रदेशा इव सर्वजीविनः, सुहृद इव च परस्परप्रेमाभिजात्याः कुक्कुटसंपात्याः सन्ति ग्रामाः।

---

भिर्वा उपलक्षितानि द्रुमाणि तैश्छन्नानि आच्छादितानि उपशल्यानि ग्रामान्तिका येषु ते तथोक्ताः। क इव। सलिलनिधय इव समुद्रा इव। यथा सलिलनिधयो विद्रुमैः प्रवालैश्छन्नोपशल्या भवन्ति। पुनः कथंभूता ग्रामाः। अतिथिप्रार्थनमनोरथाः अतिथीनां मुनीनां प्रापूर्णकानां वा प्रार्थने याचने मनोरथा अभिलाषाः येषां ते तथोक्ताः। का इव। स्वर्गवसतय इव। यथा स्वर्गवसतयः स्वर्गभवनानि अतिथिप्रार्थनमनोरथाः कुशनन्दनाभ्यर्थनमनोरथाः भवन्ति। पुनः कथंभूता ग्रामाः। नक्षत्रद्विजराजिनः क्षत्राश्च राजपुत्रा द्विजाश्च ब्राह्मणाः तैर्न राजन्ते शोभन्ते इत्येवंशीला नक्षत्रद्विजराजिनः। क इव। गगनमार्गा इव। यथा आकाशमार्गाः नक्षत्रैरश्विनीप्रभृतिभिर्द्विजैश्च पक्षिभिश्च राजन्त इत्येवंशीलाः। पुनः कथंभूताः ग्रामाः। भर्तृकरसंबाधसहाः भर्तुर्नरेन्द्रस्य करस्य भागधेयस्य संबाधं पीडां सहन्ते भर्तृकरसंबाधसहाः। क इव। कलत्रकुचकुम्भा इव। यथा कलत्राणां कमनीयकामिनीनां कुचकुम्भाः स्तनकलशाः भर्तृकरसंबाधसहाः पत्युः पाणिसंमर्दक्षमाः भवन्ति। पुनः कथंभूता ग्रामाः। स्वाम्यनुरक्ताः स्वामिनि पालके राज्ञि अनुरक्ता अनुरागिणः प्रीतिमन्तः। का इव। सुरेश्वरसेना इव। यथा सुरेश्वरसेना इन्द्रकटकानि स्वाम्यनुरक्ताः तारकमारणार्थं कार्तिकेयानुरक्ताः भवन्ति। पुनः कथंभूता ग्रामाः। निष्कण्टकमहीभागाः निष्कण्टकाः बदरखदिरकिङ्करीरहिता महीभागा भूमिप्रदेशाः येषां ते तथोक्ताः। क इव। सौराज्यदिवसा इव। यथा सौराज्यदिवसाः शोभननरेन्द्रसंयुक्तराज्यादिना निष्कण्टकभूमिभागाः क्षुद्रशत्रुरहितभूमिप्रदेशा भवन्ति। पुनः कथंभूता ग्रामाः। विगतोपलसीमानः पाषाणरहितसीमानः। क इव। वियदापगाप्रवाहा इव। यथा वियदापगाप्रवाहा गङ्गानदीप्रवाहाः विभिर्हंससारसचक्रवाकादिभिर्गताः प्राप्ताः उपलानां गण्डशैलानां सीमानो येषु ते विगतोपलसीमानः। पुनः कथंभूता ग्रामाः। सर्वजीविनः सर्वे राजतापसपक्षादिभिर्जीव्यन्ते उपजीव्यन्ते सर्वजीविनः। क इव। सकलजगन्निर्माणप्रदेशा इव। यथा सकलजगन्निर्माणप्रदेशाः सकलस्य समस्तस्य जगतोऽधोमध्योर्ध्वनिर्माणप्रदेशाः निष्पादनप्रदेशाः सर्वजीविनश्चातुर्गतिकप्राणिवर्गसहिता भवन्ति। कथंभूता ग्रामाः। परस्परप्रेमाभिजात्याः परस्परमन्योन्यं प्रेम्णा स्नेहेन अभिजात्या मनोहराः। क इव। सुहृद इव यथा सुहृदोऽभीष्टवर्गाः परस्परं प्रेमवन्तो भवन्ति। चकार उक्तसमुच्चयार्थः। अपरं कथंभूताः। कुक्कुटसंपात्याः कुक्कुटैस्ताम्रचूडैः उड्डीय सम्यक् प्राप्यन्ते। कुक्कुटसंपात्याः सन्ति ग्रामाः। श्लेष उपमासमुच्चयश्चालंकारः॥

अपि च विकचकर्णोत्पलस्पर्धितरलेक्षणाः केलितालक्कणत्कनकमयकङ्कणाः सरसनखराजिविच्छुरितभुजमण्डलाः काञ्चिकोल्लासवशदर्शितोरुस्थलाः स्वैरसंजल्पनस्मेरबिम्बाधराः कर्णकण्डूमिषोद्वलितकक्षान्तराः पृथुनितम्बवशस्खलल्लटहगतिविक्रमाः सहजशृङ्गाररसभरितमुखविभ्रमाः पीनकुचकुम्भ-

---

अपि च **विकचकर्णोत्पलस्पर्धितरलेक्षणा इत्यादि**। यत्र यस्मिन् यौधेयदेशे शालिवप्रेषु शालिक्षेत्रेषु यान्त्यो गच्छन्त्यः गोपिकाः गोपाङ्गनाः हलाजीवभार्याः पान्थसार्थेषु पथिकसमूहेषु क्षणं मुहूर्तमेकं नयनोत्सवं नेत्रानन्दं कुर्वते सृजन्ति । पुनः पश्चाच्चिरं दीर्घकालमामरणपर्यन्तं तापं विप्रलम्भसंभवसंतापमुपाचिन्वते पुष्टिं नयन्तीति क्रियाकारकसंबन्धः । कथंभूता गोपिकाः । विकचकर्णोत्पलस्पर्धितरलेक्षणाः विकचानि विकसितानि उत्फुल्लानि यानि कर्णोत्पलानि कर्णमण्डलकुवलयानि तैः सह स्पर्धन्ते उपमां धरन्तीत्येवंशीलानि तरलानि चपलानि कर्णान्तविश्रान्तानि च तानि ईक्षणानि लोचनानि यासां गोपिकानां तास्तथोक्ताः। अपरं कथंभूताः गोपिकाः । केलितालक्कणत्कनकमयकङ्कणाः केल्या क्रीडया योऽसौ तालः परस्परकरताडनं तेन क्कणन्ति शब्दं कुर्वन्ति यानि कनकमयानि सुवर्णघटितानि कङ्कणानि करवलयानि यासां तास्तथोक्ताः। पुनः कथंभूताः गोपिकाः । सरसनखराजिविच्छुरितभुजमण्डलाः सरसाः सान्द्राः प्रियदत्ताः याः नखराजयो नखक्षतश्रेणयस्ताभिर्विच्छुरितानि मण्डितानि भुजमण्डलानि वा वल्लीप्रदेशा यासां तास्तथोक्ताः। अपरं कथंभूता गोपिकाः। काञ्चिकोल्लासवशदर्शितोरुस्थलाः काञ्चिकाः कटिमेखलास्तासामुल्लासवशेन उन्नयनकरणात् दर्शितानि प्रकटीकृतानि उरःस्थलानि वक्षःस्थलप्रदेशा याभिस्तास्तथोक्ताः । भूयोऽपि कथंभूता गोपिकाः । स्वैरसंजल्पनस्मेरबिम्बाधराः स्वैरं संजल्पनेन यथेष्टं परस्परसंभाषणेन स्मेरा ईषद्धाससहिता बिम्बाधराः पक्वतुण्डिकेरीफलाकारा अधरा दन्तच्छन्दा यासां तास्तथोक्ताः। पुनश्च किंविशिष्टा गोपिकाः। कर्णकण्डूमिषोद्वलितकक्षान्तराः कर्णकण्डूमिषेण श्रवणखर्जनछलेन उद्वलितानि दर्शितानि कक्षान्तराणि बाहुमूलानि याभिस्तास्तथोक्ताः । पुनरपि किंविशिष्टा गोपिकाः। पृथुनितम्बवशस्खलल्लटहगतिविक्रमाः पृथवो विस्तीर्णा ये नितम्बाः कटिपश्चाद्भागास्तद्वशेन स्खलन्तः प्रस्खलन्तः प्रस्खलनं कुर्वन्तो लटहगतिविक्रमाः ललितगमनपादक्षेपाः यासां तास्तथोक्ताः । भूयोऽपि किंविशिष्टा गोपिकाः। सहजशृङ्गाररसभरितमुखविभ्रमाः सहजः स्वाभाविको योऽसौ शृङ्गाररसः तेन भरिताः पुष्टिं नीता मुखविभ्रमाः वक्त्रकमलहावा यासां तास्तथोक्ताः । पुनरपि किंविशेषणविशिष्टा गोपिकाः । पीनकुचकुम्भदर्पत्रुटत्कञ्चुकाः पीना नातिस्थूला नातिकृशा नातिदीर्घा

दर्पत्रुटत्कञ्चुकाः शालिवप्रेषु यान्त्यः क्षणं गोपिकाः पान्थसार्थेषु नयनोत्सवं कुर्वते यत्र तापं पुनश्चिरमुपाचिन्वते ।

स यौधेय इति ख्यातो देशः क्षेत्रेऽस्ति भारते ।
देवश्रीस्पर्धया स्वर्गः स्रष्ट्रा सृष्ट इवापरः ॥ ४२ ॥
वपत्रक्षेत्रसंजातसस्यसंपत्तिबन्धुराः ।
चिन्तामणिसमारम्भाः सन्ति यत्र वसुंधराः ॥ ४३ ॥
लवने यत्र नोप्तस्य लूनस्य न विगाहने ।
विगाढस्य च धान्यस्य नालं संग्रहणे प्रजाः ॥ ४४ ॥
दानेन वित्तानि धनेन यौवनं यशोभिरायूंषि गृहाणि चार्थिभिः ।
भजन्ति सांकर्यमिमानि देहिनां न यत्र वर्णाश्रमधर्मवृत्तयः ॥ ४५ ॥

---

नातिह्रस्वा वर्तुलाकारा मिलिता ये कुचकुम्भाः स्तनकलशास्तेषां दर्पेण उन्नामेन त्रुटन्ति शतखण्डीभवन्ति कञ्चुकानि कूर्पासका यासां तास्तथोक्ताः । शृङ्गाररसप्रधानो विप्रलम्भसंदर्शितो जात्यलंकारः ॥

**स इत्यादि** । जगत्प्रसिद्धो यौधेय इति नाम्ना ख्यातः प्रसिद्धो देशो भारते क्षेत्रे भरतक्षेत्रे अस्ति विद्यते । कथंभूतो देशः । उत्प्रेक्षते—देवश्रीस्पर्धया इन्द्रलक्ष्म्या ईर्ष्यया कृत्वा स्रष्ट्रा ब्रह्मणा अपरो द्वितीयः स्वर्गो देवलोकः सृष्टो निर्मित इव । उत्प्रेक्षालंकारः ॥ ४२ ॥

**वपत्रेत्यादि** । यत्र यस्मिन् यौधेयदेशे वसुंधराः भूमयः सन्ति विद्यन्ते । कथंभूताः वसुंधराः । वपत्रक्षेत्रसंजातसस्यसंपत्तिबन्धुराः उप्यन्ते वपत्राणि नतु खिलभूतानि खेटने रहितानि यानि क्षेत्राणि सस्याधिकरणानि तेषु संजाता उत्पन्ना या सस्यसंपत्तिः कणसंपत् तया बन्धुराः मनोहरा यास्तास्तथोक्ताः । पुनः कथंभूता वसुन्धराः । चिन्तामणिसमारम्भाः चिन्तामणिभिः समः सदृशश्चिन्तितफलदायित्वात् आरम्भो यासां तास्तथोक्ताः । उपमालंकारः ॥ ४३ ॥

**लवन इत्यादि** । यत्र यस्मिन् यौधेयदेशे प्रजा लोकाः उप्तस्य वापितस्य धान्यस्य सस्यस्य लवने छेदने न अलं न समर्था भवन्ति । लूनस्य छेदितस्य धान्यस्य विगाहने मर्दने न अलं न समर्था भवन्ति । विगाढस्य च मर्दितस्य धान्यस्य च संग्रहणे स्वीकरणे न अलं समर्था न भवन्ति । दीपकालंकारः ॥ ४४ ॥

**दानेनेत्यादि** । यत्र यस्मिन् यौधेयदेशे देहिनां प्राणिनां इमानि प्रत्यक्षीभूतानि वस्तूनि सांकर्यं मिश्रतां भजन्ति सेवन्ते । इमानि कानि । वित्तानि धनानि दानेन विश्राणनेन सांकर्यं भजन्ति । धनेन वित्तेन यौवनं तारुण्यं सांकर्यं भजति । अर्थ-

तत्र तद्विलासिनीविलासलालसमानसानाममरकुमारकाणामनालम्बे नभस्यवतरणमार्गचिह्नोचितरुचिभिः, उपहसितशिशिरगिरिहराचलशिखरैः, अटनितटनिविष्टविकटसटोत्कटकरटिरिपुसमीपसंचारचकितचन्द्रमृगविलोचनरुचिविकचकुवलयोपहारिभिः, अरुणरथतुरगचरणाक्षुण्णक्षणमात्रविश्रमैः, अम्बरचरचमूविमानगतिवक्रिमविधायिभिः, अनवरतविहरद्विहायश्चरचक्र-

---

वशाद्विभक्तिपरिणामः । यशोभिः पुण्यगणैरायूंषि जीवितानि सांकर्यं भजन्ति । चकाराद्गृहाणि सदनानि अर्थिभिः सह सांकर्यं भजन्ति । वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्राः, आश्रमाः ब्रह्मचारिगृहस्थवानप्रस्थभिक्षुलक्षणाश्चत्वारः, तेषां धर्मवृत्तय आचारप्रवृत्तयः सांकर्यं भजन्ति । अयमपि दीपकालंकारः ॥ ४५ ॥

**तत्रेत्यादि** । तत्र तस्मिन् यौधेयदेशे चैत्यालयैः उपशोभितं राजपुरं नाम नगरं वर्तते इति क्रियाकारकसंवन्धः । कथंभूतैश्चैत्यालयैः । तद्विलासिनीविलासलालसमानसानाममरकुमारकाणामनालम्बे नभस्यवतरणमार्गचिह्नोचितरुचिभिः तस्य राजपुरस्य या विलासिन्यः कमनीयकामिन्यस्तासां विलासाः कटाक्षविक्षेपलक्षणा लोचनचलनानि तेभ्यो लालसानि अत्यभिलाषीणि मानसानि चित्तानि येषां ते तथोक्तानाम् । स्वर्गे निश्चललोचनत्वात् । अमरकुमारकाणां अमराणां कुमारास्तेषां अनालम्बे नभसि आधाररहिते आकाशे अवतरणमार्गचिह्नाय लक्षणाय उचिता योग्या रुचिर्दीप्तिर्येषां चैत्यालयानां ते तथोक्तास्तैस्तथोक्तैः । पुनः कथंभूतैश्चैत्यालयैः । उपहसितशिशिरगिरिहराचलशिखरैः उपहसितानि उज्ज्वलतया तिरस्कृतानि शिशिरगिरेर्हिमाचलस्य हराचलस्य च कैलासस्य शिखराणि कूटानि यैस्तैस्तथोक्तैः । पुनः कथंभूतैश्चैत्यालयैः । अटनितटनिविष्टविकटसटोत्कटकरटिरिपुसमीपसंचारचकितचन्द्रमृगविलोचनरुचिविकचकुवलयोपहारिभिः अटनीनां कटिनीनां तटानि अटनीतटानि तेषु निविष्टा उपविष्टाः प्रासादेन सह जटिता ये विकटसटोत्कटा प्रव्यक्तकन्धराः केसरोपलक्षितप्रव्यक्ताः करटिनां गजानां रिपवो मणिघटिता ये पञ्चाननास्तेषां समीपे संचारेण गमनेन चकितोः भीतो जीवत्सिंहशङ्कया वित्रस्तो योऽसौ चन्द्रमृगः शशाङ्कहरिणस्तस्य विलोचनवत् रुचिः शोभा येषां तानि च तानि विकचकुवलयानि विकसितोत्पलानि तेषां उपहारः पूजा विद्यते येषां ते उपहारिणः तैः । पुनः कथंभूतैश्चैत्यालयैः । अरुणरथतुरगचरणाक्षुण्णक्षणमात्रविश्रमैः अरुणस्य सूर्यस्य योऽसौ रथस्तस्य संबन्धिनो ये तुरगाः तुरङ्गमास्तेषां चरणाः पादास्तेषां गगनगमनश्रान्तानां अक्षुण्णः परिपूर्णः क्षणमात्रं मुहूर्तमेकं विश्रमो येषु तैस्तथोक्तैः । पुनरपि कथंभूतैश्चैत्यालयैः । अम्बरचरचमूविमानगतिवक्रिमविधायिभिः अम्बरचराणां देवविद्याधराणां चमूनां सेनानां यानि विमानानि तेषां गतेर्गमनस्य वक्रिमाणं कुटिलत्वं विदधति कुर्वन्तीत्येवंशीलास्ते विधायिनस्तैः । पुनः कथंभूतैश्चैत्यालयैः ।

संक्रान्तकामिनीकपोलश्रमखेदापनोदमन्दस्यन्दपताकाञ्चलपल्लवैः, रचितापराधविरुद्धाङ्गनाचरणानतनिलिम्पकवनीपकनिकायकृतकैतवालोकनकुतूहलितलज्जितस्मितसिद्धयुवतिभिः, अतिसविधसंचरत्सुरसुन्दरीकरचापलविलुप्तकेतुकाण्डचित्रैः, अनेकध्वजस्तम्भस्तम्भिकोत्तम्भितमणिमुकुरमुखावलोकनकेलिकलदिवौकःस्खलितरयविमानवाहनसंबाधानुबन्धिभिः, अप्रत्नरत्नचयनिचितकाञ्चनकलशविसरदविरलकिरणजालजनितान्तरिक्षलक्ष्मीनिवासविचि-

---

अनवरतविहरद्विहायश्चरचक्रसंक्रान्तकामिनीकपोलश्रमखेदापनोदमन्दस्यन्दपताकाञ्चलपल्लवैः अनवरतमहर्निशं विहरन्तः पर्यटन्तो ये विहायश्चरा विद्याधरास्तेषां चक्राणि समूहास्तेषु संक्रान्तः उत्पन्नो योऽसौ कामिनीनां कपोलेषु श्रमखेदः खेदसंबन्धी खेदस्तस्यापनोदो विनाशस्तदर्थं मन्दस्यन्दा [अ]बहुलचलना पताकाञ्चलपल्लवा येषु तैस्तथोक्तैः। पुनरपि कथंभूतैश्चैत्यालयैः। रचितापराधविरुद्धाङ्गनाचरणानतनिलिम्पकवनीपकनिकायकृतकैतवावलोकनकुतूहलितलज्जितस्मितसिद्धयुवतिभिः रचितः प्रकल्पितो योऽसावपराधस्तेन विरुद्धाः कोपं प्राप्ता या अङ्गनाः कमनीयकामिन्यस्तासां चरणेषु चरणकमलेषु आनता नम्रीभूता ये निलिम्पका देवास्तेषां वनीपका अन्नाब्राह्मणभट्टाः। स्तुतिपाठका इत्यर्थः। तेषां निकायः समूहस्तेन कृतं विहितं कैतवं धूर्तत्वं तेन यदवलोकनं निरीक्षणं तेन कुतूहलिताः पूर्वमाश्चर्यं प्राप्ताः पश्चाल्लज्जितास्त्रपां गताः पश्चात्स्मिता मनाक् हसिताः सिद्धानामणिमादिगुणोपेतानां देवविशेषाणां युवतयः कमनीयकामिन्यो येषु ते सिद्धयुवतयस्तैस्तथोक्तैः। पुनरपि कथंभूतैश्चैत्यालयैः। अतिसविधसंचरत्सुरसुन्दरीकरचापलविलुप्तकेतुकाण्डचित्रैः अतिसविधे अतिसमीपे संचरन्त्यो याः सुरसुन्दर्यस्तासां यत्करचापलं तेन विलुप्तानि छेदितानि केतुकाण्डानां ध्वजस्तम्भानां चित्राण्यालेख्यानि येषु ते तथोक्तैः। पुनः कथंभूतैश्चैत्यालयैः। अनेकध्वजस्तम्भस्तम्भिकोत्तम्भितमणिमुकुरमुखावलोकनकेलिकलदिवौकःस्खलितरयविमानवाहनसंबाधानुबन्धिभिः अनेका बहुला ये ध्वजस्तम्भास्तेषां स्तम्भिकाः स्तम्भोपरि लघुस्तम्भास्तासूत्तम्भिता बद्धा ये मणिमुकुरा रत्नादर्शास्तेषु मुखावलोकनस्य वक्त्रबिम्बनिरीक्षणस्य या केलिः क्रीडा तया कला मनोहरा ये दिवौकसो देवास्तेषां स्खलितरयाणि भग्नवेगानि यानि विमानवाहनानि तेषां संबाधां कष्टमनुबध्नन्त्यनुकुर्वन्तीत्येवंशीलास्ते अनुबन्धिनस्तैस्तथोक्तैः। पुनः कथंभूतैश्चैत्यालयैः। अप्रत्नरत्नचयनिचितकाञ्चनकलशविसरदविरलकिरणजालजनितान्तरिक्षलक्ष्मीनिवासविचित्रसिचयोल्लोचैः अप्रत्नानि नूतनानि यानि रत्नानि तेषां चयः समूहस्तेन निचिता जटिता ये काञ्चनकलशाः कनककुम्भास्तेभ्यो विसरन्ति प्रसरन्ति निर्गच्छन्ति यानि अविरलानि अविच्छिन्नानि किरणजालानि अंशुसमूहास्तैर्जनिता

---

१. 'लोकनाकुलकलकेलिदिवौकः' मूल०.

त्रसिचयोल्लोचैः, अमृतकरातपस्पर्शद्रवचन्द्रकान्तमयप्रणालोच्छलज्जलजालकासारसिच्यमानवियद्विहारिणीविरहवैश्वानरकर्ममर्मरशरीरयष्टिभिः अहिमधामघृष्णिसंधुक्षितदिनकृत्कान्तकिंपिरिपर्यन्तस्फुरत्कृशानुकणविकास्यमानामरमुनिमध्याह्नदीपैः, अमलकामलासारविलसत्कलहंसश्रेणिद्विगुणदुकूलांशुकवैजयन्तीसंततिभिः, उपरितनतलचलत्प्रचलाकिवालकभयपलायमानजयविजयपुरपवनाशनैः, उपान्तस्तूपनिपतत्पारापतपतङ्गपङ्क्तिपुनरुक्तधूप-

---

उत्पादिता अन्तरिक्षलक्ष्मीनिवासस्य आकाशस्य श्रीगृहस्य विचित्रसिचयोल्लोचाः पञ्चवर्णवस्त्रचन्द्रोपका यैस्ते तथोक्तैः । पुनः कथंभूतैश्चैत्यालयैः । अमृतकरातपस्पर्शद्रवचन्द्रकान्तमयप्रणालोच्छलज्जलजालकासारसिच्यमानवियद्विहारिणीविरहवैश्वानरकर्ममर्मरशरीरयष्टिभिः अमृतकरश्चन्द्रस्तस्यातप उद्द्योतस्तस्य स्पर्शेनोच्छोपनेन द्रवन्तश्च्योतन्तो ये चन्द्रकान्ताः शशाङ्ककान्तमणयस्ताभिर्निर्वृत्तानि प्रणालानि जलनिर्गमद्वाराणि तेभ्य उच्छलन्ति उत्पतन्ति यानि जलजालकानि जलसमूहास्तेषामासारो वेगवद्वर्षस्तेन सिच्यमाना आप्यायमाना वियद्विहारिणीनां विद्याधरीणां विरहस्य विप्रलम्भस्य यत् वैश्वानरकर्म अग्निप्रवेशस्तेन मर्मरा अङ्गारीभूताः शरीरयष्टयोऽङ्गयष्ट्यो येषु चैत्यालयेषु ते तथोक्तास्तैः । पुनः कथंभूतैश्चैत्यालयैः । अहिमधामघृष्णिसंधुक्षितदिनकृत्कान्तकिंपिरिपर्यन्तस्फुरत्कृशानुकणविकास्यमानामरमुनिमध्याह्नदीपैः अहिमधामा श्रीसूर्यस्तस्य घृष्णयः किरणास्तैः संधुक्षितः प्रज्वलितो यो दिनकृत्कान्तकिंपिरिपर्यन्तः सूर्यकान्तमण्युपरितनभूमिमुखं तत्र स्फुरन्त उच्छलन्तो ये कृशानुकणा अग्निस्फुलिङ्गास्तैर्विकास्यमानाः प्रज्वाल्यमाना अमरमुनीनां सप्तऋषीणां मध्याह्नदीपा येषु चैत्यालयेषु ते तथोक्तास्तैः । पुनः कथंभूतैश्चैत्यालयैः । अमलकामलासारविलसत्कलहंसश्रेणिद्विगुणदुकूलांशुकवैजयन्तीसंततिभिः अमला निर्मला ये कामलासाराः स्फटिकमण्युपरितनभूमयस्तत्र विलसन्तः क्रीडन्तो ये कलहंसास्तेषां श्रेणयः समूहास्तैस्ताभिर्वा द्विगुणा द्विरुक्ता दुकूलांशुकवैजयन्तीसंततयः शुक्लपट्टदुकूलवस्त्रध्वजश्रेणयो येषु ते तथोक्तैः । पुनः कथंभूतैश्चैत्यालयैः । उपरितनतलचलत्प्रचलाकिवालकभयपलायमानजयविजयपुरपवनाशनैः उपरितनतलमुपरिभूमिस्तत्र चलन्तः पर्यटन्तो ये प्रचलाकिवालका मयूरशिशवस्तेभ्यो भयात् पलायमानाः शीघ्रं नश्यन्तो जयविजयपुरयोः अन्तरिक्षनगरविशेषयोर्ये पवनाशना नागा यत्र येषु ते तथोक्तैः । पुनः कथंभूतैश्चैत्यालयैः । उपान्तस्तूपनिपतत्पारापतपतङ्गपङ्क्तिपुनरुक्तधूपधूमाडम्बरैः । उपान्तेषु समीपेषु ये स्तूपाः कृत्रिमपर्वतास्तेषु निपतन्तो निर्गच्छन्तो ये पारापतपतङ्गाः कलरवपक्षिणस्तेषां पङ्क्तिभिः श्रेणिभिः पुनरुक्ता द्विगुणीकृता ये धूपधूमास्तेषामाडम्बरः आटोपो यत्र ते त-

---

१. 'पुरःसरपव' मूल०.

धूमाडम्बरैः, अतिनिकटविटङ्कोपविष्टशुकशावसंदिह्यमानहरितारुणमणिभिः, इतस्ततोविदूरतरचरच्चाषच्छदमूर्च्छदतुच्छच्छायाच्छाद्यमानमेचकरचनैः, अनिललयप्रेङ्खोलनकलक्कणत्किंकिणीजालवाचालपालिध्वजध्वानारब्धविद्याधरवधूद्वेल्लितविधिभिः, अनवधिसुधाप्रधावद्धामसंदिग्धस्वर्धुनीप्रवाहैः, प्रफुल्लस्तवकैरिवान्तरिक्षवृक्षस्य, श्वेतदीपसृष्टिभिरिव रोदःकोटरस्य, शिखण्डमण्डनपुण्डरीकानीकैरिव नभोदेवतायाः, पुण्यपुञ्जोपार्जनक्षेत्रैरिव त्रिभुवन-

---

थोक्तैः । वानेया हि कपोता धूसरा भवन्ति । पुनः कथंभूतैश्चैत्यालयैः । अतिनिकटविटङ्कोपविष्टशुकशावसंदिह्यमानहरितारुणमणिभिः अतिनिकटे अतिसमीपे ये विटङ्काः पक्षिविश्रामार्थं वहिर्निर्गतानि काष्ठानि तेषूपविष्टाः स्थिता ये शुकशावाः कीरवालकास्तेषां [स्थित्या] संदिह्यमाना भ्रान्तिमागता हरितारुणमणयो हरितवर्णा अरुणवर्णाश्च मणयो येषु ते तथोक्तैः । पुनः कथंभूतैश्चैत्यालयैः । इतस्ततोविदूरतरचरच्चाषच्छदमूर्च्छदतुच्छच्छायाच्छाद्यमानमेचकरचनैः इतस्ततो यत्रतत्राविदूरतरे निकटे चरन्तः पर्यटन्तो ये चाषा भासपक्षिणः । करण्टापरनामानो जलकाका इति यावत् । तेषां छदाः पत्राणि तेभ्यो मूर्च्छन्ती निर्गच्छन्ती अतुच्छा प्रचुरा या छाया कान्तिस्तया आच्छाद्यमाना लुप्यमाना मेचकरचना कृष्णमणिघटना येषु ते तथोक्तैः । पुनः कथंभूतैश्चैत्यालयैः । अनिललयप्रेङ्खोलनकलक्कणत्किंकिणीजालवाचालपालिध्वजध्वानारब्धविद्याधरवधूद्वेल्लितविधिभिः अनिलो वातस्तस्य लयः संश्लेषणं विलासो वा तेन यत्प्रेङ्खोलनं कम्पनं तस्मात् कलं मधुरं यथा भवत्येवं क्कणन्त्यः शब्दायमानाः किंकिण्यः क्षुद्रघण्टिकास्तासां जालानि समूहास्तैर्वाचालाः शब्दवन्तो ये पालिध्वजाश्चिह्नपताकास्तेषां ध्वानैः शब्दैरारब्धः प्रकल्पितो विद्याधरवधूभिर्वियच्चरकमनीयकामिनीभिरुद्वेल्लितविधिर्नर्तनं चित्तं ध्यानं येषु ते तथोक्तैः । पुनः कथंभूतैश्चैत्यालयैः । अनवधिसुधाप्रधावद्धामसंदिग्धस्वर्धुनीप्रवाहैः अनवधि अमर्यादीभूतं यत् सुधायाश्चूर्णस्य प्रधावद्धाम प्रसरत्तेजस्तेन संदिग्धः संदेहं प्रापितः स्वर्धुनीप्रवाह आकाशगङ्गाप्रवाहो यैस्ते तथोक्तैः । पुनः कथंभूतैश्चैत्यालयैः । प्रफुल्लस्तवकैरिवान्तरिक्षवृक्षस्य आकाशतरुवरस्य प्रफुल्लस्तवकैरिव विकसितकुसुमगुच्छैरिव । पुनः कथंभूतैश्चैत्यालयैः । श्वेतदीपसृष्टिभिरिव रोदःकोटरस्य उज्ज्वलदीपरचनैरिव उच्चैः......(?) । [पुनः कथंभूतैश्चैत्यालयैः ।] शिखण्डमण्डनपुण्डरीकानीकैरिव नभोदेवतायाः आकाशदेवतायाः शिखण्डमण्डनपुण्डरीकानीकैरिव मस्तकमण्डनश्वेतकमलसमूहैरिव । पुनः कथंभूतैश्चैत्यालयैः । पुण्यपुञ्जोपार्जनक्षेत्रैरिव त्रिभुवनभव्यजनस्य त्रिभुवनस्थितभव्यजीवसमूहस्य [सुकृतस]मुदायस्योपार्जनसस्याधिकरणैरिव । पुनः कथंभूतैश्चैत्यालयैः । डिण्डीरपिण्डमण्डलैरिव विहायःपारावारस्य आकाशसमुद्रस्य फेनराशिसमूहैरिव । पुनः कथंभू-

भव्यजनस्य, डिण्डीरपिण्डमण्डलैरिव विहायःपारावारस्य, अट्टहासविलासैरिव व्योमव्योमकेशस्य, स्फटिकोत्कीर्णक्रीडाकुत्कीलैरिव ज्योतिर्लोकस्य, ऐरावतकुलकलभैरिवानङ्ग(न्त)वनस्य, समन्तादुत्सर्पतानेकमाणिक्यरुचितरङ्गप्रसरेण परिकल्पयद्भिरिव विनेयजनानां त्रिदशवेश्मनिवेशारोहणाय सोपानपरम्पराम्, अशेषस्य जगतः परलोकावलोकनोचितभावसंभारसारस्य संसारसागरोत्तरणपोतपात्रैरिव, विचित्रकोटिभिः कूटैर्घटनाश्रयां श्रियमुद्वहद्भिश्चैत्यालयैरपरैश्चाभ्रंलिहैरुत्तुङ्गतोरणमणिमरीचिपिञ्जरितामरभवनैर्महाभागभवनैरुपशोभितं राजपुरं नाम नगरम् ।

---

तैश्चैत्यालयैः । अट्टहासविलासैरिव व्योमव्योमकेशस्य [आकाशशंकरस्य] उद्भटहासप्रसरैरिव । पुनः कथंभूतैश्चैत्यालयैः । स्फटिकोत्कीर्णक्रीडाकुत्कीलैरिव ज्योतिर्लोकस्य चन्द्रसूर्यग्रहतारकालोकस्य स्फटिकैरुत्कीर्णाष्टङ्कच्छिन्ना ये क्रीडापर्वतास्तैरिव । पुनः कथंभूतैश्चैत्यालयैः । ऐरावतकुलकलभैरिवानङ्ग(न्त)वनस्य आकाशारण्यस्य ऐरावतकुलोत्पन्नगजबालकैरिव । किं कुर्वद्भिश्चैत्यालयैः । समन्तादुत्सर्पतानेकमाणिक्यरुचितरङ्गप्रसरेण परिकल्पयद्भिरिव विनेयजनानां त्रिदशवेश्मनिवेशारोहणाय सोपानपरम्पराम् समन्तात्सर्वत्रोत्सर्पतोर्ध्वं गच्छता अनेकानि वहुलानि माणिक्यानि रत्नानि तेषां रुचयो दीप्तयस्तासां तरङ्गप्रसरेण कल्लोलविसरेण कृत्वा विनेयजनानां भव्यप्राणिनां त्रिदशवेश्मनिवेशारोहणाय स्वर्गस्थानचढनाय सोपानपरम्परामारोहणश्रेणीं परिकल्पयद्भिरिव रचयद्भिरिव । पुनः कथंभूतैश्चैत्यालयैः । अशेषस्य जगतः परलोकावलोकनोचितभावसंभारसारस्य संसारसागरोत्तरणपोतपात्रैरिव अशेषस्य विश्वस्य जगतो जगति स्थितासन्नभव्यजीवसमूहस्य । संसरन्ति पर्यटन्ति प्राणिनो यस्मिन्निति संसारः । 'अकर्तरि च कारके संज्ञायाम्'...... । संसार एव समुद्रः । अनन्तभवैरप्यप्राप्तपारत्वात् । तस्य तरणमुन्मज्जनं पारप्रापणं तदर्थं पोतपात्रैरिव जलयानपात्रैरिव । कथंभूतस्य जगतः । परलोकावलोकनोचितभावसंभारसारस्य परलोकस्य सर्वकर्मक्षयलक्षणस्य मोक्षस्यावलोकनं तत्र गमनम् । [नहि गमनमन्तरेण मोक्षो निरीक्ष्यते ।] तस्मिन्नुचितो योग्यो योऽसौ भावः परमधर्मानुरागलक्षणभक्तिस्तस्य संभारः समूहस्तेन सारमतिशयवत् तस्य तथोक्तस्य । पुनः कथंभूतैश्चैत्यालयैः । विचित्रकोटिभिः कूटैर्घटनाश्रयां श्रियमुद्वहद्भिः कूटैः शिखरैः श्रियं शोभामुद्वहद्भिः । कथंभूतैः कूटैः । विचित्रकोटिभिः विचित्राः पञ्चविधमाणिक्यजटिताः कोटयोऽग्राणि ते(ये)षां कूटानां ते विचित्रकोटयस्तैः । कथंभूतां श्रियम् । घटनाश्रयामनेकरचनासंवन्धिनीम् । अपरैश्चाभ्रंलिहैरुत्तुङ्गतोरणमणिमरीचिपिञ्जरितामरभवनैर्महाभागभवनैरुपशोभितम् । न केवलं चैत्यालयैरुपशोभितं राजपुरं नाम नगरं वर्तते, किंत्वपरैश्च महाभागभवनैर्लक्ष्मीवत्पु-

आदाय सर्वसारं विधिना दर्शयितुमस्य लोकस्य ।
अमरपुरीलक्ष्मीमिव मन्ये सृष्टं प्रयत्नेन ॥ ४६ ॥
यत्र यमोऽप्यसमर्थः प्रभवेत्कुत एव तत्र रिपुलोकः ।
धूलिस्पर्शभयादिव मन्ये प्राकारनिर्माणम् ॥ ४७ ॥
परिखावलयालंकृतमाभाति समन्ततः पुरं रम्यम् ।
आयसनिगडनिबद्धं सुरहरणभयादिव जनेन ॥ ४८ ॥

किं च ।

सौधमूर्धसु यत्रोच्चैः कुम्भाः काञ्चनकल्पिताः ।
भान्ति सिद्धवधूदत्ताः शेषाः सिद्धार्थका इव ॥ ४९ ॥

---

रुषमन्दिरैरुपशोभितं वर्तते । कथंभूतैर्महाभागभवनैः । अभ्रंलिहैश्चुम्बितमेघपटलैः । अपरं कथंभूतैर्महाभागभवनैः । उत्तुङ्गतोरणमणिमरीचिपिञ्जरितामरभवनैः उत्तुङ्गानि अत्युन्नतानि यानि तोरणानि द्वाराणि तेषां मणीनां मरीचयः किरणास्तैः पिञ्जरितानि पीतीकृतानि अमरभवनानि देवविमानानि यैस्तानि तथोक्तैः । उत्प्रेक्षादिसंकरालंकारः ॥

**आदायेति** । मन्ये अहमेवं जानामि । अस्य लोकस्य मध्यलोकस्थितमनुष्यसमूहस्य अमरपुरीलक्ष्मीं स्वर्गलोकशोभां दर्शयितुमिव अवलोकयितुमिव इदं नगरं विधिना ब्रह्मणा प्रयत्नेन सावधानतया सृष्टं निष्पादितम् । किं कृत्वा । पूर्वं सर्वसारं आदाय सर्वोत्कृष्टं वस्तु गृहीत्वा । उत्प्रेक्षालंकारः ॥ ४६ ॥

**यत्रेति** । यत्र यस्मिन् राजपुरे यमोऽपि धर्मराजोऽपि असमर्थः भङ्क्तुं समर्थो न भवति, तत्र तस्मिन्नगरे रिपुलोकः शत्रुसमूहः कुत एव कस्मादेव भङ्क्तुं प्रभवेत् समर्थो भवति । यदि यमोऽपि नगरभञ्जने समर्थो न वर्तते, तर्हि रिपुभयात्प्राकारः किमर्थं निर्मितो वर्तते [इत्यत आह—] मन्ये अहमेवमुत्प्रेक्षे—धूलिस्पर्शभयादिव मा मैतन्नगरं रजः स्प्राक्षीत् इत्यभिप्रायेण प्राकारनिर्माणं वर्तते । आक्षेपोत्प्रेक्षालंकारौ ॥ ४७ ॥

**परिखेति** । परिखायाः खाताया वलयेन मण्डलेनालंकृतं शोभितं पुरं राजपुरं समन्ततः सर्वत्र आभाति शोभते । कथंभूतं पुरम् । रम्यमतिमनोहरम् । अपरं कथंभूतम् । उत्प्रेक्षते—जनेन लोकेन सुरहरणभयाद्देवताचोरशङ्कया आयसनिगडनिबद्धमिव लोहशृङ्खलया निगडितमिव । उत्प्रेक्षालंकारः ॥ ४८ ॥

**किं चेति** । अस्ति कश्चिद्विशेषः ॥

**सौधेति** । यत्र यस्मिन्नगरे सौधमूर्धसु राजभवनशिखरेषु काञ्चनकल्पिताः कनकनिर्मिताः कुम्भाः कलशा उच्चैरतिशयेन भान्ति शोभन्ते । अत्रोत्प्रेक्षते—सिद्धार्थकाः पीतसर्षपोद्भवाः शेषा आशिका इव । कथंभूताः शेषाः । सिद्धानां देव-

ब्रह्मा विलासिनीर्यत्र विनिर्माय न यौवने ।
मनोविभ्रमभीत्येव व्यधाल्लोचनगोचराः ॥ ५० ॥
यत्र स्मरस्मयध्वंसियुवलोकविलोकनात् ।
बभार सर्वदा लक्ष्मीं पुराणपुरुषो हृदि ॥ ५१ ॥
यत्कान्तकामिनीसङ्गभयादिव नगात्मजा ।
विवेश हरदेहार्धं तद्रक्षणपरायणा ॥ ५२ ॥

यत्र चानवरतप्रसाधितालकचामरोपचारैः, अलिकाङ्गणरङ्गशृङ्गारितभ्रूल-

---

विशेषाणां वधूभिः कमनीयकामिनीभिर्दत्ता आरोपितास्ते सिद्धवधूदत्ताः । उपमालंकारः ॥ ४९ ॥

**ब्रह्मेति** । यत्र यस्मिन्नगरे ब्रह्मा सृष्टिकर्ता विलासिनीः कमनीयकामिनीर्विनिर्माय सृष्ट्वा यौवने विलासिनीनां तारुण्ये सति लोचनानां गोचरान् न व्यधात् न चकार । किमिति । उत्प्रेक्षते—मनोविभ्रमभीत्येव चित्तस्खलनभयेनेव । श्लेषालंकारः ॥ ५० ॥

**यत्रेति** । यत्र यस्मिन्नगरे स्मरस्मयध्वंसियुवलोकविलोकनात् स्मरः कंदर्पस्तस्य स्मयो रूपगर्वस्तं ध्वंसन्ति तिरस्कुर्वन्तीत्येवंशीलाः स्मरस्मयध्वंसिनस्ते च ते युवलोकास्तरुणपुरुषास्तेषां विलोकनान्निरीक्षणात्पुराणपुरुषः श्रीनारायणो लक्ष्मीं श्रियं सर्वदा सर्वकालं हृदि हृदयस्थले बभार धृतवान् । हेतुगर्भितोत्प्रेक्षालंकारः ॥ ५१ ॥

**यदिति** । नगात्मजा पार्वती परमेश्वरी हरदेहार्धं श्रीमहादेवशरीरार्धं विवेश प्रविष्टा । किमर्थम् । कथंभूता नगात्मजा । तद्रक्षणपरायणा श्रीमहादेवव्यभिचारभयतत्परा । कस्मात्तद्रक्षणपरायणा । यत्कान्तकामिनीसङ्गभयादिव यस्य नगरस्य संबन्धिन्यः कान्ता अतिमनोहरा याः कामिन्यः स्त्रियस्तासां सङ्गभयात् । ताभिः सह व्यभिचरतीत्यर्थः । उत्प्रेक्षालंकारः ॥ ५२ ॥

**यत्र चेत्यादि** । यत्र च यस्मिन्नगरे मनसिजमहाराजनन्दनः कामदेवनृपकुमारः । महाराजस्य नन्दनो महाराजनन्दनो महानृपकुमारः । मनसिजः कंदर्पस्तस्य(एव) महाराजनन्दनः वनादिक्रीडाप्रियत्वान्मनसिजमहाराजनन्दनो निजाराधनसरसेष्वपि आत्माराधनसरागेष्वपि उत्सवदिवसेषु श्रावणकृष्णतृतीयाफाल्गुनशुक्लत्रयोदशीदिवसेषु मदनोत्सवदिनेषु परपुरपुरंध्रीणामपरनगरस्त्रीणामर्हणासु आराधनासु परिचयं सङ्गं न चकार न कृतवान् । कथंभूतो मनसिजः । पौराङ्गनाजनैस्तन्नगरस्त्रीसमूहैर्विनोद्यमान इव क्रीडां कार्यमाण इव । कथंभूतैः पौराङ्गनाजनैः । अनवरतप्रसाधितालकचामरोपचारैः अनवरतं निरन्तरं प्रसाधित उपढौकितः अलकचामराणां कुन्तलप्रकीर्णकानामुपचारः सेवा यैस्ते तथा तैः । अपरं कथंभूतैः पौराङ्गनाजनैः । अलिकाङ्गणरङ्गशृङ्गारितभ्रूलताकोटिभिः अलिकाङ्गणरङ्गो ललाटपट्टकवरनर्तनभूमिस्तत्र शृङ्गारिताः सज्जीकृता

ताकोटिभिः,उपसर्पितविलासविकासाविरलविलोकविलोचनलीलाकमलैः,संकल्पितकपोललावण्यमधुसमागमैः, विस्फारितामृतकान्तबिम्बाधररसैः, संजनितस्मरसारालापकर्णपूरैः, उदारहारनिर्झरोचितकुचक्रीडाचलविहारसंपादिभिः, स्तनमुकुलमृणाललीलावलिवाहिनीविहितजलकेलिविभ्रमैः, प्रदर्शितमनोहंसावासनाभीवलभिगर्भैः, प्रकटितचेतोवासनिवासशासनमसीलिखितलि-

---

भ्रूलताकोटयश्चिल्लीकोटयो यैस्ते तथा तैः। पुनः कथंभूतैः पौराङ्गनाजनैः। उपसर्पितविलासविकासाविरलविलोकविलोचनलीलाकमलैः विलासो नेत्रशोभा तस्य विकास उत्फुल्लत्वं तेनाविरलविलोकोऽविच्छिन्नविलोकनं तेनोपलक्षितानि यानि विलोचनानि नेत्राणि तान्येव लीलाकमलानि उपसर्पितानि उपढौकितानि विलासविकासाविरलविलोकविलोचनलीलाकमलानि यैस्ते तथा तैः। पुनः कथंभूतैः पौराङ्गनाजनैः। संकल्पितकपोललावण्यमधुसमागमैः कपोलानां लावण्यं तदेव मधु मद्यम्। क्षीबत्वकारणात्। अथवा तदेव मधुसमागमो वसन्तागमनम्। कामसहायकारित्वात्। कपोललावण्यमधुसमागमः। संकल्पितः सम्यग्रचितः कपोललावण्यमधुसमागमो यैस्ते तथा तैः। पुनः कथंभूतैः पौराङ्गनाजनैः। विस्फारितामृतकान्तबिम्बाधररसैः अमृतवत् पीयूषवत् कान्तः मनोहरः। सुस्वादुत्वात्। स चासौ बिम्बाधररसः पक्वतिन्दुकेरीसमानाधरस्तन्नौष्ठानां रसः पुण्ड्रेक्षुखण्डितनिर्यासः अमृतकान्तबिम्बाधररसः। विस्फारितः प्रचुरीकृतो विशेषेण पायितः अमृतकान्तबिम्बाधररसो यैस्ते तथा तैः। पुनः कथंभूतैः। पौराङ्गनाजनैः। संजनितस्मरसारालापकर्णपूरैः स्मरेण कामेन सारः सारीभूतो योऽसावालापः संभाषणं स एव कर्णपूरः कर्णाभरणं श्रवणावतंसः। हृदयसौख्यकारित्वात्। स्मरसारालापकर्णपूरः। संजनितः सम्यगारोपितः स्मरसारालापकर्णपूरो यैस्ते तथा तैः। पुनः कथंभूतैः पौराङ्गनाजनैः। उदारहारनिर्झरोचितकुचक्रीडाचलविहारसंपादिभिः उदारा अतिमनोहरा ये हारा मुक्ताफलमालास्त एव निर्झराः। पानीयप्रवाहास्तैरुचिता योग्यतां नीता ये कुचक्रीडाचलाः स्तनक्रीडापर्वताः। कठिनोन्नतगुणत्वात्। तेषु विहारः पर्यटनं संपादयन्ति उत्पादयन्तीत्येवंशीलास्ते तथा तैः। पुनः कथंभूतैः पौराङ्गनाजनैः। स्तनमुकुलमृणाललीलावलिवाहिनीविहितजलकेलिविभ्रमैः स्तना एव मुकुलाः स्तनमुकुलास्तेषां...........आवल्य उदररेखास्ता एव वाहिन्यो नद्यस्तत्र विहितः कृतो जलकेलिविभ्रमो जलक्रीडाविलासो यैस्ते तथा तैः। पुनः कथंभूतैः पौराङ्गनाजनैः। प्रदर्शितमनोहंसावासनाभीवलभिगर्भैः प्रदर्शितः प्रकटीकृतो मनोहंसावासनिमित्तं नाभीवलभिगर्भस्तुन्दीपञ्जरमध्यो यैस्ते तथा तैः। पुनः कथंभूतैः पौराङ्गनाजनैः। प्रकटितचेतोवासनिवासशासनमसीलिखितलिपिस्पर्धमानरोमराजिभिः चेतोवासः कामदेवस्तस्य निवासो वसतिका

---

१. 'लापकलाप' मूल०.

पिस्पर्धमानरोमराजिभिः, विस्तारितसमस्तसुखसाम्राज्यचिह्नजघनसिंहासनैः, संचारितोरुकदलीकाण्डकाननैः, चरणनखसंपादितरतिरहस्यरत्नदीपविरचनैः पौराङ्गनाजनैर्विनो[१]द्यमान इव मनसिजमहाराजनन्दनो निजाराधनसरसेष्व-प्युत्सवदिवसेषु न परपुरपुरंध्रीणामर्हणासु परिचयं चकार ।

तत्र [चास्ति] समस्तमहीम[२]हिलाशिखण्डमण्डनकरे पुरे सुकृतिनो हरि-वंशजन्मनः प्रचण्डदोर्दण्डमण्डलीमण्डनमण्डलाग्रखण्डितारातिप्रकाण्डस्य [३]चण्डमहासेनस्य नृपतेः सूनुः पराक्रमापहसितनृगनलनहुषभरतभगीरथभ-गदत्तो मार(रि)दत्तो नाम राजा ।

---

तन्निमित्तं यत् शासनं लेख्यं तस्य संबन्धिनी या मसीलिखितलिपिर्भिन्नाञ्जनलिखिताक्षर-विन्यासस्तया स्पर्धमाना तदुपमां धरन्ती या रोमराजी रोमावलिः चेतोवासनिवासशास-नमसीलिखितलिपिस्पर्धमानरोमराजिः । प्रकटिता लोचनगोचरीकृता चेतोवासनिवास-शासनमसीलिखितलिपिस्पर्धमानरोमराजिर्यैस्ते तथा तैः । पुनः कथंभूतैः पौराङ्गना-जनैः । विस्तारितसमस्तसुखसाम्राज्यचिह्नजघनसिंहासनैः समस्तसुखं परिपूर्णसुखं तच्च तत्साम्राज्यं चक्रवर्तित्वं च तस्य चिह्नमभिज्ञानं यज्जघनसिंहासनं तत्स्त्रीकव्यविस्तरं(?) विस्तारितमुपढौकितं समस्तसुखसाम्राज्यचिह्नजघनसिंहासनं यैस्ते तथा तैः । पुनः क-थंभूतैः पौराङ्गनाजनैः । संचारितोरुकदलीकाण्डकाननैः केन वायुना दल्यते विदार्यते कदली, कदलीनां काण्डानि स्कन्धास्तेषां काननानि वनानि । समूहा इत्यर्थः । ऊरव एव चण्डा······कान्येव कदलीकाण्डकाननानि । स्पर्शादेव सुखशीतलोत्पादकत्वात् । संचारि-तानि उपढौकितानि ऊरुकदलीकाण्डकाननानि यैस्ते तथा तैः । पुनः कथंभूतैः पौराङ्गना-जनैः । चरणनखसंपादितरतिरहस्यरत्नदीपविरचनैः चरणानां नखाः पुनर्भवास्तैः संपादिता निष्पादिता रतेः संभोगस्य यद्रहस्यं गोप्यतत्त्वं तदुद्द्योतनं रत्नदीप[शिखा]विरचना माणिक्यप्रदीपकल्पनासृष्टिर्यैस्ते तथा तैः । संकरालंकारः ॥

**तत्रेत्यादि** । तत्र पुरे मार(रि)दत्तो नाम राजा वर्तते । कथंभूते पुरे । समस्त-महीमहिलाशिखण्डमण्डनकरे समस्ता परिपूर्णा या मही पृथ्वी सैव महिला कमनी-यकामिनी । पुरुषस्य संसारसुखहेतुत्वात् । तस्याः शिखण्डस्य मस्तकस्य मण्डनकरं तिलकरचनाविधायकं तत्तथोक्तं तस्मिन् । कथंभूतो मार(रि)दत्तो नाम राजा । चण्ड-महासेनस्य नृपतेर्नरेन्द्रस्य सूनुः पुत्रः । कथंभूतस्य चण्डमहासेनस्य । सुकृतिनः पूर्वो-पार्जितविशिष्टपुण्यस्य । पुनः कथंभूतस्य चण्डमहासेनस्य । हरिवंशजन्मा वृषभजि-न्महासामन्तहरिकान्तनरेन्द्रस्य वंशे कुले जन्मोत्पत्तिर्यस्य स हरिवंशजन्मा तस्य हरिवंशजन्मनः । पुनः कथंभूतस्य चण्डमहासेनस्य । प्रचण्डदोर्दण्डमण्डलीमण्डनम-

---

१. 'विनीयमान' मूल०. २. 'महिलामण्डल' मूल०. ३. 'चण्डस चण्डमहा' मूल०.

स बालकाल एव लब्धलक्ष्मीसमागमः, कुलवृद्धानां च प्रतिपन्नपितृवन-तपोवनलोकत्वादसंजातविद्यावृद्धगुरुकुलोपासनः, समानशीलव्यसनचरित्रैर्नर्मसचिवपुत्रैः परिवृतः, समाविर्भवता च तार्तीयीकेन वयसा निरङ्कुशतां नीय-

---

ण्डलाग्रखण्डितारातिप्रकाण्डस्य प्रचण्डो बलवत्तरो योऽसौ दोर्दण्डो बाहुदण्डस्तस्य [मण्डली तस्या] मण्डनमलंकरणभूतो योऽसौ मण्डलाग्रः खड्गस्तेन खण्डितो द्विधाकृतोऽरातिप्रकाण्डः शत्रुस्कन्धप्रदेशः । ग्रीवेत्यर्थः । येन सः तथा स तस्य । पुनः कथंभूतो मार(रि)दत्तः । पराक्रमापहसितनृगनलनहुषभरतभगीरथभगदत्तः नृगश्च नृगनामा नृपतिः, नलश्च दमयन्तीपतिः, नहुषश्च नहुषनामा यादवनरेन्द्रः, भरतश्च वृषभजिनन्दनः, भगीरथश्च सगरपुत्रः, भगदत्तश्च नृपतिविशेषः, नृगनलनहुषभरतभगीरथभगदत्ताः, पराक्रमेण बलवत्तया अपहसितास्तिरस्कृता नृगादयो येन स तथोक्तः ॥

[स इत्यादि ।] यथोक्तविशेषणविशिष्टः स मार(रि)दत्तो राजा कदाचित्कस्मिंश्चिदेव वासरे सामजैर्हस्तिभिः सह चिक्रीड क्रीडां चकार इति क्रियाकारकसंबन्धः । कथंभूतः । बालकाल एव लब्धलक्ष्मीसमागमः बालकाल एव कौमार्यादधस्तने च लब्धलक्ष्मीसमागमः लब्धः प्राप्तः लक्ष्म्या राजलक्ष्म्याः समागमः समागमनं येन स तथोक्तः । पुनरपि कथंभूतः । कुलवृद्धानां च प्रतिपन्नपितृ[वन]तपोवनलोकत्वादसंजातविद्यावृद्धगुरुकुलोपासनः विद्यया शास्त्रेण यद्वृद्धं महत्वं[प्राप्तं] तद्गुरुकुलं शास्त्रनिपुणमन्त्र्यादिसमूहः तस्योपासनं सेवनं शास्त्रसंग्रहः विद्यावृद्धगुरुकुलोपासनम्, असंजातमनुत्पन्नं विद्यावृद्धगुरुकुलोपासनं यस्य स तथा । कस्मादसंजातविद्यावृद्धगुरुकुलोपासन इत्याह—कुलवृद्धानां कुलमहापुरुषाणां च प्रतिपन्नपितृ[वन]तपोवनलोकत्वात् । पितृवनलोकश्च तपोवनलोकश्च पितृ[वन]तपोवनलोकौ, [प्रतिपन्नौ गमिकर्मीकृतौ पितृवनतपोवनलोकौ याभ्यां तौ प्रतिपन्नपितृवनतपोवनलोकौ,] तयोर्भावः प्रतिपन्नपितृ[वन]तपोवनलोकत्वम्, तस्मात्प्रतिपन्नपितृ[वन]तपोवनलोकत्वात् । केचित्कुलवृद्धाः पितृवनलोकं गताः श्मशानं प्राप्ताः । मृता इत्यर्थः । केचित्कुलवृद्धास्तपोवनलोकं गताः । संसारदेहभोगविरक्तत्वाद्दीक्षां प्राप्ता इत्यर्थः । तेन कारणेन विद्यावृद्धगुरुकुलोपासनं तस्य न संजातम् । यदि गुरुकुलोपासनं तस्य न संजातं तर्हि स कीदृशः संजात इत्याह—नर्मसचिवानां भण्डानां पुत्रास्तैः परिवृतो वेष्टितः । कथंभूतैर्नर्मसचिवपुत्रैः । समानशीलव्यसनचरित्रैः शीलं च दुष्टस्वभावः, व्यसनं वेश्यागमनादिकम्, चरित्रं च दुष्टाचारः, शीलव्यसनचरित्राणि, समानानि मार(रि)दत्तनरेन्द्रस्य च शीलव्यसनचरित्राणि येषां ते तथा तैः । अपरं किं क्रियमाणः । समाविर्भवता सम्यक्प्रादुर्भवता तार्तीयीकेन वयसा यौवनेन । तृतीयमेव तार्तीयीकं तेन तार्तीयीकेन । निरङ्कुशतां नीयमानः निरर्गलतां प्राप्यमाणः । अपरं [स] कथंभूतः मार(रि)दत्तः । स्वयंपरिगृहीतवीरपरिकरविधिः स्वयं

मानः, कदाचित्स्वयंपरिगृहीतवीरपरिकरविधिः, उभयकटकंदरान्योन्याभिमुखनिलीनमदशौर्यश्रीवेणिदण्डानुकारिणा दानद्रवेण श्यामलितकपोलभित्तिभिः, मदमदिरामोदस्वादोन्मदमधुकरारावपुनरुक्तडिण्डिमाडम्बरैः, क्रोधानलज्वालाकराललोचनाचरितसकलदिक्पालसाध्वसैः, अनूरुसारथिरथोन्माथमिथोदस्तहस्तनिष्ठुरनिष्ठ्यूतवमथुपाथःप्रवाहप्लावितसुरसदनैः, करावलेपभय-

स्वयमेव परिगृहीतः स्वीकृतः [वीर]परिकरविधिः शिरस्त्राणवारवाणोरस्त्राणादिविधिर्येन स तथोक्तः । कथंभूतैः सामजैः । उभयकटकंदरान्योन्याभिमुखनिलीनमदशौर्यश्रीवेणिदण्डानुकारिणा दानद्रवेण श्यामलितकपोलभित्तिभिः दानद्रवेण मदजलेन श्यामलिताः श्यामलीकृताः कृष्णीकृताः कपोलभित्तयः कटा येषां ते श्यामलितकपोलभित्तयस्तैस्तथोक्तैः । कथंभूतेन दानद्रवेण । उभयकटेत्यादि । उभयौ(भौ) वामदक्षिणौ कटौ गण्डौ तयोः कंदरो मध्यप्रदेशस्तत्रान्योन्याभिमुखनिलीने परस्परसंमुखमुपविष्टे ये मदः शौर्यश्रीश्च तयोर्वेणिदण्डौ संयतकुन्तलकलापौ तावनुकरोति तत्सदृशो भवतीत्येवंशीलः स तथोक्तस्तेन । अपरं कथंभूतैः सामजैः । मदमदिरामोदस्वादोन्मदमधुकरारावपुनरुक्तडिण्डिमाडम्बरैः मदो दानं स एव मदिरा । विह्वलकारित्वात् । तस्या आमोदो दूरव्यापी परिमलस्तस्यास्वादेन पानेनोन्मदा हर्षवन्तो ये मधुकरा भ्रमरास्तेषामारावः शब्दस्तेन पुनरुक्तो द्विगुणीकृतस्तिरस्कृतो वा डिण्डिमाडम्बरः पटहशब्दो येषां सामजानां ते तथा तैः । पुनः कथंभूतैः सामजैः । क्रोधानलज्वालाकराललोचनाचरितसकलदिक्पालसाध्वसैः क्रोधः कोप एवानलोऽग्निः । देहसंतापकारकत्वात् । तस्य ज्वालाः कीलास्ताभिः करालानि रौद्राणि यानि लोचनानि नेत्राणि तैराचरितमुत्पादितं सकलानां दिक्पालानामिन्द्रादीनां शत्रुनरेन्द्राणां वा साध्वसं भयं यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । अनूरुसारथिरथोन्माथमिथोदस्तहस्तनिष्ठुरनिष्ठ्यूतवमथुपाथःप्रवाहप्लावितसुरसदनैः अनूरुररुणनामा सारथिः [सूतो यस्य स] श्रीसूर्यस्तस्य यो रथो व्योमयानं तस्योन्माथायाधःपातनाय मिथः परस्परमुदस्ता क्षिप्ताः । अत्र मिथःशब्देन ...यानिर्दिष्टस्य नित्यत्वात् । 'यैसषमाक्ष्यक्ष्मुवमीक्षेतोर्हन्' इति आशाधरेण दर्शनात्(?) । ये हस्ताः शुण्डादण्डास्तेषां निष्ठुरो निर्दयो योऽसौ निष्ठ्यूतवमथुरुद्गीर्णवमनं स एव पाथो जलं तस्य प्रवाहेण पूरेण प्लावितानि क्षालितानि सुरसदनानि देवविमानानि यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । करावलेपभयभ्रश्यदाशाकरटि-

१. 'भिषो' मूल०.

१. 'मिथोऽन्योन्यं रहस्यपि' इत्यमरव्याख्यातृभिः सान्तत्वौदन्तत्वयोरङ्गीकारात् 'मिथोदस्त' इत्यत्र संधिर्दुर्लभः । 'पिण्डं दद्याद्गयाशिरे,' 'सत्यं वदन्ति ते कस्मादसत्यं नीरजस्तमाः' इत्यादिप्रयोगदर्शनेन 'सान्ता अप्यदन्ताः' इत्यङ्गीकारेणादन्तत्वाङ्गीकारेण समाधानं प्रमाणान्तरोपलब्ध्या ज्ञेयम्.

भ्रस्यदाशाकरटिघटैः, प्रधावजवकम्पितधरणिदेवतैः, चरणन्यासनमद्भूगोलक-[भार]दलितशेषफणावलयैः, प्रत्यक्पुरःपक्षभ्रमिप्रारम्भविजृम्भितप्रभञ्जनज-नितकुलशैलशिखरविघटनैः, कटकण्डूयनविनोदभग्नमहामहीरुहनिवहैः, स-मस्तसत्त्वसंमर्दातुच्छोच्छलच्छोणितच्छटाविच्छिन्नोपहारसंतर्पितमदपुरुषैः, मनःसु धृतसंहारसमयैरिव, दृष्टिषु कृतकालाग्निरुद्रैरिव, दशनेषु विनिवे-शितविशसनकर्मभिरिव, करेषु निहितवधक्रियोपायैरिव, पादेषु संपादित-

---

घटैः कराणां शुण्डादण्डानामवलेपः संचारस्तस्माद्भयेन भ्रस्यन्त आशाकरटिनां दि-ग्गजेन्द्राणां घटा घटना यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । प्रधावजवकम्पि-तधरणिदेवतैः प्रधावो वेगवद्गमनं तस्य जवेन वेगेन कम्पिता वेपिता धरणिदेवता भूमेरधिष्ठातृदेवता यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । चरणन्यासनमद्भूगो-लक[भार]दलितशेषफणावलयैः चरणानां पादानां न्यासेनारोपणेन नमन् नम्रीभवन् योऽसौ भूगोलकस्तस्य भारेण दलितानि चूर्णितानि चूर्णीकृतानि शेषफणावलयानि धर-णेन्द्रभोगमण्डलानि यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । प्रत्यक्पुरःपक्षभ्रमि-प्रारम्भविजृम्भितप्रभञ्जनजनितकुलशैलशिखरविघटनैः प्रत्यक् पश्चाद्भागः, पुरः अग्र-भागः, पक्षौ वामदक्षिणपार्श्वे प्रत्यक्पुरःपक्षास्तेषां भ्रमिर्भ्रमणं तस्य प्रारम्भो रचनादि-कर्म तेन विजृम्भितः प्रसृतः योऽसौ प्रभञ्जनो वायुस्तेन जनितमुत्पादितं कुलशैलशि-खराणां कुलपर्वतकूटानां विघटनं त्रोटनं यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । कटकण्डूयनविनोदभग्नमहामहीरुहनिवहैः कटानां गण्डस्थलानां कण्डूयनविनोदेन खर्जूस्फुटनेन भग्नाश्चूर्णीकृता महामहीरुहाणां महावृक्षाणां निवहाः समूहा यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । समस्तसत्त्वसंमर्दातुच्छोच्छलच्छोणितच्छटाविच्छिन्नो-पहारसंतर्पितमदपुरुषैः समस्तसत्त्वानां सर्वजीवानां संमर्देन चूर्णीकरणेन अतुच्छं बहुलमुच्छलदुत्पतच्छोणितं रुधिरं तस्य च्छटा धारास्तासामविच्छिन्नोपहारोऽखण्ड-पूजनं तेन संतर्पितास्तृप्तिं नीता मदपुरुषा राक्षसा यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । मनःसु धृतसंहारसमयैरिव मनःसु चित्तेषु धृत आरोपितः संहारसमयः प्रलयकालो यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । दृष्टिषु कृतकालाग्निरुद्रैरिव दृष्टिषु लोचनेषु कृतो धृतः कालाग्निरुद्रः प्रलयकालरुद्रो यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । दशनेषु [वि]निवेशितविशसनकर्मभिरिव दशनेषु दन्तेषु [वि] निवेशितमा-रोपितं विशसनकर्म हिंसाकर्म यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । करेषु नि-हितवधक्रियोपायैरिव करेषु शुण्डादण्डेषु निहित आरोपितो वधक्रियोपायो हिंसा बहुदुःखा यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । पादेषु संपादितवज्रसंपातैरिव

वज्रसंपातैरिव, वालधिषु च नियुक्तयमदण्डैरिव, निजमदगन्धानुवन्धबाधितापरद्विरदमदप्रभेदैः, स्यन्दनवेदमुपतिष्ठमानैः, नरशिरोदर्शं प्रधावद्भिः, तुरगालोकं पुरः प्रतिभासमानैः, सपत्नद्विपमदगन्धाघ्रायं प्रक्षुभ्यद्भिः, प्रतिपक्षेभमणिरवश्रावं संरम्भमाणैः, क्रमेलकविषयं विनिरुन्धद्भिः, छत्रगोचरं परिलुम्पमानैः, प्रलयकालानिलचलिताचलकुलविभीषणैः, प्रतिकरिशङ्कयेव

पादेषु चरणेषु संपादित उत्पादितो वज्रसंपातोऽशनिपातो यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । वालधिषु च विनियुक्तयमदण्डैरिव वालधिषु पुच्छेषु च नियुक्त आरोपितो यमदण्डो यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । निजमदगन्धानुवन्धवाधितापरद्विरदमदप्रभेदैः । निजमदगन्धेन स्वकीयदानपरिमलेन अनुवन्धेन सततप्रवृत्त्या बाधितः पीडितोऽपरद्विरदमदप्रभेदोऽन्यगजमदो यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । स्यन्दनवेदमुपतिष्ठमानैः स्यन्दनस्य रथस्य यद्वेदनं ज्ञानम् । ['विदेः साकल्ये नम् ।'] तदुपलक्षीकृत्योपतिष्ठमानैर्ग्रहीतुमागच्छद्भिः । पुनः कथंभूतैः सामजैः । नरशिरोदर्शं प्रधावद्भिः नरशिरो मनुष्यशिरो दृष्ट्वा प्रधावद्भिर्वेगवत्तयागच्छद्भिः । 'दृशो नम् साकल्ये' । पुनः कथंभूतैः सामजैः । तुरगालोकं पुरः प्रतिभासमानैः तुरगमालोक्य तुरगरथव्याप्तिपुरःसरं देदीप्यमानैः। सामजैः किं कुर्वद्भिः । सपत्नद्विपमदगन्धाघ्रायं प्रक्षुभ्यद्भिः सपत्नानां शत्रूणां संवन्धिनां द्विपानां गजानां मदगन्धाघ्रायं यथा भवत्येवं मदगन्धमाघ्राय मदगन्धस्याघ्राणं पूर्वं वा मदगन्धमाघ्राय । 'द्वितीयायां च' इत्यनेन नम्प्रत्ययः परीप्सायाम् । प्रक्षुभ्यद्भिः प्रचलद्भिः । अपरं किं कुर्वाणैः सामजैः । प्रतिपक्षेभमणिरवश्रावं संरम्भमाणैः प्रतिपक्षाणां शत्रूणामिभानां हस्तिनां मणिरवश्रावं यथा भवत्येवं संरम्भमाणैः कोपम[व]द्भिः । अपरं किं कुर्वद्भिः सामजैः । क्रमेलकविषयं विनिरुन्धद्भिः क्रमेलकानामुष्ट्राणां विषयं गोचरं विनिरुन्धद्भिः विशेषेणातिशयेन रुन्धद्भिः स्वीकुर्वद्भिः । उष्ट्राणां स्थानमङ्गीकुर्वद्भिरित्यर्थः । पुनः किं कुर्वाणैः सामजैः । छत्रगोचरं परिलुम्पमानैः । छत्रगोचरमातपवारणविषयं परिलुम्पमानैः । छत्राणि त्रोटयद्भिरित्यर्थः । (पुनः कथंभूतैः सामजैः । मणीनां पादारोपितलोहचक्राणां शब्दानां श्रवणपूर्वं परिसमन्ताच्छेदयद्भिः ।) पुनः कथंभूतैः सामजैः । प्रलयकालानिलचलिताचलकुलविभीषणैः प्रलयकालः कल्पान्तकालस्तस्य संबन्धी अनिलो वातस्तेन चलितान्युड्डायितानि यानि अचलकुलानि पर्वतसमूहास्तद्वद्विभीषणास्ते तथा तैः । पुनः कथंभूतैः सामजैः । प्रतिकरिशङ्कयेव गिरिकलीलालुलि-

१. अस्य मूलं तु मूलपुस्तकेऽसदुपलब्धे नैवोपलभ्यते । टीकायां तु पुस्तकद्वयेऽप्युपलभ्यतेऽयं पाठः । एकस्मिन्सटीकपुस्तके मूलमध्येऽसन्नेव त्रुटिचिह्नं दत्त्वाधोभागे टीकासमानाकार एव पाठः पूरितः । नवीनलिखितसटीकपुस्तके तु टीकासमानाकार एव पाठो मूलमध्य एव लिखित उपलभ्यते।

गिरिकलीलालुलितमहाशिलाशकलनिष्पिष्टगण्डशैलैः, करनिष्पेषणपातितसालवनैः, दन्तकोटिसमुत्पाटितपुरकपाटैः, स्वकीयबलविजिज्ञापयिषयेव रविरथेषाडम्बरं रदेषु शेषं पुष्करेषु मन्दराचलं शरीरेषु महापगाः कोशकटस्रोतःसु सूर्यं लोचनेषु तारागणं बिन्दुषु चन्द्रं नखेषु पवनं च तरःसु दधानैः, विटपिभङ्गवदवधीरिताधोरणप्रणिधिभिः, बिसतन्तुवत्त्रुटितवल्लिकैः, वीरणप्ररोहवत्पर्यस्तवाहरिकैः, लताप्रतानवदुन्मथितबन्धनैः, नलदण्डवत्प्रमर्दितालान-

---

तमहाशिलाशकलनिष्पिष्टगण्डशैलैः प्रतिकरिणां शत्रुगजानां शङ्कयेव गिरिकलीला कन्दुकक्रीडा तद्वत् लुलितानि उद्धूलितानि महाशिलानां शकलानि खण्डानि तैर्निष्पिष्टाश्चूर्णीकृता गण्डशैलाः क्षुद्रपर्वता यैस्ते तथा तैः। पुनः कथंभूतैः सामजैः। करनिष्पेषणपातितसालवनैः। कराणां शुण्डादण्डानां निष्पेषणेन आस्फालनेन पातितानि मूलादुन्मूलितानि सालवनानि शालवृक्षवनानि यैस्ते तथा तैः। पुनः किं कुर्वाणैः (कीदृशैः) सामजैः। दन्तकोटिसमुत्पाटितपुरकपाटैः। दन्तकोटिभिर्दन्ताग्रैः कृत्वा समुत्पाटितानि अधःपातितानि नगरकपाटानि नगरद्वारकपाटानि यैस्ते तथा तैः। पुनः किं कुर्वाणैः सामजैः। स्वकीयबलविजिज्ञापयिषयेव निजपराक्रमं ज्ञापयितुमिच्छयेव रविरथेषाडम्बरं रवेः श्रीसूर्यस्य रथस्य या ईषा दीर्घकाष्ठं तस्या आडम्बरमाटोपं रदेषु दन्तमुसलेषु दधानैर्धरद्भिः। शेषं नागं पुष्करेषु शुण्डादण्डेषु दधानैः। मन्दराचलं मेरुपर्वतं शरीरेषु कायेषु दधानैः। महापगा गङ्गायमुनानर्मदाद्या नदीः कोशकटस्रोतःसु कोशो मेढ्ररन्ध्रं कटो गण्डस्थलं तयोः स्रोतःसु तत्र मदप्रवाहेषु दधानैः। सूर्यं भास्करं लोचनेषु नेत्रेषु दधानैः। तारागणं नक्षत्रमण्डलं बिन्दुषु मदबिन्दुषु दधानैः। चन्द्रं शशाङ्कमण्डलं नखेषु विंशतिनखेषु दधानैः। पवनं नभस्वन्तं च समुच्चये तरःसु वेगेषु दधानैः। समुच्चयदीपकालंकारः। पुनः कथंभूतैः सामजैः। विटपिभङ्गवदवधीरिताधोरणप्रणिधिभिः विटपिनां गृहाणां भङ्गवत्त्रोटनवदवधीरिता अवगणिता आधोरणानां हस्तिपकानां प्रणिधयो याचनानि वा अङ्कुशप्रयोगा यैस्ते तथा तैः। पुनः किंभूतैः सामजैः। बिसतन्तुवत्त्रुटितवल्लिकैः पद्मिनीकन्दभागोत्पन्नसूत्रवत्त्रुटिता भङ्गमापिता वल्लिका शृङ्खला यैस्ते तथा तैः। पुनः कीदृशैः सामजैः। वीरणप्ररोहवत्पर्यस्तवाहरिकैः वीरणप्ररोहवदुशीरतृणाङ्कुरवत् पर्यस्ता अधःपातिता वाहरिका आलानस्तम्भा यैस्ते तथा तैः। पुनः किंभूतैः सामजैः। लताप्रतानवदुन्माथितबन्धनैः लताप्रतानवद्वल्लीजालवदुन्मथितानि शतखण्डीकृतानि बन्धनानि वरत्रादीनि यैस्ते तथा तैः। पुनः कीदृशैः सामजैः। नलदण्डवत्प्रमर्दितालानस्तम्भैः। नलदण्डवद्धमनदण्डवत् पोटगलवत् कमलदण्डवत् प्रमर्दिताश्चूर्णीकृता आलानस्तम्भा गजस्तम्भा यैस्ते तथा तैः। पुनः कीदृशैः सामजैः। मृणालजालवद्विघटितार्गलैः मृणालजालवत् प-

नस्तम्भैः, मृणालजालवद्विघटितार्गलैः, कुमुदकाण्डवदुन्मूलितनिकाचैः, मुखपटाभोगवदवगणितकरेणुभिः, परमाणुवल्लोचनगोचरादपि दूरतरसंचरच्चारैः, कर्णतालपवनपरिक्षिप्तदिगन्तघनसंघैः, गगनाघ्राणोत्कूणितकरसूत्कारकम्पितब्रह्मलोकैः, पांशुप्रमाथोन्मथितमार्तण्डमण्डलैः, पङ्कोपदेहदुर्दिनीकृतनभोभागैः, जलावगाहपलायितजलदेवतैः, कामचारविहारवित्रासितवनदेवीसंदोहैः, उल्लङ्घितबलवेगवीथीपरिमाणैः, शाक्यशासनप्रमाणैरिव सकलजगच्छून्यतामानेतुं प्रवृत्तिसहजैः सामजैः सह चिक्रीड ।

---

द्मिनीकन्दसमूहवत् विघटिता भङ्गमानीता अर्गलाः पिण्डकाष्ठानि यैस्ते तथा तैः । पुनः किंभूतैः सामजैः । कुमुदकाण्डवदुन्मूलितनिकायैः(चैः) कुमुदकाण्डवच्छ्वेतोत्पलनालवत् उन्मूलिता उत्पाटिता निकाया (चा) गात्रबन्धना यैस्ते तथा तैः । पुनः किंभूतैः सामजैः । मुखपटाभोगवदवगणितकरेणुभिः मुखपटाभोगवत्कृत्रिमसिंहमुखालेपवदवगणिता अवहेलिताः करेणवोऽपरगजा यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । परमाणुवल्लोचनगोचरादपि दूरतरसंचरच्चारैः परमाणुवल्लोचनगोचरादपि नेत्रविषयादपि दूरतरं अतिविप्रकृष्टं संचरन्तो वेष्टयन्तश्चारा वीरपुरुषा यैस्ते तथा तैः । पुनः कीदृशैः सामजैः । कर्णतालपवनपरिक्षिप्तदिगन्तघनसंघैः कर्णतालानां कर्णतालपत्राणां पवनेन वातेन परिक्षिप्ताः उड्डायिता दिगन्तेषु घनसंघा मेघपटलानि यैस्ते तथा तैः । पुनः कीदृशैः सामजैः । गगनाघ्राणोत्कूणितकरसूत्कारकम्पितब्रह्मलोकैः गगनाघ्राणायाकाशगन्धोपादानाय उत्कूणिता वक्रीकृता ये कराः शुण्डादण्डास्तेषां सूत्कारेण शब्दविशेषेण कम्पिता वेपिता ब्रह्मलोका अन्तरिक्षनगराणि यैस्त तथा तैः । पुनः कीदृशैः सामजैः । पांशुप्रमाथोन्मथितमार्तण्डमण्डलैः पांशुप्रमाथेन धूलिप्रक्षेपेण उन्मथितं उपरिक्षिप्तं मार्तण्डमण्डलं सूर्यविमानं यैस्ते तथा तैः । पुनः कथंभूतैः सामजैः । पङ्कोपदेहदुर्दिनीकृतनभोभागैः पङ्कस्य कर्दमस्य उपदेहो वृद्धिस्तया दुर्दिनीकृतो नभसो भागः प्रदेशो यैस्ते तथा तैः । पुनः कीदृशैः सामजैः । जलावगाहपलायितजलदेवतैः जलावगाहेन नदीसरोवरादिजलविलोडनेन पलायिता दूरं नाशिता जलदेवता यैस्ते तथा तैः । पुनः कीदृशैः सामजैः । कामचारविहार[वि]त्रासितवनदेवीसंदोहैः कामचारविहारेण स्वेच्छया पर्यटनेन [वि]त्रासिता भयं प्रापिता भीतिमापिता वनदेवीनां व्यन्तरीणां संदोहाः समूहा यैस्ते तथा तैः । पुनः कीदृशैः सामजैः । उल्लङ्घितबलवेगवीथीपरिमाणैः उल्लङ्घितानि उत्फालेन मापितानि बलवेगेन कृत्वा वीथ्याः परिमाणानि प्रधावद्भूमिदैर्घ्या यैस्ते तथा तैः । पुनः कीदृशैः सामजैः ।

---

१. 'विघटिततटिकार्गलैः' मू०.

कदाचित्कोणकोटिकलकन्दुकाम्बरचारणापरिस्खलितदिग्देवताविमानमण्डलो दुष्टाश्वैः सह प्रीतिं बबन्ध।

कदाचिन्निजभुजपराक्रमव्यायोधितासरा(र)लजलव्यालो महासरसीनामर्णांसि विजगाहे।

कदाचिद्दोर्दण्डदलितदुर्दमशार्दूलः कुत्कीलकुहराघ्रायिघूकघूत्कारघोरास्वरण्यानीषु विजहार।

कदाचिन्नियुद्धायासितप्रबलवेतालः पूतनाकरोड्डमरडमरुकारवभैरवाः क्षपासु पितृवनावनीः संचचार॥

शाक्यशासनप्रमाणैरिव बौद्धसमयशास्त्रैरिव सकलं जगत् सर्वं जगत् पृथ्वीमण्डलं शून्यतामानेतुमुद्वासतां प्रापयितुं प्रवृत्तिसहजैश्चेष्टितै स्वभावो येषां ते तथा तैः। संकरालंकारः॥

कदाचिदिति। स मारिदत्तो राजा कदाचित्कस्मिंश्चिदवसरे पु(दु)ष्टाश्वैः सह कष्टघोटकैः सार्धं प्रीतिं प्रेम बबन्ध बद्धवान् बध्नाति स्म। कथंभूतः सः। कोणकोटिकलकन्दुकाम्बरचारणापरिस्खलितदिग्देवताविमानमण्डलः कोणो मूलच(व)क्रकाष्ठयष्टिस्तस्य कोटिरग्रं तया कलकन्दुकस्य अम्बरचारणा गगननयनमाकाशप्रापणं तया परिस्खलितानि अवष्टब्धानि दिग्देवतानां विमानमण्डलानि व्योमयानसमूहा येन स तथा॥

कदाचित्कस्मिंश्चिदवसरे महासरसीनां महासरोवराणामर्णांसि जलानि विजगाहे विलोडयामास। कथंभूतः सः। निजभुजपराक्रमव्यायोधितासरा(र)लजलव्यालः निजौ स्वकीयौ भुजौ बाहुदण्डौ तयोः पराक्रमेण बलवत्तया व्यायोधिता विविधं युद्धं कारिता असरा(र)ला महान्तो(वक्राः) जलव्याला मकरादयो जलजन्तवो येन स तथा॥

कदाचित्कस्मिंश्चिदवसरे अरण्यानीषु महारण्येषु विजहार पर्यटनं चकार। स कथंभूतः। दोर्दण्डदलितदुर्दमशार्दूलः दोर्दण्डेन बाहुदण्डेन दलिता मृत्युं नीता मृत्पिण्डीकृता दुर्दमा बलवत्तराः शार्दूला व्याघ्रसिंहादयो येन स तथा। कथंभूतास्वरण्यानीषु। कुत्कीलकुहराघ्रायिघूकघूत्कारघोरासु कुत्कीलानां पर्वतानां कुहराणि विवराणि जिघ्रन्ति गन्धं गृह्णन्तीत्येवंशीलाः कुत्कीलकुहराघ्रायिणस्ते च ते घूका उलूकपक्षिणस्तेषां घूत्कारैः रौद्रशब्दैर्घोरा भयानकास्तास्तथा तासु॥

कदाचित्कस्मिंश्चिदवसरे क्षपासु रात्रिषु पितृवनावनीः श्मशानभूमिकाः संचचार पर्यटितवान्। स कथंभूतः। नियुद्धायासितप्रबलवेतालः। नियुद्धेन बाहुयुद्धेनायासिता दमिताः प्रबलाः प्रचण्डा वेताला भूताविष्टमृतकशरीराणि येन स तथा। कथंभूताः पितृवनावनीः। पूतनाकरोड्डमरडमरुकारवभैरवाः पूतनानां राक्षसीनां करेषु हस्तेषु उड्डमरा उत्कटा ये डमरुका ढक्कास्तेषामारवाः शब्दास्तैर्भैरवा भयानकास्ताः॥

१. 'कन्दुकान्तर' मूल०.

कदाचिदसहायसाहसः साश्चर्यशौर्यनिर्जितविनतदुर्वारवीरावतारभूपालचूडामणिमरीचिप्रसरसरस्ताण्डवितचरणकमलः शत्रुक्षत्रियकलत्रनेत्रापाङ्गसङ्गोल्लोललाजाञ्जलिपातानामात्मानं पात्रतां निनाय ॥

कदाचित्तौर्यत्रिकातिशयविशेषविजितगन्धर्वलोकः खलतिकलतालयरङ्गेषु वनदेवतानां समाजं नर्तयामास ॥

कदाचिदान्ध्रीणामलकवल्लरीविजृम्भणजलधरः, चोलीषु भ्रूलतानर्तनमल-

---

कदाचित्कस्मिंश्चिदवसरे शत्रुक्षत्रियकलत्रनेत्रापाङ्गसङ्गोल्लोललाजाञ्जलिपातानामात्मानं पात्रतां निनाय शत्रुक्षत्रियाः सपत्नराजपुत्रास्तेषां कलत्रा(णि) यौवनमदवत्यः स्त्रियस्तासां नेत्राणां लोचनानामपाङ्गसङ्गेन कटाक्षासङ्गेन कटाक्षसंगत्या उल्लोला उत्कटा लाजाञ्जलय आर्द्रतण्डुलप्रसृतयस्तासां पाताः पातनानि तेषां (आत्मानं निजशरीरं) पात्रतामपात्रतां निनाय नीतवान् नयति स्म । कथंभूतः सः । असहायसाहसः अद्वितीयाद्भुतकर्मा । पुनः कथंभूतः । साश्चर्यशौर्यनिर्जितविनतदुर्वारवीरावतारभूपालचूडामणिमरीचिप्रसरसरस्ताण्डवितचरणकमलः साश्चर्यं चतुरचित्तचमत्कारकारकं यच्छौर्यं बलं तेन पूर्वं निर्जिता भङ्गं प्रापिताः पश्चाद्विनता नम्रीभूता ये दुर्वारवीरावतारभूपालाः । दुःखेन महता कष्टेन वारयितुमशक्या दुर्वाराः । वीरेषु सुभटेष्ववतारो जन्म येषां ते दुर्वारवीरावताराः ते च ते भूपाला राजानस्तेषां चूडामणयः शिरोरत्नानि तेषां मरीचयः किरणास्तेषां प्रसरो व्याप्तिः स एव सरस्तडागस्तत्र ताण्डवितं चरणकमलं पादपद्मं येन स तथा ॥

कदाचित्कस्मिंश्चिदवसरे खलतिकलतालयरङ्गेषु वनदेवतानां समाजं नर्तयामास । खलतिकं नाम वनानि तस्य लतालया लतामण्डपास्तेषां रङ्गेषु नर्तनभूमिषु वनदेवतानां कान्तारदेवतानां समाजं समूहं नर्तयामास नृत्यं कारितवान् । स कथंभूतः । तौर्यत्रिकातिशयविशेषविजितगन्धर्वलोकः तौर्यत्रिकं गीतनृत्यवादित्रशास्त्रं तस्यातिशयविशेषश्चातुर्यातिशयस्तेन विजिता भङ्गं प्रापिता गन्धर्वलोकाः कलत्रवाक्समूहा येन स तथा ॥

स मारि(र)दत्तः कदाचित्कस्मिंश्चिदवसरे कामक्रीडया स्मरं कंदर्पं विडम्बयामास तिरश्चकार । कथंभूतः सः । आन्ध्रीणां तिलिङ्गदेशवनितानां अलकवल्लरीविजृम्भणजलधरः अलकाश्चूर्णकुन्तलास्त एव वल्ल्यो मञ्जर्यो वल्लयो वा तासां विजृम्भणे उल्लासने जलधरो जीमूतसदृशः । पुनः कथंभूतः । चोलीषु चोलदेशवनितासु भ्रूलतानर्तने चि-

---

१. 'खलतिकखेलनलतालय' मूल०. २. 'विजृम्भमाण' मूल०.

---

१. अस्य धनुश्चिह्नद्वयान्तरगतस्य 'शत्रुक्षत्रिय' इत्यतः प्राक्पाठो योग्यः.

यानिलः, केरलीनां नयनदीर्घिकाकेलिकलहंसः, सिंहलीषु मुखकमलमकरन्दपानमधुकरः, कर्णाटीनां कुचकलशविलासपल्लवः, सौराष्ट्रीषु वलिवाहिनीविनोदकुञ्जरः, कम्बोजीनां नाभिवलभिगर्भसंभोगभुजङ्गः, पल्लवीषु नितम्बस्थलीखेलनकुरङ्गः, कलिङ्गीनां चलनकिसलयोत्सवपुष्पाकरः [स] स्मरं विडम्बयामास ॥

कदाचिदुन्निद्रारविन्दमकरन्दविम्बकोल्लोलजलकेलिवापिकेषु, माकन्दम-

---

ञ्जीवल्लीनर्तने मलयानिलश्चन्दनाचलवातसदृशः । पुनः कथंभूतः सः । केरलीनां दक्षिणपथदेशविशे[षयो]षाणां नयनदीर्घिकाकेलिकलहंसः नयनानि नेत्राणि तान्येव दीर्घिका वाप्यो वापिकाः । कान्तिजलसंभृतत्वात् । तासु केलिकरणे क्रीडाविधाने कलहंसो राजहंससदृशः । पुनः कथंभूतः सः । सिंहलीषु लङ्काद्वीपवनितासु मुखकमलमकरन्दपानमधुकरः मुखान्येव कमलानि सहस्रपत्राणि । सौरभगुणविराजमानत्वात् । तेषां मकरन्दपाने पुष्परसास्वादे मधुकरो भ्रमरसदृशः । पुनः कथंभूतः सः । कर्णाटीनां वनवासदेशयोषितां कुचकलशविलासपल्लवः कुचा एव कलशाः । शृङ्गाररसभृतत्वात् । तेषां विलासे शोभाविधाने पल्लवः प्रवालसदृशः । पुनः कथंभूतः सः । सौराष्ट्रीषु गिरिनारिसौराष्ट्रियोषित्सु वलिवाहिनीविनोदकुञ्जरः वलय उदरत्रिभङ्गास्त एव वाहिन्यो नद्यः । कान्तिजलसंभृतत्वात् । तासां विनोदे क्रीडाकरणे कुञ्जरो यूथनाथसदृशः । पुनः कथंभूतः सः । कम्बोजीनां वृहन्मुण्डकमनीयकामिनीनां नाभिवलभिगर्भसंभोगभुजङ्गः नाभ्यस्तुन्दिकास्ता एव वलभयः पटलाधारवंशपत्राणि तासां गर्भसंभोगे मध्यप्रदेशक्रीडने भुजङ्गो नागेन्द्रसदृशः । पुनः कथंभूतः सः । पल्लवीषु नितम्बस्थलीखेलनकुरङ्गः पल्लवीषु पल्लवदेशवनितासु नितम्बाः स्त्रीकटिपश्चाद्भागास्त एव स्थल्य उन्नतप्रदेशास्तत्र खेलने क्रीडाकरणे कुरङ्गः कस्तूरिकामृगसदृशः । पुनः कथंभूतः सः । कलिङ्गीनां चलनकिसलयोत्सवपुष्पाकरः कलिङ्गीनां कोटिशिलादेशस्त्रीणां चलनाः पादास्त एव किसलयानि पल्लवाः । कोमलत्वादरुणवर्णत्वाच्च तेषामुत्सवे उल्लासने पुष्पाकरो वसन्तसदृशः । शृङ्गाररसप्रधानत्वात् । उपमादिसंकरालंकारः ॥

स मारि(र)त्तः कदाचिन्मधुमासवासरेषु वसन्तर्तुदिनेषु कामाश्रमधर्मचारितां कामस्य कंदर्पस्याश्रमो निवासभूमिः । स्मरमन्दिरमित्यर्थः । तस्य संवन्धिनी या धर्मचारिता संभोगक्रीडा तामाप्रपेदे प्राप्तवान् । इति क्रियाकारकसंबन्धः । कथंभूतेषु मधुमासवासरेषु । उन्निद्रारविन्दमकरन्दविम्बकोल्लोलजलकेलिवापिकेषु उन्निद्राण्युत्फुल्लानि विकसितानि च तानि अरविन्दानि कमलानि तेषां मकरन्दः पुष्परसस्तस्य बिम्बकानि मण्डलानि तैरुपलक्षितमुल्लोलमुत्कल्लोलं यज्जलं तस्य संबन्धिन्यः केलिवापिकाः क्रीडादीर्घिका येषु ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । माकन्दमञ्जरीजालका-

ञ्जरीजालकावलोकनोल्लासितविलासिमानसेषु, मलयाचलावनीवनप्रसूनसौरभोद्भमरमरुदुद्धूयमानमकरध्वजध्वजदुकूलेषु, कामिनीमुखमदिरोन्मादितबकुलकाननेषु, विलासिनी विलोकितामृतसंतर्प्यमाणकुरबकतरुषु, रमणीमणिमञ्जीरशिञ्जितमुखरचरणास्फालनसनाथाशोकशाखिषु, परिमलमिलन्मिलिन्दसंदोहदूषितषट्पदातिथिपादपेषु, कदम्बकुसुमधूलिधूसरधराप्टष्ठेषु, कन्दरकलापसंचरद्रतिचतुरविकिरनखमुखावलिख्यमानवल्लरीशरीरेषु, का-

---

वलोकनोल्लासितविलासिमानसेषु माकन्दानामाम्रतरूणां मञ्जर्यो वल्लर्यस्तासां जालकानि समूहास्तेषामवलोकनेनोदीक्षणेनोल्लासितानि आनन्दं प्रापितानि विलासिनां कामुकानां मानसानि चित्तानि येषु ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । मलयाचलावनीवनप्रसूनसौरभोद्भमरमरुदुद्धूयमानमकरध्वजध्वजदुकूलेषु मलयाचलश्चन्दनगिरिस्तस्यावनी भूमिस्तत्र यद्वनं चन्दनतरुवनं तस्य प्रसूनानि पुष्पाणि तेषां सौरभं सौगन्ध्यं तेनोद्भमर उत्कटो योऽसौ मरुद्वातस्तेनोद्धूयमानानि कम्पमानानि मकरध्वजस्य कामदेवस्य ध्वजदुकूलानि केतुवस्त्राणि येषु ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । कामिनीमुखमदिरोन्मादितवकुलकाननेषु कामिनीनां मुखानि वक्त्राणि तेषां या मदिरा मद्यं तयोन्मादितानि विशोकीकृतानि वकुलकाननानि मञ्जुलवनानि येषु ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । विलासिनीविलोकितामृतसंतर्प्यमाणकुरवकतरुषु विलासिनीनां तरुणयोषितां विलोकितान्यवलोकनानि तान्येवामृतानि पीयूषाणि । जीवनदायकत्वात् । तैः संतर्प्यमाणाः संप्रीयमाणाः कुरवकतरवो येषु ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । रमणीमणिमञ्जीरशिञ्जितमुखरचरणास्फालनसनाथाशोकशाखिषु रमणीनां कमनीयकामिनीनां ये मणिमञ्जीरा रत्नखचितनूपुराणि तेषां शिञ्जितानि शब्दानि(:) तैर्मुखरा वाचाला ये चरणाः पादास्तेषामास्फालनेन ताडनेन सनाथा विकासं प्राप्ता अशोकशाखिनो येषु ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । परिमलमिलन्मिलिन्दसंदोहदूषितषट्पदातिथिपादपेषु परिमलेन सौरभेण मिलन्त एकत्रीभवन्तो ये मिलिन्दा भ्रमरास्तेषां संदोहैः समूहैर्दूषिताः कृष्णवर्णीकृताः षट्पदातिथिपादपाश्चम्पकवृक्षा येषु ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । कदम्बकुसुमधूलिधूसरधराप्टष्ठेषु कदम्बानां कदम्बवृक्षाणां कुसुमानि प्रसवस्तेषां धूलिभी रजोभिर्धूसराणि ईषत्पाण्डुराणि धराप्टष्ठानि भूमिमण्डलानि येषु ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । कन्दरकलापसंचरद्रतिचतुरविकिरनखमुखावलिख्यमानवल्लरीशरीरेषु कन्दरकलापेषु गुहासमूहेषु संचरन्तः प्रविशन्तो ये रतिचतुरविकिराः पारापतपक्षिणस्तेषां नखैर्मुखैश्चावलिख्यमानानि चुम्ब्यमानानि वल्लरीणां शरीराणि काया

---

१. 'विलासिनी' सटीकपुस्तकपाठः.

न्तारकुहरविहरत्कोकिलकुलकोलाहलोत्थापितानङ्गव्यालव्याकुलितकामुकेषु, प्रोषितयोषिद्विरहाशुशुक्षणिसंधुक्षिषु, मनसिजाजकवटंकारद्रवदध्वन्यहृदयेषु, दिवाप्यभिसारिकाजनानामन्धतमसप्रसाधिषु, धीराणामपि प्रणयिनीप्रणतिहेतुषु, मानिनामपि प्रियतमाप्रसादनदैन्यनिर्नादेषु शूराणामपि वल्लभाचाटुकारकारणेषु, यमिनामपि रतिरसातङ्कायतनेषु, पुष्पचापशरप्रसारसारेषु, मधुमासवासरेषु कामाश्रमधर्मचारितामाप्रपेदे ॥

---

येषु ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । कान्तारकुहरविहरत्कोकिलकुलकोलाहलोत्थापितानङ्गव्यालव्याकुलितकामुकेषु कान्तारकुहरेषु उद्यानविवरेषु मध्येषु विहरन्तः पर्यटन्तो ये कोकिलाः पुंस्कोकिलास्तेषां कुलानि समूहास्तेषां कोलाहलः कलकलशब्दस्तेनोत्थापितः प्रकटीकृतोऽनङ्ग एव व्यालः कन्दर्पकालसर्पः । अचेतनो(नतो)त्पादकत्वात् । तेन व्याकुलिता विह्वलीकृताः कामुकाः स्त्रीलम्पटपुरुषा येषु ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । प्रोषितयोषिद्विरहाशुशुक्षणिसंधुक्षिषु प्रोषितयोषितः परदेशप्राप्तभर्तृकाः स्त्रियस्तासां विरहो विप्रलम्भः स एव आशुशुक्षणिर्वैश्वानरः । शरीरसंतापकारकत्वात् । तं संधुक्षयन्ति प्रदीपयन्तीत्येवंशीलास्ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । मनसिजाजकवटंकारद्रवदध्वन्यहृदयेषु मनसिजः कामस्तस्याजकवं धनुस्तस्य टंकारः शब्दस्तेन द्रवन्ति नश्यन्ति ह्रियन्ते अध्वन्यानां पथिकानां हृदयानि चित्तानि येषु ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । दिवाप्यभिसारिकाजनानामन्धतमसप्रसाधिषु दिवापि दिवसेऽपि रात्रौ चापि अभिसारिकाजनानां परपुरुषलम्पटस्त्रीसमूहानामन्धतमसप्रसाधिषु अन्धतमसमन्धकारं प्रसाधयन्तीत्येवंशीलास्ते तथा तेषु । अन्धकारकारकेष्वित्यर्थः । 'अवतमसमन्धतमसं ध्वान्तमन्धकारं च' इति हलायुधः । पुनः कथंभूतेषु मधुमासवासरेषु । धीराणामपि योगीश्वराणामपि । अपिशब्दात्कातराणामपि । प्रणयिनीनां स्त्रीणां प्रणतेः पादपतनस्य हेतवः कारणानि येषु ते तथा तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । मानिनामपि प्रियतमाप्रसादनदैन्यनिनादेषु मानिनामपि अभिमानवतामपि । अपिशब्दान्निर्मानानामपि । प्रियतमानां स्त्रीणां प्रसादनेषु प्रसन्नीकरणेषु यद्दैन्यमकिंचित्करं याचकत्वं तस्य निनादाः(नि) यैस्ते तथा तेषु प्रियतमाप्रसादनदैन्यनिनादेषु । पुनः कथंभूतेषु मधुमासवासरेषु । शूराणामपि वल्लभाचाटुकारकारणेषु शूराणामपि सहस्रभटलक्षभटकोटिभटानामपि । अपिशब्दात्संग्रामानिवर्तकानामपि । वल्लभानां प्रियतमस्त्रीणां चाटुकारस्य मिथ्यास्तुतेः कारणानि हेतुभूता ये तेषु वल्लभाचाटुकारकारणानि तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । यमिनामपि रतिरसातङ्कायतनेषु यमिनाम् । अपिशब्दात् अव्रतानामपि । रतेः संभोगक्रीडायाः

१. 'निदानेषु' मूल०.

कदाचिच्चरणकिसलयोल्लासमसृणितमार्गनिर्गमाभिः, पादनखमयूखोपहारितविहारमहीमण्डलाभिः, मेखलाकलापकलितोरुस्तम्भिकापुनरुक्तकाननदेवतोद्यानतोरणमालाभिः, नितम्बस्थलीद्विगुणिताशोकशाखाशयनसंनिवेशाभिः, तनूरुहराजिविजितलताप्ररोहप्रसराभिः, नाभिगर्भनिर्भर्त्सितक्रीडाकुत्कीलकन्दराभिः, वलिविलासविलुप्तवल्लरीचलनाभिः, स्तनविस्तारविडम्बितप्रसूनस्तव-

---

यो रसोऽनुरागः स एवातङ्कः सद्यःप्राणहरो व्याधिस्तस्यायतनानि आस्पदीभूतानि ते (?) रतिरसातङ्कायतनानि तेषु । पुनः कथंभूतेषु मधुमासवासरेषु । पुष्पचापशरप्रसारसारेषु पुष्पचापः कन्दर्पस्तस्य शरा बाणास्तेषां प्रसारः प्रवृत्तिस्तेन सारा बलवत्तरा ये तथा तेषु । संकरालंकारः ॥

स मारिदत्तः कदाचित्कस्मिंश्चिद्दिवसरे प्रमदवनेषूद्यानवनविशेषेषु युवतिभिः कमनीयकामिनीभिः सह सार्धं रेमे क्रीडां चकार । इति क्रियाकारकसंबन्धः । कथंभूताभिर्युवतिभिः । यथोक्तविशेषणविशिष्टाभिः अलंकारीकृतवनस्पतिविभूतिभिः अलंकारीकृता शरीरेष्ववतारिता वनस्पतिविभूतिरुद्यानलक्ष्मीर्याभिस्तास्तथा ताभिः। तत्कारणगर्भितविशेषणान्याह—कथंभूताभिर्युवतिभिः । चरणकिसलयोल्लासमसृणितमार्गनिर्गमाभिः चरणाः पादास्त एव किसलयानि कुम्पलानि । कोमलारुणवर्णसंयुक्तत्वात् । तेषामुल्लासः क्रीडनं तेन मसृणिताः कोमलीकृता मार्गनिर्गमाः पथःप्रवृत्तयो याभिस्तास्तथा ताभिः । पुनः कथंभूताभिर्युवतिभिः । पादनखमयूखोपहारितविहारमहीमण्डलाभिः पादनखानां चरणपुनर्भवानां मयूखाः किरणास्तैरुपहारितानि पूजितानि विहारस्य पर्यटनस्य महीमण्डलानि भूमिदेशा याभिस्तास्तथा ताभिः । पुनः कथंभूताभिर्युवतिभिः। मेखलाकलापकलितोरुस्तम्भिकापुनरुक्तकाननदेवतोद्यानतोरणमालाभिः मेखलाकलापः जघनोपरिस्थितवस्त्रोच्चयस्तेन कलिता वेष्टिता ऊरुस्तम्भिकाः पिचण्डलघुस्तम्भास्ताभिः पुनरुक्ता द्विगुणीकृता काननदेवतानामुद्यानदेवतानां तोरणमाला महोत्सववन्दनमाला याभिस्तास्तथा ताभिः । पुनः कथंभूताभिर्युवतिभिः । नितम्बस्थलीद्विगुणिताशोकशाखाशयनसंनिवेशाभिः नितम्बस्थलीभिः कटिपश्चाद्भागस्थलीभिर्द्विगुणितः अशोकशाखानां शयनसंनिवेशः शय्यास्थानं याभिस्तास्तथा ताभिः । पुनः कथंभूताभिर्युवतिभिः । तनूरुहराजिविजितलताप्ररोहप्रसराभिः तनूरुहराजिभी रोमराजिभिर्विजितस्तिरस्कृतो लताप्ररोहप्रसरो वल्लयङ्कुरप्रसारो याभिस्तास्तथा ताभिः । पुनः कथंभूताभिर्युवतिभिः । नाभिगर्भनिर्भर्त्सितक्रीडाकुत्कीलकन्दराभिः नाभिगर्भेण नाभिमध्येन निर्भर्त्सिता तिरस्कृता क्रीडाकुत्कीलकन्दरा क्रीडाकरणक्षुद्रपर्वतगुहा याभिस्तास्तथा ताभिः । पुनः कथंभूताभिर्युवतिभिः । वलिविलासविलुप्तवल्लरीचलनाभिः वलिविलासैस्त्रिवलीभङ्गशोभाभिर्विलुप्तानि तिरस्कृतानि वल्लरीचलनानि याभिस्तास्तथा ताभिः । पुनः कथंभूताभिर्युवतिभिः । स्तनविस्तार-

---

१. 'नाभिगर्तनिर्भर्त्सित' इत्यपि पाठः क्वचिट्टीकापुस्तकेषूपलभ्यते.

कामिः, भुजपञ्जरपराजितकान्तारतानाभिः, अधराधरीकृतवालप्रवालाभिः, कपोलतलोल्लसत्स्वेदजलमञ्जरीजालकुसुमितावतंसपल्लवाभिः, चिकुरकान्तिकलुषितसप्तच्छदच्छायाभिः, अलंकारीकृतवनस्पतिविभूतिभिर्युवतिभिः सह प्रमदवनेषु रेमे ॥

कदाचिन्मरकतमणिविनिर्मितमूलासु, कक्केल्लकोपलसंपादितभित्तिभङ्गिकासु, काञ्चनोपरचितसोपानपरम्परासु, मुक्ताफलपुलिनपेशलपर्यन्तासु, करि-

---

विडम्बितप्रसूनस्तवकाभिः स्तनानां विस्तारैर्विडम्बितास्तिरस्कृताः प्रसूनस्तवकाः पुष्पगुच्छा याभिस्तास्तथा ताभिः। पुनः कथंभूताभिर्युवतिभिः। भुजपञ्जरपराजितकान्तारतानाभिः भुजपञ्जरैर्बाहुरचनाभिः पराजितस्तिरस्कृतः कान्तारस्य वनस्य तानो दीर्घत्वं याभिस्तास्तथा ताभिः। पुनः कथंभूताभिर्युवतिभिः। अधराधरीकृतवालप्रवालाभिः अधरैर्बिम्बोष्ठैरधरीकृतास्तिरस्कृता वालप्रवालाः कोमलपल्लवा याभिस्तास्तथा ताभिः। पुनः कथंभूताभिर्युवतिभिः। कपोलतलोल्लसत्स्वेदजलमञ्जरीजालकुसुमितावतंसपल्लवाभिः कपोलतलेषु गण्डस्थलेषूल्लसन्ति उदयमानानि यानि स्वेदजलानि तान्येव मञ्जरीजालानि वल्लरीसमूहास्तैः कुसुमिताः पुष्पसंयुक्ताः कृता अवतंसपल्लवाः कर्णपूरप्रवाला याभिस्तास्तथा ताभिः। पुनः कथंभूताभिर्युवतिभिः। चिकुरकान्तिकलुषितसप्तच्छदच्छायाभिः चिकुराणां केशानां कान्तिभिः कृष्णतेजोभिः कलुषितास्तिरस्कृता अपमानविषयीकृताः सप्तच्छदानां विषमच्छदानां शारदवृक्षाणां छायाः शोभा याभिस्तास्तथा ताभिः। संकरालंकारः॥

कदाचित्कस्मिंश्चिद्वसरे गृहदीर्घिकासु गृहवापिकासु कामिनीभिर्नवयौवनाभिः स्त्रीभिः परिवृतो वेष्टितो जलक्रीडासुखमन्वभूत् आस्वादितवान्। काभिः क इव। करेणुभिः परिवृतः करी इव गज इव। यथा करेणुभिः परिवृतः करी सुखमन्वभूत् अनुभवति। कथंभूतासु दीर्घिकासु। मरकतमणिविनिर्मितमूलासु मरकतमणिभिर्विनिर्मितानि निष्पादितानि मूलानि भूतलानि यासां तास्तथा तासु। उक्तं च रत्नपरीक्षायाम्—'गैरुडोद्गारदुर्गोपवंशेष्वत्रकतुच्छकाः। मरकतश्चतुर्धातुश्चतुर्धा स्याद्विषापहः॥ म्लेच्छदेशे महाशैले कीरपक्षाणिको(क्षनिभो) भवेत्। संधिकर्बुररन्धासारूक्षता हरितः शुभः॥' हरितमणिविनिर्मितास्वित्यर्थः। पुनः कथंभूतासु गृहदीर्घिकासु। कक्केल्लकोपलसंपादितभित्तिभङ्गिकासु कक्केल्लकाः स्फटिकमणयस्तेषामुपलैः शिलाभिः संपादिता निष्पादिता भित्तीनां मेढ्कानां भङ्गिका रचना यासां तास्तथा तासु। पुनः कथंभूतासु गृहदीर्घिकासु। काञ्चनोपरचितसोपानपरम्परासु काञ्चनेन सुवर्णेनोपरचिता निर्मापिता सोपानपरम्परा आरोहणश्रेणिर्यासां तास्तथा तासु। पुनः कथंभूतासु गृहदीर्घिकासु। मुक्ताफलपुलिनपेशलपर्यन्तासु मुक्ताफलानां पुलिनैस्तोयोत्थितद्वीपैः। 'तोयोत्थितं तत्पुलिनम्' इति व-

---

१. इमौ रत्नपरीक्षाश्लोकौ यथादर्शमस्फुटार्थावेव रक्षितौ.

मकरमुखमुच्यमानवारिभरिताभोगासु, कर्पूरपारीदन्तुरतरङ्गसंगमासु, दुग्धोदधिवेलास्विव चन्दनधवलासु, वनस्थलीष्विव सकमलासु, शिशिरशैलशिलास्विव मृगमदामोदमेदुरमध्यासु, कण्ठीरवकण्ठपीठेष्विव सकेसरासु, विरहिणीशरीरयष्टिष्विव मृणालवलयिनीषु, मन्त्रवादोक्तिष्विव विविधयन्त्रश्लाघिनीषु, वसन्तलतास्विव विचित्रपल्लवप्रसूनफलस्फा[रस्फा]रार्धिकासु गृह-

---

चनात् । तैः पेशला अतिमनोहराः पर्यन्ताः प्रान्तदेशा यासां तास्तथा तासु । पुनः कथंभूतासु गृहदीर्घिकासु । करिमकरमुखमुच्यमानवारिभरिताभोगासु करिणां कृत्रिमहस्तिनां तथाविध(धानां) मकराणां जलचराणां [च] मुखैर्मुच्यमानं त्यज्यमानं यद्वारि जलं तेन भरिताः पूरिता आभोगा विस्तारा यासां तास्तथा तासु । इत्यनेन विशेषणेन गृहवापिकानां कृत्रिमत्वं सूचितमित्यर्थः । पुनः कथंभूतासु गृहदीर्घिकासु । कर्पूरपारीदन्तुरतरङ्गसंगमासु कर्पूरपारीभिर्हिमवालुकाशलाकाभिर्दन्तुर उन्नतस्तरङ्गसंगमः कल्लोलसंगतिर्यासां तास्तथा तासु । पुनः कथंभूतासु गृहदीर्घिकासु । दुग्धोदधिवेलास्विव चन्दनधवलासु । यथा दुग्धोदधिवेला क्षीरसागरजलविकृतयश्चन्दनवद्धवला भवन्ति । वापिकासु चन्दनेन धवलाः । पुनः कथंभूतासु गृहदीर्घिकासु । वनस्थलीष्विव सकमलासु । सह कमलैः कमलपुष्पैर्जलैर्वा वर्तन्ते सकमलास्तासु । कास्विव । वनस्थलीष्विव । यथा वनस्थल्यः कमलैर्मृगैः सह वर्तन्ते । पुनः कथंभूतासु गृहदीर्घिकासु । शिशिरशैलशिलास्विव मृगमदामोदमेदुरमध्यासु मृगमदस्य कस्तूरिकायाः आमोदः परिमलस्तेन मेदुराः स्निग्धा मध्यप्रदेशा यासां तास्तथा तासु । कास्विव । शिशिरशैलो हिमाचलपर्वतस्तस्य शिला दृषदो...... । यथा हिमाचलस्य शिलाः कस्तूरिकापरिमलसहिता भवन्ति तास्विव । पुनः कथंभूतासु गृहदीर्घिकासु।कण्ठीरवकण्ठपीठीष्विव सकेसरासु।सह केसरैः कश्मीरजन्मकुसुमैर्वर्तन्त इति सकेसरास्तासु । कास्विव । कण्ठीरवकण्ठपीठीष्विव । यथा कण्ठीरवकण्ठपीठ्यः सिंहानां प्रशस्तकण्ठ्यः सकेसराः केसरसहिता भवन्ति । पुनः कथंभूतासु गृहदीर्घिकासु । विरहिणीशरीरयष्टिष्विव मृणालवलयिनीषु । मृणालवलयानि कमलकन्दा विद्यन्ते यासु तास्तथा तासु । कास्विव । विरहिणीशरीरयष्टिष्विव । यथा विरहिणीनां विप्रलब्धस्त्रीणां शरीरयष्टयः शरीरकाष्ठा मृणालवलयसहिता भवन्ति । शरीरस्य परितापसंयुक्तत्वाच्छीतोपचाराय कमलमृणालसहिता भवन्ति । पुनः कथंभूतासु गृहदीर्घिकासु । मन्त्रवादोक्तिष्विव विविधयन्त्रश्लाघिनीषु । विविधैर्नानाप्रकारैर्यन्त्रैर्वंशनालिकादिभिः श्लाघिन्यः स्तुत्यास्तास्तथा तासु । कास्विव । मन्त्रवादोक्तिष्विव । यथा मन्त्रवादस्योक्तयो वचनानि अनेकयन्त्राणि(णां) सिद्धचक्रादीनां कथिका भवन्ति । पुनः कथंभूतासु गृहदीर्घिकासु । वसन्तलतास्विव विचित्रपल्लवप्रसूनफलस्फा[रस्फा]रार्धिकासु । पल्लवाश्च कुम्पलानि प्रसूनानि च कुसुमानि फलानि च जातीफलादीनि विचित्राणि नानाप्रकाराणि च

दीर्घिकासु करेणुभिः करीव कामिनीभिः परिवृतो जलक्रीडासुखमन्वभूत् ॥

अन्तर्लीनसत्त्वः शर्वरीवातूल इव रजस्तमोबहुलोऽपि, चण्डानिल इव व्यसनेषु बद्धप्रीतिरपि, वनगज इव कामचारप्रवर्तनोऽपि, धनुग्रह इवावगणितमन्त्रिलोकोऽपि, रविरिव कुवलयानवेक्षणोऽपि, वसन्त इव विजात्यानन्द-

---

तानि पल्लवप्रसूनफलानि तेषां स्फारः प्राचुर्यं तेन स्फारः प्रचुरोऽर्घः पूजा वर्तते यासु तास्तथा तासु । कास्विव । वसन्तलतास्विव । यथा वसतलता वसन्तर्तुंशाखावल्लयश्च विचित्रपल्लवप्रसूनफलस्फारा भवन्ति । संकरालंकारः ॥

स मारिदत्तः स्वस्य दैवायत्तावतारामिव स्वस्य आत्मनः दैवायत्तावतारां दैवसंबन्धि........अवतारां कल्याणपरम्परामाचचक्षे कल्याणश्रेणीं सूचितवान् । 'अहं मनुष्यो न भवामि, देवोऽहम्' इति मन्यते स । इति क्रियाकारकसंबन्धः । स कथंभूतः । अन्तर्लीनसत्त्वः शर्वरीवातूल इव रजस्तमोवहुलोऽपि । राजसी प्रकृतिः । 'अहं राजा' इत्यहंकारवान् इति रजः । रजश्च तमश्च दैन्यलक्षणं ताभ्यां बहुलोऽपि प्रचुरोऽपि सन्नन्तर्लीनसत्त्वः अन्तर्मनसि अन्तरात्मनि वा लीनं तन्मयतां गतं सत्त्वं पुण्यपरिणामः प्रसन्नता यस्य सोऽन्तर्लीनसत्त्वः । क इव शर्वरीवातूल इव । यथा रात्रिसंबन्धी वातूलो वातमण्डली अन्तर्लीनसत्त्वो मध्यप्रविष्टपिशाचो भवति । एवंगुणविशिष्टोऽप्यात्मानं देवावतारं मानितवान् । सत्त्वरजस्तमोलक्षणं यथा— वदननयनादिप्रसन्नता सत्त्वगुणेन स्यात् । रजोगुणेन तोषः । स चानन्दपर्यायः । तल्लिङ्गानि स्फूर्त्यादीनि तमोगुणेन दैन्यं जन्यते । 'हा देव, नष्टोऽस्मि वञ्चितोऽस्मि' इत्यादिवदनविच्छायतानेत्रसंकोचनादिव्यञ्जनीयं दैन्यं तमोगुणलिङ्गम् इति । पुनः कथंभूतः । चण्डानिल इव व्यसनेषु बद्धप्रीतिरपि [आत्मानं देवं ज्ञातवान्] । व्यसनानि वाग्दण्डपारुष्ये अर्थदूषणं पानं स्त्री मृगया द्यूतं चेति सप्त व्यसनानि तेषु बद्धप्रीतिः । क इव । चण्डानिल इव । यथा चण्डानिलः प्रचण्डवातः विविधेष्वसनेषु क्षेपणेषु बद्धप्रीतिर्भवति । पुनः कथंभूतः । वनगज इव कामचारप्रवर्तनोऽपि [आत्मानं दैवायत्तं ज्ञातवान्] कामचारेषु स्वेच्छाचारेषु प्रवर्तनं यस्य स कामचारप्रवर्तनः । क इव । वनगज इव । यथा वनगजः कामचारप्रवर्तनो भवति । पुनः कथंभूतः । धनुग्रह इवावगणितमन्त्रिलोकोऽपि अवगणितोऽनादृतो मन्त्रिलोकः सचिवलोको येन स तथा [आत्मानं दैवायत्तं ज्ञातवान्] । क इव । धनुग्रह इव । यथा धनुग्रहोऽसाध्यपिशाचविशेषो मन्त्रिलोकमवगणयति । पुनः कथंभूतः । रविरिव कुवलयानवेक्षणोऽपि [आत्मानं दैवायत्तं ज्ञातवान्] । गर्हासमुच्चयप्रश्नशङ्कासंभावनासु च वर्तमानोऽप्यपिशब्दोऽत्र गर्हायां ज्ञातव्यः । सर्वत्रापि गर्हायां ज्ञातव्यः । कुवलयस्य पृथ्वीवलयस्य अनवेक्षणमवीक्षणं यस्य स कुवलयानवेक्षणः । क इव । रविरिव । यथा रविः श्रीभास्करः कुवलयानामुत्पलानामवेक्षणं न करोति । पुनः कथंभूतः । वसन्त इव

नोऽपि, द्रुमार्दन इव विदूरितकमलोत्सवोऽपि, पारिपुङ्ख इवानात्मनीनवृत्तिरपि, कमलीव दोषागमरुचिरपि, कांदिशीक इवानवस्थितक्रियोऽपि, प्रतिपच्चन्द्र इव दुर्दर्शोऽपि, चक्रवाक इव वारवनिताप्रियोऽपि, रथचरणनाभिदेश इवाक्षासक्तोऽपि, शूर्पकारातिरिव मधुलब्धविजृम्भणोऽपि, जलव्याल इवाच्छोद-

विजात्यानन्दनोऽपि [आत्मनि देवत्वं ज्ञातवान्] । विजातीनां नीचजातीनामानन्दनं यस्मात् इति विजात्यानन्दनः । क इव । वसन्त इव । यथा वसन्तो विशिष्टानां जातीपुष्पाणामानन्दं करोति । पुनः कथंभूतः । द्रुमार्दन इव विदूरितकमलोत्सवोऽपि [आत्मनि देवत्वं ज्ञातवान्] । कस्य आत्मनो मलं पापं कमलं तत्र उत्सव उद्यमो यस्य स कमलोत्सवः । विदूरितो निकटीकृतः कमलोत्सवो येन स विदूरितकमलोत्सवः । क इव । द्रुमार्दन इव । यथा द्रुमार्दनो हेमन्तः कमलानां पद्मपुष्पाणामुत्सवं विदूरयति हिमेन दग्धानि करोति । पुनः कथंभूतः । पारिपुङ्ख इवानात्मनीनवृत्तिरपि [आत्मनि देवत्वं ज्ञातवान्] । आत्मने हिता आत्मनीना । हितार्थेषु चतुर्थी । 'सप्तपदादिभ्य इनण्' । न आत्मनीना न आत्महिता वृत्तिराजीविका यस्य सोऽनात्मनीनवृत्तिः । क इव । पारिपुङ्ख इव । यथा पारिपुङ्खो बौद्ध आत्मनोऽस्तित्वं न मानयति । परिपुङ्खस्य राज्ञोऽपत्यं पुमान्पारिपुङ्खः । पुनः कथंभूतः । कमलीव दोषागमरुचिरपि [आत्मनि देवत्वं ज्ञातवान्] । दोषागमेषु पापशास्त्रेषु रुचिर्यस्य सः । क इव । कमलीव । यथा कमली चन्द्रमा दोषागमे रात्र्यागमे रुचिमान्भवति । पुनः कथंभूतः । कांदिशीक इवानवस्थितक्रियोऽपि [आत्मनि देवत्वं ज्ञातवान्] । न अवस्थिता न्यायमार्गे क्रिया यस्य सोऽनवस्थितक्रियः । क इव । कांदिशीक इव । यथा कांदिशीको भयद्रुतः पुमान् स्थिरक्रियो न भवति । पुनः कथंभूतः । प्रतिपच्चन्द्र इव दुर्दर्शोऽपि [आत्मनि देवत्वं ज्ञातवान्] । दुःखेन मूढताकष्टेन द्रष्टुमशक्यो दुर्दर्शः । सेवागतलोकानां दर्शनं न ददातीत्यर्थः । क इव । प्रतिपच्चन्द्र इव । यथा प्रतिपच्चन्द्रो दुष्टो दर्शः अमवास्यानिकटवर्ती यस्य भवति स दुर्दर्शः । पुनः कथंभूतः । चक्रवाक इव वारवनिताप्रियोऽपि [आत्मनि देवत्वं ज्ञातवान्] । वारवनिता वारे सेवाक्रमे मुख्या वनिता वारवनिता वेश्याः प्रिया यस्य स वारवनिताप्रियः । क इव । चक्रवाक इव । यथा चक्रवाकपक्षी वारां पानीयानामवनिः भूमिस्तस्यास्ता लक्ष्मीः शोभा प्रिया वल्लभा यस्य सः । पुनः कथंभूतः । रथचरणनाभिदेश इवाक्षासक्तोऽपि [आत्मनि देवत्वं ज्ञातवान्] । अक्षाणामिन्द्रियाणां सुखे आसक्तो लम्पटोऽपि । क इव । रथचरणनाभिदेश इव । यथा रथचरणस्य शकटचक्रस्य नाभिदेशः पीडिकाप्रदेशः अक्षासक्तः कीलकसहितो भवति । पुनः कथंभूतः। शूर्पकारातिरिव । मधुलब्धविजृम्भणोऽपि [आत्मनि देवत्वं ज्ञातवान्] मधुनि मद्ये लब्धं प्राप्तं विजृम्भणं प्रवृत्तिर्येन स मधुलब्धविजृम्भणः । क इव । शूर्पकारातिरिव । यथा शूर्पकारातिः कन्दर्पो मधुना वसन्तेन लब्धविजृम्भणो भवति । पुनः

१. 'दुःखेन द्रष्टुं शक्यः' इत्येव व्याख्यानमत्रापि ज्ञातव्यम्.

नाभिरतोऽपि, विगतविपद्राक्षसीसमागमः स्वस्य दैवायत्तावतारामिव कल्याणपरम्परामाचचक्षे ॥

एवं तस्य धरोद्धारकुलशिखरिणः करिण इव स्वच्छन्दाचारपरागकलुषितां निजवंशलक्ष्मीमुपयच्छमानस्य, क्षणमिन्द्रियाणामानन्दजननीमसुरवृत्तिं वीरकलावतारामिवात्मनि संकल्पयतः, परत्रेह च परिणामदारुणं मृगयादिव्यसनमेष खलु क्षत्रपुत्राणां कुलधर्म इति मन्यमानस्य, मरुषु पथिकस्येव

---

कथंभूतः। जलव्याल इवाच्छोदनाभिरतोऽपि [आत्मनि देवत्वं ज्ञातवान्]। अ(आ)च्छोदने मृगयायां अभि समन्ताद्रत अ(आ)च्छोदनाभिरतः। क इव। जलव्याल इव। यथा जलव्यालो मकरादिकः [आ समन्तात्]अच्छस्य निर्मलस्य उदस्य पानीयस्य नाभौ मध्ये रतो भवति। पुनः कथंभूतः। विगतविपद्राक्षसीसमागमः विगतो विनष्टो विपद्राक्षस्याः समागम आगमनं यस्य स विगतविपद्राक्षसीसमागमः। संकरालंकारः श्लेषोपमालंकारश्च ॥

एवममुना प्रकारेण तस्य मारिदत्तस्य निजवंशलक्ष्मीमुपयच्छमानस्य उपाददतः स्वीकुर्वतः सतः कतिचित्संवत्सराः कियन्तो वर्षा व्यतिचक्रमुर्व्यतिक्रामन्ति स्म। निर्गता इत्यर्थः। इति क्रियाकारकसंवन्धः। तस्य कथंभूतस्य। धरोद्धारकुलशिखरिणः धरायाः पृथिव्या उद्धरणकार्याय कुलपर्वतस्य। यथा कुलशिखरी कुलपर्वतो धरामुद्धरति। कस्येव। करिण इव यूथनाथस्येव। यथा करी गजेन्द्रो निजवंशलक्ष्मीं स्वकीयवंशप्रदेशशोभामुपादत्ते स्वीकरोति। कथंभूतां निजवंशलक्ष्मीम्। स्वच्छन्दाचारपरागकलुषितां स्वच्छन्दाचारः स्वेच्छाचरणं स एव परागो धूलिः। शरीरस्य जीवस्य च मालिन्यकारित्वात्। तेन कलुषितानिर्मला ताम्। यथा स्वच्छन्दचारी गजो निजवंशलक्ष्मीं निजपृष्ठशोभां धूल्या कलुषितां धूलितां धरति। पुनश्च तस्य श्रीमारिदत्तस्य किं कुर्वतः। असुरवृत्तिं मृगयादिव्यसनक्रियां राक्षसाचारमात्मनि निजचित्ते वीरकलावतारामिव संकल्पयतो विचारयतः। कथंभूतामसुरवृत्तिम्। क्षणमिन्द्रियाणामानन्दजननीं क्षणं स्तोककालमिन्द्रियाणां नेत्रादीनामानन्दजननीं कौतुकोत्पादिकाम्। पुनः किं कुर्वाणस्य तस्य नरेन्द्रस्य। इति मन्यमानस्य। इतीति किम्। मृगयादिव्यसनमाखेटादिक्रियादुराचार एष प्रत्यक्षीभूतः खलु निश्चयेन क्षत्रपुत्राणां राजपुत्राणां कुलधर्मः कुलाचारः इति। कथंभूतं मृगयादिव्यसनम्। परत्रेह च परिणामदारुणं परत्र आगामिनि भवे इह च अस्मिञ्जन्मनि परिणामदारुणं परिणामे विपाके सति दारुणमतिदुःखजनकम्। पुनश्च किं कुर्वतस्तस्य नरेन्द्रस्य संवत्सरा व्यतिचक्रमुः। मनोविभ्रमहेतुषु कथास्वतितृष्यतः मनोविभ्रमहेतुषु चित्तभ्रान्तिकारणभूतासु कथासु शास्त्रेषु अतितृष्यतः। कस्येव। मरुषु पथिकस्येव। म्रियन्ते प्राणिनो येषु तृषया इति मरवो मरुस्थलभूमयः। पथिकस्येव अध्वन्य-

मनोविभ्रमहेतुषु कथास्वतितृष्यतः, परिपाकगुणकारिणीं क्रियामकल्पस्येव परोपरोधादुपयुञ्जानस्य,सत्पुरुषगोष्ठींविषादप्यनिष्टतरां परिगणयतः,चेतोविजृम्भणकरमनुचरं वप्तुरप्याप्ततरमवेक्षमाणस्य, वितथस्तुतिमुखरेषु चिन्तामणेरिव फलतः, सकलजनसाधारणेऽपि स्वदेहे त्रिकमतदीक्षितस्येव देवभूयेनाभिनिविशमानस्य, निजाजीवनपरैरपायेषु नीयमानस्याप्यरण्यवारणस्येवाचेततः, खलालापानिलगलितहितोपदेशावतंसस्य, चन्दनतरोरिव दुर्जनाहिव्यूहितत्वाद्दूरतरोत्सरत्कल्याणावहलोकस्य कतिचित्संवत्सरा व्यतिचक्रमुः ॥

---

स्येव । यथा—मरुषु पथिको मनोविभ्रमहेतुषु कथास्वतितृष्यति अतितृष्णां करोति । पुनः किं कुर्वाणस्य तस्य । परिपाकगुणकारिणीं परिपाके उदये गुणं करोतीत्येवंशीला तथा तां क्रियामाचारं परोपरोधातपरेषां बलात्कारेण साक्षेपेण उपयुञ्जानस्य सेवमानस्य । कस्येव । अकल्पस्येव । यथा अकल्पो रोगी औषधेन गुणकारिणीं क्रियां परेषामाक्षेपेण सेवते कटुकमप्यौषधं भुङ्क्ते, न त्वात्मरुच्या । पुनस्तस्य किं कुर्वतः । सत्पुरुषगोष्ठीं पुण्यपुरुषसङ्गं विषादपि हालाहलादपि अनिष्टतरां विद्वेषकरां परिगणयतो जानतः । पुनः किं कुर्वाणस्य । चेतोविजृम्भणकरं पापप्रवर्तनकरम् अनुचरं सेवकं वप्तुरपि जनकादपि आप्ततरं हितकरमवेक्षमाणस्य ज्ञायमानस्य(?) (जानतः) । पुनः किं कुर्वतः । वितथस्तुतिमुखरेषु चिन्तामणेरिव फलतः असत्यस्तवनवाचालेषु पुरुषेषु चिन्तारत्नमि(स्ये)व फलं ददानस्य ।अपरं कि कुर्वाणस्य । सकलजनसाधारणेऽपि सर्वलोकसमानेऽपि स्वदेहे निजशरीरे देवभूयेन देवत्वेन अभिनिविशमानस्य अभिनिवेशं कुर्वाणस्य अभिप्रायं विदधानस्य । कस्येव । त्रिकमतदीक्षितस्येव । यथा त्रिकमतदीक्षितः श्रीमहादेवदीक्षासहितः पुमान् निजदेहो देवभूतो देवत्वं प्राप्त इत्यभिनिवेशमभिप्रायं करोति । 'भुवो भावे' इति वचनात्क्यप् । पुनः किं कुर्वतः । निजाजीवनपरैरात्मोदरपूरणपरैः पुरुषैरपायेषु मृत्युस्थानेषु नीयमानस्यापि प्राप्यमाणस्यापि अचेततः अजानतः । कस्येव । अरण्यवारणस्येव । यथा अरण्यवारणो विन्ध्यवनगजो निजाजीवनपरैः पुरुषैरपायेषु नीयमानोऽपि वारिस्थानेषु प्राप्यमाणोऽपि न चेतति न जानाति । अपरं कथंभूतस्य । खलालापानिलगलि[तहि]तोपदेशावतंसस्य खलानां दुर्जनानामालापास्त एवानिलो वातः। पिण्डपीडाकरणत्वात् । तेन गलितोऽधःपातित[हितः]उपदेशावतंसः इहपरलोकहितधर्मोपदेशा(श एवा)वतंसः कर्णपूरावतंसो यस्य स तथा तस्य । अपरं कथंभूतस्य । दूरतरोत्सरत्कल्याणावहलोकस्य दूरतरं विप्रकृष्टमुत्सरन्तो नश्यन्तः कल्याणावहलोकाः शुभकारिजना यस्मादिति तथा तस्य । लोपः कस्मात् । दुर्जनाहिव्यूहितत्वात् । दुर्जना अहितकारिणो लम्बा(?)लुञ्चनकरा लोकास्त एवाहयः सर्पाः । प्राणहारित्वात्। तैर्व्यूहितो

स पुनरेकदा नृपतिरात्मराजधान्यामेव चण्डमारिदेवतायाः पुरतः सकलसत्त्वोपसंहारात् स्वयं च सकललक्षणोपपन्नमनुष्यमिथुनवधाद्विद्याधरलोकविजयिनः करवालस्य सिद्धिर्भवतीति वीरभैरवनामकात्कुलाचार्यकादुपश्रुत्य खेचरीलोकलोचनावलोकनकुतूहलितचेतास्तथैव प्रतिपन्नतदाराधनविधिः, अकालमहानवमीमहमिषसमाहूतसमस्तसामन्तामात्यजानपदः, प्रलयकालक्षुभितसप्तार्णवरवघोरानकस्वानाविर्भावितभुवनान्तरसंचरद्देवतामदः, ससंरम्भमम्बरतलादिलायाः पातालमूलाद्दिगन्तरालेभ्यश्च विभावर्यां तमःसंत-

---

वेष्टितस्तस्य भावस्तत्त्वं तस्मात्। कस्येव। चन्दनतरोरिव। यथा चन्दनतरोः सर्पवेष्टितत्वात्कल्याणकरो लोको दूरमुत्सरति। संकरालंकारः॥

**स इति।** स जगत्प्रसिद्धो नृपतिर्मारिदत्तमहाराजः पुनरेकदा पश्चादेकस्मिन्प्रस्तावे तन्मिथुनाय मनुष्ययुगलनिमित्तं दण्डपाशिकभटान् कोटपालकिंकरान् चण्डकर्मकोटपालसुभटान् आदिदेश आदेशं दत्तवान्। इति क्रियाकारकसंबन्धः। किं कृत्वा। पूर्वमात्मराजधान्यामेव राजपुरनगर्यामेव वीरभैरवनामकाचार्याककुत्सितशिष्यात् कुलाचार्यकात् इति ईदृशमुपदेशमुपश्रुत्य आकर्ण्य। इतीति किम्। चण्डमारिदेवतायाः पुरतः सकलसत्त्वोपसंहारात् सर्वजीवयुगलमारणपूजनात्। स्वयमात्मना च सकललक्षणोपपन्नमनुष्यमिथुनवधात् मारणात् विद्याधरलोकविजयिनो विद्याधरलोकसाधकस्य करवालस्य खड्गस्य सिद्धिर्भवति इति। स नृपतिः कथंभूतः। खेचरीलोकलोचनालोकनकुतूहलितचेताः खेचरीलोकस्य विद्याधरीसमूहस्य लोचनानां नेत्राणामवलोकने निरीक्षणे खेचरीलोकशरीरभोगकरणेषु कुतूहलितचेता विनोदितमनाः। तथैव तेनैव जीवयुगलवधप्रकारेण प्रतिपन्नतदाराधनविधिः अङ्गीकृतदेवतापूजनविधिः। अपरं कथंभूतो नृपतिः। अकालमहानवमीमहमिषसमाहूतसमस्तसामन्तामात्यजानपदः अकालमहानवमीमहमिषेण चैत्रशुक्लनवमीदिवसपूजामिषेण समाहूता आकारिताः समस्ताः समग्राः सामन्ता देशपतयो राजानः, अमात्याश्च मन्त्रिणः, जानपदाश्च लोका येन स तथोक्तः। अपरं कथंभूतः। प्रलयकालक्षुभितसप्तार्णवरवघोरानकस्वानाविर्भावितभुवनान्तरसंचरद्देवतामदः प्रलयकालसंबन्धिनः क्षुभिताः क्षोभं प्राप्ता ये सप्तार्णवाः सप्त समुद्रास्तेषां रववच्छब्दवत् ये घोरानकस्वाना रौद्रवादित्रशब्दास्तैराविर्भावितः प्रकटीकृतो भुवनान्तरेषु पृथ्वीमण्डलेषु संचरन्तीनां देवतानां मदो हर्षो येन स तथोक्तः। किं कृत्वा। पूर्वं तद्देवतायतनं चण्डमारीदेवताप्रासादमुपगम्य आगत्य। न केवलं तद्देवतायतनमुपगम्य, किंतु तत्पादपीठोपकण्ठे उपविश्य चण्डमारीदेवताचरणसिंहासनसमीपे उपविश्य स्थित्वा च। कथंभूतं तद्देवतायतनम्। ससंरम्भं साटोपं यथा भवत्येवं अम्बरतलादन्तरिक्षमण्डलात्, इलाया भूमिमध्यात्, पातालमूलादधोलोकबुध्नात्, दिगन्तरालेभ्यश्चतुर्दिग्विदिग्भ्य आविर्भवन्तीभिः प्रकटीभवन्तीभि-

तिभिरिवाविर्भवन्तीभिः, गतिवेगविगलज्जटाजालाक्षिप्यमाणमहाग्रहग्राहक्षोभरुषितगगनगामिलोकाभिः, परस्परसंघट्टस्फुटत्खट्वाङ्गकोटिघटितघण्टाटंकृताकर्णनावतीर्णनटन्नारदजनितवैलक्ष्याभिः, कपर्दनिर्दयसंमर्दनिर्मोदालगर्दगलगुहास्फुरत्फूत्कारस्फारितललाटलोचनानलज्वालाग्लपितादितिसुतनिकेतनपताकाभोगाभिः, शिखण्डमण्डनोड्डमरनरशिरःश्रेणिपर्यन्तभ्रान्तप्रवृद्धगृद्ध्रनिरुद्धब्रध्नदीधितिप्रवन्धाभिः, श्रवणभूषणभुजङ्गजिह्वालिह्यमानकपोलतल-

---

र्महायोगिनीभिर्महाव्यन्तरीभिर्देवताभिरापूर्यमाणपरिसरं परिपूर्यमाणप्रमाणम् । कथमाविर्भवन्तीभिः । विभावर्यां रात्रौ तमःसंततिभिरिव । यथा रात्रौ तमःसंततयोऽन्धकारश्रेणय आविर्भवन्ति । कथंभूताभिर्योगिनीभिः । गतिवेगविगलज्जटाजालाक्षिप्यमाणमहाग्रहग्राहक्षोभरुषितगगनगामिलोकाभिः गतेर्वेगो गतिवेगो गतेरुत्सुकत्वं तेन विगलन्ति मुक्तानि भवन्ति यानि जटाजालानि केशसमूहास्तैराक्षिप्यमाणास्तिरस्कृतायमाना ये महाग्रहा रव्यादयो महाग्रहग्राहाश्च पिशाचास्तेषां क्षोभेण चलनेन रुषिताः कोपं प्रापिता गगनगामिलोका विद्याधरा याभिस्तास्तथा ताभिः । पुनः कथंभूताभिः । परस्परसंघट्टस्फुटत्खट्वाङ्गकोटिघटितघण्टाटंकृताकर्णनावतीर्णनटन्नारदजनितवैलक्ष्याभिः परस्परमन्योन्यं योऽसौ संघट्टो भटभेटकस्तेन स्फुटन्ति शतखण्डीभवन्ति यानि खट्वाङ्गानि खट्वादेशास्तेषां कोटिषु अग्रेषु घटिताः संवद्धा घण्टा नादिन्यस्तासां टंकृतानां टंकारशब्दानामाकर्णनेन श्रवणेनावतीर्ण आकाशे समागतो योऽसौ नटन्नारदः । संग्रामभ्रान्त्युत्पन्नप्रहर्षत्वात् । तस्य जनितमुत्पादितं वैलक्ष्यं निष्प्रतिपत्तिकत्वं याभिस्तास्तथा ताभिः । पुनः कथंभूताभिर्योगिनीभिः । कपर्दनिर्दयसंमर्दनिर्मोदालगर्दगलगुहास्फुरत्फूत्कारस्फारितललाटलोचनानलज्वालाग्लपितादितिसुतनिकेतनपताकाभोगाभिः कपर्दस्य सर्पवद्धजटाजूटस्य योऽसौ निर्दयसंमर्दो दयारहितपीडनं तेन निर्मोदा हर्षरहिता ये अलगर्दाः सर्पविशेषास्तेषां गलगुहाभ्यः कण्ठविवरेभ्यः स्फुरन्तो निर्गलन्तो ये फूत्काराः शब्दविशेषास्तैः स्फारिताः प्रचुरीकृता या ललाटलोचनानामनलज्वाला वैश्वानरकीलास्ताभिर्ग्लपितो भस्मीकृतोऽदितिसुतस्य श्रीभास्करस्य संवन्धिनो निकेतनस्य विमानस्य पताकाभोगो ध्वजानामाटोपो याभिस्तास्तथा ताभिः । पुनः कथंभूताभिः । शिखण्डमण्डनोड्डमरनरशिरःश्रेणिपर्यन्तभ्रान्तप्रवृद्धगृद्ध्रनिरुद्धब्रध्नदीधितिप्रवन्धाभिः शिखण्डस्य मस्तकस्य मण्डनानि आभरणभूतानि यानि उड्डमराणि अतिभयानकानि नरशिरांसि मनुष्यमुण्डानि तेषां श्रेणयः समूहास्तेषां पर्यन्तेषु प्रान्तेषु भ्रान्ता मण्डलिता ये प्रवृद्धगृद्ध्रा महागृद्ध्रपक्षिणस्तैर्निरुद्ध आच्छादितो ब्रध्नस्य श्रीसूर्यस्य दीधितिप्रवन्धः किरणसमूहो याभिस्तास्तथा ताभिः । पुनः कथंभूताभिः । श्रवणभूषणभुजङ्गजिह्वालिह्यमान-

---

१. 'खट्वाङ्गं नरपञ्जरम्'.

लिखितरक्तपत्राभिः, इतरेतरस्खलनमत्सराविर्भूतोद्भटभ्रुकुटिभीषणमुखमुक्तस्फीतफेत्कारभयपलायमानहिमकरहरिणपरित्राणोत्तालितनक्षत्रनिकराभिः, वियद्विहाराश्रयश्रमप्रसारितासरालरसनापसारितसुरापगापयःस्पर्शप्रकोपितसप्तर्षिभिः, अतिवाढप्ररूढदंष्ट्राङ्कुराग्रलग्नघनसंघातनिर्जितवराहवेषविष्णुसमुद्धृतधराशोभाभिः, सनादरोदःक्रोडक्रीडत्क्रमाक्रान्तिमुखरघर्घरकघोरघोषभीषितानिमिषपरिषद्भिः, दिवापि कीकसोत्कटकोटीरकीर्णकेशावकाशतया तार-

---

कपोलतललिखितरक्तपत्राभिः श्रवणानां शब्दग्रहाणां भूषणानि आभरणभूता ये भुजंगा लेलिहानास्तेषां जिह्वाभी रसनाभिरालिह्यमानान्यास्वाद्यमानानि कपोलतलेषु गण्डस्थलेषु लिखितानि रक्तपत्राणि रुधिरपत्रावलयो यासां तास्तथा ताभिः। पुनःकथंभूताभिः। इतरेतरस्खलनमत्सराविर्भूतोद्भटभ्रुकुटिभीषणमुखमुक्तस्फीतफेत्कारभयपलायमानहिमकरहरिणपरित्राणोत्तालितनक्षत्रनिकराभिः इतरेतराणां परस्पराणां स्खलनेन गतिभङ्गकरणेन योऽसौ मत्सरो द्वेषस्तेनाविर्भूताः प्रकटीभूता उद्भटा महाटोपा या भ्रुकुट्यो भ्रूभङ्गास्ताभिर्भीषणानि भयानकानि यानि मुखानि तेभ्यो मुक्ताः प्रकटीभूताः प्रकटी कृताः स्फीताः प्रचुरा ये फेत्काराः शब्दास्तेभ्यो भयाद्भीतेः पलायमानः शीघ्रं नश्यन् योऽसौ हिमकरस्य चन्द्रमसो हरिणः कुरङ्गस्तस्य परित्राणे रक्षणे उत्तालित उत्सुकीकृतो नक्षत्रनिकरश्चान्द्रायणीसमूहो याभिस्तास्तथा ताभिः । पुनः कथंभूताभिः । वियद्विहाराश्रयश्रमप्रसारितासरालरसनापसारितसुरापगापयःस्पर्शप्रकोपितसप्तर्षिभिः वियद्विहाराश्रयश्रम आकाशगमनसंबन्धी योऽसौ खेदः शरीरखेदस्तेन प्रसारिता प्रकटिता मुखाद्बहिर्निर्गता असराला अपर्यन्ता या रसना जिह्वा तयापसारितं गलहस्तितं यत् सुरापगायाः पय आकाशगङ्गाजलं तस्य स्पर्शेन छुपनेन प्रकोपिताः कोपं प्रापिताः सप्तर्षयो मरीच्यत्रिप्रभृतयो याभिस्तास्तथा ताभिः । पुनः कथंभूताभिः। अतिवाढप्ररूढदंष्ट्राङ्कुराग्रलग्नघनसंघातनिर्जितवराहवेषविष्णुसमुद्धृतधराशोभाभिः अतिवाढमतिशयेन गाढं प्ररूढा मुखाद्बहिर्निर्गता या दंष्ट्रा तस्या अङ्कुरो नवोद्भिन्नस्तस्याग्रे प्रान्ते लग्नः स्थितो योऽसौ घनसंघातो मेघसमूहस्तेन निर्जिता वराहवेषसमुद्धृतधराशोभा याभिस्तास्तथा ताभिः । वराहवेषेण विष्णुना किल दंष्ट्राग्रेण धरा पृथ्वी उद्धृता [तस्याः] शोभा महायोगिनीभिर्निर्जितेत्यर्थः । पुनः कथंभूताभिः । सनादरोदःक्रोडक्रीडत्क्रमाक्रान्तिमुखरघर्घरकघोरघोषभीषितानिमिषपरिषद्भिः सनादाः सशब्दा रोदःक्रोडे क्रीडत्क्रमाक्रान्तिर्द्यावाभूमिमध्ये क्रीडन्तो रममाणा ये क्रमाः पादाक्षेपामाक्रान्तिर्व्याप्तिस्तया मुखरा वाचाला ये घर्घरका घुर्घुर्मालास्तेषां घोरो भयानको योऽसौ घोषः शब्दस्तेन भीषिता भयं प्रापिता अनिमिषाणां देवानां परिषत्समूहो याभिस्तास्तथा ताभिः । पुनः कथंभूताभिः । दिवापि कीकसोत्कटकोटीरकीर्णकेशावकाशतया तारकितमिव व्योम निर्मापयन्तीभिः दिवापि दिवसेऽपि व्योमाकाशं तारकितमिव ता-

कितमिव व्योमनिर्मापयन्तीभिः, सकलस्य जगतःक्षयक्षपाभिरिवातिदारुणदीर्घदेहाभिर्महायोगिनीभिरापूर्यमाणपरिसरम्, [अपि च] क्वचित्प्रनृत्यदुत्तरलतालवेतालकुलविडम्ब्यमानडाकिनीताण्डवाडम्बरम्, क्वचिद्भ्रूभङ्गाभीलभूतनिर्भर्त्सितकपिक्षपाचरभरभज्यमानाभ्यर्णभूरुहम्, क्वचित्करोड्डमरडमरुकरवलयखेलत्कपालिनीत्रिशूलवल्गननिर्भिन्नद्रवदुत्तंसचन्द्रामृतपानपरचकोरकामिनीकर्वुरीक्रियमाणककुभाभोगम्, क्वचिदुन्माथप्रमाथसार्थकदर्थ्यमानपिशुरा-

---

रकासंयुक्तमिव निर्मापयन्तीभिः रचयन्तीभिः । कया । कीकसानामस्थ्नामुत्कटानि ···त्यकानि कोटीराणि मुकुटानि तेषु कीर्णा विक्षिप्ताः प्रसारिता ये केशाः कुन्तलास्तेष्ववकाशतया प्रसारतया । पुनः कथंभूताभिः । अतिदारुणदीर्घदेहाभिः अतीवासह्यो दीर्घ आयतो देहः शरीरं यासां तास्तथा ताभिः । काभिरिव । सकलस्य जगतः क्षयक्षपाभिरिव । सकलस्य जगतः पृथ्वीमण्डलस्थितलोकस्य क्षयक्षपाभिः प्रलयकालरात्रिभिरिव । यथा प्रलयकालक्षपाः सकलस्य जगतोऽतिदारुणा अत्यसह्या दीर्घस्वरूपा भवन्ति । अपि च । अपराणि विशेषणानि दीयन्ते । कथंभूतं देवतायतनम् । क्वचित्प्रनृत्यदुत्तरलतालवेतालकुलविडम्ब्यमानडाकिनीताण्डवाडम्बरम् क्वचित्कस्मिंश्चित्स्थाने प्रनृत्यन्ति नर्तनं कुर्वन्ति उत्तरलतालानि उत्कटकरताडनानि यानि वेतालकुलानि वेतालाविष्टमृतकसमूहास्तैर्विडम्ब्यमानः कदर्थ्यमानो डाकिनीनां शाकिनीनां ताण्डवाडम्वरो वाहुनर्तनाटोपो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचिद्भ्रूभङ्गाभीलभूतनिर्भर्त्सितकपिक्षपाचरभरभज्यमानाभ्यर्णभूरुहम् क्वचित्कस्मिंश्चित्स्थाने भ्रूभङ्गेन भ्रकुटिवन्धेनाभीला भयानका ये भूता व्यन्तरविशेषास्तैर्निर्भर्त्सिता निर्घाटिता ये कपिक्षपाचरा वानररूपराक्षसास्तेषां भरेण भारेण भज्यमानाः स्वयमेव भङ्गं प्राप्नुवन्तोऽभ्यर्णभूरुहाः समीपतरवो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित्करोड्डमरडमरुकरवलयखेलत्कपालिनीत्रिशूलवल्गननिर्भिन्नद्रवदुत्तंसचन्द्रामृतपानपरचकोरकामिनीकर्वुरीक्रियमाणककुभाभोगम् । क्वचित्कस्मिंश्चित्स्थाने करेषु हस्तेषूड्डमरा अतिभयानका डमरुका ढक्कानामवादित्राणि तेषां रवस्य शब्दस्य लयेन साम्यतया खेलन्त्यो रममाणा याः कपालिन्यो व्यन्तरीयोगिन्यस्तासां त्रिशूलवल्गनेन त्रिशूलोच्छलनेन निर्भिन्नाश्छिद्रिता द्रवन्तः क्षरन्तो ये उत्तंसचन्द्रा मुकुटशशिनस्तेषां संबन्धीनि यान्यमृतानि पीयूषवर्षणानि तेषां पाने आस्वादने परास्तत्परा याश्चकोरकामिन्यो जीवंजीववनितास्ताभिः कर्वुरीक्रियमाणा विचित्रवर्णा विधीयमानाः ककुभाभोगा दिग्मण्डलानि यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचिदुन्माथप्रमाथसार्थकदर्थ्यमानपिशुरार्पितजरूथमन्थरकपालशकलम् क्वचित्कस्मिंश्चित्स्थाने उन्माथा हिंसका ये प्रमाथाः पिशाचास्तेषां सार्थैः समूहैः कदर्थ्यमाना ये पिशुरा राक्षसास्तैरर्पितानि दत्तानि यानि जरूथानि आर्द्रमांसानि तैर्मन्थराणि मन्दगमनानि । भृतानीत्यर्थः । कपालशकलानि शरावख-

र्पितजरूथमन्थरकपालशकलम्, क्वचित्संधुक्षितक्षुदक्षुण्णाकाङ्क्षध्वाङ्क्षराक्षसक्षिप्यमाणयक्षरक्षितक्षेत्रनिक्षिप्तवनदेवतापोतम्, [[1]क्वचित्तरक्षुरक्षोदरावदार्यमाणपुराणास्थिप्रस्थम्,] क्वचित्कौशिकपलाशतुण्डखण्ड्यमानावानाजिनवैजयन्तीकम्, क्वचिच्छार्दूलदानववदनविदूयमानचिरच्छिन्नच्छगलगलजालजटिलतोरणमालम्, क्वचित्कासरासुरखुरप्रचारचूर्ण्यमानकरङ्कप्राकारम्, क्वचित्करिरूपकोणपकरालकरविकीर्यमाणजीर्णचर्मविनिर्मितवितानम्, क्वचित्पुरुदंशोनिशा

---

ण्डानि यत्र तत्तथोक्तम्। पुनः कथंभूतम्। क्वचित्संधुक्षितक्षुदक्षुण्णाकाङ्क्षध्वाङ्क्षराक्षसक्षिप्यमाणयक्षरक्षितक्षेत्रनिक्षिप्तवनदेवतापोताम् क्वचित्कस्मिंश्चित्स्थाने संधुक्षिता उद्दीपिता या क्षुद् बुभुक्षा तया अक्षुण्णाकाङ्क्षा परिपूर्णक्षुता येषां ते च ते ध्वाङ्क्षराक्षसाः काकरूपराक्षसास्तैः क्षिप्यमाणाः प्रेर्यमाणा यक्षरक्षितक्षेत्रे धनदरक्षितस्थाने निक्षिप्ता निर्मुक्ता वनदेवतापोता वनदेवतानां बालका यत्र तत्तथोक्तम्। पुनः कथंभूतम्। क्वचित्कौशिकपलाशतुण्डखण्ड्यमानावानाजिनवैजयन्तीकम् क्वचित्कस्मिंश्चित्स्थाने कौशिकरूपेण घूकरूपेण ये पलाशा राक्षसास्तेषां तुण्डैश्चञ्चुभिः खण्ड्यमाना चर्व्यमाणा आवानाजिनस्य शुष्कचर्मणो वैजयन्ती पताका यत्र तत्तथोक्तम्। पुनः कथंभूतम्। क्वचिच्छार्दूलदानववदनविदूयमानचिरच्छिन्नच्छगलगलजालजटिलतोरणमालम् क्वचित्कस्मिंश्चित्स्थाने शार्दूलदानवानां व्याघ्रवेषेण राक्षसानां वदनैर्मुखैर्विदूयमानानि चर्व्यमाणानि चिरच्छिन्नानि वृद्धवेलाविदारितानि छगलगलजालानि वस्तमुण्डसमूहास्तेषां जटिलाभिर्जटाभिरुपलक्षिता तोरणमाला वन्दनमाला यत्र तत्तथोक्तम्। पुनः कथंभूतम्। क्वचित्कासरासुरखुरप्रचारचूर्ण्यमानकरङ्कप्राकारम् क्वचित्कस्मिंश्चित्स्थाने कासररूपेण महिषरूपेण येऽसुरा दानवास्तेषां खुराणां शफानां प्रचारेण प्रकृत्या चूर्ण्यमानः शतखण्डीक्रियमाणः करङ्कप्राकारः शुष्कपशुशरीरदुर्गो यत्र तत्तथोक्तम्। पुनः कथंभूतम्। क्वचित्करिरूपकोणपकरालकरविकीर्यमाणजीर्णचर्मविनिर्मितवितानम् क्वचित्कस्मिंश्चित्स्थाने करिरूपेण गजरूपेण ये कोणपा अस्रपा राक्षसास्तेषां करालकरैरुन्नतशुण्डादण्डैर्विकीर्यमाणानि विक्षिप्यमाणानि जीर्णचर्मभिर्विनिर्मितानि शुष्कचर्मरचितानि वितानानि चन्द्रोपकानि यत्र तत्तथोक्तम्। पुनः कथंभूतम्। क्वचित्पुरुदंशोनिशाचरखरनखरशिखोल्लिख्यमानाश्यानशोणितदत्तभित्तिपञ्चाङ्गुलम् क्वचित्कस्मिंश्चित्स्थाने पुरुदंशः खरूपिणो मार्जाररूपिणो ये निशाचरा राक्षसास्तेषां खरनखरास्तीक्ष्णनखास्तेषां शिखाभिरग्रैरुल्लिख्यमानानि आश्यानानि शुष्काणि शोणितदत्तानि रुधिरकृतानि भित्तेः संबन्धीनि पञ्चाङ्गुलानि स्थानका यत्र तत्तथोक्तम्।

---

१. अस्मदुपलब्धटीकापुस्तके नेदं व्याख्यातम्.

खरनखरशिखोल्लिख्यमानाश्यानशोणितदत्तभित्तिपञ्चाङ्गुलम्, क्वचिदखर्वगर्वोद्घूर्णगोमायुनैगमे(कषे)यजुष्यमाणपानपात्रासवनिपकर्परम्; क्वचित्साधकलोकनिजशिरोदह्यमानगुग्गुलरसम्, क्वचिन्नरव्यालप्रबोधितस्वीयशिरावलिप्रदीपम्, क्वचिन्महासाहसिकात्मरुधिरधारापानप्रसाद्यमानरुद्रम्, क्वचिन्महाव्रतिकवीरक्रयविक्रीयमाणस्ववपुर्ल्लूनवल्लूरम्, क्वचित्तीक्ष्णपुरुषापकृष्टस्वकीयान्त्रयन्त्रदोलनतोष्यमाणमातृमण्डलम्, क्वचित्परुषमनीषमनुष्यात्मीयतरसाहुति-

---

पुनः कथंभूतम् । क्वचिदखर्वगर्वोद्घूर्णगोमायुनैकषेयजुष्यमाणपानपात्रासवनिपकर्परम् क्वचित्कस्मिंश्चित्स्थाने अखर्वो वृहद् गर्वोऽहंकारो येषां ते अखर्वगर्वाः । अतिशयेन दर्पवन्त इत्यर्थः । अखर्वगर्वाश्च ते उद्घूर्णा उद्यमपराः, अथवा अखर्वगर्वेणोद्घूर्णाः, अथवा अखर्वगर्वे उद्घूर्णा उत्पन्नाः, ते च ते गोमायवः शृगालरूपेण नैकषेया राक्षसास्तैर्जुष्यमाणानि आस्वाद्यमानानि पानस्य मद्यस्य पात्रभूता ये आसवनिपा मद्यघटास्तेषां कर्पराणि शकलानि भिन्नानि यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित्साधकलोकनिजशिरोदह्यमानगुग्गुलरसम् क्वचित्कस्मिंश्चित्स्थाने साधकलोकैर्मन्त्रसाधकलोकैर्निजशिरसि आत्ममस्तके दह्यमानो जाज्वल्यमानो गुग्गलस्य क्षेत्रपालधूपस्य रसो निर्यासो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचिन्नरव्यालप्रवोधितस्वीयशिरावलिप्रदीपम् क्वचित्कस्मिंश्चित्स्थाने नरव्यालैर्दुष्टपुरुषैः प्रवोधिताः प्रज्वालिताः स्वीयशिरावलीनां निजनसाश्रेणीनां प्रदीपा यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचिन्महासाहसिकात्मरुधिरधारापानप्रसाद्यमानरुद्रम् क्वचित्कस्मिंश्चित्स्थाने महासाहसिकैरात्मरुधिरस्य निजरक्तस्य धारापानेन प्रसाद्यमानः प्रसन्नीक्रियमाणो रुद्रः श्रीमहादेवो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचिन्महाव्रतिकवीरक्रयविक्रीयमाणस्ववपुर्ल्लूनवनवल्लूरम् क्वचित्कस्मिंश्चित्स्थाने महाव्रतिकवीरैश्चार्वाकसुभटैः क्रयविक्रीयमाणं मूल्येन विक्रीयमाणं स्ववपुषो निजशरीरस्य ल्लूनवल्लूरं छेदितमांसं यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित्तीक्ष्णपुरुषापकृष्टस्वकीयान्त्रयन्त्रदोलनतोष्यमाणमातृमण्डलम् क्वचित्कस्मिंश्चित्स्थाने तीक्ष्णपुरुषैर्निर्दयपुरुषैरपकृष्टान्युदराद्बहिर्निष्कासितानि स्वकीयान्यात्मीयानि अन्त्रयन्त्राणि पुरीतत्समूहास्तेषु दोलनेन प्रेङ्खणेन तोष्यमाणमानन्द्यमानं मातृमण्डलं मातृसमूहो यत्र तत्तथोक्तम् । उक्तं च—'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथेन्द्राणी चामुण्डा सप्त मातरः ॥' इत्यादि । पुनः कथंभूतम् । क्वचित्परुषमनीषमनुष्यात्मीयतरसाहुतिहूयमानसप्तजिह्वम् क्वचित्कस्मिंश्चित्स्थाने परुषा कारुण्यरहिता मनीषा बुद्धिर्येषां ते परुषमनीषास्ते च ते मनुष्याश्च तैरात्मीयतरसाहुतिभिर्निजमांसाहुतिभिर्हूयमानः संतर्प्यमाणः सप्तजिह्वोऽग्निर्यत्र तत्तथोक्तम् । पुनः कथंभूतम् । यम-

हूयमानसप्तजिह्वम्, यमस्यापि कृतशङ्कातङ्कम्, महाकालस्यापि विहितसाध्वसोद्रेकम्, समस्तसत्त्वसंहारायतनं देवतायतनमुपगम्योपविश्य च तत्पादपीठोपकण्ठे कीनाशनगरमार्गानुकारिणा करार्पितेन तरवारिणा प्रकम्पितसुरासुरलोकस्तन्मिथुनाय दण्डपाशिकभटानादिदेश ॥

अत्रान्तरे भगवानमरचूडामणिमयूखशेखरितचरणनखशिखोल्लेखपरिधिः, सुदत्तापरनामनिधिः, अनाश्वान्, आश्चर्यपर्यायाचा(च)र्यचातुर्योद्भूतभावना-

---

स्यापि कृताशङ्कातङ्कम् आस्तां सामान्यो लोकः, यमस्यापि कृतो विहितः शङ्कातङ्को येन तत्तथोक्तम्। पुनः कथंभूतम्। महाकालस्यापि विहितसाध्वसोद्रेकम् महाकालस्यापि रुद्रस्यापि विहितः साध्वसस्य भयस्योद्रेक उत्कर्षता येन तत्तथोक्तम्। पुनः कथंभूतम्। समस्तसत्त्वसंहारायतनम् समस्तानां सत्त्वानां प्राणिनां संहारस्य प्रलयकालस्य आयतनं गृहम्। कथंभूतः स मारिदत्तः। तरवारिणा सर्वधारेण खड्गेन प्रकम्पितो भयं प्रापितः सुरासुरलोको देवदानवलोकसमूहो येन स तथा। कथंभूतेन तरवारिणा। कीनाशनगरमार्गानुकारिणा कीनाशस्य यमस्य यन्नगरं पत्तनं तस्य मार्गस्य पथोऽनुकरोति उपमां धरतीत्येवंशीलः स तथा तेन। पुनः कथंभूतेन तरवारिणा। करार्पितेन हस्तोद्धृतेन। उद्गमितेनेत्यर्थः॥

अत्रान्तरेऽस्मिन्नवसरे भगवानिन्द्रादीनामाराध्यः सुदत्तो नामाचार्यः लोचनगोचरायामेषु लोचनानां गोचरा गम्या आयामा दैर्घ्याणि येषां ते लोचनगोचरायामास्तेषु ईदृग्विधेषु ग्रामेषु विष्वाणार्थं मुनीनां भ्रामरीनिमित्तम् अखिलश्रमणसंघं ऋषिमुनियत्यनागारलक्षणम् आदिदेश आदेशं दत्तवान्। इति क्रियाकारकसंबन्धः। कथंभूतो भगवान्सुदत्तः। अमरचूडामणिमयूखशेखरितचरणनखशिखोल्लेखपरिधिः अमराणां चतुर्निकायदेवानां ये चूडामणयः शिरोरत्नानि तेषां मयूखेषु शेखरिता मुकुटीकृता ये चरणनखाः पादपुनर्भवास्तेषां शिखोच्छ्रितिस्तस्या उल्लेखपरिधिः प्रकटितमण्डलं यस्य स तथोक्तः। षड्विंशतिरावरणास्तस्य भगवतो नाम वर्तन्ते। पुनरपि कथंभूतः। सुदत्तापरनामनिधिः सुदत्त इति अपरं द्वितीयं यन्नाम तस्य नाम्नो निधिरक्षयं निधानम्। सुदत्त इति नाम सर्वैरपि गृह्यते, परं क्षयं नायाति। न हानिं प्राप्नोतीति भावः। अपरं कथंभूतो भगवान्। अनाश्वाननशनशीलः अनेकोपवासविधानस्वभावः। उक्तं च निरुक्तेषु—'योऽक्षस्तेनेष्वविश्वस्तः शाश्वते पथि निष्ठितः। समस्तसत्त्वविश्वास्यः सोऽनाश्वानिह गीयते॥' इति वक्ष्यति श्रीसोमदेवाचार्यः। अपरं कथंभूतः। आश्चर्यपर्यायाचा(च)र्यचातुर्योद्भूतभावनाप्रभावप्रकम्पितायातविनतवनदेवतोत्तंसप्रसूनमकरन्दस्यन्ददुर्दिनीकृतक्रमः आश्चर्यस्याद्भुतस्य ये पर्यायास्तैरुपलक्षित आचार्यस्तस्य चातुर्य

१. 'उपलक्षितं यदाचर्यमाचरणं तस्य' इत्यपि बाहुल्केन संभवति.

प्रभावप्रकम्पितायातविनतवनदेवतोत्तंसप्रसूनमकरन्दस्यन्ददुर्दिनीकृतक्रमः, सकलसिद्धान्तसमर्थतीर्थप्रार्थनपदार्थसार्थसमर्थनातिशयविशेषसाक्षाद्भवत्सर

---

य(त) स्मिन्वा यच्चातुर्यं दाक्षिण्यं तस्मादुद्भूता उत्पन्ना या भावना कर्मात्मनोर्भेदविज्ञानं तस्याः प्रभावेण पूर्वं प्रकम्पिता आकम्पं प्रापिताः पश्चादायाता आगतास्तदनन्तरं विनता नम्रीभूता या वनदेवताः कान्तारदेवतास्तासामुत्तंसानि मुकुटानि तेषां प्रसूनानि पुष्पाणि तेषां मकरन्दः पुष्परसस्तस्य स्यन्दश्च्योतनं तेन दुर्दिनीकृतौ तिमिरीकृतौ क्रमौ पादपद्मौ यस्य स तथोक्तः । पुनरपि कथंभूतः । सकलसिद्धान्तसमर्थतीर्थप्रार्थनपदार्थसार्थसमर्थनातिशयविशेषसाक्षाद्भवत्सरस्वतीकरक्रीडाकमलकल्पितसपर्यः सकलाश्च ते सिद्धान्ता जिनजैमिनीयकपिलकणचर[गौतम]चार्वाकशाक्यप्रणीतशास्त्राणि त एव समर्थतीर्थस्तस्य प्रार्थनं याचनं येषां ते सकलसिद्धान्तसमर्थतीर्थप्रार्थनास्त एव च ते पदार्थाः । जिनसिद्धान्ते—जीवाश्रवबन्धनिर्जरामोक्षास्तत्त्वं पुण्यं पापं चेति नव पदार्थाः । जैमिनीयसिद्धान्ते—नित्येभ्यो वेदवाक्येभ्य एव तत्त्वनिश्चयः । तत्र चोदनालक्षणोऽर्थो धर्मस्तत्त्वम् । कपिलसिद्धान्ते—सत्त्वरजस्तमःसाम्यावस्था प्रकृतिः, प्रकृतेर्महान् महतोऽहंकारः, अहंकारात्पञ्च तन्मात्राणि एकादश चेन्द्रियाणि, तत्र— शब्दतन्मात्रादाकाशम्, रूपतन्मात्रात्तेजः । गन्धतन्मात्रात्पृथ्वी, रसतन्मात्रादापः, स्पर्शतन्मात्राद्वायुः, स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि पञ्च बुद्धीन्द्रियाणि, वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि, एकादशं मनश्चेति । अमूर्तश्चैतन्यरूपोऽकर्ता भोक्ता च पुरुषः, 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥' प्रागबन्धवत्प्रकृतिपुरुषयोगात्पञ्चविंशतितत्त्वज्ञानं मोक्षमार्गः । प्रकृतिपुरुषविवेकदर्शनान्निवृत्तायां प्रवृत्तौ पुरुषस्य स्वरूपावस्थानं मोक्षः । सत्त्वरजस्तमस्त्रीणि तत्त्वानि, पञ्च तन्मात्राणि इत्यष्ट । पञ्च पृथिव्यादय इति त्रयोदश । एकादशेन्द्रियाणीति चतुर्विंशतिः, ततः पुरुषः । एवं कपिलसिद्धान्ते पञ्चविंशतिपदार्थाः । कणचरसिद्धान्ते—[द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्त पदार्थाः । गौतमसिद्धान्ते—] षोडश पदार्थाः । तथाहि—प्रमाणम्, प्रमेयम्, संशयः, प्रयोजनम्, दृष्टान्तः, सिद्धान्तः, अवयवः, तर्कः, निर्णयः, वादः, जल्पः, वितण्डा, हेत्वाभासः, छलम्, जातिः, निग्रहस्थानं, चेति । चार्वाकसिद्धान्ते—देवो(?) नास्ति मोक्ष इति । पृथिव्यप्तेजोवायवश्चेति चत्वारः पदार्थाः । शाक्यसिद्धान्ते—दुःखसमुदायनिरोधमोक्षमार्गरूपाणि चत्वारि आर्यसत्त्वानि चत्वारः पदार्थाः । तेषां पदार्थानां सार्थः समूहस्तस्य समर्थनातिशयो विचारोत्कर्षस्तस्य विशेषोऽतिशयविशेषस्तस्मात्साक्षाद्भवन्ती लोचनानां गोचरं संजायमाना या सरस्वती त्रिलोचना मयूरवाहिनी तस्याः करक्रीडाकमलं निजहस्तक्रीडाकमलं तेन कल्पिता कृता सपर्या पूजा यस्य स तथोक्तः । अपरं कथंभूतो

स्वतीकरक्रीडाकमलकल्पितसपर्यः, चतुरुदधिरोधःसविधवनविनिषण्णकिंनरीवदनविरोचनविकास्यमानयशःकुशेशयावतंसितजलदेवतासमाजः, समस्तसमयानवद्यविद्याविदग्धबुधप्रकाण्डपुण्डरीकमण्डलीमार्तण्डः, कृत्स्नदिगन्तविश्रान्तविश्रुतशिष्यश्रेणिसमीरपथप्रथमानकीर्तिकलहंसीनिवासीकृतनिखिलभुवनाभोगः, शुद्धाभिसंधिसमाधिविधुविशेषोन्मेषनिर्विषीकृतविषविषमदोषकलुष-

---

भगवान्। चतुरुदधिरोधःसविधवनविनिषण्णकिंनरीवदनविरोचनविकास्यमानयशःकुशेशयावतंसितजलदेवतासमाजः चत्वारश्च ते उदधयश्च समुद्रास्तेषां [रोधसस्तटस्य] सविधानि निकटानि यानि वनानि तेषु विनिषण्णा उपविष्टाः किंनर्यश्चासुण्डामुख्यास्तासां वदनानि मुखान्येव विरोचनाः श्रीसूर्याः। महाप्रकाशत्वात्। तैर्विकास्यमानानि स्फुटीक्रियमाणानि विकचीक्रियमाणानि यशःकुशेशयानि पुण्यगुणकीर्तनकमलानि तैरवतंसितः कर्णपूरीकृतो जलदेवतासमाजः समुद्रजलदेवतासमूहो यस्य स तथोक्तः। पुनः कथंभूतो भगवान्। समस्तसमयानवद्यविद्याविदग्धबुधप्रकाण्डपुण्डरीकमण्डलीमार्तण्डः समस्ताः समग्रा ये समयाः शासनानि जिनशास्त्रानादिशास्त्राणि तेषां संवन्धिनि अनवद्या निरवद्या या विद्या ज्ञानं तस्यां विदग्धानि चतुराणि यानि बुधप्रकाण्डानि प्रशस्तविद्वांसस्तान्येव पुण्डरीकाणि श्वेतकमलानि। [यशःकीर्तिपरिमलविराजितत्वात्, बुधमधुकरसेवितत्वाच्च।] तेषां मण्डली समूहस्तस्य विकासकरणे मार्तण्डः [मृतण्डाया अपत्यं पुमान् मार्तण्डः]। श्रीभास्कर इत्यर्थः। पुनः कथंभूतो भगवान्। कृत्स्नदिगन्तविश्रान्तविश्रुतशिष्यश्रेणिसमीरपथप्रथमानकीर्तिकलहंसीनिवासीकृतनिखिलभुवनाभोगः कृत्स्नदिगन्तेषु सर्वदिक्प्रान्तेषु विश्रान्ताः स्थिता ये विश्रुतशिष्याः विख्यातश्रुतज्ञानसंयुक्तान्तेवासिनस्तेषां श्रेणिः समूहः स एव समीरपथः आकाशस्तत्र प्रथमाना विस्तरन्ती व्याप्नुवती या कीर्तिः पुण्यगुणकीर्तनं सैव कलहंसी राजहंसी। [नयप्रमाणलक्षणोभयपक्षशुद्धत्वात्।] तया निवासीकृतो निखिलस्य भुवनस्य समस्तपृथ्वीमण्डलस्य आभोगो विस्तारो यस्य स तथा। पुनः कथंभूतो भगवान्। शुद्धाभिसंधिसमाधिविधुविशेषोन्मेषनिर्विषीकृतविषविषमदोषकलुषविषयविषधरः शुद्धो रागद्वेषमोहादिरहितो योऽसावभिसंधिर्मनोभिप्रायस्तत्र तेनोपलक्षितो वा योऽसौ समाधिर्ध्यानविशेषः स एव विधुविशेषश्चन्द्रमाप्रकारः। [मोक्षामृतधारावर्षित्वात्।] तस्य उन्मेष उदयस्तेन निर्विषीकृतो विषरहितविहितो विषविषमदोषकलुषविषयविषधरो येन विषवद्धालाहलवत् विषमस्तीव्रतरो योऽसौ दोषः पापकर्म तेन कलुषः कश्मलीभूतो योऽसौ विषयः स्पर्शादिसमूहः स एव विषधरः सर्पो येन स तथा। उक्तं च—'वर्चोगृहं विषयिणां मदनायुधस्य नाडीव्रणो विषमनिर्वृतिपर्वतस्य। प्रच्छन्नपादुकमनङ्गमहाहिरन्ध्रमाहुर्बुधा जघनरन्ध्रमिदं युवत्याः॥'

---

१. 'युवत्याः' ख.

विषयविषधरः, प्रसंख्यानपविपावकप्लुष्टानुत्थानमन्मथमददरिद्रितरुद्रस्मरविजयः, अरजस्तमोबहुलोऽप्याततगुणधर्मधरः, अकिंचनोऽपि रत्नत्रयनिवासः, अविभूषणोऽपि सुवर्णालंकारः, अविषमलोचनोऽपि संपन्नोमासमागमः, अक्रू-

---

अपरं च कथंभूतः । प्रसंख्यानपविपावकप्लुष्टानुत्थानमन्मथमददरिद्रितरुद्रस्मरविजयः प्रसंख्यानं धर्मशुक्लध्यानं तदेव पविपावको वज्राग्निः [कर्मणां दाहपाचनकारकत्वात्।]तेन प्लुष्टो भस्मीकृतोऽनुत्थानं यथा भवत्येवं पुनरुज्जीवनं यथा न भवत्येवं योसौ मन्मथमदः कंदर्प[दर्प]स्तेन दरिद्रितोऽकिंचनीकृतस्तिरस्कृतो रुद्रस्य श्रीमहादेवस्य स्मरविजयः कन्दर्पनिर्जयो येन स तथा । सुदत्तः कथंभूतः । अरजस्तमोबहुलोऽप्याततगुणधर्मधरः । ननु यो रजस्तमोबहुलो न भवति स आततगुणधर्मधरः आरोपितप्रत्यञ्चाचापधरः कथं भवति । विरुद्धमेतत् । परिह्रियते—रजः पापं तमोऽज्ञानम्, न तु धूल्यन्धकारः, न रजस्तमोबहुलः अरजस्तमोबहुलः । अपि निश्चयेन आतता विस्तीर्णभेदा ये गुणाः धर्मश्च चरित्रं रत्नत्रयं च उत्तमक्षमादिकश्च दशविधः तं धरतीति आततगुणधरः । उक्तं च—'रयणत्तयं च धम्मो खमादिभावो य दहविहो धम्मो । चारित्तं खलु धम्मो जीवाण य रक्खणो धम्मो ॥ [धम्मो वत्थुसहाओ खमादिभावो य दहविहो धम्मो । रत्ततयं च धम्मो जीवाण य रक्खणं हवे धम्मो[१] ॥] अपरं कथंभूतः । अकिंचनोऽपि रत्नत्रयनिवासः अकिंचनोऽपि दरिद्रोऽपि रत्नत्रयनिवासः माणिक्यत्रयनिवासः कथं भवति । विरुद्धमेतत् । परिह्रियते—अकिंचनः नास्ति किंचन धनमस्येति अकिंचनो निर्ग्रन्थाचार्यवर्यः । अपि निश्चयेन रत्नत्रयनिवासः सम्यग्दर्शनज्ञानचारित्रमन्दिरम् । अपरं कथंभूतः । अविभूषणोऽपि सुवर्णालंकारः न विद्यन्ते भूषणानि आभरणानि यस्येति स अविभूषणः।ननु यो विभूषणः अपि निश्चयेन सुवर्णो राजकुलं तस्यालंकारः वा सुवर्णस्य कनकस्य अलंकाराणि आभूषणानि यस्य स सुवर्णालंकारः कनकाभरणः राजकुलशृङ्गारः कथं भवति । विरुद्धमेतत् । परिह्रियते—अः सर्वज्ञोऽर्हन् स विभूषणं मण्डनं यस्य स अविभूषणः । अपि निश्चयेन सुवर्णो राजकुलं पुण्यगुणकीर्तनलक्षणं यशश्च सोऽलंकारो मण्डनं यस्येति सुवर्णालंकारः । पुनः कथंभूतः । अविषमलोचनोऽपि संपन्नोमासमागमः अविषमलोचनः अत्रिलोचनः । ननु यः अत्रिलोचनः स संपन्नोमासमागमः स परिपूर्णपार्वतीसंभोगः कथम् । विरुद्धमेतत् । परिह्रियते—अविषमलोचनः विषस्य हालाहलस्य मा लक्ष्मीर्ययोस्ते विषमे ते च ते लोचने विषमलोचने, न विद्येते विषमलोचने यस्य स अविषमलोचनः । अक्रूरदृष्टिरित्यर्थः । रागद्वेषरहितसमदर्शी । अथवा शास्त्रोक्तलोचनसंयुक्तः । लोकृ लोचृ गत्यर्थत्वात् । तस्य धातोः प्रयोगत्वादन्यथा लुब्धमिति भवति । अपि निश्चयेन संपन्ना परिपूर्णा या उमा कीर्तिः समश्च समतापरिणामः सर्वजीवेषु साम्यं आगमश्च सिद्धान्तो यस्येति संपन्नोमासमागम एव । पुनः कथं-

---

१. इत्यधिकः ख-पुस्तके पाठः

ष्णोऽपि सुदर्शनविराजितः, असङ्गस्पृहोऽपि जातरूपप्रियः,अशुद्धनयनीतिर-पि महाभागचरितः, अकठिनवृत्तिरपि क्षमास्वभावः,अव्यालहृदयोऽपि निय-मितकरणग्रामः, उदयाचलस्तपस्तपनस्य, कौमुदीचन्द्रः करुणामृतनिश्च्योत-स्य, मानसप्रदेशः सरस्वतीवारलायाः, प्रभवपर्वतः प्रशनमन्दाकिनीप्रवाहस्य,

---

भूतः। अकृष्णोऽपि सुदर्शनविराजितः। ननु यः अकृष्णः नारायणो न भवति स सुदर्शन-नाम्ना चक्रेण विराजितः कथं भवति। विरुद्धम्। परिह्रियते—अकृष्णः अपापकर्मा सुदर्श-नेन शोभनाकारेण सम्यग्दर्शनेन सद्भावालोकनमात्रेण अहितमतेन वा सुदर्शनवत् मेरु-विशेषवत् विशेषेण राजितः सुदर्शनविराजितः। पुनः कथंभूतः। असङ्गस्पृहोऽपि जातरू-पप्रियः असङ्गस्पृहः अविद्यमाना सङ्गे परिग्रहे स्पृहा वाञ्छा यस्य सोऽसङ्गस्पृहः। ननु यः परिग्रहस्पृहारहितः स जातरूपप्रियः कनकप्रियः कथं भवति। विरुद्धमेतत्। परि-ह्रियते—असङ्गेषु कर्ममलकलङ्करहितेषु सिद्धेषु स्पृहा वाञ्छा यस्येति असङ्गस्पृहः। अपि निश्चयेन जातरूपप्रियः नग्नरूपप्रियः इति शुद्धम्। पुनः कथंभूतः। अशुद्धनयनीतिरपि महा-भागचरितः। ननु यः अशुद्धनयनीतिरन्यायवृत्तिः स महाभागचरितः पुण्यकर्मेश्वरः कथम्। विरुद्धमेतत्। परिह्रियते—परस्परसाक्षेपो वस्तुधर्मनिरूपणप्रायः अशुद्धनयः तत्र नीतिः प्रवृत्तिर्यस्य स अशुद्धनयनीतिः। अपि निश्चयेन (महती) महाभागा महोद्योतः तया गच्छति (तत्) चरितं चरणं यस्य स महाभागचरितः। पुनः कथंभूतः। (अ)कठिनवृत्तिरपि क्षमास्व-भावः। ननु यः (अ)कठिनवृत्तिः (अ)कठोरस्वभावः क्षमास्वभावः कथम्। विरुद्धमेतत्। प-रिह्रियते—(अ)कठिनवृत्तिरपि(अ)कठिना गृहस्थानां अपीडनकरी अक्षम्रक्षणगर्तपूरणगो-चारिभ्रामरिवृत्तिराजीविका आहारो यस्य सो(स)कठिनवृत्तिः। अपि निश्चयेन क्षमास्वभावः सर्वप्राणिषु अक्रोधस्वरूपः। पुनः कथंभूतः। अव्यालहृदयोऽपि नियमितकरणग्रामः न व्यालः सर्पो हृदये कण्ठे यस्य स अव्यालहृदयः यो महादेवो नास्ति स त्रिपुरदाहसहितः कथम्। विरुद्धमेतत्। परिह्रियते—अव्यालमदुष्टं हृदयं मनो यस्य स अव्यालहृदयः। अपि निश्चयेन नियमितो वशीकृतः करणग्राम इन्द्रियसमूहो येन सः। अपरं कथंभूतः। उदयाचलस्तपस्तपनस्य उदयाचल उदयगिरिः। तप एव तपनः श्रीसूर्यः। त्रि-भुवनद्योतकारित्वात्। तस्य। पुनः कथंभूतः। कौमुदीचन्द्रः करुणामृतनिश्च्योतस्य कार्ति-कीपूर्णमासीचन्द्रः करुणैव दयैव अमृतं जरामरणहारित्वात् तस्य निश्च्योतः स्रवणं क्षरणं तस्य। पुनः कथंभूतः। मानसप्रदेशः सरस्वतीवारलायाः मानसस्य सरोवरविशेषस्य प्रदेशास्तद्भूमिः। सरस्वती सैव वारला परमात्महंसभार्या। येन(नय)प्रमाणोभयपक्षशुद्धत्वात्। [तस्याः]। पुनः कथंभूतः। प्रभवपर्वतः प्रशममन्दाकिनीप्रवाहस्य प्रभवपर्वतो हिमाचलः।

---

१. अत्र 'कठिन' इत्येव पाठः साधीयान्। आदावकारः केनचित्प्रक्षिप्त इति बोध्यम्.

---

१. 'नियमितीकरण' इति ख-पुस्तकस्थः पाठः.

उत्पत्तिक्षेत्रं सौजन्यबीजस्य, उदाहरणं गम्भीरतायाः, निदर्शनमौदार्यस्य, प्रसूतिस्थानं महिम्नः, प्रत्यादेशोऽभिध्यायाः, निधिर्धैर्यस्य, आकरावनिश्च सर्वगुणमणीनाम् ।

यस्य च सकलसत्त्वसंचरणसंकोचिनि, शिशिरकणमञ्जरीजालजयविजृम्भमाणानिलकुले, सकलजगच्चण्डव्यथावेपथुस्फारिणि, विरसरसदवशदेशक-

---

प्रशम एव उपशम एव मन्दाकिनीप्रवाहः गङ्गानदीप्रवाहः । सर्वेषां संतापनिवारकत्वात् । तस्य प्रशममन्दाकिनीप्रवाहस्य । पुनः कथंभूतः । उत्पत्तिक्षेत्रं सौजन्यबीजस्य निष्पत्तेः सस्याधिकरणम् । सौजन्यमदुर्जनत्वं तस्य बीजं अङ्कुरहेतुस्तस्य सौजन्यबीजस्य । पुनः कथंभूतः । उदाहरणं गम्भीरतायाः उदाहरणं दृष्टान्तवचनं गम्भीरतायाः । पुनः कथंभूतः । निदर्शनमौदार्यस्य निदर्शनं दृष्टान्तभूतः औदार्यस्य दातृत्वस्य । उक्तं च—'कियती सप्तसहस्री कियती लक्षा च कोटिरपि कियती । औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥' पुनः कथंभूतः । प्रसूतिस्थानं महिम्नः प्रसूतिस्थानं जन्मभूमिः महिम्नो माहात्म्यस्य । पुनः कथंभूतः । प्रत्यादेशोऽभिध्यायाः प्रत्यादेशो निषेधरूपः । अभिध्यायाः परस्वविषयस्पृहायाः । पुनः कथंभूतः । निधिर्धैर्यस्य निधिरक्षय्यं निधानं धैर्यस्य । ध्येयं प्रतिधियं समीरयतीति धीरः, धीरस्य भावो धैर्यं तस्य धैर्यस्य । पुनः कथंभूतः । आकरावनिश्च सर्वगुणमणीनाम् आकरावनिः रोहणाचलसिंहलादिद्वीपभूमिः । सर्वे च ते गुणाः सर्वगुणा औदार्यशौर्यगाम्भीर्यधैर्यादयस्त एव मणयो रत्नानि । त्रिभुवनोद्द्योतकारकत्वात् । तेषां सर्वगुणमणीनाम् । समुच्चयालंकारः ॥

**यस्य चेति** । यस्य च भगवतो हेमन्ते शीतकाले विभावर्यो रात्रयो विभान्ति गच्छन्तीति क्रियाकारकसंबन्धः । कथंभूते हेमन्ते । सकलसत्त्वसंचरणसंकोचिनि सकलानां सत्त्वानां प्राणिवर्गाणां संचरणं पर्यटनं संकोचयतीत्येवंशीलः सकलसत्त्वसंचरणसंकोची तस्मिन् सकलसत्त्वसंचरणसंकोचिनि । अपरं कथंभूते हेमन्ते । शिशिरकणमञ्जरीजालजयविजृम्भमाणानिलकुले शिशिरस्य हिमस्य कणाश्चूर्णानि तेषां मञ्जर्यो वल्ल्यस्तासां जालानि समूहास्तेषां जयस्तिरस्कारस्तस्मिन् विजृम्भमाणं अनिलकुलं वातसमूहो यस्मिन् हेमन्ते स तथा तस्मिन् । पुनः कथंभूते हेमन्ते । सकलजगच्चण्डव्यथावेपथुस्फारिणि सकलस्य जगतः जगति स्थितजन्तुजातस्य समूहस्य चण्डव्यथा तीव्रवेदना वेपथुः कम्पनं च स्फारयति प्रचुरीकरोतीत्येवंशीलः स तथा तस्मिन् । पुनः कथंभूते हेमन्ते । विरसरसदवशदेशकदशनवीणे विरसं यथा भवत्येवं रसन्ति शब्दायमाना अवशानां परवशानां देशकानां पथिकानां दशनवीणा दन्ततन्त्री यस्मिन् । पुनः कथंभूते हेमन्ते । विलमूलको-

दशनवीणे, विलमूलकोटरकुटीसंकुचितालगर्दपरिषदि, हिमपृषतपलिताङ्कुरितकुटहारिकाकुन्तलकलापे, मृगयूथरोमन्थसामर्थ्यकदर्थिनि, प्रालेयलवमुक्ताफलितकरटिरिपुरोमभागे, व्रजपालविलासिनीकपोलविधुवैशद्यशातिनि, हलाजीवजायापदपद्मलावण्यलोपिनि, वनेचरवनिताधरदलकान्तिकर्शिनि, मुनिकामिनीकरकिसलयकृततरङ्गसङ्गे, द्विजकण्ठकुण्ठताविधायिनि, विप्रलब्धपु-

---

टरकुटीसंकुचितालगर्दपरिषदि विलमूलमेव कोटरं जीर्णतरूदरम् । अवकाश(दान)दायित्वात् । तदेव कुटी एकस्तम्भवद्गृहं तत्र संकुचिता संकोचं प्राप्ता अलगर्दपरिषद् सर्पसमूहो यत्र स तथा तस्मिन् । पुनः कथंभूते हेमन्ते । हिमपृषतपलिताङ्कुरितकुटहारिकाकुन्तलकलापे । (हिमस्य शिशिरस्य पृषता विन्दवस्ते पलिता करितापकुरिता पलिकृतकुटहारिकुलकलोप) हिमस्य शिशिरस्य पृषता विन्दवस्तैः पलिताङ्कुरिताः पलितकचाङ्कुरसहिताः कृताः कुटहारिकाणां घटहारिचेटिकानां कुन्तलकलापाः केशसमूहा यस्मिन् स तथा तस्मिन् । पुनः कथंभूते हेमन्ते । मृगयूथरोमन्थसामर्थ्यकदर्थिनि मृगयूथानां हरिणसमूहानां रोमन्थश्चर्वितचर्वणं तस्य सामर्थ्यं वलं कदर्थयति पीडयति इत्येवंशीलः स तथा तस्मिन् । पुनः कथंभूते हेमन्ते । प्रालेयलवमुक्ताफलितकरटिरिपुरोमभागे प्रालेयस्य हिमस्य ये लवाः कणास्तैर्मुक्ताफलितो मुक्ताफलसहितः कृतः करटिरिपूणां सिंहानां रोमभागः स्कन्धकेसरप्रदेशो यत्र स तस्मिन् । पुनः कथंभूते हेमन्ते । व्रजपालविलासिनीकपोलविधुवैशद्यशातिनि व्रजपालानां गोकुलिकानां या विलासिन्यो गोपाङ्गनास्तासां कपोलानि गण्डस्थलान्येव विधवश्चन्द्रमसस्तेषां वैशद्यं शुक्लत्वं शातयति विध्वंसयत्येवंशीलः स तथा तस्मिन् । पुनः कथंभूते हेमन्ते । हलाजीवजायापदपद्मलावण्यलोपिनि हलाजीवानां कर्षकाणां जायानां भार्याणां पदा एव चरणा एव पद्मानि कमलानि। कोमलविराजमानत्वात् । तेषां लावण्यं कान्तिविशेषं लुम्पति विनाशयतीत्येवंशीलस्तश्मि तस्मिन् । पुनः कथंभूते हेमन्ते । वनेचरवनिताधरदलकान्तिकर्शिनि वनेचराः अरण्यचाण्डालास्तेषां वनिताः कमनीयकामिन्यः । 'वनिता जनितात्यर्थरागायां वा[र]योषिति' इत्यभिधानात् । तासामधरा ओष्ठास्त एव दलानि पर्णानि । [दन्तानामाच्छादकत्वात् ।] तेषां कान्तीर्लावण्यानि कृशति तनूकरोतीत्येवंशीलः स तथा तस्मिन् । पुनः कथंभूते हेमन्ते । मुनिकामिनी करकिसलयकृततरङ्गसङ्गे मुनीनां प्राम्यर्षीणां कामिन्यस्तपस्विन्यस्तासां करा हस्तास्त एव किसलयानि पल्लवाः । अरुणत्वकोमलत्वगुणविराजमानत्वात् । तेषु कृतो विहितस्तरङ्गसङ्गो लहरीसंगतिर्येन स तथा तस्मिन् । पुनः कथंभूते हेमन्ते । द्विजकण्ठकुण्ठताविधायिनि द्विजानां ब्राह्मणानां कण्ठेषु गलकन्दलीमध्येषु कुण्ठतां क्रियासु मन्दतां विदधातीत्येवंशीलः स तस्मिन् । पुनः कथंभूते हेमन्ते । विप्रलब्धपु-

---

१. अयं पाठः ख-पुस्तके नास्ति.

रन्ध्रीस्तनभारजनितजानुसंवाधे, कुचकुहरोपसर्पणरतपोतखेदितबालवतीचेतसि, विदूरितरम्भोरूभूषणाभिलाषे, सहसुप्तमिथुनघनालिङ्गनादेशिनि, निरन्तरमुल्लसन्तीभिः करतलपरामर्शसुखविलोपनसूचीभिरिव तनूरुहराजिभिः कण्टकितानि कुर्वति शबरसहचरीवक्षोजमण्डलानि, शिथिलयति दुर्विधकुटुम्बेषु जरत्कन्थापटच्चराणि, नर्तयति पथिकेषु पाणिपल्लवानि, विरचयति दयितोदवसितमनुसरन्तीनामभिसारिकाणामरालपक्ष्माग्रलग्नैस्तुषारासारशीकरैर्लुलितशौक्तिकेयशुक्तिपुटस्पर्धीनि विलोचनानि, संतानयति ता-

रन्ध्रीस्तनभारजनितजानुसंवाधे विप्रलब्धा वियोगं प्राप्ता याः पुरन्ध्र्यः स्त्रियस्तासां स्तनभारैर्जनिता उत्पादिता जानूनामष्ठीवतां संवाधा दुःखं येन स तथा तस्मिन् । उक्तं च—'यस्यां दूतीं प्रियः प्रेष्य दत्त्वा संकेतमेव वा । कुतश्चित्कारणान्नैति विप्रलब्धात्र सा स्मृता ॥' पुनः कथंभूते हेमन्ते । कुचकुहरोपसर्पणरतपोतखेदितबालवतीचेतसि कुचकुहरे स्तनयोर्मध्ये उपसर्पणं प्रवेशस्तत्र रतस्तत्परो योऽसौ पोतो बालकस्तेन खेदितं दुःखं प्रापितं बालवतीनां चेतो मनो यत्र स तथा तस्मिन् । पुनः कथंभूते हेमन्ते । विदूरितरम्भोरूभूषणाभिलाषे विदूरितो निषिद्धो रम्भोरूभिः कमनीयकामिनीभिर्भूषणानां मुक्ताफलाद्याभरणानामभिलाषः प्रीतिर्यत्र स तथा तस्मिन् । पुनः कथंभूते हेमन्ते । सहसुप्तमिथुनघनालिङ्गनादेशिनि सहसुप्तानामेकशय्यायां सुप्तानां मिथुनानां स्त्रीपुरुषयुगलानां घनालिङ्गनं घनमाश्लेषणमादिशत्यादेशं करोतीत्येवंशीलः स तथा तस्मिन् । पुनः किं कुर्वति सति हेमन्ते । निरन्तरमुल्लसन्तीभिः करतलपरामर्शसुखविलोपनसूचीभिरिव तनूरुहराजिभिः कण्टकितानि कुर्वति शबरसहचरीवक्षोजमण्डलानि । शबरसहचरीवक्षोजमण्डलानि तनूरुहराजिभिः कण्टकितानि कुर्वति सति । शबराणां भिल्लानां सहचरीणां भार्याणां वक्षोजमण्डलानि स्तनयुगलानि तनूरुहराजिभिः कृत्वा कण्टकितानि कण्टकोपेतानि कुर्वति विदधति सति । कथंभूताभिस्तनूरुहराजिभिः । निरन्तरमविच्छिन्नं उल्लसन्तीभिरुद्गच्छन्तीभिः । अपरं कथंभूताभिः । करतलपरामर्शेन हस्ततलस्पर्शेन सुखविलोपने शातनिवारणे सूचीभिरिव आयसतीक्ष्णाग्रसूचिकाभिरिव । पुनश्च किं कुर्वति सति हेमन्ते । शिथिलयति दुर्विधकुटुम्बेषु जरत्कन्थापटच्चराणि । दरिद्रजनपरिजनेषु जरत्कन्थापटच्चराणि जीर्णकन्थडिका जीर्णवस्त्राणि शिथिलयति शतखण्डीकुर्वति सति । अपरं किं कुर्वति सति हेमन्ते । नर्तयति पथिकेषु पाणिपल्लवानि । पथिकेषु अध्वगेषु पाणिपल्लवानि करकिसलयानि नर्तयति कम्पयति सति । अपरं किं कुर्वति सति हेमन्ते । विरचयति दयितोदवसितमनुसरन्तीनामभिसारिकाणामरालपक्ष्माग्रलग्नैस्तुषारासारशीकरैर्लुलितशौक्तिकेयशुक्तिपुटस्पर्धीनि विलोचनानि । अभिसारि-

१. 'मन्ना' ख.

पसीनामूरुपर्यन्तपाटलपटलकारिषु वृहद्भानुषु स्पृहयालुताम्, ध्वानयति पवर्णलयमनोहराणि गर्भरूपलपनेषु पटहवाद्यानि, मन्दयति चण्डरोचिषोऽपि तेजःस्फुरितिमानम् ।

अपि च यत्रातिशिशिरभरात्

कान्ते कोककुटुम्बिनी न कुरुते प्राप्तेऽपि चाटुक्रियां
हंसश्चञ्चुपुटान्तरालविगलज्जम्बालकस्तिष्ठति ।

---

काणां कान्तार्थेन संकेतस्थानं यान्तीनां स्त्रीणां अरालपक्ष्माग्रलग्नैः वक्रलोचनरोमाग्रलग्नैः तुषारासारशीकरैर्हिमसमूहकणैः कृत्वा लुलितशौक्तिकेयशुक्तिपुटस्पर्धीनि । लुलितानि पर्यन्त(क्ल)स्थितानि शौक्तिकेयानि मुक्ताफलानि यासां शुक्तीनां मुक्तास्फोटानां पुटैः सह स्पर्धन्ते उपमां धरन्तीत्येवंशीलानि लुलितशौक्तिकेयशुक्तिपुटस्पर्धीनि विलोचनानि नेत्राणि विरचयति कुर्वति सति । कथंभूतानामभिसारिकाणाम् । दयितोदवसितं प्रियमन्दिरमनुसरन्तीनां गच्छन्तीनाम् । उक्तं च—'कान्तार्थिनी तु या याति संकेतं साभिसारिका' । कथंभूतैस्तुषारासारशीकरैः । अरालपक्ष्माग्रलग्नैः । अरालानि वक्राणि पक्ष्माणि नेत्ररोमाणि तेषामग्रेषु प्रान्तेषु लग्नाः संगतास्ते तथा तैः । पुनः किं कुर्वति सति हेमन्ते । संतानयति तापसीनामूरुपर्यन्तपाटलपटलकारिषु वृहद्भानुषु स्पृहयालुताम् । तापसीनां तापसस्त्रीणां वृहद्भानुषु अग्निषु स्पृहयालुतां श्रद्धालुतां संतानयति विस्तारयति सति । कथंभूतेषु वृहद्भानुषु । ऊरुपर्यन्तपाटलपटलकारिषु ऊरुपर्यन्तेषु सक्थिप्रान्तेषु । स्मरमन्दिरसमीपं यावत् । पाटलानां श्वेतरक्तानां लाञ्छनानां पटलानि समूहान् कुर्वन्तीत्येवंशीलास्ते तथा तेषु । अपरं किं कुर्वति सति हेमन्ते । ध्वानयति पवर्णलयमनोहराणि गर्भरूपलपनेषु पटहवाद्यानि । गर्भरूपलपनेषु गर्भरूपाणां शिशूनां लपनेषु मुखेषु पटहवाद्यानि ध्वानयति सति । कथंभूतानि पटहवाद्यानि । पवर्णलयमनोहराणि पपपपेति पुनः पुनः जनस्य लयः साम्यं व्यञ्जकस्तेन मनोहराणि चेतोऽनुरञ्जकानि । अपरं किं कुर्वति सति हेमन्ते । मन्दयति चण्डरोचिषोऽपि तेजःस्फुरितिमानम् । चण्डरोचिषोऽपि श्रीभास्करस्यापि तेजःस्फुरितिमानं तेजसः स्फुरितं स्फुरणं तेजःस्फुरितम्, तेजःस्फुरितस्य भावस्तेजःस्फुरितिमा । 'पृथ्वादिभ्य इमनिज्वा' इत्यनेन सूत्रेण भावे इमन्प्रत्ययः । 'सहेमानङ्' इति सूत्रेण इमन्यय(?)पुंलिङ्गता । तं तेजःस्फुरितिमानं मन्दयति मन्दं स्तोकं करोतीति मन्दयन्, तस्मिन् मन्दयति सति ।

अपि च । विशेषार्थमाह—यत्र यस्मिन् हेमन्ते अतिशिशिरभरात् अतिशयशीतात् । **कान्तेत्यादि** । कोककुटुम्बिनी चक्रवाकी कान्ते चक्रवाके निजभर्तरि प्राप्तेऽपि सति प्रभातसमये आगतेऽपि सति चाटुक्रियां मिथ्यास्तुतिकरणं न कुरुते न विदधाति । [यत्रातिशिशिरभरात्] हंसः श्वेतगरुत्पक्षी चञ्चुपुटान्तरालवि-

कृच्छ्रात्कुञ्जरहस्तवर्तितचयः पांसुः पुनः शीर्यते
भर्तॄणां शयनं न मुञ्चति परं कोपेऽपि योषिज्जनः ॥ ५३ ॥
सिंहः संनिहितेऽपि सीदति गजे शीर्यत्क्रमस्पन्दनो
मध्याह्नेऽपि न जातशष्पकवलः प्रायः कुरङ्गीपतिः ।
वत्सः कुण्ठितकण्ठनालवलनः पातुं न शक्तः स्तनं
वक्त्रं नैति विभातकर्मकरणे पाणिर्द्विजानामपि ॥ ५४ ॥
पत्त्रैः स्तम्बतलप्ररूढविरसप्रायैर्मृगाणां रतिः
क्षोणीधूलनकेलयोऽपि विकिरैस्त्यक्ताः प्रभातागमे ।

---

गलज्जम्बालकस्तिष्ठति चञ्चुपुटान्तरालात् त्रोटिपुटमध्यात् विगलत् अधःपतत् जम्बालकं शैवलं यस्य स चञ्चुपुटान्तरालविगलज्जम्बालकः तिष्ठति । जम्बालं चर्वितुं न शक्नोतीत्यर्थः । [यत्रातिशिशिरभरात्] कुञ्जरहस्तवर्तितचयः पांसुः धूली पुनः पश्चात् कृच्छ्रात् अतिकष्टेन शीर्यते अधः पतति । कथंभूतः पांसुः । कुञ्जरहस्तवर्तितचयः कुञ्जरेण हस्तिना हस्तेन शुण्डादण्डेन वर्तितः कृतश्चयो राशिर्यस्य पांशोः स कुञ्जरहस्तवर्तितचयः । कुञ्जरशुण्डादण्डे[नाव]लग्नो धूलीसमूहो न शीर्यते । कष्टेन अधः पततीत्यर्थः । [पुनश्च यत्रातिशिशिरभरात्] योषिज्जनो वनितालोकः भर्तॄणां शयनं पतीनां शय्यां परं उत्कृष्टं [यथा भवेत् तथा] कोपेऽपि क्रोधे कृतेऽपि सति न मुञ्चति न त्यजति । दीपकालंकारः ॥ ५३ ॥

**सिंह इत्यादि** । [यत्र नीहारकालागमे] गजे हस्तिनि संनिहितेऽपि निकटवर्तिन्यपि सिंहः सीदति बुभुक्षितस्तिष्ठति । गजं मारयित्वा न भक्षयति इत्यर्थः । कथंभूतः सिंहः । शीर्यत्क्रमस्पन्दनः शीर्यत् अव्यापारं भवत् क्रमाणां चरणानां स्पन्दनं चलनं यस्य स शीर्यत्क्रमस्पन्दनः । अतिशिशिरभरादिति पूर्वोक्तं संवन्धनीयम् । [यत्र नीहारकालागमे] कुरङ्गीपतिः कृष्णसारो मृगः मध्याह्नेऽपि सूर्ये ललाटं प्राप्तेऽपि वा ललाटंतपेऽपि प्रायो बाहुल्येन जातशष्पकवलो न वर्तते । जात उत्पन्नः शष्पाणां बालतृणानां कवलो ग्रासो यस्येति स जातशष्पकवलः । [यत्र नीहारकालागमे] वत्सस्तर्णकः स्तनं पातुं पयोधरं धयि(धा)तुं नं शक्तो न समर्थो वर्तते । कथंभूतो वत्सः । कुण्ठितकण्ठनालवलनः कुण्ठितं मन्दक्रियं कण्ठनालस्य गलनालस्य वलनं नमनं चेष्टितं यस्य स कुण्ठितकण्ठनालवलनः । [यत्र नीहारकालागमे] द्विजानां ब्राह्मणानामपि । आस्तां(सतां) तावत् क्षत्रवनि(णि)जः । पाणिः करः विभातकर्मकरणे संध्यावन्दनकाले क उपस्पर्शादिविधाने वक्त्रं मुखं न एति नागच्छति । अयमपि दीपकालंकारः ॥ ५४ ॥

**पत्त्रैरित्यादि** । [यत्र नीहारकालागमे] मृगाणां कुरङ्गाणां पत्त्रैः पर्णैः करणभूतैः

कोकः शुष्कमृणालजालचरणन्यासैः प्रियां वीक्षते
वक्रप्रान्तविधूनिते च कमले हंसः पदं न्यस्यति ॥ ५५ ॥
हंसी चञ्चुपुटान्तरार्पितबिसच्छेदात्खरं खिद्यते
भूमिस्रस्तकरा करेणुरवशक्षीरस्तनी ताम्यति ।
प्रातर्डिम्भविचेष्टितुण्डकलनान्नीहारकालागमे
हस्तन्यस्तफलद्रवा च शबरी बाष्पातुरं रोदिति ॥ ५६ ॥

---

रतिश्चर्वणं वर्तते । कथंभूतैः पत्रैः । स्तम्बतलेषु व्रीह्यादीनां प्रकाण्डप्रदेशेषु प्ररूढा उत्पन्ना विरसप्राया नीरसत्वानि येषां पत्राणां तानि स्तम्बतलप्ररूढविरसप्रायाणि तैस्तथा । अतिशीतपीडिततया मुखचलनशक्तेरभावात् पत्राण्येव चरन्ति, स्तम्बचर्वणं कर्तुं न शक्नुवन्तीत्यर्थः । [यत्र नीहारकालागमे] विकिरैः पक्षिभिश्चटकादिपतत्रैः प्रभातागमे सूर्योदये क्षोणीधूलनकेलयोऽपि त्यक्ताः । क्षोण्यां धूलनं लोटनं तस्य केलयः क्रीडाः क्षोणीधूलनकेलयः । [यत्र नीहारकालागमे] कोकश्चक्रवाकः शुष्कमृणालजालचरणन्यासैः कृत्वा प्रियां चक्रवाकीं वीक्षते अवलोकयति । शुष्काणि आवानानि मृणालानि पद्मिनीकन्दास्तेषां जालानि समूहास्तेषु चरणन्यासाः पादारोपणानि शुष्कमृणालजालचरणन्यासास्तैः । [यत्र नीहारकालागमे] हंसः श्वेतगरुत्पक्षी कमले पद्मे पदं चरणं न्यस्यति आरोपयति । कथंभूते कमले । वक्रप्रान्तविधूनिते वक्रस्य मुखस्य प्रान्तेन चञ्च्वग्रेण विधूनिते कम्पिते ॥ ५५ ॥

हंसीत्यादि । [यत्र नीहारकालागमेऽतिशिशिरभरात्] हंसी हंसभार्या वरटेत्यपरनाम्नी खरं गाढं अतिशयेन खिद्यते दुःखिनी भवति । कस्मात् । चञ्चुपुटान्तरार्पितबिसच्छेदात् चञ्चुपुटान्तरेषु मुखमध्ये हंसेन स्नेहेन अर्पितो योऽसौ बिसच्छेदः पद्मिनीकन्दखण्डश्चञ्चुपुटान्तरार्पितबिसच्छेदस्तस्मात् । [अपरं यत्र नीहारकालागमे] करेणुर्गजकामिनी अवशक्षीरस्तनी परवशक्षीरस्तनी ताम्यति दुःखिनी भवति । तस्याश्चिक्कस्तस्याः स्तनं शीतपीडितः पातुं न शक्नोति यतः । कथंभूता करेणुः । भूमिस्रस्तकरा भूमौ स्रस्तः पातितः करः शुण्डादण्डो यया सा तथा । [अपरं यत्र नीहारकालागमे] शबरी भिल्लभार्या बाष्पातुरं यथा भवत्येवं अश्रुपातकष्टं यथा भवत्येवं रोदिति रोदनं करोति । कथंभूता शबरी । हस्तन्यस्तफलद्रवा हस्ते करपुटे न्यस्त आरोपितो धृतः फलद्रवः द्राक्षादिफलरसो यया सा हस्तन्यस्तफलद्रवा । शबरी कस्माद्रोदिति । प्रातः प्रभाते डिम्भस्य निजबालकस्य विचेष्टि चलनादिक्रियारहितं तुण्डं मुखं तस्य कलनात् । कवलनादिक्रियारहितं तुण्डं मुखं तस्य मृतोऽयमिति संभावनात् रोदनं करोति । दीपकालंकारः ॥ ५६ ॥

---

'श्चिक्कतस्याः' ख.

अह्नोऽर्धेऽपि तरङ्गवारि करिणो गृह्णन्ति रोधःस्थिता
जिह्वाग्राद्गलनालमेति न पयः सिंहे सतृष्णेऽपि च ।
एणानामधरान्तराललुलितास्तिष्ठन्ति पाथःकणाः
पूर्वोत्खातविशुष्कपल्वलगतः पोत्री च मुस्ताशनः ॥ ५७ ॥

किं च ।

शून्याः पदैः कररुहां रमणीकपोलाः
कान्ताधरा न दशनक्षतकान्तिभाजः ।
स्वच्छन्दकेलिषु रता वनिता न यत्र
काले परं जनितकुङ्कुमपङ्करागे ॥ ५८ ॥

यत्र च ।

लीलाविलासविरलैर्नयनासिताब्जैः
स्पर्शासुखाधरदलैर्वदनारविन्दैः ।

---

**अह्नोऽर्धेत्यादि** । [यत्र नीहारकालागमे अतिशिशिरभरात्] करिणो गजाः अह्नोऽर्धेऽपि मध्याह्नेऽपि मध्याह्नसमयेऽपि रोधःस्थितास्तटे स्थितास्तरङ्गवारि कल्लोलजलं गृह्णन्ति पिबन्ति । [यत्र नीहारकालागमे] सतृष्णेऽपि च तृषितेऽपि च सिंहे हर्यक्षे पयः पानीयं जिह्वाग्रात् रसनाग्रात् गलनालं गलच्छिद्रं प्रति नैति न गच्छति । जिह्वाग्रे एव तिष्ठतीत्यर्थः । [यत्र नीहारकालागमे] एणानां मृगाणां अधरान्तराललुलिता ओष्ठमध्यस्थिताः पाथःकणाः जलकणाः तिष्ठन्ति । कण्ठाधो न गच्छन्तीत्यर्थः । [पुनर्यत्र नीहारकालागमे] पोत्री च अरण्यशूकरश्च पूर्वोत्खातविशुष्कपल्वलगतः सन् मुस्ताशनो भवति । मुस्ताश्चर्वयतीत्यर्थः ॥ ५७ ॥

किं च । अस्ति विशेषः । **शून्या इत्यादि** । यत्र काले शिशिरकाले रमणीकपोलाः स्त्रीणां गण्डस्थलानि कररुहां नखानां पदैर्नखक्षतैः शून्या वर्तन्ते । यत्र काले कान्ताधराः स्त्रीणां दन्तच्छदाः दशनक्षतकान्तिभाजो न वर्तन्ते । दशनक्षतानां दन्तक्षतानां दन्तखण्डितानां कान्तिभाजो रक्ततायुक्ता न वर्तन्ते । यत्र काले वनिता अत्युत्पादितरागाः स्त्रियः स्वच्छन्दकेलिषु यथेष्टक्रीडासु रता रमणपरा न वर्तन्ते । कथंभूते काले । परं केवलं जनितकुङ्कुमपङ्करागे जनित उत्पादितः कुङ्कुमपङ्के काश्मीरजन्मकेसरकर्दमे रागः प्रीतिर्येन स तथा तस्मिन् । कुङ्कुमपङ्क उष्णस्वभावो भवति यस्मात् ॥ हेत्वलंकारः ॥ ५८ ॥

**यत्र चेत्यादि** । यत्र नीहारकाले सुकृतिनः पुण्यवन्तः पुरुषाः स्त्रीभिः कमनीयकामिनीभिः सुरते संभोगक्रीडायां सखेदाः सुखमध्ये दुःखिताः कृताः । कैः । नयना-

रोमाञ्चकण्टकिततैः कुचकुड्मलैश्च
स्त्रीभिः कृताः सुकृतिनः सुरते सखेदाः ॥ ५९ ॥

तत्रानवरतमन्तःप्रवर्धमानध्यानधैर्यधनंजयावधूतहिमसमयप्रत्यूहव्यूहस्यातिनिवातसौधमध्यसमध्यासिन इव स्थण्डिलशायिनो हेमन्ते विहितविरहिजनदुर्लभविभातसमागमाः सुखेन विभान्ति विभावर्यः ।

यस्य च दावदाहद्विगुणितप्रतापातपैस्तपनोपलशैलशिलाशिखोच्छलद-

---

सिताब्जैः नेत्रनीलोत्पलैः । कथंभूतैर्नयनासिताब्जैः । लीलाविलासविरलैः लीलाविलास उत्फुल्लोचनत्वं तेन विरलैः । पेलवैः । तुच्छैरित्यर्थः । अपरं कैः कृत्वा सखेदाः कृताः । वदनारविन्दैः मुखकमलैः । कथंभूतैः । स्पर्शासुखाधरदलैः स्पर्शेन असुखानि कर्कशत्वात् अधरदलानि रदवासांसि येषां मुखारविन्दानां तानि तथा तैः । अपरं कैः । कुचकुड्मलैः स्तनकलिकाभिः । कथंभूतैः कुचकुड्मलैः । रोमाञ्चकण्टकिततैः रोमाञ्चेन रोमहर्षणेन कण्टकीनि कण्टकसहितानि तटानि प्रस्थप्रदेशा येषां तानि तथा तैः । हेतुरयमलंकारः ॥ ५९ ॥

**तत्रेत्यादि** । तत्र तस्मिन् हेमन्ते शिशिरकाले यस्य भगवतः विभावर्यो रात्रयः सुखेन अनायासेन विभान्ति अतिक्रामन्ति । यस्य कथंभूतस्य । स्थण्डिलशायिनः चतुष्पथस्थितस्य । (अभ्रावकाशे उद्धवस्य आकाशस्येव)[1] । अतिनिवातसौधमध्यसमध्यासिन इव । अतिनिवातः शीतरहितो योऽसौ सौधमध्यो राजसदनमध्यस्तं सम्यक् अध्यास्ते तस्मिन् तिष्ठतीत्येवंशीलः स तथा तस्य । अपरं कथंभूतस्य । अनवरतं निरन्तरं अन्तःप्रवर्धमानध्यानधैर्यधनंजयावधूतहिमसमयप्रत्यूहव्यूहस्य । अन्तश्चेतसि प्रवर्धमानं वृद्धिं गच्छत् यद्ध्यानं धर्मध्यानं तत्र यद्धैर्यं अकातरत्वं निश्चलत्वं तदेव धनंजयोऽग्निः । पापकर्मणां दाहकारकत्वात् । तेन अवधूतः स्फोटितः हिमसमयस्य शीतकालस्य प्रत्यूहव्यूहो विघ्नसमूहो येन स तथा तस्य । कथंभूता विभावर्यः । विहितविरहिजनदुर्लभविभातसमागमाः । विहितो निर्मापितो विरहिजनानां विप्रलब्धमानुषाणां दुर्लभः असुखप्रायो विभातसमागमः प्रभातस्यागमनं यासु तास्तथा ॥

**यस्येत्यादि** । यस्य च भगवतः श्रीसुदत्ताचार्यस्य तेषु सर्वलोकप्रसिद्धेषु तपतपनकेतुषु ग्रीष्मकालदिवसेषु । तप इति अकारान्तः शब्दो ग्रीष्मकालवाची । तस्य तपस्य ग्रीष्मकालस्य तपनः श्रीसूर्यस्तस्य केतवः तपतपनकेतवः । दिवसा इत्यर्थः । तेषु तपतपनकेतुषु । ग्रीष्मकालदिवसेष्वित्यर्थः । परमानन्दस्यन्दसुधापयोधिना ।

---

१. अस्य मूलं तु नोपलब्धम्.

परमानन्दो निजशुद्धबुद्धैकस्वभावात्मध्यानसमुत्पन्नसौख्यं परमानन्द उच्यते, तस्य स्यन्दः क्षरणं प्रवाहः स एव सुधापयोधिरमृतसमुद्रः । जरामरणनिवारकत्वात् । परमानन्दस्यन्दसुधापयोधिना आत्मध्यानसमुत्पन्नसुखामृतसमुद्रेण कर्तृभूतेन परिप्लावितापघनस्य परिप्लावितः स्नापितोऽपघनः शरीरं यस्य स परिप्लावितापघनस्तस्य परिप्लावितापघनस्य मध्याह्नसमया यान्ति गच्छन्ति [इति क्रियाकारकसंबन्धः] । तस्य कथंभूतस्य । विकर्तनकरमूलविलग्नशिखशिखरिशिरःश्रितस्य । विकर्तनः श्रीभास्करस्तस्य कराः किरणास्तेषां मूलं उत्पित्तिस्थानम् । श्रीसूर्यविम्बमित्यर्थः । तत्र विलग्ना समीपवर्तिनी शिखा शिखरं यस्येति विकर्तनमूलविलग्नशिखः स चासौ शिखरी पर्वतस्तस्य शिरश्चूलिका तत्र श्रित आश्रितो विकर्तनकरमूलविलग्नशिखशिखरिशिरःश्रितस्तस्य तथोक्तस्य । परं कथंभूतस्य भगवतः । प्रलम्बितभुजलतायुगलस्य । प्रलम्बितं दीर्घमुक्तं भुजयोर्बाह्वोर्लतायुगलं वल्लीयुग्मं येन स प्रलम्बितभुजलतायुगलस्तस्य तथोक्तस्य । अपरं कथंभूतस्य यस्य भगवतः । खरमयूखखेदिखेदितमुखमण्डलस्य । खरमयूखः श्रीसूर्यस्तं खेदयति निजप्रतापेन दुःखमुत्पादयति इति खरमयूखखेदि तादृशं खेदितं सूर्यसंमुखं प्रेरितं मुखमण्डलं मुखविम्बं येन स तथा तस्य । अपरं कथंभूतस्य यस्य भगवतः । मनोगोचरातिचारितपश्चर्याश्चर्यितखचरलोकस्य । मनोगोचरात् चित्तसंवन्धात् अतिचारिणी अतिक्रमणशीला । मनसो गम्यतायाः अतिक्रान्ताः कस्यचिन्मनसि न संमातीत्यर्थः । ईदृग्विधा या तपश्चर्या तपश्चरणं तया आश्चर्यितः अत्यद्भुतं प्रापितः खचरलोको देवविद्याधरसमूहो येन स तथा तस्य । कथंभूतेन परमानन्दस्यन्दसुधापयोधिना । परिपूर्णसमाधिचन्द्रोदयविजृम्भितेन । परिपूर्णः पूर्णिमाचन्द्रवत् संपूर्णः स चासौ समाधिश्चेतोनिरोधनम् । धर्मशुक्लध्यानद्वयमित्यर्थः । स एव चन्द्रः समुद्रनवनीतम् । संसारसंतापनिवारकत्वात् । तस्य उदये प्रादुर्भावे सति विजृम्भितः उद्वेलः संजातः स तथा तेन । परमानन्दस्यन्दसुधापयोधिना किं कुर्वता । घनघर्मजलच्छलेन बहिरुद्वहता । निविडप्रस्वेदजलमिषेण वहिर्वाह्ये शरीराद्वाह्ये उद्वहता निर्गच्छता । केन । उत्प्रेक्षते—पुनरन्तरपर्याप्तावकाशेनेव । पुनर्विजृम्भणादनन्तरं अन्तश्चेतसि अपर्याप्तावकाशेनेव न पर्याप्तः न प्राप्तः अवकाशः स्थानं येन परमानन्दसुधास्यन्दपयोधिना स अन्तरपर्याप्तावकाशस्तेन । यस्य भगवतः कथंभूतस्य । यन्त्रधारागृहं उपागतस्येव । मेघवर्षामन्दिरं उपागतस्येव । कस्मिन् सति मध्याह्नसमया यान्तीति प्रश्ने 'कालभावयोः सप्तमी' इति वचनात् 'यद्भावो भावः' इति वचनात् अत्र भावे सप्तम्यन्तानि विशेषणानि ज्ञातव्यानि । भगवति संपूर्णैश्वर्यसंयुक्ते गभस्तिमालिनि श्रीभास्करे करैः किरणैः कृत्वा सकलानपि रसान् पृथ्वीरसान् ग्रसितुं अवसिते उद्यते सति । कथंभूते गभस्तिमालिनि । चिरविसर्गसमयसंधुक्षितजठरजातवेदसीव ।......................जठरः स चासौ जातवेदा अग्निस्तस्मिन्निव । कथंभूतैः करैः । दावदाहद्विगुणितप्रतापातपैः । दावदाहेन दावानलप्रज्वलनेन द्विगुणितौ पुनरुक्तीकृतौ प्रतापातपौ उष्णताप्रकाशौ येषां ते तथा

विरलस्फुलिङ्गसङ्गसंतापितस्थलजलजराजिभिस्तरुमूलबिलार्धविनिर्गताशीविषविषधरवदनोद्गीर्णगाढगरलानलज्वालाकरालप्रकाशप्रसरैर्विरहदहनदह्यमानमहिलाश्वासानिलपुनरुक्तोष्णवन्धैरुपार्जितजगज्जातज्योतिःसारैरिव कार्शानवकणगर्भनिर्भरैरिव च करैश्चिरविसर्गसमयसंधुक्षितजठरजातवेदसीव सकलानपि रसान्ग्रसितुमवसिते भगवति गभस्तिमालिनि, परागप्रसरधूसरितसमस्तदिगन्तरालाभिर्वातूलवृत्तिभिर्जगतो जनिताङ्गहारे परिसर्पति समन्तान्नट इव सर्वंकषे मरुति, भुवि दिवि दिशि विदिशि च वैश्वानर-

---

तैः। पुनः कथंभूतैः। तपनोपलशैलशिलाशिखोच्छलदविरलस्फुलिङ्गसङ्गसंतापितस्थलजलजराजिभिः। तपनोपलाः सूर्यकान्तमणयस्तेषां शैलाः पर्वतास्तेषां शिला प्रस्तरास्तासां शिखाभ्यः उच्छलन्तः उत्पतन्तः अविरला अविच्छिन्ना ये स्फुलिङ्गा अग्निकणास्तेषां सङ्गेन संतापिता उपतापिताः स्थलजलजानां स्थलकमलानां राजयः श्रेणयो यैस्ते तथा तैः। पुनः कथंभूतैः करैः। तरुमूलविलार्धविनिर्गताशीविषविषधरवदनोद्गीर्णगाढगरलानलज्वालाकरालप्रकाशप्रसरैः। तरूणां वृक्षाणां मूलेषु यानि विलानि बिलच्छिद्राणि तेभ्यः अर्धविनिर्गताः सामिप्रादुर्भूता ये आशीविषविषधराश्चक्षुर्विषभुजङ्गास्तेषां वदनैर्मुखैरुद्गीर्णा उद्वान्ता या गाढगरलानलज्वालास्तीव्रविषवैश्वानरकीलास्ताभिः कराला अतिरौद्राः प्रकाशप्रसराः प्रद्योतप्रवृत्तयो योनयो येषां ते तथा तैः। अपरं कथंभूतैः। विरहदहनदह्यमानमहिलाश्वासानिलपुनरुक्तोष्णवन्धैः। विरहदहनेन विप्रलम्भाग्निना दह्यमाना भस्मीक्रियमाणाः या महिलाः कमनीयकामिन्यस्तासां श्वासानिलैः निश्वासवातैः पुनरुक्तो द्विगुणीकृत उष्णवन्धो मन्त्रवन्धो येषां ते तथा तैः। पुनः कथंभूतैः। उपार्जितजगज्जातज्योतिःसारैरिव। उपार्जितं स्वीकृतं जगज्जातस्य त्रिभुवनसमूहस्य ज्योतिःसारं तेजस्तत्त्वं यैस्ते यथा तैरिव यथार्थैः। उपमालंकारः। पुनः कथंभूतैः करैः। कार्शानवकणगर्भनिर्भरैरिव च। कृशानोर्वैश्वानरस्येमे कार्शानवास्ते च ते कणा लेशास्तेषां गर्भेण आधानेन निर्भरा अतितीव्रास्ते तथा तैरिव यथार्थैः। उपमालंकारः। पुनश्च कस्मिन् सति यान्ति मध्याह्नसमयाः। परागप्रसरधूसरितसमस्तदिगन्तरालाभिर्वातूलवृत्तिभिर्जगतो जनिताङ्गहारे परिसर्पति समन्तान्नट इव सर्वंकषे मरुति। समन्तात्सर्वत्र मरुति वाते परिसर्पति प्रसरति सति। कथंभूते मरुति। वातूलवृत्तिभिः वातमण्डलीभिः प्रवृत्तिभिः कृत्वा जगतो लोकस्य जनिताङ्गहारे उत्पादितशरीरविक्षेपे शरीरशोषे वा। कथंभूताभिर्वातूलवृत्तिभिः। परागप्रसरधूसरितसमस्तदिगन्तरालाभिः परागस्य धूलेः प्रसरेण प्रवर्तनेन धूसरितानि ईषत्पाण्डुरीकृतानि समस्तानि समग्राणि दिगन्तरालानि दिङ्मण्डलानि याभिस्तास्तथा ताभिः। मरुति कथंभूते। नट इव नटाचार्यो यथा। नटः अङ्गहारं अङ्गविक्षेपं जनयति। पुनरपि कथं-

सृष्टय इव दृष्टिपथमवतरति विष्वद्रीचिलोके, विनिर्मितमुर्मुरोपहारास्विव दुःस्पर्शप्रचारासु सर्वतः शर्करिलास्विलासु विरोचनचूर्णकीर्णेष्विव नखंपचपांसून्माथितातिथिषु पथिषु, वितप्यमानमूषाशुषिरेष्विव तन्निवासिविलासिलोकपरितापकरेषु सौधविवरेषु, प्रलयकालपावकपातभीतास्विव पातालमूलनिलीयमानतनुलतासु लेलिहानवनितासु, समाचरितपञ्चाग्निसाधन-

---

भूते मरुति । सर्वंकषे पाषाणानपि तापयति सर्वंकषः तस्मिन् । अपरं कस्मिन्सति यान्ति मध्याह्नसमयाः । भुवि दिवि दिशि विदिशि च वैश्वानरसृष्टय इव दृष्टिपथमवतरति विष्वद्रीचिलोके । विष्वद्रीचि सर्वस्मिन् लोके जगति दृष्टिपथं लोचनमार्गमवतरत्यागच्छति सति । कथंभूते विष्वद्रीचिलोके । भुवि पृथिव्याम्, दिवि आकाशे, दिशि पूर्वस्यां दक्षिणस्यां पश्चिमायां उत्तरस्यां च विदिशि च प्रतिदिशि अग्निकोण-नैर्ऋत्यकोण-वायुकोण-ईशानकोणलक्षणायां प्रतिदिशि, वैश्वानरसृष्टय इव अग्निरचिता इव । पुनश्च कासु सतीषु । विनिर्मितमुर्मुरोपहारास्विव दुःस्पर्शप्रचारासु सर्वतः शर्करिलास्विलासु । शर्करिलासु शर्करोपलसहितासु इलासु भूमिषु सर्वतः सर्वत्र दुःस्पर्शः महता कष्टेन स्प्रष्टुमशक्यः प्रचारः पादारोपणं यासु ता दुःस्पर्शप्रचारास्तासु । [अपरं] कथंभूतासु इलासु । विनिर्मितमुर्मुरोपहारास्विव विनिर्मित उत्पादितः संजनितः मुर्मुराणां अमाराणां उष्णाग्नीनां वा उपहाराः पूजा यासां तास्तथा तासु । अपरं केषु सत्सु । विरोचनचूर्णकीर्णेष्विव नखंपचपांसून्माथितातिथिषु पथिषु । पथिषु मार्गेषु सत्सु । कथंभूतेषु पथिषु । नखंपचपांसून्माथितातिथिषु नखान् पचन्तीति नखंपचाः । 'मितनखपरिणामेषु पचः' इति साधुः । ईदृग्विधाभिः पांसुभिर्धूलीभिरुन्माथिता मृत्युमानीता अतिथयो अध्वगा येषु ते तथा तेषु । अपरं कथंभूतेषु पथिषु । विरोचनचूर्णकीर्णेष्विव विरोचनचूर्णेन अग्निसमिधेन कीर्णेष्विव । पुनश्च केषु सत्सु । वितप्यमानमूषाशुषिरेष्विव तन्निवासिविलासिलोकपरितापकरेषु सौधविवरेषु । तेषु सौधेषु निवसन्तीति तन्निवासिनो विलासिनो भोगिनो लोकास्तेषां परितापं संतापं कुर्वन्तीति तन्निवासिविलासिलोकपरितापकरास्तेषु । कथंभूतेषु सौधविवरेषु । वितप्यमानानि यानि मूषाशुषिराणि सुवर्णउत्कालनभाजनमध्यानि तानि तेष्विव । पुनश्च कासु सतीषु । प्रलयकालपावकपातभीतास्विव पातालमूलनिलीयमानतनुलतासु लेलिहानवनितासु । लेलिहानवनितासु (कुण्डलिनी)कुण्डलिनीषु कथंभूतासु । पातालमूलनिलीयमानतनुलतासु पातालमूलेषु रसातलाधोभागेषु निलीयमाना निवेशमाना प्रवेशं कुर्वाणास्तनुलता शरीरवल्ल्यो यासां तास्तथा तासु । अपरं कथंभूतासु लेलिहानवनितासु । प्रलयकालपावकपातभीतास्विव प्रलयकालः क्षयकालस्तस्य संबन्धी पावको वज्राग्निस्तस्य पातात् वर्षणात् भीता भयं प्राप्तास्तास्तथा तासु तथा । अपरं केषु सत्सु । समाचरितपञ्चाग्निसाधनमानसानामिव

मानसानामिव महीधरतापसानां प्रवृद्धमूर्धनिर्ध्यामधूमध्यामलेषु गगनतलेषु, द्रुतदुर्वर्णरसरेखारुचिभिरिव मरुमरीचिवीचिभिर्वञ्च्यमानमनोव्याकुलेषु कमलकुलेषु, घोरघृणिघनघर्माङ्गारासारभृष्टभूगोलस्पर्शप्रकुपितेनोर्ध्वचलितदृशा दन्दशूकेश्वरेणापाङ्गनिष्ठ्यूतैः कोपकृशानुभिरिव क्वथ्यमानासु जलदेवतानामावसथसरसीषु, निजनिवासकाननदवोद्रिक्तपित्तास्विव दुःसहविदाहदेहसंदोहासु वनदेवीषु, विदूरितवसन्तसमागमास्विव विरहिणी-

---

महीधरतापसानां प्रवृद्धमूर्धनिर्ध्यामधूमध्यामलेषु गगनतलेषु। गगनतलेष्वाकाशमण्डलेषु कथंभूतेषु सत्सु। महीधराः पर्वतास्त एव तापसा जडस्वभावत्वात् तेषां महीधरतापसानां प्रवृद्धो वृद्धिं गतो मूर्धसु मस्तकेषु योऽसौ निर्ध्यामधूमो वाष्पधूमस्तेन ध्यामलानि मलिनानि प्रवृद्धमूर्धनिर्ध्यामधूमध्यामलानि तेषु। कथंभूतानां महीधरतापसानाम्। उत्प्रेक्षते—समाचरितपञ्चाग्निसाधनमानसानामिव समाचरितं पञ्चाग्निसाधने मानसं चित्तं यैस्ते तथा तेषाम्। अपरं कथंभूतेषु सत्सु। द्रुतदुर्वर्णरसरेखारुचिभिरिव मरुमरीचिवीचिभिर्वञ्च्यमानमनोव्याकुलेषु कमलकुलेषु। कमलकुलेषु मृगयूथेषु। कथंभूतेषु सत्सु। मरुमरीचिवीचिभिः मृगतृष्णालहरीभिर्वञ्च्यमानानि यानि मनांसि चित्तानि तैर्व्याकुलानि किंकर्तव्यतामूढानि मरुमरीचिवीचिभिर्वञ्च्यमानमनोव्याकुलानि तेषु। कथंभूताभिर्मरुमरीचिवीचिभिः द्रुतमुत्कालितं यत् दुर्वर्णं रूप्यं तस्य रसं तस्य रेखावत् रुचिः शोभा यासां तास्तथा ताभिर्यथा। कथंभूतासु सतीषु। घोरघृणिघनघर्माङ्गारासारभ्रष्टभूगोलस्पर्शप्रकुपितेनोर्ध्वचलितदृशा दन्दशूकेश्वरेणापाङ्गनिष्ठ्यूतैः कोपकृशानुभिरिव क्वथ्यमानासु जलदेवतानामावसथसरसीषु। जलदेवतानां जलदेवीनां आवसथसरसीषु गृहसरोवरेषु। कथंभूतासु। दन्दशूकेश्वरेण नागराजेन अपाङ्गनिष्ठ्यूतैः कटाक्षोद्वान्तैः कोपकृशानुभिः क्रोधाग्निभिः क्वथ्यमानास्विव तप्यमानास्विव। कथंभूतेन दन्दशूकेश्वरेण। घोरघृणेः श्रीभास्करस्य घनस्तीव्रतरो योऽसौ घर्म आतपः स एव अङ्गारासारः अङ्गारवर्षणं तेन भृष्टः संतापितो योऽसौ भूगोलो भूमिपिण्डस्तस्य स्पर्शात् फणाग्रप्रज्वालानलत्वात् प्रकर्षेण कुपितस्तेन तथोक्तेन। अपरं कथंभूतेन दन्दशूकेश्वरेण। ऊर्ध्वचलितदृशा ऊर्ध्वमुपरिभागे चलिताः संचलिता दृशो द्विसहस्रलोचनानि यस्य स(तेन) ऊर्ध्वचलितदृशा। अपरं कासु सतीषु। निजनिवासकाननदवोद्रिक्तपित्तास्विव दुःसहविदाहदेहसंदोहासु वनदेवीषु। वनदेवीषु कथंभूतासु। दुःसहविदाहाः असहनीयसंतापाः देहसंदोहानां शरीरसमूहानां यासां तास्तथा तासु। [अपरं] कथंभूतासु। निजनिवासकाननदवेन आत्मीयगृहवनदावानलेन उद्रिक्तं अधिकम्पितं पित्तमायुर्यासां तास्तथा तासु। इव यथार्थे। अपरं कासु सतीषु। विदूरितवसन्तसमागमास्विव विरहिणीकपोलमर्मरच्छदासु लतावनपङ्क्तिषु। लतावनपङ्क्तिषु वल्लीवनश्रेणिषु कथंभूतासु। विरहिणीकपोलमर्मरच्छदासु विरहि-

कपोलमर्मरच्छदासु लतावनपङ्क्तिषु, कृतकृष्णवर्त्मकर्मस्विव पत्रपाण्डुषु पादपेषु, स्वकीयकोशकोटरप्रसूतानां कलहंसकुटुम्बिनीनां चिन्ताज्वरकरेषु क्षयामयमन्देष्विव परिम्लायत्सु दैर्घिकेयकान्तारेषु, करेणुकरोत्तम्भितकमलिनीदलातपत्रोपचर्यमाणवारणेषु वनसरःसु, दृढदंष्ट्रोत्पाटितपुटकिनीदरकुहरविहरद्वराहासु कासारवसुंधरासु, कठोराष्ठीलपृष्ठकमठनिर्लोठलुठत्पाठीन-

---

णीनां पतिवियुक्तानां स्त्रीणां कपोलवत् गण्डस्थलवत् मर्मराः शुष्काश्छदाः पत्राणि यासां तास्तथा तासु। पुनरपि कथंभूतासु। विदूरितो विप्रकृष्टं गतो वसन्तसमागमो वसन्तर्तुसमागम आगमनं यासां तास्तथा तासु। इव यथार्थे। अपरं कथंभूतेषु सत्सु। कृतकृष्णवर्त्मकर्मस्विव पत्रपाण्डुषु पादपेषु। पादपेषु वृक्षेषु कथंभूतेषु। पत्रपाण्डुषु पत्रेषु पाण्डवः शुक्लास्ते तथा तेषु। पुनः कथंभूतेषु। कृतं विहितं कृष्णवर्त्मकर्म अग्निप्रवेशो यैस्ते तथा तेषु। इव यथार्थे। अग्निप्रवेशं कृत्वा निर्गतेष्वित्यर्थः। अपरं केषु सत्सु। स्वकीयकोशकोटरप्रसूतानां कलहंसकुटुम्बिनीनां चिन्ताज्वरकरेषु क्षयामयमन्देष्विव परिम्लायत्सु दैर्घिकेयकान्तारेषु। दैर्घिकेयकान्तारेषु कमलवनेषु किं कुर्वत्सु सत्सु। परिम्लायत्सु परि समन्तात् म्लायत्सु शुष्यत्सु सत्सु। अपरं कथंभूतेषु। उत्प्रेक्षते—क्षयामयमन्देष्विव क्षयामयेन राजरोगेण मन्देष्विव रोगेष्विव। अपरं कथंभूतेषु। कलहंसकुटुम्बिनीनां राजहंसीनां चिन्ताज्वरकरेषु चिन्ताज्वरविधायिषु। कथंभूतानां कलहंसकुटुम्बिनीनाम्। स्वकीयकोशकोटरप्रसूतानाम् स्वकीयेषु कोशकोटरेषु कमलमध्यकोटरेषु प्रसूतानां जातापत्यानाम्। अपरं केषु सत्सु। करेणुकरोत्तम्भितकमलिनीदलातपत्रोपचर्यमाणवारणेषु वनसरःसु। वनसरःसु उद्यानसरोवरेषु अटवीतडागेषु। कथंभूतेषु सत्सु। करेणुभिर्हस्तिनीभिः करैः शुण्डादण्डैरुत्तम्भितानि उच्चलितानि यानि कमलिनीदलातपत्राणि पद्मिनीपत्रच्छत्राणि तैरुपचर्यमाणाश्छायां प्राप्यमाणाः वारणा हस्तिनो येषु तानि तथा तेषु। अपरं कासु सतीषु। दृढदंष्ट्रोत्पाटितपुटकिनीदरकुहरविहरद्वराहासु कासारवसुंधरासु। कासारवसुंधरासु सरोभूमिषु। कथंभूतासु सतीषु। दृढदंष्ट्राभिर्बलवतीभिर्दाढाभिरुत्पाटिता उन्मूलिता याः पुटकिन्यः कमलिन्यस्तासां दरकुहरेषु छिद्रविवरेषु विहरन्तः पर्यटन्तो विलोकन्तो वराहा अरण्यशूकरा यासु तास्तथा तासु। अपरं केषु सत्सु। कठोराष्ठीलपृष्ठकमठनिर्लोठलुठत्पाठीनक्षोभकलुषवारिषु विरेयेषु। विरेयेषु ह्रदयेषु (ह्रदेषु) कथंभूतेषु सत्सु। कठोरं वज्रप्रायं अष्ठीलं गर्भो मध्यप्रदेशो यस्य पृष्ठस्य तेनोपलक्षिता ये कमठाः कूर्मराजास्तेषां निर्लोठनेन प्रेरणेन लुठन्तो यत्र तत्र पच(त)न्तो ये पाठीनाः सहस्रदंष्ट्रिणो मत्स्यास्तेषां क्षोभेण संचलनेन कलुषाणि अनच्छानि वारीणि जलानि येषां विरेयाणां ते

क्षोभकलुषवारिषु विरेयेषु[1], महानोकहगहनावगाहदोहदेषु नखायुधेषु, जरति सौरभेयेषु दर्पे, खर्वति गर्वरेषु गर्वे, गलन्तीषु पुष्पंधयेषु धृतिषु, नाडिंधमेषु नगौकसां गलनालेषु, कथाशेषासु योषितां कामकेलिषु, ज्वलदार्द्रदारुदारुणासु दीर्घाहनिदाघनिर्गलज्जलासु जन्मिनां शरीरयष्टिषु, मरुस्थलेष्विव देवखातेषु, प्रधावधरणिष्विव स्रोतस्विनीषु, धान्वनधरारन्ध्रेष्विव प्रधिषु, चुलुकोच्चुलुम्पनोचितेष्विव जलधिषु, संहारसमयदिवसेष्विव प्रशान्तजन्तुसंचारेषु वर्त्मसु च,

---

तथा तेषु । पुनश्च केषु सत्सु । महानोकहगहनावगाहदोहदेषु नखायुधेषु । नखायुधेषु सिंहव्याघ्रादिजीवेषु । कथंभूतेषु । महान्तो गुरवो अनोकहा वृक्षास्तेषां गहनानि वनानि तेषामवगाहे प्रवेशे दोहदानि मनोरथानि येषां ते तथा तेषु । अपरं कस्मिन् सति । जरति सौरभेयेषु दर्पे । सौरभेयेषु वृषभेषु दर्पे मदे जरति शतखण्डीभवति सति । अपरं कस्मिन् सति किं भवति सति । खर्वति गर्वरेषु गर्वे । गर्वरेषु महिषेषु गर्वे मदे खर्वति ह्रस्वीभवति सति । अपरं कस्मिन्सति किं भवति सति । गलन्तीषु पुष्पंधयेषु धृतिषु । पुष्पंधयेषु भ्रमरेषु धृतिषु संतोषेषु गलन्तीषु नश्यन्तीषु सतीषु । अपरं । नाडिंधमेषु नगौकसां गलनालेषु । नगौकसां पक्षिणां गलनालेषु नाडिंधमेषु उच्छ्वासान् कुर्वत्सु सत्सु । अपरं । कथाशेषासु योषितां कामकेलिषु । योषितां कमनीयकामिनीनां कामकेलिषु रतिक्रीडासु कथाशेषासु निवृत्तव्यापारासु । पुनः कथंभूतासु । ज्वलदार्द्रदारुदारुणासु दीर्घाहनिदाघनिर्गलज्जलासु जन्मिनां शरीरयष्टिषु।जन्मिनां प्राणिनां शरीरयष्टिषु कायकाष्ठीषु । कथंभूतासु । दीर्घाहनिदाघनिर्गलज्जलासु दीर्घाणि आयतानि अहानि दिवसानि यस्येति दीर्घाहः । 'राजन् अहन् सखि' इति अप्रत्ययान्तो निपातः । दीर्घाहश्चासौ निदाघश्च उष्णकालस्तेन निर्गलन्ति निश्च्योतन्ति । जलानि यासां याभ्यो वा । कथंभूतासु शरीरयष्टिषु । ज्वलदार्द्रदारुदारुणासु ज्वलन्ति आर्द्राणि सरसानि सजलानि यानि दारूणि काष्ठानि तद्वत् दारुणा अशक्यस्पर्शास्तास्तथा तासु । मरुस्थलेष्विव देवखातेषु । देवखातेषु अगाधसरोवरेषु कथंभूतेषु । [मरु]स्थलेषु इव वनभूमिष्विव । शुष्केष्वित्यर्थः । प्रधावधरणिष्विव स्रोतस्विनीषु । स्रोतस्विनीषु नदीषु कथंभूतासु । प्रधावधरणिष्विव वाह्यालीप्रदेशेष्विव । यत्र गजाश्वाः शीघ्रगतिं कार्यन्ते सा प्रधावधरणिरुच्यते । धान्वनधरारन्ध्रेष्विव प्रधिषु । प्रधिषु कूपेषु कथंभूतेषु । धान्वनधरारन्ध्रेष्विव धन्वन इयं धान्वनी सा चासौ धरा धान्वनधरा तस्या रन्ध्राणि तेषु धान्वनधरारन्ध्रेषु मरुस्थलभूमिच्छिद्रेष्विव । उदकरहितेष्विति भावः । चुलुकोच्चुलुम्पनोचितेष्विव जलधिषु । जलधिषु समुद्रेषु कथंभूतेषु । चुलुकोच्चुलुम्पनोचितेष्विव

---

१. 'विरेफो नदमात्रे' इति शब्दार्थचिन्तामणिः.

येषु च—

'मार्तण्डश्चण्डतापस्तपति मरुभुवामग्निसात्त्वं दधानः
कामं व्योमान्तराणि स्थगयति किमपि द्योति धावत्पुरस्तात्।
ऊर्ध्वं निर्ध्यामवीचीचयमिव विसृजत्येतदाशान्तरालं
मग्नाङ्गान्निम्नगानां पयसि च करिणः क्राथयन्वाति वातः ॥ ६० ॥

---

चुलुकैः करपुटैरुच्चुलुम्पनं उच्छुण्टनं तस्मिन् उचितेषु योग्येषु । अल्पजलेष्वित्यर्थः । संहारसमयदिवसेष्विव प्रशान्तजन्तुसंचारेषु वर्त्मसु । वर्त्मसु मार्गेषु । कथंभूतेषु । प्रशान्तजन्तुसंचारेषु प्रशान्तो निवृत्तो जन्तूनां प्राणिनां संचारः प्रवेशो येषु तानि प्रशान्तजन्तुसंचाराणि तेषु । पुनः कथंभूतेषु । संहारसमयदिवसेष्विव प्रलयकालावसरदिनेष्विव । संहारसमये प्राणिनां संचारो न भवति ॥

येषु च तपतपनकेतुषु विलासिभिः कामुकैः पुरुषैः भूरुहवनभूमयो वृक्षवनधरणयः समध्यास्यन्ते सम्यगाश्रीयन्ते । कथंभूता भूरुहवनभूमयः । विलासिनीनां मनोहरस्त्रीणां चिकुरलोचनावलोकनामृतहरिणमनोहराः । चिकुराणि कुटिलानि यानि लोचनानि नेत्राणि तेषां अवलोकनं निरीक्षणं तदेवामृतं सुधा । शरीरसंतापनिवारकत्वात् । तस्य हरिणवत् सारिणीवत् नीकवत् कृत्रिमनदीवत् मनोहराश्चित्तानुरञ्जिकाः । अपरं कथंभूता भूरुहवनभूमयः । कुचचूचुकप्रभाशष्पश्यामलितपर्यन्तवृत्तयः । कुचचूचुकानां स्तनाग्राणाम् । 'चूचुकं तु स्तनाग्रं स्यात्' इति वचनात् । तेषां प्रभास्तेजांसि ता एव शष्पाणि कोमलतृणानि तैः श्यामलिताः श्यामवर्णीकृताः पर्यन्तवृत्तयोऽभि समन्तात् प्रदेशा यासां तास्तथा । कथंभूतैः विलासिभिः । इति अमुना प्रकारेण । मागधबुधप्रतिबोधितमध्याह्नसंध्यैः । मागधबुधैर्नटाचार्यपण्डितैः प्रतिबोधिता मध्याह्नसंध्या येषां विलासिनां ते तथा तैः । अपरं कथंभूतैर्विलासिभिः । सुकृतावन्ध्यैः। सुकृतेन पूर्वभवपुण्येन अवन्ध्यैः सफलैः । इतीति किम् । **मार्तण्ड इत्यादि** पञ्च वृत्तानि व्याख्येयानि । तथाहि—मार्तण्डश्चण्डतापस्तपति मरुभुवामग्निसात्त्वं दधानः । मार्तण्डः श्रीसूर्यः तपति तापं करोति । कथंभूतो मार्तण्डः । चण्डतापः अतितीव्रघर्मः । मार्तण्डः किं कुर्वाणः । मरुभुवां धन्वभूमीनां अग्निसात्त्वं अग्निमयत्वं दधानः कुर्वाणः । कामं व्योमान्तराणि स्थगयति किमपि द्योति धावत्पुरस्तात् । काममतिशयेन किमपि अनिर्वचनीयं द्योति वस्तु सतेजस्कन्धवस्तु कर्तृभूतं व्योमान्तराणि गगनमण्डलानि स्थगयति झम्पति । किं कुर्वद् द्योतिवस्तु । पुरस्तात् अग्रतो धावत् शीघ्रगतिं कुर्वत् । ऊर्ध्वं निर्ध्यामवीचीचयमिव विसृजत्येतदाशान्तरालम् । एतत्प्रत्यक्षीभूतं आशान्तरालं दिङ्मण्डलं कर्तृभूतं ऊर्ध्वमाकाशोपरि निर्ध्यामवीचीचयं बाष्पलहरीसमूहं विसृजतीव प्रेषयतीव । मग्नाङ्गान्निम्नगानां पयसि च करिणः क्राथयन्वाति वातः । वातः वायुः वाति प्रवर्तते । किं कु-

मध्याह्नेऽह्नाय वाहाश्चटुलतरखुरास्तोयमार्गं त्यजन्ति
स्थानायानेतुमीशाः पयसि कृतरतीन्हस्तिनो नैव मिण्ठाः ।
शोषोत्तुण्डः शिखण्डी विमृशति शिशिरान्कन्दरद्रोणिदेशा-
न्स्वेच्छं कच्छेषु चेमाः कमलदलतलं वारलाः संश्रयन्ति ॥ ६१ ॥

आसीनप्रचलायितैः करिपतिः क्षोणीध्ररन्ध्रद्रुम-
स्कन्धालम्बितकन्धरः किमपि च ध्यायन्मुहुस्तिष्ठति ।
निद्रामुद्रितलोचनो हरिरपि ग्रीष्मेषु माध्यंदिनी-
मद्रिद्रोणिदरादरार्पितवपुर्वेलामतिक्रामति ॥ ६२ ॥

---

वैन् । निम्नगानां पयसि नदीनां जलमध्ये मग्नाङ्गान् त्रुडितकायान् करिणो गजान् क्राथयन् क्वथयन् । अष्टावशेषजलवदुत्कालयन्नित्यर्थः ॥ समुच्चयालंकारः ॥

मध्याह्नेत्यादि । मध्याह्ने दिवसस्य मध्यवेलायां वाहा अश्वाः अह्नाय वेगेन तोयमार्गं जलमार्गं त्यजन्ति मुञ्चन्ति । कथंभूता वाहाः । चटुलतरखुराः चटुलतरा अत्युत्तालाः खुराः शफा येषां ते तथोक्ताः । मिण्ठाः पोताराः पयसि जलमध्ये कृतरतीन् विहितरागान् हस्तिनो गजान् स्थानाय हस्तिनीशालायै आनेतुं प्रापयितुं नैव ईशाः समर्था भवन्ति । शिखण्डी मयूरः शिशिरान् शीतलान् कन्दरद्रोणिदेशान् कन्दरस्य गुहायाः द्रोणिदेशाः पर्वतसंधिप्रदेशास्तान् विमृशति विचारयति । अन्वेषत इत्यर्थः । कथंभूतः शिखण्डी । शोषोत्तुण्डः शोषेण शरीरपरितापेन उत्तुण्डः ऊर्ध्वमुखः । वारलाः हंसवधूटिका इमाः प्रत्यक्षीभूताः कमलदलतलं पुटकिनीपत्राधोभागं संश्रयन्ति आश्रयन्ति । केषु । कच्छेषु नद्येकदेशेषु । कथमाश्रयन्ति । स्वेच्छं यथेष्टम् । निजेच्छानुसारेणेत्यर्थः ॥ अयमपि समुच्चयः ॥

आसीनप्रचलायितैरित्यादि । करिपतिः आसीनप्रचलायितैः कृत्वा आसीन एव उद्विग्नोऽपि सन् प्रचलायितैर्घूर्णितैः कृत्वा किमपि अनिर्वचनीयं मुहुर्ध्यायन् पुनः पुनश्चिन्तयन् तिष्ठति । कथंभूतः सन् तिष्ठतीत्याह—क्षोणीध्ररन्ध्रद्रुमस्कन्धालम्बित-कन्धरः । क्षोणीध्रस्य पर्वतस्य रन्ध्रे विवरे योऽसौ द्रुमो वृक्षस्तस्य स्कन्धः प्रकाण्डः शाखावधि काष्ठं तत्र आलम्बिता आरोपिता कन्धरा ग्रीवा येन स तथोक्तः । हरिरपि पञ्चाननोऽपि । अपिशब्दात् व्याघ्रादिकोऽपि । निद्रामुद्रितलोचनः निद्रया मुद्रिते झम्पिते लोचने यस्य स तथा सन् । ग्रीष्मेषु घर्मेषु माध्यंदिनीं मध्याह्नसंबन्धिनीं वेलां कालम् अतिक्रामति । कथंभूतो हरिः । अद्रेः पर्वतस्य द्रोणिः संधिप्रदेशस्तत्र दरं ईषत् यथा भवत्येवं आदरेण तत्परतया अर्पितं आरोपितं वपुः शरीरं येन सः ॥ अयमपि समुच्चयालंकारः ॥

किं च ।

गण्डस्थलीषु सलिलं न जलाशयाना-
मम्भःस्रुतिः कुचनगेषु न वाहिनीनाम् ।
नाभीदरेषु वनितासु जलं न वार्धौ
नीवीलतोल्लसति शुष्यति यत्र लोकः ॥ ६३ ॥
सुदुर्लभरसोऽप्येष सरसाधरपल्लवः ।
तत्करोति च तद्द्वेष्टि चित्रं घर्मसमागमः ॥ ६४ ॥

इति मागधवुधप्रतिबोधितमध्याह्नसंध्यैः सुकृतावन्ध्यैर्विलासिभिर्विलासिनीनां चिकुरलोचनावलोकनामृतहरिणमनोहराः कुचचूचुकप्रभाशष्पश्यामलितपर्यन्तवृत्तयः समध्यास्यन्ते भूरुहवनभूमयः, तेषु तपतपनकेतुषु विकर्तनकरमूलविलग्नशिखशिखरिशिरःश्रितस्य प्रलम्बितभुजलतायुगलस्य खरमयूखखेदिखेदितमुखमण्डलस्य मनोगोचरातिचारितपश्चर्याश्चर्यितखचरलोकस्य परिपूर्णसमाधिचन्द्रोदयविजृम्भितेन परमानन्दस्यन्दसुधापयोधिना पुनरनन्तरमन्तरपर्याप्तावकाशेनेव घनघर्मजलच्छलेन बहिरुद्वहता परिप्लावितापघनस्य यन्त्रधारागृहमुपागतस्येव यान्ति मध्याह्नसमयाः ॥

येन च पयोधरोन्नतिजनितजगद्वलयनीलनिचलेषु, निचलसनाथनृप-

---

किं च विशेषं वर्णयति—**गण्डस्थलीष्वित्यादि** । गण्डस्थलीषु कपोलमरुधूल्युच्चयेषु सलिलं जलं वर्तते, न जलाशयानां तडागानां जलमस्ति । अम्भःस्रुतिर्जलस्रवणं कुचनगेषु स्तनपर्वतेषु वर्तते, न वाहिनीनां नदीनामम्भःस्रुतिरस्ति । वनितासु कमनीयकामिनीषु नाभीदरेषु तुन्दिकाछिद्रेषु जलं वर्तते, न वार्धौ समुद्रे जलमस्ति । नीवीलता वनितानामित्येव स्त्रीकव्यप्रवस्त्रवन्धनवल्ली उल्लसति श्वासोच्छ्वासं करोति । वर्धते इत्यर्थः । यत्र येषु तपतपनकेतुषु लोकः शुष्यति आवानो भवति ॥ अतिशयालंकारः ॥

**सुदुर्लभरस इत्यादि** । घर्मसमागम उष्णकालागमः तद्वस्तु करोतीति तच्च कार्यं द्वेष्टि न करोति चित्रं आश्चर्यमेतत् । कथंभूतो घर्मसमागमः । सुदुर्लभरसोऽपि सन् सरसाधरपल्लवः सजलौष्ठप्रवालः ॥ अयमप्यतिशयः ॥

**येनेत्यादि** । येन च श्रीसुदत्ताचार्येण तत्र तेषु वारिवाहवासरेषु वारिवाहस्य मेघस्य वासरा दिवसा वाहवासरास्तेषु मेघदिवसेषु तरुमूलनिवासिना सता शर्वर्यो रा-

तिचापसंपादिषु, संपादितखरदण्डखण्डाडम्बरखण्डनेषु, खण्डितविलासिनीमनोरथपरिपन्थिषु, परिपन्थिपरिषदुत्साहद्रुहेषु, द्रुहिणवाहनस्थितिप्रभेदिषु, प्रभिन्नगजगर्जनोर्जितपर्जन्याविच्छिन्नस्वनदुःसहेषु, दुःसहविरहशि-

---

त्रयो नीयन्ते निर्गमयन्ते। इति क्रियाकारकसंबन्धः। अत्र वासरशब्दः 'क्लीबे दिवसवासरौ' इति वचनात् यद्यपि नपुंसकलिङ्गे वर्तते, तथाप्यत्र पुंलिङ्गे विवक्षित इति ज्ञातव्यम्। वासरशब्दस्य विशेषणानि पुंलिङ्गे सूचितत्वात्। येन कथंभूतेन। निरन्तरयोगोपयोगनिमग्नमनस्कारेण। निरन्तरमविच्छिन्नं योगोपयोगे ध्यानचिन्तायां निमग्नो त्रुडितो मनस्कारश्चित्ताभोगो यस्य स तथा तेन। अपरं कथंभूतेन येन। विहितवनदेवतारक्षाधिकारेणेव। विहित आचरितो वनदेवतानां कान्तारदेवतानां रक्षायाः प्रतिपालनस्य अधिकारो नियोगो यस्य स तथा तेन। इव यथार्थे। कथंभूताः शर्वर्यः। निखिलस्य समस्तस्य जगतः पृथ्वीमण्डलस्य तमस्काण्डखण्डितनिजशरीरदर्शनवृत्तयः तमस्काण्डेन अन्धकारसमूहेन खण्डिता विलोपिता निजशरीरस्य आत्मकायस्य दर्शनवृत्तिरवलोकनवृत्तिर्याभिः शर्वरीभिस्तास्तथोक्ताः। अपरं कथंभूताः शर्वर्यः। अभिसारिकाजनमनोऽपत्यपोषणगर्वर्यः अभिसारिकाजनानां कान्तार्थिनीसंकेतकाः कामुकस्त्रीसमूहानां मनांस्येव अपत्यानि बालकाः अज्ञानमनस्कत्वात् तेषां पोषणे प्रतिपालने समर्थीकरणे गर्वर्यः महिषीसमानाः। कथंभूतेषु वारिवाहवासरेषु। पयोधरोन्नतिजनितजगद्वलयनीलनिचलेषु। पयोधराणां मेघानां उन्नत्या आडम्बरेण जनित उत्पादितो जगद्वलयस्य पृथ्वीमण्डलस्य नीलनिचलः कृष्णवर्णनिचोलकः कञ्चुको यैस्ते तथा तेषु। पुनः कथंभूतेषु वारिवाहवासरेषु। निचलसनाथनृपतिचापसंपादिषु। निचलसनाथानि प्रावरणवस्त्रसहितानि नृपतीनां नरेन्द्राणां चापानि धनूंषि संपादयन्तीत्येवंशीलास्तथा तेषु। पुनः कथंभूतेषु। संपादितखरदण्डखण्डाडम्बरखण्डनेषु। संपादितमुत्पादितं संजनितं खरदण्डखण्डानां कमलवनानां आडम्बरस्य शोभाया आटोपस्य वा खण्डनं विध्वंसनं यैस्ते तथा तेषु। पुनः कथंभूतेषु। खण्डितविलासिनीमनोरथपरिपन्थिषु। खण्डितानां पत्या मानभङ्गं प्रापितानां विलासिनीनां स्त्रीणां मनोरथानां दोहदानां परिपन्थिनः शत्रवस्ते तथा तेषु। उक्तं च—'निद्राकषायमुकुलीकृतताम्रनेत्रो नारीनखव्रणविचूर्णितसर्वगात्रः। यस्याः कुतोऽपि गृहमेति पतिः प्रभाते सा खण्डितेति कथिता कविभिः पुराणैः॥' अपरं कथंभूतेषु। परिपन्थिपरिषदुत्साहद्रुहेषु। परिपन्थिनां शत्रूणां परिषत् समूहस्तस्य उत्साहमुद्यमं द्रुह्यन्ति विनाशयन्तीति ते तथा तेषु। पुनः कथंभूतेषु। द्रुहिन(द्रुहिण)वाहनस्थितिप्रभेदिषु। द्रुहिन(द्रुहिण)वाहनानां हंसानां स्थितिं मानससरोवरनिवासं प्रभिदन्ति विघटयन्तीत्येवंशीलास्ते तथा तेषु। पुनः कथंभूतेषु। प्रभिन्नगजगर्जनोर्जितपर्जन्याविच्छिन्नस्वनदुःसहेषु प्रभिन्ना मदं प्राप्ताः। 'प्रभिन्नो गर्जितो

खिसंधुक्षणविधायिसु, विहितनिकामकरकासारशार्दूलबलवित्रासनेषु, विशंसनावसरसरत्समीरसूत्कारचण्डेषु, चण्डकरकरालिमविलोपिषु, विलुप्तहिमधामदीधितिप्रसरेषु, प्रसरत्पूरपयःपादपनिर्मूलिषु, निर्मूलितजटतटरुहानोकहस्खलितकूलंकषवाहिनीप्रवाहेषु, प्रवाहपतद्धारावारिगिरिशिखरशीर्णताप्रसाधिषु, प्रसाधितान्धकारश्यामलाखिलदिगन्तेषु, दिगन्तरधरदरोद्गीर्णजल-

---

मेत्तः' इति वचनात् । ते च ते गजाः करिणस्तेषां गर्जनेन शब्देन ऊर्जिता अप्रतिहतव्यापाराः । [द्विगुणीभूतगर्जना इत्यर्थः ।] ते च ते पर्जन्या वारिवाहास्तेषामविच्छिन्नैः निरन्तरैः स्वनैः शब्दैः दुःसहा दुःखेन महता कष्टेन सोढुमशक्या ये वासरास्ते तथा तेषु । पुनः कथंभूतेषु । दुःसहविरहशिखिसंधुक्षणविधायिसु । दुःखेन महता कष्टेन सोढुमशक्यो योऽसौ विरहो विप्रलम्भः स एव शिखी सप्तजिह्वो दाहसंतापकारकत्वात् तस्य संधुक्षणमुद्दीपनं विदधति कुर्वन्तीत्येवंशीला ये च ते तथा तेषु । पुनः कथंभूतेषु । विहितनिकामकरकासारशार्दूलबलवित्रासनेषु । विहितं कृतं निकाममतिशयेन करकासारेण करकवृष्ट्या शार्दूलानां व्याघ्राणामष्टपदानां वा बलस्य पराक्रमस्य वित्रासनं निरासनं यैस्ते तथा तेषु । पुनः कथंभूतेषु । विशंसनावसरसरत्समीरसूत्कारचण्डेषु । विशंसनावसरे प्रलयकाले सरन् प्रवर्तमानो योऽसौ समीरो वायुस्तस्य सूत्कारेण शब्दविशेषेण चण्डा बलवत्तरास्ते तथा तेषु । पुनः कथंभूतेषु । चण्डकरकरालिमविलोपिषु । चण्डकरस्य श्रीसूर्यस्य योऽसौ करालिमा रौद्रत्वं तीव्रतापत्वं तं विलुम्पन्ति विच्छेदं कुर्वन्तीत्येवंशीलास्ते तथा तेषु । पुनः कथंभूतेषु । विलुप्तहिमधामदीधितिप्रसरेषु । विलुप्तोऽदर्शनं प्रापितो विध्वंसितो हिमधाम्नः चन्द्रस्य दीधितीनां प्रसरः प्रवर्तनं यैस्ते तथा तेषु । पुनः कथंभूतेषु । प्रसरत्पूरपयःपादपनिर्मूलिषु । प्रसरन् प्रवर्तमानो योऽसौ पूरो नदीप्रवाहस्तस्य पयसा जलेन पादपान् वृक्षान् निर्मूलयन्ति समूलकाषं कषन्त उत्पाटयन्त्यधः पातयन्ति इत्येवंशीलास्ते तथा तेषु । पुनः कथंभूतेषु । निर्मूलितजटतटरुहानोकहस्खलितकूलंकषवाहिनीप्रवाहेषु । निर्मूलिता निर्मूलकाषं कषिता जटा मूलानि येषां ते निर्मूलितजटास्ते च ते तटरुहा अनोकहास्तटोत्पन्नवृक्षास्तैः स्खलिता अवष्टम्भिताः कूलंकषवाहिनीनां निजतटाधःपातिका[नां] नदीनां प्रवाहा जलपूरा येषु ते तथा तेषु । पुनः कथंभूतेषु । प्रवाहपतद्धारावारिगिरिशिखरशीर्णताप्रसाधिषु प्रवाहेण अविच्छिन्नतया पतन्ति या धारास्तासां वारिभिर्जलैः गिरिशिखराणां पर्वतमस्तकानां शीर्णतां शतखण्डत्वं प्रसाधयन्ति कुर्वन्तीत्येवंशीलास्ते तथा तेषु । पुनः कथंभूतेषु । प्रसाधितान्धकारश्यामलाखिलदिगन्तेषु । प्रसाधितं कृतं यदन्धकारं तिमिरं तेन श्यामलाः मलिनाः अखिलदिगन्ताः सर्वदिङ्मण्डलानि येषु ते

---

१. 'मदः' इति सटीकपुस्तकस्थः पाठः.

प्लावितदन्तिपोतेषु, पोतसंभावनाकुलकुरङ्गीजीविताशाविनाशपिशुनतडिद्दण्डसंघट्टेषु, संघट्टमुखरवारिवाहवपुर्मण्डनाखण्डलकोदण्डविलोकनाध्वन्यत्वरासज्जिषु, सज्जिताजकावकामकर्कशदशेषु, दिवमवनिमाशाः पातालानि च जलसाज्जनयत्सु,

यत्र च—

मेघोद्गीर्णपतत्कठोरकरकासारत्रसत्सिन्धुरे

पूरप्लावितकूलपादपकुलक्षुभ्यत्सरित्पाथसि ।

---

तथा तेषु । पुनः कथंभूतेषु । दिगन्तरधरदरोद्गीर्णजलप्लावितदन्तिपोतेषु । दिगन्तरेषु दिङ्मण्डलेषु ये धराः पर्वतास्तेषां दराः कन्दरास्तैरुद्गीर्णानि उद्वान्तानि यानि जलानि उदकानि तैः [तेषु] प्लाविता निमज्जिता दन्तिनां हस्तिनां पोताः शिशवश्चिक्षा येषु ते तथा तेषु । पुनः कथंभूतेषु । पोतसंभावनाकुलकुरङ्गीजीविताशाविनाशपिशुनतडिद्दण्डसंघट्टेषु । पोतानां मृगशिशूनां संभावना धारणं रक्षणं तत्र आकुला विह्वलीभूता याः कुरङ्ग्यो मृग्यस्तासां जीवितस्य प्राणधारणस्य आशा इच्छा तस्याः विनाशेऽपलापे पिशुनानि यानि तडिद्दण्डानि विद्युतां यष्ट्यस्तेषां संघट्टो भटभटेको येषु वारिवाहवासरेषु ते तथा तेषु । पुनः कथंभूतेषु । संघट्टमुखरवारिवाहवपुर्मण्डनाखण्डलकोदण्डविलोकनाध्वन्यत्वरासज्जिषु । संघट्टेन परस्परनिष्ठुरप्रहारेण मुखरा वाचाला ये वारिवाहा मेघास्तेषां वपुर्मण्डनं कायशृङ्गारः यदाखण्डलकोदण्डं इन्द्रधनुस्तस्य विलोकने अध्वन्यानां पथिकानां त्वरां वेगवत्त्वं सज्जयन्ति कारयन्तीत्येवंशीलास्ते तथा तेषु । पुनः कथंभूतेषु । सज्जिताजकावकामकर्कशदशेषु । सज्जितं प्रत्यञ्चं यत् आजकावं धनुस्तेन कामस्य कन्दर्पस्य कर्कशा उत्कटा दशा अवस्था येषु वारिवाहवासरेषु । किं कुर्वत्सु । दिवं आकाशं अवनिं भूमिं आशा अष्टौ दिशः पातालानि च धरामूलानि जलसात् जलमयानि संपन्नजलानि वा जनयत्सु कुर्वत्सु ॥

यत्र चेत्यादि । यत्र च वारिवाहकाले डिम्भवती कुरङ्गी बालवती शिशुमती मृगी कं देशं कमपि प्रदेशं आश्रयतु आश्रयं करोतु । कोऽपि प्रदेशो जलरहितो नास्ति यत्र कुरङ्गी तिष्ठती(ष्ठेदि)त्यर्थः । वारिवाहस्य काले कथंभूते । मेघोद्गीर्णपतत्कठोरकरकासारत्रसत्सिन्धुरे । मेघेन मेघैर्वा वारिदैरुद्गीर्णा उद्वान्ताः पतन्तोऽधः पतन्तो भूमौ विलुण्ठन्तः कठोराः कर्कशा दृषत्प्राया ये करकाः वर्षोपलाः तेषामासारेण वेगवद्वर्षणेन त्रसन्तो भयं कुर्वन्तः सिन्धुरा गजेन्द्रा यस्मिन् स तथा तस्मिन् । पुनरपि कथंभूते काले । पूरप्लावितकूलपादपकुलक्षुभ्यत्सरित्पाथसि । पूरेण जलोल्लासेन प्ला-

---

१-२. 'संहट्ट' इति सटीकपुस्तकस्थः पाठः. ३. 'वराहवपुं' मूल०

---

१-२-३-४. 'संहट्ट' इति सटीकपुस्तकस्थः पाठः.

अम्भश्चण्डसमीरणाश्रयशिवाफेत्कारताम्यन्मृगे
काले सूचिमुखाग्रभेद्यतिमिरप्रायःक्षपासङ्गिनि ॥ ६५ ॥
भूयःपयःप्लवनिपातितशैलशृङ्गे
पर्जन्यगर्जितवितर्जितसिंहपोते ।
सौदामनीद्युतिकरालितसर्वदिक्के
कं देशमाश्रयतु डिम्भवती कुरङ्गी ॥ ६६ ॥

किं च—

स्त्रीणां कुचोष्मपटलैरजडावतारः
संधुक्षितः पुनरयं नयनानलेन ।
यत्राधरामृतघृताहुतिचण्डितार्चिः
संकल्पजन्मविटपी परमुत्प्रकाशः ॥ ६७ ॥

---

वितानि मज्जितानि यानि कूलपादपकुलानि तटवृक्षसमूहास्तैः क्षुभ्यन्ति उत्पतन्ति सरितां नदीनां पाथांसि जलानि यस्मिन् काले स पूरप्लावितकूलपादपकुलक्षुभ्यत्सरित्पाथास्तस्मिन् तथा । भूयोऽपि कथंभूते काले । अम्भश्चण्डसमीरणाश्रयशिवाफेत्कारताम्यन्मृगे । अम्भोभिः पानीयैश्चण्डाः प्रचण्डास्तरूत्पाटनसमर्था ये समीरणा वातास्तेषां आश्रयेण वातताडनेन ये शिवानां शृगालानां शृगालीनां वा फेत्काराः शब्दविशेषास्तैस्ताम्यन्तो निर्जलप्रदेशमाकाङ्क्षन्तो मृगा हरिणा यस्मिन् काले स तथा तस्मिन् । अपरं कथंभूते काले । सूचिमुखाग्रभेद्यतिमिरप्रायःक्षपासङ्गिनि । सूचीनां पटभेदिनीनां मुखाग्रैरग्रभागैर्भेद्यं विदारणीयमतिसघनत्वात् यत्तिमिरमन्धकारं तत्प्रायस्तेन संयुक्तः क्षपानां रात्रीणां सङ्गः संगतिर्विद्यते यस्य स तथा तस्मिन् । अपरं कथंभूते काले । भूयः पयप्लवनिपातितशैलशृङ्गे । भूयसां प्रचुराणां पयसां जलानां प्लवैरुत्पतनैर्निपातितानि निर्लोठितानि शैलानां पर्वतानां शृङ्गाणि शिखराणि यस्मिन् काले स तथा तस्मिन् । अपरं कथंभूते काले । पर्जन्यगर्जितवितर्जितसिंहपोते । पर्जन्यानां मेघानां गर्जितैः शब्दविशेषैर्वितर्जिता निर्भर्त्सिताः सिंहानां हर्यक्षाणां पोताः शिशवो यस्मिन् काले स तथा तस्मिन् । पुनरपि किंविशिष्टे काले । सौदामनीद्युतिकरालितसर्वदिक्के । सौदामनीनां शतह्रदानां द्युतिभिस्तेजोभिः करालिता रौद्रीकृताः सर्वाः समस्ता दिशो हरितो यस्मिन् काले स तथा तस्मिन् । 'नदीरुदन्ताच्छेषाद्वा' बहुव्रीहौ कः । उक्तलक्षण आक्षेपालंकारः । युग्मम् ॥

किं च अस्ति कश्चिद्विशेषः । **स्त्रीणामित्यादि** । यत्र यस्मिन् वारिवाहस्य काले संकल्पजन्मविटपी कन्दर्पवृक्षः परं केवलं उत्प्रकाशः उत्कृष्टतेजा वर्धते । कथंभूतः संकल्पजन्मविटपी । स्त्रीणां मनोहरवनितानां कुचानां स्तनानां ऊष्मपटलैरुष्णतासमूहैः

अपि च—

धाराशरासारभरेण मेघः कोदण्डचण्डः सह मन्मथेन।

बालाबला सेति च सिन्धुरुद्धश्चिन्ताकुलस्तिष्ठति यत्र पान्थः॥ ६८॥

तत्र वारिवाहवासरेषु तरुमूलनिवासिना निरन्तरयोगोपयोगनिमग्नमनस्कारेण विहितवनदेवतारक्षाधिकारेणेव नीयन्ते निखिलस्य जगतस्तमस्काण्डखण्डितनिजशरीरदर्शनवृत्तयोऽभिसारिकाजनमनोऽपत्यपोषणगर्वर्यः शर्वर्यः॥

यस्य च भगवतस्तत्क्षणक्षरत्क्षीरडिण्डीरपिण्डपाण्डुरैरपर्याप्तव्याप्तिभिर्य-

---

अजडावतारो जलागमनरहितः। पुनर्भूयोऽपि अयं संकल्पजन्मविटपो नयनानलेन स्त्रीणां लोचनाग्निना संधुक्षितः उद्दीपितः। पुनः कथंभूतः संकल्पजन्मविटपी। अधरामृतघृताहुतिचण्डितार्चिः। स्त्रीणां अधरा दन्तच्छदा एवामृतं कामुकानां जीवितप्रदानहेतुत्वात् तदेव घृताहुतिः आज्याहुतिराज्यहवनं तया चण्डिताः प्रचण्डीकृताः अर्चिषो ज्वाला यस्येति स अधरामृतघृताहुतिचण्डितार्चिः। घृतस्य तेजउद्दीपनहेतुत्वात् 'तेजो वै घृतम्' इत्यश्वमेधवचनात्। हेत्वलंकारगर्भितदीपकालंकारः॥

अपि च अस्ति कश्चिद्विशेषः। धारेत्यादि। यत्र यस्मिन् वारिवाहस्य काले इति अमुना प्रकारेण पान्थः पथिकः चिन्ताकुलः चिन्तयापि स्मृत्या आकुलः किंकर्तव्यतामूढस्तिष्ठति अवतिष्ठति। इति किम्। मेघस्तावत् कोदण्डचण्डो वर्तते। कोदण्डेन देवेन्द्रधनुषा चण्डः प्रचण्डो बद्धाटोपः कोदण्डचण्डः। केन कृत्वा। धाराशरासारभरेण। धारा जलच्छटास्ता एव शरा बाणाः पथिकानां मर्मविदारणहेतुत्वात् तेषामासारा वेगवद्वर्षास्तेषां भरो अतिशयस्तेन तथोक्तेन। मेघः कथंभूतः। सह सार्धम्। केन सह। मन्मथेन मकरकेतुना। सा विवक्षिता बाला नवयौवना मम भार्या अबला बलहीना वर्तते। कथंभूतः पान्थः। सिन्धुरुद्धः नर्मदायनदीरुद्धः। सहोक्तिरलंकारः॥

यस्य चेत्यादि। यस्य च भगवतस्तत्क्षणक्षरत्क्षीरडिण्डीरपिण्डपाण्डुरैरपर्याप्तव्याप्तिभिः यशोभिः संभृतमिदमशेषं भुवनं असुलभमस्मदीयं सितं सर्गदर्शनं भविष्यतीति कृताशङ्क इव प्रजापतिः पुरैव प्रदीपकलिकानिकरपेशलानि शेषफणासु प्रभावन्ति रत्नानि। प्रजापतिर्ब्रह्मा पुरैव पूर्वमेव शेषफणासु धरणेन्द्रमुखदर्वीषु सहस्रफणानामुपरितनभागेषु। प्रभावन्ति तेजस्वन्ति रत्नानि माणिक्यानि व्यधाच्चकारेति क्रियापदं गद्यप्रान्ते वर्तते। प्रजापतिः कथंभूत इति उत्प्रेक्षते—इति अमुना प्रकारेण कृताशङ्क इव विहितभीतिरिव। कस्य कृताशङ्कः। इतीति किम्। यस्य श्रीसुदत्ताचार्यस्य भगवतो ज्ञानाति-

---

१. 'सहसर्धिकेन' इत्यादर्शे पाठः. २. 'नर्मदायानर्मदारुद्धः' इत्यादर्शे पाठः.

शोभिः संभृतमिदमशेषं भुवनमसुलभमस्मदीयं सितं सर्गदर्शनं भविष्यतीति कृताशङ्क इव प्रजापतिः पुरैव प्रदीपकलिकानिकरपेशलानि शेषफणासु प्रभावन्ति रत्नानि, निरन्तरज्वलज्ज्वालाजालप्रकाशपिष्टातकनिकीर्णककुप्सीमन्तिनीसीमन्तपर्यन्तानि क्षीरोदधिमध्येषु वडवानलमण्डलानि, मधुमत्तविलासिनीविलोचनाडम्बरविडम्बीनि हेरम्बगुरुशिरसि जटावल्कलानि, कपर्दिनितम्बिनीस्तनाडम्बरितमृगमदपत्रभङ्गसुभगानि गोमिनीपतिश्यालव-

---

शयवतः यशोभिः पुण्यगुणकीर्तनलक्षणैः शुक्लैर्यशोभिः इदं प्रत्यक्षीभूतं अशेषं समग्रं भुवनं त्रैलोक्यं संभृतं व्याप्तं अस्मदीयमस्माकं सितं शुक्लं सर्गदर्शनं असुलभं दुष्प्रापं भविष्यति वर्त्स्यतीति कारणात् । कथंभूतैर्यशोभिः । तत्क्षणक्षरत्क्षीरडिण्डीरपिण्डपाण्डुरैः । तत्क्षणं तत्कालं क्षरत् अधःपतत् यत्क्षीरं दुग्धं तस्य त(य)त् डिण्डीरपिण्डं फेनपिण्डस्तद्वत् पाण्डुरैः शुक्लवर्णैः । अपरं कथंभूतैर्यशोभिः । अपर्याप्तव्याप्तिभिः न पर्याप्ता न समाप्तिं गता व्याप्तिः प्रसारो येषां यशसां तानि अपर्याप्तव्याप्तीनि तैस्तथोक्तैः । कथंभूतानि रत्नानि । प्रदीपकलिकानिकरपेशलानि । प्रदीपानां कलिकाः शिखास्तासां निकरः समूहः तद्वत्पेशलानि मनोहराणि । पुनश्च प्रजापतिः किं चकार । क्षीरोदधिमध्येषु क्षीरसागरगर्भेषु वडवानलमण्डलानि व्यधादिति क्रियापदम् । इत्येवमौर्वानलसमूहांश्चकारेत्यर्थः । कथंभूतानि वाडवानलानि । निरन्तरज्वलज्ज्वालाजालप्रकाशपिष्टातकनिकीर्णककुप्सीमन्तिनीसीमन्तपर्यन्तानि । निरन्तरमहर्निशं ज्वलन्ति प्रज्वलन्ति यानि ज्वालाजालानि कीलासमूहास्तेषां प्रकाश उद्योतः स एव पिष्टातकः सिन्दूरादिचूर्णं तेन निकीर्णा व्याप्ताः ककुप्सीमन्तिनीनां दिग्वनितानां सीमन्तपर्यन्ताः केशमार्गपर्यन्तवसनानि यैर्वडवानलमण्डलैस्तानि । मधुमत्तविलासिनीविलोचनाडम्बरविडम्बीनि हेरम्बगुरुशिरसि जटावल्कलानि । प्रजापतिः पुनः किं व्यधात् । हेरम्बस्य लम्बोदरस्य गुरुः पिता श्रीमहादेवस्तस्य शिरसि मस्तके जटावल्कलानि व्यधात् जटाः संलग्नकेशास्त एव वल्कलानि वृक्षत्वचः बलवत्तरत्वात् । कथंभूतानि जटावल्कलानि इत्याह—मधु मद्यं तेन मत्ताः विह्वलीभूता या विलासिन्यः कमनीयकामिन्यस्तासां विलोचनानि नेत्राणि तानि विडम्बयन्ति तिरस्कुर्वन्ति उपमां धरन्तीति तानि । जटानां शोणत्वात् । अभिज्ञानमेतत् । कपर्दिनितम्बिनीस्तनाडम्बरितमृगमदपत्रभङ्गसुभगानि गोमिनीपतिश्यालवपुषि कुरङ्गाकृतिलाञ्छनमहांसि । प्रजापतिः पुनश्च किं व्यधात् । गोमिनी लक्ष्मीस्तस्याः पतिर्भर्ता श्रीनारायणस्तस्य श्यालो मैथुनश्चन्द्रस्तस्य वपुषि (कुरङ्गाकृति शरीरे चन्द्रमण्डले) कुरङ्गाकृतिलाञ्छनमहांसि व्यधात् कुरङ्गाकृति मृगाकारं

---

१. लेखकप्रमादपतितः पाठः.

पुषि कुरङ्गाकृतिलाञ्छनमहांसि, सततसुररमणीकरविकीर्यमाणसिन्दूरपरागपिञ्जराणि सुनासीरकरिकुमुदपुण्डरीकेषु शिरःपिण्डकुम्भस्थलानि, प्रकामपीतपीडितमुक्तसहचरकरपल्लवपवनविनिवाप्यमानविद्याधरीबिम्बाधराकृतीनि शिशिरशिखरभृति धातुशृङ्गाणि, कुबेरपुरकामिनीकुचचूचुकपटलश्यामलानि ललितापतिशैलमेखलासु तमालतरुवनानि, निजनाथावसथपथप्रस्थानपरिणतरतिचरणशिञ्जानहिञ्जीरमणितमनोहराणि हंसपरिषत्सु

---

यल्लाञ्छनं चिह्नं तस्य महांसि तेजांसि व्यधात् । कथंभूतानि कुरङ्गाकृतिलाञ्छनमहांसि इत्याह—कपर्दी श्रीमहादेवस्तस्य नितम्बिनी भार्या पार्वती तस्याः स्तनौ वक्षोजौ तयोराडम्बरितो विस्तारितो मृगमदपत्रभङ्गः कस्तूरिकातिलकरचना तद्वत्सुभगानि मनोहराणि । सततसुरतरुणीकरविकीर्यमाणसिन्दूरपरागपिञ्जराणि सुनासीरकरिकुमुदपुण्डरीकेषु शिरःपिण्डकुम्भस्थलानि । प्रजापतिः पुनश्च किं व्यधात् । सुनासीरो देवेन्द्रस्तस्य करी ऐरावतः स कुमुदश्च नैर्ऋत्यदिग्गजः स च पुण्डरीकश्च अग्निदिग्गजश्च [तेषु] सुनासीरकरिकुमुदपुण्डरीकेषु शिरःपिण्डकुम्भस्थलानि व्यधात् मस्तकपिण्डेषु कुम्भस्थलानि व्यधात् । कथंभूतानि शिरःपिण्डकुम्भस्थलानि इत्याह—सततं निरन्तरं सुरतरुणीनां देवकन्यानां करा हस्तास्तैर्विकीर्यमाणो निक्षिप्यमाणो योऽसौ सिन्दूरपरागो नागगर्भधूलिका तेन पिञ्जराणि गोरोचनवर्णानि । प्रकामपीतपीडितमुक्तसहचरकरपल्लवपवनविनिवाप्यमानविद्याधरीविम्वाधराकृतीनि शिशिरशिखरभृति धातुशृङ्गाणि । प्रजापतिः पुनश्च किं व्यधात् । शिशिरशिखरभृति हिमाचलपर्वते धातुशृङ्गाणि गैरिकशिखराणि व्यधात् । कथंभूतानि धातुशृङ्गाणि इत्याह—प्रकाममतिशयेन पूर्वं पीताः पश्चात्पीडितास्तदनन्तरं मुक्ताः सहचराणां भर्तॄणां करपल्लवपवनैः पाणिप्रवालवायुभिर्विनिवाप्यमाना आप्यायमाना ये विद्याधरीणां वियद्गामिनीनां स्त्रीणां विम्वाधराः पक्वविम्वसमानोष्ठास्तेषामाकृतय आकारा येषां तानि तथा । कुबेरपुरकामिनीकुचचूचुकपटलश्यामलानि ललितापतिशैलमेखला[सु] तमालतरुवनानि । प्रजापतिः पुनश्च किं व्यधात् । ललितापतिशैलमेखलासु ललितापतिशैलः कैला]सपर्वतस्तस्य मेखलासु कटिनीषु तमालतरूणां कालस्कन्धवृक्षाणां वनानि विपिनानि व्यधात् । कथंभूतानि तमालतरुवनानि । कुबेरस्य धनदस्य पुरं नगरमलकानामकं तस्य कामिन्यो नवयौवनाः स्त्रियस्तासां कुचानां चूचुकानि स्तनाग्राणि तेषां पटलवत् प्रत(स)रवत् श्यामलानि कृष्णवर्णानि तानि तथा । निजनाथावसथपथप्रस्थानपरिणतरतिचरणशिञ्जानहिञ्जीरमणितमनोहराणि हंसप-

१. 'तरुणी' टीकापाठः.

१. इतः प्रभृति 'कुबेरपुर' इत्यतः प्राक्तनपाठे भूयान्व्यत्ययो लेखकप्रमादज आदर्शपुस्तकेषु. २. कोष्ठकान्तरगतपाठो लेखकप्रमादेन भ्रष्टोऽस्माभिः पूरितः.

शब्दितानि, कलिन्दकन्याकल्लोलजलश्यामायमानोर्मीणि मन्दाकिनीस्रोतसि पयांसि, द्विरदरदफलकमषीलिखितलिपिस्पर्धीनि सरस्वतीनिटिलतटेषु कुन्तलजालानि, रजनिरसरक्ततन्तुसंतानापहासीनि सितसरसिजकोशेषु केसराणि, कम्बुकुलमान्ये च पाञ्चजन्ये कृष्णकरपरिग्रहनिरवधीनि व्यधादहानि ॥

यस्य च सुजन्मनः प्रगुणतरुणिमोन्मेषमनोहारिणी यथादेशनिवेशितपरिणयप्रवणगुणप्रोतमणिविभूषणा निसर्गात्प्रागल्भ्यवती स्वयंवरवरणार्थ-

---

रिषत्सु शब्दितानि । प्रजापतिः पुनश्च किं व्यधात् । हंसपरिषत्सु हंससमूहेषु शब्दितानि शब्दानि(न्) व्यधात् । कथंभूतानि शब्दितानि । निजनाथस्य कंदर्पस्य योऽसावावसथो गृहं तस्य पन्था मार्गस्तस्मिन्प्रस्थानं गमनं तस्मिन् परिणता व्यावृत्ता यासौ रतिः कंदर्पभार्या तस्याश्चरणौ पादौ तयोर्विषये शिञ्जानाः शब्दायमाना ये हिञ्जीरा नूपुरास्तेषां मणितानि कामक्रीडावसरे कूजितानि तद्वन्मनोहराणि चित्तानुरञ्जकाणि तानि तथा । कलिन्दकन्याकल्लोलजलश्यामायमानोर्मीणि मन्दाकिनीस्रोतसि पयांसि । प्रजापतिः पुनः किं चकार । मन्दाकिनीस्रोतसि गङ्गाप्रवाहे पयांसि जलानि व्यधात् । गङ्गाजलानि कथंभूतानि । कलिन्दकन्यायाः यमुनायाः कल्लोलजलानि लहर्युदकानि तैः श्यामायमाना श्यामीक्रियमाणा ऊर्मयो लहर्यो येषां तानि तथा । द्विरदरदफलकमषीलिखितलिपिस्पर्धीनि सरस्वतीनिटिलतटेषु कुन्तलजालानि । प्रजापतिः पुनश्च किं चकार । सरस्वतीनिटिलतटेषु भारतीमस्तकतटेषु कुन्तलजालानि [केशसमूहान् चकार । कथंभूतानि कुन्तलजालानि ।] द्विरदस्य हस्तिनो रदफलके दन्तपट्टके मष्या लिखिता वर्तिता या लिपिरक्षरविन्यासस्तां स्पर्धन्ते तिरस्कुर्वन्ति इत्येवंशीलानि तानि तथा । रजनिरसरक्ततन्तुसंतानापहासीनि सितसरसिजकोशेषु केसराणि । प्रजापतिः पुनश्च किं व्यधात् । सितसरसिजकोशेषु श्वेतकमलमध्येषु केसराणि किञ्जल्कान् व्यधात् । केसराणि कथंभूतानि । रजनिर्हरिद्रा । विलासिनीहरिद्रेति यावत् । तस्या रसो निर्यासस्तेन रक्तो रञ्जितो योऽसौ तन्तुसंतानः सूत्रसमूहस्तमपहसन्ति तिरस्कुर्वन्ति इत्येवंशीलानि तानि तथा । कम्बुकुलमान्ये च पाञ्चजन्ये कृष्णकरपरिग्रहनिरवधीनि व्यधादहानि । प्रजापतिश्च पुनः किं चकार । पाञ्चजन्ये पञ्चजनः समुद्रस्तस्मिन् भवः पाञ्चजन्यः दक्षिणावर्तशङ्खस्तस्मिन् अहानि दिनानि व्यधाच्चकार । कथंभूते पाञ्चजन्ये । कम्बुकुलमान्ये कम्बूनां शङ्खानां कुलमन्ववायस्तस्मिन् मान्ये पूजनीये । अहानि कथंभूतानि । कृष्णस्य श्रीनारायणस्य करपरिग्रहो हस्तस्वीकारस्तस्मिन् निरवधीनि निर्मर्यादानि कृष्णकरपरिग्रहनिरवधीनि । अन्तर्दीपकालंकारः ॥

यस्य च सुजन्मनः प्रगुणतरुणिमोन्मेषमनोहारिणी यथादेशनिवेशितपरिणयप्रवणगुणप्रोतमणिविभूषणा निसर्गात्प्रागल्भ्यवती स्वयंवरवरणार्थमादिष्टेव कीर्तिपतिंवरा भुवनान्त-

मादिष्टेव कीर्तिपतिंवरा भुवनान्तराणि विहरन्ती 'जरठ जराजनितजव-स्खलन कमलासन, न खलु समर्थस्त्वं मे निखिलनगनगरसागरविहारकु-

---

राणि विहरन्ती 'जरठ जराजनितजवस्खलन कमलासन, न खलु समर्थस्त्वं मे निखिल-नगनगरसागरविहारकुतूहलिन्याः सहचरकर्माणि कर्तुम्' इति पितामहम् । यस्य च श्री-सुदत्ताचार्यस्य सुजन्मनः पुण्यावतारस्य कीर्तिपतिंवरा कीर्तिकन्या भुवनान्तराणि सर्वाणि जगन्ति विहरन्ती पर्यटन्ती अद्यापि क्वचित् स्थितिं स्थानं न बध्नाति कस्मिंश्चिदपि स्थाने स्थितिं न करोति । किंतु सर्वेषु भुवनेषु पर्यटत्येव इति क्रियाकारकसंबन्धः । कथं-भूता कीर्तिपतिंवरा । प्रगुणतरुणिमोन्मेषमनोहारिणी प्रगुणो अजिह्मो अमदः स चासौ तरुणिमा तारुण्यं तस्य उन्मेषः प्रादुर्भावः तस्य मनोहारिणी (चित्तानुरञ्जिका । अत्र गुणाश्चतुरशीतिलक्षलक्षणाः ते व्यङ्ग्याः मनोहारिणी) विषयकषायमनोव्यापाररहि-तेति व्यङ्ग्यम् । अपरं कथंभूता कीर्तिपतिंवरा । यथादेशनिवेशितपरिणयप्रवणगुणप्रोतमणि-विभूषणा । यथादेशं शरीरावयवान् अनतिक्रम्य निवेशितानि परिणयप्रवणानि विवाहानु-कूलानि विवाहयोग्यानि गुणैर्दवरकैः प्रोता ये मणयो रत्नानि तैरुपलक्षितानि विभूष-णानि सुवर्णाभरणानि यस्याः सा तथा । अत्र व्यङ्ग्यम् । यथादेशं आदेशातिक्रमेण उपन्यासस्य परिपाट्या निवेशिता आरोपिता उपन्यस्ताः परि समन्तात् ये नया विकला-देशा'(?)न् न(य)ति सकलादेशं प्रमाणं विकलादेशो नयः(?)' इति वचनात् तेषु प्रवणा अनुकूला ये गुणा अविवक्षितपदार्थाः । 'विवक्षितो मुख्य इतीष्यतेऽन्यो गुणोऽवि-वक्ष्यो न निरात्मकस्ते' इति वचनात् । न मे [त ए]व मणयो रत्नानि विभूषणानि शोभाजनकानि आभरणानि यस्याः कीर्तेः सा तथा । पुनश्च कथंभूता कीर्तिपतिंवरा । निसर्गात् स्वभावेन, नतु शिक्षिततया । प्रागल्भ्यवती परचित्तप्रसादनकुशलतावती इदं वि-शेषणं तु उभयत्र समानम् । कथंभूता कीर्तिपतिंवरा । स्वयंवरवरणार्थमादिष्टेव स्वयं आ-त्मभावस्य पत्युः वरणार्थं आदिष्टेव प्रेरितेव । अत्र व्यङ्ग्यम् । शोभनो अयः शुभावहो विधिः स्वयं तद्यथाभवत्येवं क्रियाविशेषणत्वात् द्वितीयैकवचनं नपुंसकत्वं च वरस्य अवर्गा-देर्वरणार्थं स्वीकरणार्थं कीर्तिरादिष्टा । 'कीर्तिमान् पूज्यते लोके परत्रेह च मानवः' इति वचनात् । कीर्तिपतिंवरा किं कुर्वती । इति अमुना प्रकारेण पितामहं ब्रह्माणं न वरया-मीत्यनेन चलिता । इतीति किम् । अरे जरठ जरठं अतिवृद्धं न वरयामीत्यग्रे चलिता । इतीति किम् । अरे जरठ अतिवृद्ध, अरे जराजनितजवस्खलन जरया विस्रसया जनित-मुत्पादितं जवस्य वेगस्य स्खलनं वेगभङ्गो यस्य स जराजनितजवस्खलनः तस्य संबोधनं क्रियते हे जराजनितजवस्खलन । हे कमलासन, खलु निश्चयेन त्वं समर्थो न भवसि मे मम सहचरकर्माणि कर्तुं सदैव पर्यटितुं समर्थो न भवसि अतिवृद्धत्वात् । कथंभूतायाः मे । निखिलनगनगरसागरविहारकुतूहलिन्याः । नगाश्च पर्वताः नगराणि पत्तनानि सागराश्च

---

१. अयं पाठः सटीकपुस्तके नास्ति.

तूहलिन्याः सहचरकर्माणि कर्तुम्' इति पितामहम्, 'अहल्यापतिपरिग्रहस्खलितजातयुवतिमुद्राचरानेकवीक्षण क्षतकरण पौलोमीरमण, नार्हसि प्रणयकलहकुपितायाः करजराजिपाटनप्रदानदण्डेनानुनयनानि विधातुम्' इति वृद्धावस्यन्दिनम्, 'उड्डमरपाण्डुरोगवश हुताश, नावकाशः स्वरुचि-

---

क्षीरादयो नगनगरसागराः, निखिलाश्च ते नगनगरसागराः समुद्रगिरिपुरसमुद्रास्तेषां विहारे पर्यटनाय कुतूहलं कौतुकं विद्यते यस्याः सा तथा तस्याः । अत्र व्यङ्ग्यम् । अतिवृद्धत्वे विहाराभावे च कमलाया लक्ष्म्या आसने स्वीकरणे कीर्तिर्न भवतीति । पुनः कथंभूता कीर्तिपतिंवरा । अहल्यापतिपरिग्रहस्खलितजातयुवतिमुद्राचरानेकवीक्षण क्षतकरण पौलोमीरमण, नार्हसि प्रणयकलहकुपितायाः करजराजिपाटनप्रदानदण्डेनानुनयनानि विधातुमिति वृद्धावस्यन्दिनम् । वृद्धावस्यन्दिनमिति अमुना प्रकारेण अनभिनन्दन्ती अश्लाघमाना तिरस्कुर्वतीत्यर्थः । हे अहल्यापतिपरिग्रहस्खलितजातयुवतिमुद्राचर अहल्यायास्तापस्याः पतिर्भर्ता गौतमऋषिस्तस्य परिग्रहो अहल्या तस्मात् स्खलितात् ब्रह्मचर्यसंभञ्जनदोषात् जाता उत्पन्ना युवतिमुद्रा [सहस्र] भगलक्षणा पूर्वं यस्य सोहल्यापतिपरिग्रहस्खलितजातयुवतिमुद्राचरस्तत्संबुद्धौ तथोक्त हे गौतमशापेन सहस्रभगशरीर । हे अनेकवीक्षण गौतमशापेन संजातसहस्रलोचन । हे क्षतकरण सर्वाङ्गयोनित्वात् रहितलिङ्गाकार । हे पौलोमीरमण हे पुलोमपुत्रीभर्तः पितृसमानश्वशुरघातक । त्वमिति पूर्वोक्तमेव ग्राह्यं तेनायमर्थः । हे पौलोमीरमण देवेन्द्र, त्वं मे मम अनुनयनानि माननानि प्रसन्नीकरणानि विधातुं कर्तुं न अर्हसि न योग्यो भवसि । केन कृत्वा । करजराजिपाटनप्रदानदण्डेन कृत्वा करजा मम नखास्तेषां राजिः श्रेणिस्तया पाटनेन नखैश्चूर्णप्रदानेन दण्डेन शेफेन कृत्वा अनुनयनानि कर्तुं न शक्नोषि । दण्डरहितत्वात् सर्वाङ्गभगाकारत्वात् । कथंभूताया मे । प्रणयकलहकुपितायाः स्नेहयुद्धकोपं प्राप्तायाः । अत्र व्यङ्ग्यम् । यः परस्त्रीलम्पटो भवति युवत्याकारं धृत्वा परस्त्रियं गच्छति, मुक्तिं विना अनेकस्त्रीविलोकने क्षतकरणः अङ्गविकलो भवति, श्वशुरमारकश्च स्यात्, प्रकृष्टानां नयानां स्यादस्तीत्यादीनां सप्तभङ्गानां कलहे युद्धे विवादे सति कोपं करोति, युक्त्या मिथ्यावादिनं न चारयति । कलहवचनश्रेणिभिर्निग्रहस्थानं न करोति, अनुगतानि नयनानि परस्परापेक्षत्वात् नयात् (नि) न विदधाति, वृद्धावस्यन्दी सप्तमधातुद्रावको भवति तस्य कीर्तिर्न भवति इति भावः । उड्डमरपाण्डुरोगवश हुताश, नावकाशः स्वरुचिविरचितकान्तस्वीकारायाः परिणयनस्रज इति जातवेदसम् । कीर्तिपतिंवरा पुनश्च किं कुर्वती । जातवेदसं अग्निं इति अमुना प्रकारेण अनभिनन्दन्ती अश्लाघमाना निर्भर्त्सयन्तीत्यर्थः । इतीति किम् । हे उड्डमरपाण्डुरोगवश उत्कटपाण्डुरोगपराधीन । हे हुताश हुतमश्नातीति हुताशस्तस्य संबोधनं हे अग्ने, त्वं मे परिणयनस्रजः स्वयंवरमालायाः अवकाशः स्थानं न भवसि । कथंभूतायाः मे । स्वरुचिविरचितकान्तस्वीकारायाः स्वरुच्या निजश्रद्धया

विरचितकान्तस्वीकारायाः परिणयनस्रजः' इति जातवेदसम्, 'अनपराधजनग्रसनलालसमानस वातापिरिपुदिगन्तवास, न स्थानमनङ्गरसनिर्भरभरितहृदयायाः केलिकलहानाम्' इति दशलोचनम्, 'उल्बणशल्यशिराशेषशरीरपरिकर निशाचर, न पदमिन्दीवरमृणालकोमलभुजलतायाः सरभसा-

---

विरचितः कृतः कान्तस्य भर्तुः स्वीकारो अङ्गीकारो यया सा तथा तस्याः। अत्रापि व्यङ्ग्यमस्ति। यः पुमान् पाण्डुरोगी भवति तस्य दीक्षाया अभावात् कीर्तिर्न भवति। दूषितशरीरत्वात्। अनु च यद्दीयते पाणिपुटे पिण्डो मुच्यते तत्सर्वमश्नाति कस्यचिद्ब्राह्मणो व्रतं न करोति तस्य यतेः कीर्तिर्न भवति। तथा स्वस्मिन् आत्मस्वरूपे रुच्या सम्यग्दर्शनेन कान्तस्य परमब्रह्मणः स्वीकारं न करोति तस्य अनेकान्तनयेषु अविनीतस्य यतेः कीर्तिर्न भवतीति भावः। अनपराधजनग्रसनलालसमानस वातापिरिपुदिगन्तवास न स्थानमनङ्गरसनिर्भरभरितहृदयायाः केलिकलहानामिति दशलोचनम्। कीर्तिपतिंवरा पुनश्च किं कुर्वती। इति अमुना प्रकारेण दशलोचनं यमं अनभिनन्दन्ती अश्लाघमाना निर्भर्त्सयन्ती। इतीति किम्। अरे अनपराधजनग्रसनलालसमानस अनपराधस्य निर्दोषस्य जनस्य लोकस्य ग्रसने कवलीकरणे लालसं अत्याकाङ्क्षं मानसं चित्तं यस्य स तस्य संबोधनं हे तथा। अरे वातापिरिपुदिगन्तवास वातापिन इल्वलभ्रातुर्दैत्यविशेषस्य रिपुः शत्रुरगस्त्य इत्यर्थस्तस्य दिग् दक्षिणाशा तस्याः अन्ते अवसाने वासो निवासो यस्य स तस्य संबोधनं हे वातापिरिपुदिगन्तवास। मे केलिकलहानां कामक्रीडायाः कलहानां युद्धानां त्वं अवकाशः स्थानमेव न भवसि। कथंभूतायाः मे। अनङ्गरसनिर्भरभरितहृदयायाः अनङ्गरसेन कामरागेण निर्भरं गाढं भरितं परिपूर्णं हृदयं मनो यस्याः सा तथा तस्याः। अत्रापि व्यञ्जनीयं वर्तते। यः पुमान् अपराधरहितं मनुष्यं कवलयति ग्रसितं गिलितुमिच्छति स पुमान् सापराधं कथं मुञ्चति, यः पुमान् दक्षिणस्यां दिशि दैत्यभक्षकसमीपे निवासं करोति स साधून् कथं मुञ्चति, यश्च अनङ्गानां सिद्धानामुपरि रागवान् तस्य कीर्तिर्न भवति इति भावः। उल्वणशल्यशिराशेषशरीरपरिकर निशाचर, न पदमिन्दीवरमृणालकोमलभुजलतायाः सरभसालिङ्गनानामिति कैकसेयम्। कीर्तिपतिंवरा किं कुर्वती। इति अमुना प्रकारेण कैकसेयं केकस्या अपत्यं नैर्ऋतं राक्षसं अनभिनन्दन्तीति। इतीति किम्। हे उल्वणशल्यशिराशेषशरीरपरिकर उल्वणानि उत्कटानि यानि शल्यानि अस्थीनि शिराश्च नहारवस्त्राभिरुपलक्षितो अशेषः समग्रः शरीरस्य कायस्य परिकरः परिच्छदो यस्य तस्य संबुद्धिः हे तथा। अरे निशाचर निशायां रात्रौ चरति पर्यटति स निशाचरस्तस्य संबुद्धिः। मे मम सरभसालिङ्गनानां वेगेनोपगूहनानां पदं स्थानं त्वं न भवसि। कथंभूतायाः मे। इन्दीवरमृणालकोमलभुजलतायाः इन्दीवरं नीलोत्पलं तस्य मृणालो नालस्तद्वत् कोमले सुकुमारे भुजलते बाहुवल्ल्यौ यस्याः सा तथा तस्याः। अत्रापि व्यङ्ग्यं वर्तते। यः पुमान् मायामिथ्यानिदानशल्यत्र-

लिङ्गनानाम्' इति कैकसेयम्, 'उदीर्णोदकोदरगदगलितसुरतव्यवसाय सागरालय, न क्षमश्चिरपरिचितकामसूत्रायाः काकिलादिकरणोदाहरणानाम्' इति प्रचेतसम्, अतिविदितचापलकुलप्रसूत वात, न दयितः स्थिरनायक-

---

यमण्डितकायो भवति, अनु च निशाचरो रात्रिभोजी भवति, तस्य कीर्तिर्न भवति। उदीर्णोदकोदरगदगलितसुरतव्यवसाय सागरालय, न क्षमश्चिरपरिचितकामसूत्रायाः काकिलादिकरणोदाहरणानामिति प्रचेतसम्। कीर्तिपतिंवरा किं कुर्वती। प्रचेतसं वरुणं अनभिनन्दन्ती अश्लाघमाना। इतीति किम्। हे उदीर्णोदकोदरगदगलितसुरतव्यवसाय उदीर्ण उत्कट उद्रिक्तो योऽसौ उदकोदरगदो जलोदरव्याधिस्तेन गलितो विनष्टः सुरतस्य मैथुनस्य व्यवसायो व्यापारो यस्य स तथा संबुद्धिः। अरे सागरालय सागरः समुद्र आलयो गृहं यस्य स तस्य संबोधने। काकिलादिकरणोदाहरणानां मम त्वं क्षमः समर्थो न भवसि परावर्तितदेहयोर्दम्पत्योरपि(भि) प्रयोगः काकिलमुच्यते, तदादिर्येषां चुम्बनभूषणआवर्तननिवर्तनप्रवेशादीनां तानि काकिलादिकरणानि च, तानि उदाहरणानि दृष्टान्तवचनानि तेषां काकिलादिकरणोदाहरणानां त्वं क्षमः समर्थो न भवसि। कथंभूतायाः मे। चिरपरिचितकामसूत्रायाः चिरं दीर्घकालं परिचितं परिचयोऽभ्यासः कामसूत्रे कुक्कोकादिशास्त्रे यस्याः सा तथा तस्याः। अत्र व्यङ्ग्यम्। यस्योदकोदरव्याधिना पुनः पुनर्जल(नग)रोगेण व्याख्याने क्रियमाणेऽपि उदकपानं न भवति, तथा च शोभनरतं निजात्मानुरागो यस्य न भवति, अनु च सागरस्य लक्ष्मीविषयस्य आलयो भवति निर्ग्रन्थो न स्यात्, कामं अतिशयेन जिनसूत्रे परिचयो न भवति, प्रगतिप्रणष्टचेताश्च विषयव्यापृतचित्तश्च भवति, तस्य कीर्तिर्न भवति इति भावः। अतिविदितचापलकुलप्रसूत वात, न दयितः स्थिरनायकसमागमार्थिन्याः प्रीतिविलसितानामिति नभस्वन्तम्। कीर्तिपतिंवरा पुनश्च किं कुर्वती। इत्यमुना प्रकारेण नभस्वन्तं वायुं अनभिनन्दन्ती अश्लाघमाना। इतीति किम्। हे अतिविदितचापलकुलप्रसूत अतिशयेन विदितं विख्यातं चापलं चपलत्वं यस्य कुलस्य तत् अतिविदितचापलकुलं तस्मिन् प्रसूतः संजातः तस्य संबोधनं हे अतिविदितचापलकुलप्रसूत। हे वात वायो, त्वं मे प्रीतिविलसितानां प्रेमप्रवृत्तीनां दयितः प्रियो न भवसि वल्लभो न भवसि। कथंभूतायाः मे। स्थिरनायकसमागमार्थिन्याः स्थिरस्य निश्चलस्य नायकस्य भर्तुः समागमः प्राप्तिस्तस्यार्थिन्याः प्रयोजनवत्याः। उक्तं च—'अज्जु[१] जि आया कल्लि गया णिहस डह डक्किसडणेह। वन्धिणरहि जिझ्रू पडड जिणसासन कडणेह॥' अत्र व्यङ्ग्यम्। यः पतिश्चापलकुलप्रसूतो भवति नटविटपा(टा)दि कुलजन्मा भवति, अनु च स्थिरो न भवति, समस्य समतापरिणामस्य आगमः सिद्धान्तो अध्यात्मशास्त्रस्य अर्थी न भवति, तस्य कीर्तिर्न

---

१. आदर्शत्रयेऽप्येकविधैवानुपूर्व्यस्फुटार्था।

समागमार्थिन्याः प्रीतिविलसितानाम्' इति नभस्वन्तम्, अनवरतमधुपानपरिच्युतमतिप्रकाश वित्तेश, न गोचरश्चतुरोक्तिसुधारसास्वादविस्फुरितश्रवणाञ्जलिपुटायाः सहालापगोष्ठीनाम्, इति नलकूबरपितरम्, 'अनुचितचितोपकण्ठपीठ शितिकण्ठ, न भाजनममलिनचरित्रायाः पृथुजघनसिंहासनारोहणानाम्' इति कृत्तिवाससम्, 'अनिष्टकुष्ठद्रवद्द्रुतचरणनख चण्डमयूख, न प्रभुः प्रसभपुण्यप्रभावलभ्यसंभोगायाः करसंवाहनसुखानाम्' इति

---

भवति इति भावः । अनवरतमधुपानपरिच्युतमतिप्रकाश वित्तेश, न गोचरश्चतुरोक्तिसुधारसास्वादविस्फुरितश्रवणाञ्जलिपुटायाः सहालापगोष्ठीनामिति नलकूबरपितरम् । कीर्तिपतिंवरा पुनश्च किं कुर्वती । इत्यमुना प्रकारेण नलकूबरपितरं धनदं अनभिनन्दन्ती अश्लाघमाना । इतीति किम् । अरे अनवरतमधुपानपरिच्युतमतिप्रकाश अनवरतं निरन्तरं मधुपानं मद्यास्वादनं तेन परिच्युतः परिभ्रष्टो मतिप्रकाशो बुद्धिचमत्कारो यस्य स तथा तस्य संबोधनं हे अनवरतमधुपानपरिच्युतमतिप्रकाश । हे वित्तेश गुह्यकेश्वर, त्वं मे सहालापगोष्ठीनां गोचरो विषयो गम्यो न भवसि मया सह सार्धं आलापो मिथोभाषणं तस्य गोष्ठ्यो नानोक्तिस्थानानि सहालापगोष्ठ्यस्तासां सहालापगोष्ठीनाम् । कथंभूतायाः मे चतुरोक्तिसुधारसास्वादविस्फुरितश्रवणाञ्जलिपुटायाः चतुरोक्तयश्चतुरालापाः । वक्रोक्तय इत्यर्थः । ता एव सुधारसः पीयूषप्रवाहः तदास्वादने तदनुभवने विस्फुरितौ श्रवणाञ्जलिपुटौ कर्णाञ्जलिपुटौ यस्याः सा तस्याः । अत्रापि व्यञ्जनीयम् । यो यतिरन्तत्रिक्रमतदीक्षितवन्मद्यपायी भवति तस्य बुद्धिप्रकाशो न भवति, चतुराणां विदुषां उक्तिरसास्वादाय विस्फुरितो ना श्रवणेषु दिगम्बरेषु अञ्जलिपुटं न बध्नाति तस्य कीर्तिर्न भवति । अनुचितचितोपकण्ठपीठ शितिकण्ठ, न भाजनममलिनचरित्रायाः पृथुजघनसिंहासनारोहणानामिति कृत्तिवाससम् । कीर्तिपतिंवरा पुनश्च किं कुर्वती । इत्यमुना प्रकारेण कृत्तिवाससं श्रीमहादेवं अनभिनन्दन्ती अश्लाघयन्ती । इतीति किम् । अरे अनुचितचितोपकण्ठपीठ अनुचिता अयोग्या या चिता मृतकाग्निस्तस्या उपकण्ठे समीपे पीठमासनं यस्य स तस्य संबोधनम् । हे शितिकण्ठ नीलग्रीव, त्वं मे पृथुजघनसिंहासनारोहणानां भाजनं पात्रं न भवसि पृथु विस्तीर्णं यत् जघनं स्त्रीकट्यग्रभागस्तदेव सिंहासनं हरिविष्टरं तस्यारोहणानाम् । कथंभूताया मे । अमलिनचरित्रायाः निर्मलाचारायाः । अत्रापि व्यङ्ग्यम् । योऽनुचिताद्यपवित्रस्थाने उपतिष्ठन् स्वाध्यायादिकं करोति कण्ठे कंक्षश्च भवति, यस्य च चारित्रे अतीचारो लालगीति; यश्च पृथुजघनानां सिंहानामासनेषु पर्वतादिस्थानेषु आरोहणं निवासं न करोति वनवासी न भवति, तस्य कीर्तिर्न भवति । अनिष्टकुष्ठद्रवद्द्रुतचरणनख चण्डमयूख, न प्रभुः प्रसभपुण्यप्रभवलभ्यसंभोगायाः करसंवाहनसुखानामिति हरितवाहवाहनम् । कीर्तिप-

हरितवाहवाहनम्, 'अक्षयक्षयामयसंशयितजीवित बुधतात, न शरणमगणितसुखसौभाग्यभाषितजन्मलग्नायाः प्रबन्धनिधुवनविधीनाम्' इति निशादर्शम्, 'अवतानकालायसतलिकाकृतिखलतिमस्तकदेश हृषीकेश, न समीपमदयकचग्रहग्रहिलविग्रहायाः कुटिलकुन्तलाविलविलोचनचुम्बनानाम्'

---

तिंवरा पुनश्च किं कुर्वती । इत्यमुना प्रकारेण हरितवाहवाहनं हरिताः शुकपक्षसमानवर्णा वाहा अश्वा वाहनं युग्यं यस्य स तं श्रीसूर्यं अनभिनन्दन्ती अश्लाघयन्ती । इतीति किम् । अरे अनिष्टकुष्ठद्रवद्रुतचरणनख अनिष्टमनभिलषितं यत् कुष्ठं पापरोगः तस्य द्रवेण पूयादिना द्रुता नष्टा चरणनखाः पादपुनर्भवा यस्य स तस्य संबोधनं हे अनिष्टकुष्ठद्रुतचरणनख । चण्डास्तीव्रतरा मयूखाः किरणा यस्येति स चण्डमयूखस्तस्य संबोधनं हे चण्डमयूख । त्वं मे मम करसंवाहनसुखानां हस्ताभ्यां पादमर्दनशातानां प्रभुः स्वामी न भवसि । कथंभूतायाः मे । प्रसभपुण्यप्रभावलभ्यसंभोगायाः प्रसभस्य विशिष्टस्य पुण्यस्य शुभकर्मणः प्रभावेण माहात्म्येन लभ्यः प्राप्यः संभोगो निधुवनसुखं यस्याः सा तथा तस्याः । अत्र व्यङ्ग्यम् । यः कुष्ठी भवति तस्य चरणं चारित्रं नखमात्रमपि न भवति, मधुरवाक्यैर्लोकानां सुखं न ददाति तस्य कीर्तिर्न भवति । अक्षयक्षयामयसंशयितजीवित बुधतात, न शरणमगणितसुखसौभाग्यभाषितजन्मलग्नायाः प्रबन्धनिधुवनविधीनामिति निशादर्शम् । कीर्तिपतिंवरा पुनश्च किं कुर्वती । इति अमुना प्रकारेण निशादर्शं चन्द्रं अनभिनन्दन्ती अश्लाघमाना । इतीति किम् । अरे अक्षयक्षयामयसंशयितजीवित अक्षयोऽविनश्वरो योऽसौ क्षयामयः क्षयरोगस्तेन संशयितं संदेहं प्रापितं जीवितमायुर्यस्य स तस्य संबोधनं हे अक्षयक्षयामयसंशयितजीवित । हे बुधतात बुधस्य रौहिणेयस्य तातः तस्य संबोधनं हे बुधतात । त्वं मे प्रबन्धनिधुवनविधीनां शरणं न भवसि प्रबन्धेन वीर्यस्तम्भेन निधुवनं मैथुनं तस्य विधयः कारणानि प्रबन्धनिधुवनविधयस्तेषां शरणं गृहं न भवसि । कथंभूतायाः मे । अगणितसुखसौभाग्यभाषितजन्मलग्नायाः अगणितं अमर्यादाभूतं यत्सुखं सौभाग्यं भाषितं आदिष्टं जन्मलग्ने उत्पत्तिमुहूर्ते यस्याः सा तस्याः । अत्र व्यङ्ग्यम् । यो मुनिः क्षयवान् रोगवान् भवति, यश्च संशयितजीवित आहारप्राप्तौ यस्य संदेहो भवति, परस्त्रियां पुत्रं चोत्पादयति, प्रबन्धानां महापुराणादिशास्त्राणां निधुवनविधीन् वाचनादिविधीन् न जानाति, निशायां रात्रौ दोषवांश्च दृश्यते, तस्य कीर्तिर्न भवति । कीर्तावसत्यां सुखं सौभाग्यं न प्राप्नोति । अवतानकालायसतलिकाकृतिखलतिमस्तकदेश हृषीकेश, न समीपमदयकचग्रहग्रहिलविग्रहायाः कुटिलकुन्तलाविलविलोचनचुम्बनानामिति मुकुन्दम् । कीर्तिपतिंवरा पुनश्च किं कुर्वती । इति अमुना प्रकारेण मुकुन्दं श्रीनारायणं अनभिनन्दन्ती अश्लाघयन्ती । इतीति किम् । अरे अवतानकालायसत-

इति मुकुन्दम्, 'अविरलगरलोल्लसल्लपनजाल भुजङ्गमलोकपाल, न संगमागमनमनल्पकल्पसंकल्पितप्राणितायास्तुण्डीराधरामृतानाम्' इति कुम्भीनसप्रभुं चानभिनन्दन्ती, मरुमरीचिवीचिनिचयवञ्च्यमाना मृगाङ्गनेव,

---

लिकाकृतिखलतिमस्तकदेश अवताना अधोमुखा या कालायसस्य लोहस्य तलिका कटाहिका तदाकृत्या तदाकारेण खलत्या लुप्तकेशिकटाव्या उपलक्षितो मस्तकदेशः शिरःप्रदेशो यस्य पुराणपुरुषत्वात् स तथा तस्य संबोधनं हे अवतानकालायसतलिकाकृतिखलतिमस्तकदेश हे हृषीकेश हे नारायण । त्वं मे कुटिलकुन्तलाविलविलोचनचुम्बनानां समीपं निकटवर्ती न भवसि कुटिलाः पृदाकुसर्पवत् वक्रीभूता मे कुन्तलाः केशास्तैराविले मिलिते विलोचने नयने तयोश्चुम्बनानि वक्रसंयोगाः तेषां तथोक्तानाम् । कथंभूतायाः मे । अदयकचग्रहग्रहिलविग्रहायाः अदयं दयारहितं यथा भवति तथा कचग्रहे हस्तद्वयेन कुन्तलग्राहे ग्रहिलो अतिनिर्बन्धो विग्रहः शरीरं यस्याः सा तथा तस्याः । अत्र व्यङ्ग्यम् । यो मुनिर्वार्धक्ये खल्वाटमस्तकः सन् दीक्षावान् न भवति, तारुण्येन तपो न गृह्णाति, हृषीकैरिन्द्रियैः प्रभूतो योजितो भवति, केशोत्पाटने लोचकरणे रङ्गवक्रुवौ पातयति, विशिष्टलोचलुञ्चने अङ्गुष्ठतर्जनीग्रहणे समर्थो न भवति तस्यापि कीर्तिर्न भवति । अविरलगरलोल्लसल्लपनजाल भुजङ्गमलोकपाल, न संगमागमनमनल्पकल्पसंकल्पितप्राणितायास्तुण्डीराधरामृतानामिति कुम्भीनसप्रभुम् । कीर्तिपतिंवरा पुनश्च किं कुर्वती । इत्यमुना प्रकारेण कुम्भीनसप्रभुं धरणेन्द्रं नागराजं अनभिनन्दन्ती अश्लाघयन्ती । इतीति किम् । अरे अविरलगरलोल्लसल्लपनजाल अविरलेन अविच्छिन्नेन गरलेन विषेण उल्लसत् उन्नमत् लपनजालं सहस्रफणगण[न]मुखसमूहो यस्य स तथा तस्य संबोधनं विधीयते । हे अविरलगरलोल्लसल्लपनजाल । हे भुजङ्गमलोकपाल हे शेषनाग । त्वं मे तुण्डीराधरामृतानां तुण्डीरं पक्वबिम्बफलं तथाकारौ यावधरौ दन्तवाससी तयोरमृतानि पीयूषापानकानि तेषां तुण्डीराधरामृतानां संगमागमनं संगमं प्राप्तिर्न भवति । कथंभूतायाः मे । अनल्पकल्पसंकल्पितप्राणितायाः अनल्पकल्पेषु असंख्येयप्रलयकालपर्यन्तेषु संकल्पितं नैमित्तिकैरादिष्टं प्राणितं जीवितं यस्याः सा तथा तस्याः । अत्र व्यङ्ग्यम् । यो मुनिर्मधुरभाषी न भवति, मुखात् विषवत्कटुकानि वचनानि वर्षति, अनु च भुजङ्गमलोकान् कामुकान् पालयति, तस्यापि कीर्तिर्न भवति । कीर्तिपतिंवरा केव अद्यापि स्थितिं न बध्नाति । मृगाङ्गनेव मृगभार्येव । कथंभूता मृगाङ्गना । मरुमरीचिवीचिनिचयवञ्च्यमाना मरुमरीचिर्मृगतृष्णा तस्या वीचयः कल्लोलास्तासां निचयः समूहस्तेन वञ्च्यमाना प्रतार्यमाणा । पुनश्च कीर्तिपतिंवरा केव स्थितिं न बध्नाति । [वसुमतीपतेर्मतिरिव वसुमती पृथ्वी तस्याः पते राज्ञो मतिर्बुद्धिरिव ।]

---

१. आदर्शपुस्तकेषु तु 'मुनेर्मनीषेव बुद्धिरिव बुद्धिर्यथा' इति पाठ आसीदिति तं लेखकप्रमादजं मत्वा योग्यतया पूरितोऽस्माभिः.

पदप्रत्यवसितस्य वसुमतीपतेर्मतिरिव, निखिलमलविलयोन्मीलितान्तरालोकलोचनस्य मुनेर्मनीषेव, च न क्वचिदद्यापि बध्नाति स्थितिम् ॥

यस्य च सुकृतिनस्तपस्तपनकरकाश्मीरकेसरारुणितस्तुतिमुखरसुरयोषिदलकवलयादा विदितादुदयाचलदरीसंदोहादचलदरीसंदोहवदमृतापगाप्रवाहापहसितयशःफेनपटलपाण्डुरोपलान्तरालदेशादा सेतुबन्धमेखलाकुलकुहरान्मेखलाकुलकुहरनिलीनकिन्नरीगणगीयमानदयादमनियमनामशुचिपञ्च-

---

कथंभूतस्य वसुमतीपतेः । पदप्रत्यवसितस्य राज्यभ्रष्टस्य । पुनश्च कीर्तिपतिंवरा केव स्थितिं न बध्नाति । मुनेर्मनीषेव योगिनो बुद्धिरिव । केवलज्ञानमिवेत्यर्थः । कथंभूतस्य मुनेः । निखिलमलविलयोन्मीलितान्तरालोकलोचनस्य निखिलाश्च ते मलास्त्रिषष्टिप्रकृतयस्तेषां विलये विनाशे उन्मीलितान्तरात्प्रादुर्भूतं अन्तरालोकलोचनं केवलज्ञानं यस्य स तथा तस्य । उपमालंकारान्तर्दीपकालंकारः ॥

यस्य च श्रीसुदत्ताचार्यस्य सुकृतिनो विशिष्टपुण्यवतो विशिष्टविदुषो वा गुणविजृम्भितानि गुणप्रसरान् जनपदगोप्यः अनेकदेशस्थितगोपाङ्गनाः गायन्ति गानं कुर्वन्ति । कथं गायन्ति । आ मर्यादीकृत्य अभिव्याप्य वा । 'आङ् मर्यादाभिविध्योः' पर्यपाङ्योगे पञ्चमी भवति इति ज्ञातव्यम् । कस्मात् । उदयाचलदरीसंदोहात् पूर्वदिक्स्थितोदयाचलगिरि गुहासमूहात् । कथंभूतात् उदयाचलदरीसंदोहात् । तपस्तपनकरकाश्मीरकेसरारुणितस्तुतिमुखरसुरयोषिदलकवलयात् तपो द्वादशविधं तदेव तपनः श्रीसूर्यस्त्रिभुवनद्योतकारकत्वात् तस्य कराः किरणास्त एव काश्मीरकेसराणि वाह्लीकदेशकुङ्कुमानि तैररुणितानि रञ्जितानि रञ्जितानि स्तुतिमुखराणां स्तवनवाचालानां सुरयोषितां देववल्लभानां अलकवलयानि मस्तकाग्रन्थितचूर्णकुन्तलमण्डलानि यस्मिन्नुदयाचलदरीसंदोहे स तथा तस्मात् । [पुनः कथंभूतात्] उदयाचलदरीसंदोहात् । विदितात् त्रिभुवनविख्यातात् । पुनश्च जनपदगोप्यो गुणविजृम्भितानि कथं गायन्ति । आ मर्यादीकृत्य अभिव्याप्य वा । कस्मात् । आ सेतुबन्धमेखलाकुलकुहरात् सेतुबन्धो नाम दक्षिणदिक्पर्वतस्तस्य मेखलाः कटिन्यस्तासां कुलं समूहस्तस्य कुहरं विवरं गुहेत्यर्थस्तस्मात् । कथंभूतात् सेतुबन्धमेखलाकुलकुहरात् । अचलदरीसंदोहवदमृतापगाप्रवाहापहसितयशःफेनपटलपाण्डुरोपलान्तरालदेशात् अचलः सेतुबन्धनाम पर्वतस्तस्य दर्यो गुहास्तासां संदोहवत् अमृतापगाप्रवाहा गगनलग्नपूरास्तानपहसन्ति तिरस्कुर्वन्ति इत्येवंशीलानि यानि यशांसि पुण्यगुणकीर्तनानि तेषां (?) फेनपटलानि डिण्डीरमण्डलानि तद्वत् पाण्डुराः शुक्लवर्णा उपलान्तरालदेशाः शिलानामभ्यन्तरप्रदेशा यस्मिन् सेतुबन्धमेखलाकुलकुहरे तत्तथोक्तं तस्मात् । पुनश्च जनपदगोप्यो गुणविजृम्भितानि

मादिगीतवाचाटकन्दरादा मन्दरधराधरनितम्बाद्धराधरनितम्बाडम्बरस्थपुटपथप्रस्थानमन्थरितगतिकीर्तिमन्दाकिनीतरङ्गदन्तुरदरवदनाच्चा तुहिनशैलचूलिकाचक्रवालात्तुहिनशैलचूलिकाचक्रवालविलासीनि गायन्ति गुणविजृम्भितानि जनपदगोप्यः ॥

स भगवान्पुण्यपानीयवर्षी कोऽप्यपूर्वः पर्जन्य इव विनतविनेयजनसस्यप्रसराः पुरस्थानीयद्रोणमुखकार्वटिकसंग्रहनिगमग्रामविश्वंभराः समभिन-

---

कथं गायन्ति आ अभिव्याप्य आ मर्यादीकृत्य । कस्मात् मन्दरधराधरनितम्बात् अस्ताचलपर्वततटात् । कथंभूतात् मन्दरधराधरनितम्बात् । मेखलाकुलकुहरनिलीनकिन्नरीगणगीयमानदयादमनियमनामशुचिपञ्चमादिगीतवाचाटकन्दरात् मेखलानां कटिनीनां कुलानि समूहाः तेषां कुहराणि विवराणि तेषु निलीना उपविष्टा याः किन्नर्यो देवाङ्गनाविशेषास्तासां गणैः समूहैः गीयमानानि गानं प्रत्यानीयमानानि दया कारुण्यं दमो जितेन्द्रियत्वं नियमाश्च पञ्च महाव्रतानि रात्रिभोजनवर्जनषष्ठानि नाम च श्रीसुदत्ताचार्य इति तैः शुचीनि पवित्राणि यानि पञ्चमान्त(दि)रागगीतानि तैर्वाचाटा वाचालाः कन्दरा गुहा यस्य मन्दरधराधरनितम्बस्य स तथा तस्मात् । पुनश्च जनपदगोप्यो गुणविजृम्भितानि कथं गायन्ति । आ मर्यादीकृत्य अभिव्याप्य वा । कस्मात् । आ तुहिनशैलचूलिकाचक्रवालात् तुहिनशैलो हिमाचलपर्वतस्तस्य चूलिकाचक्रवालं शिखराणां मण्डलं तस्मात् तुहिनशैलचूलिकाचक्रवालात् । कथंभूतात् तुहिनशैलचूलिकाचक्रवालात् । धराधरनितम्बाडम्बरस्थपुटपथप्रस्थानमन्थरितगतिकीर्तिमन्दाकिनीतरङ्गदन्तुरदरवदनात् धराधरस्य हिमाचलपर्वतस्य ये नितम्बास्तटानि तेषामाडम्बर आटोपस्तस्मिन् स्थपुट उच्चनीचो योऽसौ पन्था मार्गस्तस्य प्रस्थानेन प्रयाणेन मन्थरिता मन्दगमना गतिर्गमनं यस्याः सा चासौ कीर्तिः पुण्यगुणवर्णनं सैव मन्दाकिनी गङ्गानदी त्रैलोक्यमार्गत्रयगामित्वात् तस्यास्तरङ्गाः कल्लोलाः स्यादस्तीत्यादिलक्षणास्तैर्दन्तुराणि उन्नतदन्तानि दरवदनानि गुहामुखानि यस्य तुहिनशैलचूलिकाचक्रवालस्य तथा तस्मात् । कथंभूतानि गुणविजृम्भितानि । तुहिनशैलचूलिकाचक्रवालविलासीनि तुहिनशैलो हिमाचलपर्वतस्तस्य चूलिकाः शिखराणि तासां चक्रवालेषु मण्डलेषु विलसन्ति उल्लसन्तीत्येवंशीलानि तानि तथोक्तानि चकार । उक्तसमुच्चयार्थालंकारः ॥

स जगत्प्रसिद्धो भगवान् इन्द्रादीनामाराध्यो ज्ञानातिशयत्वात् उद्यानं राजपुरनगरसंबन्धि उद्यानं [नन्दन]वनमपश्यत् ददर्श इति क्रियाकारकसंबन्धः । स भगवान् किं कुर्वाणः सन् वनमपश्यत् । विहरमाणः पर्यटनं कुर्वाणः । किं कुर्वन् विहरमाणः । पुरस्थानीयद्रोणमुखकार्वटिकसंग्रहनिगमग्रामविश्वंभराः समभिनन्दयन् पुरं परिखावप्रप्रतोलिकाप्राकारादिसमन्वितं राजाधिष्ठितं च स्थानीयं च अष्ट[शत]ग्रामप्रतिबद्धं नगर-

न्दयन्विहरमाणः, प्रणतसकलदिक्पालमौलिमण्डनीभवच्चरणनखरत्नोत्करः, कैश्चिच्चरणकरणनयनिरूपणगुणहारविहितहृदयभूषणैः कैश्चित्समस्तश्रुतधरोद्धरणधृतादिपुरुषधिषणैः कैश्चित्पुराणपुरुषचरितविचारचातुरीयशुचिवचनसुमनोविनिर्मितावतंसभूषितभव्यश्रोत्रैः कैश्चिदात्मेतरतर्ककर्कशोदर्कवितर्का-

---

विशेषः, द्रोणमुखं च चतुःशतग्रामप्रतिबद्धम्, कार्वटिकं च द्विशतग्रामप्रतिबद्धम्, संग्रहश्च दशग्रामप्रतिबद्धः, निगमग्रामाश्च भक्तग्रामाः कथ्यन्ते तेषां संबन्धिन्यो विश्वंभरा भूमयस्ताः कर्मतापन्नाः समभिनन्दयन् आनन्दं प्रापयन् । कथंभूताः विश्वंभराः । विनतविनेयजनसस्यप्रसराः विनता नम्रीभूता ये विनेयजना भव्यप्राणिनस्त एव सस्यानि धान्यानि तेषां प्रसरो व्याप्तिर्यासु पुरादिविश्वंभरासु तास्तथा । स भगवान् कथंभूतः । पुण्यपानीयवर्षी पुण्यमेव पानीयं जलं अमृतं जगतां जीवनत्वात् तद्वर्षति क्षरतीत्येवंशीलः पुण्यपानीयवर्षी । कोऽपि अनिर्वचनीयोऽपूर्वोऽभिनवः पर्जन्य इव मेघसदृशः । स भगवान् अपरं कथंभूतः । प्रणतसकलदिक्पालमौलिमण्डनीभवच्चरणनखरत्नोत्करः प्रणताः नम्रीभूताः सकलाः समग्रा ये दिक्पाला राजानस्तेषां मौलयः किरीटानि 'चूडाकिरीटकेशाश्च संयता मौलयस्त्रयः' इति वचनात् तेषां मण्डलीभवन् चरणनखरत्नोत्करो यस्य चरणयोर्नखा एव रत्नानि तेषामुत्करः समूहः स तथोक्तः । स भगवानपरं कथंभूतः । भूरिभिः प्रचुरैः पारासरिभिस्तपस्विनीभिरपरेण अनूचानेन साङ्गे प्रवचने अधीतिना श्रमणसंघेन ऋषिमुनियत्यनगारलक्षणेन उपास्यमानपादमूलः सेव्यमानपादमूलाधोभागः । कथंभूतैः पारासरिभिः । कैश्चिद्विवक्षितैः चरणकरणनयनिरूपणगुणहारविहितहृदयभूषणैः चरणकरणं च सम्यक्चारित्रानुष्ठानं नयनिरूपणं च नयचक्रशास्त्रविवरणं गुणाश्च ज्ञानध्यानादयस्त एव हारा मुक्तावल्यस्तैर्विहितानि अनुष्ठितानि हृदयभूषणानि वक्षस्थलमण्डलानि येषां पारासरिणां ते तथा तैः । पुनश्च कैश्चिद्विवक्षितैः । समस्तश्रुतधरोद्धरणधृतादिपुरुषधिषणैः समस्तं समग्रं यच्छ्रुतं शास्त्रं द्वादशाङ्गलक्षणं तदेव धरा भूमिर्धरः पर्वतो वा तदुद्धरणे तदुच्चालने धृता आत्मन्यारोपिता आदिपुरुषस्य श्रीनारायणस्य वृषभजिनस्य वा धिषणा बुद्धिर्यैः पारासरिभिस्ते तथा तैः । अपरं कैश्चिद्विवक्षितैः पुराणपुरुषचरितविचारचातुरीयशुचिवचनसुमनोविनिर्मितावतंसभूषितभव्यश्रोत्रैः पुराणपुरुषास्तीर्थकृच्चक्रवर्तिवलयवासुदेवास्त्रिषष्टिलक्षणास्तेषां चरितानि ऐतिह्यानि पुराणानि तेषां विचारो विवरणं तस्य या चातुरीया चतुरता तयोपलक्षितानि शुचिवचनानि पूर्वापरविरोधरहितानि वचनानि तान्येव सुमनसः पुष्पाणि तैर्विनिर्मितानि रचितानि अवतंसानि कर्णाभरणानि तैर्भूषितानि शृङ्गारितानि भव्यानां रत्नत्रययोग्यानां पुरुषाणां श्रोत्राणि शब्दग्रहा यैस्ते तथा तैः । अपरं कैश्चिद्विवक्षितैः । आत्मेतरतर्ककर्कशोदर्कवितर्कार्कविकास्यमानभुवनाशयशतपत्रैः आ-

केविकास्यमानभुवनाशयशतपत्रैः कैश्चिन्नव्यानव्यकाव्योपदेशकच्छस्वच्छन्दोञ्छनागच्छदतुच्छच्छेकच्छात्रच्छन्नव्याख्यानमंण्डपानीकैः कैश्चिदैन्द्रजैनेन्द्रचान्द्रापिस(श)लपाणिनीयाद्यनेकव्याकरणोपदिश्यमानशब्दार्थसंबन्धवैदग्धीसरित्क्षालितशिष्यशेमुषीपदविन्यासावनीकैरपरैश्च तत्तद्विद्यानवद्यमतिमन्दाकिनीप्रवाहावगाहगौरितान्तेवासिमानसवासःप्रसरैः सितसिचयैरिव परिमुषितकषायकालुष्यैश्चित्रार्पितद्विपैरिव मदरहितैः कोकनदकाननैरिव प्र-

---

त्मन आर्हतमतस्य इतरेषां जैमिनिकपिलकणचरचार्वाकशाक्यानां [च] ये तर्काः प्रमाणशास्त्राणि तेषां कर्कशोदर्कः विषमतरोत्तरविचारस्तस्य वितर्को विवरणं स एवार्कः श्रीसूर्यः प्रमेयकमलानन्दकारित्वात् तेन विकास्यमानानि स्फुटीक्रियमाणानि भुवनस्य त्रैलोक्यस्य आशयशतपत्राणि हृदयकमलानि यैः पारासरिभिस्ते तथा तैः। अपरं कैश्चिद्विवक्षितैः। नव्यानव्यकाव्योपदेशकच्छस्वच्छन्दोञ्छनागच्छदतुच्छच्छेकच्छात्रच्छन्नव्याख्यानमण्डपानीकैः नव्यानि च आधुनिकानि च अनव्यानि च चिरंतनानि यानि काव्यानि साहित्यानि तेषामुपदेशो व्याख्यानं स एव कच्छः पुष्पवाटिका तस्य स्वच्छन्दोञ्छनं यथेष्टावचयस्तदर्थमागच्छन्तो ढौकमाना अतुच्छा बहुलाः छेका दक्षतरा ये छात्रा अन्तेवासिनस्तैः छन्नानि व्याप्तानि व्याख्यानमण्डपानीकानि व्याख्यानस्थानसमूहा येषां पारासरिणां ते तथा तैः। पुनश्च कैश्चिद्विवक्षितैः। ऐन्द्रजैनेन्द्रचान्द्रापिस(श)लपाणिनीयाद्यनेकव्याकरणोपदिश्यमानशब्दार्थसंबन्धवैदग्धीसरित्क्षालितशिष्यशेमुषीपदविन्यासावनीकैः ऐन्द्रं इन्द्रेण कविना कृतम्, चन्द्रेण कविना कृतं चान्द्रम्, आपिशलिकविना कृतमापिशलम्, पाणिनीयं च पणिपुत्रकविरचितम्, तानि आदिर्येषां शाकटायनामरकाशकृत्स्नादीनां तानि च अनेकान्यष्टसंख्यानि बहुसंख्यानि वा यानि व्याकरणानि तैरुपदिश्यमानो विगीयमानो योऽसौ शब्दार्थयोः संबन्धस्तस्य वैदग्धी चातुर्यता सैव सरित् गङ्गानदी तया क्षालिता निर्मलीकृता शिष्याणां विद्यार्थिनां शेमुष्याः बुद्धेः पदविन्यासभूमिर्यैः पारासरिभिस्ते तथा तैः। अपरैश्च पारासरिभिः उपास्यमानपादमूलः। कथंभूतैरपरैः पारासरिभिः। तत्तद्विद्यानवद्यमतिमन्दाकिनीप्रवाहावगाहगौरितान्तेवासिमानसवासःप्रसरैः ताभिस्ताभिर्जगत्प्रसिद्धाभिर्ज्योतिर्मन्त्रायुर्वेदस्त्रीपुरुषरत्नपरीक्षागजागमशालिहोत्रादिभिः विद्याभिः शास्त्रैरनवद्या अकश्मला स्फुरद्रूपा या मतिर्बुद्धिः सैव मन्दाकिनी गङ्गानदी त्रैलोक्यमलप्रक्षालनसमर्थत्वात् तस्याः प्रवाहाः पूरास्तेषामवगाहेन विलोडनेन गौरिता उज्ज्वलीकृता अन्तेवासिनां शिष्याणां मानसवासःप्रसरा मनोवस्त्रविस्तारा यैः पारासरिभिस्ते तथा तैः। अपरं कथंभूतैः पारासरिभिः। परिमुषितकषायकालुष्यैः परिमुषितं दूरमुज्झितं कषायकालुष्यं क्रोधमानमाय-

तिपन्नमित्रभावैः विश्वंभरेश्वरैरिव प्रणीतविग्रहदण्डैरमराङ्गैरिव परित्यक्तदोषैः कामिनीजनैरिव प्रकटितपरलोकागमकामैर्नीतिशास्त्रैरिव प्रकाशितशमयोगतीर्थोद्योगैरनङ्गभोगैरिव निरुपलेपैर्घनसमयदिवसैरिव विदूरितरजोभिरखि-

---

लोभपापं यैस्ते तथा तैः । अपरं कथंभूतैः । सितसिचयैरिव शुक्लवस्त्रैरिव । यथा सितसिचया हरीतकविभीतकादिकषायरहिता भवन्ति । अपरं कथंभूतैः पारासरिभिः । मदरहितैः ज्ञानपूजाकुलजातिवलस्वापतेयरूपतयोपलक्षणाष्टाविधगर्वैरहितैः । अपरं कथंभूतैः । चित्रार्पितद्विपैरिव यथा चित्रलिखितद्विपाः मदरहिताः पानरहिता भवन्ति । अपरं कथंभूतैः । प्रतिपन्नमित्रभावैः प्रतिपन्नोऽङ्गीकृतो मित्रभावो विश्वप्राणिमैत्र्यं यैस्ते तथा तैः । कैरिव । कोकनदकाननैरिव रक्तकमलवनैरिव । यथा कोकनदकाननानि अङ्गीकृतसूर्यभावानि भवन्ति । अपरं कथंभूतैः । प्रणीतविग्रहदण्डैः प्रणीतः सम्यगनुष्ठितो विग्रहदण्डः कायक्लेशो यैस्ते तथा तैः । भूयश्च कथंभूतैः । विश्वंभरेश्वरैरिव यथा विश्वंभरेश्वरैः चक्रवर्तिभिः विग्रहं युद्धं दण्डश्च सैन्यचालनं प्रणयन्ति कुर्वन्ति न सुसंध्यादिकं विदधति । भूयः कथंभूतैः । परित्यक्तदोषैः परित्यक्ताः परिहृता दोषा व्रतातीचारा यैस्ते तथा तैः । कैथंभूतैः । अमराङ्गैरिव । यथा अमराणां देवानामङ्गानि शरीराणि परित्यक्तदोषाणि वातपित्तश्लेष्मरहितानि भवन्ति । भूयश्च किंविशिष्टैः । प्रकटितपरलोकागमकामैः प्रकटितः स्फुटीकृतः परलोकागमे दशाध्यायलक्षणमोक्षशास्त्रे कामः प्रीतिर्यैस्ते तथा तैः । भूयश्च कथंभूतैः । कामिनीजनैरिव यथा कामिनीनां वेश्यानां जनाः समूहाः परलोकागमे कामुकजनागमे कामं कन्दर्पं प्रकटयन्ति । अपरं कथंभूतैः । प्रकाशितशमयोगतीर्थोद्योगैः प्रकाशितः प्रकटीकृतः शमे कर्मक्षये योगे च ध्यानशास्त्रे तीर्थे च ऊर्जयन्ता(उज्जयन्त्या)दौ उद्योगो उद्यमो यैस्ते तथा तैः । अपरं कथंभूतैः । नीतिशास्त्रैरिव यथा नीतिशास्त्राणि राजराद्धान्ताः शमे क्षेमहेतौ योगे च अलब्धलाभे तीर्थेषु च सेनापत्याद्यष्टादशतीर्थेषु उद्योगमुद्यमं प्रकाशयन्ति । उक्तं च—'सेनापतिर्गणको राजश्रेष्ठी दण्डाधिपो मन्त्री महत्तरो बलवत्तरश्चत्वारो वर्णाश्चतुरङ्गबलं पुरोहितोऽमात्यो महामात्यश्चेत्यष्टादश राज्ञां तीर्थां भवन्ति' । अपरं कथंभूतैः । निरुपलेपैर्निष्पापैः निष्परिग्रहैर्वा । कैथंभूतैः । अनङ्गभोगैरिव यथा अनङ्गभोग आकाशविस्तारे कर्दमाद्युपलेपो न लगते । अपरं कथंभूतैः । विदूरितरजोभिः विदूरिते निराकृते रजसी ज्ञानदर्शनावरणकर्मणी चपलता वा यैस्ते तथा तैः । कैरिव । घनसमयदिवसैरिव यथा घनसमयदिवसा मेघकालदिनानि रजोरहिता धूलिविवर्जिता भवन्ति । अपरं कथं-

---

१. 'अनङ्गजाभोगैरिव' इत्यपि क्वचित्पाठः.

---

१.–७. अत्र सर्वत्र 'कैरिव' इत्येव पाठः साधीयान्प्रतीयते.

लद्वीपदीपैरिव तमोपहचरितैर्महावाहिनीप्रवाहैरिव वीतस्पृहाप्रवृत्तिभिः स्रक्कुसुमैरिव निसर्गगुणप्रणयिभिः कुमारश्रमणमनोभिरिवासंजातमदनफलसङ्गैर्निखिलभुवनभद्रान्तरायनेमिभिर्मूलोत्तरगुणोदाहरणभूमिभिर्धर्मामृतवर्षजनितजगदानन्दैः सब्रह्मचारितालताकन्दैश्चित्रशिखण्डिमण्डलीस्तूयमानपुण्याचरणैरन्वाचयीकृतकुस्मृतिसर्गावतरणैर्भूरिभिः पारासरिभिरपरेण चा-

भूतैः । तमोपहचरितैः अज्ञानविनाशकाचारैः । कैरिव । अखिलद्वीपदीपैरिव यथा अखिलद्वीपदीपाः श्रीसूर्यास्तमोपहचरिता ध्वान्तविध्वंसका भवन्ति । अपरं कथंभूतैः । वीतस्पृहाप्रवृत्तिभिः वीता विनष्टा स्पृहाया विषयाभिलाषस्य प्रवृत्तिः प्रवर्तनं येषां ते तथा तैः । कैरिव । महावाहिनीप्रवाहैरिव यथा महावाहिनीप्रवाहाः वीतस्पृहाश्चैतन्यरहिता भवन्ति । पुनः कथंभूतैः । निसर्गगुणप्रणयिभिः निसर्गेण स्वभावेन गुणेषु शास्त्रेषु प्रणयः प्रीतिर्विद्यते येषां ते तथा तैः । कैरिव । स्रक्कुसुमैरिव यथा स्रजां पुष्पमालानां कुसुमानां पुष्पाणां गुणेषु तन्तुषु निसर्गेण प्रणयो रचना भवति । पुनः कथंभूतैः । असंजातमदनफलसङ्गैः असंजातोऽनुत्पन्नो मदनफलस्य अपत्यलक्षणस्य सङ्गः संगतिर्येषां ते तथा तैः । बालब्रह्मव्रतैरित्यर्थः । कैरिव । कुमारश्रमणमनोभिरिव यथा कुमारश्रमणानां कुमारदीक्षितानां मनांसि हृदयानि मदनफलसङ्गरहितानि रागफलसङ्गरहितानि भवन्ति । करे विवाहकंकणवन्धाभावात् । पुनः कथंभूतैः । निखिलभुवनभद्रान्तरायनेमिभिः निखिलस्य समस्तस्य भुवनस्य पृथ्वीमण्डलस्य भद्रस्य युगपद्धनवलधर्मसुखसमूहस्य अन्तरायस्य विघ्नस्य खण्डने नेमिभिश्चक्रधारासदृशैः । पुनः कथंभूतैः । मूलोत्तरगुणोदाहरणभूमिभिः। मूलगुणाः—पञ्चमहाव्रतानि पञ्चसमितयः पञ्चेन्द्रियनिरोधाः लोचश्च षडावश्यकानि च निरम्बरत्वं च अस्नानं भूमिशयनं दन्तप्रक्षालनाभावः स्थितभोजनं एकभक्तं च । उत्तरगुणः—उत्तमक्षमादयो दशशीलसहस्राणि द्वाविंशतिपरीसहजयश्च । तेषां उदाहरणस्य दृष्टान्तवचनस्य भूमयः पृथ्वीमण्डलानि । तत्पुरुषोऽत्र समासः । स्थानभूतैरित्यर्थः । अपरं कथंभूतैः । धर्मामृतवर्षजनितजगदानन्दैः धर्मो धर्मोपदेशः स एव अमृतवर्षः पीयूषवर्षणं तेन जनित उत्पादितो जगतां जगति स्थितभव्यजीवानां आनन्दः परमसुखं यैस्ते तथा तैः। पुनः कथंभूतैः । सब्रह्मचारितालताकन्दैः सब्रह्मचारिता समानधर्मता सैव लता वल्ली स्वर्गमोक्षफलदायि(य)कत्वात् तस्याः कन्दैर्मूलसदृशैः । पुनः कथंभूतैः । चित्रशिखण्डिमण्डलीस्तूयमानपुण्याचरणैः चित्रशिखण्डिनः 'मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ॥' इतिश्लोककथितास्तेषां मण्डली श्रेणिस्तया स्तूयमानानि श्लाघ्यमानानि पुण्याचरणानि पवित्राचारा येषां ते तथा तैः । अपरं कथंभूतैः । अन्वाचयीकृतकुस्मृतिसर्गावतरणैः अन्वाचयीकृतं अप्रधानीकृतं कुस्मृतिसर्गस्य मिथ्यामार्गस्य अवतरणमुत्पत्तिर्यैस्ते तथा तैः । तत्रैव दिवसे तस्मिन्नेव

नूचानेन श्रमणसंघेनोपास्यमानपादमूलः, तत्रैव दिवसे तदेव पुरमनुसिसीर्षुः, घनघोरानकस्वनाकर्णनादुपयुक्तमनःप्रणिधानः, सतीष्वपि नगरे महतीषु वसतिषु पौराणामतीव प्राणिवधे संरब्धा बुद्धिरित्यवधिना वोधेनावबुध्यावधीरितपुरप्रवेशः, पूर्वस्यां च दिशि निवेशितचक्षुःप्रकाशः; सुरसुरभिलपनलूनाग्रभागमिव समशिखरदेशाभोगम्, मृतसिक्तोदयमिव स्निग्धदलवलयम्, इन्द्रनीलकुत्कीलमिव लोचनोल्लासिलीलम्, अन्योन्यविभवसंभावनोद्भटाशयमिव

---

आगमनदिवसे चैत्रमहानवमीदिवसे तदेव पुरं नगरं अनुसिसीर्षुरनुसर्तुमिच्छुः । पुनः कथंभूतो भगवान् । घनघोरानकस्वनाकर्णनात् घनाः प्रचुरा घोरा भयानका आनकानां पटहानां स्वनाः शब्दास्तेषामाकर्णनात् श्रवणात् उपयुक्तमनःप्रणिधानः उपयुक्तं प्रेरितं मनसश्चित्तस्य प्रणिधानं चिन्तनं विचारणं येन स तथोक्तः । अपरं कथंभूतः । सतीष्वपि विद्यमानास्वपि नगरे नगरमध्ये महतीषु वृहतीषु वसतिषु चैत्यालयेषु अवधीरितपुरप्रवेशः अवधीरितो अनादृतः पुरस्य नगरस्य प्रवेशो येन स तथोक्तः । किं कृत्वा । पूर्वं अवधिना वोधेन अवधिज्ञानेन इति अमुना प्रकारेण अवबुध्य ज्ञात्वा । इतीति किम् । पौराणां नगरौकसां बुद्धिर्मतिः प्राणिवधे जीववधे अतीवातिशयेन संरब्धा प्रारब्धा वर्तते । अपरं कथंभूतः । पूर्वस्यां दिशि च ऐन्द्र्यां ककुभि निवेशितचक्षुःप्रकाशः आरोपितलोचनतेजस्कः । समुच्चयालंकारः ॥ **स भगवानिति** । स भगवान् पूर्वस्यां दिशि उद्यानं (नन्दन)वनं अपश्यदवलोकते स्म । इति क्रियाकारकसंबन्धः । कथंभूतमुद्यानम् । समशिखरदेशाभोगम् समो भिन्नत्वरहितः शिखरदेशस्य चूलिकाप्रदेशस्य आभोगो विस्तारो यस्य उद्यानस्य तत् समशिखरदेशाभोगम् । पुनश्च कथंभूतं उद्यानम् । उत्प्रेक्षते—सुरसुरभिलपनलूनाग्रभागमिव सुराणां देवानां सुरभयो गावः सुरभयः कामधेनवस्तासां लपनैर्मुखैर्लूनश्छेदयित्वा चर्वितोऽग्रभागः शिखरभागो यस्य तत्तथोक्तम् । अपरं कथंभूतम् । स्निग्धदलवलयम् स्निग्धानि चिक्कणानि दलानां पर्णानां वलयानि मण्डनानि यस्य तत्तथोक्तम् । अपरं कथंभूतमुद्यानम् । उत्प्रेक्षते—अमृतसिक्तोदयमिव अमृतेन सुधया सिक्त उक्षित उदय उत्पत्तिर्यस्य तत्तथोक्तम् । पुनः कथंभूतम् । लोचनोल्लासिलीलम् लोचनानां नेत्राणामुल्लासिनी आनन्दजननी लीला शोभा यस्य तत्तथोक्तम् । पुनः कथंभूतम् । उत्प्रेक्षते—इन्द्रनीलकुत्कीलमिव इन्द्रनीलो नाम मणिर्मेघवर्णो भवति तस्य कुत्कीलः पर्वतस्तद्वत् । पुनः कथंभूतम् । परस्परव्यतिकरितकिशलयम् परस्परमन्योन्यं व्यतिकरितानि संमीलितानि किशलयानि पल्लवा यस्य तत्तथोक्तम् । पुनः कथंभूतम् । उत्प्रेक्षते—अन्योन्यविभवसंभावनोद्भटाशयमिव अन्योन्यस्य परस्परस्य विभवस्य धनस्य संभावनया दर्शनेन उद्भट उत्कट आशयोऽभिप्रायो यस्य तत्तथोक्तम् । पुनः

परस्परव्यतिकरितकिशलयम्, अखिलविष्टपोत्पत्तिस्थानमिव गर्भितप्रसूतप्रवर्धमानमहीरुहार्भकावस्थानम्, अनङ्गमुनिमण्डलीविहितसहसंवासानुरोधमिव निर्दलितनिखिलाबाधम्, इतरेतरश्रीमत्सरितमिव सकलर्तुशोभासंरम्भोचितम्, अम्बरचरवसनवासकृतकुतूहलमिव गगनतलोच्छलत्फुल्लपरिमलम्, असमशरोद्यावदिवसमिव प्रसवपरागपिष्टातकितदिग्देवतासीमन्तसंतानम्,

---

कथंभूतम्। गर्भितप्रसूतप्रवर्धमानमहीरुहार्भकावस्थानम् गर्भिता अङ्कुरिताः प्रसूता उत्पन्नाः प्रवर्धमाना वृद्धिं गच्छन्तो महीरुहाणां वृक्षाणां ये अर्भका बालका लघुवृक्षास्तेषामवस्थानं स्थितिर्यत्र तत्तथोक्तम्। पुनः कथंभूतम्। उत्प्रेक्षते—अखिलविष्टपोत्पत्तिस्थानमिव यथा अखिलस्य समस्तस्य विष्टपस्य पृथ्वीमण्डलस्य उत्पत्तिस्थानं गर्भितप्रसूतप्रवर्धमानं भवति। पुनः कथंभूतम्। निर्दलितनिखिलाबाधम् निर्दलिता दूरीकृता निखिलस्य लोकस्य आबाधा दुःखं येन तत्तथोक्तम्। पुनः कथंभूतम्। उत्प्रेक्षते—अनङ्गमुनिमण्डलीविहितसहसंवासानुरोधमिव अनङ्गस्य आकाशस्य संबन्धिनो ये मुनयः सप्तर्षयः आकाशचारणा वा मुनयस्तेषां मण्डली श्रेणिस्तया सह विहितः कृतः सहसंवासः संगतिस्तस्य अनुरोध आग्रहो यस्य तत्तथोक्तम्। मुनयो यथा परेषां बाधां निराकुर्वन्ति, तथेदं वनमपि। पुनः कथंभूतम्। सकलर्तुशोभासंरम्भोचितं सकलाः समग्रा ये ऋतवो वसन्तादिषड्ऋतवस्तेषां शोभा पुष्पफलाङ्कुरादिप्रकटता तस्याः संरम्भ आरम्भस्तस्योचितं योग्यम्। पुनः कथंभूतम्। उत्प्रेक्षते—इतरेतरश्रीमत्सरितमिव इतरेतरस्य परस्परस्य या श्रीः शोभा तस्यां मत्सरितं सु(शु)भद्वेषसहितमिव। पुनः कथंभूतम्। गगनतलोच्छलत्फुल्लपरिमलम् गगनतले आकाशमण्डले उच्छलन् उत्पतन् फुल्लानां प्रसूनानां परिमलो गन्धो यस्य तत्तथोक्तम्। पुनः कथंभूतम्। उत्प्रेक्षते—अम्बरचरवसनवासकृतकुतूहलमिव अम्बरचराणां देवानां वसनानां वस्त्राणां वासेषु परिमलेषु कृतं विहितं कुतूहलं विनोदो येन तत्तथोक्तम्। पुनः कथंभूतम्। प्रसवपरागपिष्टातकितदिग्देवतासीमन्तसंतानम् प्रसूनानां परागो रजस्तेन पिष्टातकितः पटवासचूर्णसहितकृतो दिग्देवतानां हरिदेववधूनां सीमन्तसंतानं केशमार्गसमूहो येन तत्तथोक्तम्। पुनः कथंभूतम्। उत्प्रेक्षते—असमशरोद्यावदिवसमिव असमशरस्य कन्दर्पस्य उद्यावदिवसमिव महोत्सवदिनमिव। अपरं कथंभूतमुद्यानम्। प्रसूनमञ्जरीभिः पुष्पवल्लरीभिरुपचितो जटित उपरितनविस्तारो यस्य तत्तथोक्तम्। कथंभूताभिः प्रसूनमञ्जरीभिः। पल्लवपुटान्तरालविनिर्गताभिः पल्लवानां किशलयानां पुटाः पल्लवपुटाः प्रवालपोटनानि तेषामन्तरालेभ्यो मध्येभ्यो विनिर्गताः प्रादुर्भूतास्तथा ताभिः। उत्प्रेक्षते—अनिमिषयोषितां सुरपुरन्ध्रीणां अलिकतटकुड्मलितहस्तनखशुक्तिभिरिव अलिकतटेषु ललाटपट्टेषु कुड्मलिताः पोटलिता ये हस्ताः पाणयस्तेषां नखशुक्तिभिरिव पुनर्भवमुक्तास्फोटैरिव। कथंभूतानां

अशिशिरकरप्रणामप्रणयिनीनामगमविटपान्तरितवपुषामनिमिषयोषितामलि-कतटकुड्मलितहस्तनखशुक्तिभिरिव पल्लवपुटान्तरालविनिर्गताभिः प्रसूनम-ञ्जरीभिरुपचितोपरितनविस्तारम् । आसन्नतरामरापगाभिषेकसंगमाद्गलद्भिः कल्मषलवैरिव मधुकरकुलैरुत्कलुषितबहिःप्रकारम्, उज्जृम्भजपापुष्पसंपादि-तबलिमीशानमौलिमिव परिणतनागरङ्गसंगतशिखम्, अभिनयागमप्रस्तार-मिव तालवहुलव्यवहारम्, घनायतनमिव मन्दारायतनम्, जीमूतवाहनच-

---

अनिमिषयोषिताम् । अशिशिरकरप्रणामप्रणयिनीनाम् अशिशिरकरस्य श्रीसूर्यस्य प्रणामेषु नमस्कारेषु प्रणयिन्यः स्नेहिन्यस्तासां तथोक्तानाम् । अपरं कथंभूतानां अनिमिषयोषिताम् । अगमविटपान्तरितवपुषाम् अगमानां वृक्षाणां विटपेषु कटप्रदे-शेषु अन्तरितानि गुप्तानि वपूंषि शरीराणि यासां तास्तथा तासाम् । पुनरपि कथंभूतं उद्यानम् । आसन्नतरामरापगाभिषेकसंगमाद्गलद्भिः कल्मषलवैरिव मधुकरकुलैरुत्कलुषित-बहिःप्रकारम् । मधुकरकुलैर्भ्रमरसमूहैरुत्कलुषितः कृष्णवर्णीकृतो बहिःप्रकारो बाह्यप्रदेशो यस्य तत्तथोक्तम् । कथंभूतैः मधुकरकुलैः । गलद्भिः कल्मषलवैरिव पापकणैरिव नश्य-द्भिः पापलेशैरिव । कस्मात् गलद्भिः । आसन्नतरामरापगाभिषेकसंगमादिव आसन्नतरा निकटवर्तिनी या अमरापगा आकाशगङ्गा तस्या अभिषेकसंगमात् इव स्नानसंगमात् इव । इवोत्प्रेक्षायाम् । पुनः कथंभूतम् । ईशानमौलिमिव महेश्वरमुकुटमिव । कथंभूतम् । उज्जृम्भजपापुष्पसंपादितबलिम् उज्जृम्भाणि विकसितानि यानि जपापुष्पाणि ओ-ड्रपुष्पाणि (यासु वनकुसुमानि) तैः संपादित उत्पादितो बलिः पूजा यस्य ईशानमौलेः तत्तथोक्तम् । आदिष्टलिङ्गत्वादत्र पुंस्त्वम् । परिणतनागरङ्गसंगतशिखम् परिणतानि पक्वानि नागरङ्गाणि मुखप्रियफलानि तैः संगता संयुक्ता शिखा अग्रं यस्य तत्तथोक्तम् । अपरं कथंभूतम् । तालवहुलव्यवहारम् तालानां ताडवृक्षाणां बहुलः प्रचुरो व्यवहारः प्रवर्तनं यत्र यस्य वा तत्तथोक्तम् । पुनः उत्प्रेक्षते—अभिनयागमप्रस्तारमिव यथा अभिनयागमस्य भरतशास्त्रस्य प्रस्तारस्तालबहुलव्यवहारो भवति द्रुतविलम्बितप्रवर्तनो भवति । पुनः कथंभूतम् । मन्दारायतनम् मन्दाराणां पारिजातवृक्षाणां आयतनं स्थानं तत् । पुनः उत्प्रेक्षते—घनायतनमिव घनस्य मेघस्य आयतनं आकाशमिव । यथा घनायतनं मन्दस्य शनैश्चरस्य आरस्य मङ्गलस्य च आयतनं स्थानं भवति । पुनः कथंभूतम् । नागवल्लीविभवसुन्दरम् नागवल्लीनां ताम्बूललतानां विभवेन घनेन सुन्दरं मनोहरम् । पुनः उत्प्रेक्षते—जीमूतवाहनचरितावतारमिव यथा जीमूतवाहनस्य विद्याधरविशेषस्य चरितस्य चरित्रस्य अवतारः कथासंबन्धो नागवल्लीनां सर्पश्रेणीनां विभवेन सुन्दरो भवति । जीमूतवाहनेन किल दयालुतया गरुडस्य निजशरीरं भक्षितुं दत्तम्, नागास्तु रक्षिताः, एषा लौकिकी कथा वर्तते, सा जीमूतवाहनचरित्रात् ज्ञातव्या । पुनः कथंभूतम् ।

रितावतारमिव नागवल्लीविभवसुन्दरम्, मदनायुधसदनमिव संनह्यमानबाणासनम्, मकरध्वजाराधनप्रसाधितगात्रैर्मयूरबर्हातपत्रैरिव पूगतरुभिः श्यामलितदिक्पालनिलयम्; अपि च क्वचिदक्षोलजालनिर्जितखर्जूरफलपचेलिमतारुणितदिविजविमानचन्द्रशालम्, क्वचिल्लवलीदलोड्डमरडम्बरचुम्बितजम्बीरासरालम्, क्वचिदश्वत्थोत्थानकदर्थितकपित्थस्कन्धम्, क्वचिन्नमेरुविराजितराजादनासीनसुरसुन्दरीगणगीयमानमनसिजविजयप्रबन्धम्, क्वचित्खे-

---

संनह्यमानवाणासनम् संनह्यमानः परस्परं मिलन्ते वाणा वीजवृक्षा असनवृक्षाश्च रालवृक्षा यत्र तत्तथोक्तम्। पुनः उत्प्रेक्षते—मदनायुधसदनमिव मदनस्य कन्दर्पस्य आयुधसदनमिव आयुधशालामिव। यथा मदनायुधसदनं आरोप्यमाणचापं भवति। पुनः पूगतरुभिर्गुवाकवृक्षैः श्यामलितदिक्पालनिलयम् श्यामलिताः कृष्णवर्णीकृता दिक्पालानां नरेन्द्राणां निलया मन्दिराणि यत्र तत्तथोक्तम्। कथंभूतैः पूगतरुभिः। मयूरवर्हातपत्रैरिव मयूरवर्हाणां मयूरपिच्छानां आतपत्रैरिव। मयूरपिच्छश्रीकारिभिरिवेत्यर्थः। कथंभूतैः मयूरवर्हातपत्रैः। मकरध्वजाराधनप्रसाधितगात्रैः मकरध्वजस्य कन्दर्पस्य आराधनाय पूजनविधये प्रसाधितानि रचितानि गात्राणि शरीराणि येषामातपत्राणां तानि मदनाराधनप्रसाधितगात्राणि तैस्तथोक्तैः। अपि च सन्ति केचिद्विशेषाः। तानेवाह— क्वचिदक्षोलजालनिर्जितखर्जूरफलपचेलिमतारुणितदिविजविमानचन्द्रशालम् क्वचित् कस्मिंश्चित्प्रदेशे। कथंभूतमुद्यानम्। अक्षोलानां कर्पंरालानां कन्दरालानामक्षोटानाम्। गर्वभाण्डानामिव(ति) यावत्। जालैः समूहैर्निर्जितास्तिरस्कृता ये खर्जूराः पिण्डखर्जूरवृक्षाः तेषां फलानां पचेलिमता स्वयमेव पच्यमानता। 'पचेः केलिमर् कर्मकर्तरि' इति वचनात्। तया अरुणिता अव्यक्तरागसंयुक्ताः कृताः दिविजानां देवानां विमानानां व्योमयानानां चन्द्रशालाः शिरोगृहाणि यत्र तत्तथोक्तम्। पुनः क्वचिल्लवलीदलोड्डमरडम्वरचुम्बितजम्बीरासरालम् क्वचित् कस्मिंश्चित्प्रदेशे लवलीदलानां चन्दनलतापत्राणां उड्डमर उत्कटो योऽसौ डम्बर आटोपस्तेन चुम्बिताः स्पृष्टा ये जम्बीरा दन्तशठवृक्षास्तैरसरालमपर्यन्तम्। पुनः क्वचिदश्वत्थोत्थानकदर्थितकपित्थस्कन्धम् अश्वत्थानां पिप्पलानां उत्थानेन वृक्षोपरि वृक्षोत्पादनेन कदर्थिताः विडम्बिताः कपित्थानां मन्मथतरूणां स्कन्धाः प्रकाण्डाः शाखावधिस्थानानि यत्र तत्तथोक्तम्। पुनः क्वचिन्नमेरुविराजितराजादनासीनसुरसुन्दरीगणगीयमानमनसिजविजयप्रबन्धम्. क्वचित्कस्मिंश्चित्प्रदेशे नमेरुणा पारिजातवृक्षेण विराजितः शोभितो योऽसौ राजादनः क्षीरिवृक्षः। क्षीरिवृक्षोपरि नमेरुरुत्पन्न इत्यर्थः। तन्मूले आसीना उपविष्टा याः सुरसुन्दर्यो देवाङ्गनास्तासां गणेन पेटकेन गीयमानः संशब्दायमानो मनसिजस्य कन्दर्पस्य विजयप्रबन्धो जगज्जयनप्रथटको यत्र तत्तथोक्तम्। पुनः क्वचित्खेचरावतरणपततसं-

चरावतरणपतत्संतानकुम्पलसंवलितपारिजातलतान्तम्, क्वचित्परमतपश्चरणोपार्जितैः सुकृतैरिव महाफलप्रदायिभिः पनसपादपैरुपधृतपर्यन्तम्, क्वचिद्वनलक्ष्मीस्तनमिवात्मीयकान्तिजनितनीलहरिद्वदनमुद्यानमपश्यत् ॥

किं च—

यद्वृन्तगलितैः पुष्पैरुपहारमुपाहरत् ।
तारोद्भासिनभःशोभां बिभर्त्यालवालभूमिषु ॥ ६९ ॥
यत्प्रान्तपल्लवोल्लासिप्रसूनच्छन्नसंचयम् ।
दधातीन्दुमणिद्योतिपद्मरागाचलश्रियम् ॥ ७० ॥

---

तानकुम्पलसंवलितपारिजातलतान्तम् क्वचित्कस्मिंश्चित् प्रदेशे खेचराणां विद्याधराणां अवतरणेन आगमनेन पतन्ति त्रुटन्ति संतानकुम्पलानि वृक्षविशेषपल्लवास्तैः संवलितानि मिश्रितानि पारिजातानां नमेरुवृक्षाणां लतान्तानि पुष्पाणि यत्र तत्तथोक्तम् । पुनः क्वचित्कस्मिंश्चित्प्रदेशे पनसपादपैरुपधृतपर्यन्तम् पनसपादपैः कण्टकिफलवृक्षैरुपधृतपर्यन्तम् उपधृतो व्याप्तः पर्यन्तः पुरस्ताद्भूमिर्यस्य तत्तथोक्तम् । कथंभूतैः पनसपादपैः । महाफलप्रदायिभिः महान्ति बृहन्ति फलानि प्रददति प्रयच्छन्तीत्येवंशीला महाफलप्रदायिनस्तैः । पुनः कथंभूतैः पनसपादपैः । सुकृतैरिव तीर्थंकरनामोपार्जनदक्षैः विशिष्टपुण्यैरिव । यथा सुकृतानि महाफलप्रदायीनि भवन्ति । कथंभूतैः सुकृतैः । परमतपश्चरणोपार्जितैः परमतपश्चरणं इच्छानिरोधलक्षणं तेनोपार्जितैः स्वीकृतैः । पुनः कथंभूतैः । क्वचित्कस्मिंश्चित्प्रदेशे आत्मीयकान्तिजनितनीलहरिद्वदनम् आत्मीयकान्त्या निजकायतेजसा जनितमुत्पादितं नीलं कृष्णवर्णं हरिद्वदनं दिङ्मण्डलं येन तत्तथोक्तम् । अपरं कथंभूतम् । वनलक्ष्मीस्तनमिव वनश्रीकुचमिव वनलक्ष्मीस्तनं आत्मीयकान्त्या उत्पादितश्यामलितदिग्वदनं भवति । उत्प्रेक्षादिसंकरालंकारः ॥

किंच अस्ति विशेषः । **यद्वृन्तगलितैरित्यादि** । यदुद्यानं वृन्तानि प्रसवबन्धनानि तेभ्यो गलितानि अधःपतितानि तैर्वृन्तगलितैः पुष्पैः प्रसूनैः उपहारं पूजां श्रीसुदत्ताचार्यमुद्दिश्य उपाहरत् कुर्वद्वर्तते । यद्वनं आलवालभूमिषु वृक्षसेचनस्थानभूमिषु तारोद्भासिनभःशोभां ताराभिश्चान्द्रायणीभिरुद्भासि उद्भासनशीलं यन्नभः आकाशं तस्य शोभां उपमां बिभर्ति धरति । यदुद्यानं इन्दुमणिद्योतिपद्मरागाचलश्रियं दधाति इन्दुमणयश्चन्द्रकान्तमणयस्तैर्द्योतते शोभते इत्येवंशीलः इन्दुमणिद्योति स चासौ पद्मरागमणिपर्वतः तस्य श्रियं शोभां दधाति । तत्कारणगर्भितं विशेषणमाह— यदुद्यानं कथंभूतम् । प्रान्तपल्लवोल्लासिप्रसूनच्छन्नसंचयम् प्रान्तपल्लवेषु अग्रप्रवालेषु उल्लसन्तीत्येवंशीलानि प्रान्तपल्लवोल्लासीनि तानि च तानि प्रसूनानि पुष्पाणि तैश्छन्नः

यत्र च मधुकरकुटुम्बिनीनिकुरम्बाडम्बरचुम्ब्यमानमकरन्दकदम्बस्तम्बविलम्बितनिजनितम्बिनीबिम्बाधरपानपरवशविलासिनि, सुरतसुखोन्मुखमुखरपरिखेलत्सखीसखानेकखगप्रेङ्खन्नखमुखावलिख्यमानफलितशिखरैः समीपशाखिभिः स्खलितप्रसंख्यानमखसंमुखीनवैखानसमानसे, कितवसहचरोपरचितकरवाद्यलयलास्यमानमधुमत्तसीमन्तिनीसमालोकनकुतूहलमिल-

---

संवृतः संचयः समूहोऽपचयो वा यस्य उद्यानस्य तत्तथोक्तम् । उपमालंकारः ॥

यत्र च यस्मिन् उद्याने सुन्दरीजनेन सह स्त्रीजनेन सह कामिनो विलासिनः पुरुषा रमन्ते क्रीडां कुर्वन्ति इति । क्रियाकारकसंबन्धः । कथंभूते यत्र यस्मिन्नुद्याने । मधुकरकुटुम्बिनीनिकुरम्बाडम्बरचुम्ब्यमानमकरन्दकदम्बस्तम्बविलम्बितनिजनितम्बिनीबिम्बाधरपानपरवशविलासिनि मधुकरा भ्रमरास्तेषां कुटुम्बिन्यो भ्रमर्यस्तासां निकुरम्बेण आडम्बरेण आटोपतया शब्दगर्जितया वा चुम्ब्यमानः आस्वाद्यमानो योऽसौ मकरन्दकदम्बस्तम्बः मकरन्दस्य पुष्परसस्य कदम्बः समूहस्तस्य स्तम्बो गुल्मः स विलम्बितः अनुकृतः उपमानमानीयमानो निजनितम्बिनीनां स्वकीयकमनीयकामिनीनां बिम्बाधरः पक्वतिन्दुकेरीफलसमानोष्ठः तस्य पाने आस्वादने परवशा नाथवन्तः पराधीना विलासिनः कामिनो यत्र तत्तथोक्तं तस्मिन् । पुनः कथंभूते उद्याने । सुरतसुखोन्मुखमुखरपरिखेलत्सखीसखानेकखगप्रेङ्खन्नखमुखावलिख्यमानफलितशिखरैः समीपशाखिभिः स्खलितप्रसंख्यानमखसंमुखीनवैखानसमानसे समीपशाखिभिर्निकटवर्तिभिर्वृक्षैः स्खलितप्रसंख्यानं विघटितध्यानं मखसंमुखीनवैखानसानां तापसानां मानसं मखे यज्ञे संमुखीनाः तत्परा ये वैखानसास्तपस्विनो वानप्रस्थास्तेषां मानसं चित्तं मखसंमुखीनवैखानसमानसं यत्र तत्तथोक्तं तस्मिन् । कथंभूतैः समीपशाखिभिः । सुरतसुखे रतिक्रीडासौख्ये उन्मुखा बद्धोत्कण्ठा मुखरा वाचालाः परि समन्तात्खेलन्तो रममाणाः सखीसखा निजपक्षिणीभिः संयुक्ता अनेका नानाप्रकारा ये [1]विशेषपदकोपलक्षिताः खगाः पक्षिणस्तेषां प्रेङ्खन्ति प्रचलन्ति यानि नखमुखानि तैः अवलिख्यमानानि चुम्ब्यमानानि फलितशिखराणि फलवदग्राणि येषां समीपशाखिनां ते तथोक्तास्तैः । पुनश्च कथंभूते यस्मिन्नुद्याने । कितवसहचरोपरचितकरवाद्यलयलास्यमानमधुमत्तसीमन्तिनीसमालोकनकुतूहलमिलद्वनदेवताभराभुग्नककुभविटपिनि कितवसहचरैर्धूर्तभर्तृभिरुपरचितं निर्मितं यत्करवाद्यं हस्ततालस्तस्य लयेन क्रियासाम्येन लास्यमाना नर्त्यमाना या म[धुम]त्तसीमन्तिन्यो मदे(द्ये)न मत्ताः कामिन्यस्तासां समालोकनकुतूहलेन निरीक्षणविनोदेन मिलन्त्य एकत्रीभवन्त्यो या वनदेवताः व्यन्तर्यस्तासां भरेण भुग्नाः

---

१. 'विशेषणपक्षको' इत्यपि पाठः पुस्तकान्तरे.

द्रुनदेवताभराभुग्नककुभविटपिनि, वटविटपविटङ्कसंकटकोटरोपविष्टवाचाटशुकपेटकपठ्यमानेन विटविकटरताटोपचाटुपाटवेन विघटमानमुनिमनःकपाटपुटसंधिबन्धे, विकिरकुलकलहवशविशीर्यमाणकुरबकतरुमुकुरमुक्ताफलितवितर्दिकावलिकर्मणि, चपलकपिसंपातलुप्तमानभराभिर्निर्भरविभ्रमारम्भसंभ्रमाभिर्भामिनीभिः परिरभ्यमाणनिभृतसरसापराधवल्लभे, भुजमूलपुलकवितरणरतकान्तकैतवान्तरायितयुवतिपुष्पावचितिनि, सरलद्रुमस्त-

---

त्रोटिताः ककुभविटपिनः अर्जुनवृक्षा यत्र तत्तथोक्तं तस्मिन् । अपरं कथंभूते उद्याने । वटविटपविटङ्कसंकटकोटरोपविष्टवाचाटशुकपेटकपठ्यमानेन विटविकटरताटोपचाटुपाटवेन विघटमानमुनिमनःकपाटपुटसंधिबन्धे विटानां कामुकानां विकटः प्रव्यक्तः प्रस्फुटो योऽसौ रताटोपः कामक्रीडाडम्बरस्तस्मिन् चाटुपाटवं मिथ्यास्तुतिपटुत्वं तेन विघटमान उद्धट्टमानो मुनीनां ग्रामर्षीणां मनःकपाटपुटस्य चित्तारर्युगलस्य संधिबन्धः श्लेषो यत्र तत्तथोक्तं तस्मिन् । कथंभूतेन विटविकटरताटोपचाटुपाटवेन । वटस्य न्यग्रोधवृक्षस्य विटपः शाखा कटप्रस्तस्य विटङ्कः पल्लवोन्नताग्रभागस्तस्य संकटः संकोचसहितो योऽसौ कोटरः शाखास्थितगर्भस्थानं तत्र उपविष्टं स्थितं वाचाटानां बहुगर्ह्यवाचां शुकानां रक्ततुण्डानां यत्पेटकं समूहः तेन पठ्यमानं उच्चैरुद्गीयमानं यत् विटविकटरताटोपचाटुपाटवं तत्तथोक्तं तेन । अपरं कथंभूते उद्याने । विकिरकुलकलहवशविशीर्यमाणकुरबकतरुमुकुरमुक्ताफलितवितर्दिकावलिकर्मणि विकिराणां पक्षिणां यत्कुलं समूहस्तस्य कलहो युद्धं तस्य वशेन हेतुना विशीर्यमाणानि त्रुट्यन्ति यानि कुरवकतरोः शोणाम्लानवृक्षस्य मुकुराणि बालकुड्मलानि तैर्मुक्ताफलितं मुक्ताफलसंयुक्तं वितर्दिकावलिकर्म वेदिकापूजाविधानं यत्र तत्तथोक्तं तस्मिन् । अपरं कथंभूते उद्याने । चपलकपिसंपातलुप्तमानभराभिर्निर्भरविभ्रमारम्भसंभ्रमाभिर्भामिनीभिः परिरभ्यमाणनिभृतसरसापराधवल्लभे भामिनीभिः कोपनकलत्रैः परिरभ्यमाण आलिङ्ग्यमानो निभृतो मौनवान् विनीतश्च सरसापराधस्तत्कालकृतवल्लभादोष एवं विशेषणचतुष्टयविशिष्टो वल्लभो यत्र तत्तथोक्तं तस्मिन् । कथंभूताभिर्भामिनीभिः । चपलस्य कपेर्वानरस्य संपातेन आगमनेन लुप्तो विनाशितो मानभरश्चित्तसमुत्पन्नेनेत्यतिशयो यासां भामिनीनां तास्तथोक्तास्ताभिः । अपरं कथंभूताभिर्भामिनीभिः । निर्भरं गाढं यथा भवत्येवं योऽसौ विभ्रमारम्भो मर्कटभ्रूक्षेपप्रारम्भस्तस्मात् संभ्रमो भयं यासां तास्तथोक्तास्ताभिः । अपरं कथंभूते उद्याने । भुजमूलपुलकवितरणरतकान्तकैतवान्तरायितयुवतिपुष्पावचितिनि भुजमूले बाहुमूले यत्पुलकवितरणं सशब्दपञ्चनखसंयोगस्तस्मिन् रतस्तत्परो योऽसौ कान्तो भर्ता तस्य कैतवेन कपटेन अन्तरायिता अन्तरायं प्रापिता युवतीनां अतिमनोहरस्त्रीणां पुष्पावचितिः कुसुमचुण्टनं यत्र

म्भसंभूतलताशोकततिविनिर्मितासु पीनस्तनलिखितपत्रलाञ्छितोरःस्थलरम-णरसरभसोच्छलदुत्तालचलनासु लीलान्दोलासु विलसन्तीनां विलासिनीनां मुखरमणिमेखलाजालवाचालिमवहलपञ्चमालप्तिपल्लवितविरहवीरुधि, जम्बूकुजकुञ्जगुञ्जत्पारापतपतङ्गसंदीपितमदनमददरिद्रितसुन्दरीसंभोगहुत-वहे, कदलीदलातपत्रोत्तम्भनभारभरितभर्तृभुजाभोगसंभावनविकटकुचकुम्भ-

---

तत्तथोक्तं तस्मिन्। अपरं कथंभूते उद्याने। सरलद्रुमस्तम्भसंभृतलताशोकतति-विनिर्मितासु पीनस्तनलिखितपत्रलाञ्छितोरःस्थलरमणरसरभसोच्छलदुत्तालचलनासु लीलान्दोलासु विलसन्तीनां विलासिनीनां मुखरमणिमेखलाजालवाचालिमवहलपञ्चमा-लप्तिपल्लवितविरहवीरुधि लीलान्दोलासु क्रीडाप्रेङ्खासु विलसन्तीनां रममाणानां उत्प-तननिपतनानि कुर्वाणानां विलासिनीनां नवयौवनस्त्रीणां मुखराणि वाचालानि मणिभि-रुपलक्षितानि मेखलाजालानि रसनासमूहास्तेषां वाचालिमा वाचालत्वं शब्दवहुलत्वं तेन बहला द्विगुणीकृता या पञ्चमालप्तिः पञ्चमनाम ग्रामरागविशेषः सप्तमः स्वर इति यावत् तया पल्लविता विरहवीरुत् विप्रलम्भलता यस्मिन् तत्तथोक्तं तस्मिन्। कथं-भूतासु लीलान्दोलासु। सरलद्रुमा देवदारुतरवस्त एव स्तम्भास्तेषु संभृता बद्धा या लता वल्ल्यो अशोकततयश्च मञ्जुलतरुश्रेणयस्ताभिः विनिर्मिता रचितास्तास्तथा तासु। अपरं कथंभूतासु लीलान्दोलासु पीनस्तनेषु लिखितानि यानि पत्राणि पत्रवल्लयस्तै-र्लाञ्छितानि शोभितानि यानि उरःस्थलानि वक्षोमण्डलानि तेषु विषये योऽसौ रमणरसः संभोगक्रीडारागस्तस्य रभसः औत्सुक्यं तेन उच्छलन्त उत्पतन्तः उत्तालाः शीघ्रतराः चलनाः पादा यासु लीलान्दोलासु तास्तथा तासु। उक्तं च—'षड्जं मयूरः कवते गाव-स्तु(स्त्व)षभभाषिणः। अजादिकं तु गान्धारं क्रौञ्चः क्वणति मध्यमम्॥ पुष्पसाधारणे काले पिकः कूजति पञ्चमम्। धैवतं हेषते वाजी निषादं बृंहते गजः॥' पुनश्च कथं-भूते उद्याने। जम्बूकुजकुञ्जगुञ्जत्पारापतपतङ्गसंदीपितमदनमददरिद्रितसुन्दरीसंभोग-हुतवहे जम्बूकुजा जम्बूतरवस्तेषां कुञ्जानि लतापिहितोदराणि तेषु गुञ्जन्तः श-ब्दान् कुर्वन्तो ये पारापतपतङ्गाः कलस्वनपक्षिणस्तैः संदीपितः संधुक्षितो योऽसौ मदनमदः कामोद्रेकस्तेन दरिद्रितस्तिरस्कृतः सुन्दरीणां वनितानां संभोगहुतवहो रति-क्रीडावैश्वानरो यत्र तत्तथा तस्मिन्। अपरं कथंभूते उद्याने। कदलीदलातपत्रोत्त-म्भनभारभरितभर्तृभुजाभोगसंभावनविकटकुचकुम्भमण्डलानामितस्ततो विहरन्तीनां रम्भोरूणामनवरतझणझणायमानमणिमञ्जीरशिञ्जिताकुलितजलकेलिदीर्घिकाकलहंससंसदि रम्भावत् कदलीस्तम्भवत् ऊरवः पिचण्डानि यासां ता रम्भोरवः कमनीयकामिन्य-स्तासां रम्भोरूणां अनवरतं निरन्तरं झणझणायमानाः शब्दायमानाः ये मणिमञ्जीराः पञ्चविधमाणिक्यजटितकनकनूपुराणि तेषां शिञ्जितैरव्यक्तशब्दैराकुलिताः किंकर्तव्य-

मण्डलानामितस्ततो विहरन्तीनां रम्भोरूणामनवरतझणझणायमानमणिमञ्जीरशिञ्जिताकुलितजलकेलिदीर्घिकाकलहंससंसदि, रमणरतनिरतवनितारतिरसोत्सेकविचलद्विकचविचकिलप्रालम्बामोदसुरभितसुभगभुजङ्गनाभीवलभिगर्भे, तमालदलनिर्यासरसपूरितकरकिशलयपुटेन यमितनखलेखनीधारिणा खचरनिचयेन रच्यमानसहचरीकपोलफलकतलतिलकविचित्रपत्रभङ्गिनि, खलरताभियुक्तकुटहारिकाताल्लुतलोत्तरलतररुतोत्प्लावितनिच(चु)-

---

तायां मूढीकृता जलकेलिदीर्घिकाणां उदकक्रीडावापिकानां कलहंससंसत् राजहंसश्रेणिर्यत्र तत्तथा तस्मिन् । कथंभूतानां रम्भोरूणाम् । केन वायुना दल्यते विदीर्यते कदली वारणवुसा । अंशुमत्फलेति यावत् । तस्या दलं पर्णं तदेव आतपत्रं छत्रं तस्य उत्तम्भनं उद्धरणमुच्चलनं तस्य भारेण गुरुतया भरितो निचितो योऽसौ भर्तृभुजाभोगः कान्तस्य बाहुमण्डलं तस्य संभावनेन विनयकरणेन विकटं स्फुटीभूतं कुचकुम्भमण्डलं स्तनकलशाभोगो यासां तास्तथा तासाम् । अपरं कथंभूतानां रम्भोरूणाम् । इतस्ततो विहरन्तीनाम् यत्र तत्र पर्यटन्तीनाम् । अपरं कथंभूते उद्याने । रमणरतनिरतवनितारतिरसोत्सेकविचलद्विकचविचकिलप्रालम्वामोदसुरभितसुभगभुजङ्गनाभीवलभिगर्भे रमणरतम् । उपरि स्त्री अधः पुमान् रमणरतमुच्यते । तत्र निरता व्यावृत्तव्यापारवती या वनिता अत्यन्तोत्पादितरागा स्त्री तस्याः रतिरसोत्सेकः भोगक्रीडारागाधिक्यं तेन विचलति त्रुट्यन् योऽसौ विकचानां विकसितानां विचकिलानां मोगरपुष्पाणां प्रालम्ब आजान्वालम्वपुष्पमाला तस्य आमोदेन अतिनिर्हारिणा परिमलेन सुरभितः सुगन्धिकृतः सुभगभुजङ्गस्य सौभाग्यवत्कामुकपुरुषस्य नाभीवलभिगर्भो यत्र नाभ्येव वलभिः । पटलाधारो वंशपञ्जरो वलभिरुच्यते । तस्याः गर्भो मध्यप्रदेशो यत्र तत्तथोक्तं तस्मिन् । अपरं कथंभूते उद्याने । तमालदलनिर्यासरसपूरितकरकिशलयपुटेन यमितनखलेखनीधारिणा खचरनिचयेन रच्यमानसहचरीकपोलफलकतलतिलकविचित्रपत्रभङ्गिनि खचरनिचयेन विद्याधरसमूहेन रच्यमानं समर्प्यमाणं सहचरीणां विद्याधरीणां कपोलफलकतलेषु गण्डस्थलपङ्क्तिकोपरि यत्तिलकं तेन विचित्रा चमत्कारकारिणी पत्रसंवन्धिनी भङ्गी पत्रावलीरचना यत्र तत्तस्मिन् । कथंभूतेन खचरनिचयेन । तमालस्य कालस्कन्धवृक्षस्य दलानि सुगन्धपर्णानि तेषां निर्यासरसेन रसद्रवेण पूरितो भरितः करकिशलयपुटो हस्तपल्लवपुटो येन स तथा तेन । अपरं कथंभूतेन खचरनिचयेन । यमिता घटिता नखलुना समारिता या नखलेखनी पुनर्लिपिकारिणीव तां धरतीत्येवंशीलो विद्याधरनिचयो यमितनखलेखिनीधारी तेन तथा । अपरं कथंभूते उद्याने । खलरताभियुक्तकुटहारिकाताल्लुतलोत्तरलतररुतोत्प्लावितनिच्व(चु)लमूलविलनिलीनोलूकवालकालोकनाकुलकाकोलकुलकोलाहलकाहले खलस्य दुर्जनस्य रते संभोग-

लमूलबिलनिलीनोलूकबालकालोकनाकुलकाकोलकुलकोलाहलकाहले, बहलकोकिलप्रलापगलितलज्जस्य निसर्गादुत्तालतरसुरतसंरम्भिणः पण्याङ्गनाजनस्य कलगलोल्लसल्लोहलोल्लपितानुलपनपरसारिकाशावसंकुलकुलायकरलोपकण्ठजरठिताभिनवाङ्गनारतिचेतसि, माकन्दमञ्जरीमकरन्दबिन्दुस्यन्ददुर्दिनेन मुचकुन्दमुकुलपरिमलोल्लासिना प्रचलाकिकुलकलापसीमन्तोचितेन वातचातकेनाचम्यमानसुरतश्रमखिन्नखेचरीपयोधरमुखलुलितघनघर्मजलमञ्ज-

---

क्रीडायां अभियुक्ता नियोगिनी अधिकारिणी या कुटहारिका जलघटवाहिका दासी तस्यास्तालुतले काकुदमध्ये यत् उत्तरलतरं उत्सुक तरं यद्रुतं शब्दस्तेन उत्प्लावित उड्डायितो निच(चु)लस्य वृक्षस्य मूले अधोमार्गेण यद्बिलं छिद्रं तस्मिन् निलीनो गुप्तं स्थितो योऽसौ उलूकबालकस्तस्यालोकनेन दर्शनेन आकुलानि विह्वलीभूतानि यानि काकोलकुलानि बलिभुक्समूहास्तेषां कोलाहलेन कलकलशब्देन काहलं अस्फुटशब्दो [यत्र] तत्तथोक्तं तस्मिन्। अपरं कथंभूते उद्याने। बहलकोकिलप्रलापगलितलज्जस्य निसर्गादुत्तालतरसुरतसंरम्भिणः पण्याङ्गनाजनस्य कलगलोल्लसल्लोहलोल्लपितानुलपनपरसारिकाशावसंकुलकुलायकरलोपकण्ठजरठिताभिनवाङ्गनारतिचेतसि पण्याङ्गनाजनस्य वेश्याजनस्य कलं मधुरं गले कण्ठे उल्लसन् उच्छलन् सन् लोहलोल्लपितं अव्यक्तशब्दितं तस्य अनुलपनं पुनर्जल्पनं तत्र परास्तत्परा ये शारिकाशावाः पीतपादबालकास्तैः संकुलो व्याप्तो योऽसौ कुलायो मालकस्तेनोपलक्षितो योऽसौ करलो वृक्षस्तस्य उपकण्ठे समीपे जरठितं प्रौढितं अभिनवाङ्गनाया बालवनिताया रतिचेतः संभोगचित्तं यत्र उद्याने तस्मिन्। कथंभूतस्य पण्याङ्गनाजनस्य। बहलः प्रचुरो योऽसौ कोकिलप्रलापः कोकिलानर्थशब्दस्तेन गलिता पलायिता लज्जा अपत्रपा यस्य तस्य। अपरं कथंभूतस्य पण्याङ्गनाजनस्य। निसर्गात्स्वभावेन उत्तालतरं अत्युत्सुकं यत् सुरतं मैथुनं तत् संरभते इत्येवंशीलः स तस्य। अपरं कथंभूते उद्याने। माकन्दमञ्जरीमकरन्दबिन्दुस्यन्ददुर्दिनेन मुचकुन्दमुकुलपरिमलोल्लासिना प्रचलाकिकुलकलापसीमन्तोचितेन वातचातकेनाचम्यमानसुरतश्रमखिन्नखेचरीपयोधरमुखलुलितघनघर्मजलमञ्जरीजाले सुरतस्य निधुवनस्य श्रमः खेदस्तेन खिन्ना दैन्यं प्राप्ता याः खेचर्यो विद्याधर्यस्तासां पयोधरा वक्षोजास्तेषां मुखेषु अग्रेषु लुलितानि लुठितानि घनानि प्रचुराणि यानि घर्मजलानि प्रस्वेदोदकानि तेषां मञ्जरीजालानि वल्लरीसमूहाः वातचातकेन मरुद्बर्हिणेन आचम्यमानानि आस्वाद्यमानानि उपस्पृश्यमानानि सुरतश्रमखिन्नखेचरीपयोधरमुखलुलितघनघर्मजलमञ्जरीजालानि यत्रोद्याने तत्तस्मिन्। कथंभूतेन वातचातकेन। माकन्द अतिसुरभिसहकारवृक्षास्तेषां मञ्जर्यः पुष्पवल्लर्यस्तासां मकरन्दः पुष्परसस्तस्य बिन्दुस्यन्दानि विप्रुट्क्षरणानि तैर्दुर्दिनो धूसरितः स तथा तेन। अपरं कथंभूतेन वातचातकेन। मुच-

रीजाले, निधुवनविधिविधुरपुरन्ध्रिकाधरदलदयितदीयमानाननचषकचारितदर्दरीकबीजसीधुनि, पुण्ड्रेक्षुकाण्डमण्डपसंपातिनीभिः षिङ्गपरिषद्भिश्चण्डतरमुड्डमरितडिण्डिमारवाकाण्डताण्डवितशिखण्डिमण्डले, मृद्वीकाफलगलनचटुलकामिनीकरवलयमणिमरीचिमेचकितार्किकिरातराजिनि, नालिकेरफलसलिलविलुप्यमानमिथुनमन्मथकलहावसानपयःपानातुच्छवाञ्छे, कन्दु-

---

कुन्दानां मध्यपुष्पविशेषाणां मुकुलानि कोरकाणि कलिकास्तेषां परिमलेन विमर्दोत्थगन्धेन उल्लसति उच्छलत्येवंशीलः स तथा तेन । पुनः कथंभूतेन वातचातकेन । प्रचलाकिनां मयूराणां कुलानि समूहास्तेषां कलापानां पक्षसमूहानां सीमन्तैः केशमार्गैरुचिता(तो) योग्यः स तथा तेन । अत्र प्रथमविशेषणेन वातस्य शीतत्वं सूचितम् । द्वितीयेन तु विशेषणेन सुगन्धिता प्रकटिता । तृतीयेन विशेषणेन मन्दत्वं प्रदर्शितं भवतीति ज्ञातव्यम् । अपरं कथंभूते उद्याने । निधुवनविधिविधुरपुरन्ध्रिकाधरदलदयितदीयमानाननचषकचारितदर्दरीकबीजसीधुनि निधुवनस्य सुरतस्य क्रीडायाः योऽसौ विधिः कामशास्त्रोक्तं विधानं तेन विधुराणि पीडितानि पुरन्ध्रिकाणां नवयौवनस्त्रीणां यानि अधरदलानि दन्तच्छदपल्लवानि तेषु दयितेन भर्त्रा दीयमानं आरोप्यमाणं आननचषकेन मुखपानपात्रेण चारितं संयोजितं दर्दरीकबीजसीधु दाडिमबीजमद्यं यत्र तत्तथोक्तं तस्मिन् । अपरं कथंभूते उद्याने । पुण्ड्रेक्षुकाण्डमण्डपसंपातिनीभिः षिङ्गपरिषद्भिश्चण्डतरमुड्डमरितडिण्डिमारवाकाण्डताण्डवितशिखण्डिमण्डले षिङ्गपरिषद्भिः कामुकसमूहैः चण्डतरं यथा भवत्येवं उड्डमरिता उत्कर्षिता डिण्डिमारवाः पटहशब्दास्तैरकाण्डे अकाले ताण्डवितं शिखण्डिनां मयूराणां मण्डलं समूहो यत्र तत्तथोक्तं तस्मिन् । कथंभूताभिः षिङ्गपरिषद्भिः । पुण्ड्राः पाण्डुवर्णास्ते च ते इक्षवो रसालास्तेषां काण्डमण्डपे प्रकाण्डशालायां संपतन्त्यागच्छन्तीत्येवंशीलास्तास्तथा ताभिः । अपरं कथंभूते उद्याने । मृद्वीकाफलगलनचटुलकामिनीकरवलयमणिमरीचिमेचकितार्किकिरातराजिनि मृद्वीकानां द्राक्षाणां यानि फलानि तेषां गलने अदने भक्षणार्थं चटुला चपलतरा ये कामिनीनां कराः पाणयः तेषां वलयानि तेषां मणयो रत्नानि तेषां मरीचयः किरणास्तैर्मेचकिता[नि] कर्बुरीकृता[नि] किंकिरातराजी कुरण्टकतरुश्रेणी यत्र तत्तथोक्तं तस्मिन् । अपरं कथंभूते उद्याने । नालिकेरफलसलिलविलुप्यमानमिथुनमन्मथकलहावसानपयःपानातुच्छवाञ्छे नालिकेराणां लाङ्गलितरूणां यानि फलानि सस्यानि तेषां सलिलानि पानीयानि तैर्विलुप्यमाना उच्छिद्यमाना मिथुनानां स्त्रीपुरुषाणां मन्मथकलहावसाने कन्दर्पयुद्धपर्यन्ते पयःपानस्य जलपानस्य अतुच्छा प्रचुरतरा वाञ्छा यत्र तत्तथा तस्मिन् । अपरं कथंभूते उद्याने । कन्दु-

कविनोदव्याजविस्तारितविभ्रमेण तरुणजनसंनिधानविवृद्धशृङ्गारमत्सरेण भ्रमिविभ्रमोद्भ्रान्तभासत्परिमलमिलन्मिलिन्दसुन्दरीसंदोहमण्डितापाङ्गपातेन विव्वोकिनीसमाजेन यावकारुणचरणपाटलितबकुलालवालभूमिनि, रजनिरसपिञ्जरितकुचकलशमण्डलाभिर्महीरुहनिवहमहिलाभिरिव परिपाकपेशलफलविनतमध्याभिर्बीजपूरवल्लरीभिरपराभिश्च वृक्षौषधिवनस्पतिलताभिरतिर-

---

कविनोदव्याजविस्तारितविभ्रमेण तरुणजनसंनिधानविवृद्धशृङ्गारमत्सरेण भ्रमिविभ्रमोद्भ्रान्तभासत्परिमलमिलन्मिलिन्दसुन्दरीसंदोहमण्डितापाङ्गपातेन विव्वोकिनीसमाजेन यावकारुणचरणपाटलितवकुलालवालभूमिनि विव्वोको विलासो विद्यते यासां ता विव्वोकिन्यः । उक्तं च हलायुधेन कविना—'हेलाविलासविव्वोकलीलाललितविभ्रमाः । स्त्रीणां शृङ्गारचेष्टाः स्युर्हावपर्यायवाचकाः ॥' विव्वोकिनीनां समाजः समूहो विव्वोकिनीसमाजस्तेन यावकेन अलक्तकेन लाक्षारसेन अरुणा अव्यक्तरागा ये चरणाः पादास्तैः पाटलिता श्वेतरक्तीकृताः वकुलालवालानां केसरतर्वावालानां मदगन्धिवृक्षस्थानकानां भूमिर्यत्र तत्तथोक्तं तस्मिन् । कथंभूतेन विव्वोकिनीसमाजेन । कन्दुकविनोदव्याजेन गिन्दरिकक्रीडामिषेण विस्तारितः प्रकटीकृतो विभ्रमो भ्रूक्षेपो येन स तथा तेन । अपरं कथंभूतेन विव्वोकिनीसमाजेन । तरुणजनानां नवयौवनपुरुषाणां संनिधानेन उपकण्ठतया विवृद्धो विशेषेण वृद्धिं गतः शृङ्गारस्य शरीरमण्डनस्य मत्सरः परशुभद्वेषो यस्य स तथा तेन । अपरं कथंभूतेन विव्वोकिनीसमाजेन । भ्रमिविभ्रमेण कम्पितभ्रूक्षेपेण उद्भ्रान्तं उल्लसितं यद्भासत् भास्वरं मुखम् । 'भसद्भास्वरमासयोः' इति वचनात् (?) । तस्य परिमलेन सौरभेण मिलन्त्य एकत्रीभवन्त्यो या मिलिन्दानां भ्रमराणां सुन्दर्यो भ्रमर्यस्तासां संदोहेन समूहेन मण्डितः शोभितः अपाङ्गपातः कटाक्षविक्षेपो यस्य स तथा तेन । अपरं कथंभूते उद्याने । रजनिरसपिञ्जरितकुचकलशमण्डलाभिर्महीरुहनिवहमहिलाभिरिव परिपाकपेशलफलविनतमध्याभिर्बीजपूरवल्लरीभिरपराभिश्च वृक्षौषधिवनस्पतिलताभिरतिरमणीये वीजपूरवल्लरीभिः मातुलिङ्गवल्लीभिरतिरमणीये अतिशयेन मनोहरे । कथंभूताभिर्बीजपूरवल्लरीभिः । परिपाकेन परिपक्वतया पेशलानि मनोहराणि यानि फलानि तैर्विनतो विशेषेण नम्रीभूतो मध्योऽन्तरालं यासां ताः परिपाकपेशलफलविनतमध्यास्ताभिः । अपरं कथंभूताभिर्बीजपूरवल्लरीभिः । महीरुहाणां वृक्षाणां निवहस्य समूहस्य महिलाभिरिव भार्याभिरिव । तत्कारणगर्भितं विशेषणमाह—कथंभूताभिर्महिलाभिः । रजनिरसेन हरिद्राद्रवेण पिञ्जरितानि पीतरक्तानि कुचकलशमण्डलानि यासां तास्तथोक्ताभिः । न केवलं वीजपूरवल्लरीभिरतिरमणीयम्, अपि तु अपराभिश्च अन्याभिश्च वृक्षौषधिवनस्पतिलताभिरतिरमणीये वृक्षाश्च पुष्पफलसहिता आम्रादितरवः, औषधयश्च फलपाकान्ताः कदलीवृक्षादयः,

मणीये, नरखचरामराणां मिथः संभोगलक्ष्मीमिव दर्शयति निखिलभुवनवनानां श्रियमिवादाय जातजन्मनि, रोध्रपरागवैध्यनीरन्ध्रितकेतकीरजःपटलनिर्मलितकपोलदर्पणेन विविधकुसुमदलविनिर्मितललामकर्मणा कुटजकुड्मललोल्वणमल्लिकानुगतकुन्तलकलापेन तापिच्छगुलुञ्छविच्छुरितशतपत्रीस्रक्संनद्धचिकुरभङ्गिना मरुबकोद्भेदविदर्भितदमनकाण्डशिखण्डितकेशपाशेन प्रियालमञ्जरीकणकलितकर्णिकारकेसरविराजितसीमन्तसंततिना

---

वनस्पतयश्च फलिनो वृक्षाः, लताश्च वल्लर्यस्तास्तथोक्ताभिः । उक्तं च—'फली वनस्पतिर्ज्ञेया वृक्षाः पुष्पफलोपगाः । ओषध्यः फलपाकान्ताः वल्ल्यो गुल्माश्च वीरुधः ॥' उद्याने किं कुर्वति सति । नरखचरामराणां मिथः संभोगलक्ष्मीं सुरतक्रीडाश्रियं दर्शयतीव दर्शनं कारयतीव । कथंभूते उद्याने । निखिलभुवनवनानां श्रियमिवादाय जातजन्मनि निखिलभुवनवनानां समस्तत्रैलोक्योद्यानानां श्रियं आदाय शोभां गृहीत्वा जातजन्मनीवोत्पन्नजन्मनि यथा । कथंभूतेन सुन्दरीजनेन । रोध्रपरागवैध्यनीरन्ध्रितकेतकीरजःपटलनिर्मलितकपोलदर्पणेन रोध्रस्य अर्जुनतरोः । 'गालवः शावरो रोध्रस्तिरीटस्तिल्वमार्जुनौ' इत्यभिधानात् । रोध्रपरागस्य गालवतरुरजसो यद्वैध्यं शुक्लता तेन नीरन्ध्रितो निश्छिद्रीकृतः । सर्वत्र व्याप्त इत्यर्थः । स च केतकीरजःपटलनिर्मलितः केतकीरजसः पटलेन समूहेन निर्मलित उद्वर्तितः कपोलदर्पणो गण्डस्थलादर्शो यस्य स तथा तेन । अपरं कथंभूतेन सुन्दरीजनेन । विविधकुसुमदलविनिर्मितललामकर्मणा विविधानि अनेकप्रकाराणि यानि कुसुमानि पुष्पाणि तेषां दलैः पत्रैर्विनिर्मितं विशेषेण कृतं ललामकर्म तिलकरचना येन स तथा तेन । अपरं कथंभूतेन सुन्दरीजनेन । कुटजकुड्मललोल्वणमल्लिकानुगतकुन्तलकलापेन कुटजस्य इन्द्रयववृक्षस्य कुड्मलानि मुकुलानि तैरुल्वणा उद्रिक्ता या मल्लिका शीतभीरुपुष्पविशेषा 'नलिकवेल' इत्यादेशात् मल्लिकापुष्पैरनुगतः संयुक्तः कुन्तलकलापः केशपाशो यस्य स तथा तेन । अपरं कथंभूतेन सुन्दरीजनेन । तापिच्छगुलुञ्छविच्छुरितशतपत्रीस्रक्संनद्धचिकुरभङ्गिना तापिच्छस्य तमालवृक्षस्य ये गुलुञ्छाः पुष्पस्तबकास्तैर्विच्छुरिता शोभिता शतपत्री सेवन्तीपुष्पाणि तस्याः स्रक् माला तया संनद्धा बद्धा चिकुरभङ्गी केशरचना यस्य स तथा तेन । अपरं कथंभूतेन सुन्दरीजनेन । मरुवकोद्भेदविदर्भितदमनकाण्डशिखण्डितकेशपाशेन मरुवकोद्भेदैः सुगन्धपत्रमञ्जरीभिर्विदर्भिता गुम्फिता ये दमनकाण्डाः सुगन्धपत्रस्तम्बास्तैः शिखण्डितो मुकुटितः केशपाशः कुन्तलकलापो यस्य स तथा तेन । पुनः कथंभूतेन । प्रियालमञ्जरीकणकलितकर्णिकारकेसरविराजितसीमन्तसंततिना प्रियालस्य क्षीरिकायास्तरोर्या मञ्जर्यो वल्लर्यस्तासां कणैः पुष्पकणैः कलिताः संयुक्ता ये कर्णिकारकेसरा द्रुमोत्पन्नकिंजल्कास्तैर्विराजिता विशेषेण शोभिता सीमन्तसंततिः

चम्पकचितविकचकच(काञ्च)नारविरचितावतंसेन माधवीप्रसूनगर्भगुम्फितपुन्नागमालाविलासिना रक्तोत्पलनालान्तरालमृणालवलयाकुलशकोटेन(?) सौगन्धिकानुबद्धकमलकेयूरपर्यायिणा सिन्दुवारसरसुन्दरकदलीप्रवालमेखलेन शिरीषवशबाणकृतजङ्घालंकारचारुणा मधुकानुविद्धबन्धूकधृतनूपुरभूषणेन अन्यासु च तासु तासु कामदेवकिलकिञ्चितोचितासु क्रीडासु बद्धानन्देन सुन्दरीजनेन सह रमन्ते कामिनः ॥

---

केशमार्गश्रेणिर्यस्य स तथा तेन । अपरं कथंभूतेन सुन्दरीजनेन । चम्पकचितविकचकाञ्चनारविरचितावतंसेन । चम्पकैर्हेमपुष्पकैश्चिताः संयुक्ता ये विकचकाञ्चनारा विकसितयमलपत्रकपुष्पाणि । उक्तं च धन्वन्तरिणा—'कोविदारे काञ्चनारः कुद्दालः कुण्डली हली । ताम्रपुष्पश्चमरिको महायमलपत्रकः ॥' तैर्विरचितः कल्पितोऽवतंसो मुकुटकर्णपूरो येन स तथा तेन । पुनः कथंभूतेन सुन्दरीजनेन । माधवीप्रसूनगर्भगुम्फितपुन्नागमालाविलासिना माधवी वासन्ती तस्याः प्रसूनानि पुष्पाणि तेषां गर्भेषु मध्येषु गुम्फितानि ग्रथितानि । 'पुन्नागः पुरुषस्तुङ्गः केसरो देववल्लभः' इत्यभिधानात् । तेषां मालायाः विलासः शोभा विद्यते यस्य स तथा तेन । पुनः कथंभूतेन सुन्दरीजनेन । रक्तोत्पलनालान्तरालमृणालवलयाकुलशकटेन रक्तोत्पलस्य नालं तस्य अन्तराले मध्ये मृणालवलयं पद्मिनीकन्दकङ्कणं तेनाकुलः संयुक्तः शकोटो(?)बाहुर्यस्य स तथा तेन । पुनः कथंभूतेन सुन्दरीजनेन । सौगन्धिकानुबद्धकमलकेयूरपर्यायिणा सौगन्धिकेषु कह्लारेषु रक्तकमलेषु अनुबद्धानि गुम्फितानि यानि कमलानि श्वेतकमलानि तेषां केयूरस्य बाहुभूषणरक्षस्य पर्यायः संगतिर्विद्यते यस्य स तथा तेन । पुनः कथंभूतेन सुन्दरीजनेन । सिन्दुवारसरसुन्दरकदलीप्रवालमेखलेन सिन्दुवार इन्द्रसुरसः तस्य सरो हारः तेन सुन्दराणि मनोहराणि यानि कदलीप्रवालानि लतानां बालपल्लवानि तेषां मेखला कटिमेखला यस्य स तथा तेन । पुनः कथंभूतेन सुन्दरीजनेन । शिरीषवशबाणकृतजङ्घालंकारचारुणा शिरीषाणां वशानि शिरीषपुष्पमध्येषु गुम्फितानि यानि बाणानि झिण्टीपुष्पाणि तैः कृतो विहितो योऽसौ जङ्घालंकारः प्रसृताभरणं तेन चारुर्मनोहरस्तेन तथोक्तेन । अपरं कथंभूतेन सुन्दरीजनेन । मधुकानुविद्धबन्धूकधृतनूपुरभूषणेन मधुकेषु गुडपुष्पेषु मध्ये अनुविद्धानि प्रोतानि यानि बन्धूकानि बन्धुजीवकपुष्पाणि तैर्धृतं कृतं नूपुरभूषणं हिञ्जीराभरणं येन संघातेन । अपरं कथंभूतेन सुन्दरीजनेन । अन्यासु च अपरासु च तासु तासु जगत्प्रसिद्धासु क्रीडासु बद्धानन्देन आनन्दसहितेन । कथंभूतासु क्रीडासु । कामदेवकिलकिञ्चितोचितासु कामदेवस्य कन्दर्पस्य यत्किलकिञ्चितं हर्षादुदितगीतादिव्यामिश्रं किलकिञ्चितं तस्मिन्नुचिता योग्यास्तास्तथा तासु । समुच्चयालंकारः ॥

तदेवमनेकलोकोत्पादितप्रत्ययायाः पुरदेव्याः सिद्धायिकायाः सर्वसत्त्वाभयप्रदावासरसं स्मरसौमनसं नामोद्यानमवलोक्य,

ब्रह्मस्तम्बनितम्बिनीरतिकथाप्रारम्भचन्द्रोदयाः
कामं कामरसावतारविषयव्यापारपुष्पाकराः ।
प्रायः प्राप्तसमाधिशुद्धमनसोऽप्येते प्रदेशाः क्षणा-
त्स्वान्तध्वान्तकृतो भवन्ति तदिह स्थातुं न युक्तं यतेः ॥ ७१ ॥

इति च वितर्क्य, मनागन्तः स्तिमितमानसः प्रसरदनेकवितर्करसः स-

पुनश्च भगवान् किं कृतवान् । [स्मरसौमनसं] श्मशानारण्यं व्यलोकत ददर्श । इति क्रियाकारकसंवन्धः । किं कृत्वा पूर्वम् । तत्पूर्वोक्तम् एवं अमुना प्रकारेण सिद्धायिकायाः सिद्धायिकानाम्न्याः पुरदेव्या राजपुरनगरदेवतायाः स्मरसौमनसं नाम उद्यानं वनं अवलोक्य । कथंभूतायाः पुरदेवतायाः । अनेकलोकोत्पादितप्रत्ययायाः अनेकेषां लोकानां उत्पादितो जनितः प्रत्ययो विश्वासो यया सा तथा तस्याः । कथंभूतमुद्यानम् । सर्वसत्त्वाभयप्रदावासरसम् सर्वेषां सत्त्वानां प्राणिनां अभयप्रदो अभयदानदायकः आवासरसोऽनुरागो यत्र तत्तथोक्तं यथोक्तविशेषणविशिष्टम् । पुनश्च किं कृत्वा पूर्वं श्मशानारण्यं व्यलोकत । इति वितर्क्य इति ईदृशं पूर्वोक्तप्रकारं वितर्क्य पर्यालोच्य संकल्पविकल्पं कृत्वा । इतीति किम् ।

ब्रह्मेत्यादि । एते प्रदेशाः । पूर्वोक्तोद्यानस्थानानि यतेः संयतलोकस्य क्षणात् मुहूर्तात् स्वान्ते ध्वान्तकृतो भवन्ति चित्तमध्ये रागोत्पादका भवन्ति संजायन्ते । कथंभूतस्य यतेः । प्राप्तसमाधिशुद्धमनसोऽपि प्राप्तः स्वाधीनः कृतोऽसौ समाधिः शुद्धोपयोगस्तेन शुद्धं निर्मलं मनश्चित्तं यस्य स तथा तस्य । कथं स्वान्तध्वान्तकृतो भवन्ति । प्रायो वाहुल्येन । कस्यापि यतेः स्वान्तध्वान्तकृतो न भवन्तीत्यर्थः । तत्तस्मात्कारणात् इह अस्मिन् सरागोद्द्योतने यतेः स्थातुं स्थितिं कर्तुं युक्तं योग्यं न भवति । कथंभूता एते प्रदेशाः । ब्रह्मस्तम्बनितम्बिनीरतिकथाप्रारम्भचन्द्रोदयाः ब्रह्मस्तम्बस्य त्रैलोक्यस्य या नितम्बिन्यः कामिन्यस्तासां रतेः संभोगस्य कथाप्रारम्भो वाक्यप्रबन्धप्रारम्भस्तस्य [चन्द्रोदयाः चन्द्रोदयसदृशाः ।] चन्द्रोदये सति रतिकथाप्रारम्भो भवति । अपरं कथंभूता एते प्रदेशाः । कामं कामरसावतारविषयव्यापारपुष्पाकराः कामं यथेष्टं कामरसस्य कन्दर्परागस्य अवतारो यत्र विषयव्यापारे स कामरसावतारः स चासौ विषयव्यापारः सुरताभिनियोगस्तदर्थं पुष्पाकराः वसन्तर्तुसदृशाः ।

कथंभूतो भगवान् । मनाक् ईषत् अन्तःस्तिमितमानसः । अभ्यन्तरे निश्चलचित्तः । अपरं कथंभूतः । प्रसरदनेकवितर्करसः प्रसरन्तो विजृम्भमाणाः अनेके वितर्करसाः

१. लेखकप्रमादपतितः प्रतिभाति. २. 'नां रूपाः' इत्यादर्शे पाठः.

कलजगदाघातघटनाघस्मरः स्मरः खलु श्मशानवासिनमप्यानयत्यात्मनो निदेशभूमिम्, किं पुनर्न गोचरपतितम्; मनो हि केवलमपि स्वभावतो विषयाटवीमवगाहते, किं पुनर्न लब्धानङ्गशृङ्गारप्रदेशम्; कथापि खलु कामिनीनां चेतो विभ्रमयति, किं पुनर्न नयनपथमुपगतस्तासां संभोगसंभवः केलिप्रबन्धः; करणानि तु नियमनियन्त्रितान्यपि स्वच्छन्दं विजृम्भन्ते, किं पुनर्न प्राप्तस्वविषयवृत्तीनि; बोधाधिपतिराकाशेऽपि संकल्पराज्यमारचयति, किं पुनर्न पर्यवसितबहिःप्रकृतिः; वयोऽपि न यमस्येव मनसिजव्यापारस्य किंचि-

---

विचारानुरागा यस्य स तथा। केन प्रसरदनेकवितर्करसः। तानेवाह—सकलजगदाघातघटनाघस्मरः स्मरः खलु श्मशानवासिनमप्यानयत्यात्मनो निदेशभूमिं किं पुनर्न गोचरपतितम्। मनो हि केवलमपि स्वभावतो विषयाटवीमवगाहते किं पुनर्न लब्धानङ्गशृङ्गारप्रदेशम् (चूर्णिगद्यमेतत्।[1]) स्मरः कन्दर्पः खलु निश्चयेन श्मशानवासिनमपि परेतवनस्थितमपि मनुष्यं आत्मनः स्वस्य निदेशभूमिं आदेशस्थानं आनयति प्रापयति, लब्धानङ्गशृङ्गारप्रदेशं लब्धः प्राप्तः अनङ्गशृङ्गारस्य कामसंबन्धिशृङ्गारस्य प्रदेशस्थानं येन स तथा तं पुरुषं किं पुनः आत्मनो निदेशभूमिं नानयति। अपि त्वानयत्येव। काकुवक्रोक्तिरियम्। कथंभूतः स्मरो यथोक्तविशेषणविशिष्टः। सकलं च तज्जगत्त्रैलोक्यं तस्य आघातो निष्ठुरप्रहारस्तस्य घटना रचना तस्यां घस्मरः सर्वभक्षकः। पुनश्च किंविशिष्टो वितर्क्य श्मशानारण्यं व्यलोकत। कथापि खलु कामिनीनां चेतो विभ्रमयति, किं पुनर्न नयनपथमुपगतस्तासां संभोगसंभवः केलिप्रबन्धः कामिनीनां स्त्रीणां कथापि वार्तापि खलु निश्चयेन चेतो मनो विभ्रमयति विशेषेण चालयति, तासां केलिप्रबन्धः क्रीडाप्रघट्टकः नयनपथमुपगतो विलोकितः किं पुनर्न विभ्रमयति। अपि तु विभ्रमयत्येव। कथंभूतः केलिप्रबन्धः। संभोगसंभवः सुरतोत्पन्नः। पुनश्च किं वितर्क्य। करणानि तु नियमनियन्त्रितान्यपि स्वच्छन्दं विजृम्भन्ते, किं पुनर्न प्राप्तस्वविषयवृत्तीनि करणानि तु नेत्रादीन्द्रियाणि तु नियमनियन्त्रितान्यपि व्रतबन्धनैर्बद्धान्यपि स्वच्छन्दं निरवग्रहं यथा भवत्येवं विजृम्भन्ते प्रसरन्ति। प्राप्तस्वविषयवृत्तीनि लब्धनिजविषयवर्तनानि किं पुनर्न विजृम्भन्ते, अपि तु विजृम्भन्त एव। पुनश्च किं वितर्क्य। बोधाधिपतिराकाशेऽपि संकल्पराज्यमारचयति किं पुनर्न पर्यवसितबहिःप्रकृतिः बोधाधिपतिरयं आत्मा आकाशेऽपि शून्यस्थानेऽपि संकल्पराज्यं आरचयति स्थापयति, पर्यवसितबहिःप्रकृतिः परिप्राप्तस्त्र्यादिलक्षणा (अ)मात्यादिः, किं पुनर्न संकल्पराज्यमारचयति, अपि तु रचयत्येव। वयोऽपि न यमस्येव मनसिजव्यापारस्य किंचित्परिहर्तव्यमस्ति प्रत्युतावानेष्विन्धनेषु वह्निरिव नितान्तं ज्वलति वृद्धेषु मकरध्वजः मनसिजव्यापारस्य

---

[1] व्याख्येयस्य गद्यत्वसूचकमेतत्.

त्परिहर्तव्यमस्ति प्रत्युतावानेष्विन्धनेषु वह्निरिव नितान्तं ज्वलति वृद्धेषु मकरध्वजः, तच्च मनो महामुनीनामपि दुर्लभं यत्र कुलिशे घुणकीट इव प्रभवितुं न शक्नोति विषयवर्गः, श्रूयते हि किलालक्ष्यजन्मनो दक्षसुतानां जलकेलिविलोकनात्तपःप्रत्यवायः, पितामहस्य तिलोत्तमासंगीतकात्, कैवर्तीसंगमात्पाराशरस्य, रथनेमेश्च नटीनर्तनदर्शनात् ।

अपि च—

क्षीणस्तपोभिः क्षपितः प्रवासैर्विध्यापितः साधु समाधितोयैः ।
तथापि चित्रं ज्वलति स्मराग्निः कान्ताजनापाङ्गविलोकनेन ॥ ७२ ॥

---

किंचिदपि वयः काचिदप्यवस्था वालकुमारतरुणवृद्धलक्षणावस्थापि परिहर्तव्यं नास्ति । कस्येव । यमस्येव कृतान्तस्येव । यथा यमस्य किंचिदपि वालकुमारतारुण्यवार्धक्यलक्षणं वयो न परिहर्तव्यं वर्तते । प्रत्युत विशेषेण वृद्धेषु जराजीर्णेषु मकरध्वजः कन्दर्पः नितान्तमतिशयेन ज्वलति प्रज्वलति । क इव । आवानेषु शुष्केषु इन्धनेषु काष्ठेषु वह्निरिव अग्निरिव । यथा शुष्केषु इन्धनेषु अग्निर्नितान्तं प्रज्वलति । तच्च मनो महामुनीनामपि दुर्लभं दुष्प्रापं यत्र मनसि विषयवर्गः स्पर्शादिगोचरसमूहः प्रभवितुं पराभवं कर्तुं न शक्नोति न समर्थो भवति । कस्मिन् क इव । कुलिशे घुणकीट इव । यथा कुलिशे वज्रे घुणकीटः क्षुद्रजन्तुः प्रभवितुं न शक्नोति । श्रूयते हि किलालक्ष्यजन्मनो दक्षसुतानां जलकेलिविलोकनात्तपःप्रत्यवायः । किलेति लोकोक्तौ शास्त्रोक्तौ अरुचौ वा । अलक्ष्यजन्मनः श्रीमहादेवस्य दक्षसुतानां दक्षप्रजापतिपुत्रीणां जलकेलिविलोकनात् जलक्रीडानिरीक्षणात् तपःप्रत्यवायः तपसि दोषः श्रूयते आकर्ण्यते । कथम् । हि स्फुटमिति शेषः । पितामहस्य तिलोत्तमासंगीतकात् पितामहस्य ब्रह्मणस्तिलोत्तमायाः स्वर्गलोकवेश्यायाः संगीतकात् गीतकात् गीतनृत्यवादित्रसमुदायात् तपःप्रत्यवायः श्रूयते । कैवर्तीसङ्गमात्पाराशरस्य मत्स्यवेधपुत्रीसंयोगात् पाराशरस्य वेदव्यासजनकस्य तपःप्रत्यवायः श्रूयते । रथनेमेश्च नटीनर्तनदर्शनात् तपःप्रत्यवायः श्रूयते । रथनेमिः किल दिगम्बराचार्यः नटीनर्तनदर्शनात् नटपुत्रीं परिणीतवान्, पश्चात् कुम्भकारपुत्रीं परिणीतवान्, तदनन्तरं राजपुत्रीं परिणीतवान्, पुनः पुनश्च दीक्षां गृहीतवान्, पश्चात्त्रिभिः पुत्रैः सह कुम्भकाराणां पाकोपसर्गस्योद्वा(?) मुक्तिं जगामेति कथाकोशे कथा प्रसिद्धा वर्तते ॥

अपि च अस्ति कश्चिद्विशेषः । क्षीण इत्यादि । चित्रमाश्चर्यमेतत् । स्मराग्निः कन्दर्पवैश्वानरः कान्ताजनापाङ्गविलोकनेन स्त्रीजनकटाक्षदर्शनेन तथापि ज्वलति मृ-

तावत्तपो वपुषि चेतसि तत्त्वचिन्ता
कामं हृषीकविषयः परमः शमश्च ।
यावन्न पश्यति मुखं मृगलोचनानां
शृङ्गारवृत्तिभिरुदाहृतकामसूत्रम् ॥ ७३ ॥

श्रोत्रं श्रुतो हरति वीक्षणमीक्ष्यमाण-
श्चित्तं स्मृतः कृतसमागतिरङ्गकानि ।
प्राणान्पुनः प्रणयवान्वियुतो रतिं च
लोके तथापि वनिताजन एव यत्नः ॥ ७४ ॥

तपो मृगायते पुंसां समं धीधैर्यलज्जितैः ।
स्त्रीणां भ्रूचापविश्रान्तनेत्रापाङ्गशराहतैः ॥ ७५ ॥

---

तोऽपि जीवति । यद्यपि तपोभिरुपवासादिभिः क्षीणोऽतिदुर्बलः संजातः, प्रवासैः धर्मक्षेत्रादिविहारकर्मभिः क्षपितः क्षयं नीतः, समाधितोयैर्यमध्यानादिजलैः साधु यथा भवत्येवं विध्यापितः शीतलतां नीतः । रूपकातिशयालंकारः ॥

**तावदित्यादि** । वपुषि शरीरे तावत्कालं तपो दीक्षा वर्तते । चेतसि मनसि तावत्कालं तत्त्वचिन्ता आत्मभावना वर्तते । हृषीकविषये इन्द्रियाणां स्पर्शादिगोचरे परम उत्कृष्टः शम उपशमश्च वर्तते । कथम् । कामं अतिशयेन । यावत्कालं मृगलोचनानां स्त्रीणां पुमान् मुखं न पश्यति । कथंभूतं मुखम् । शृङ्गारवृत्तिभिः शृङ्गारक्रीडाभिः उदाहृतं कामसूत्रम् उदाहरितं निदर्शनसंयुक्तं कृतं कामस्य कन्दर्पस्य सूत्रं व्याकरणसूत्रम् । उपमालंकारः ॥

**श्रोत्रमित्यादि** । लोके लोकमध्ये तथापि तदपि वनिताजन एव स्त्रीजन एव लोकस्य यत्नस्तात्पर्यं वर्तते । तथापि कथम् । वनिताजनः श्रुत आकर्णितः सन् श्रोत्रं कर्णं हरति चोरयति । ईक्ष्यमाणो दृश्यमानः सन् वीक्षणं लोचनं हरति । स्मृतश्चिन्तितः सन् चित्तं मनो हरति । कृतसमागतिः आलिङ्गितः सन् अङ्गकानि कोमलधातून् हरति । पुनः पश्चात् प्रणयवान् स्नेहवान् सन् प्राणान् हरति । मारयतीत्यर्थः । वियुक्तो विप्रलब्धः सन् रतिं अन्नादिरुचिं च हरति । इत्येवं महाचौरोऽयं स्त्रीजन इति सूचितं भवति । दीपकालंकारः ॥

**तपो मृगायत इत्यादि** । पुंसां पुरुषाणां तपो दीक्षाव्रतग्रहणं मृगायते नश्यति । कथम् । समं सार्धम् । कैः समम् । धीधैर्यलज्जितैः धीर्बुद्धिः, धैर्यं निश्चलता, लज्जितं अपत्रपा, तैः तपः कृतं मृगायते पलायते । स्त्रीणां वनितानां भ्रूचापविश्रान्तनेत्रापा-

---

१. 'साधकैः' इत्यादर्शे पाठः.

तथा सकृच्चलितं च चेतः प्रासाद इव पुनः दुष्करमुद्धर्तुम्, दूरतरमुन्नतानि गिरिशिखराणीव शक्यन्ते शरीरिणां हृदयानि सुखेनैवाधस्तात्पातयितुमारोहयितुं न पुनर्दुःखेनापि,

अस्ति च 'श्रेयांसि बहुविघ्नानि' इति विदुषां प्रवादः, श्रुताभ्यासश्च बिसतन्तुर्दन्तिनमिव प्रत्यवस्यन्तमात्मानमलं न भवति निवारयितुम्, तनुच्छद इवाधीरधीषु न जायते चलतश्चित्तस्य त्राणाय देहदाहकरागमः

---

ङ्गशराहतेः भ्रुवावेव चापं धनुस्तत्र विश्रान्ता आरोपिता ये नेत्राणाम् अपाङ्गशराः कटाक्षबाणास्तेषां हतेस्ताडनात् । उपमासहोक्तिरूपकालंकाराः ॥

तथा सकृच्चलितं च चेतः प्रासाद इव पुनः दुष्करमुद्धर्तुम् । तथा च भगवान् विचारयति—सकृदेकवारं चेतो मनश्चलितं विघटितं सत् पुनरुद्धर्तुं पुनरपि स्थानमानेतुं दुष्करं दुःसाध्यं भवति । क इव । प्रासाद इव । यथा प्रासादो देवसदनं राजमन्दिरं वा सकृच्चलितः सन् पुनरुद्धर्तुं दुष्करो भवति । दूरतरमुन्नतानि गिरिशिखराणीव शक्यन्ते शरीरिणां हृदयानि सुखेनैवाधस्तात्पातयितुमारोहयितुं न पुनर्दुःखेनापि शरीरिणां प्राणिनां हृदयानि चित्तानि दूरतरं अतिशयेन उन्नतानि विषयसुखपराङ्मुखानि सन्ति अधस्तात्पातयितुं विषयेषु लम्पटानि कर्तुं सुखेनैव अनायासेनैव शक्यते । कानीव । गिरिशिखराणीव—यथा गिरिशिखराणि पर्वतमस्तकानि अधस्तात्पातयितुं सुखेनैव शक्यन्ते । आरोहयितुं उपर्यानेतुं दुःखेनापि न पुनः शक्यन्ते नाध्यवस्यन्ते ।

अस्ति च 'श्रेयांसि बहुविघ्नानि' इति विदुषां प्रवादः। विदुषां विद्वज्जनानां इति ईदृक् प्रवादः प्रसिद्धिश्चास्ति । इतीति किम् । श्रेयांसि पुण्यकर्माणि बहुविघ्नानि भवन्ति । पापानां विघ्नो न वर्तत इत्यर्थः । तथा चोक्तम्—'श्रेयांसि बहुविघ्नानि भवन्ति पापा(प्म)नामपि । अश्रेयसि प्रवृत्तानां यान्ति क्वापि विनायकाः ॥' श्रुताभ्यासश्च बिसतन्तुर्दन्तिनमिव प्रत्यवस्यन्तमात्मानमलं न भवति निवारयितुम् श्रुताभ्यासश्च शास्त्रानुशीलनं आत्मानं चित्तं प्रत्यवस्यन्तं विषयसुखं ग्रसमानं निवारयितुं निषेद्धुं अलं समर्थो न भवति । क इव । बिसतन्तुरिव पद्मिनीकन्दसूत्रमिव । यथा बिसतन्तुर्दन्तिनं हस्तिनं प्रत्यवस्यन्तं पर्यटन्तं मदेन विघटमानं निवारयितुमलं न भवति । तथा चाह विद्यानन्दिः—'प्रत्यवस्यति ग्रसते, वि (व्य)वस्यति उद्यमं करोति अध्यवस्यति शक्नोति । भरते व्याप्नोति' इति । तनुच्छद इवाधीरधीषु न जायते चलतश्चित्तस्य त्राणाय देहदाहकरागमः संयमः। संयमश्चारित्रपालनं अधीरधीषु चपलचित्तेषु पुरुषेषु चलतो विघटमानस्य चित्तस्य हृदयस्य त्राणाय रक्षणाय न जायते नोत्पद्यते । कथंभूतः संयमः । देहदाहकरागमः देहस्य शरीरस्य दाहकरः संतापकारकः आगमः प्रारम्भो यस्य संयमस्य देहदाहकरागमः । क इव । तनुच्छद इव यथा तनुच्छदस्तनुत्राणं

संयमः, बहिरुत्थावस्थितः पारदरस इव द्वन्द्वपरिगतः पुमान्क्षणमपि नास्ते प्रसंख्यानक्रियासु, वृन्दमपीदं वनादानीतं करियूथमिवाद्यापि न संभवति प्रायेण क्षान्तिनिष्ठितम्, सर्वदोषदुष्टं व्यालशुण्डालमिवामीषामपरिपक्वशिक्षोपदेशमिन्द्रियग्राममतियत्नेनापि संरक्षितुं न तरति पुरश्चारीलोकः।

किं च—

तावद्गुरवो गण्यास्तावत्स्वाध्यायधीरतं चेतः।
यावन्न मनसि वनितादृष्टिविषं विशति पुरुषाणाम् ॥ ७६ ॥

---

अधीरधीषु कातरेषु चलचित्तस्य त्राणाय न जायते। कथंभूतः तनुच्छदः। देहदाहकरागमः शरीरोष्मकरागमः शरीरोष्मकारकः। बहिरुत्थावस्थितः पारदरस इव द्वन्द्वपरिगतः पुमान्क्षणमपि नास्ते प्रसंख्यानक्रियासु। पुमानात्मा द्वन्द्वपरिगत एकान्ते प्राप्तः प्रसंख्यानक्रियासु धर्मध्यानादिकर्मसु क्षणमपि मुहूर्तमेकमपि नास्ते न तिष्ठति। क इव। पारदरस इव पारदद्रव इव। यथा पारदरसः सूतो बहिरुत्थावस्थितः सन् अभ्युपरि स्थापितो द्वन्द्वपरिगतः ओषधैः वेष्टितोऽपि क्षणमपि नास्ते। उड्डीय गच्छतीत्यर्थः। वृन्दमपीदं वनादानीतं करियूथमिवाद्यापि न संभवति प्रायेण क्षान्तिनिष्ठितम्। इह प्रत्यक्षीभूतं वृन्दं मुनिसंघोऽपि अद्यापि संयमसाधनकालेऽपि प्रायेण बाहुल्येन क्षान्तिनिष्ठितं विषयसुखपराङ्मुखं न संभवति न संगच्छते। किमिव। वनादानीतं करियूथमिव। यथा वनादानीतं अरण्यादाहृतं करियूथं गजवृन्दं प्रायेण क्षान्तिनिष्ठितं अद्यापि संभवति बन्धनकालेऽपि क्षमावन्न भवति। सर्वदोषदुष्टं व्यालशुण्डालमिवामीषामपरिपक्वशिक्षोपदेशमिन्द्रियग्राममतियत्नेनापि संरक्षितुं न तरति पुरश्चारीलोकः। अमीषां मुनीनां इन्द्रियग्रामं संरक्षितुं प्रतिपालयितुं विषयेभ्यो निषेद्धुं पुरश्चारीलोकः मुनिजनानां मुख्यः सूरिलोकः, अन्यत्र हस्तिपकः, अतियत्नेनापि अतिसावधानतयापि न तरति न शक्नोति। कथंभूतं इन्द्रियग्रामम्। अपरिपक्वशिक्षोपदेशम् न परिपक्वो न परिणतो न मनसि प्रविष्टः शिक्षायाः अनुप्रेक्षोपलक्षणाया उपदेशो यस्य इन्द्रियग्रामस्य स तथा तम्। अपरं कथंभूतं इन्द्रियग्रामम्। सर्वदोषदुष्टम् सर्वैः रागद्वेषमोहादिभिर्दोषैरादीनवैर्दुष्टं दूषितम्। कमिव। व्यालशुण्डालमिव यथा शुण्डालं दुष्टगजं सर्वदोषदुष्टं अगृहीतशिक्षोपदेशं संरक्षितुं पुरश्चारी लोको न तरति न शक्नोति। उपमालंकारः॥

किंचेति। अस्ति कश्चिद्विशेषः। तावदित्यादि। तावत्कालं गुरव आचार्या गण्या माननीया भवन्ति। तावत्कालं चेतो मनः स्वाध्यायधीरतं भवति स्वाध्यायस्य वाचनाप्रच्छनानुप्रेक्षाम्नायधर्मोपदेशलक्षणपञ्चप्रकारस्य धीरभिप्रायोऽनुशीलनबुद्धिस्तत्र

तावत्प्रवचनविषयस्तावत्परलोकचिन्तनोपायः ।
यावत्तरुणीविभ्रमहृतहृदयो न प्रजायेत ॥ ७७ ॥
गुरुवचनस्य हि वृत्तिस्तत्र न यत्रास्ति संगमः स्त्रीभिः ।
अबलालापजलप्लवबधिरितकर्णे कुतोऽवसरः ॥ ७८ ॥
संसर्गेण गुणा अपि भवन्ति दोषास्तदद्भुतं नैव ।
स्थितमधरे रमणीनाममृतं चेतांसि कलुषयति ॥ ७९ ॥
लटहैर्युवतिकटाक्षैर्गाढमगुरुतां जनः स्वयं नीतः ।
चित्रमिदं ननु यत्तां पश्यति गुरुबन्धुमित्रेषु ॥ ८० ॥

---

रतं तत्परम् । तावत्कालं यावत्कालं पुरुषाणां मुनीनां वनितादृष्टिविषं अवलोकनहाला हलं मनसि चित्ते न विशति न प्रवेशं करोति । रूपकालंकारः ॥

**तावत्प्रवचनेत्यादि** । तावत्कालं प्रवचनस्य तत्त्वार्थश्लोकवार्तिकालंकारादिशास्त्रस्य विषयो गोचरो भवति । तावत्कालं परलोकस्य मोक्षस्य चिन्तनोपायः साधनोपायो भवति । तावत्कियत् । यावत्कालं तरुणीविभ्रमहृतहृदयो न प्रजायेत तरुणीनां नवयौवनानां स्त्रीणां विभ्रमैः भ्रूक्षेपैर्हृतं चारितं हृदयं मनो यस्य पुरुषस्य तरुणीविभ्रमहृतहृदयः पुमान् न संजायेत न प्रभवेत् । जात्यालंकारः ॥

**गुरुवचनस्येत्यादि** । गुरुवचनस्य भट्टारकादेशस्य वृत्तिः प्रवृत्तिस्तत्र तस्मिन् पुरुषे नास्ति न भवति । तत्र कुत्र । यत्र यस्मिन् पुरुषे स्त्रीभिः सह संगमोऽस्ति भवति । अवलालापजलप्लवबधिरितकर्णे कुतोऽवसरः अबलानां स्त्रीणां आलापाः परस्परभाषणानि त एव जलानि पानीयानि तेषां प्लवः पूरस्तेन बधिरितौ अश्रुतीकृतौ कर्णौ शब्दग्रहौ यस्य स तस्मिन् । अवसरः कुतो भवति अपि तु न कुतोऽपि अवसरः । रूपकाक्षेपालंकारः ॥

**संसर्गेणेत्यादि** । संसर्गेण सङ्गत्वात् गुणा अपि ज्ञानविज्ञानादयोऽपि यतः दोषा भवन्ति तदद्भुतमाश्चर्यं नैव वर्तते । रमणीनां स्त्रीणामधरे अधस्तनदन्तवाससि स्थितं रहितं अमृतं पीयूषं चेतांसि हृदयानि कलुषयति विषमानवदचेतनानि करोति । दृष्टान्तालंकारः । उक्तं च—'सुधा चन्द्रे न पाताले न कान्ताधरपल्लवे । सुधा यशोधराधीश तवारिकरपल्लवे' ॥

**लटहैरिति** । लटहैर्मनोहरैर्युवतिकटाक्षैः स्त्रीणां लोचनापाङ्गदर्शनैः कर्तृभूतैर्जनो लोकः कर्मतापन्नः गाढमतिशयेन अगुरुतां नीतो लघुत्वं प्रापितः । कथम् । स्वयं आत्मनैव । ननु अहो इदं प्रत्यक्षीभूतं चित्रं आश्चर्यम् । इदं किम् । यत् यस्मात् कारणात् तां युवतिं गुरुबन्धुमित्रेषु दीक्षादातृसहाध्यायिअभीष्टवर्गेषु स्थितोऽपि सन् पश्यति विलोकते । जात्यालंकारः ॥

तस्मात्—

द्वयमेव तपःसिद्धौ बुधाः कारणमूचिरे ।
यदनालोकनं स्त्रीणां यच्च संग्लापनं तनोः ॥ ८१ ॥

इति च विचिन्त्य, 'तदलमत्र बहुप्रत्यूहव्यूहासाद्यया निषद्यया' इति च निश्चित्य, परिक्रम्य च स्तोकमन्तरम्, सप्तजिह्वाजिह्मज्वालाजालाहुतीकृताकाशलावण्यं श्मशानारण्यं व्यलोकत ॥

(स्वगतम् ।) अहह, पश्यत सकलानामप्यमङ्गलानामसमसमीहाभवनं पितृवनम् ।

यतः—

कालव्यालरदाङ्कुरोद्भटभरैः शल्योत्करैः पूरितं
कालग्राहविगीर्णफेनविकलैः कीर्णं शिरोमण्डलैः ।

तस्मात् कारणात् । द्वयमिति । तपःसिद्धौ तपःप्राप्त्यर्थं द्वयमेव कारणं बुधा विद्वांस ऊचिरे प्रतिपादितवन्तः । किं तत् हेतुद्वयम् । एकं तावत् कारणं यत् स्त्रीणामनालोकनमनिरीक्षणम्, द्वितीयं यच्च तनोः शरीरस्य संग्लापनं तपोभिः कृशीकरणम् । समुच्चयालंकारः ॥ इति विचिन्त्य श्मशानारण्यं व्यलोकत । तथा च इति विनिश्चित्य श्मशानारण्यं व्यलोकत । इतीति किम् । तत्तस्मात्कारणात् अत्र निषद्यया स्थानेनालं पूर्णम् । कथंभूतया निषद्यया । बहुप्रत्यूहव्यूहा विघ्नसमूहाः आसाद्या यत्र निषद्यायां सा तथा तथा । पुनश्च किं कृत्वा । पूर्वं स्तोकमल्पं अन्तरं मार्गं परिक्रम्य गत्वा श्मशानारण्यं व्यलोकत । कथंभूतं श्मशानारण्यम् । सप्तजिह्वाजिह्मज्वालाजालाहुतीकृताकाशलावण्यम् सप्तजिह्वस्य अग्नेरजिह्मा अकुटिलाः । उग्रतरा इत्यर्थः । या ज्वाला अर्चिषस्तासां जालानि समूहास्तेषु आहुतीकृतं वषट्कृतम् । धूसरीकृतमित्यर्थः । आकाशस्य व्योम्नो लावण्यं कान्तिर्येन तत्तथोक्तम् । स्वगतं आत्मगतं विचारयत्यार्यः । अहह, पश्यत सकलानामप्यमङ्गलानामसमसमीहाभवनं पितृवनम् । अहह इति खेदे, आश्चर्ये वा । पश्यत भो लोकाः, विलोकयत यूयं पितृवनं श्मशानं सकलानामपि समग्राणामपि अमङ्गलानामश्रेयसामशुभानामसमसमीहाभवनं विषमचेष्टागृहम् ।

यतो यस्मात्कारणात् । कालव्यालेत्यादि । कथंभूतं पितृवनम् । शल्योत्करैः पूरितं शल्योत्करैरस्थिराशिभिः पूरितं भृतम् । कथंभूतैः शल्योत्करैः । कालव्यालरदाङ्कुरोद्भटभरैः कालो यमः स एव व्यालो दुष्टगजः । सर्वेषां संहारकारकत्वात् । तस्य रदा दन्तास्तेषामङ्कुरा बालप्ररोहास्तेषां उद्भटो भयानको भरोऽतिशयो येषां शल्योत्कराणां

कालव्याधविनोदपाशविवशैः केशैश्चितं सर्वतः
कालोत्पातसकृत्प्रसूछदचयैश्छन्नं च भस्मोच्चयैः ॥ ८२ ॥

इतश्च यत्र—

अर्धदग्धशवलेशलालसैर्भण्डनोद्भटरटद्गलान्तरैः ।
कालकेलिकरकौतुकोद्यतैर्विश्वकद्रुभिरुपद्रुतान्तरम् ॥ ८३ ॥

यत्र च—

श्येनकुलं घूककुलं द्रोणकुलं श्वकुलभण्डनाढ्यीतम् ।
शवपिशितप्राशवशाद्दिवि भुवि च समाकुलं पुरतः ॥ ८४ ॥

---

ते तथा तैः । अपरं कथंभूतं पितृवनम् । शिरोमण्डलैः शुष्कमस्तकसमूहैः । कपालवृन्दैरित्यर्थः । कीर्णं व्याप्तम् । कथंभूतैः शिरोमण्डलैः । कालग्राहविगीर्णफेनविकलैः कालो यमः स एव ग्राहो मकरः । सर्वेषां भक्षकत्वात् । तेन विगीर्णा उद्गीर्णा उद्गालिता ये फेनाः अस्थिकफास्तैर्विकलानि सदृशानि तैः । यमेन पूर्वं मृतकानि भक्षितानि, पश्चादुद्गालः कृत इत्यर्थः । अपरं कथंभूतं पितृवनम् । केशैः कुन्तलैः सर्वतः सर्वत्र चितं जटितं व्याप्तम् । कथंभूतैः केशैः । कालव्याधविनोदपाशविवशैः कालो यमः स एव व्याधो लुब्धको नग(?)मृगमारकत्वात् । तस्य विनोदपाशाः क्रीडापाशास्तैर्विवशाः सदृशास्ते तथा तैः । पुनः कथंभूतं पितृवनम् । भस्मोच्चयैश्छन्नं भसितराशिभिर्व्याप्तम् । चकार उक्तसमुच्चयार्थः । भस्मोच्चयैः कथंभूतैः । कालोत्पातसकृत्प्रसूछदचयैः कालो यमः स एव उत्पातसकृत्प्रसूः अशुभनिमित्तशुक्लकाकस्तस्य छदाः पक्षास्तेषां चयाः समूहा राशयस्तत्सदृशैः । रूपकालंकारः ॥

इतश्च एकस्मिन् पार्श्वे । यत्र श्मशानारण्ये । **अर्धदग्धेत्यादि** । विश्वकद्रुभिर्मृगयाकुशलैः कुक्कुरैरुपद्रुतान्तरं उपद्रवं प्रापितमध्यं वर्तते । कथंभूतैर्विश्वकद्रुभिः । अर्धदग्धशवलेशलालसैः अर्धदग्धानां सामिभस्मीभूतानां शवानां मृतकानां लेशेषु खण्डेषु लालसा अत्याकाङ्क्षा येषां तैः । पुनः कथंभूतैर्विश्वकद्रुभिः । भण्डनोद्भटरटद्गलान्तरैः भण्डने युद्धे उद्भटानि बद्धाटोपानि रटन्ति कुत्सितं शब्दं कुर्वन्ति गलान्तराणि कण्ठमध्यानि येषां ते तथा तैः । पुनश्च कथंभूतैर्विश्वकद्रुभिः । कालकेलिकरकौतुकोद्यतैः कालस्य यमस्य केलिकराणि क्रीडाविधायकानि यानि कौतुकानि विनोदास्तेषु उद्यता उद्यमं प्राप्तास्ते तथा तैः । जात्यालंकारः ॥

यत्र च श्मशानारण्ये । **श्येनकुलमित्यादि** । पुरत एकस्मिन् पार्श्वे दिवि आकाशे भुवि च भूमण्डले श्येनकुलं शशादनसमूहः, घूककुलं काकारिवृन्दम्, द्रोणकुलं काकसंघातः, समाकुलं किंकर्तव्यतामूढं वर्तते । कस्मात् । शवपिशितप्राशवशात्

इतश्च—

गृध्राघ्रातसमांसकीकसरसस्रावोत्पथाः पादपाः
प्रेतोपान्तपतत्पतत्रिपरुषप्रायाः प्रदेशा दिशः ।
एते च प्रबलानिलाश्रयवशाच्छीर्यच्छिखाः सर्वतः
संसर्पन्ति जरत्कपोतरुचयो धूमाश्चिताचक्रजाः ॥ ८५ ॥

इतश्च यत्र—

कालाग्निरुद्रनिटिलेक्षणदुर्निरीक्षाः
कीनाशहोमहुतवाहविरुक्षवीक्षाः ।
दाहद्रवच्छववपुःस्फुटदस्थिमध्य-
प्रारब्धशब्दकठिना दहनाश्चितानाम् ॥ ८६ ॥

---

मृतकमांसभक्षणपराधीनत्वात् । कथंभूतं श्येनकुलं घूककुलं द्रोणकुलं च । श्वकुलभण्डनाद्भीतम् शुनां कुर्कुराणां कुलस्य समूहस्य भण्डनं परस्परं युद्धं तस्मात् श्वकुलभण्डनात् भीतं भयं प्राप्तम् । यथासंख्यालंकारः ॥

इतश्च एकस्मिन् पार्श्वे । **गृध्राघ्रातेत्यादि** । पादपाः वृक्षाः कथंभूता वर्तन्ते । गृध्राघ्रातसमांसकीकसरसस्रावोत्पथाः गृध्रैः श्यामलिकाभिराघ्रातानि गृहीतानि समांसानि मांससहितानि यानि कीकसानि अस्थीनि तेषां रसस्रावेण रसवर्षणेन उत्पथा अमार्गाः । तेषु पादपेषु संचरितुं न शक्या इत्यर्थः । तथा दिशः प्रदेशाः दिङ्मण्डलस्थानानि कथंभूताः । प्रेतोपान्तपतत्पतत्रिपरुषप्रायाः प्रेतानां मृतकानां उपान्तेषु समीपेषु पतन्तः आगच्छन्तो ये पतत्रिणः पक्षिणस्तैः परुषप्रायाः कठिनप्रायाः । पुनः कथंभूता वृक्षाः । प्रबलानिलाश्रयवशाच्छीर्यच्छिखाः प्रबलश्चासावनिलस्तस्य आश्रयवशात् शीर्यच्छिखास्त्रुट्यच्छिखाः । (इतश्च एकस्मिन् पार्श्वे) एते प्रत्यक्षीभूताश्चिताचक्रजाः मृताग्निसमूहसमुत्पन्ना धूमाः आर्यानामानः सर्वतः सर्वत्र संसर्पन्ति सम्यक् सरन्ति । कथंभूता धूमाः । जरत्कपोतरुचयः जरतां अतिवृद्धानां कपोतानां पारापतानां रुचिः शोभा येषां ते तथोक्ताः । समुच्चयालंकारः ॥

इतश्च एकस्मिन् पार्श्वे यत्र श्मशानारण्ये । **कालेत्यादि** । चितानां मृतकाग्नीनां दहना वैश्वानराः । कथंभूताः कालाग्निरुद्रनिटिलेक्षणदुर्निरीक्षाः कालाग्नेः प्रलयकालस्य संबन्धी योऽसौ रुद्रः श्रीमहादेवस्तस्य निटिलस्य ललाटपट्टस्य यदीक्षणं लोचनं तद्वत् दुर्निरीक्षा अवलोकितुमशक्याः । अपरं कथंभूताश्चिताग्निदहनाः । कीनाशस्य यमस्य संबन्धी योऽसौ होम आहुतिदानं तस्य संबन्धी योऽसौ हुतवाहो वैश्वानरस्तद्वद्विशेषेण रुक्षा निर्दया वीक्षा अवलोकनं येषां दहनानां ते तथोक्ताः । भूयश्च कथंभूताश्चितानां

इतश्च—

सर्वदेहभृतभस्मनिकायः प्रेतचीवरकरालितकायः ।
कन्दलोल्बणवपुः पवमानः क्रीडति प्रमथनाथसमानः ॥ ८७ ॥

किं च—

भ्रश्यच्छरीरशवशीर्णशिरोजसारः
कुथ्यत्कलेवरकरङ्कहतप्रचारः ।
दग्धार्धदेहमृतकाग्निमयप्रबन्धो
वातः करोति ककुभोऽशुभगन्धबन्धाः ॥ ८८ ॥

---

दहनाः । दाहद्रवच्छववपुःस्फुटदस्थिमध्यप्रारब्धशब्दकठिनाः दाहेन भस्मीकरणेन द्रवन्ति श्च्योतन्ति यानि शवानां मृतकानां वपूंषि शरीराणि तेषां स्फुटन्ति भेदं प्राप्नुवन्ति यानि अस्थीनि हड्डानि तेषां मध्ये अन्तरालेषु प्रारब्धा रभसं प्राप्ता ये शब्दाः कटत्करवास्तैः कठिनाः कर्णस्फोटनप्रायाः । उपमालंकारः । वसन्ततिलकाछन्दः ॥

इतश्च एकस्मिन् पार्श्वे । यत्र श्मशानारण्ये । **सर्वदेहेत्यादि** । पवमानो वायुः क्रीडति विहरति । कथंभूतः पवमानः । यथोक्तविशेषणविशिष्टः प्रमथनाथसमानः श्रीमहादेवसदृशः । कथंभूतः पवमानः प्रमथनाथश्च । सर्वदेहभृतभस्मनिकायः सर्वस्मिन् देहे विश्वस्मिन् शरीरे भृत आरोपितो भस्मनिकायो भसितसमूहो येन स तथोक्तः । अपरं कथंभूतः पवमानः प्रमथनाथश्च । प्रेतचीवरकरालितकायः । प्रेतानां मृतकानां चीवरैः कर्पटैः करालितो रौद्रीकृतः कायः देहो यस्य स तथा । पुनश्च कथंभूतः पवमानः श्रीमहादेवश्च । कन्दलोल्बणवपुः कन्दलैरुल्बणमुद्रिक्तं वपुः शरीरं यस्य स तथोक्तः । 'स्वागतेति रनभाद्गुरुयुग्मम्' । उपमालंकारः ॥

किं च अस्ति कश्चिद्विशेषः । **भ्रश्यच्छरीरेत्यादि** । यत्र श्मशानारण्ये वातो वायुः कर्तृभूतः ककुभो दिशः कर्मतापन्ना अशुभगन्धबन्धाः दुर्गन्धसहिताः करोति विदधाति । कथंभूतो वातः । भ्रश्यच्छरीरशवशीर्णशिरोजसारः भ्रश्यन्ति घटित्वाधः पतन्ति शरीराणि येषां शवानां तानि भ्रश्यच्छरीराणि तानि च तानि शवानि मृतकानि तेषां शीर्णाः शटित्वा पतिताः ये शिरोजाः केशास्त एव सारो धनं यस्य वातस्य स तथोक्तः । पुनः कथंभूतो वातः । कुथ्यत्कलेवरकरङ्कहतप्रचारः कुथ्यन्ति दुर्गन्धं प्राप्नुवन्ति यानि कलेवराणि तेषां करङ्कैः शुष्कशरीरैरस्थित्वग्भूतदेहैर्हतो विनाशितः प्रचारो गतिर्यस्य स तथोक्तः । अपरं कथंभूतो वातः । दग्धार्धदेहमृतकाग्निमयप्रबन्धः दग्धा भस्मीभूता अर्धदेहाः शरीराणि येषां तानि दग्धार्धदेहानि तानि च तानि मृतकानि चैषां संबन्धी योऽसौ अग्निस्तेन निर्वृत्तो निष्पन्नो दग्धार्धदेहमृतकाग्निमयः प्रबन्धो यस्य वातस्य स तथोक्तः । मधुमाधवीछन्दः । रूपकालंकारः ॥

इतश्च यत्र—

यान्युत्सवेषु कृतिनां कृतमङ्गलानि
वाद्यानि मोदिजनगेयनिरर्गलानि ।
तान्येव शोकवशबन्धुरवोद्धुराणि
नर्दन्ति संस्थितवतां विरसस्वराणि ॥ ८९ ॥

अपि च—

यमभुक्तिसमयपिशुनः क्रव्यादसमाजसंह्वयव्यसनः ।
जगदस्थैर्योद्घोषः परासुतूरस्वरः परुषः ॥ ९० ॥

किं च—

अचिरेण तत्कुरुध्वं यतो भवेन्नाजवञ्जवक्लेशः ।
नो चेदियं दशा वो भवितेति ध्वनति शवतूरम् ॥ ९१ ॥

---

इतश्च यत्र एकस्मिन् पार्श्वे यत्र श्मशानारण्ये । **यान्युत्सवेष्वित्यादि** । यानि वाद्यानि उत्सवेषु पुत्रजन्मविवाहादिषु कृतिनां पुण्यवतां कृतमङ्गलानि संजातानि । श्रेयस्कराणि संजातानि इति शेषः । कथंभूतानि वाद्यानि । मोदिजनगेयनिरर्गलानि मोदिनो हर्षवन्तो ये जना लोकास्तेषां गेयानि गीतानि निरर्गलानि अनिवारितानि येषु वाद्येषु तानि तान्येव वाद्यानि संस्थितवतां संस्थितानां मृतकानां संबन्धीनि विरसस्वराणि निरसशब्दानि नर्दन्ति कुत्सितान् शब्दान् कुर्वन्ति । कथंभूतानि वाद्यानि । शोकवशबन्धुरवोद्धुराणि शोकस्य शोचनस्य वशा नाथवन्तो ये बन्धवः कुटुम्बवर्गास्तेषां रवै रटनैः शब्दैरुद्धुराणि उत्कटानि । मधुमाधवीछन्दः । जात्यलंकारः ॥

अपि च तथैव च । **यमभुक्तीत्यादि** । परासुतूरस्वरो मृतकवादित्रशब्दः परुषः कर्णस्फोटनप्रायत्वात् कठिनतरः । कथंभूतः परासुतूरस्वरः । यमभुक्तिसमयपिशुनः यमस्य धर्मराजस्य भुक्तिसमयो भोजनकालस्तस्य पिशुनः सूचकः । अपरं कथंभूतः । क्रव्यादसमाजसंह्वयव्यसनः क्रव्यादानां राक्षसानां समाजः समूहः तस्य संह्वये आह्वाने व्यसनं आसक्तिर्यत्र परासुतूरस्वरे यस्य स तथा । भूयश्च कथंभूतः । जगदस्थैर्योद्घोषः जगतः संसारस्य अस्थैर्ये अध्रुवत्वं तस्य उद्घोषः [१]डुम्वा(?)पातः स तथा । आर्या । रूपकालंकारः ॥

किं च अस्ति कश्चिद्विशेषः । **अचिरेणेत्यादि** । शवतूरं मृतकवादित्रमितीदृशं ध्वनति सूचयति—अचिरेण शीघ्रतया । तत्किमपि समीचीनं कर्म हे भव्याः, यूयं कु-

---

१. 'धूरीपातः' इति पुस्तकान्तरे.

इतश्च यत्र—

अस्तोकशोकवशिकाशयशीर्णशङ्कै-
लोंकैश्चिताचरितबान्धवसंनिवेशैः ।
मुक्ता न कस्य हृदयं परिखेदयन्ति
बाष्पोद्गतिस्खलितवेगवशा विलापाः ॥ ९२ ॥

इतश्च यत्र—

कलिकालकायकालाः शोकादिव दहनबान्धवक्षयजात् ।
अङ्गाराः शल्यधराः क्षयक्षपातारकाकाराः ॥ ९३ ॥

---

रुध्वं कुर्वन्तु भवन्तः । तत्किम् । यतो यस्माच्छुभकर्मणः सकाशात् आजवञ्जवक्लेशः संसारदुःखं न भवेत् न जायेत । नो चेत् यदि शुभं कर्म न करिष्यन्ति भवन्तस्तर्हि इयं प्रत्यक्षीभूता मृतकस्य दशा अवस्था वो युष्माकं भविता भविष्यति । उपमैव ॥

इतश्च यत्र । **अस्तोकेत्यादि** । लोकैर्जनैः मुक्ता उच्चैः शब्दिता विलापाः रोदनध्वनयः कस्य पुरुषस्य हृदयं मनो न परिखेदयन्ति न दुःखं जनयन्ति । अपि तु सर्वस्यापि हृदयं दुःखयन्ति । कथंभूतैर्लोकैः । अस्तोकशोकवशिकाशयशीर्णशङ्कैः अस्तोकः प्रचुरतरो योऽसौ शोकः पश्चात्तापस्तेन वशिकः शून्यो योऽसावाशयश्चित्तं तेन शीर्णा शतखण्डीभूता शङ्का गुर्वादिभवो विचारो येषां लोकानां ते तथोक्तैः । अपरं कथंभूतैर्लोकैः । चिताचरितवान्धवसंनिवेशैः चितायां मृतकाग्नौ आचरितो रचितो बान्धवस्य बन्धुवर्गस्य संनिवेशः समारोपणं यैस्ते तथोक्तैः । कथंभूता विलापाः । बाष्पोद्गतिस्खलितवेगवशाः बाष्पाणामश्रुजलानामुद्गतिरुत्पत्तिस्तया स्खलितो अवष्टब्धो योऽसौ वेगो रयस्तस्य वशा नाथवन्तस्ते तथोक्ताः । वसन्ततिलका । आक्षेपालंकारः ॥

इतश्च यत्र श्मशानारण्ये । **कलिकालेत्यादि** । अङ्गाराः मुर्मुराः शल्यधराः अस्थिधराः वर्तन्ते । कथंभूता अङ्गाराः । कलिकालकायकालाः कलिकालो दुःखम[य]कालस्तस्य कायः स्वरूपं तद्वत् कालाः कृष्णवर्णाः । कस्मात् काला अङ्गाराः संजाताः । उत्प्रेक्षते—दहनबान्धवक्षयजात् शोकादिव दहनो वैश्वानरः स च बान्धवः कुटुम्बवर्गस्तस्य क्षये विनाशे जायते उत्पद्यते दहनबान्धवक्षयजस्तस्मात् । 'सप्तमी पञ्चम्यन्ते जनेर्डः' (?) । पश्चात्तापादिव । कथंभूता अङ्गाराः क्षयक्षपातारकाकाराः क्षयस्य प्रलयस्य क्षपा रात्रिस्तस्याः संबन्धिन्यो यास्तारकाश्चान्द्रायिण्यस्तासामाकारा येषां अङ्गाराणां ते तथोक्ताः । अर्थानुत्प्रेक्षालंकारः ॥

इतश्च यत्र—

दन्तोत्कीलितशुष्ककीकसकलाकीलोद्दलत्तालुकाः
कण्ठान्तःप्रविलग्नशल्यशकलोद्गालस्खलत्कुक्षयः।
प्रेतप्रान्तपुराणपादपपतत्पत्रप्रदुष्यद्दृशः
प्रभ्राम्यन्त्यविशङ्कफेत्कृतिकृतिक्षीबाः शिवाः सोद्धवाः॥ ९४॥

इतश्च—

कथं नामेयमनङ्गग्रहग्रहिललोकलोचनानन्दचन्द्रिका चेतोभवानुचरमानवमनोमर्कटक्रीडावनविहारवसतिर्युवतिरुड्डीनान्तरात्महंसा गण्डमण्डलावासवायसपक्षप्रान्तापादितावतंसा इदमवस्थान्तरमवातरत्॥

---

इतश्च यत्र दन्तोत्कीलितेत्यादि। शिवाः शृगाल्यः प्रभ्राम्यन्ति पर्यटन्ति। कथंभूताः शिवाः। दन्तोत्कीलितशुष्ककीकसकलाकीलोद्दलत्तालुका दन्तेषु दशनेषु उत्कीलिता क्षुण्धा या शुष्ककीकसस्य कला निर्मांसहड्डस्य खण्डा सैव कीलः शङ्कुस्तेन उद्दलद्विदार्यमाणं तालु काकुदं यासां तास्तथोक्ताः। अपरं कथंभूताः शिवाः। कण्ठान्तःप्रविलग्नशल्यशकलोद्गालस्खलत्कुक्षयः कण्ठस्य गलस्य अन्तर्मध्ये प्रविलग्नं क्षुण्धं शल्यस्य अस्थ्नः शकलं खण्डं तस्य उद्गालेन उद्वमनेन स्खलन् चलन् कुक्षिरुदरं यासां शिवानां तास्तथा। अपरं कथंभूताः शिवाः। प्रेतप्रान्तपुराणपादपपतत्पत्रप्रदुष्यद्दृशः प्रेतानां मृतकानां प्रान्तेषु पुराणा जीर्णा ये पादपा वृक्षास्तेभ्यः पतन्ति क्षरन्ति यानि पत्राणि छदास्तैः प्रदुष्यन्त्यो विकृतिं प्राप्नुवन्त्यो दृशो लोचनानि यासां ताः। अपरं कथंभूताः शिवाः। यथोक्तविशेषणविशिष्टाः। अविशङ्कफेत्कृतिकृतिक्षीबाः अविशङ्कं निर्भयं यथा भवत्येवं या फेत्कृतिकृतिः फेत्कारकरणं तया तस्यां वा क्षीबा मत्ताः। पुनश्च कथंभूताः। सोद्धवाः सगर्वाः। शार्दूलविक्रीडितम्। जात्यलंकारः॥

इतश्च एकस्मिन् पार्श्वे 'मृतां स्त्रियं श्मशाने पतितां दृष्ट्वा भगवानिति विचारयति' (इति सोपस्कारवचनं संबन्धनीयम्)। इतीति किम्। कथं केन प्रकारेण। नामेति संभावनायाम्। युवतिर्नवयौवना स्त्री इदं प्रत्यक्षीभूतं अवस्थान्तरं जीवेदितरां दशां अवातरत् प्राप्ता। कथंभूता युवतिः। अनङ्गग्रहग्रहिललोकलोचनानन्दचन्द्रिका अनङ्गः कन्दर्पः स एव ग्रहः पिशाचः। लोकानां ग्राथिल्यजनकत्वात्, चित्तविभ्रमकारित्वाच्च। तेन ग्रहिला विकलमूर्तयो ये लोकाः पञ्चजनास्तेषां लोचनानां नेत्राणां आनन्दाय आह्लादनोत्पादनार्थं चन्द्रिका चन्द्रज्योत्स्ना। अपरं कथंभूता युवतिः। चेतोभवानुचरमानवमनोमर्कटक्रीडावनविहारवसतिः चेतोभवः कन्दर्पस्तस्य अनुचरा दासा एव

---

१. कस्मिंश्चित्पुस्तके नास्त्ययं पाठः. २. 'जीवितान्तराम्', 'जीवितेतराम्'.

तथा हि—

या पूर्वं स्मरकेलिचामररुचिः कर्णावतंसोत्पल-
श्लिष्टेन्दिन्दिरसुन्दरद्युतिरभूद्गण्डस्थलीमण्डनम् ।
सेयं कुन्तलवल्लरी पितृवने वातेरिता सांप्रतं
धूलीधूसरिता दधाति विसरत्संमार्जनीचेष्टितम् ॥ ९५ ॥

ये पूर्वं कामकोदण्डकोटिप्रकटविभ्रमे ।
ते संप्रति भ्रुवौ जाते शुष्कवल्लूरकल्मषे ॥ ९६ ॥

---

ये मानवा मनुष्यास्तेषां मनश्चित्तं तदेव मर्कटो वानरः । चपलस्वभावत्वात् । तस्य क्रीडावनविहाराय विनोदारण्यपर्यटनाय वसतिः स्थानम् । अपरं कथंभूता युवतिः । उड्डीनान्तरात्महंसा उड्डीनः पलायितोऽन्तरात्मा जीव एव हंसो मानसौका यस्याः सा उड्डीनान्तरात्महंसा । अपरं कथंभूता युवतिः । गण्डमण्डलावासवायसपक्षप्रान्तापादितावतंसा गण्डमण्डलं कपोलस्थलं आवासो मालकं यस्य स गण्डमण्डलावासः स चासौ वायसः काकस्तस्य पक्षप्रान्तेन पत्राग्रेण आपादितं रचितं अवतंसं कर्णपूरो यस्याः सा तथा । किमिव अवस्थान्तरं अवातरत् इत्युक्ते—तथा हि तदेवावस्थान्तरं निरूपयति । रूपकालंकारः ॥

**या पूर्वमित्यादि** । या कुन्तलवल्लरी केशवल्ली पूर्वं जीवदवस्थायां गण्डस्थलीमण्डनं अभूत् कपोलस्थलभूषणं संजाता । कथंभूता कुन्तलवल्लरी । स्मरकेलिचामररुचिः स्मरकेलिषु कामक्रीडासु चामररुचिः प्रकीर्णकवच्छोभिता । कन्दर्पस्य चामरं कृष्णमेव भवति यतः । अपरं कथंभूता कुन्तलवल्लरी । कर्णावतंसोत्पलश्लिष्टेन्दिन्दिरसुन्दरद्युतिः कर्णावतंसं कर्णपूरीकृतं यदुत्पलं कुवलयं तत्र श्लिष्टाः आलिङ्गनं प्राप्ता ये इन्दिन्दिरा भ्रमरास्तद्वत् सुन्दरा अतिमनोहरा द्युतिः शोभा यस्याः सा तथा । सा पूर्वोक्तलक्षणा । इयं प्रत्यक्षीभूता कुन्तलवल्लरी पितृवने श्मशानारण्ये वातेरिता वातप्रेरिता सती धूलीधूसरिता च सती धूलीभिरीषत्पाण्डुरा च सती सांप्रतमिदानीं विसरत् संमार्जनीचेष्टितं दधाति विसरन्ती प्रसरन्ती त्रुट्यन्ती वा या संमार्जनी बहुकरी तस्याश्चेष्टितं आचारं दधाति धरति । शार्दूलविक्रीडितम् । उपमालंकारः ॥

**ये पूर्वमित्यादि** । ये भ्रुवौ चिल्लयौ पूर्वं जीवदवस्थायां कामकोदण्डकोटिप्रकटविभ्रमे कामस्य कन्दर्पस्य कोदण्डं धनुः तस्य कोटी अग्रे तयोरिव प्रकटः स्फुटः विभ्रम उपमा ययोस्ते तथोक्ते जाते बभूवतुः । ते भ्रुवौ संप्रति इदानीं शुष्कवल्लूरकल्मषे जाते शुष्कमांसवर्तिके इव जाते । वक्त्र(?)छन्दः । उपमालंकारः ॥

ये नीलरक्तरत्नान्तचन्द्रकान्तदशे दृशौ।
ते जीर्णोदश्वनच्छिद्रद्रवबुद्बुदसंनिभे ॥ ९७ ॥
ये कलाकेलिदोलाभे मुखलक्ष्मीलतोपमे।
ते श्रुती विचटन्नद्धवाध्रीरन्ध्राधमस्थिती ॥ ९८ ॥
कस्तूरिकातिलकपत्रविचित्रितश्री-
र्योऽभून्मृगाङ्कसमकान्तिरयं कपोलः।
सोऽद्य च्छविं वहति वायसबालभुक्तः
कोथप्रदीर्णतनुतुम्बफलोपमेयाम् ॥ ९९ ॥

---

**ये नीलेति**। ये दृशौ ये लोचने [पूर्वं] नीलरक्तरत्नान्तचन्द्रकान्तदशे नीले कृष्णवर्णे रक्ते कोकनदच्छविनी ते च ते रत्ने माणिक्ये तयोरन्ते प्रान्ते ये चन्द्रकान्ते रत्ने तयोर्दशा अवस्था ययोस्ते. नीलरक्तरत्नान्तचन्द्रकान्तदशे जज्ञाते। ते दृशौ ते लोचने कथंभूते संजाते। जीर्णोदश्वनच्छिद्रद्रवबुद्बुदसंनिभे जीर्णे शटिते उदश्वने नालिकेरफले [ये छिद्रे] रोके तयोश्छिद्रयोर्विषये योऽसौ द्रवो दुर्गन्धनिर्यासस्तस्मिन् यौ बुद्बुदौ जलस्फोटौ ताभ्यां संनिभे सदृशे। उपमालंकारः ॥

**ये कलेति**। ये श्रुती पूर्वं कथंभूते जाते। कलाकेलिदोलाभे कलानां सि(लि)खितपठितादीनां केलिदोले क्रीडाप्रेङ्खे तयोराभा शोभा ययोः श्रुत्योस्ते तथोक्ते। अपरं कथंभूते श्रुती। मुखलक्ष्मीलतोपमे मुखस्य वक्त्रस्य लक्ष्मीः शोभा तस्या लते वल्ल्यौ तयोरुपमा सादृश्यं ययोस्ते तथोक्ते। ते श्रुती इदानीं मृतावस्थायां कथंभूते संजाते। विचटन्नद्धवाध्रीरन्ध्राधमस्थिती विचटन्ती स्फुटन्ती नद्धा बन्धनं प्राप्ता या वाध्री चर्मरज्जुस्तस्या रन्ध्रं छिद्रं तद्वदधमा निकृष्टा स्थितिर्व्यवस्था ययोः श्रुत्योस्ते तथोक्ते। उपमेव वा ॥

**कस्तूरिकातिलकेत्यादि**। यः कपोलः अयं प्रत्यक्षीभूतः मृगाङ्कसमकान्तिः मृगाङ्कस्य चन्द्रस्य समा कान्तिः शोभा यस्येति स तथा। कथंभूतः कपोलः। कस्तूरिकातिलकपत्रविचित्रितश्रीः कस्तूरिकाया मृगमदस्य या तिलक···पत्रावलिका तेन विचित्रिता श्रीः शोभा यस्येति स तथोक्तः। इत्यनेन चन्द्रस्य लावण्यं सूचितम्। स जगत्प्रसिद्धोऽयं प्रत्यक्षीभूतः कपोलः वायसबालभुक्तः काकशावकभक्षितः सन् अद्य इदानीं छविं शोभां वहति इति। कथंभूतां छविशोभां विदधति धरति। कथंभूतां छविम्। कोथप्रदीर्णतनुतुम्बफलोपमेयाम् कोथेन कुष्ठेन प्रदीर्णा छिद्रिता कोरिता तनुः शरीरं यस्य तस्य तच्च तत्तुम्बफलं दौग्धिकसस्यं तेन उपमेया उपमां प्रापणीया उपमानुमारब्धा या छविः सा तथा ताम्। उपमालंकारः ॥

या कामकेलीशुकतुण्डकान्ता पातुं मुखामोदमिवायताभूत् ।
सा गन्धवाहा विवरावशेषनिवेशनिर्गच्छदतुच्छपूया ॥ १०० ॥

यत्राधरेऽमृतधिया नवपल्लवाभे
कामं कृतार्थहृदयः समपादि लोकः ।
सोऽजस्रविस्रविवशस्रुतपूयपूर-
पर्यन्तवृत्तिरधरत्वमगण्यमागात् ॥ १०१ ॥

या चन्द्ररत्नाङ्कुरसंनिवेशा मूले श्रिता शोणमणिद्रवेण ।
सा दन्तपङ्क्तिः करपत्रवक्रश्यावच्छविः कं न दुनोति लोकम् ॥१०२॥

---

**या कामकेलीत्यादि** । या गन्धवाहा या नासिका आयता अभूत् दीर्घा संजाता । किं कुर्वंती आयता अभूत् । उत्प्रेक्षते—मुखामोदं मुखकमलपरिमलं पातुमिव गन्धोपादानं कर्तुमिव । कथंभूता गन्धवाहा । कामकेलीशुकतुण्डकान्ता कामस्य कन्दर्पस्य केलीशुकः क्रीडाकीरस्तस्य तुण्डवन्मुखवत्कान्ता मनोहरा । सा गन्धवाहा कथंभूता संजाता । विवरावशेषनिवेशनिर्गच्छदतुच्छपूया विवरस्य छिद्रस्य अवशेषः उद्वारो योऽसौ निवेशः स्थानं तस्मान्निर्गच्छन् निर्गलत् अतुच्छं प्रचुरं पूयं नष्टरुधिरं यस्यां यस्या वा सा तथोक्ता । उत्प्रेक्षोपमालंकारः ॥

**यत्राधरेत्यादि** । यत्र यस्मिन् अधरे दन्तच्छदे अमृतधिया अमृतपानबुद्ध्या कामं यथेष्टं लोकः कामुकजनः कृतार्थहृदयः कृतकृत्यमनाः समपादि जातः । कथंभूते अधरे । नवपल्लवाभे प्रत्यग्रप्रवालसदृशे । स अधरः अगण्यमपर्यन्तं अधरत्वं निकृष्टत्वं आगात् संप्राप्तः । कथंभूतोऽधरः । अजस्रविस्रविवशस्रुतपूयपूरपर्यन्तवृत्तिः अजस्रं निरन्तरं विस्रमपक्वं विड्गन्धं विवशेन परवशेन स्रुतं निर्गलितं यत्पूयं नष्टरुधिरं तस्यापूरः प्रवाहः पर्यन्तवृत्तौ प्रान्तस्थाने यस्याधरस्य तथोक्तः । उपमालंकारः ॥

**या चन्द्रेत्यादि** । या दन्तपङ्क्तिर्दशनावलिः चन्द्ररत्नानि चन्द्रकान्तमणयस्तेषामङ्कुरा अभिनवोद्भिदस्तद्वत्संनिवेशो रचना यस्या दन्तपङ्क्तेः सा तथोक्ता । अपरं कथंभूता दन्तपङ्क्तिः । शोणमणिद्रवेण पद्मरागरत्नरसेन मूले अधस्तनभागे श्रिता आश्रिता संजाता सा दन्तपङ्क्तिः कं लोकं न दुनोति । अपि सर्वलोकं संतापयतीत्यर्थः । कथंभूता दन्तपङ्क्तिः । लोकानामुद्वेगकारणं गर्भितं विशेषणमाह—करपत्रवक्रश्यावच्छविः करपत्रस्य क्रकचस्य यद्वक्रं मुखं तद्वत् श्यावा कर्दमाभा छविः शोभा यस्याः सा तथोक्ता । आक्षेपोपमालंकारः ॥

यः कण्ठः कम्बुसंकाशः कलकोकिलनिस्वनः।
स विशीर्णशिरासंधिर्जरत्पञ्जरतां गतः॥ १०३॥
यौ हारनिर्झरलसन्नवपत्रकान्तौ
क्रीडाचलाविव मनोजगजस्य पूर्वम्।
तौ पूतिपुष्पफलदुष्टदशाविदानीं
वक्षोरुहौ बलिभुजां बलिपिण्डकल्पौ॥ १०४॥
लावण्याम्बुधिवीचिकोचितरुचौ हस्तौ मृणालोपमौ
कामारामलताप्रतानसुभगौ प्रान्तोल्लसत्पल्लवौ।
यौ पुष्पास्त्रपिशाचबन्धविधुरौ लीलाविलासालसौ
तौ जातौ गतजङ्गलौ प्रविजरत्कोदण्डदण्डद्युती॥ १०५॥

---

**यः कण्ठ इत्यादि**। यः कण्ठो गलकन्दली पूर्वं कम्बुसंकाशो नारायणकरशङ्ख-सदृशः संजातः। पुनश्च कथंभूतः कण्ठः। कलकोकिलनिस्वनः। कलो मधुरः कोकिलस्येव निस्वनः शब्दो यस्य कण्ठस्य स तथोक्तः। स कण्ठः विशीर्णशिरासंधिः विशीर्णा शटिता शिराणां नहारूणां संधिः यस्य स विशीर्णशिरासंधिर्विघटितस्नसासंधानः सन् जरत्पञ्जरतां जीर्णपक्षिग्रहोपमानं गतः प्राप्तः। उपमालंकारः॥

**यौ हारेत्यादि**। यौ वक्षोरुहौ स्तनौ पूर्वं जीवदवस्थायां मनोजगजस्य कन्दर्प-यूथनाथस्य क्रीडाचलाविव केलिपर्वतसदृशौ संजातौ। कथंभूतौ वक्षोरुहौ। अचलधर्म-गर्भितं विशेषणमाह—हारनिर्झरलसन्नवपत्रकान्तौ हारो मुक्ताफलमाला स एव निर्झरो जलपूरनिर्गमो लसच्छोभमानं नवपत्रं प्रत्यग्रपत्रावली हारनिर्झरश्च लसन्नवपत्रे ताभ्यां कृत्वा कान्तौ मनोहरौ। तौ वक्षोरुहौ इदानीं अधुना [पूति]पुष्पफलदुष्टदशौ सन्तौ [पूति यत्] पुष्पफलं कपित्थफलं तद्वद् दुष्टा दशा अवस्था ययोस्तौ। कथंभूतौ। बलिभुजां काकानां बलिपिण्डकल्पौ काकाय बलिदानाय यौ पिण्डौ भक्तग्रासौ ताभ्यां कल्पौ सदृशौ। उपमालंकारः॥

**लावण्येत्यादि**। यौ हस्तौ पूर्वं कथंभूतौ जातौ। लावण्याम्बुधिवीचिकोचित-रुचौ लावण्यं कान्तिर्लावण्यमेवाम्बुधिः समुद्रस्तस्य वीचिका लहरी तद्वत् उचिता योग्या रुक् शोभा ययोस्तौ। अपरं कथंभूतौ हस्तौ। मृणालोपमौ मृणालस्य पद्मि-नीकन्दस्य उपमा ययोस्तौ। अपरं कथंभूतौ कामारामलताप्रतानसुभगौ कामस्य कन्दर्पस्य आराम उपवनं तस्य संबन्धी योऽसौ वल्लीविस्तारस्तद्वत् सुभगौ प्रीत्युत्पादकौ। अपरं कथंभूतौ हस्तौ। प्रान्तोल्लसत्पल्लवौ प्रान्तयोः पर्यन्तयोरुल्लसन्तौ पल्लवौ प्रवालौ ययोस्तौ। अपरं कथंभूतौ। पुष्पास्त्रपिशाचबन्धविधुरौ पुष्पास्त्रः कन्दर्पः स एव

यः कृशोऽभूत्पुरा मध्यो वलित्रयविराजितः ।
सोऽद्य द्रवद्रसो धत्ते चर्मकारदृतिद्युतिम् ॥ १०६ ॥
केलिवापीव कामस्य नाभी गम्भीरमण्डला ।
यासीत्सा निर्गतान्त्रान्ता स्वपत्सर्पविलाविला ॥ १०७ ॥
या कामशरपुङ्खाग्रसमग्राभोगनिर्गमा ।
सार्धदग्धाजिनप्रान्तविवर्णा तनुजावली ॥ १०८ ॥
स्मरद्विपविहाराय यज्जातं जघनान्तरम् ।
तद्गलत्क्लेदविक्लिन्नं जघन्यत्वमगात्परम् ॥ १०९ ॥

---

पिशाचो ग्रहो ग्राथिल्यकारित्वात् तस्य बन्धविधुरौ बन्धनसदृशौ । अपरं कथंभूतौ हस्तौ लीलाविलासालसौ लीलाविलासे कामक्रीडाविस्तारे अलस आलस्यं ययोस्तौ तथोक्तौ । तौ हस्तौ इदानीं कथंभूतौ जातौ । गतजङ्गलौ मांसरहितौ सन्तौ । प्रविजरत्कोदण्डदण्डद्युती प्रकर्षेण विशेषेण च जरत् जीर्णं भवत् यत्कोदण्डं धनुस्तस्य दण्डो यष्टिस्तद्वत् द्युतिः शोभा ययोस्तौ । उपमालंकारः ॥

**यः कृश इत्यादि** । यो मध्यो मध्यप्रदेशः पुरा पूर्वं कृशो मुष्टिमध्यसंमेयोऽभूत् बभूव । कथंभूतो मध्यः । वलित्रयविराजितः वलित्रयेण रेखात्रयेण विशेषेण राजितः शोभितः । स मध्यः अद्य इदानीं द्रवद्रसः प्रवहत्प्रथमधातुः सन् चर्मकारदृतिद्युतिं धत्ते चर्मकारस्य पादकृतो या दृतिश्चर्मप्रसेविका तस्या द्युतिं शोभां धत्ते धरति। उपमालंकारः ॥

**केलिवापीत्यादि** । या नाभी तुन्दिका गम्भीरमण्डला अगमन् (अगाध)मध्या आसीद्बभूव । कथंभूता नाभी । कामस्य कन्दर्पस्य केलिवापीव क्रीडादीर्घिकेव । सा नाभी निर्गतान्त्रान्ता सती बहिर्निर्गतपुरीतत् प्रान्ता सति स्वपत्सर्पविलाविला स्वपन्तो निद्रां कुर्वन्तो ये सर्पा दीर्घपृष्ठास्तेषां विलं छिद्रं तद्वत् आविला अतुच्छा जाता । उपमालंकारः ॥

**या कामशरेत्यादि** । या तनुजावली रोमराजी कामशरपुङ्खाग्रसमग्राभोगनिर्गमा पूर्वं जाता कामः कन्दर्पस्तस्य शरो बाणस्तस्य पुङ्खः काण्डमूलं तस्य अग्रं प्रान्तस्तद्वत् समग्रः परिपूर्ण आभोगनिर्गमः परिपूर्णताप्रादुर्भावो यस्यास्तनुजावल्याः सा तथोक्ता । सा तनुजावलिः इदानीं कथंभूता जाता । अर्धदग्धाजिनप्रान्तविवर्णा अर्धं सामिदग्धं भस्मीभूतं अजिनं चर्म तस्य प्रान्तवत् पर्यन्तवत् विरूपको वर्णो रूपं यस्याः सा तथोक्ता जाता । उपमालंकारः ॥

**स्मरद्विपेत्यादि** । यज्जघनान्तरं कट्यग्रमण्डलं स्मरद्विपविहाराय जातम् । स्मरः कन्दर्पः स एव द्विपो गजः सर्वेषां घातकत्वात् तस्य विहारः पर्यटनं स्मरद्विपविहाराय

यः कण्ठः कम्बुसंकाशः कलकोकिलनिस्वनः।
स विशीर्णशिरासंधिर्जरत्पञ्जरतां गतः॥ १०३॥

यौ हारनिर्झरलसन्नवपत्रकान्तौ
क्रीडाचलाविव मनोजगजस्य पूर्वम्।
तौ पूतिपुष्पफलदुष्टदशाविदानीं
वक्षोरुहौ बलिभुजां बलिपिण्डकल्पौ॥ १०४॥

लावण्याम्बुधिवीचिकोचितरुचौ हस्तौ मृणालोपमौ
कामारामलताप्रतानसुभगौ प्रान्तोल्लसत्पल्लवौ।
यौ पुष्पास्त्रपिशाचबन्धविधुरौ लीलाविलासालसौ
तौ जातौ गतजङ्गलौ प्रविजरत्कोदण्डदण्डद्युती॥ १०५॥

---

**यः कण्ठ इत्यादि**। यः कण्ठो गलकन्दली पूर्वं कम्बुसंकाशो नारायणकरशङ्ख-सदृशः संजातः। पुनश्च कथंभूतः कण्ठः। कलकोकिलनिस्वनः। कलो मधुरः कोकिल-स्येव निस्वनः शब्दो यस्य कण्ठस्य स तथोक्तः। स कण्ठः विशीर्णशिरासंधिः विशीर्णा शटिता शिराणां नहारूणां संधिः यस्य स विशीर्णशिरासंधिर्विघटितस्नसासंधानः सन् जरत्पञ्जरतां जीर्णपक्षिग्रहोपमानं गतः प्राप्तः। उपमालंकारः॥

**यौ हारेत्यादि**। यौ वक्षोरुहौ स्तनौ पूर्वं जीवदवस्थायां मनोजगजस्य कन्दर्प-यूथनाथस्य क्रीडाचलाविव केलिपर्वतसदृशौ संजातौ। कथंभूतौ वक्षोरुहौ। अचलधर्म-गर्भितं विशेषणमाह—हारनिर्झरलसन्नवपत्रकान्तौ हारो मुक्ताफलमाला स एव निर्झरो जलपूरनिर्गमो लसच्छोभमानं नवपत्रं प्रत्यग्रपत्रावली हारनिर्झरश्च लसन्नवपत्रे ताभ्यां कृत्वा कान्तौ मनोहरौ। तौ वक्षोरुहौ इदानीं अधुना [पूति]पुष्पफलदुष्टदशौ सन्तौ [पूति यत्] पुष्पफलं कपित्थफलं तद्वद् दुष्टा दशा अवस्था ययोस्तौ। कथंभूतौ। बलिभुजां काकानां बलिपिण्डकल्पौ काकाय बलिदानाय यौ पिण्डौ भक्तग्रासौ ताभ्यां कल्पौ सदृशौ। उपमालंकारः॥

**लावण्येत्यादि**। यौ हस्तौ पूर्वं कथंभूतौ जातौ। लावण्याम्बुधिवीचिकोचित-रुचौ लावण्यं कान्तिर्लावण्यमेवाम्बुधिः समुद्रस्तस्य वीचिका लहरी तद्वत् उचिता योग्या रुक् शोभा ययोस्तौ। अपरं कथंभूतौ हस्तौ। मृणालोपमौ मृणालस्य पद्मि-नीकन्दस्य उपमा ययोस्तौ। अपरं कथंभूतौ कामारामलताप्रतानसुभगौ कामस्य कन्दर्पस्य आराम उपवनं तस्य संबन्धी योऽसौ वल्लीविस्तारस्तद्वत् सुभगौ प्रीत्युत्पादकौ। अपरं कथंभूतौ हस्तौ। प्रान्तोल्लसत्पल्लवौ प्रान्तयोः पर्यन्तयोरुल्लसन्तौ पल्लवौ प्रवालौ ययोस्तौ। अपरं कथंभूतौ। पुष्पास्त्रपिशाचबन्धविधुरौ पुष्पास्त्रः कन्दर्पः स एव

यः कृशोऽभूत्पुरा मध्यो वलित्रयविराजितः ।
सोऽद्य द्रवद्रसो धत्ते चर्मकारदृतिद्युतिम् ॥ १०६ ॥
केलिवापीव कामस्य नाभी गम्भीरमण्डला ।
यासीत्सा निर्गतात्रान्ता स्वपत्सर्पबिलाविला ॥ १०७ ॥
या कामशरपुङ्खाग्रसमग्राभोगनिर्गमा ।
सार्धदग्धाजिनप्रान्तविवर्णा तनुजावली ॥ १०८ ॥
स्मरद्विपविहाराय यज्जातं जघनान्तरम् ।
तद्गलत्क्लेदविक्लिन्नं जघन्यत्वमगात्परम् ॥ १०९ ॥

---

पिशाचो ग्रहो श्राथिल्यकारित्वात् तस्य वन्धविधुरौ वन्धनसदृशौ । अपरं कथंभूतौ हस्तौ लीलाविलासालसौ लीलाविलासे कामक्रीडाविस्तारे अलस आलस्यं ययोस्तौ तथोक्तौ । तौ हस्तौ इदानीं कथंभूतौ जातौ । गतजङ्गलौ मांसरहितौ सन्तौ । प्रविजरत्कोदण्डदण्डद्युती प्रकर्षेण विशेषेण च जरत् जीर्णं भवत् यत्कोदण्डं धनुस्तस्य दण्डो यष्टिस्तद्वत् द्युतिः शोभा ययोस्तौ । उपमालंकारः ॥

**यः कृश इत्यादि** । यो मध्यो मध्यप्रदेशः पुरा पूर्वं कृशो मुष्टिमध्यसंमेयोऽभूत् बभूव । कथंभूतो मध्यः । वलित्रयविराजितः वलित्रयेण रेखात्रयेण विशेषेण राजितः शोभितः । स मध्यः अद्य इदानीं द्रवद्रसः प्रवहत्प्रथमधातुः सन् चर्मकारदृतिद्युतिं धत्ते चर्मकारस्य पादकृतो या दृतिश्चर्मप्रसेविका तस्या द्युतिं शोभां धत्ते धरति । उपमालंकारः ॥

**केलिवापीत्यादि** । या नाभी तुन्दिका गम्भीरमण्डला अगमन् (अगाध)मध्या आसीद्बभूव । कथंभूता नाभी । कामस्य कन्दर्पस्य केलिवापीव क्रीडादीर्घिकेव । सा नाभी निर्गतात्रान्ता सती वहिर्निर्गतपुरीतत् प्रान्ता सति स्वपत्सर्पबिलाविला स्वपन्तो निद्रां कुर्वन्तो ये सर्पा दीर्घपृष्ठास्तेषां बिलं छिद्रं तद्वत् आविला अतुच्छा जाता । उपमालंकारः ॥

**या कामशरेत्यादि** । या तनुजावली रोमराजी कामशरपुङ्खाग्रसमग्राभोगनिर्गमा पूर्वं जाता कामः कन्दर्पस्तस्य शरो वाणस्तस्य पुङ्खः काण्डमूलं तस्य अग्रं प्रान्तस्तद्वत् समग्रः परिपूर्ण आभोगनिर्गमः परिपूर्णताप्रादुर्भावो यस्यास्तनुजावल्याः सा तथोक्ता । सा तनुजावलिः इदानीं कथंभूता जाता । अर्धदग्धाजिनप्रान्तविवर्णा अर्धं सामिदग्धं भस्मीभूतं अजिनं चर्म तस्य प्रान्तवत् पर्यन्तवत् विरूपको वर्णो रूपं यस्याः सा तथोक्ता जाता । उपमालंकारः ॥

**स्मरद्विपेत्यादि** । यज्जघनान्तरं कट्यग्रमण्डलं स्मरद्विपविहाराय जातम् । स्मरः कन्दर्पः स एव द्विपो गजः सर्वेषां घातकत्वात् तस्य विहारः पर्यटनं स्मरद्विपविहाराय

या कामकलभालानस्तम्भिकेवोरुवल्लरी।
सा श्वनिर्ल्लूनलावण्या वानवेणुपरप्रभा ॥ ११० ॥
ये पूर्वं स्मरशरधी श्लक्ष्णच्छविवर्तिते सुवृत्ते च।
कोलिकनलकाकारे ते जङ्घे सांप्रतं जाते ॥ १११ ॥
यत्रालक्तकमण्डनं विरचितं यत्रालितौ नूपुरौ
यत्रासीन्नवमौक्तिकावलिकलाकान्ता नखानां ततिः।
यत्राशोकदलोच्चयश्च समभूत्क्रीडाविहारोचित-
स्तावेरण्डजरण्डकाण्डपटलप्रस्पष्टचेष्टौ क्रमौ ॥ ११२ ॥

---

जातं संपन्नम्। तज्जघनान्तरं गलत्क्लेदविक्लिन्नम् गलता निर्गलता क्लेदेन पूयादिना आर्द्रभावेन विक्लिन्नं विरूपं भिन्नं सत् परं उत्कृष्टं जघन्यत्वं निकृष्टत्वं अगात् जगाम। उपमालंकारः॥

**या कामकलभेत्यादि।** या ऊरुवल्लरी सक्थिलता कामकलभालानस्तम्भिका इव संजाता। कामः कन्दर्पः स एव कलभो गजबालको लोकानां मारणहेतुत्वात् तस्य आलानस्तम्भिका बन्धनलघुस्तम्भस्तद्वत्संजाता। सा ऊरुवल्लरी इदानीं कथंभूता संजाता। श्वनिर्ल्लूनलावण्या सती श्वभिः सरमासुतैर्निर्ल्लूनं समूलोत्काषितं लावण्यं कान्तिर्यस्या ऊरुवल्लर्याः सा तथा श्वनिर्ल्लूनलावण्या सती। कीदृशी जाता। वानवेणुवत् जीर्णवंशवत् परा अनन्यादृशी प्रभा यस्याः सा वानवेणुपरप्रभा। उपमालंकारः॥

**ये पूर्वमित्यादि।** ये जङ्घे पूर्वं चैतन्यकाले स्मरशरधी कामेषुधिसमाने जाते। कथंभूते जङ्घे। श्लक्ष्णच्छविवर्तिते श्लक्ष्णया मनोहरया छव्या कान्त्या वर्तिते लिप्ते। पुनश्च कथंभूते। सुवृत्ते गोपुच्छवद्वर्तुलाकारे। ते जङ्घे ते प्रसृते सांप्रतमिदानीं अचैतन्यकाले कोलिकस्य तन्तुवायस्य कुविन्दस्य यन्त्रलकं तन्तुमोचनोपकरणं सापिकेति देश्याम् तस्य आकारो मूर्तिर्ययोर्जङ्घयोस्ते तथोक्ते। उपमालंकारः॥

**यत्रालक्तेत्यादि।** यत्र ययोः क्रमयोः आलक्तकमण्डनं लाक्षारसभूषणं विरचितं निष्पादितम्। यत्र ययोः क्रमयोर्नूपुरौ मञ्जीरौ आलितौ शब्दितौ। ययोः क्रमयोः नखानां ततिः पुनर्भवानां श्रेणिः कामाङ्कुशानामावलिर्नवमौक्तिकावलिकलाकान्ता संजाता नवानि प्रत्यग्राणि यानि मौक्तिकानि मुक्ताफलानि तेषामावलिः श्रेणिस्तस्याः कला शोभा तद्वत्कान्ता मनोहरा। यत्र ययोः क्रमयोः अशोकदलोच्चयः अशोकपल्लवप्रकरः क्रीडाविहारोचितो लीलापर्यटनयोग्यः समभूत्संजातः। तौ क्रमौ एरण्डजरण्डकाण्डपटलप्रस्पष्टचेष्टौ एरण्डो वातारिवृक्षस्तस्य जरण्डकाण्डपटलं जीर्णस्कन्धप्रतरं प्रस्पष्टा प्रत्यक्षीभूता चेष्टा अवस्था ययोस्तौ तथोक्तौ [जातौ]। उपमानसमुच्चयालंकारः॥

किं च—

या कौमुदीव सरसीव मृणालिनीव
लक्ष्मीरिव प्रियसखीव विलासिनीव ।
तैस्तैर्गुणैरजनि सा सुतनुः प्रजाता
प्रेतावनीवनवशा विवशा वराकी ॥ ११३ ॥

यस्याः केलिकलैः कलं कररुहैः सीमन्तिताः कुन्तला
यस्याश्चन्दनवन्दनं प्रणयिभिर्भालान्तरे निर्मितम् ।
यस्याश्चैणमदेन कामिभिरयं चित्रः कपोलः कृतः
सा खट्वाङ्गकरङ्कवक्त्रविकृतिं तत्रैव धत्तेऽद्भुतम् ॥ ११४ ॥

या मानसकलहंसी नेत्रोत्पलचन्द्रिका च या जगतः ।
सा कालमहाव्रतिना खट्वाङ्गकरङ्कतां नीता ॥ ११५ ॥

---

किं च अस्ति कश्चिद्विशेषः । **या कौमुदीत्यादि** । या सुतनुः शोभनशरीरा स्त्री तैस्तैर्जगत्प्रसिद्धैः गुणैः कान्त्यादिभिरजनि संजाता । कीदृशी अजनि । कौमुदीव चन्द्रज्योत्स्नेव । अपरं कथंभूता अजनि । सरसीव लावण्यरसभूतत्वात् सरसीव अगाधसरोवरसदृशी । अपरं कथंभूता । मृणालिनीव उत्फुल्ललोचनमुखत्वात् पद्मिनीव । अपरं कथंभूता । संजाता लक्ष्मीरिव त्यागगुणोपेतत्वात् नारायणपत्नीव । अपरं कथंभूता । प्रियसखीव प्रतिपन्नतायुक्तत्वात् वल्लभजनस्येव (?) । अपरं कथंभूता । विलासिनीव चतुरालापोपेतत्वात् भामिनीव । सा सुतनुः प्रेतावनीवनवशा सती श्मशानारण्यपरवशा सती विवशा एकाकिनी वराकी चर्पटिका प्रजाता । उपमालंकारः ॥

**यस्या इत्यादि** । यस्याः स्त्रियाः कुन्तलाः केशाः कलं मनोहरं यथा भवत्येवं केलिकलैर्विटपुरुषैः कररुहैः नखैः कृत्वा सीमां प्रापिताः । यस्याः स्त्रियाः प्रणयिभिः पुरुषैः स्नेहवद्भिः पुरुषैर्भालान्तरे ललाटमध्ये चन्दनवन्दनं चन्दनेन परमोत्तमचन्दनेन वन्दनं तिलकं निर्मितं कृतम् । यस्याः स्त्रियाः कामिभिः पुरुषैरयं प्रत्यक्षीभूतः कपोलो गण्डस्थलं एणमदेन कस्तूरिकारङ्गेण चित्रो मनोहरः कृतः । सा स्त्री तत्रैव कुन्तलभालान्तरकपोलेषु खट्वाङ्गकरङ्कवक्त्रविकृतिं धत्ते खट्वाङ्गस्य ईषादेः करङ्कस्य, वक्त्रस्य मुखस्य, विकृतिं विकारं धरति । अद्भुतमाश्चर्यमेतम् । उपमालंकारः ॥

**या मानसेत्यादि** । या स्त्री मानसे चित्ते सरोवरे कलहंसी राजहंसी जाता । या स्त्री नेत्रोत्पलानां लोचनकुवलयानां चन्द्रिका चन्द्रज्योत्स्ना विकासकारिणी जाता ।

यदभ्यस्यति यो लोकः स भवेत्तन्मयः स्फुटम् ।
प्रकामाभ्यस्तखट्वाङ्गे युक्ता खट्वाङ्गता ततः ॥ ११६ ॥
लतिकेव प्रणयतरोर्या वनदेवीव केलिवनभूमेः ।
सा यमनृपतिविमुक्ता फेलेव प्राश्यते पतगैः ॥ ११७ ॥
जीवन्त्येषा यथैवासीत्सर्वस्य हृदयंगमा ।
मृताप्यभूत्तथैवेयं दुस्त्यजा प्रकृतिर्यतः ॥ ११८ ॥
हंसायितं वदनपङ्करुहे स्मरार्तै-
र्यस्या गजायितमभूत्कुचकुम्भमध्ये ।
एणायितं च जघनस्थलमेखलायां
तस्याः कलेवरममी निकषन्ति कङ्काः ॥ ११९ ॥

---

कस्य । जगतः जगतिस्थितकामुकजनस्य । सा स्त्री कालमहाव्रतिना यमचार्वाकगुरुणा खट्वाङ्गकरङ्कतां नीता प्रापिता समुच्चयोपमालंकारः ॥

यदभ्यस्यतीत्यादि । यो लोको यो जनो यद्वस्तु अभ्यस्यति अनुशीलयति स लोकः स्फुटं निश्चयेन तन्मयस्तद्वस्तुमयो भवति संजायते । तत्तस्मात्कारणात् प्रकामाभ्यस्तखट्वाङ्गे जने खट्वाङ्गता युक्ता घटत एव । रूपकालंकारः । अर्थान्तरन्यासो वा ॥

लतिकेवेत्यादि । या स्त्री प्रणयतरोः स्नेहवृक्षस्य लतिकेव वल्लीव संजाता । या स्त्री केलिवनभूमेः क्रीडास्थानभूमिकायाः वनदेवीव वनदेवतासदृशी संजाता । सा स्त्री पतगैः काकादिभिः शकुन्तैः प्राश्यते भक्ष्यते । कीदृशी । यमनृपतिविमुक्ता फेलेव यमराजभोजनोद्गारिता फेलेव भुक्तोषित(च्छिष्ट)मिव संजाता । उपमालंकारः ।

जीवन्तीत्यादि । एषा स्त्री यथैव येनैव प्रकारेण जीवन्ती सती सर्वस्य लोकस्य हृदयंगमा मनोवल्लभा आसीद्बभूव । तथैव तेनैव प्रकारेण इयं स्त्री मृतापि सती तथैव हृदयंगमैव अभूद्बभूव । यतो यस्मात्कारणात् प्रकृतिः स्वभावो दुस्त्यजा दुस्त्याज्या भवति । हृदयंगमा मनस उद्वेगजननीत्यर्थः । अर्थान्तरन्यासालंकारः ॥

हंसायितमित्यादि । यस्याः स्त्रियाः । स्मरार्तैः पुरुषैः कामपीडितैः पुरुषैर्वदनपङ्करुहे मुखकमले हंसायितं हंसैरिवाचरितम् । यस्याः स्त्रियाः कुचकुम्भमध्ये स्तनकलशान्तरे गजायितं गजैरिवाचरितमभूद्बभूव । यस्या जघनस्थलमेखलायां कट्यग्रभागकटिन्यां एणायितं मृगैरिवाचरितमभूत् । तस्याः स्त्रियाः कलेवरं शरीरं अमी प्रत्यक्षीभूताः कङ्का वका निकषन्ति त्रोटयन्ति । समुच्चयोपमालंकारः ॥

---

१. 'केलिक(स)दनभूमे' इति सटीकपुस्तकपाठः.

पायं पायं मधु मधुरदृक्पूर्वमुद्गर्वभावा-
त्सारं सारं वदति च कलं या मुदा कुञ्चितभ्रूः ।
साद्यैतस्मिन्नपगतमनोमर्कटत्वादनीहा
प्रेतावासे निवसति गता भोज्यभावं शिवानाम् ॥ १२० ॥

यामन्तरेण जगतो विफलाः प्रयासा
यामन्तरेण भवनानि वनोपमानि ।
यामन्तरेण हतसंगति जीवितं च
तस्याः प्रपश्यत जनाः क्षणमेकमङ्गम् ॥ १२१ ॥

आश्लिष्टं परिचुम्बितं परमितं यद्रागरोमाञ्चितै-
स्तत्संसारसुखास्पदं वपुरभूदेवं दशागोचरम् ।
शीर्यच्चर्मचयं पतत्पलभरं भ्रश्यच्छिरापञ्जरं
व्यस्यत्संधिबलं गलन्नलकुलं कुथ्यत्स्नसाजालकम् ॥ १२२ ॥

---

**पायं पायमित्यादि** । या मधुरदृक् मनोहरलोचना स्त्री मधु मद्यं पायं पायं पीत्वा पीत्वा पूर्वमुद्गर्वभावात् । सारं सारं स्मृत्वा स्मृत्वा कलं मधुरं वदति च ब्रूते च । कथा । मुदा हर्षेण । सा कथंभूता । कुञ्चितभ्रूः कुटिलभ्रूभागा । सा स्त्री अद्य इदानीं एतस्मिन् प्रत्यक्षीभूते प्रेतावासे श्मशाने निवसति तिष्ठति । कथंभूता । अनीहा निश्चेष्टा । कस्मात् । अपगतमनोमर्कटत्वात् नष्टचित्तवानरत्वात् । पुनः कथंभूता तिष्ठति । शिवानां शृगालीनां भोज्यभावं भोजनत्वं प्राप्ता । उपमालंकारः ॥

**यामन्तरेणेत्यादि** । यां स्त्रीमन्तरेण विना जगतो जगति स्थितलोकस्य प्रयासाः कष्टा विफला निष्फला भवन्ति । यां स्त्रीमन्तरेण विना भवनानि गृहाणि वनोपमानि अटवीसदृशानि भवन्ति । यां स्त्रीमन्तरेण विना जीवितं प्राणितं हतसंगति भवति मृतसदृशं भवति । हे जनास्तस्याः स्त्रियः अङ्गं शरीरं क्षणमेकं मुहूर्तमेकं यावत् तावत्प्रपश्यत अवलोकयत यूयम् । उपमालंकारः ॥

**आश्लिष्टमित्यादि** । यद्वपुर्यच्छरीरं क्षणमेकं रागरोमाञ्चितैः पुरुषैः रागेण कण्टकितशरीरैः पुरुषैराश्लिष्टं बाहुभ्यां गाढमालिङ्गितम् । यद्वपुः परिचुम्बितं वक्त्रसंयोगमानीतम् । यद्वपुः परमितं स्मरमन्दिरकामलतासंयोगमानीतम् । कथंभूतं यद्वपुः । संसारसुखास्पदम् । आजवं जवं सातस्थानम् । तद्वपुः तच्छरीरं एवं दशागोचरं ईदृशीव्यवस्थाविषयोऽभूत् बभूव । एवं कथमिति चेत् । शीर्यच्चर्मचयं शतखण्डीभवदजिनपटलम् । पतत्पलभरं गलन्मांससारम् । भ्रश्यच्छिरापञ्जरम् अधःपतत् नहारुबन्धनम् ।

आः, कष्टादपि कष्टतरमहो स्मरविलसितम् ।
इत्थमन्तर्दुरन्ताङ्गी बहिर्मधुरविभ्रमा ।
विषवल्लीव मोहाय यदेषा जगतोऽजनि ॥ १२३ ॥

अपि च—

मायासाम्राज्यवर्याः कविजनवचनस्पर्धिमाधुर्यधुर्याः
स्वप्नाप्तैश्वर्यशोभाः कुहकनयमयारामरम्योत्तराभाः ।
पर्जन्यागारसारास्त्रिदिवपतिधनुर्बन्धुराश्च स्वभावा-
दायुर्लावण्यलक्ष्म्यस्तदपि जगदिदं चित्रमत्रैव सक्तम् ॥ १२४ ॥

---

व्यवस्यत् संधिबलं नश्यत् संश्लेषसारम् । गलन्नलकुलं स्रवदस्थिसमूहम् । क्रुध्यत्स्नसाजालकं शटत् सिराकुत्सितसमूहम् । रूपकालंकारः ॥

आः कष्टादपि कष्टतरमहो स्मरविलसितम् । आ इति कोऽर्थः । श्रीसुदत्ताचार्यश्चिन्तयति । अहो लोकाः, अहो आश्चर्यं वा, स्मरविलसितं कन्दर्पचरित्रं कष्टादपि कष्टतरं निन्द्यादप्यतिशयेन निन्द्यम् ॥

इत्थमिति । यत् यस्मात् कारणात् जगति स्थितलोकस्य एषा स्त्री मोहाय अचैतन्योत्पादनाय अजनि संजाता । कथंभूता एषा स्त्री । इत्थं पूर्वोक्तप्रकारेण अन्तर्मध्ये दुरन्ताङ्गी दुष्टस्वभावशरीरा बहिर्बाह्ये मधुरविभ्रमा मनोहरस्वभ्रान्त्युत्पादिका । कथंभूता । विषवल्लीसदृशा । यथा विषवल्ली अन्तर्मध्ये दुष्टस्वभावा भवति, बाह्ये तु सुस्वादुर्भवति अचैतन्यं चोत्पादयति । उपमालंकारः ॥

अपि च तथा च । मायासाम्राज्येत्यादि । आयुर्लावण्यलक्ष्म्यः आयुश्च जीवितकालः, लावण्यं च शरीरकान्तिः, लक्ष्मीश्च स्वापतेयम्, आयुर्लावण्यलक्ष्म्यः । कथंभूताः । मायासाम्राज्यवर्याः विद्याधरादिमायया कृतं यत्साम्राज्यं चक्रवर्तित्वं तद्वत् वर्या मुख्याः । मनोहरा इत्यर्थः । अपरं कथंभूता आयुर्लावण्यलक्ष्म्यः । कविजनवचनस्पर्धिमाधुर्यधुर्याः कविजनानां विद्वज्जनानां ये जनाः समूहास्तेषां वचनानि शृङ्गारादिरसबहुलानि तैः सह स्पर्धते उपमां धरति यन्माधुर्यं मधुरत्वं मिष्टत्वं तस्मिन् धुर्याः मुख्यास्तास्तथोक्ताः । पुनः कथंभूताः । स्वप्नाप्तैश्वर्यशोभाः स्वप्ने निद्रायां आप्तं प्राप्तं मनसा लालितं यदैश्वर्यं राज्यं तद्वत् शोभा यासामायुर्लावण्यलक्ष्मीणां तास्तथोक्ताः । अपरं कथंभूताः । कुहकनयमयारामरम्योत्तराभाः कुहकनय इन्द्रजालं तेन निर्वृत्तः कुहकनयमयो योऽसावाराम उद्यानं वनं तद्वत् रम्या अतिमनोहरा उत्तरा उत्कृष्टतरा आभा प्रतिभासा यासां तास्तथोक्ताः । अपरं कथंभूताः । पर्जन्यागारसाराः पर्जन्यस्य मेघपटलस्य यदागारं प्रासादस्तद्वत्सारो मनोहरत्वं यासां तास्तथोक्ताः । अपरं कथंभूताः । त्रिदिवपतिधनुर्बन्धुराः त्रिदिवः स्वर्गस्तस्य पतिः स्वामी देवेन्द्रस्तस्य

हंहो हृदय, स्वरं दूरमन्वसरः । तदलमवस्तुनि व्यासङ्गेन । इदमिह ननु प्रस्तुतमवधार्यम्—

'नैवात्र सन्ति यमिनामुचितावकाशाः
स्वाध्यायबन्धुरधरावसराः प्रदेशाः ।
वृन्दं महत्तपन एष तपत्युदारं
वाताश्च वान्ति परितः परुषप्रचाराः ॥ १२५ ॥

किं च—

यन्मृतानामवस्थानं तत्कथं जीवतां भवेत् ।
अन्यत्र शवशीलेभ्यः को नामेहाग्रहस्ततः ॥ १२६ ॥

---

धनुर्मेघपटलस्थितचापं तद्वत् बन्धुरा मनोहराः । कस्मात् । स्वभावात् प्रकृत्यैव अस्थिरत्वात् । तदपि तथापि इदं प्रत्यक्षीभूतं जगत् पृथ्वीमण्डलस्थितलोकसमूहः अत्रैव आयुर्लावण्यलक्ष्मीषु सक्तमनुबन्धपरं वर्तते । चित्रमाश्चर्यमेतदिति शेषः । उपमालंकारः ॥

हंहो हृदय, स्वरं दूरमन्वसरः । तदलमवस्तुनि व्यासङ्गेन । इदमिह ननु प्रस्तुतमवधार्यम् । हंहो अहो हृदय आत्मन्, स्वरमतिशयेन दूरं विप्रकृष्टं अन्वसरः (आजग्मि यत्त्वम् ।) किमित्येतावान्विचारस्त्वया कृत इत्यर्थः । तत्तस्मात् कारणात् अवस्तुनि आत्मातिरिक्तपदार्थे व्यासङ्गेन प्रसङ्गत्या अलं पूर्णम् । ननु अहो हृदय, इह अस्मिन् प्रस्तावे इदं प्रत्यक्षीभूतं प्रस्तुतं प्रस्तावागतं सुभाषितमवधार्यं ज्ञातव्यम् । इदं किमिति चेत्—**नैवात्रेत्यादि** । हंहो हृदय, अत्र श्मशानारण्ये यमिनां मुनीनां उचितावकाशाः योग्यावकाशाः प्रदेशाः स्थानानि नैव सन्ति नैव वर्तन्ते । ते कथंभूताः प्रदेशाः । स्वाध्यायबन्धुरधरावसराः (निवर्तन्ते) स्वाध्यायः वाचनाप्रच्छनानुप्रेक्षाम्नायधर्मोपदेशलक्षणः पञ्चविधः तदर्थं बन्धुरधरा क्षेत्रशुद्धिसंयुक्तभूमिस्तस्या अवसरः प्रस्तावो येषु प्रदेशेषु ते तथोक्ताः । वृन्दं सङ्घो गणो महत् प्रचुरतरं वर्तते । एष प्रत्यक्षीभूतस्तपनः श्रीभास्कर उदारमुत्कृष्टं तपति संतापं करोति । ललाटंतपो वर्तते इत्यर्थः । वाताश्च वायवः परितः समन्तात् परुषप्रचारा अतिकठिनवर्तिनो वान्ति समागच्छन्ति । तेनात्र स्थातुं न योग्यमिति भावः । समुच्चयालंकारः ॥

किंच अस्ति कश्चिद्विशेषः । **यन्मृतानामित्यादि** । यत् अवस्थानं मृतानां प्रेतानां वर्तते तदवस्थानं जीवतां पुरुषाणां कथं केन प्रकारेण भवेत्संजायते । न कथमपि चेदित्यर्थः । कथम् । अन्यत्र विना । केभ्यो विना । शवशीलेभ्यः शाकिनीडाकिनीराक्षसान् वर्जयित्वा इत्यर्थः । त एवात्र राक्षसादयस्तिष्ठन्ति इत्यर्थः । तत्त-

पुनर्यावदयं दिगन्तरालेषु लोचने प्रचारयति तावदुत्तरस्यां हरिति राजपुरस्याविदूरवर्तिनं मुनिमनोहरमेखलं नाम खर्वेतरं पर्वतमपश्यत्। यः खलु धम्मिल्लविन्यास इव नागनगरदेवतायाः, किरीटोच्छ्रय इवाटवीलक्ष्म्याः, स्तनाभोग इव महीमहिलायाः, क्रीडाकन्दुक इव वनदेवतायाः, मातृमोदक इव दिग्बालकलोकस्य, ककुदोद्गम इव भूगोलगवेन्द्रस्य, द्वारपिधानस्तूप इव भुजङ्गभुवनस्य, यष्ट्यधिष्ठानबन्ध इव विहायोविहङ्गमस्य, त्रिविष्टपकुटनिर्माणमृत्पिण्ड इव प्रजापतिजनस्य, केलिप्रासाद इव ककुप्पालककन्यकानिकरस्य, गतिस्खलनलोष्ट इव कलिकालस्य, मान-

---

स्मात् कारणात् इह अस्मिन् स्थाने को नाम आग्रहः को नाम निर्बन्धः। न कश्चिन्निर्बन्ध इत्यर्थः। आक्षेपालंकारः॥

पुनः पुनरपि श्मशानावलोकनादनन्तरं यावत्कालं अयं भगवान् दिगन्तरालेषु दिक्खण्डलेषु लोचने द्वे नयने प्रचारयति, तावत्कालं उत्तरस्यां हरिति कौबेर्यां ककुभि पर्वतमपश्यत्। कथंभूतं पर्वतम्। राजपुरस्य नगरस्य अविदूरवर्तिनं निकटतरम्। पुनश्च कथंभूतं पर्वतम्। मुनिमनोहरमेखलनामधेयम्। पुनश्च कथंभूतं पर्वतम्। खर्वेतरं ह्रस्वतरम्। यः खलु धम्मिल्लविन्यास इव नागनगरदेवतायाः यः पर्वतो नागनगरदेवतायाः भोगवतीपुरदेवतायाः खलु निश्चयेन धम्मिल्लविन्यास इव केशजूट इव। किरीटोच्छ्रय इवाटवीलक्ष्म्याः अरण्यश्रियः किरीटोच्छ्रय इव मुकुटोच्चय इव। स्तनाभोग इव महीमहिलायाः पृथ्वीस्त्रियः स्तनाभोग इव कुचाटोप इव। क्रीडाकन्दुक इव वनदेवतायाः ............................ लीलागिरिक इव। मातृमोदक इव दिग्बालकलोकस्य दिग्बालकलोकस्य हरिड्डिम्भसमूहस्य मातृमोदक इव मातृभिर्दत्तो मोदक इव। ककुदोद्गम इव भूगोलगवेन्द्रस्य भूगोलगवेन्द्रस्य पृथ्वीपीठवृषभस्य ककुदोद्गम इव स्कन्धोन्नतप्रदेश इव। द्वारपिधानस्तूप इव भुजङ्गभुवनस्य भुजङ्गभुवनस्य पाताललोकस्य द्वारपिधानस्तूप आवरणोच्चय इव। यष्ट्यधिष्ठानबन्ध इव विहायोविहङ्गमस्य विहायोविहङ्गमस्य आकाशपक्षिणः यष्ट्यधिष्ठानबन्ध इव काष्ठारोपणाय स्थण्डिलमिव। त्रिविष्टपकुटनिर्माणमृत्पिण्ड इव प्रजापतिजनस्य प्रजापतिजनस्य विधातृलोकस्य त्रिविष्टपं त्रैलोक्यं तदेव कुटो घटो जीवनाधारत्वात् तस्य निर्माणे निष्पादने मृत्पिण्ड इव मृत्तिकायाः पिण्ड इव। केलिप्रासाद इव ककुप्पालककन्यकानिकरस्य ककुप्पालककन्यकानिकरस्य दिक्पालकन्यासमूहस्य केलिप्रासाद इव क्रीडासदनमिव। गतिस्खलनलोष्ट इव कलिकालस्य कलिकालस्य दुःखमयकालस्य गतिस्खलने गमनस्खलने मृत्पिण्ड इव। मानस्तम्भ इवैकशिलाघटितारम्भः

स्तम्भ इवैकशिलाघटितारम्भः, शिवशातकुम्भप्रदेश इव विदूरितदयिता-समावेशः, अलोकाकाश इव विगतजन्तुजातावकाशः, तपश्चरणागम इव समुत्सारितवर्षधरसमागमः, क्षप[ण]कश्रेणिरिव तपःप्रत्यवायरहितक्षोणिः, महावृत्तप्रस्तार इव विस्तीर्णपादविस्तारः, समीरकुमारैर्विरचितविशुद्धिरिव स्वाध्यायोचितः, कान्तारदेवताभिः संमार्जित इव कमनीयकन्दरः, पर्यन्तपादपैः संपादितकुसुमोपहारः प्रदत्तरङ्गावलिरिव गुहापरिसरेषु, क्षुपावृतोपान्तोपत्यकः पुलकित इव महामुनिसमागमात्, स्रवन्निकुञ्जनिर्झरजलः

---

एकया अखण्डया शिलया दृषदा घटितः कल्पितः आरम्भो रचना यस्य स ऐकशिलाघटितारम्भो मानस्तम्भ इव समवसरणसंबन्धी स्तम्भ इव । शिवशातकुम्भप्रदेश इव विदूरितदयितासमावेशः विदूरितो दूरीकृतो निषिद्धो दयितानां स्त्रीणां समावेशः प्रवेशो यत्र स तथोक्तः शिवः मोक्षस्तदेव शातकुम्भं सुवर्णं तस्य प्रदेश इव । (खमिव) अलोकाकाश इव विगतजन्तुजातावकाशः विगतो नष्टो जन्तुजातानां पिपीलिकादिजीवसमूहानामवकाशः प्रवेशो यस्मिन् स तथा । अलोकाकाशः प्राणिप्रवेशरहितो भवति । तपश्चरणागम इव समुत्सारितवर्षधरसमागमः समुत्सारितो दूरीकृतो वर्षधराणां नपुंसकानां समागम आगमनं यत्र तथा तपश्चरणागम इव दीक्षाग्रहणसिद्धान्त इव । यथा तपश्चरणागमो नपुंसकप्रवेशनिषिद्धः । क्षप[ण]कश्रेणिरिव तपःप्रत्यवायरहितक्षोणिः तपःप्रत्यवायेन तपोदोषेण रहितभूमिः क्षप[ण]कश्रेणिरिव यथा क्षप[ण]कश्रेणिः अपूर्वकरणगुणस्थानादारभ्य द्वादशगुणस्थानपर्यन्तं गुणस्थानचतुष्टयदोषरहितभूमिकं भवति । ................................ पुनर्महावृत्तप्रस्तारः विस्तीर्णपादानां प्रत्यन्तपर्वतानां विस्तारो यस्य स तथा । महावृत्तं षड्विंशतिवर्णपादः श्लोकस्तस्य प्रस्तार इव । यथा महावृत्तप्रस्तारो मयरसतजभनलघुगुरुप्रस्ताराणां महाविस्तारवान् भवति । समीरकुमारैर्विरचितविशुद्धिरिव स्वाध्यायोचितः पुनः स्वाध्यायोचितः स्वाध्याययोग्यः समीरकुमारैः विरचिता विशुद्धिः निर्मलता यस्य स तथोक्तः । तीर्थंकरविहारभूमिरिव । कान्तारदेवताभिः संमार्जित इव कमनीयकन्दरः पुनः कमनीया मनोहारा कन्दरा गुहा यस्य स तथा कान्तारदेवताभिः वनदेवताभिः संमार्जित इव शोधित इव । बहुवा(क)रित इव । पर्यन्तपादपैः संपादितकुसुमोपहारः प्रदत्तरङ्गावलिरिव गुहापरिसरेषु गुहापरिसरेषु गुहानां प्राङ्गणेषु पर्यन्तपादपैः पुरस्ताद्वृक्षैः संपादितकुसुमोपहारः निष्पादितपुष्पप्रकरः । उत्प्रेक्ष्यते—प्रदत्तरङ्गावलिरिव विहितचतुष्कार्चन इव । क्षुपावृतोपान्तोपत्यकः पुलकित इव महामुनिसमागमात् । पुनरपि कथंभूतः । क्षुपैर्ह्रस्वशाखैर्वृता वेष्टिता उपान्ते समीपे उपत्यका पर्वतासन्नभूमिर्यस्य स

प्रकटितानन्दलोचनवाष्प इव संयमिसंभावनाराधनात्, लयनशिलाश्लाघ्यमेखलः परिकल्पितोशीर इव द्वयातिगानाम्, एवमन्यैरपि तैस्तैरघमर्षणैर्गुणैस्त्रिविधस्यापि कर्मन्दिवृन्दस्योत्पादितप्रीतिः॥

तमुपसद्य निषद्य च निर्वर्तितमार्गमध्याह्नक्रियः स्वयं तद्दिवसोपात्तोपवासः [स] समाकलय्य च परिणतकालमहर्दलमखिलं श्रमणसङ्घमात्मदेशीयेनान्तेवासिनाधिष्ठितं लोचनगोचरारामेषु ग्रामेषु विष्वाणार्थमादिदेश॥

---

तथोक्तः। उक्तं च—'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका'। महामुनीनां समागमात् दिगम्बरगुरुसमागमात् पुलकित इव रोमाञ्चकञ्चुकित इव। स्रवन्निकुञ्जनिर्झरजलः प्रकटितानन्दलोचनवाष्प इव संयमिसंभावनाराधनात्। पुनः कथंभूतः पर्वतः। स्रवन्निकुञ्जनिर्झरजलः स्रवन्ति निर्झरन्ति निकुञ्जेषु लतादिपिहितोदरेषु स्थानेषु निर्झराणां जलान्युदकानि यस्य स तथोक्तः। संयमिनां संभवानाराधनात् प्रकटिता आनन्दस्य संबन्धिनो लोचनवाष्पा नेत्रजलानि येन स तथा। लयनशिलाश्लाघ्यमेखलः परिकल्पितोशीर इव द्वयातिगानाम्। पुनः कथंभूतः पर्वतः। लयनैः शिलोत्कीर्णगृहैः शिलाभिश्च वृहत्पाषाणैः श्लाघ्या प्रशंसनीया मेखला कटिनी यस्य स तथोक्तः। द्वयातिगानां रागद्वेषरहितानां परिकल्पितोशीर इव। उत्प्रेक्षते—संपादितशयनासन इव। उक्तं च—'औशीरं चामरे दण्डेऽप्यौशीरः शयनासने'। एवमन्यैरपि विस्तीर्णत्वप्रासुकत्वादिभिर्गुणैस्तैस्तैर्मुनिजनप्रसिद्धैरघमर्षणैः पापोपशमकैर्गुणैः त्रिविधस्यापि आचार्योपाध्यायसर्वसाधुलक्षणत्रिप्रकारस्यापि कर्मन्दिवृन्दस्य कर्मन्दिनां तपस्विनां वृन्दस्य सङ्घस्य उत्पादितप्रीतिः संजनितरागः॥

स भगवान् अखिलं समस्तं श्रमणसङ्घं ऋषिमुनियत्यनगारलक्षणं चतुर्विधं गणं लोचनगोचरारामेषु ग्रामेषु लोचनानां नेत्राणां गोचरा गम्या आरामा उपवनानि येषां ते लोचनगोचरारामास्तेषु ईदृग्विधेषु ग्रामेषु आवसथेषु विष्वाणार्थं भोजननिमित्तं आदिदेश आदेशं दत्तवान्। कथंभूतं श्रमणसङ्घम्। आत्मदेशीयेन निजात्मनः सकाशात् मनाक् न्यूनेन अन्तेवासिना वृहता शिष्येण अधिष्ठितं रक्षितम्। किं कृत्वा। पूर्वं तं पूर्वोक्तं खर्वतरं उपसद्य गत्वा तं केवलं निषद्य तस्मिन् वने उपविश्यैव। कथंभूतो भगवान्। निर्वर्तितमार्गमध्याह्नक्रियः निर्वर्तिता निष्पादिता मार्गस्य मध्याह्नस्य च क्रिया येन तथोक्तः। मार्गातिचारशोधनार्थं प्रतिक्रमणं कृत्वा देववन्दनां च विधायेत्यर्थः। अपरं कथंभूतः। तद्दिवसोपात्तोपवासः तद्दिवसे महानवमीदिवसे उपात्तं गृहीतं उपवासं उपवसनं येन स तथोक्तः। अष्टमीदिने उपोषितवानपि हिंसादिवसत्वात् नवमीदिनेऽपि उपोषितवानित्यर्थः। पुनश्च किं कृत्वा। पूर्वं अहर्दलं मध्याह्नसमयं परिणतकालं संजातवेलं समाकलय्य परिज्ञाय॥

तत्र च नन्दिनीनरेन्द्रस्य यशोधरमहाराजात्मजस्य यशोमतिकुमारस्याग्रमहिष्यां चण्डमहासेनसूनुतासरित्संवर्धितस्य मारिदत्तमहीश्वरमहीरुहस्यानुजन्मतालताकन्दल्यां कुसुमावल्यां सह संभूतं पूर्वभवस्मरणात्संसारसुखान्यागामिजन्मदुःखाङ्कुरप्रसूतिक्षेत्राणीव मन्यमानमङ्गस्याद्यापि जिनरूपग्रहणायोग्यत्वाच्चरमाचारवशामुपासकदशामाश्रितवदलं मुनिकुमारक-

---

तत्र च श्रमणसङ्घमध्ये मुनिकुमारकयुगलं अभयरुच्यभयमतिनामधेयं देशव्रतियुगलम् । तत्रैव पुरे तस्मिन्नेव राजपुरनामधेये नगरे तदर्थं विष्वाणार्थमादिष्टवान् नियोगं दत्तवानित्यर्थः । इति क्रियाकारकसंबन्धः । किं कृत्वा । पूर्वं अवधिबोधप्रदीपेन अवधिज्ञानमण्डलप्रदीपेन इति अमुना प्रकारेण प्रत्यवमृश्य सम्यग्विचार्य । कथंभूतेन अवधिबोधप्रदीपेन । अन्तःसंकल्पकृशानुकृतप्रबोधेन अन्तःसंकल्पो मनोव्यापारः स एव कृशानुर्वैश्वानर उद्द्योतकारकत्वात् तेन कृतो विहितः प्रबोधः प्रज्वलनं यस्य स तथोक्तः तेन । इतीति किम् । अस्मात् मुनिकुमारकयुगलात् खलु निश्चयेन अद्य इदानीं अस्मिन्नेव दिने पौरपुरेश्वरदेवतानां उपशमः सम्यक्त्वं भविष्यति जनिष्यते । कस्मात्सम्यक्त्वं भविष्यति । धर्मकर्मावेशात् धर्मस्य प्राणिरक्षणलक्षणस्य यत्कर्म प्रतिपालनं तस्य आवेशोऽभिप्रायः धर्मकर्मावेशस्तस्मात् । कथंभूतं मुनिकुमारकयुगलम् । कुसुमावल्यां कुसुमावलीनामधेयायां सह संभूतं यमतया संजातम् । कथंभूतायां कुसुमावल्याम् । यशोमतिकुमारस्य यशोमतिकुमारनामधेयस्य महाराजस्य अग्रमहिष्यां पट्टमहादेव्याम् । कथंभूतस्य यशोमतिकुमारस्य । नन्दिनीनरेन्द्रस्य उज्जयिनीनगरपरमेश्वरस्य । अपरं कथंभूतस्य यशोमतिकुमारस्य । यशोधरमहाराजपुत्रस्य । पुनरपि कथंभूतायां कुसुमावल्याम् । मारिदत्तमहीश्वरमहीरुहस्यानुजन्मतालताकन्दल्याम् मारिदत्तनामा योऽसौ महीश्वरः पृथ्वीपतिः स एव महीरुहो वृक्षः अर्थिजनवाञ्छितफलप्रदायकत्वात्, प्रजानां छायाकारित्वात् मारिदत्तमहीश्वरमहीरुहस्तस्य तथोक्तस्य अनुजन्मता लघुभगिनीत्वं सैव लताकन्दली वल्लयग्रभागः अनुजन्मतालताकन्दली तस्यां तथोक्तायाम् । कथंभूतस्य मारिदत्तमहीश्वरमहीरुहस्य । चण्डमहासेनसूनुतासरित्संवर्धितस्य चण्डमहासेननामा यादवनरेन्द्रस्तस्य सूनुता पुत्रत्वं सैव सरित् नदी शीलजलसंभृतत्वात् तया संवर्धितः सम्यग् वृद्धिं प्रापितः तस्य तथोक्तस्य । कथंभूतं मुनिकुमारकयुगलम् । पूर्वभवस्मरणात् पूर्वजन्मपरिज्ञानात् संसारसुखानि इष्टस्रग्वनिताचन्दनादीनि आगामिजन्मदुःखाङ्कुरप्रसूतिक्षेत्राणीव मन्यमानम् आगामिजन्म भविष्यद्भवान्तरं तस्य संबन्धीनि दुःखानि शारीरमानसागन्तुलक्षणानि तान्येव अङ्कुरा अभिनवोद्भिदः पुनरसातहेतुत्वात् तेषां प्रसूतौ उत्पत्तौ क्षेत्राणीव सस्याधिकरणसमानानि मन्यमानं सम्यग् जानन्तम् । अपरं कथंभूतं मुनिकुमारकयुगलम् । उपासकदशां क्षुल्लकावस्थां अलमतिशयेन

युगलम् 'अस्मात्खल्वद्य पौरपुरेश्वरदेवतानां धर्मकर्मावेशादुपशमो भविष्यति' इत्यन्तःसंकल्पकृशानुकृतप्रबोधेनावधिबोधप्रदीपेन प्रत्यवमृश्य तत्रैव पुरे तदर्थमादिक्षत् ॥

तदपि तं भगवन्तमुपसंगृह्य मनुष्यरूपेण परिणतं धर्मद्वयमिव, मर्त्यलोकावतीर्णं स्वर्गापवर्गमार्गयुगलमिव, नयनविषयतां गतं नययमलमिव, प्रदर्शितात्मरूपं प्रमाणद्वितयमिव, बहिःप्रकटव्यापारं शुभध्यानयुग्ममिव तपश्चिकीर्षया प्रतिपन्नसोदरभावं रतिस्मरमिथुनमिव, पुरो युगान्तरावलो-

---

आश्रितवत् आश्रितम्। कथंभूतां उपासकदशाम्। चरमाचारवशां चरमाचार एकादशीप्रतिमा एकादशं स्थानं तस्य वशा आयत्ता तथोक्ताम्। तर्हि लघुदीक्षां किमित्याश्रितवत्, महाव्रतदीक्षां किमिति नाग्रहीदित्याह—अङ्गस्य शरीरस्य अद्यापि संजाततपःपरिज्ञानेऽपि जिनरूपस्य निर्ग्रन्थमुद्रायाः ग्रहणे अयोग्यत्वात्। अनुचितत्वादिति शेषः। अतिकोमलत्वात्। उपमालंकारः ॥

तदपि मुनिकुमारकयुगलमपि कर्मतापन्नं तैर्जगत्प्रसिद्धैर्नागरिकानुचरगणैर्दुर्गपालकिंकरसमूहैः कर्तृभूतैः। नगररक्षायां नियुक्तो नागरिकः कोट्टपालस्तस्य अनुचराः किंकरास्तेषां गणाः समूहास्तैस्तथोक्तैः। महाभैरवं नाम तज्जगत्प्रसिद्धं देवतायतनं चण्डमारीभवनं अनुक्तकर्मतापन्नं आनिन्ये आनीतमिति क्रियाकारकसंबन्धो ज्ञातव्यः। कथंभूतं तन्मुनिकुमारकयुगलम्। उत्प्रेक्षते—मनुष्यरूपेण मानवाकारेण परिणतं पर्यायान्तरमागतं धर्मद्वयमिव अनगारागारधर्मयुगलमिव। किं कृत्वा। मनुष्यरूपेण परिणतं तं जगत्प्रसिद्धं भगवन्तं श्रीसुदत्ताचार्यं उपसंगृह्य वन्दित्वा धर्मद्वयेन भगवन्तं वन्दित्वा मनुष्यरूपं गृहीतमित्यर्थः। अपरं कथंभूतं मुनिकुमारकयुगलम्। उत्प्रेक्षते—स्वर्गापवर्गमार्गयुगलमिव स्वर्गश्च त्रिदशावास अपवर्गश्च मोक्षस्तयोर्मार्गयुगलं पन्थयुग्मम्। कथंभूतं स्वर्गापवर्गमार्गयुगलम्। मर्त्यलोकावतीर्णं मनुष्यलोकमागतम्। अपरं कथंभूतं मुनिकुमारकयुगलम्। उत्प्रेक्षते—नययमलमिव द्रव्यार्थिकपर्यायार्थिकनयद्वयमिव। कथंभूतं नययमलम्। नयनविषयतां गतं लोचनगोचरतां प्राप्तम्। अपरं कथंभूतं मुनिकुमारकयुगलम्। उत्प्रेक्षते—प्रमाणद्वितयमिव प्रत्यक्षपरोक्षलक्षणं प्रमाणद्वयमिव। कथंभूतं प्रमाणद्वितयम्। प्रदर्शितात्मरूपं प्रकटितनिजशरीरं सकलवस्तुग्राहकं प्रमाणम्। विकलस्त्वेकदेशग्राहकत्वात्। विकलदेशो नयः। पुनः कथंभूतं मुनिकुमारकयुगलम्। शुभध्यानयुग्ममिव धर्मध्यानशुक्लध्यानयुगलमिव। कथंभूतं शुभध्यानयुग्मम्। बहिः—प्रकटव्यापारं मनसो निर्गत्य बाह्यस्फुटीभूतम्। अपरं। कथंभूतं मुनिकुमरकयुगलम्। उत्प्रेक्षते—रतिस्मरमिथुनमिव रतिकन्दर्पद्वन्द्वमिव। कथंभूतं रतिस्मरमिथुनम्। तपश्चिकीर्षया तपश्चरणकरणेच्छया प्रतिपन्नसोदरभावं अङ्गीकृतभगिनीभ्रातृत्वम्। मुनि-

कप्रणिधानाधारैर्दयार्द्रनयनव्यापारैरभयदानामृतमिव प्राणिषु प्रवर्षत्, समन्तादुन्मुखालेखार्हैश्चरणनखमयूखप्ररोहबर्हैर्वर्त्मनि कृतसत्त्वानुकम्पनं संयमोपकरणमिव पुनरुक्तवत्, परिगृहीतमहातपश्चरणभारमिव मन्दमन्दमध्वनि विहितविहारम्, अभिमानव्ययभयाद्बिभ्यदिव पुरवीथिषु निभृतजिह्वारथम्, अतिबालिशदशमपि श्लाघनीयशीलैस्तपःपयोधिकल्लोलैर्वरीयसामपि शंसितव्रतचेतसामाचरिताश्चर्यचित्तचमत्कारम्,

---

कुमारकयुगलं किं कुर्वत् । प्राणिषु जीववर्गेषु दयार्द्रनयनव्यापारैरभयदानामृतं प्रवर्षदिव दयया करुणया आर्द्राः सरसा नयनानां ये व्यापाराः प्रवृत्तयस्तैः करणभूतैः अभयदानामृतं अभयदानमेव अमृतं जीवानां जीवनहेतुत्वात् कर्मतापन्नं प्रवर्षदिव प्रक्षरदिव । कथंभूतैर्दयार्द्रनयनव्यापारैः । पुरो युगान्तरावलोकप्रणिधानाधारैः पुरोऽग्रे युगान्तरेण हस्तचतुष्टयेन योऽसाववलोकोऽवलोकनं तस्मिन् प्रणिधानं सावधानता तस्य आधारैरधिकरणभूतैः । मुनिकुमारकयुगलं पुनश्च किं कुर्वत् । वर्त्मनि मार्गे चरणनखमयूखप्ररोहाः किरणाङ्कुरास्त एव बर्हाणि मयूरपिच्छानि तैस्तथोक्तैः कृत्वा संयमोपकरणं दयाप्रतिपालनं मयूरपिच्छं पुनरुक्तवदिव द्विगुणीकुर्वदिव । कथंभूतैश्चरणनखमयूखप्ररोहबर्हैः । समन्तात्सर्वत्र उन्मुखा आलेखा अग्राणि तैः अर्हाणि योग्यानि तैः समन्तादुन्मुखालेखार्हैः । कथंभूतं संयमोपकरणम् । कृतसत्त्वानुकम्पनं कृतं विहितं सत्त्वानां प्राणिनां अनुकम्पनं कारुण्यं येन संयमोपकरणेन तत्तथोक्तम् । मयूरपिच्छेन प्रतिलेखिताः किल प्राणिनः शिबिकारूढा एव सुखिनो भवन्ति । मयूरपिच्छानि नेत्रप्रविष्टान्यपि वेदनां न कुर्वन्ति । अन्यानि प्रतिलेखनानि नेत्रप्रविष्टानि अयःसूचिका इव क्षुभ्नन्ति महावेदनां कुर्वन्ति । तथा चोक्तम्—'रजसेदाणमगहणं मद्दवसुकुमालदालहुत्तं च । जत्थे दे पञ्च गुणा तं पडिलेहं परूविन्ति ॥' इत्यनेन चमरीवालादीनां अधिकरोम्णां प्रतिलेखनं प्रत्युक्तं न भवतीति भावार्थः । कथंभूतं मुनिकुमारकयुगलम् । अध्वनि मार्गे मन्दमन्दं शनैः शनैर्विहितविहारं कृतगमनम् । उत्प्रेक्षते—परिगृहीतमहातपश्चरणभारमिव परिगृहीतः स्वीकृतो मस्तकोपरि धृतो महातपश्चरणस्य उत्कृष्टचारित्रस्य भारो येन तत्तथोक्तम् । पुनः कथंभूतं मुनिकुमारकयुगलम् । पुरवीथिषु नगरमार्गेषु निभृतजिह्वारथं निभृतो निश्चलो जिह्वारथो वदनव्यापारो यस्य तत्तथोक्तम् । मुनिकुमारकयुगलं किं कुर्वत् । उत्प्रेक्षते—अभिमानव्ययभयाद्बिभ्यदिव । वचनव्यापारे सति खलु अभिमानविनाशो भवति तेन मौनेन गच्छदित्यर्थः । पुनः कथंभूतं मुनिकुमारकयुगलम् । अतिबालिशदशमपि अतीव बालावस्थायुक्तमपि श्लाघनीयशीलैः श्लाघनीयं प्रशंसनीयं शीलमाचारो येषु ते श्लाघनीयशीलास्तैः । ईदृग्विधैस्तपःपयोधिकल्लोलैस्तपश्चरणसमुद्रलहरितरङ्गैः कृत्वा वरीयसामपि अतिवृद्धवयसामपि शंसितव्रतचेतसां शंसितानि

'न दैन्यात्प्राणानां न च हृदयहरिणस्य रतये
न दर्पादङ्गानां न च करणकरिणोऽस्य मदनात्।
विधावृत्तिः किं तु क्षतमदनचरितश्रुतविधेः
परे हेतौ मुक्तेरिह मुनिषु न खलु स्थितिरियम् ॥ १२७ ॥
श्रुताय येषां न शरीरवृद्धिः श्रुतं चरित्राय च येषु नैव।
तेषां बलित्वं ननु पूर्वकर्मव्यापारभारोद्वहनाय मन्ये ॥ १२८ ॥
संसारवार्धेस्तरणैकहेतुमसारमप्येनमुशन्ति यस्मात्।
तस्मान्निरीहैरपि रक्षणीयः कायः परं मुक्तिलताप्रसूत्यै' ॥ १२९ ॥

---

श्लाघनीयानि व्रतानि येषां वरीयसां ते शंसितव्रतास्तेषां चेतसां मनसां आचरिताश्चर्यचित्तचमत्कारं आचरितः कृत आश्चर्येण अत्यद्भुतेन चित्तस्य हृदयस्य चमत्कारो येन तत्तथोक्तम्। मुनिकुमारकयुगलं किं कुर्वत्। इति अमुना प्रकारेण विचिन्तयत् पर्यालोचयत् विचारयत्। मीमांसमानमित्यर्थः। इतीति किम्।

न दैन्यादित्यादि। इह अस्मिन्। संसारे मुनिषु मुनिवरेषु प्राणानां उच्छ्वासादीनां दशप्राणानां दैन्यात् रक्षणात् विधावृत्तिः आहारप्रवृत्तिः न वर्तते। यथा हृदयहरिणस्य मनोमृगस्य रतये रत्यर्थं संपोषणार्थमपि विधावृत्तिर्नच नैव वर्तते। यथा अङ्गानां अष्टसंख्यानां दर्पात् दर्पहेतोर्बलवत्करणार्थं विधावृत्तिर्न वर्तते। तथा अस्य प्रत्यक्षीभूतस्य करणकरिणः लिङ्गगजस्य मदनात् विधावृत्तिर्न वर्तते। किं तु एकस्मिन् कारणे विधावृत्तिर्वर्तते। किं तत् कारणं यस्मिन् विधावृत्तिः वर्तते इत्याह—मुक्तेर्मोक्षस्य परे उत्कृष्टे हेतौ कारणे विधावृत्तिर्वर्तते। कथंभूताया मुक्तेः। क्षतमदनचरितश्रुतविधेः क्षतं विध्वस्तं मदनस्य कन्दर्पस्य चरितं आचरणं येन स क्षतमदनचरितः सर्वज्ञवीतरागस्तस्य श्रुतं दयारसप्रधानं शास्त्रं तस्य विधिरनुक्रमो यस्यां मुक्तौ सा तथा तस्याः। इह अस्मिन् संसारे मुनिषु यतिवरेषु इयं प्रत्यक्षीभूता स्थितिर्विधालक्षणाचारः खलु निश्चयेन वर्तते। मध्यदीपकालंकारः॥

श्रुतायेत्यादि। येषां पुरुषाणां मुनीनां वा शरीरवृद्धिः कायवर्धनं श्रुताय शास्त्रानुशीलनाय न भवति। येषु च पुरुषेषु श्रुतं शास्त्रं चरित्राय चारित्रप्रतिपादनार्थं नैव भवति। तेषां पुरुषाणां बलित्वं दृढत्वं ननु निश्चयेन पूर्वकर्मव्यापारभारोद्वहनाय पूर्वाणि पुरा कृतानि यानि कर्माणि पापानि तेषां व्यापाराणां योगस्तस्य भारो भारौघः तस्य उद्वहनाय अहं मन्ये जानामि। उत्प्रेक्षालंकारः॥

संसारवार्धेरित्यादि। यस्मात् कारणात् एनं प्रत्यक्षीभूतं असारमपि कायं संसारवार्धेः संसारवारिधेः संसारसमुद्रस्य तरणे पारप्रेपणे एकमद्वितीयं हेतुं कारणं

इति विचिन्तयत्, तस्मान्महामुनिसमानन्दितवनदेवतामुखमण्डलाद्गण्ड-शैलात्रिचतुराणि निवर्तनान्यतिक्रान्तम्, आपातदुःसहैर्महापरीषहैरिव तपः परीक्षितुमुपात्तासुराकारविधिभिरधर्मप्रणिधिभिरिव प्रतिपक्षभावनाप्रकोपप्र-पूर्तैः कर्मभिरिव धर्मध्वंसप्रबलैः कलिकालबलैरिव च तैस्तदानयनाय तेन महीक्षिता प्रेषितैर्नागरिकानुचरगणैः परिगृह्य परस्पराचरितवक्त्रवीक्षणैः 'आः, कष्टा खलु शरीरिणां सेवया जीवनचेष्टा पुरुषेषु । यस्मात्

---

उशन्ति कथयन्ति । तीर्थंकराः परे देवा इति शेषः । तस्मात् कारणात् निरीहैरपि निर-म्बरैरपि कायः शरीरं रक्षणीयः प्रतिपालनीयः । परं निश्चयेन मुक्तिलताप्रसूत्यै मुक्ति-वल्ल्या उत्पादनायेत्यर्थः । उपमालंकारः ॥

कथंभूतं मुनिकुमारकयुगलम् । तस्मात् पूर्वोक्तात् मुनिमनोहरमेखलानामकात् गण्डशै-लात् क्षुद्रपर्वतात् त्रिचतुराणि त्रीणि वा चत्वारि वा निवर्तनानि क्षेत्रमयमानानि अ-तिक्रान्तं चलितम् । कथंभूतात् गण्डशैलात् । महामुनिसमानन्दितवनदेवतामुखमण्डलात् महामुनिभिर्निरम्बराचार्यैः समानन्दितं परमानन्दं प्रापितं वनदेवतानां मुखमण्डलं मुख-कमलं यत्र गण्डशैले स तथा तस्मात् । कथंभूतैर्नागरिकानुचरगणैः आपातदुःसहैर्महाप-रीषहैरिव आपातमात्रेण आगमनमात्रेण दुःखेन महता कष्टेन सोढुमशक्या आपा-तदुःसहास्तैरिव । पुनरपि कथंभूतैः महापरीषहैरिव । यथा महापरीषहाः क्षुधादयो द्वाविंशतिसंख्या आपातदुःसहा भवन्ति । पुनरपि कथंभूतैर्नागरिकानुचरगणैः । उपात्तासुराकारविधिभिः उपात्तो गृहीतो असुराणां नारकयोधानां आकारविधिर्वेष-विधानं यैस्ते तथोक्तैः । अपरं कथंभूतैः । तपः परीक्षितुं निरतिचारचारित्रप्रतिपालनं निकषितुं धर्मप्रणिधिभिर्धर्मस्य चारित्रस्य हेरकैरिव । यथा धर्मप्रणधयश्चारित्रचरा गृहीतासुराकारविधाना भवन्ति । अपरं कथंभूतैर्नागरिकानुचरगणैः । प्रतिपक्षभावना-प्रकोपप्रपूर्तैः प्रतिपक्षाणां शत्रूणां भावनया संभावनेन प्रकोपप्रपूर्तैः प्रकृष्टक्रोधपरिपूर्णैः । अपरं कथंभूतैर्नागरिकानुचरगणैः । कर्मभिरिव यथा ज्ञानावरणादीनि अष्टकर्माणि प्रति-पक्षस्य आत्मनो भावनायाः प्रकृष्टं कोपं कुर्वन्ति । पुनः कथंभूतैर्नागरिकानुचरगणैः । धर्मस्य ध्वंसे प्रबलैर्बलवत्तरैः कलिकालबलैरिव । यथा कलिकालस्य [दुःख(ष)मकालस्य बलाः सामर्थ्यानि धर्मध्वंसप्रबला भवन्ति । पुनः कथंभूतैर्नागरिकानुचरगणैः । तेन जगत्प्रसिद्धेन महीक्षिता मारिदत्तेन राज्ञा तदानयनाय मनुष्यमिथुनस्य आनयनाय आनयनार्थं प्रेषितैः प्रहितैः । पुनश्च कथंभूतैः । परस्पराचरितवक्त्रवीक्षणैः परस्परस्य अन्योन्यस्य आचरितमनुष्ठितं वक्त्रस्य मुखस्य वीक्षणमवलोकनं यैस्ते तथोक्तैः । किं कृत्वा । पूर्वं परिगृह्य मुनिकुमारयुगलं गृहीत्वा । अपरं कथंभूतैर्नागरिकानुचरगणैः । इति अमुना प्रकारेण अनल्पकल्पकल्लोलोल्लोलखान्तसिन्धुभिः अनल्पा बहवो ये कल्पाः

सत्यं दूरे विहरति समं साधुभावेन पुंसां
धर्मश्चित्तात्सह करुणया याति देशान्तराणि।
पापं शापादिव च तनुते नीचवृत्तेन सार्धं
सेवावृत्तेः परमिह परं पातकं नास्ति किंचित्॥ १३०॥

सौजन्यमैत्रीकरुणामणीनां व्ययं न चेद्भृत्यजनः करोति।
फलं महीशादपि नैव तस्य यतोऽर्थमेवार्थनिमित्तमाहुः' ॥ १३१॥

---

संकल्पविकल्पास्त एव कल्लोलास्तरङ्गा उत्पन्नप्रध्वंसिलभावात् तैरुत्कर्षेण लोलश्चपलः खान्तसिन्धुर्मनःसमुद्रो येषां ते तथोक्तास्तैः। इतीति किम्। आः कोपे पीडायां वा। शरीरिणां जीवानां पुरुषेषु मानुषेषु सेवया शुनकवृत्त्या जीवनचेष्टा आजीवनक्रिया खलु निश्चयेन कष्टा निन्दनीया वर्तते। किमिति कष्टेति चेत्—यस्मात् कारणात्।

**सत्यमित्यादि**। सत्यं सत्यवचनं दूरे विप्रकृष्टेति विहरति गच्छति। केषाम्। पुंसाम्। सेवावृत्त्या जीविनां पुरुषाणां सत्यं किमेकाक्येव गच्छति। नहि। एकाकी गच्छत्सत्यं मार्गे बिभेति। [तर्हि] कथम्। समं सार्धं गच्छति। केन समम्। साधुभावेन। दक्षः कुशलो हितश्च साधुरुच्यते। साधोर्भावः साधुभावस्तेन साधुभावेन सह। सत्यं गच्छतीत्यर्थः। तथा धर्मः प्राणिरक्षणं चित्तात् हृदयात् देशान्तराणि याति परदेशान् गच्छति। धर्मः किमेकाक्येव गच्छति। नहि। एकाकी गच्छन् धर्मो मार्गे बिभेति। तेन कारणेन सह सार्धं गच्छति। कया। करुणया दयया सहितः। यः सेवां करोति तस्य धर्मः करुणा च नास्तीति भावः। तथा पुंसां पुरुषाणां पापं पातकं तनुते विस्तरति। कस्मात्। शापादिव। यथा महामुनिदत्तः शापः शतधा सहस्रधा कोटिधा च विस्तरति। पापं किमेकाक्येव वर्धते। नहि। सार्धं सह। केन सार्धम्। नीचवृत्तेन चाण्डालादिकर्मणा सह। अमुमेवार्थं अर्थान्तरन्यासेन द्रढयति—सेवावृत्तेः सेवयोदरपूरणात् परमन्यत् इह अस्मिन् संसारे परमुत्कृष्टं किंचित् किमपि पातकं नास्ति पापं न वर्तते। सहोक्त्यलंकारः। मन्दाक्रान्ताछन्दः॥

**सौजन्यमैत्रीत्यादि**। सुजनस्य सत्पुरुषस्य भावः सौजन्यम्, मित्रस्य भावो मैत्री, परेषां पीडाया अकरणं करुणा प्राणिरक्षा, ता एव मणयो रत्नानि येषां तेषां सौजन्यमैत्रीकरुणामणीनां चेद्यदि भृत्यजनः सेवकसमूहो व्ययं वित्तस्य समुत्सर्गं न करोति न विदधाति, तर्हि महीशात् नृपात् तस्य भृत्यजनस्य फलमपि नैव नहि वर्तते। यतः यस्मात् कारणात् अर्थमेव धनमेव च अर्थनिमित्तं धननिमित्तं आहुर्ब्रुवन्ति विद्वांसः। इति शेषः। परिवृत्त्यलंकारः। उपजातिच्छन्दः॥

इत्यनल्पकल्पकल्लोलोल्लोलस्वान्तसिन्धुभिः, 'भवतु नामैवम् । तथाप्यस्मिन्भर्तुरादेशकर्मणि न प्रायेणाश्रेयांसि । यस्मादस्माकमप्याजन्माधर्मकर्मोपजीविनां निसर्गत आयःशूलिकाशयवशाभिनिवेशासेविनामेतद्दर्शनरभसात्करुणारसः स्वभावकाठिन्यनिष्ठुरोदयं हृदयं मृदूकरोति किं पुनर्न तस्य महीपतेर्विवेकबृहस्पतेः प्रकृत्यैव च विधुरबान्धवस्थितेः । तदत्र यथा स्वामिशासनमन्यथावृत्तिं न भजेत, यथा चेदं प्राणप्रयाणभयान्नोद्विजते, तथानुतिष्ठामः' इत्यभिप्रायप्रणयपरायणैरदुष्टान्तःकरणैः, अहो निखिलभुवनैकमङ्गलोचितकीर्तिमन्दाकिनीपवित्रितमूर्तिनिधान अशिश्विदान धर्मक-

---

पुनः कथंभूतैर्नागरिकानुचरगणैः। इति अमुना प्रकारेण अभिप्राये आशये हृदये योऽसौ प्रणयः स्नेहस्तस्मिन् परायणैस्तत्परैः । इतीति किम् । भवतु नामैवम् । सेवावृत्तिः एवं उत्कृष्टं पातकं भवतु । नामेति संभावनायाम् । तथापि तदपि अस्मिन् प्रत्यक्षीभूते भर्तुर्मारिदत्तमहाराजस्य आदेशकर्मणि आज्ञाविधाने प्रायेण बाहुल्येन अश्रेयांसि अकल्याणानि न भविष्यन्ति । अस्माकमिति शेषः । किमिति अश्रेयांसि न भविष्यन्ति इत्याह—यस्मात् कारणात् अस्माकमपि एतद्दर्शनरभसात् मुनिकुमारकयुगलविलोकनवेगात् करुणारसः कारुण्यपरिणामो हृदयं चित्तं मृदूकरोति कोमलं विदधाति । कथंभूतानां अस्माकम् । आजन्माधर्मकर्मोपजीविन आजन्म जन्मपर्यन्तं अधर्मकर्म पापकर्म तेन उपजीवन्तीति आजन्माधर्मकर्मोपजीविनस्तेषां तथोक्तानाम् । अनन्तं नपुंसको वेति वचनात् आजन्ममिति अदन्तो निपातः । अपरं कथंभूतानामस्माकम् । निसर्गतः स्वभावेन आयःशूलिकाशयवशाभिनिवेशासेविनां आयःशूलिकस्तीक्ष्णकर्मकृत् ईदृशो योऽसावाशयश्चित्तं तस्य वशे योऽसौ अभिनिवेशोऽभिप्रायस्तमासेवन्त इत्येवंशीलास्ते तथा तेषाम् । कथंभूतं अस्माकं हृदयम् । स्वभावकाठिन्यनिष्ठुरोदयं स्वभावेन प्रकृत्यैव यत्काठिन्यं निर्दयत्वं तेन निष्ठुरो निस्त्रिंश उदयो यस्य हृदयस्य तत्तथोक्तम् । यद्यपि हृदयं एतद्दर्शनात् करुणरसो मृदूकरोति तर्हि तस्य जगत्प्रसिद्धस्य महीपतेर्मारिदत्तमहाराजस्य हृदयं किं पुनर्न मृदूकरिष्यति । कथंभूतस्य तस्य महीपतेः विवेकबृहस्पतेः विवेकेन बृहस्पतिः सुराचार्यो विवेकबृहस्पतिस्तस्य तथोक्तस्य । अपरं कथंभूतस्य । प्रकृत्यैव स्वभावेनैव विधुरबान्धवस्थितेः विधुरे दुःखे सति बान्धवस्येव भ्रातुरिव स्थितिः स्वभावो यस्य स तथोक्तस्य । तत्तस्मात् कारणात् । अत्र अस्मिन् आदेशकर्मणि यथा येन प्रकारेण स्वामिशासनं प्रभुशासनं अन्यथावृत्ति उल्लङ्घनं न भजेत नाश्रयति । यथा च येन प्रकारेण इदं मुनिकुमारकयुगलं प्राणप्रयाणभयात् नोद्विजते नोद्वेगं करोति तथा तेनैव प्रकारेण अनुतिष्ठामो वयं कुर्मः । पुनः कथंभूतैर्नागरिकानुचरगणैः । अदुष्टान्तःकरणैः न दुष्टं अन्तःकरणं मनो येषां ते तथा तैः । पुनः कथंभूतैर्नागरिकानुचरगणैः । इति अमुना प्रकारेण भाषिते वचने योऽसौ भूमिः परवञ्चनहेतुराडम्बरस्तेन निर्भरैः परिपूर्णैः ।

थासनाथगल मुनिकुमारकयुगल, एतस्मिन्नुपान्तवर्तिनि वने भवानीभवनगतश्चातुराश्रमगुरुर्भवद्गतमन्त्रमाहात्म्याकृष्टसकलर्तुसंभूतप्रसूनफलपल्लवालंकृतकरशाखाजालाद्वनपालात्तत्रभवतोः स्वयमेव स्वयंभुवा भुवनानन्दसंपादितदेहसौन्दर्यवतोरागमनमाकर्ण्य युष्मद्दर्शनकुतूहली द्वावपि भवन्तौ व्याहरति । तदित इत आगम्यताम्' इति भाषितभूमिनिर्भरैः, अमीषां च सर्वंकषमनुष्याणामिव तं भीषणं वेषमीषदुन्मेषेण चक्षुषा निरीक्ष्य

---

इतीति किम् । अहो निखिलभुवनैकमङ्गलोचितकीर्तिमन्दाकिनीपवित्रितमूर्तिनिधान निखिलं समग्रं यद्भुवनं त्रैलोक्यं तस्य अद्वितीयं यन्मङ्गलं पापगालनं सुखदानं च तस्मिन् उचिता योग्या या कीर्तिमन्दाकिनी गङ्गानदी तया पवित्रिता पावनीकृता या मूर्तिः शरीरं तस्य निधानं अक्षयनिधिस्तथोक्तं तस्य संबोधनं क्रियते—अहो निखिलभुवनैकमङ्गलोचितकीर्तिमन्दाकिनीपवित्रितमूर्तिनिधान । अहो अशिश्विदान अहो अमलितचरित्र । अहो धर्मकथासनाथगल धर्मकथाभिर्महापुराणादिशास्त्रैः सनाथः संयुक्तो गलः कण्ठो यस्य तत्तथा तथोक्त हे मुनिकुमारकयुगल एतस्मिन् प्रत्यक्षीभूते उपान्तवर्तिनि समीपतरे वने उद्याने भवानीभवनगतश्चण्डमारीदेवताप्रासादमध्ये संस्थितः चातुराश्रमगुरुः ब्रह्मचारिगृहस्थवानप्रस्थभिक्षूणां स्वामी चातुराश्रमगुरुः वनपालात् ऋषिनिवेदकात् तत्रभवतोः पूज्ययोरागमनमाकर्ण्य युष्मद्दर्शनकुतूहली युवयोरवलोकनकौतुकी भवन्तौ युवां द्वावपि व्याहरति आमन्त्रयति । कथंभूताद्वनपालात् भवद्गतमन्त्रमाहात्म्याकृष्टसकलर्तुसंभूतप्रसूनफलपल्लवालंकृतकरशाखाजालात् भवतोर्युवयोर्व्रतश्चारित्रं स एव मन्त्रो बीजाक्षरन्यासस्तस्य माहात्म्येन प्रभावेण आकृष्टा आकर्षणमानीता ये सकलर्तवो हिमशिशिरवसन्तग्रीष्मवर्षाशरल्लक्षणास्तेषु संभूतानि उत्पन्नानि प्रसूनानि पुष्पाणि फलानि सस्यानि पल्लवानि प्रसूनफलपल्लवानि तैरलंकृतं शोभितं करशाखाजालं अङ्गुलिसमूहो यस्य स तथोक्तस्तस्मात् । कथंभूतयोस्तत्रभवतोः । स्वयमेव आत्मनैव स्वयंभुवा प्रजापतिना भुवनानन्दसंपादितदेहसौन्दर्यवन्तोः भुवनस्य त्रैलोक्यस्य आनन्दार्थं प्रहर्षनिमित्तं संपादितं निष्पादितं देहेषु कायप्रतीकेषु यत् सौन्दर्यं मनोहरत्वं तद्विद्यते ययोस्तौ भुवनानन्दसंपादितदेहसौन्दर्यवन्तौ तयोस्तथोक्तयोः । तत्तस्मात्कारणात् इतः एतस्मात् स्थानात् इतः एतस्मिन् स्थाने आगम्यतां भवद्भ्यां आगमनं क्रियताम् । मुनिकुमारकयुगलं किं कुर्वत् । इति अमुना प्रकारेण ध्यायत् संचिन्तयत् । किं कृत्वा । पूर्वं अमीषां नागरिकानुचरगणानां तं जगत्प्रसिद्धं भीषणं भयानकं वेषमाकल्पं आकारं चक्षुषा लोचनेन निरीक्ष्य दृष्ट्वा । कथंभूतानां अमीषाम् । सर्वंकषमनुष्याणामिव यमकिंकरसमानानाम् । कथंभूतेन चक्षुषा । ईषदुन्मेषेण मनागुद्घाटनेन ॥

'सोढस्त्वत्प्रणयादनेन मनसा तद्दुःखदावानलः
संसाराब्धिनिमज्जनादपि कृतं किंचित्त्वदानन्दनम् ।
त्वत्क्रीडागमकारणोचितमतेस्त्यक्तः श्रियः संगमो
यद्यद्यापि विधे न तुष्यसि तदा तत्रापि सज्जा वयम् ॥ १३२ ॥
अयं महानेष निरस्तदोषः कृती कथं ग्रासपथे मम स्यात् ।
इति व्यपेक्षास्ति न जातु दैवे तस्मादलं दैन्यपरिग्रहेण' ॥ १३३ ॥

इति ध्यायत्, अनायतनसेवनं च तदाराधनधृतधिषणानामसंशयं तद्दर्शनं तिमिरयतीति चानुस्मरणस्मेरान्तःकरणम्, शरीरेण प्रतिपन्नतन्मनुष्यमार्गानुसरणम्, तत्र कानने कैश्चित्कृतान्तदंष्ट्राकोटिकुटिलकरवालार्धोल्लासत्रस-

---

मुनिकुमारकयुगलं किं ध्यायत् । **सोढ इत्यादि**—हे विधे विधिशब्दवाच्यपूर्वोपार्जितकर्म, त्वत्प्रणयात् तव स्नेहात् अनेन प्रत्यक्षीभूतेन मनसा आत्मना तद्दुःखदावानलोऽपि विषादिमरणदुःखदावाग्निः सोढः क्षान्तः । तथा संसाराब्धिनिमज्जनात् अपि मयूरशुनकादिभवसमुद्रमध्यपचनादपि किंचित् मनाक् त्वदानन्दनं त्वदाह्लादनं कृतं विहितम् । तथा श्रियो राज्यलक्ष्म्याः संगमोऽपि त्यक्तः परिहृतः । कथंभूतायाः श्रियः । त्वत्क्रीडागमकारणोचितमतेः तव क्रीडायाः आगमस्य कारणार्थं हेत्वर्थं उचिता योग्या मतिरभिप्रायो यस्याः श्रियः सा तथोक्ता तस्याः । यदि चेत् हे विधे, अद्यापि इदानीमपि न तुष्यसि अपरमपि दुःखं दातुमिच्छसि तदा तर्हि तत्रापि अपूर्वदुःखदानेऽपि वयं सज्जा बद्धगात्रिका वर्तामहे । रूपकालंकारः ॥

**अयं महानेषेत्यादि**—दैवे कर्मणि । यमराजे इत्यर्थः । इति ईदृशी व्यपेक्षा विचारणा इच्छा जातु कदाचित् न अस्ति न वर्तते । इतीति किम् । अयं प्रत्यक्षीभूतः तथा एषः पुमान् कृती पुण्यवान् वर्तते स मम ग्रासपथे मम कवलमार्गे कथं केन प्रकारेण स्याद्भवेत् । तस्मात् कारणात् दैन्यपरिग्रहेण दीनत्वाश्रयेण अलं पूर्णम् । आक्षेपालंकारः ॥

कथंभूतं मुनिकुमारकयुगलम् । इति अमुना प्रकारेण च अनुस्मरणस्मेरान्तःकरणं अनुस्मरणेन विचारणेन स्मेरं ईषद्विकसितं अन्तःकरणं मनो यस्य तत्तथोक्तम् । इतीति किम् । अनायतनसेवनं च कुत्सितदेवतागृहगमनं तदाराधनधृतधिषणानां सम्यग्दर्शनाराधनेन आरोपितमतीनां पुरुषाणां असंशयं निःसंदेहं तत् अनायतनसेवनं दर्शनं संयुक्तत्वं तिमिरयति मलिनं करोति । अपरं कथंभूतं तन्मुनिकुमारकयुगलम् । शरीरेण कायेन न तु मनसा प्रतिपन्नतन्मनुष्यमार्गानुसरणं प्रतिपन्नमङ्गीकृतं तन्मनुष्याणां नागरिककिंकराणां मार्गानुसरणं मार्गस्य अनुगमनं येन तत्तथोक्तम् ।

न्मानसमेषमहिषमयमातङ्गमितंद्रूपद्रुतपाणिभिः कैश्चित्कीनाशरसनातरलतरवारिधाराजलरुधिरावलेहलालसपलाशावेशभयभ्रश्यत्कुम्भीरमकरसालूरकुलीरकमठपाठीनकठोरकरप्रयत्नैः कैश्चिन्मृत्युमुखावर्तनिभोद्भ्रान्तभ्रमिलभ्रमिभीषितभेरुण्डक्रौञ्चकोककुर्कुटकुररकलहंसग्रहणविह्वलितबाहुभिः कैश्चित्परेतपतिपुरमार्गानुकारिकाण्डचण्डितचमरचमूरु(र)हरिहरिणवृकवराहवा-

कथंभूतं महाभैरवं नाम देवतायतनम्। तत्र कानने तस्मिन्नुद्याने वने पञ्चजनैर्मनुष्यैः परिवृतं वेष्टितम्। कथंभूतैः पञ्चजनैः। कैश्चित् विवक्षितैः कथंभूतैः परिवृतम्। कृतान्तदंष्ट्राकोटिकुटिलकरवालार्धोल्लासत्रसन्मानसमेषमहिषमयमातङ्गमितंद्रूपद्रुतपाणिभिः कृतान्तस्य यमस्य दंष्ट्रा दाढा तस्याः कोटिः अग्रं तद्वत् कुटिलो वक्रतरो योऽसौ करवालः खड्गस्तस्य अर्धोल्लासेन अर्धनिष्कासनेन त्रसन्ति बिभ्यति वा मानसानि हृदयानि येषां ते कृतान्तदंष्ट्राकोटिकुटिलकरवालार्धोल्लासत्रसन्मानसास्ते च ते मेषाश्च अवयो महिषा रजखला रक्ताक्षाः। छुलाया इति यावत्। मयाश्च क्रमेलकाः। उष्ट्रा इति यावत्। मातङ्गाश्च हस्तिनो मितंद्रवश्च अश्वास्तैरुपद्रुताः सहिताः पाणयः करा येषां पञ्चजनानां ते तथोक्ताः तैः। पुनः कथंभूतैः पञ्चजनैः। कैश्चिदग्रहीतनामभिः कीनाशरसनातरलतरवारिधाराजलरुधिरावलेहलालसपलाशावेशभयभ्रश्यत्कुम्भीरमकरसालूरकुलीरकमठपाठीनकठोरकरप्रयत्नैः कीनाशो यमस्तस्य रसना जिह्वा तद्वत् तरलश्चपलतरो योऽसौ तरवारिः एक[धारः] खड्गस्तस्य धाराजले अग्रपानीये यत् वर्तते रुधिरं असृक् तस्य अवलेहे समन्तादास्वादने लालसा अत्याकाङ्क्षा ये पलाशा राक्षसास्तेषामावेशस्तरवारिप्रवेशस्तस्माद्भयात् भ्रश्यन्तोऽधःपतन्तः कुम्भीराश्च नक्रा मकराश्च जलहस्तिनः सालूराश्च दर्दुराः। मण्डूका इति यावत्। कुलीराश्च कर्कटाः। कुरचला इति यावत्। कमठाश्च कच्छपाः पाठीनाश्च सहस्रदंष्ट्रिणस्तेषां ग्रहणेन कठोरः कर्कशः। निर्दय इति यावत्। कराणां हस्तानां प्रयत्नः सावधानता येषां पञ्चजनानां ते तथा तैः। पुनः कथंभूतैः पञ्चजनैः। कैश्चिदग्रहीतनामभिः मृत्युमुखावर्तनिभोद्भ्रान्तभ्रमिलभ्रमिभीषितभेरुण्डक्रौञ्चकोककुर्कुटकुररकलहंसग्रहणविह्वलितबाहुभिः मृत्युर्यमराजः तस्य मुखं वक्त्रं तदेव आवर्तो भ्रमणम्। लोकानां निमज्जनकारित्वात्। तेन निभं सदृशमुद्भ्रान्तं ऊर्ध्वं चलितं यद्भ्रमिलं चक्रं तस्य भ्रमिणा चलनेन भीषिता भयं प्रापिता ये भेरुण्डाश्च महापक्षिणः क्रौञ्चाश्च उत्क्रोशाः कोकाश्चक्रवाकाः कुर्कुटाश्च ताम्रचूडाः कुरराश्च जलकाकाः कलहंसाश्च राजहंसाः। रक्तवर्णलोचनमुखपादाः कलहंसाः कथ्यन्ते। तेषां ग्रहणेन विह्वलिता बाहवो भुजदण्डा येषां पञ्चजनानां ते तथा तैः। अपरं कथंभूतैः पञ्चजनैः। कैश्चिदनुपात्ताभिधेयैः परेतपतिपुरमार्गानुकारिकाण्डचण्डितचमरचमूरु(र)हरिहरिणवृकवराहवानरगौरखुराकुलितहस्तैः

१. 'ग्रहण' पदं टीकायामुपलभ्यते, नादर्शपुस्तकेषु.

नरगौरखुराकुलितहस्तैरपरैश्च यमावासप्रवेशपरप्रासपट्टिसदुःस्फोटमुषुण्डिभिण्डिमा(न्दिपा)लमुद्गराद्यनेकायुधाबाधनिरोधितस्थलजलविलान्तरालजातजन्तुजनितभुजप्रयासैरद्यापि काश्यपीश्वरेण स्वयमालम्भनारम्भासंभवादविहितहिंसाव्यवसायैर्नगनगरग्रामारण्यजन्मसमवायैः पञ्चजनैः समस्तं जगत्संजिहीर्षुभिः पिनाकपाणिपरिजनैरिव परिवृतं महाभैरवं नाम तद्देवतायतनमानिन्ये ॥

---

परेतपतिर्यमस्तस्य पुरं नगरं तस्य मार्गानुकारिणो मार्गसदृशा ये काण्डा इषवस्तैश्चण्डिताः कुपितभीता ये चमराश्चमरमृगाश्चमूराश्च व्याघ्रा हरयश्च सिंहा हरिणाश्च मृगा वृकाश्च तरक्षवो वराहाश्च शूकरा वानराश्च मर्कटा गौरखुराश्च गर्दभाकाराः पञ्चेन्द्रियसन्मूर्छकजीवास्तैराकुलिता विह्वलीभूता हस्ताः करा येषां पञ्चजनानां ते तथोक्ताः । न केवलमेतैरेव पञ्चजनैः परिवृतं देवतायतनम्, किंतु अपरैश्च पुरुषैः परिवृतम् । अपरैः कथंभूतैः । यमावासप्रवेशपरप्रासपट्टिसदुःस्फोटभुषुण्डिभिण्डिमा(न्दिपा)लमुद्गराद्यनेकायुधाबाधनिरोधितस्थलजलविलान्तरालजातजन्तुजनितभुजप्रयासैः यमः कृतान्तस्तस्य आवासो मन्दिरं तस्य प्रवेशपराः संचारसदृशा ये प्रासाः कुन्ताः पट्टिसाश्च पट्टका दुःस्फोटाश्च मुसलानि भुषुण्डयश्च गर्जका भिण्डिमा(न्दिपा)लाश्च गोफणाः मुद्गराश्च लोहघनास्ते आदिर्येषां यष्टिशक्तिछुरिकाकट्टारकयमदंष्ट्रादीनां तानि च तानि अनेकानि अगणितानि आयुधानि शस्त्राणि तैरबाधं अनिवारितं निरोधिता रुद्धा ये स्थलजाता मृगादयो जलजाताश्च मत्स्यादयो विलजाताश्च गोधा गोधात्मजसर्पसरीसृपादयो अन्तरालजाताश्च श्येनगृध्रश्यामलिकाचटकपारापतादयस्ते च ते जन्तवो जीवास्तैर्जनितो निष्पादितो भुजेषु बाहुदण्डेषु प्रयासो दुःखं येषां पञ्चजनानां ते तथा तैः । पुनरपि कथंभूतैः पञ्चजनैः । अद्यापि सर्वजीवानामेकत्रीकरणकालेऽपि काश्यपीश्वरेण पृथिवीनाथेन मारिदत्तेन राज्ञा स्वयमात्मना आलम्भनारम्भासंभवात् आलम्भनस्य मारणस्य योऽसावारम्भः प्रथमहिंसा तस्य असंभवात् अभावात् अविहितहिंसाव्यवसायैः अविहितो न कृतो हिंसायाः जीवघातस्य व्यवसायः कर्म यैः पञ्चजनैस्ते तथा तैः । अपरं कथंभूतैः पञ्चजनैः । पुनरपि नगनगरग्रामारण्यजन्मसमवायैः नगाश्च पर्वता नगराणि च चतुर्गोपुराणि दुर्गखातादिसहितानि ग्रामाश्च कण्टकवृतिवेष्टिता अरण्यानि च वृक्षजालानि विपिनानि तेषु जन्मोत्पत्तिर्येषां तेषां समवाया मेलापका येषु पञ्चजनेषु ते तथा तैः । पुनरपि कथंभूतैः । समस्तं समग्रं जगत्पृथ्वीमण्डलं संजिहीर्षुभिः संहारं कर्तुमिच्छुभिः । पुनः कथंभूतैः । पिनाकपाणिपरिजनैरिव पिनाकपाणेः श्रीमहादेवस्य परिजनैरिव कुटुम्बवर्गसदृशैः । उपमालंकारः । समुच्चयश्च कथ्यते ॥

तत्र च ताभ्यां 'क्व चावयोर्जन्म, क्व चेदं वयः, क्व चायं चरमदशाश्लाघनीयतपश्चरणप्रक्रमः, क्व चेयं धर्मान्तरायपरम्परायां दैवस्य महती निघ्नता, क्व चायमसदृशप्रदेशप्रवेशः' इति मनागनुशयस्तिमितगतिभ्यामखिलदिग्वलयावलोकिभिरवलोकितैरुपहारायोपनीतानामङ्गिनामाजन्मजीवनजुषः कमलकुवलयकुसुमाशिष इव स्पर्शयन्त्याभ्यामुत्सर्पिभिस्त्रैलोक्यपावनालेखैः पादनखमयूखैस्तथाविधेषु देहिषु वधानुबन्धिवयांसि मनस्तमांसीव सादयन्त्याम्

---

तत्र च भवान्या भवने महाभैरवनाम्नि मन्दिरे मुनिबालकाभ्यां मुनिकुमारकयुगलेन कर्तृभूतेन भूपः श्रीमारिदत्तमहाराजः कर्मतापन्नो व्यलोकि दृश्यते स्म । विलोकित इत्यर्थः । कथंभूतः भूपः । उत्खातखड्गः उद्घाटितमण्डलाग्रः । पुनरपि कथंभूतो भूपः । आपगाया नद्या मध्ये तटीधरः पर्वत इव । कथंभूतस्तटीधरः । नितम्बबिम्बोत्फणभोगिभीमः । नितम्बबिम्बे कटनीमण्डले उत्फण ऊर्ध्वीकृतभोगः स चासौ भोगी कालसर्पस्तेन भीमो भयानकः स तथोक्तः । कथंभूताभ्यां मुनिबालकाभ्याम् । इति अमुना प्रकारेण मनाक् ईषत् अनुशयस्तिमितगतिभ्यां अनुशयेन पश्चात्तापेन स्तिमिता मन्दा गतिर्गमनं ययोस्तौ ताभ्याम् । इतीति किम् । क्व च क्वेव आवयोर्द्वयोर्जन्म वर्तते । क्व च इदं प्रत्यक्षीभूतं वयो अवस्था बालत्वं वर्तते । क्व च क्वेव अयं प्रत्यक्षीभूतश्चरमदशाश्लाघनीयतपश्चरणप्रक्रमः चरमदशायां चतुर्थे वयसि श्लाघनीयः प्रत्यसनीयः तपश्चरणस्य दीक्षायाः प्रक्रमः प्रारम्भो वर्तते । क्व च क्व वा इयं प्रत्यक्षीभूता धर्मान्तरायपरम्परायां धर्मस्य अन्तरायस्य विघ्न[स्य] परम्परायां श्रेणौ दैवस्य कर्मणो महती गुरुतरा निघ्नता तत्परता वर्तते । क्व च क्व वा अयं प्रत्यक्षीभूतः असदृशप्रदेशप्रवेशः असदृशस्य अयोग्यस्य प्रदेशस्य स्थानस्य प्रवेशो गमनं वर्तते । विषमालंकारः । पुनरपि कथंभूताभ्यां मुनिबालकाभ्याम् । अखिलदिग्वलयावलोकिभिरवलोकितैरुपहारायोपनीतानामङ्गिनामाजन्मजीवनजुषः कमलकुवलयकुसुमाशिष इव स्पर्शयन्त्याम् अखिलं समस्तं दिग्वलयं दिङ्मण्डलं अवलोकन्ते विलोकयन्तीत्येवंशीलानि अखिलदिग्वलयावलोकीनि तैरखिलदिग्वलयावलोकिभिरीदृग्विधैरवलोकितैरवलोकनैः कृत्वा उपहाराय मारयित्वा पूजनाय उपनीतानां आनीतानां अङ्गिनां प्राणिनां आजन्म जीवनं जुषन्ते प्रत्यासेवन्ते यास्ताः आजन्मजीवनजुषः कमलकुवलयकुसुमाशिषः कमले च बिसप्रसूने कुवलये च उत्पले ते च ते कुसुमे प्रसूनैर्या आशिषो मस्तके पुष्पनिक्षेपान्कर्मतापन्नान्स्पर्शयन्त्यामिव । कमलसदृशे यशस्तिलकलोचने, कुवलयसदृशे मदनमतिचक्षुषी । यथासंख्योपमालंकारः । अपरं कथंभूताभ्यां मुनिकुमारकाभ्याम् । उत्सर्पिभिस्त्रैलोक्यपावनालेखैः पादनखमयूखैस्तथाविधेषु देहिषु वधानुबन्धिवयांसि मनस्तमांसीव सादयन्त्याम् उत्सर्पिभिः प्रसरण-

---

१. 'मसदृशप्रवेशावेशः' इति टीकायां क्वचित्पाठः.

उत्खातखड्गो मुनिबालकाभ्यां व्यलोकि भूपो भवने भवान्याः ।
नितम्बबिम्बोत्फणभोगिभीमस्तटीधरो मध्य इवापगायाः ॥ १३४ ॥

अपि च हिंसाध्यवसायाशयस्खलनप्रवृद्धक्रोधानुवन्धाद्वद्धक्रमोत्साहः सिंह इव व्यालोललोचनः, संहाराविष्टः शिपिविष्ट इव भ्रुकुटिभीमः, समालोकितारातिघटः सुभट इव स्फुरिताधरः, सपत्नलोहितविहितस्नानकामः परशुराम इव शोणशरीरः, प्रकटिततडिद्दण्डडम्बरः प्रलयकाला-

---

शीलैस्त्रैलोक्यपावनालेखैः त्रिभुवनपवित्रीकरणाग्रभागैः ईदृग्विधैः पादनखमयूखैश्चरणनखकिरणैः तथाविधेषु पूर्वोक्तलक्षणेषु देहिषु जीवेषु वधानुवन्धिवयांसि मारणसंवन्ध्यवस्थानि ईदृग्विधानि मनस्तमांसि हृदयदैन्यानि सादयन्नामिव । उपमालंकारः ॥

भूपः कथंभूतः । अपि च विशेषार्थतया[1] वर्णनीयो वर्तते । कथंभूतो भूपः । हिंसाध्यवसायाशयस्खलनप्रवृद्धक्रोधानुवन्धाद्वद्धक्रमोत्साहः हिंसाया जीवघातस्य अध्यवसायो व्यापारस्तस्य आशयो अभिप्रायस्तस्य स्खलनं क्रियानिपतनं तेन प्रवृद्धो वृद्धिं गतो योऽसौ क्रोधस्तीव्रकोपस्तस्य अनुवन्धः संततं यो(या) प्रवृत्तिः(वृत्तिः) हिंसाध्यवसायाशयस्खलनप्रवृद्धक्रोधानुवन्धस्तस्मात् तथोक्तात् वद्धक्रमोत्साहो वद्धः क्रमयोः पादयोरुत्साहो उद्यमो यस्य स तथोक्तः । अपरं कथंभूतो भूपः । व्यालोललोचनः विशेषेण चपलचक्षुः । पुनः[2] [कथंभूतः] । सिंह इव पञ्चानन इव । यथा सिंहो हिंसास्खलने वद्धक्रमोत्साह उच्चलिताग्रपादद्वयो भवति चपललोचनः स्यात् । उपमालंकारः । पुनः कथंभूतो भूपः । भ्रुकुटिभीमः भ्रुकुट्या भ्रूभङ्गेन भीमो भयानकः । अपरं कथंभूतः । शिपिविष्ट इव शिपिप(?) चर्मणि विष्टं दोषो यस्य स शिपिविष्टः श्रीमहादेवः दुश्चर्मत्वात् । कर्कशशरीरत्वादित्यर्थः । कथंभूतः शिपिविष्टः । संहाराविष्टः पृथिवीप्रलयकरणाभिप्रायः । अपरं कथंभूतो भूपः । स्फुरिताधरः चलिताधरस्तनदन्तच्छदः । अपरं कथंभूतः । सुभट इव सहस्रभटलक्षभटकोटीभटसदृशः । कथंभूतः सुभटः । समालोकितारातिघटः सम्यगालोकिता दृष्टा अरातीनां शत्रूणां घटा रचना येन स तथोक्तः । अपरं कथंभूतो भूपः । सपत्नलोहितविहितस्नानकामः परशुराम इव शोणशरीरः शोणं रक्तं शरीरं यस्य स तथा । [अपरं कथंभूतः ।] परशुराम इव जमदग्निपुत्र इव कथंभूतः परशुरामः । सपत्नानां क्षत्रियाणां लोहितेन रुधिरेण विहितः कृतः स्नानस्य मज्जनस्य कामोऽभिलाषो येन स तथोक्तः [पुनः कथंभूतो भूपः ।] प्रकटिततडिद्दण्डडम्बरः

---

१. 'विशेषार्थव्यावर्णने' इति सटीकपुस्तकपाठः. २. 'क इव' इति पाठ उचितः.

म्भोधर इव निस्त्रिंशदुर्दर्शः, प्रत्यूहितस्वान्तः कृतान्त इव भीषणाकारः, क्रौर्यानलस्फुलिङ्गवर्षोचितैर्वीक्षितैः पर्यन्तेषु दावदाहव्याप्तिमिव परिस्फारयन्

किं च।

ज्वलन्निवान्तर्ज्वलितेन तेजसा दहन्निवोग्रेण विलोकितेन।
आशीर्विषः सर्प इवातिरौद्रश्चण्डेन खादन्निव चेष्टितेन॥ १३५॥

सा देवता च।

दंष्ट्राकोटिनिविष्टदृष्टिकुटिलव्यालोकविस्फारित-
भ्रूभङ्गोद्भटभावभीषणमुखत्रस्यत्रिलोकीपति।

---

प्रलयकालाम्भोधर इव निस्त्रिंशदुर्दर्शः। पुनः कथंभूतो भूपः। निस्त्रिंशेन खड्गेन कृत्वा दुःखेन महता कष्टेन द्रष्टुमशक्यः स तथा। [क इव।] प्रलयकालाम्भोधर इव कल्पान्तकालमेघ इव। कथंभूतः प्रलयकालाम्भोधरः।प्रकटितः स्फुटीकृतस्तडिद्दण्डस्य विद्युद्दण्डस्य डम्बर आटोपो येन स तथोक्तः। कथंभूतो भूपः। भीषणाकारः भयानकमूर्तिः। पुनः कथंभूतः। कृतान्त इव यमसमानः। कथंभूतः कृतान्तः। प्रत्यूहितस्वान्तः प्रत्यूहितं स्वलितं विघ्नासायितं(?)स्वान्तं मनो यस्य तथोक्तः। भूपःकिं कुर्वन्। वीक्षितैरवलोकनैः कृत्वा पर्यन्तेषु पुरस्तात् दावदाहव्याप्तिं दावानलप्रज्वलनप्रसारं परिस्फारयन्निव प्रचुरीकुर्वन्निव। कथंभूतैर्वीक्षितैः।·········क्रौर्यानलस्फुलिङ्गा अग्निकणास्तेषां वर्षोचितैः वर्षणसदृशैः। किंच अस्ति कश्चिद्विशेषः। ज्वलन्निवेत्यादि। अन्तर्ज्वलितेन अभ्यन्तरप्रदीप्तेन तेजसा प्रतापेन ज्वलन्निव। पुनश्च किं कुर्वन् भूपः। उग्रेण तीव्रण असह्येन विलोकितेन अवलोकनेन दहन्निव जगत् भस्मीकुर्वन्निव। पुनश्च किं कुर्वन् भूपः। चण्डेन प्रचण्डेन चेष्टितेन व्यापारेण खादन्निव भक्षयन्निव। कथंभूतो भूपः। अतिरौद्रः अतिशयेन क्रूरस्वभावः। पुनः आशीर्विषः सर्प इव आशीर्विषं दंष्ट्रायां विषं हालाहलं यस्य स आशीर्विषः सर्प इव दन्दशूको यथा। उपमालंकारः॥

सा देवता च व्यलोकीति पूर्वोक्तमेव क्रियापदं ग्राह्यम्। दंष्ट्राकोटीत्यादि। यस्याः देवतायाः प्रचण्डं अतीवोद्भटं वपुः शरीरं विजयते अप्रतिहतव्यापारं वर्तते। कथंभूतं वपुः। दंष्ट्राकोटिनिविष्टदृष्टिकुटिलव्यालोकविस्फारितभ्रूभङ्गोद्भटभावभीषणमुखत्रस्यत्रिलोकीपति दंष्ट्रा दाढा तस्याः कोटिरग्रं तत्र निविष्टा उपविष्टा लग्ना यासौ दृष्टिः लोचनं यस्याः कुटिलव्यालोकेन वक्रवीक्षितेन विस्फारितः प्रचुरीकृतो योऽसौ भ्रूभङ्गो भ्रूविक्षेपस्तस्य उद्भट आडम्बरसहितो योऽसौ भावोऽभिप्रायः सर्वप्राणिभक्षणलक्षणस्तेन भीषणं

---

१. 'पुनः कथंभूतो भूपः' इति 'प्रकटित—'इत्यतः प्रागेवोचितः. २. 'क इव' इत्युचितः. क्वचित्पुस्तके तु 'क इव' इत्येव पाठ उपलभ्यते.

लालाटोल्बणलोचनानलमिलज्ज्वालाकरालाम्बर-
प्लुष्टद्विष्टपुरत्रयं विजयते यस्याः प्रचण्डं वपुः ॥ १३६ ॥

यस्याश्च ।

उत्सर्पद्दर्पसर्पाकुलविकटजटाजूटविभ्यद्विधूनि
प्रान्तप्रेङ्खत्कपालावलिचलनरणद्धण्टखट्वाङ्गकानि ।
दैत्यध्वंसप्रमोदोद्धुरविधुतकराभोगखर्वद्गिरीणि
स्फाराघाताङ्घ्रिपातोच्छलदुदधिजलान्युद्धतोद्वेल्लितानि ॥ १३७ ॥

---

भयानकं यन्मुखं लपनं तस्मात् त्रस्यन्तो बिभ्यतो भयं कुर्वन्तस्त्रिलोकीपतयः इन्द्रचन्द्रशेषनागादयो यस्मात् वपुषस्तथोक्तम् । अपरं कथंभूतं वपुः । ललाटोल्बणलोचनानलमिलज्ज्वालाकरालाम्बरप्लुष्टद्विष्टपुरत्रयम् ललाटे भवं लालाटं उल्वणमुद्रिक्तं यल्लोचनं तृतीयं चक्षुस्तस्य संबन्धी योऽसावनलो वैश्वानरस्तस्मिन् मिलन्त्य एकत्रीभवन्त्यो या ज्वालाः कीलास्ताभिः करालं रौद्रं यदम्बरमाकाशं तत्र प्लुष्टं भस्मीकृतं द्विष्टस्य त्रिपुरदानवस्य पुरत्रयं नगरत्रयं येन वपुषा तत्तथोक्तम् । गौडीया रीतिः । अतिशयालंकारः ॥

यस्याश्च । **उत्सर्पदित्यादि** । चण्डमारीदेवतायाः उद्धतोद्वेल्लितानि उत्सर्पद्दर्पसर्पाकुलविकटजटाजूटविभ्यद्विधूनि उत्सर्पति प्रसरति दर्पो मदो येषां ते उत्सर्पद्दर्पास्ते च ते सर्पाः कालाहयस्तैराकुलो वेष्टितो विकटः प्रस्फुटीभूत उन्नततया गगनं गतो योऽसौ जटाजूटो लम्बकचग्रन्थिस्तस्मात् विभ्यन्तो(तो) भयं कुर्वन्तो विधवश्चन्द्रा येषु उद्धतोद्वेल्लितेषु तानि तथोक्तानि । अपरं कथंभूतानि उद्वेल्लितानि । प्रान्तप्रेङ्खत्कपालावलिचलनरणद्धण्टखट्वाङ्गकानि प्रान्तेषु शरीरपुरस्तात् प्रेङ्खन्ती चलन्ती या कपालावलिर्मुण्डमाला तस्याः चलनेन चलनात् रणन्त्यः शब्दान् कुर्वन्त्यो(न्त्यो) घण्टा नादिन्यो येषु तानि प्रान्तप्रेङ्खत्कपालावलिचलनरणद्धण्टानि ईदृग्विधानि खट्वाङ्गकानि खट्वाया ईषाशीर्षकाणि येषु तानि तथोक्तानि । अपरं कथंभूतानि उद्वेल्लितानि । दैत्यध्वंसप्रमोदोद्धुरविधुतकराभोगखर्वद्गिरीणि दैत्यानां महिषासुरादीनां ध्वंसात् मारणात् समुत्पन्नो योऽसौ प्रमोदो हर्षस्तेन उद्धुरा उत्कटा विधुताः कम्पिता ये करा हस्तास्तेषामाभोगेन आडम्बरेण खर्वन्तो भग्नशिखरतया ह्रस्वीभवन्तो गिरयः पर्वता येषु उद्वेल्लितेषु तानि तथोक्तानि । अपरं कथंभूतानि उद्वेल्लितानि । स्फाराघाताङ्घ्रिपातोच्छलदुदधिजलानि स्फाराः प्रचुरा ये आघाता निष्ठुरप्रहारास्तैरुपलक्षिता ये अङ्घ्रिपाताः पादपातास्तैरुच्छलन्ति गच्छन्ति उदधीनां समुद्राणां जलान्युदकानि येषु उद्वेल्लितेषु तानि तथोक्तानि । लाटीया रीतिः । अतिशयालंकारः ॥

अपि च तस्याः शरीरे मनसि च किमिव नैर्घृण्यं वर्ण्यते। यस्याः कपालमालाः शिखण्डमण्डनानि, शवशिशवः श्रवणावतंसाः, प्रमितप्रकोष्ठाः कर्णकुण्डलानि, परेतकीकसमणयः कण्ठभूषणानि, परासुनलरसाः शरीरवर्णकानि, गतजीवितकरङ्काः करक्रीडाकमलानि, सीधुसिन्धवः संध्याचमनकुल्याः, पितृवनानि विहारभूमयः, चिताभसितानि चन्द्रकवलाः, चण्डातकमार्द्रचर्माणि, सारसनं मृतकान्त्रच्छेदाः, प्रनर्तनप्रदेशः संस्थितोरःस्थलानि, कन्दुकविनोदः स्तभोत्तमाङ्गैः, जलकेलयः शोणितदीर्घिकाभिः, निशावलिप्रदीपाः श्मशानकृशानुकीलाभिः, प्रत्यवसानोपकरणानि नरशिरःकरोटिभिः, महान्ति दोहदानि च सर्वसत्त्वोपहारेण।

---

अपि च अनु च तस्याश्चण्डमार्याः शरीरे काये मनसि च हृदये किमिव कीदृशं नैर्घृण्यं निर्दयत्वं वर्ण्यते। अनीदृशं नैर्घृण्यमित्यर्थः। यस्याश्चण्डमार्याः कपालमालाः मनुष्यमुण्डश्रेणयः शिखण्डमण्डनानि शिरोरत्नानि वर्तन्ते। शवशिशवो मृतकमनुष्यबालकाः श्रवणावतंसाः कर्णपूरा वर्तन्ते। प्रमितप्रकोष्ठाः मृतकविस्तृतकराः कर्णकुण्डलानि श्रवणवेष्टनानि वर्तन्ते। परेतकीकसमणयः मृतकानां अस्थिघटितमणयः कण्ठभूषणानि ग्रीवालंकाराणि वर्तन्ते। परासुनलरसाः परासूनां मृतकानां नलानां पादास्थ्नः रसा निर्यासा द्रव्याणि शरीरवर्णकानि कायविलेपनानि वर्तन्ते। गतजीवितकरङ्काः मृतकशुष्कशरीराणि करक्रीडाकमलानि केल्यम्बुजानि वर्तन्ते। सीधुसिन्धवः मद्यसमुद्राः संध्याचमनकुल्याः संध्यानां आचमनानां उपस्पर्शानां कुल्याः सरिण्यो वर्तन्ते। पितृवनानि श्मशानानि विहारभूमयः क्रीडावनानि वर्तन्ते। चिताभसितानि मृतकाग्निभस्मानि चन्द्रकवलाः सुखमण्डनभूषणानि वर्तन्ते। चण्डातकं चण्डभङ्गम्। अतिचण्डातकं अर्धोरुकं वस्त्रं चलनकमिति यावत्। आर्द्रचर्माणि प्रत्यग्राजिनानि वर्तन्ते। सारसनं कटिमेखला मृतकान्त्रच्छेदाः पुरीतत्खण्डानि वर्तन्ते। प्रनर्तनप्रदेशो नृत्यभूमिः संस्थितोरःस्थलानि संस्थितानां मृतकानां उरस्थलानि हृदयभूमयः। कन्दुकविनोदः कन्दुककेलिः स्तभोत्तमाङ्गैश्छगलमस्तकैः[1] कृता। जलकेलयो जलक्रीडाः शोणितदीर्घिकाभिः शोणितवापिकाभिः। निशावलिप्रदीपाः संध्यापूजनदीपाः श्मशानकृशानुकीलाभिः श्मशानवैश्वानरज्वालाभिः। प्रत्यवसानोपकरणानि भोजनभाजनानि नरशिरःकरोटिभिः नराणां मनुष्याणां शिरःकरोटिभिर्मस्तकास्थिभिः। महान्ति वृहन्ति दोहदानि मनोरथाः सर्वसत्त्वोपहारेण सर्वजीवमारणपूजनेन। चकारात् अत्यपकृष्टवस्तु। समुच्चयालंकारः॥

---

1. 'श्वगल' इति सटीकपुस्तके.

या च लघीयसी भगिनीव यमस्य, जननीव महाकालस्य, दूतिकेव कृतान्तस्य, सहचरीव कालाग्निरुद्रस्य, महानसिकीव मातृमण्डलस्य, धात्रीव यातुधानलोकस्य, श्राद्धभूमिरिव पितृपतिपक्षस्य, क्षयरात्रिरिव समस्तजन्तूनाम्,

न केवलमसौ नाम्ना चण्डमारीति पप्रथे ।
अप्यङ्गचित्तचारित्रैश्चण्डमारीति विश्रुता ॥ १३८ ॥

तत्र सकलकुवलयामृतरुचिरभयरुचिमुनिकुमारस्तादृग्विधं जनसंवाधमवनिधातारं देवताकारं चावलोक्य

'विशुद्धबोधं तप एव रक्षा ग्रामेष्वरण्येषु च संयतानाम् ।
अतः कृतान्तेऽपि समीपवृत्तौ मातर्मनो मा स्म कृथा निरीशम् ॥१३९॥

---

या च देवता यमस्य कृतान्तस्य लघीयसी भगिनीव कनीयसी स्वसेव । महाकाल[स्य] रुद्रस्य जननीव मातेव वर्तते । कृतान्तस्य यमस्य दूतिकेव संचारिकेव । कालाग्निरुद्रस्य प्रलयकालसंबन्धिरुद्रस्य सहचरीव सखीव वर्तते । मातृमण्डलस्य सप्तमातृसमूहस्य महानसिकीव रसवती पाचिकेव । सप्तमातॄणां श्लोको यथा—'ब्रह्माणी च तथेन्द्राणी वाराही भैरवी तथा । चामुण्डा कर्णमोटी च चर्चा स्युः सप्त मातरः ॥' यातुधानलोकस्य राक्षसलोकस्य धात्रीव उपमातेव । पितृपतिपक्षस्य यमकर्णागतस्य श्राद्धभूमिरिव पितृपीन(प्रीणन)स्थानमिव । समस्तजन्तूनां सर्वजीवानां क्षयरात्रिरिव संहारशर्वरीव ॥

नेति । असौ देवता केवलं नाम्ना कृत्वा चण्डमारी इति न पप्रथे न प्रसिद्धा जाता । किं तु अङ्गचित्तचारित्रैरपि शरीरमनःक्रियाभिरपि चण्डमारी इति विश्रुता विख्याता वर्तते । मालोपमालंकारः ॥

तत्र देवताप्रासादमध्ये अभयरुचिमुनिकुमारः अभयमतेः स्वसुर्भगिन्याः मुखमवालोकिष्ट विलोकितवान् । कथंभूतो अभयरुचिमुनिकुमारः । सकलकुवलयामृतरुचिः सकलस्य कुवलयस्य पृथिवीमण्डलस्य अमृतरुचिराह्लादकारकश्चन्द्र इव । कथं स्वसुर्मुखमवालोकिष्ट । सकरुणं दयासहितं यथा भवत्येवम् । किं कृत्वा । पूर्वं तादृग्विधं पूर्वोक्तलक्षणं जनसंबाधं लोकसंघट्टं अवनिधातारं राजानं देवताकारं च चण्डमारीमूर्तिं च अवलोक्य दृष्ट्वा । अभयरुचिः किं कुर्वन् मुखमवालोकिष्ट । इति ईदृशं भावं निवेदयन्निव निजभगिन्या ज्ञापयन्निव । इतीति किम् ।

विशुद्धबोधमित्यादि । हे मातः हे भगिनि, अतः एतस्मात् कारणात्

---

१. समग्रोऽपि मूलश्लोकष्टीकादर्शद्वयेऽपि.

जीवस्य सद्दर्शनरत्नभाजश्चारित्रयुक्तस्य समाहितस्य।
आशंसितो मृत्युरुपप्रयातः परं प्रमोदस्य समागमाय ॥ १४० ॥
सा मृतिर्यत्र जन्तूनां पुरो दुःखपरम्परा।
देहस्यास्य पुनर्मोक्षात्पुण्यभाजां महोत्सवः ॥ १४१ ॥'

इति निवेदयन्निव यतो मा कदाचिदस्याः स्त्रैणो भावश्चिरान्मनोरथशतैरासादितमिदं मनुष्यजन्म विफलतां नैषीदिति कृतानुकम्पनः सकरुणमभयमतेः स्वसुर्मुखमवालोकिष्ट।

यद्देवैरपि
पर्याप्तं विरसावसानकटुकैरुच्चावचैर्नाकिनां
सौख्यैर्मानसदुःखदावदहनव्यापारदग्धात्मभिः।

---

कृतान्तेऽपि यमेऽपि समीपवृत्तौ निकटवर्तिनि सत्यपि मनश्चित्तं निरीशं निर्नाथं मा स्म कृथाः मा कार्षीः। मा जानीहीत्यर्थः। अतः कुतः कारणात्। संयतानां विशुद्धबोधं सम्यग्ज्ञानमहितं तप एव इच्छानिरोधलक्षणं तपश्चरणमेव [न] अन्यत्किमपि। ग्रामेषु नगरादिषु अरण्येषु च अटव्यादिषु रक्षा वर्तते। समुच्चयालंकारः॥

**जीवस्येत्यादि**। हे मातः। जीवस्य आत्मनो मृत्युर्मरणं उपप्रयात आयातः आशंसितः संश्लाघितो भवति। न केवलमाशंसितः परं निश्चयेन प्रमोदस्य परमानन्दस्य समागमाय आगमनाय भवति। कथंभूतस्य जीवस्य। सद्दर्शनरत्नभाजः सद्दर्शनं सम्यक्त्वं तदेव रत्नं चिन्तामणिः। त्रैलोक्योद्द्योतकारकत्वात् शोभायाः कारकत्वात् च। स सद्दर्शनरत्नभाक् तस्य तथोक्तस्य। पुनः कथंभूतस्य जीवस्य। चारित्रयुक्तस्य व्रतोपपन्नस्य। भूयोऽपि कथंभूतस्य जीवस्य। समाहितस्य आर्तरौद्रध्यानद्वयरहितस्य। यथासंभवधर्मध्यानेन शुक्लध्यानेन च सहितस्य। रूपकालंकारः॥

**सा मृतिरित्यादि**। हे मातः, जन्तूनां प्राणिनां सा जगत्प्रसिद्धा मृतिर्मरणं वर्तते। सा का। यत्र यस्यां पुर आगामिनि भवे दुःखपरम्परा दुःखश्रेणिर्भवति। पुण्यभाजां पुण्यवतां पुरुषाणां अस्य प्रत्यक्षीभूतस्य देहस्य शरीरस्य मोक्षात्परित्यागात् पुनः विशेषेण महोत्सवो महत्पर्व भवति। तथा चोक्तम्—'मृत्युकल्पद्रुमं प्राप्य येनात्मार्थो न साधितः। निमग्नो जन्मजम्बाले स पश्चात्किं करिष्यति॥'

अभयरुचिः कथंभूतः। इति एतस्मात् कारणात् कृतानुकम्पनः विहितकारुण्यः। इतीति किम्। यतः यस्मात् कारणात् चिरात् दीर्घकालात् मनोरथशतैः बहुभिर्दोहदैरासादितं प्राप्तं इदं प्रत्यक्षीभूतं मानुष्यं(मनुष्यजन्म) मानवावतारं अस्याः अभयमतेः स्त्रैणो भावः स्त्रीत्वपर्यायः कदाचित् कस्मिंश्चित् प्रघट्टके विफलतां निष्फलतां मा नैषीत् मा स्म प्रापयत्॥

**यदिति। पर्याप्तमिति**। यत् यस्मात् कारणात् देवैरपि आसतां तावन्नारकति-

इत्थं स्वर्गसुखावधीरणपरैराशास्यते तद्दिनं
यत्रोत्पद्य मनुष्यजन्मनि मनो मोक्षाय धास्यामहे ॥ १४२ ॥
यस्तु लब्ध्वापि जन्मेदं न धर्माय समीहते ।
तस्यात्मकर्मभूमीषु विजृम्भन्तां भवाङ्कुराः ॥ १४३ ॥
स्थिरप्रकृतिरभयमतिरपि
तेनैव पर्याप्तमुदारबुद्धे स्नेहेन मे पूर्वकृतेन वत्स ।
तस्मात्स्वदेहे मयि च क्षताशः परं पदे तत्र मनो निधेहि ॥ १४४ ॥

---

र्यङ्मनुष्याः, किं तु देवैरपि चतुर्विधैरपि तद्दिनं जगत्प्रसिद्धं दिवसं आशास्यते अभिलष्यते । तत्किम् । यत्र यस्मिन् दिने मनुष्यजन्मनि उत्पद्य मानवभवे संभूय मोक्षाय सर्वकर्मक्षयलक्षणाय परमनिर्वाणाय मनश्चित्तं धास्यामहे धरिष्यामो वयम् । कथंभूतैः देवैः । इत्थममुना प्रकारेण स्वर्गसुखावधीरणपरैः स्वर्गलोकसौख्यावहेलनतत्परैः त्यजनतत्परैः । इत्थं कथमिति चेत् इत्याह—नाकिनां देवतानां सौख्यैः सुखैः पर्याप्तं अस्माकं परिपूर्णं जातम् । कथंभूतैः नाकिनां सौख्यैः । विरसावसानकटुकैः विरसानि नीरसानि यानि अवसाने कटुकानि अन्ते हालाहलविषसमानि विरसावसानकटुकानि तैः । अपरं कथंभूतैः सौख्यैः । उच्चावचैः उच्चानि उत्कृष्टानि क्वचित् इन्द्रादिषु अवचानि निकृष्टानि क्वचित्किल्विषान्ते उच्चावचानि तैः । अपरं कथंभूतैः सौख्यैः । मानसदुःखदावदहनव्यापारदग्धात्मभिः मनसि भवं मानसम् । शैषिकेण अण्प्रत्ययेन सिद्धं रूपमिदम् । मानसं च तद्दुःखं च मानसदुःखं तदेव दावदहनः दावानलः । सर्वेषां देवानां दाहसंतापकारकत्वात् । तस्य व्यापारः प्रज्वलनं तेन दग्धा भस्मीकृता आत्मानः स्वरूपाणि येषां सौख्यानां तानि मानसदुःखदावदहनव्यापारदग्धात्मानि तैस्तथोक्तैः । रूपकालंकारः ॥

**यस्तु लब्ध्वेत्यादि** । यः पुमान् इदं प्रत्यक्षीभूतं जन्म मनुष्यभवं लब्ध्वापि संप्राप्यापि धर्माय प्राणिदयालक्षणाय न समीहते न सम्यक् चेष्टते तस्य पुरुषस्य आत्मकर्मभूमीषु जीवकर्मणोः प्रदेशेषु भवाङ्कुराः जन्मान्तरनवोद्भिदो विजृम्भन्तां प्रसर्पन्तु प्रसरन्तु उत्पद्यन्ताम् । रूपकालंकारः ॥

**स्थिरेति** । अभयमतिरपि मदनमतिरपि प्रसादवद्भिः प्रसन्नतरैरपाङ्गपातैर्निशितविलोकितैः कृत्वा तदाननं अभयरुचिमुखकमलमपश्यत् ददर्श । कथंभूता अभयमतिः । स्थिरप्रकृतिः चारित्रप्रतिपालने निश्चलस्वभावा । अपरं कथंभूता अभयमतिः । इति अमुना प्रकारेण विदितपरमार्थतया विज्ञाततत्त्वज्ञानतया अवधीरितमरणभया निवारितमृत्युभीतिः । इतीति किम् । **तेनैवेत्यादि** । हे वत्स । वत्सेति कोमलालापे । हे उदारबुद्धे हे उन्नतमते । तेनैव पूर्वकृतेन चन्द्रमतिभवान्तरोत्पन्नेन स्नेहेन सौहार्देन मे

त्वं मोक्षलक्ष्मीक्षमदीक्षदेहः स्त्रीत्वान्न तन्मान्यमिदं वपुर्मे।
अतो मदीयाङ्गहतान्तरायो मुक्त्यङ्गनासंगमने यतस्व॥ १४५॥

इति विदितपरमार्थतयावधीरितमरणभया प्रसादवद्भिरपाङ्गपातैः सहजन्मनश्चेतसि शोचनचिन्तामिवापचिन्वती तदाननमपश्यत्।

किं च।

देहायत्ते कर्मण्ययं नरः स्त्रीजनोऽयमिति भवति।
चित्तायत्ते कर्मण्यधिका नारी तु मध्यमः पुरुषः॥ १४६॥

अचलापतिरपि स मारि(र)दत्तः प्रतीहारनिवेदितागमनवृत्तस्य मुनिकुमारकयुगलस्य विलोकनात्कुम्भोद्भवोदयात्तोयाशय इव नितरां प्रससाद

---

मम पर्याप्तं परिपूर्णता जाता। तस्मात् कारणात् स्वदेहे तव शरीरे मयि च मयि विषये क्षताशो निराशः सन् परं निश्चयेन तत्र पदे निर्वाणस्थाने मनस्त्वं चित्तं निधेहि आरोपय। जात्यलंकारः॥

**त्वमित्यादि**। उदारबुद्धे, स त्वं भवान् मोक्षलक्ष्मीक्षमदीक्षदेहः मोक्षलक्ष्म्यां मोक्षश्रियां क्षमा समर्था दीक्षा व्रतं यस्य स मोक्षलक्ष्मीक्षमदीक्षः एवंविधो देहः शरीरं यस्य स मोक्षलक्ष्मीक्षमदीक्षदेहः मे मम इदं प्रत्यक्षीभूतं वपुः शरीरं तन्मान्यं मोक्षदीक्षायां माननीयं न भवति। कस्मात्। स्त्रीत्वात्। स्त्रीपर्याये मोक्षो न भवतीत्यर्थः। अतः कारणात् मदीयाङ्गहतान्तरायः सन् मदीये अङ्गे हतः अन्तरायश्चिन्ताचक्रं येन स मदीयाङ्गहतान्तरायः मुक्त्यङ्गनासंगमने मुक्तिस्त्रीसंगमे यतस्व त्वं यत्नं कुरुष्व। रूपकालंकारः॥

अभयमतिः किं कुर्वती। सहजन्मनो निजभ्रातुश्चेतसि मनसि शोचनचिन्तां शोकार्तिं अपचिन्वतीव निराकुर्वतीव। उत्प्रेक्षालंकारः॥

किं च अस्ति कश्चिद्विशेषः। **देहायत्ते इत्यादि**। देहायत्ते कर्मणि शरीराधीनायां क्रियायां अयं नर एष पुरुषोऽयमेष स्त्रीजनः इति एवं भवति संजायते। चित्तायत्ते कर्मणि हृदयाधीनायां क्रियायां नारी तु अधिका पूज्यतरा इव भवति सीतादिवत्। पुरुषस्तु पुमान् मध्यमो निकृष्टतरो भवति दशग्रीवादिवत्। जात्यलंकारः॥

अचलापतिरपि स मारि(र)दत्तः प्रतीहारनिवेदितागमनवृत्तस्य मुनिकुमारकयुगलस्य विलोकनात्कुम्भोद्भवोदयात्तोयाशय इव नितरां प्रससाद चेतसि। स जगत्प्रसिद्धो मारदत्तो वाहुवलिदेव एनं देयात् मारदत्तः। 'क्तिच्क्तौ च संज्ञायामाशिषि' इति वचनात् क्तलक्षणक्तप्रत्ययः। 'दोदद्घोः' इति वचनात् दाधातोर्दद्आदेशः। स मारदत्तोऽपि अचलापतिः राजापि मुनिकुमारकयुगलस्य विलोकनात् यशस्तिलकमदनमतिकुमारकयु-

चेतसि, विश्वद्युतिदर्शनान्नभ इव मुमोच कलुषतां लोचनयोः, जिनैतिह्यावगमान्महाभाग इव करुणरसमवाप करणेषु, प्रणिधानविशेषान्मुमुक्षुरिव तमस्तिरश्चकारान्तरात्मदिशि । पुनः कोपप्रसादयोरपरनरपाललक्ष्मीलाघवेतरव्यवहारपरिच्छेदविडम्बिततुलादण्डविभ्रमेण भ्रूलतोल्लासनसं-

---

गमस्य दर्शनात् चेतसि मनसि नितरामतिशयेन प्रससाद प्रसन्नो बभूव । कस्मात् क इव । कुम्भोद्भवोदयात् अगस्त्योदयात् तोयाशय इव जलाशय इव । कथंभूतस्य तस्य मुनिकुमारकयुगलस्य । प्रतीहारनिवेदितागमनवृत्तस्य प्रतीहारेण द्वारपालेन निवेदितं विज्ञापितं आगमनस्य वृत्तं वार्ता यस्य तत्तथोक्तं तस्य । विश्वद्युतिदर्शनान्नभ इव मुमोच कलुषतां लोचनयोः । सः अचलापतिः लोचनयोर्नेत्रयोः कलुषतां कालुष्यं मालिन्यं मुमोच तत्याज । कस्मात्किमिव । विश्वद्युतिदर्शनात् श्रीसूर्योदयावलोकनात् नभ इव आकाशमिव । यथा सूर्यदर्शनात् नभो मालिन्यं मुञ्चति । जिनैतिह्यावगमान्महाभाग इव करुणरसमवाप करणेषु । अचलापतिः करणेषु इन्द्रियेषु करुणरसं करुणामृतं अवाप प्राप । कस्मात्क इव । जिनैतिह्यावगमात् महाभाग इव । यथा महाभागः पुण्यवान् पुरुषो जिनागमपरिज्ञानात् करुणारसमवाप्नोति । प्रणिधानविशेषान्मुमुक्षुरिव तमस्तिरश्चकारान्तरात्मदिशि । अचलापतिः अन्तरात्मदिशि मनसि तमोऽज्ञानं तिरश्चकार दूरीचकार । कस्मात्क इव । प्रणिधानविशेषान्मुमुक्षुः मोक्तुमिच्छुर्मुनिः प्रणिधानविशेषात् ध्यानभेदात् तमस्तिरस्करोति । **पुनरिति** । पुनः प्रसन्नीभवनानन्तरं सः अचलापतिस्[१]तन्मुनिकुमारकयुगलं उत्तरीयासने उपरितनवस्त्रोपरि पुरस्तादग्रतः उपावीविशत् उपवेशयामास । कथंभूते उत्तरीयासने । प्रदेशिनीनिदेशादिष्टनिकटलालाटिकपरिकल्पने प्रदेशिन्यास्तर्जन्यङ्गुल्या निदेशेन आदिष्ट आज्ञापितो योऽसौ निकटलालाटिकः समीपवर्तिसेवकस्तेन परिकल्पनं रचना यस्य उत्तरीयासनस्य तत्तथोक्तं तस्मिन् । किं कृत्वा । पूर्वं भ्रूलतोल्लासनसंभ्रमेण भ्रूरेव लता वल्ली । नामोन्नामकरणशीलत्वात् । तस्या उल्लासनमुत्क्षेपस्तस्य संभ्रमेण आदरेण सभाभ्यन्तराध्वनि सभामध्यमार्गे जनसंबाधं सेवकसंघट्टनं अपवार्य उत्सार्य । कथंभूतेन भ्रूलतोल्लासनसंभ्रमेण । कोपप्रसादयोः कोपे प्रसादे च अपरनरपालानां लक्ष्म्याः लाघवेतरो [लघुत्वा]लघुत्वलक्षणो योऽसौ व्यवहारस्तौलनं तस्य परिच्छेदे परिज्ञाने विडम्बितस्तिरस्कृतः तुलादण्डस्य यौतवदण्डस्य विभ्रमः शोभा येन तथोक्तस्तेन भ्रूलतोल्लासनसंभ्रमेण । कोपे सति अपरनरपालानां लक्ष्मीः लाघवं प्राप्नोति, प्रसादेनातिगुरुत्वं गच्छतीति । यथासंख्यालंकारः ॥

---

१. 'तन्मुनिकुमारकयुगलविलोकनोत्तरं स्वगतमेवं चिन्तयति स्म' इत्येवं संबन्धकल्पना योग्या. 'उपावीविशत्' इत्यनेन संबन्धे मध्ये स्वगतचिन्तनक्रियावाचकपदस्यापि स्वगतत्वे अध्याहारक्लेशः स्यात्.

क्रमेणापवार्य सभाभ्यन्तराध्वनि जनसंबाधम्, अतीव च मनसि विस्मयमानः प्रहर्षोत्कर्षवर्षाभिस्यन्दविन्दुमञ्जरीजटिलपक्ष्मपल्लवः 'कथं नामैतद्दर्शनादाचान्तामृतमिव नृशंसाशयबहलकालुष्यमपि मुहुः प्रशान्तं मे चेतः, चक्षुः पुनः कुलिशकीलितमिव कथं न विषयान्तरमवगाहते, चिरप्रवसितप्रणयिजनावलोकनादिव कथमयमात्मा परमन्तर्मोदते, चित्तमपि चेदं चिरायाचरितपरिचयमिव कथमतीवानन्दथुमन्थरम्, किं नु खलु तदेतन्न स्यान्मम भागिनेययमलम्, आचकर्णं चापरेद्युरेव रेवतकनामप्रसिद्धात्कुलवृद्धादेतस्य बालकाल एवाश्चर्यायं तपश्चर्यापर्यायम्, भवन्ति हीमानीन्द्रियाण्यदृष्टपूर्वेष्वपि प्रियजनेषु प्रायेण प्रातस्तपनतेजांसीव रागोल्बणवयांसि।

---

कथंभूतः सः अचलापतिः। अतीव च अतिशयेन मनसि चित्ते विस्मयमानः आश्चर्यं कुर्वाणः। पुनश्च किंविशिष्टो राजा। प्रहर्षोत्कर्षवर्षाभिस्यन्दविन्दुमञ्जरीजटिलपक्ष्मपल्लवः प्रहर्षेण आनन्देन प्रहर्षस्य आनन्दस्य वा योऽसावुत्कर्षवर्षः अतिशयवदश्रुपातस्तस्य अभिस्यन्दविन्दूनां स्रवणविप्रुषां मञ्जरीभिर्वल्लरीभिः जटिलाः कर्बुराः पक्ष्मपल्लवा लोचनरोमाग्राणि यस्य राज्ञः स तथोक्तः। राजा स्वगतमेवं चिन्तयति। एवं कथमिति चेत्— एतद्दर्शनात् एतयोः विलोकनात् कथं केन प्रकारेण। नामेति संभावनायाम्। मे मम चेतो मनो मुहुर्वारंवारं प्रशान्तं अक्रूरतां प्राप्तम्। कथंभूतं चेतः। नृशंसाशयवहलकालुष्यमपि नृशंसो हिंसको योऽसावाशयः परिणामस्तेन वहलं प्रचुरतरं कालुष्यं खलता कलुषता यस्मिन् चेतसि तत्तथोक्तम्। कीदृशं प्रशान्तं जातं मे चेतः। आचान्तामृतमिव आचान्तम् आस्वादितं अमृतं पीयूषं येन तथोक्तम्। इव यथा मम चक्षुर्लोचनयुगलं पुनः कथं केन प्रकारेण विषयान्तरं अपरं प्रदेशं नावगाहते न प्रविशति। किमिव। कुलिशकीलितमिव वज्रेण विद्धमिव। अयं आत्मा अयं जीवः कथं केन प्रकारेण परमुत्कृषर्णे अन्तर्मनसि मोदते हर्षं करोति आनन्दं भजते। कस्मादिव। चिरप्रवसितप्रणयिजनावलोकनादिव चिरं दीर्घकालं प्रवसितः परदेशं गतः प्रणयिजनः स्नेहवान्मनुष्यस्तस्य अवलोकनात् निरीक्षणादिव। चित्तमपि च हृदयं इदं प्रत्यक्षीभूतं कथं केन प्रकारेण अतीवातिशयेन आनन्दथुना आनन्देन मन्थरं मन्दगामि वर्तते। किमिव। चिरायाचरितपरिचयमिव चिराय चिरंतनाय। दीर्घकालमिति यावत्। आचरितः कृतः परिचयः संगतिर्येन तत्तथोक्तम्। नु इति वितर्के। किमथवा। खलु निश्चयेन। तज्जगत्प्रसिद्धं एतत् प्रत्यक्षीभूतं मम मे भागिनेययमलं स्वस्रीययुगलं न स्यात् न भवेत्। अपरेद्युरेव अपरस्मिन्नहनि एव। किंनामप्रसिद्धात्। रेवतक इति नाम अभिधेयं प्रसिद्धं प्रकटं यस्य स रेवतकनामप्रसिद्धस्तस्मात् कुलवृद्धात् अस्मत्कुले वर्षीयसः एतस्य मम

यतः ।

आनन्दबाष्पजलपूरितनेत्रपात्रैः
प्रत्यङ्गजातपुलकप्रसवार्पितार्घैः ।
चित्तैः प्रमोदमधुपर्ककृतातिथेयै-
राख्यायते प्रियजनो ननु पूर्वमेव ॥ १४७ ॥

तदलमत्र सौ(शौ)द्धोदनेरिव बाह्यग्राह्यविकलेन विकल्पजालेन । सफलयामि तावदेतदालापनदोहदादेव हृदयालवालपरिसरे विहितावरोहमौत्सुक्यानोकहम्[१] ।'

---

भागिनेयस्य बालकाल एव शिशुकाल एव तपश्चर्यापर्यायं तपश्चरणानुक्रमं आचकर्णं आकर्णितवानहम् । 'श्री(श्री)द्रुशु(श्रु)कसिकारिकान्तेभ्यश्चण् कर्तरि' इति सूत्रेण चणि प्रत्ययेऽद्यतन्यां अपि च सति द्विर्वचने जाते 'आचकर्णम्' इति जायते । कथंभूतं तपश्चर्यापर्यायम् । आश्चर्यायम् आश्चर्यस्य विस्मयस्य आयः उत्पादो यस्य तपश्चर्यापर्यायस्य स आश्चर्यायस्तं आश्चर्यायम् । हि यस्मात् इमानि भूतानि इन्द्रियाणि चक्षुरादीनि अदृष्टपूर्वेष्वपि अविलोकितेष्वपि प्रियजनेषु बन्धुवर्गेषु प्रायेण बाहुल्येन रागोल्बणवयांसि रागेण उल्बणवयांसि उत्कटतारुण्यानि भवन्ति संजायन्ते । कानीव । प्रातस्तपनतेजांसीव प्रातस्तपन उद्यद्भास्करस्तस्य तेजांसीव । यथा उदयप्राप्तसूर्यस्य तेजांसि उद्द्योतानि रागोल्बणानि भवन्ति रक्तसंयुक्तानि भवन्ति ॥

यतः यस्मात् कारणात् । **आनन्दबाष्पेत्यादि** । ननु अहो प्रियजनः प्रियमानुषः कर्मतापन्नः चित्तैर्मनोभिः कर्तृभूतैः पूर्वमेव संभाषणमन्तरेणापि आख्यायते संसूचयति । कथंभूतैश्चित्तैः । आनन्दबाष्पजलपूरितनेत्रपात्रैः आनन्दसंबन्धि यद्बाष्पजलं अश्रूदकं तेन पूरितं भरितं नेत्रपात्रं लोचनामत्रं यैश्चित्तैस्तानि तथोक्तानि तैः । अपरं कथंभूतैश्चित्तैः । प्रत्यङ्गजातपुलकप्रसवार्पितार्घैः अङ्गमङ्गं प्रति प्रत्यङ्गम् । सर्वाङ्गेष्वित्यर्थः । जाता उत्पन्ना ये पुलका रोमहर्षणानि त एव प्रसवाः पुष्पाणि मनोविकासहेतुत्वात् तैरर्पितो दत्तो अर्घः पूजा यैश्चित्तैस्तानि तैः । भूयोऽपि कथंभूतैश्चित्तैः । प्रमोदमधुपर्ककृतातिथेयैः प्रमोदः आह्लादः स एव मधुपर्को दधिघृतमधुपादार्पणं तेन कृतं आतिथेयं प्राघुणिकक्रिया यैश्चित्तैस्तानि तथोक्तानि तैः । रूपकालंकारः ॥

तत्तस्मात् कारणात् अत्र अस्मिन्नर्थे विकल्पजालेन संकल्पसमूहेन अलं पूर्णम् । कथंभूतेन विकल्पजालेन । बाह्यग्राह्यविकलेन बाह्यं वस्तु ग्राह्यं ग्रहणीयं ज्ञापनीयं तेन विकलं शून्यं तेन । कस्येव । शौद्धोदनेरिव शुद्धोदनेरिव शुद्धोदनस्यापत्यं पुमान् शौद्धो-

---

१. अत्र 'इत्येवं चिन्तयति स्म' इति टीकानुकूलः कश्चित्पाठो गलितो भवेत्.

अत्रावसरे स्वामिनः प्रसन्नरसं मानसमवसायावसरविलासनामकेन वैतालिकेनेदं वृत्तद्वयमागीयते स्म—

'नासन्ना रिपवो न चापि भवतः कश्चिन्निदेशावशः
श्रीरेषा तव देव या प्रणयिनी तस्यै न कोऽपीर्ष्यति ।
गाढं मुष्टिनिपीडनश्रमभरप्रोद्वान्तधाराजलां
मुञ्चत्वाहवकेलिदोःसहचरीं तत्खड्गयष्टिं भवान् ॥ १४८ ॥
दयार्द्रचित्तैर्मुनिभिः समागमान्निसर्गहिंस्रोऽपि जनः प्रशाम्यति ।
आहार्यहिंसामतयः शमोदयं भजन्ति यद्देव तदद्भुतं कुतः ॥ १४९ ॥'

---

दनिस्तस्य शौद्धोदनेर्बौद्धस्य विकल्पजालं ज्ञानस्वरूपं बाह्यग्राह्यविकलं भवति । तथा मम विकल्पेन अलम् । सफलयामि फलसंयुक्तं करोमीति यावत्, तावत् अनुक्रमेण एतदालापनदोहदादेव एतयोरालापनस्य आभाषणस्य दोहदात् मनोरथात् औत्सुक्यानोकहं उत्कण्ठतावृक्षम् । कथंभूतमौत्सुक्यानोकहम् । हृदयालवालपरिसरे हृदयमेव आलवालं जलसेचनस्थानकं तस्य परिसर उपान्तभागः तस्मिन् विहितावरोहं कृताङ्कुरम् ॥

अत्रावसरे नृपतेः स्वगतचित्तेन प्रस्तावे स्वामिनो नरेन्द्रस्य प्रसन्नरसं निर्मलरसं निर्मलरागं मानसं चित्तं अवसाय ज्ञात्वा अवसरविलासनामकेन वैतालिकेन भट्टेन इदं वक्ष्यमाणलक्षणोपलक्षितं वृत्तद्वयं श्लोकद्वयं आगीयते स्मप ठितमिति । किं तद्वृत्तद्वयमित्याह—**नासन्ना रिपव इत्यादि** । हे देव हे राजाधिराज, भवतस्तव रिपवः शत्रवः आसन्ना निकटतरा न वर्तन्ते । न चापि नैव कश्चित्पुमान् भवतस्तव निदेशावशः आदेशपराङ्मुखो वर्तते । एषा प्रत्यक्षीभूता या तव श्रीः लक्ष्मीः प्रणयिनी स्नेहवती वर्तते, तस्यै श्रियै कोऽपि पुमान् न ईर्ष्यति न कुप्यति । 'यस्मै कुप्यति' इत्यनेन चतुर्थीविधानम् । तत्तस्मात् कारणात् भवान् त्वं खड्गयष्टिं मण्डलाग्रं मुञ्चतु परित्यजतु । कथंभूतां खड्गयष्टिम् । गाढं मुष्टिनिपीडनश्रमभरप्रोद्वान्तधाराजलाम् गाढं दृढं यथा भवत्येवं यन्मुष्टिनिपीडनं मुष्ट्या दृढं ग्रहणं तस्य श्रमभरेण आयासभारेण प्रोद्वान्तं ऊर्ध्वमुच्छलितं धाराजलं यस्याः सा तथोक्ता ताम्। पुनः कथंभूतां खड्गयष्टिम्। आहवकेलिदोःसहचरीम् आहवकेलौ संग्रामक्रीडायां दोष्णो बाहुदण्डस्य सहचरी सखीसदृशी ताम् । रूपकालंकारः ॥

**दयार्द्रचित्तैरित्यादि** । हे देव हे राजाधिराज, दयार्द्रचित्तैः करुणारससरसमानसैः मुनिभिर्यतिवरैः समागमात् आगमनात् निसर्गहिंस्रोऽपि स्वभावेन शरारुरपि जनः पुमान् प्रशाम्यत्युपशमं भजते । आहार्यहिंसामतयः संसर्गेण हिंसासंयुक्तमनसः पुमांसो यत् शमोदयं उपशमप्रादुर्भावं भजन्ति सेवन्ते, तत् अद्भुतमाश्चर्यम् । कुतः । न कुतोऽपीति । आक्षेपालंकारः ॥

पुनरप्यसौ वैतालिकश्चिरमशिखामणिभूषणमपि कचमरीचिमेचकितमस्तकम्, अनवतंसमपि लोचनरुचिकुवलयितकर्णम्, अनलंकारमपि कपोलकान्तिकुण्डलितमुखमण्डलम्, अनावरणमपि वपुःप्रभापटलदुकूलोत्तरीयम्, अरण्यप्रेम्णा वदनव्याजेन कमलसर इव भुजच्छद्मना लतारामभिवोरुमिषेण कदलीकाण्डकाननमिव चलनलक्षेणाशोकवनमिव च सहानयमानम्, इन्दुमृगेक्षणद्युतिसंपादितमिव कुन्तलेषु, सुरतरुफलकप्रसाधितमिवालिकयोः, कामकोदण्डकोटिघटितमिव भ्रूषु, रत्नकरण्डकोत्कीर्णमिव नेत्रेषु, सरशरपुङ्खोल्लिखित-

---

पुनरपि वृत्तद्वयाध्ययनानन्तरं असौ प्रत्यक्षीभूतो वैतालिकः अवसरविलासनामको भट्टश्चिरं दीर्घकालं तन्मुनिकुमारकयुगलं विलोक्य दृष्ट्वा इदं वक्ष्यमाणलक्षणोपलक्षितं वृत्त श्लोकमेकं अपाठीत् पठितवानिति क्रियाकारकसंवन्धः । कथंभूतं मुनिकुमारकयुगलम् । अशिखामणिभूषणमपि शिरोरत्नाभरणरहितमपि कचमरीचिमेचकितमस्तकं कचानां कुन्तलानां मरीचिभिः किरणैर्मेचकितो शिरोरत्नाभरणसहितो मस्तको यस्य मुनिकुमारकयुगलस्य तत्तथोक्तम् । अनवतंसमपि कर्णपूररहितमपि लोचनरुचिकुवलयितकर्णम् लोचनानां रुचिभिः प्रभाभिः कुवलयिताः कर्णाः शब्दग्रहा यस्य मुनिकुमारकयुगलस्य तत्तथोक्तम् । अनलंकारमपि कर्णवेष्टनरहितमपि कपोलकान्तिकुण्डलितमुखमण्डलम् कपोलानां गण्डस्थलानां कान्तिभी रुचिभिः कुण्डलिते कनककुण्डलसंयुक्ते कृते मुखमण्डले मुखे यस्य तत्तथोक्तम् । अनावरणमपि संधानवस्त्ररहितमपि वपुःप्रभापटलदुकूलोत्तरीयम् वपुषः प्रभापटलौ रुचिसमूहौ एव दुकूलोत्तरीये पट्टदुकूलसंवन्ध्युपरितनवस्त्रे यस्य तत्तथोक्तम् । मुनिकुमारकयुगलं किं कुर्वाणम् । अरण्यप्रेम्णा वनस्नेहेन वदनव्याजेन मुखमिषेण कमलसरः कमलवनं सह सार्धं आनयमानमिव आनयदिव । भुजच्छद्मना वाहुमिषेण लतारामं वल्लीवनं सहानयनमानमिव । ऊरुमिषेण सक्थ्नोऽपदेशेन कदलीकाण्डकाननं अंशुमत्फलस्तम्भवनं सहानयमानमिव । चलनलक्षेण पादानां मिषेण अशोकवनं कंकेलिकाननं सहानयमानमिव । उत्प्रेक्षालंकारः । कथंभूतं मुनिकुमारकयुगलम् । कुन्तलेषु केशेषु इन्दुमृगेक्षणद्युतिसंपादितमिव इन्दोश्चन्द्रमसो योऽसौ मृगो हरिणस्तस्य ईक्षणे लोचने तयोर्द्युत्या दीप्त्या कान्त्या संपादितमिव रचितमिव । पुनः कथंभूतं मुनिकुमारकयुगलम् । अलिकयोर्ललाटयोर्विषये सुरतरुफलकप्रसाधितमिव कल्पतरुपट्टकनिर्मापितमिव । पुनः कथंभूतं मुनिकुमारकयुगलम् । भ्रूषु चक्ररोमिकासु कामकोदण्डकोटिघटितमिव कामस्य कन्दर्पस्य यत् कोदण्डं धनुस्तस्य कोटिरग्रं तया घटितं निष्पादितमिव । पुनः कथंभूतं मुनिकुमारकयुगलम् । नेत्रेषु लोचनेषु रत्नकरण्डकोत्कीर्णमिव रत्नानां करण्डको रत्नकरण्डकः रक्तशुक्लकृष्णसमुदायस्तेन उत्कीर्णमिव घटितमिव । पुनः कथंभूतं मुनिकुमारकयुगलम् । पक्ष्मसु नेत्राणां रोमसु सरशरपुङ्खोल्लिखितमिव सरस्य कन्दर्पस्य ये शरा वाणास्तेषां पुङ्खैः प्रान्तपत्रैः उल्लिखितमिव निर्मितमिव । पुनः कथं-

मिव पक्ष्मसु, रतिक्रीडाकीरास्यलावण्यविहितमिव नासयोः, लक्ष्मीविभ्रमादर्शविनिर्मितमिव कपोलेषु, कीर्तिसरस्वतीविलासदोलाकृतमिव श्रोत्रेषु, संध्यारुणामृतकरखण्डनिर्वर्तितमिवाधरयोस्तन्मुनिकुमारकयुगलं विलोक्येदं वृत्तमपाठीत्—

'बालद्रुमः स्वसृलतोद्गतिकान्तमूर्ति-
र्जातः कथं पथि करालकृशानुवृत्तेः ।
आः पाप पुष्पशर संप्रति कस्तवान्यः
केलीकृते यदनयोस्त्वमुपेक्षितोऽसि ॥ १५० ॥'

एतच्चासावुपनिशम्य प्रवेष्टहाटककटकप्रदानपुरःसरमेतदाननाम्बुरुहमवलोक्य पुनश्च यः समभ्यर्णोत्कीर्णतयावतीर्णस्याकर्णविदीर्णवदनस्य वे-

---

भूतं मुनिकुमारकयुगलम् । नासयोर्नासिकयोर्विषये रतिक्रीडाकीरास्यलावण्यविहितमिव रतेः कामभार्यायाः क्रीडाकीरा लीलाशुकास्तेषामास्यं मुखं तस्य लावण्येन कान्त्या विहितमिव रचितमिव । पुनः कथंभूतं मुनिकुमारकयुगलम् । कपोलेषु गण्डस्थलेषु लक्ष्मीविभ्रमादर्शविनिर्मितमिव लक्ष्म्याः महापुण्डरीकवासिन्याः विभ्रमादर्शः क्रीडादर्पणस्तेन विनिर्मितमिव सृष्टमिव । पुनः कथंभूतं मुनिकुमारकयुगलम् । श्रोत्रेषु कर्णेषु कीर्तिसरस्वतीविलासदोलाकृतमिव कीर्तिश्च सरस्वती च जैनभारती तयोर्विलासदोलाः क्रीडाप्रेङ्खास्ताभिः कृतमिव । पुनः कथंभूतं मुनिकुमारकयुगलम् । अधरयोर्दन्तच्छदयोर्विषये संध्यारुणामृतकरखण्डनिर्वर्तितमिव संध्यायाः संबन्धी योऽसावरुणामृतकरः अव्यक्तरागश्चन्द्रस्तस्य खण्डाभ्यां नेमाभ्यां निर्वर्तितमिव अनुष्ठितमिव ॥

अवसरविलासनामको भट्टः किमपाठीदित्याह—**बालद्रुम इत्यादि** । बालद्रुमः अभयरुचिनामा शिशुवृक्षः कथं केन प्रकारेण करालकृशानुवृत्तेः रौद्रवैश्वानरानुवर्तनस्य पथि मार्गे जातः समुत्पन्नः । कथंभूतो बालद्रुमः । स्वसृलतोद्गतिकान्तमूर्तिः भगिनीलताप्रादुर्भावेण मनोहरमूर्तिः । आः इति कोपे पीडायां वा । 'आस्तु स्यात् कोपपीडयोः' इति वचनात् । रे पापमूर्ते रे पुष्पशर रे कन्दर्प संप्रति इदानीं वर्तमानकाले तव भवतः केलीकृते क्रीडानिमित्तं अन्यः पुमान् को वर्तते । यत् यस्मात् कारणात् अनयोर्मुनिकुमारयोर्विषये त्वं भवान् उपेक्षितोऽसि अनादरवान् असि वर्तसे ॥

**एतच्चेति** । एतच्च उक्तलक्षणं वृत्तम् । चकारात् पूर्वोक्तलक्षणं द्वयं च । असौ राजा उपनिशम्य श्रुत्वा प्रवेष्टहाटककटकप्रदानपुरःसरं प्रवेष्टयोः भुजयोर्हाटककटकयोः कनककंकणयोः प्रदानपुरःसरं विश्राणनपूर्वं यथा भवत्येवमपि । एतदाननाम्बुरुहं अवसरविलासनामभट्टमुखकमलं अवलोक्य दृष्ट्वा पुनश्च पुनरपि तं पूर्वोक्तं करवालं खड्गं रुद्राणीपादपी-

तालचक्रस्य प्रतिक्रान्तविकटदंष्ट्राचक्रवालः स्वधाराजलनिमग्नसपत्नकीकसकराल इव, प्रतिबिम्बिताधरावलिहजिह्वाप्रतानः पराक्रमाकृष्टद्विष्टश्रीविरहविनोदपरिकल्पितकमलकानन इव, प्रतिमासमागताङ्गारनिभनेत्रनिकरः प्रदर्शितशत्रुक्षत्रक्षयकालोल्काजालावतर इव, पुरुदंसोदर्शनप्रकाशकेशप्रतिशरीरदुर्दर्शिककलः प्रचलिताखिलरिपुलोकग्रसनसमर्थजाठरानल इव, प्रतियातनागताङ्गसङ्गताभोगतनुः समाक्षिप्तविपक्षक्षयदक्षराक्षसक्षेत्र इव,

---

ठोपकण्ठे कराद्रुत्सृज्य हस्ताद्विमुच्य मुनिकुमारकयुगलं उपावीविशदिति संबन्धः । कं करवालम् । यः करवालः समभ्यर्णोत्कीर्णतया निकटतरपाषाणादिभिर्घटिततया अवतीर्णस्य प्रतिविम्बितस्य आकर्णविदीर्णवदनस्य आकर्णं कर्णपर्यन्तं विदीर्णानि स्फुरितानि वदनानि मुखानि यस्य तदाकर्णविदीर्णवदनं तस्य आकर्णविदीर्णवदनस्य एवंभूतस्य वेतालचक्रस्य भूताविष्टमृतकशरीरसमूहस्य प्रतिक्रान्तविकटदंष्ट्राचक्रवालः प्रतिक्रान्तं प्रतिविम्बितं विकटानां वक्रतराणां दंष्ट्राणां दाढानां चक्रवालं मण्डलं यस्मिन् करवाले स प्रतिक्रान्तविकटदंष्ट्राचक्रवालः । अपरं कथंभूतः करवालः । उत्प्रेक्ष्यते—स्वधाराजलनिमग्नसपत्नकीकसकराल इव स्वस्य आत्मनो यद्धाराजलं नेमिस्थितोदकं तत्र निमग्नाः त्रुडिताः पातालं गता ये सपत्नाः शत्रवस्तेषां कीकसानि हड्डानि तैः करालः रौद्रमूर्तिरिव । पुनरपि कथंभूतः करवालः । प्रतिविम्बिताधरावलिहजिह्वाप्रतानः प्रतिविम्बितः प्रतिफलितः प्रतिच्छन्दमागतः अधरावलिहानां जिह्वानां प्रतानः समूहो यस्मिन् करवाले स तथोक्तः । पुनरपि कथंभूतः करवालः । उत्प्रेक्ष्यते—पराक्रमाकृष्टद्विष्टश्रीविरहविनोदपरिकल्पितकमलकानन इव पराक्रमेण वलात्कारेण आकृष्टा केशेषु धृत्वा समानीता या द्विष्टश्रीः शत्रुलक्ष्मीस्तस्याः विरहविनोदाय विप्रलम्भस्फेटनाय परिकल्पितं रचितं कमलकाननं कमलवनं यस्मिन् करवाले स तथोक्तः । पुनरपि कथंभूतः करवालः । प्रतिमासमागताङ्गारनिभनेत्रनिकरः प्रतिमा प्रतिच्छाया प्रतिविम्बं समागता ये अङ्गारनिभनेत्रा अङ्गारसमानलोचना राक्षसविशेषास्तेषां निकरः समूहो यस्मिन् करवाले स तथोक्तः । अपरं कथंभूतः करवालः । उत्प्रेक्ष्यते—प्रदर्शितशत्रुक्षत्रक्षयकालोल्काजालावतर इव प्रदर्शितः प्रकटितः शत्रुक्षत्राणां सपत्ननृपाणां क्षयकालार्थं मृत्युसूचनार्थं उल्काजालावतरस्तारापतनसमूहस्यावतारो यस्मिन् करवाले स तथोक्तः । भूयोऽपि कथंभूतः करवालः । पुरुदंसोदर्शनप्रकाशकेशप्रतिशरीरदुर्दर्शिककलः पुरुदंससां मार्जाराणां यानि दर्शनानि लोचनानि तद्वत्प्रकाशो द्युतिर्येषां ते पुरुदंसोदर्शनप्रकाशा अग्निज्वालासदृशाः केशाः कुन्तलाः येषां राक्षसानां तेषां प्रतिशरीरैः प्रतिविम्बैर्दुर्दर्शिका दुरवलोका कला मूर्तिर्यस्य करवालस्य स तथोक्तः । पुनः उत्प्रेक्ष्यते—प्रचलिताखिलरिपु-

---

१. 'क इव' इत्युचितः. २. 'धारैव जलम्' इति व्याख्यानं तु रमणीयम्.

अपि च यः स्वस्य स्वामिनो नृपयज्ञावसरेषु निजभुजप्रतापार्जनजनितसाचिव्य इव, सर्वभुवनप्रचारकुतूहलितकीर्तिकुलदेवतासहचरपराक्रमप्रसूतिप्रथमप्रजापतिरिव, दुर्वारवैरिवक्षःस्थलोद्दलनगलद्धारारुधिरोपहारदुर्ललितवीरलक्ष्मीसमाकर्षणमन्त्र इव, सकलजगद्रक्षणक्षमशौर्यसिद्धौषधसाध्यवसुधावशीकरणोपदेश इव, समुत्सर्पद्दर्पोद्दामद्विषधरव्याजृम्भस्तम्भावि-

लोकग्रसनसमर्थजाठरानल इव प्रचलितः उद्दीपितः संधुक्षितो जाज्वलितः प्रज्वालितो अखिलानां समग्राणां रिपुलोकानां शत्रुसमूहानां ग्रसने भक्षणे भस्मीकरणे समर्थः प्रचण्डतरः जाठरानल उदराग्निर्यस्य करवालस्य स तथा। पुनः कथंभूतः करवालः। प्रतियातनागताङ्गसङ्गताभोगतनुः प्रतियातनां प्रतिच्छायां प्रतिबिम्बं आगतः प्रतिफलितः अङ्गस्य कृष्णशरीरस्य अ(स)ङ्गतः संबन्धी आभोगो विस्तारस्तनौ शरीरे यस्य करवालस्य स तथोक्तः। भूयोऽपि कथंभूतः। उत्प्रेक्ष्यते—समाक्षिप्तविपक्षक्षयदक्षराक्षसक्षेत्र इव समाक्षिप्तं संग्रामार्थं गृहीतं विपक्षाणां शत्रूणां क्षयाय मारणाय दक्षं समर्थं राक्षसानां क्षेत्रं भूमिर्येन करवालेन स तथोक्तः। अपि च अस्ति कश्चिद्विशेषः। यः करवालः स्वस्य आत्मनः स्वामिनो नरेन्द्रस्य नृपयज्ञावसरेषु संग्रामस्थानेषु निजभुजप्रतापार्जनजनितसाचिव्य इव निजभुजयोः स्वकीयदोर्दण्डयोः प्रतापोपार्जने। 'यस्य वार्तापि श्रुता भयाय भवति स प्रतापः'। जनितमुत्पादितं साचिव्यं साहाय्यं येन स तथोक्तः। कथंभूतः करवालः। सर्वभुवनप्रचारकुतूहलितकीर्तिकुलदेवतासहचरपराक्रमप्रसूतिप्रथमप्रजापतिरिव सर्वेषां भुवनानां प्रचारे पर्यटने कुतूहलिता दोहदवती विनोदवती या कीर्तिः पुण्यगुणकीर्तनं सैव कुलदेवता अन्वयस्य अधिष्ठायिका तस्याः सहचरः सखा स चासौ पराक्रमः पौरुषं तस्य प्रसूतौ उत्पादने प्रथमप्रजापतिरिव ब्रह्मसदृशः। अपरं कथंभूतः करवालः। दुर्वारवैरिवक्षःस्थलोद्दलनगलद्धारारुधिरोपहारदुर्ललितवीरलक्ष्मीसमाकर्षणमन्त्र इव दुःखेन वारयितुमशक्याः[2] दुर्वारा ये वैरिणः शत्रवस्तेषां वक्षःस्थलस्य उद्दलनं विदारणं तस्मिन् सति गलत् प्रवहत् यद्धारारुधिरं प्रवाहलोहितं तस्य उपहारे पूजायां दुर्ललिता आसक्ता या वीरलक्ष्मीः योधलक्ष्मीस्तस्याः समाकर्षणस्य हठादानीतस्य मन्त्र इव बीजाक्षरन्याससदृशः। अपरं कथंभूतः करवालः। सकलजगद्रक्षणक्षमशौर्यसिद्धौषधसाध्यवसुधावशीकरणोपदेश इव सकलस्य जगतः त्रिभुवनस्य रक्षणे प्रतिपालने क्षमं समर्थं यच्छौर्यं सौभव्यं तदेव सिद्धौषधं रसायनं जगन्मरणनिवारकत्वात् तेन साध्या वशीकर्तव्या या वसुधा भूमिस्तस्याः वशीकरणे स्वायत्तताविधाने उपदेश इव मन्त्रसदृशः। अपरं कथंभूतः करवालः। समुत्सर्पद्दर्पोद्दामद्विषद्विषधरव्याजृम्भस्तम्भाविर्भवन्महासाहस इव समुत्सर्पन् प्रसरन् दर्पं औत्कच्यं येषां ते समुत्सर्पद्दर्पास्ते च ते उद्दामा बलवत्तरा

१. 'क इव' इत्युचितः पाठः. २. 'वारयितुं शक्याः' इति पाठो भवेत्.

भवन्महासाहस इव, प्रतिकूलावनिपालविलासिनीविभ्रमभ्रमरोच्चाटनधूपधूमाडम्बर इव, समाह्वयरसभरितारातिमतिमधुकरीमोहनमहौषधिप्रारम्भ इव, संभूयोत्साहदुःसहद्विष्टद्विपघटाविघटनविद्वेषभेषजागम इव, कालेयकलङ्कपङ्किलाचारपरस्परासुताचरितचरमाभिचार इव, तमनेकमहासमानीकसंतोषितरणदेवताविहितबलिविधानं वीरश्रीविभ्रमदर्पणनामानमपहसितकृतान्तरसनालीलं करवालं प्रतापद्विपालानस्थानाल्लक्ष्मीलताश्रयशिखरिणः

---

द्विषन्तः शत्रवस्त एव विषधराः सर्पाः [1]कुटिलसविषमुखत्वद्विजिह्वत्वादिधर्मधारित्वात् तेषां व्याजृम्भः प्रसरस्तस्य स्तम्भे कीलने आविर्भवन् प्रकटीभवन् महासाहस इव कीलनमन्त्रसदृशः । अपरं कथंभूतः करवालः । प्रतिकूलावनिपालविलासिनीविभ्रमभ्रमरोच्चाटनधूपधूमाडम्बर इव प्रतिकूलाः शत्रुभूता ये अवनिपालाः पृथिवीपतयस्तेषां विलासिन्यः कमनीयकामिन्यः तासां विभ्रमाः भ्रूनर्तनानि त एव भ्रमरा मधुकरा अनवस्थितस्वरूपत्वात् तेषामुच्चाटने विघटने उड्डापने धूपधूमाडम्बर इव धूपधूमस्याटोप इव । अपरं कथंभूतः करवालः । समाह्वयरसभरितारातिमतिमधुकरीमोहनमहौषधीप्रारम्भ इव समाह्वयः संग्रामस्तस्य रसोऽनुरागस्तेन भरिताः परिपूर्णा ये अरातयः शत्रवस्तेषां मतयो बुद्धयस्ता एव मधुकर्यो भ्रमर्यश्चपलस्वरूपत्वात् तासां मोहने विचेतीकरणे महौषधीप्रारम्भ इव मूलिकाविशेषप्रादुर्भाव इव । पुनः कथंभूतः करवालः । संभूयोत्साहदुःसहद्विष्टद्विपघटाविघटनविद्वेषभेषजागम इव संभूयोत्साहे संग्रामे दुःसहा दुःखेन महता कष्टेन सोढुमशक्या ये द्विष्टाः शत्रवस्तेषां द्विपा घटाः 'बहूनां घटना घटा' इति वचनात् गजश्रेणयस्तासां विघटने यत्र तत्र पलायने विद्वेषभेषजागम इव विद्वेषो अप्रीतिजननं तस्य भेषजमौषधं तस्य आगम इव मन्त्रशास्त्रसदृशः । पुनः कथंभूतः करवालः । कालेयकलङ्कपङ्किलाचारपरस्परासुताचरितचरमाभिचार इव कलिकाले भवः कालेयः स चासौ कलङ्को लोकापवादस्तेन पङ्किलः सपापः स चासावाचारस्तस्मिन् परास्तत्पराः पापिष्ठाः शत्रवः अथ पङ्किलाचाराश्च ते परे शत्रवस्तेषां परासुताचरिते मृत्युकरणे चरमाभिचार इव उत्कृष्टमारणमन्त्रसदृशः । कथंभूतं तं करवालम् । अनेकमहासमानीकसंतोषितरणदेवताविहितबलिविधानम् अनेके बहवस्ते च ते महासमानीका महासंग्रामास्तेषु संतोषिता आनन्दं प्रापिता या रणदेवताः संग्रामदेवतास्ताभिर्विहितमनुष्ठितं बलिविधानं पूजाविधिर्यस्य करवालस्य स तथा तम् । पुनः कथंभूतं करवालम् । वीरश्रीविभ्रमदर्पणनामानं वीरश्रियः वीरलक्ष्म्याः विभ्रमा भ्रूक्षेपास्तेषां विलोकने दर्पण आदर्शः वीरश्रीविभ्रमदर्पण इति नाम अभिधानं यस्य करवालस्य स वीरश्रीविभ्रमदर्पणनामा तं तथोक्तम् । भूयोऽपि कथंभूतं करवालम् । अपहसितकृतान्तरसनालीलम् अपहसिता तिरस्कृता कृतान्तस्य यमस्य

---

१. 'कुटिलगतिदुर्वचनविषसंभृतमुख' इति पाठो भवेत्.

कलिकालघुणजरज्जगत्प्रासादोत्तम्भनस्तम्भादर्थिजनत्रिदिवतरोर्द्विषदचलदारणाशनिदण्डाल्लीलाकमलमिव कुवलयं कलयतः करादुत्सृज्य रुद्राणीपादपीठोपकण्ठे दोलायमानमणिकुण्डलकिरणजालपल्लवितगगनाराममुभगमुत्तरलतरोदस्तहस्तास्तमितसमस्तयात्रायातजनकोलाहलः प्रदेशिनीनिदेशादिष्टनिकटलालाटिकपरिकल्पने पुरस्तादुत्तरीयासने तन्मुनिकुमारकयुगलमुपावीविशत्।

तदपि तत्पार्थिवार्थनया सपरिकरं तत्रोपविश्य 'नावयोः संसारसुखवि-

---

रसनाया जिह्वाया लीला शोभा येन करवालेन स तथोक्तम्। कथंभूतात् करात्। प्रतापद्विपालानस्थानात् यस्य वार्तापि श्रुता भयकारिणी भवति स प्रतापः, प्रताप एव द्विपो हस्ती सैन्यस्य उत्तमाङ्गत्वात् तस्य आलानस्थानात् वन्धनस्तम्भसदृशात्। अपरं कथंभूतात् करात्। लक्ष्मीलताश्रयशिखरिणः लक्ष्मीरेव लता वल्ली सौख्यफलदायित्वात् तस्याः आश्रयस्य आलम्बनस्य आलिङ्गनस्य शिखरिणो वृक्षस्य सदृशात्। पुनश्च कथंभूतात् करात्। कलिकालघुणजरज्जगत्प्रासादोत्तम्भनस्तम्भात् कलिकालघुणैः दुःख(ष)मकालक्षुद्रकीटकैः जरन् शतखण्डीभवन् योऽसौ जगत्प्रासादो भूमण्डलदेवतामन्दिरं तस्य उत्तम्भने जीर्णोद्धारकरणे स्तम्भात् महास्तम्भसदृशात्। पुनश्च कथंभूतात् करात्। अर्थिजनत्रिदिवतरोः याचकजनमनोभीष्टदानकल्पवृक्षसदृशात्। पुनश्च कथंभूतात् करात्। द्विषदचलदारणाशनिदण्डात् द्विषन्तः शत्रवस्त एव अचलाः पर्वता अतिकठिनहृदयत्वात् तेषां दारणे शतखण्डीकरणे अशनिदण्डात् विद्युत्पातसदृशात्। किं कुर्वतः करात्। कुवलय पृथिवीमण्डलं लीलाकमलमिव क्रीडाकमलमिव कलयतो धारयतः। तन्मुनिकुमारकयुगलं कथमुपावीविशत्। दोलायमानमणिकुण्डलकिरणजालपल्लवितगगनाराममुभगम् दोलायमाने प्रेङ्खन्ती ये मणिकुण्डले पञ्चविधमाणिक्यजटितसुवर्णकर्णवेष्टने तयोः किरणजालैरुस्रसमूहैः पल्लवितो योऽसौ गगनारामो वियद्वनं तेन सुभगं सुन्दरं यथा भवत्येवम्। कथंभूतो राजा। उत्तरलतरोदस्तहस्तास्तमितसमस्तयात्रायातजनकोलाहलः उत्तरलतरेण प्रचलनपरेण उदस्तेन ऊर्ध्वं क्षिप्तेन हस्तेन पाणिना अस्तमितो निराकृतः समस्तानां विश्वेषां यात्रायातानां लोकानां जनानां कोलाहलः कलकलशब्दो येनाचलापतिना स तथोक्तः। संकरालंकारः॥

केनं गम्यते। तदपि पूर्वोक्तं मुनिकुमारकयुगलं तत्तापसार्भकयुगं तस्य जगत्प्रसिद्धस्य तापसस्य श्रीसुदत्ताचार्यस्य भगवतः अर्भकयुगं शिष्ययुगलं पुत्रयुगलं बालकद्वयं कर्तृभूतं नृपं श्रीमारदत्तमहाराजं एवं वक्ष्यमाणलक्षणोपलक्षितं स्तुतिवचनं आशीर्वचनं

---

१. अस्यात्र संगतिर्ध्येया.

मुखभावयोरमीषु प्राणेष्वपरेषु केषुचिन्मनीषितेषु कुतश्चित्काचिदपेक्षास्ति, परमन्यत्रैकसात्ततो निःश्रेयसात् किं त्वात्मनि पुरोभागिन्यपि जने प्रायेण श्वःश्रेयसमेव चिन्तयन्ति तच्चरितचेतसः । भवन्ति च तथाविधेऽपि तस्मिंस्ते निसर्गादिहामुत्र चाविरुद्धे वर्त्मनि जनिततत्त्वोपदेशाः ।

---

प्रथितैः सुप्रसिद्धैर्वचोभिः वचनैः कृत्वा ऊचे उवाच उक्तवान् । इति क्रियाकारकसंबन्धः । किं कृत्वा पूर्वं ऊचे । हस्तयुगलं करकमलद्वयं उद्धृत्य ऊर्ध्वीकृत्य । कथमूचे । सौष्ठवसज्जं सुष्ठु एतस्य भावः सौष्ठवं तत् सज्जं गुद्रणं(संभृतं) यस्मिन् वचनकर्मणि तत् सौष्ठवसज्जं यथा भवत्येवं ऊचे । न केवलं सौष्ठवसज्जम् ऊचे, सलज्जं च लज्जासहितं च यथा भवत्येवं ऊचे । कथंभूतं हस्तयुगलम् । **स्वर्गेत्यादि** । स्वर्गापवर्गतरुपल्लवसंनिकाशं स्वर्गश्च सौधर्मादिषोडशसंख्याकः नवग्रैवेयकनवानुदिशपञ्चानुत्तरलक्षणश्च स्वर्ग उच्यते, अपवर्गश्च मोक्षः, स्वर्गश्च अपवर्गश्च स्वर्गापवर्गौ तावेव तरू वृक्षौ परमानन्दसौख्यफलदायित्वात् तयोः पल्लवौ प्रवालौ ताभ्यां संनिकाशं सदृशं तत्तथोक्तम् । पुनः कथंभूतं हस्तयुगलम् । धर्मद्वयावनिविहारपथप्रकाशम् धर्मयोर्यतिश्रावकलक्षणयोर्द्वयं धर्मद्वयं तस्य अवनिः भूमिस्तस्या विहारपथौ विहारमार्गौ तयोः प्रकाशं सदृशम् । रूपकालंकारः ॥

किं कृत्वा । पूर्वं इति पूर्वोक्तमर्थं अनुस्मृत्य चिन्तयित्वा । न केवलं इति अनुस्मृत्य किं तु तथा तेनैव प्रकारेण इति सुभाषितं च अनुस्मृत्य । न केवलं इति अनुस्मृत्य, किं तु तत्पार्थिवार्थनया तस्य श्रीमारदत्तस्य पार्थिवस्य राजाधिराजस्य अर्थनया अभ्यर्थनया प्रार्थनेन तत्र तस्मिन् उत्तरीयासने समुपविश्य स्थित्वा । कथमुपविश्य । सपरिकरं सपर्यङ्कासनं यथा भवत्येवम् । इति किमनुस्मृत्य इति चेदुच्यते—आवयोः अयं च तव मम च यावत्तयोरावयोः अमीषु प्रत्यक्षीभूतेषु प्राणेषु इन्द्रियबलायुरुच्छ्वासलक्षणेषु दशसु प्राणेषु अपरेषु वा स्पर्शादिविषयेषु वा केषु विवक्षितेषु मनीषितेषु वाञ्छितेषु वस्तुषु कुतश्चित् कस्माचित् कारणात् काचित् कापि अपेक्षा नास्ति न वर्तते । कथंभूतयोरावयोः । संसारसुखविमुखभावयोः संसारसुखेषु इष्टविषयस्रग्वनिताचन्दनादिषु विमुखः पराङ्मुखो भावोऽभिप्रायश्चित्तं योगो मनस्कारो ययोस्तौ संसारसुखविमुखभावौ तयोः । परं केवलं एकस्मात् निष्केवलात् ततो मुनिजनप्रसिद्धात् निःश्रेयसात् मोक्षात् '[निःश्रेयस' इति वचनात् न (?) प्रत्ययः] अन्यस्मिन् अर्थे अपेक्षा नास्ति किं तु निःश्रेयसं वर्जयित्वा कस्मिंश्चित् पदार्थे अपेक्षा न वर्तते निःश्रेयसे तु अपेक्षा वर्तत एवेत्यर्थः । किं तु आत्मनि । पुरोभागिनि अपि शत्रावपि, जने लोके प्रायेण बहुलतया श्वःश्रेयसमेव चिन्तयन्ति वाञ्छयन्ति ( किं[2] चिन्तयन्ति किम् ) । तथाविधे पुरोभागिनि अपि तस्मिन् जने

---

१. पाणिनीयव्याकरणे तु समासान्तोऽच्प्रत्ययः. २. पुस्तकत्रयेऽपि समान एव पाठः, परंतु 'के, तच्चरितचेतसः श्वःश्रेयसप्रवर्तनाय चेतो मनो येषाम्' इत्यर्थकपाठो भवेत्; यद्वा कियान्पाठस्त्रुटितो भवेत्.

अज्ञानभावादशुभाशयाद्वा कुर्वीत चेत्कोऽपि जनः खलत्वम्।
तथापि सद्भिः प्रियमेव चिन्त्यं न मथ्यमानेऽप्यमृते विषं हि॥१५१॥

सदाचारोचितमतिर्भूपतिरप्ययमतीवानवहेलविहितविष्टरप्रदानः कृतबहुमानः संभाषणोत्सुकधिषणः प्रसन्नान्तःकरण इवोपलक्ष्यते, व्यापारयति च प्रकटितप्रणययोरिवावयोरानन्दबाष्पोल्बणे मुहुर्मुहुर्वीक्षणे, तत्पर्याप्तमत्रोपेक्षणीयलोकसंमतया वाचंयमतया

[तथा हि—]

पुरः प्रणयभूमीषु फलं यदि समीहसे।
जगदानन्दनिष्यन्दि वर्ष सूक्तिसुधारसम्॥ १५२॥

---

ते तच्चरितचेतसः पुरुषा निसर्गात् स्वभावेन इह अस्मिन् भवे अमुत्र च आगामिनि जन्मनि अविरुद्धे वर्त्मनि अपापमार्गे जनिततत्त्वोपदेशा उत्पादितधर्मोपदेशा भवन्ति च संजायन्ते च॥

**अज्ञानेति**॥ हि यस्मात् कारणात् अज्ञानभावात् मूर्खत्वात् निर्विवेकत्वात् अशुभाशयाद्वा द्वेषपरिणामाद्वा चेद्यदि कोऽपि कश्चित् जनो लोकः खलत्वं दुर्जनत्वं कुर्वीत कुर्यात् तथापि तदपि सद्भिः सत्पुरुषैः प्रियमेव चिन्त्यं हितमेव कर्तव्यम्। अमुमेवार्थं अर्थान्तरन्यासेन द्रढयति—अमृते पीयूषे मथ्यमानेऽपि विलोड्यमानेऽपि विषं हालाहलं न भवति न जायते। अर्थान्तरन्यासालंकारः॥

**सदाचारेति**॥ अयं प्रत्यक्षीभूतो भूपतिरपि श्रीमारदत्तराजोऽपि अतीवातिशयेन प्रसन्नान्तःकरण इव प्रसादपरमना इव उपलक्ष्यते दृश्यते। कथंभूतो भूपतिः। सदाचारोचितमतिः सदाचारेषु आसनप्रदानविनयादिकरणेषु उचिता योग्या मतिर्यस्य स सदाचारोचितमतिः। अपरं कथंभूतो भूपतिः। अनवहेलविहितविष्टरप्रदानः अनवहेलेन आदरेण विहितमनुष्ठितं विष्टरस्यासनस्य प्रदानं विश्राणनं येन स तथोक्तः। भूयोऽपि कथंभूतो भूपतिः। कृतबहुमानः कृतो विहितो बहुः प्रचुरो मानः संमान उत्तरीयप्रस्तारणादिलक्षणो येन स तथोक्तः। भूयोऽपि कथंभूतः। संभाषणोत्सुकधिषणः संभाषणे आलापने उत्सुका वेगवत्तरा धिषणा बुद्धिर्यस्येति स संभाषणोत्सुकधिषणः। तथा वीक्षणे लोचने मुहुर्मुहुर्वारंवारं आवयोरुपरि व्यापारयति च प्रेरयति च। कथंभूतयोरावयोः। प्रकटितप्रणययोरिव प्रकटितः प्रादुर्भावितः प्रणयः स्नेहो ययोस्तौ प्रकटितप्रणयौ तयोः प्रकटितप्रणययोः। कथंभूते वीक्षणे। द्वे आनन्दबाष्पोल्बणे आनन्दाश्रुजले[न] उल्बणे उद्रिक्ते। तत्तस्मात् कारणात् अत्र अस्मिन् भूपतौ वाचंयमतया मौनित्वेन पर्याप्तं अलम्। कथंभूतया वाचंयमतया। उपेक्षणीयलोकसंमतया उपेक्षणीयलोके अनादरणीयलोके संमता अभीष्टा उपेक्षणीयलोकसंमता तया॥

किं तत्सुभाषितं यदनुस्मृतम्—**पुर इत्यादि**। प्रणयभूमीषु स्नेहवत्पुरुषेषु यदि

इति च सुभाषितमनुस्मृत्य सौष्ठवसज्जं सलज्जं च
स्वर्गापवर्गतरुपल्लवसंनिकाशं
धर्मद्वयावनिविहारपथप्रकाशम् ।
उद्धृत्य हस्तयुगलं नृपमेवमूचे
तत्तापसार्भकयुगं प्रथितैर्वचोभिः ॥ १५३ ॥

तत्र मुनिकुमारः—
वर्णाश्रमाणां प्रतिपालयित्रे जगत्त्रयत्रायिपराक्रमाय ।
ददातु देवः स जिनः सदा ते राजन्नशेषाणि मनीषितानि ॥ १५४ ॥

अपि च—
असाविन्द्रः स्वर्गे भवति सुकृती यस्य चरिता-
न्महीभारोद्धारादहिपतिरयं तिष्ठति सुखम् ।
जगज्जातं चैतद्विजयसमयान्नन्दति परं
चिरं क्षात्रं तेजस्तदिह जयतादद्भुतविधि ॥ १५५ ॥

---

चेत् पुरोऽग्रे भविष्यत्काले फलं लाभं समीहसे वाञ्छसि तर्हि सूक्तिसुधारसं सुवचनामृतपानीयं वर्ष हे जीव, त्वं क्षर। कथंभूतं सूक्तिसुधारसम्। जगदानन्दनिष्यन्दि जगतः पृथ्वीमण्डलस्य आनन्दं हर्षं निष्यन्दते वर्षति इत्येवंशीलं जगदानन्दनिष्यन्दि॥

**तत्रेति**। तत्र तयोरभयरुचिरभयमत्योर्मध्ये तावत् मुनिकुमारः श्रीमदभयरुचिः ब्रह्मचारिक्षुल्लकः प्रियतमो ब्रूते। तथाहि—**वर्णाश्रमाणामित्यादि** । हे राजन् श्रीमारदत्तमहाराज, स जगत्प्रसिद्धो जिनः श्रीमद्भगवदर्हत्सर्वज्ञो देवः परमाराध्यः सदा सर्वकालं ते तुभ्यं अशेषाणि मनीषितानि वाञ्छितानि ददातु प्रयच्छतु। कथंभूताय ते। वर्णाश्रमाणां प्रतिपालयित्रे वर्णाश्च ब्राह्मणक्षत्रियवैश्यशूद्राः, आश्रमाश्च ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चेति चत्वारः, तेषां वर्णाश्रमाणां प्रतिपालयित्रे प्रतिपालकाय। पुनः कथंभूताय । जगत्त्रयत्रायिपराक्रमाय जगत्त्रयत्रायी एवंविधः पराक्रमः सामर्थ्यं यस्य स जगत्त्रयत्रायिपराक्रमस्तस्मै। अतिशयालंकारः॥

अपि च तथा च। **असावित्यादि**। तज्जगत्प्रसिद्धं क्षात्रं क्षतात् त्रायते क्षत्रः क्षत्रस्येदं क्षात्रं तेजः प्रतापः इह अस्मिन् संसारे चिरं दीर्घकालं जयतात् सर्वोत्कर्षेण प्रवर्तताम्। तस्मै अस्माकं नमस्कार इत्यर्थः। कथंभूतं क्षात्रं तेजः। अद्भुतविधि अद्भुतो आश्चर्यभूतो विधिश्चरितं यस्येति तथोक्तम्। तत्किम्। तद्यदोर्नित्यसंबन्धात् यस्य क्षात्रस्य तेजसः चरितात् असौ प्रत्यक्षीभूतः इन्द्रः सौधर्माद्यच्युतश्च स्वर्गे स्वर्गलोके सुष्ठु पुण्येन

कर्पूरद्रुमगर्भधूलिधवलं यत्केतकानां त्विषः
श्वेतिम्ना परिभूय चन्द्रमहसा सार्धं प्रतिस्पर्धते ।
तत्पाकोन्मुखनालिकेरसलिलच्छायावदातं यशः
प्रालेयाचलचूलिकासु भवतो गायन्ति सिद्धाङ्गनाः ॥ १५६ ॥
मातर्गौरि फणीशकामिनि सति त्वं देवि हे रोहिणि
श्रीमत्यभ्रमु वारले च सुतनो मा मुञ्चतात्मप्रियान् ।

---

कर्मणा अर्ज्यते स्वर्गः तस्मिन् स्वर्गे सुकृती पुण्यवान् कृतार्थश्च भवति संजायते । यस्य क्षात्रस्य तेजसश्चरितात् अयं प्रत्यक्षीभूतभूतो अहिपतिः शेषनागः सुखं निर्बाधं यथा भवत्येवं तिष्ठति जागर्ति । कस्मात् सुखं तिष्ठति जागर्ति । महीभारोद्धारात् मह्याः पृथिव्याः भारो महीभारस्तस्य उद्धार उच्चलनं महीभारोद्धारस्तस्मात् । महीभारस्तावत् क्षात्रेण तेजसा ध्रियते । धरणेन्द्रस्तु पातालस्वर्गलोके सुखेन राज्यं करोतीत्यर्थः । च पुनः अन्यत् एतत् प्रत्यक्षीभूतं जगज्जातं पृथिवीमण्डलस्थितो लोकसमूहो विजयसमयात् दिग्विजयकालात् नन्दति वर्धते । कथम् । परम् । निश्चयेनेति शेषः । समुच्चयातिशयालंकारः । शिखरिणीछन्दः ॥

कर्पूरेत्यादि । हे राजन्निति पूर्वोक्तमेव संबोधनपदं ग्राह्यम् । हे राजन्, तत् जगत्प्रसिद्धं भवतः तव यशः पुण्यगुणकीर्तनं सिद्धाङ्गनाः देवविशेषाणां कमनीयकामिन्यः प्रालेयाचलचूलिकासु गायन्ति वीणावंशस्वरमण्डलादिष्ववतारयन्ति । सिद्धाङ्गना उज्ज्वलवर्णाः, प्रालेयाचलचूलिका अपि शुक्लवर्णाः, भवतो यशश्च अतीव शुक्लमिति भावः । तत्किम् । यद्भवतो यशः कर्पूरद्रुमगर्भधूलिधवलं कर्पूरद्रुमाणां घनसारवृक्षाणां गर्भेषु मध्येषु या धूलयः कर्पूरास्तद्वद्धवलमुज्ज्वलम् । पुनश्च तत्किम् । यद्भवतो यशः श्वेतिम्ना उज्ज्वलं कृत्वा चन्द्रमहसा सार्धं परिपूर्णचन्द्रतेजसा सह प्रतिस्पर्धते । चन्द्रतेजस्तिरस्करोतीत्यर्थः । किं कृत्वा । पूर्वं केतकानां केतकीपुष्पाणां त्विषो दीप्तीः परिभूय श्वेतिम्ना पराभवं प्राप्य । कथंभूतं भवतो यशः । पाकोन्मुखनालिकेरसलिलच्छायावदातं पाकोन्मुखं सद्यः पाकमायातं यत् नालिकेरं कूर्चकेसरफलं तस्य सलिलं पानीयं तस्य छाया दीप्तिस्तद्वत् अवदातमुज्ज्वलम् । उपमातिशयालंकारः ॥

मातरित्यादि । कथं यशो गायन्ति सिद्धाङ्गना इत्याह—हे मातर्जननि गौरि पार्वति, हे फणीशकामिनि हे पद्मावति, हे देवि सति साध्वि, हे रोहिणि देवि, चतुर्थतारे हे श्रीमति लक्ष्मीवति, अभ्रमु ऐरावतभार्ये, हे वारले हे हंसि, सुतनो हे शोभनशरीरे, त्वं त्वम् । यूयमित्यर्थः । आत्मप्रियान् निजवल्लभान् श्रीमहादेवशेषनागचन्द्रैरावतहंसान् मा मुञ्चत मा परित्यजत यूयम् । नो चेत् यदि यूयम् मोक्ष्यध्वे तर्हि अस्य प्रत्यक्षीभूतस्य

नो चेदस्य नृपस्य कीर्तिविसराद्दुर्लक्षशुद्धे जने
युष्माकं पतयोऽद्य दुर्लभतरा मन्ये भविष्यन्त्यमी ॥ १५७ ॥
कुवलयदलनीलः कुन्तलानां कलापो
न भवति यदि गौर्याः शंकरे स्नाश्च पिङ्गाः ।
क्षितिप तव यशोभिः संभृतायां त्रिलोक्यां
सरभसरतिकेलिः किं तयोः स्यादिदानीम् ॥ १५८ ॥
इन्दुधवलापि कीर्तिर्धवलितभुवनत्रयापि तव नृपते ।
मलिनयति रिपुवधूनां मुखानि यन्नाथ तच्चित्रम् ॥ १५९ ॥
भुजगसमखड्गजनितः सपत्नकुलकालतां प्रयातोऽपि ।
शुभ्रयति भुवनमखिलं पराक्रमस्ते तदाश्चर्यम् ॥ १६० ॥

---

नृपस्य श्रीमारदत्तमहाराजस्य कीर्तिविसरात् उज्ज्वलकीर्तिप्रसरात् जने लोके अद्य इदानीं युष्माकं भवतीनां अमी प्रत्यक्षीभूताः पतयो भर्तारः दुर्लभतरा भविष्यन्तीत्येवमहं मन्ये । कथंभूते जने । दुर्लक्षशुद्धे दुःखेन महता कष्टेन लक्षयितुमशक्यो दुर्लक्षः । 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति साधु । दुर्लक्षः शुद्धः शुक्लपदार्थो यस्मिन्निति दुर्लक्षशुद्धस्तस्मिन् । उत्प्रेक्षालंकारः ॥

पुनश्च सिद्धाङ्गनाः किं गायन्ति इत्याह—**कुवलयेत्यादि** । हे क्षितिप हे श्रीमारदत्तमहाराज, यदि चेत् गौर्याः पार्वत्याः कुन्तलानां कलापः केशपाशः कुवलयदलनील उत्पलपत्रवत् नीलः कृष्णवर्णो न भवति । शंकरे श्रीमहादेवे स्नाश्च जटाश्च पिङ्गाः गोरोचनवर्णा न भवन्ति । अर्थवशाद्विभक्तिपरिणामेनात्र बहुवचनम् । तव भवतो यशोभिः कृत्वा संभृतायां परिपूर्णायां त्रिलोक्यां त्रिजगत्यां तयोः गौरीशंकरयोः सरभसरतिकेलिः वेगवत्संभोगक्रीडा इदानीमस्मिन् काले किं स्यात् किं भवेत् । अपि तु न भवेदित्यर्थः । आक्षेपालंकारः ॥

पुनश्च सिद्धाङ्गनाः किमुपश्लोकयन्ति—**इन्दुधवलेत्यादि** । हे नृपते श्रीमारदत्तमहाराज, हे नाथ पृथिवीपते, तव भवतः कीर्तिः पुण्यगुणश्लोकः इन्दुधवलापि परिपूर्णचन्द्रवदवदातापि धवलितभुवनत्रयापि धवलितमुज्ज्वलीकृतं भुवनत्रयं त्रैलोक्यं यया सा धवलितभुवनत्रया । रिपुवधूनां शत्रुस्त्रीणां मुखानि वक्त्राणि यत् मलिनयति मसीवर्णानि करोति तत् चित्रं आश्चर्यम् । उपमालंकारः ॥

पुनश्च सिद्धाङ्गनाः किं गायन्ति—**भुजगेत्यादि** । हे नृपते इति संबोधनपदं पूर्वोक्तमेव ग्राह्यम् । ते तव पराक्रमः सामर्थ्यं अखिलं समग्रं भुवनं भूमण्डलं शुभ्रयति शुभ्रं करोति तदाश्चर्यं अद्भुतमिदम् । कथंभूतः पराक्रमः । भुजगसमखड्गजनितः भुजगेन कालसर्पेण समः सदृशः कृष्णवर्णो योऽसौ खड्गस्तेन जनितः उत्पादितो

त्वं चन्द्रस्त्वमसि रविः कुवलयकमलानुरञ्जनात्सत्यम्।
किं तु यदरातिसद्मसु तमांसि विदधासि तच्चित्रम्॥ १६१॥

कृष्णयति वैरिवर्गं रञ्जयति सतां मनांसि तव देव।
दुर्वर्णयति खलानपि तथापि शुभ्रं यशश्चरितम्॥ १६२॥

भूप त्वमेव महतां धुरि वर्णनीयः
सिन्धुर्महानपि भवेल्लघुवृत्तिरेव।
यत्त्वं श्रिता य इह ते विनिमग्नवंशाः
क्षोणीभृतस्त्वदनुगास्तु समृद्धवंशाः॥ १६३॥

उत्सर्पद्दर्पवैरिव्रजभुजगकुलाभोगसंकोचमन्त्रः
प्रह्वक्षोणीशकल्पद्रुमधरणिसुधासारवर्षाम्बुवाहः।

---

भुजगसमखङ्गजनितः। विरुद्धमेतत् परिह्रियते—भुजे बाहौ गच्छति तिष्ठतीति भुजगः समः अवक्रः खङ्गो मण्डलाग्रस्तेन जनित इति स्वच्छम्। सपत्नकुलकालतां प्रयातोऽपि सपत्नानां शत्रूणां कुलेषु अन्वयेषु कालतां कृष्णत्वं प्रयातोऽपि प्राप्तोऽपि भुवनं शुभ्रयति इत्यपि विरुद्धं परिह्रियते—कालतां मृत्युतां प्राप्त इति स्वच्छम्। विरोधालंकारः॥

त्वमित्यादि। हे नृपते, त्वं चन्द्रः सर्वजगदाह्लादकः। हे नृपते, त्वं भवान् रविः श्रीभास्करोऽसि भवसि। कस्मात्। कुवलयकमलानुरञ्जनात् कुवलयानि उत्पलानि कमलानि पद्मानि तेषामनुरञ्जनात् सत्यमेतत् सत्यमेवैतत्। पक्षे—कुवलयं पृथ्वीमण्डलम्, कमला लक्ष्मीः, तयोः अनुरञ्जनात् आनन्दकरणात्। किं तु तच्चित्रमाश्चर्यं यत् त्वं अरातिसद्मसु अमित्रमन्दिरेषु तमांसि अन्धकाराणि विदधासि करोषि तदद्भुतं आश्चर्यमेतत्। यथासंख्यालंकारः। श्लेषोपमा च॥

कृष्णयतीत्यादि। हे देव हे राजाधिराज, तव यशश्चरितं तव यशःस्वरूपं वैरिवर्गं शत्रुसमूहं कृष्णयति कृष्णवर्णं करोति, सतां सत्पुरुषाणां मनांसि चित्तानि रञ्जयति रक्तानि करोति, खलान् दुर्जनान् दुर्वर्णयति मलिनान् करोति। तथापि तदपि शुभ्रमुज्ज्वलं वर्तते। समुच्चयातिशयालंकारः॥

भूप त्वमित्यादि। हे भूप मारदत्तमहाराज, महतां महानुभावानां धुरि वर्णनीयो अग्रेसरतया मुख्यतया त्वमेव भवानेव वर्णनीयः। तर्हि समुद्रः किं महान् भवति। न भवत्येव। सिन्धुर्महानपि लघुवृत्तिरेव अल्पस्वरूपो भवेत् संजायते। यत् यस्मात् कारणात् तं सिन्धुं श्रिताः आश्रिताः यें क्षोणीभृतः पर्वता इह समुद्रे वर्तन्ते ते क्षोणीभृतो विनिमग्नवंशाः विशेषेण पातालं गताः वेणुवृक्षाः..........त्वदनुगास्तु भवत्सेवकास्तु क्षोणीभृतो राजानः समृद्धवंशाः वृद्धिं प्राप्तान्वया वर्तन्ते। श्लेषालंकारः॥

उत्सर्पदित्यादि। एष प्रत्यक्षीभूतः श्रीमारदत्तमहाराजः काममतिशयेन सुचिरं

आसन्नोदन्वदद्रिद्रवदमरसखीगीतकीर्तिप्रवाहः
कामं कल्पायुरेष प्रतपतु सुचिरं धर्मधामावलोकः ॥ १६४ ॥

पुष्पश्रीर्यस्य ताराः फलममृतरुचिः पत्रलक्ष्मीर्द्युनद्याः
कल्लोलाः स्कन्धबन्धो हरगिरिरमराम्भोधिरप्यालवालः ।
कन्दः शेषश्च शाखाः पुनरखिलदिगाभोग एवैष स स्ता-
त्त्रैलोक्यप्रीतिहेतुः क्षितिप तव यशःपादपोऽनल्पकल्पम् ॥ १६५॥

---

दीर्घकालं कल्पायुः आकल्पकालजीवी सन् प्रतपतु ऐश्वर्यवान् भवतु । एष कथंभूतः । उत्सर्पद्दर्पवैरिव्रजभुजगकुलाभोगसंकोचमन्त्रः उत्सर्पन् उद्गच्छन् दर्पः उत्कटत्वं येषां ते उत्सर्पद्दर्पास्ते च ते वैरिव्रजाः शत्रुवर्गास्त एव भुजगाः सर्पाः अन्तर्दुष्टहृदयत्वात् दुर्वचनविषसंभृतमुखत्वात् कुटिलगतित्वात् द्विजिह्वत्वात् तेषां कुलानि समूहास्तेषामाभोगो विस्तारः परिपूर्णता तस्य संकोचमन्त्रः कीलनबीजाक्षरसमूहः । अपरं कथंभूतः एष राजा । प्रह्वक्षोणीशकल्पद्रुमधरणिसुधासारवर्षाम्बुवाहः प्रह्वाः पादयोर्नम्रीभूता ये क्षोणीशा महासामन्तास्त एव कल्पद्रुमाः कल्पवृक्षाः अर्थिजनाशापूरकत्वात् तेषां धरणयो भूमयस्तासां सुधायाः अमृतस्य आसारवर्षो वेगवद्वर्षस्तस्य अम्बुवाहो मेघः स तथोक्तः । अपरं कथंभूतः एष राजा । आसन्नोदन्वदद्रिद्रवदमरसखीगीतकीर्तिप्रवाहः आसन्नः अतिनिकटतरं आसमुद्रान्तपृथ्वीपालकत्वात् योऽसावुदन्वान् समुद्रस्तत्संबन्धिनो ये अद्रयः पर्वतास्तत्र द्रवन्तीभिर्गच्छन्तीभिरमरसखीभिर्देवाङ्गनाभिर्गीता वीणावंशस्वरमण्डलादिष्ववतारितः कीर्तिप्रवाहः पुण्यगुणकीर्तनसंततिर्यस्य स तथोक्तः । अपरं कथंभूत एष नृपतिः । धर्मधामावलोकः धर्मस्य जीवदयालक्षणस्य [ धामस्य गृहस्य ] अवलोकः अवलोकनं रक्षणं प्रतिपालनं यस्य स तथोक्तः । रूपकालंकारः ॥

**पुष्पश्रीरित्यादि** । हे क्षितिप श्रीमारदत्तमहाराज, स जगत्प्रसिद्धः एष प्रत्यक्षीभूतस्तव भवतो यशःपादपो यश एव पादपो वृक्षः । स्वर्गमोक्षफलप्रदायकत्वात् । अनन्तकल्पं अनन्तकालं यावत् त्रैलोक्यप्रीतिहेतुः त्रिभुवनानन्दकारणत्वात् भवतु । स कः । यस्य यशःपादपस्य तारा दाक्षायण्यः पुष्पश्रीः पुष्पशोभा वर्तते । यस्य यशःपादपस्य अमृतरुचिश्चन्द्रः फलम् । यस्य यशःपादपस्य द्युनद्याः आकाशगङ्गायाः कल्लोलाः महान्तस्तरङ्गाः पत्रलक्ष्मीः छदशोभा वर्तते । यस्य यशःपादपस्य हरगिरिः कैलासपर्वतः स्कन्धबन्धः शाखावधिप्रकाण्डो वर्तते । यस्य यशःपादपस्य आलवालः सेचनस्थानं अमराम्भोधिः क्षीरसागरो वर्तते । यस्य यशःपादपस्य शेषश्च धरणेन्द्रः कन्दो मूली वर्तते । यस्य यशःपादपस्य अखिलदिगाभोग एव समस्तदिग्विस्तार एव शाखा लता वर्तन्ते । अपिशब्दः पुनःशब्दश्च समुच्चयार्थे वर्तेते । तेन समुच्चयरूपकालंकारः ॥

मुनिकुमारिका—

अन्यायतिमिरनाशन विधुरितजनशरण सज्जनानन्द।
नृपवर लक्ष्मीवल्लभ भवतु चिरं धर्मवृद्धिस्ते॥ १६६॥
सुरगिरिरमरसिन्धुरम्भोनिधिरवनिरनूरुसारथिः
फणिपतिरमृतरोचिरमराश्च दिशो दश यावदम्बरम्।
तावदशेषभुवनचिन्तामणिचरित परं महोत्सवै-
रुत्सवचरितचन्द्र जय जीव विराज चिराय नन्द च॥१६७॥
उपभुज्य यद्दिशस्ते नपुंसकं वृद्धमपि यशः सर्वाः।
द्यामुपभोक्तुं यातं तरलिततारां तदाश्चर्यम्॥ १६८॥

---

मुनिकुमारिका अभयमतिभगिनी ब्रूते—अन्यायेत्यादि। हे अन्यायतिमिरनाशन अन्यायः अनीतिः स एव तिमिरमन्धकारं सन्मार्गदर्शनविलोपकत्वात् तन्नाशयतीत्येवं-शीलः, इत्येर्थ(व) साधुः, इत्येवं धर्मः, अन्यायतिमिरनाशनस्तस्य संबोधनं क्रियते—हे अन्यायतिमिरनाशन। हे विधुरितजनशरण हे दुःखितलोकार्तिमथनसमर्थ, हे सज्जनानां विद्वज्जनानां आनन्ददायक, हे नृपवर नृपाणां नरेन्द्राणां मध्ये वर श्रेष्ठ, हे लक्ष्मीवल्लभ लक्ष्म्या वल्लभो अभीष्टः ते तव चिरं दीर्घकालं धर्मवृद्धिर्भवतु। रूपकमिदम्॥

सुरगिरिरित्यादि। हे अशेषभुवनचिन्तामणिचरित अशेषस्य समग्रस्य भुवनस्य भूमण्डलस्य चिन्तामणिरिव चरितं चेष्टितं यस्य तस्य संबोधनं हे तथोक्त। हे उत्सव-चरितचन्द्र उत्सवचरितेन आनन्दाचरितेन आह्लादकरणेन चन्द्रः शशाङ्कः स तस्य संबोधनं हे तथोक्त। परं निश्चयेन महोत्सवैः पञ्चकल्याणैः कृत्वा तावत्कालं त्वं जय सर्वोत्कर्षेण वर्तस्व। त्वं जीव दीर्घायुर्भव। त्वं विराज त्वं शोभयस्व। चिराय दीर्घ-कालं त्वं नन्द समृद्धो भव। तावत्कियत्कालम्। यावत्कालं सुरगिरिर्मेरुपर्वतो वर्तते, यावत्कालं अमरसिन्धुर्महानदी गङ्गानदी वर्तते, यावत्कालं अम्भोनिधिः समुद्रो वर्तते, यावत्कालं अवनिः पृथ्वी वर्तते, यावत्कालं अनूरुसारथिः श्रीसूर्यो वर्तते, यावत्कालं फणि-पतिः शेषनागो वर्तते,यावत्कालं अमृतरोचिश्चन्द्रमा वर्तते, यावत्कालं अमराश्च देवाः वर्तन्ते यावत्कालं दश दिशो वर्तन्ते, यावत्कालं अम्बरमाकाशं वर्तते। अत्युत्कर्षसमुच्चयालंकारः॥

उपभुज्येत्यादि। यत् यस्मात्कारणात् ते तव यशः पुण्यगुणकीर्तनं कर्तृभूतं द्यां स्वर्गश्रियं उपभोक्तुं गतं तत् आश्चर्यं अद्भुतं वर्तते। कथंभूतां द्याम्। तरलिततारां चपलितकनीनिकाम्। पक्षे तारकाम्। किं कृत्वा। पूर्वं सर्वा दिशः समग्रा ककुभ उपभु-ज्य भुक्त्वा सेवित्वा। कथंभूतं यशः। नपुंसकम् न स्त्री न पुमान् नपुंसकम्। अपरं कथंभूतं यशः। वृद्धमपि वृद्धिं प्राप्तमपि, पक्षे जराजीर्णं च। श्लेषालंकारः॥

रिपुकुलतिमिरनिकरदावानल जगति तनोषि मङ्गलं
दिवि भुवि विदिशि दिशि च विबुधार्चित धाम दधासि संततम् ।
भुवनाम्भोजसरसि महतां मत दिशसि विबोधनश्रियं
धर्मविनोद भूप तव भानुमतश्च न किंचिदन्तरम् ॥ १६९ ॥

श्रीरमणीरतिचन्द्रः कीर्तिवधूकेलिकौमुदीचन्द्रः ।
जीयात्क्षितिपतिचन्द्रश्चिराय वसुधाङ्गनाशरच्चन्द्रः ॥ १७० ॥

शत्रुक्षत्रकलत्रनेत्रनलिनप्रालेयकालागमः
क्षोणीरक्षणदक्ष दक्षिणनृपक्रीडावतारक्षमः ।

---

**रिपुकुलेत्यादि** । रिपुकुलतिमिरनिकरदावानल रिपुकुलानि शत्रुवृन्दानि तान्येव तिमिराणि अन्धकाराणि सन्मार्गदर्शनविलोपकत्वात् तेषां निकराः समूहास्तद्विनाशने दावानलो वनवह्निस्तस्य संबोधनं हे तथोक्त । जगति संसारे मङ्गलं कल्याणं तनोषि विस्तारयसि । हे विबुधार्चित हे विदुषां पूज्यतम, दिवि आकाशे, भुवि पृथिव्याम्, विदिशि अग्निकोणादौ, दिशि च पूर्वदिगादौ, संततं निरन्तरं धामोद्द्योतं दधासि धारयसि । हे महतां मत हे महानुभावानामभीष्ट, भुवनाम्भोजसरसि जगतिस्थितसाधुलोककमलवने विबोधनश्रियं संबोधनलक्ष्मीं दिशसि करोषि । हे धर्मविनोद धर्मे जीवदयालक्षणे विनोदः कुतूहलं यस्य स धर्मविनोदस्तस्य संबोधनं हे धर्मविनोद । हे भूप श्रीमारदत्तमहाराज, तव भवतः भानुमतश्च श्रीसूर्यस्य किंचित् किमपि अन्तरं भेदो न वर्तते । यतो भानुमान् अन्धकारं निवारयति, मङ्गलं च करोति, सर्वोद्द्योतकं करोति, कमलवनविकाशं दिशति, तेन कारणेन भवान् भानुमांश्च समान एव । समुच्चयोपमालंकारः ॥

**श्रीरमणीत्यादि** । क्षितिपतिचन्द्रः क्षितिपतीनां नरेन्द्राणां चन्द्रः कर्पूरो राज्ञां सुगन्धकारकत्वात् चिराय दीर्घकालं जीयात् दीर्घायुर्भवतु सर्वोत्कर्षेण प्रवर्तताम् । कथंभूतः क्षितिपतिचन्द्रः । श्रीरमणीरतिचन्द्रः श्रीश्च लक्ष्मीः, रमणी च स्त्री, तयोः रतौ संभोगार्थं चन्द्रः काम्यः अभिलषणीयः । पुनः कथंभूतः । कीर्तिवधूकेलिकौमुदीचन्द्रः कीर्तिरेव वधूर्मनोमोहनसमर्था स्त्री सर्वजनवल्लभत्वात् तस्याः केलौ क्रीडाकरणे कौमुदीचन्द्रः कार्तिकीपूर्णिमाज्योत्स्नाशशाङ्कः । पुनरपि कथंभूतः । वसुधाङ्गनाशरच्चन्द्रः वसुधा पृथ्वी सैव अङ्गना स्त्री संभोगसुखदायकत्वात् तस्याः शरच्चन्द्रो वर्षात्ययकनकप्रायः शरत्काले चन्द्रः कनकं सुवर्णं अतिशोभां करोति यस्मात् । उक्तं च—'मयूरपिच्छे कम्पिल्ले कर्पूरे विधुकाम्ययोः । सुवर्णभस्मं(?) विद्वद्भिश्चन्द्रसंज्ञाभिधीयते ॥' रूपकालंकारः ॥

**शत्रुक्षत्रेत्यादि** । हे क्षोणीरक्षणदक्ष पृथिवीपालनसमर्थ, हे राजन्, हे धर्म

राजन्धर्मविलासवास भवतः कीर्त्यङ्गनासंगमः
कामं भाति जगत्त्रये सुरवधूदत्तार्घपात्रक्रमः ॥ १७१ ॥
कमलानन्दनचतुरे चतुरम्भोधिप्रतापगुणविदिते।
धर्मसखे विजयश्रीर्वसतु करे तव नृपद्युमणे ॥ १७२ ॥
वीरश्रीनलिनीप्रबोधनकरस्त्वं धर्मरत्नाकर-
स्त्वं लक्ष्मीकुचकुम्भमण्डनकरस्त्वं त्यागपुष्पाकरः।
भूदेवीवनिताविनोदनकरस्त्वं लोकरक्षाकर-
स्त्वं सत्यं जगदेकरामनृपते विद्याविलासाकरः ॥ १७३ ॥

---

विलासवास धर्मस्य क्रीडामन्दिर, भवतस्तव कीर्त्यङ्गनासंगमः कीर्तिस्त्रीसंभोगः काममतिशयेन जगत्त्रये त्रैलोक्ये भाति शोभते। कथंभूतः कीर्त्यङ्गनासंगमः। शत्रुक्षत्रकलत्रनेत्रनलिनप्रालेयकालागमः शत्रुक्षत्रा वैरिणो राजानस्तेषां कलत्राणि स्त्रियस्तेषां नेत्राणि लोचनानि तान्येव नलिनानि कमलानि दृग्भ्रमरपातहेतुत्वात् तेषां संकोचने दाहकरणे प्रालेयकालागमः। अपरं कथंभूतः कीर्त्यङ्गनासंगमः। दक्षिणनृपक्रीडावतारक्षमः दक्षिणाः सानुकूलाः ये नृपा राजानस्तेषां क्रीडावतारे संभोगागमे क्षमः समर्थः। अपरं कथंभूतः। सुरवधूदत्तार्घपात्रक्रमः सुरवधूभिर्देवाङ्गनाभिर्दत्तं अर्घपात्रं पूजाभाजनं क्रमयोश्चरणयोर्यस्य स तथोक्तः। अयमपि रूपकालंकारः॥

**कमलानन्दनेत्यादि**। हे नृपद्युमणे राजभास्कर, तव करे तव हस्ते विजयश्रीर्वसतु दिग्विजयलक्ष्मीस्तिष्ठतु। कथंभूते तव करे। कमलानन्दनचतुरे कमलाया लक्ष्म्या आनन्दनमाह्लादस्तत्र चतुरे विचक्षणे। अथवा कमलानन्दनवत् कन्दर्पवत् चतुरः संभोगक्रीडायां विचक्षणस्तस्मिन्। पुनरपि कथंभूते करे। चतुरम्भोधिप्रतापगुणविदिते चतुर्षु अम्भोधिषु समुद्रेषु प्रतापगुणेन विदितो विख्यातस्तस्मिन्। पुनः कथंभूते करे। धर्मसखे धर्मः सखा मित्रं यस्य स धर्मसखस्तस्मिन्[1]। रूपकालंकारः॥

**वीरश्रीनलिनीत्यादि**। हे जगदेकरामनृपते जगति संसारे एकः अद्वितीयो रामनृपतिः सीतावल्लभो नरेन्द्रो जगदेकरामनृपतिस्तस्य संबोधनम्। स रामः (किं) लक्ष्मणेन संयुक्तो बभूव। त्वं तु असहायराम इत्यर्थः। त्वं भवान् वीरश्रीनलिनीप्रबोधनकरः वीरश्रीः वीरलक्ष्मीः सैव नलिनी लक्ष्मीनिवासहेतुत्वात् तस्याः प्रबोधनकरो विकासविधायकः। श्रीसूर्य इत्यर्थः। त्वं भवान् धर्मरत्नाकरः धर्म एव रत्नं त्रैलोक्योद्द्योतकारकत्वात् तस्याकरः समुद्रः। त्वं भवान् लक्ष्मीकुचकुम्भमण्डनकरः लक्ष्म्याः कुचकुम्भौ स्तनकलशौ तयोः मण्डनकरः चित्रकरः। त्वं भवान् त्यागपुष्पा-

---

1. बहुव्रीहौ समासान्तानुपपत्त्या संबोधनत्वं सम्यक्.

चञ्चत्कुन्तलचामरं कलरणत्काञ्चीलयाडम्बरं
भ्रूभङ्गार्पितभावमूरुचरणन्यासासनानन्दितम् ।
खेलत्पाणिपताकमीक्षणपथानीताङ्गहारोत्सवं
नृत्यं च प्रमदारतं च नृपतिस्थानं च ते स्तान्मुदे ॥१७४॥

---

करो वसन्तसमयः । त्वं भवान् भूदेवीवनिताविनोदनकरः भूदेव्येव वनिता मनोहरस्त्री । 'वनिताजनितात्यर्थानुरागायां च योषिति' इति वचनात् । तस्या विनोदनं संभोग-क्रीडां करोति च दधातीति भूदेवीवनिताविनोदनकरः । त्वं भवान् लोकरक्षाकरः लोकानां रक्षां प्रतिपालनं करोतीति लोकरक्षाकरः । सत्यमुक्तमेतत् त्वं भवान् विद्या-विलासाकरः विद्याविलासस्य आकरः उत्पत्तिस्थानम् । व्यतिरेकरूपकमिदम् ॥

**चञ्चत्कुन्तलेत्यादि** । हे राजन्, नृत्यं च नर्तनम्, प्रमदारतं च स्त्रीसंभोगः, नृप-तिस्थानं च सभामण्डपस्ते तव मुदे हर्षाय स्तात् भवतु । कथंभूतं नृत्यम् । चञ्चत्कुन्त-लचामरं चञ्चन्तः शोभमाना कुन्तला एव चामराणि प्रकीर्णकानि यस्मिन् नृत्ये प्रम-दारते च तच्चञ्चत्कुन्तलचामरम् । कथंभूतं नृपतिस्थानम् । चञ्चत्कुन्तलचामरं चञ्चन्ति शोभमानानि कुन्तलानां कुन्तहस्तपुरुषाणां कुन्तांल्लान्ति गृह्णन्ति ते कुन्तलाः कुन्तहस्त-पुरुषाणां कुन्तसंबन्धीनि चामराणि यत्र तथोक्तम् । पुनः कथंभूतं तत्त्रयम् । कलरणत्का-ञ्चीलयाडम्बरं कलं मधुरं यथा भवत्येवं रणन्ती शब्दायमाना या काञ्ची कटिमेखला तस्याः लयः क्रीडासाम्यं तस्य आडम्बर आटोपो यस्मिन् नृत्ये प्रमदारते नृपतिस्थाने च तत्तथोक्तम् । अपरं कथंभूतं तत्त्रयम् । भ्रूभङ्गार्पितभावम् भ्रूभङ्गेन भ्रूक्षेपेण अर्पितो भाव एकोनपञ्चाशल्लक्षणः संभोगदानाभिप्रायः कार्यनिवेदनं च यथासंख्यं यस्मिन् नृत्ये प्रमदारते नृपतिस्थाने च तत्तथोक्तम् । अपरं कथंभूतं तत्त्रयम् । ऊरुचरणन्यासासना-नन्दितम् ऊरोः सक्थ्नश्चरणस्य पादस्य न्यासः आरोपणं अष्टाधिकशतप्रमाणं तस्य चरणस्य आसनं क्षेपणं तेन आनन्दो यस्मिन् नृत्ये तत्तथोक्तम् । कथंभूतं प्रमदारतम् । ऊर्वोः पुरुषसक्थ्नोश्चरणयोः स्त्रीपादयोर्न्यासस्य पोटनस्य यदासनं आसनविशेषस्तेन आनन्दितं आनन्दो यस्मिन् प्रमदारते तत्तथोक्तम् । कथंभूतं नृपतिस्थानम् । ऊरूणां सक्थ्नां चरणानां पादानां न्यासासनेन गवासनेन आनन्दितमानन्दो यस्मिन् नृपति-स्थाने तत्तथोक्तम् । पुनरपि कथंभूतं तत्त्रयम् । खेलत्पाणिपताकम् खेलन्तौ यत्र तत्र पतन्तौ यौ पाणी करौ तावेव पताके ध्वजौ यस्मिन् नृत्ये तत्तथोक्तम् । कथंभूतं प्रम-दारतम् । खेलन्त्यौ नर्तनं कुर्वन्त्यौ पाणिपताके करपालिध्वजौ यस्मिन् प्रमदारते तत्तथो-क्तम् । कथंभूतं नृपतिस्थानम् । खेलन्त्यः प्रेङ्खन्त्यः पाणिषु हस्तेषु पताका महाध्वजा यस्मिन् नृपतिस्थाने तत्तथोक्तम् । अपरं कथंभूतं तत्त्रयम् । ईक्षणपथानीताङ्गहारोत्सवम् ईक्षणपथे लोचनानां मार्गे आनीतः अवतारितः अङ्गहारोत्सवः अङ्गविक्षेपानन्दो यस्मिन् नृत्ये तत्तथोक्तम् । ईक्षणयोः पन्था ईक्षणपथस्तस्मिन्नानीतः अङ्गेन स्मरमन्दिरेण हारेण

मुनिकुमारः—'अनर्थिनः खलु जनस्यामृतमपि निषिच्यमानं प्रायेण परिकल्पते संतापाय, जायते चोपदेष्टुः पिशाचकिन इवाकृतार्थव्यासः कथाप्रयासः, पार्थिवश्चायमद्याप्यासेचनकावलोकनयोरावयोः सूक्तसुधारसेषु न तृप्यति, रजस्तमोबहुलेषु च प्राणिषु प्रथमतरमेव धर्मोपदेशः करोति महतीं शिरःशूलव्यथाम्, भवति चावधीरणाय वक्तुः, तदेनमभ्यस्तरसप्रसरैरेव वचोभिरुल्लासयामि, नयवेदिनो हि वनगज इव स्वादुकफलप्रलोभनमविदिततत्त्वे पुंसि छन्दानुवर्तनमपि भवत्यायत्यामभिमतावाप्तये' इत्यवगत्य पुनरपि तमनन्तापतिमुपश्लोकयितुमुपचक्रमे—

---

च मुक्ताफलमालया उत्सव आनन्दो यस्मिन् प्रमदारते तत्तथोक्तम्। ईक्षणपथेषु लोचनमार्गेषु आनीतोऽवतारितोऽङ्गानां हस्त्यश्वरथपदातीनां हाराभिः समूहैरुत्सवः प्रहर्षो यस्मिन् नृपतिस्थाने तत्तथोक्तम्। यथासंख्यालंकारः॥

मुनिकुमारः इदानीं अभयरुचिर्विचारयति मुनिकुमारस्तं मारदत्तं अनन्तापतिं पृथ्वीपतिं पुनरपि भूयोऽपि उपश्लोकैरुपस्तोतुं उपचक्रमे आरब्धवान्। किं कृत्वा। पूर्वं इति ईदृशमर्थं अवगत्य ज्ञात्वा। इतीति किम्। अनर्थिनः अप्रयोजनस्य पुरुषस्य अमृतमपि पीयूषमपि निषिच्यमानं दीयमानं प्रायेण बहुलतया संतापाय परिकल्पते [किं] संतापाय भवति कथम्। खलु निश्चयेन खलु वाक्यालंकारे वा। न केवलं संतापाय परिकल्पते किं [तु] उपदेष्टुरुपदेशकस्य पुरुषस्य कथाप्रयासः कथनकष्टं अकृतार्थव्यासः निष्फलविस्तारो जायते च उत्पद्यते च। कस्येव पिशाचकिन इव ग्रहिलस्येव। अयं पार्थिवः मारदत्तमहाराजः आवयोरियं च अहं च आवां तयोरावयोः। 'युगपद्वने परः पुरुषाणाम्' इति वचनादुत्तमस्य द्विवचनम्। सूक्तसुधारसेषु सुवचनामृतधारासु अद्यापि बहुलस्तुत्याकर्णनकालेषु न तृप्यति न तृप्तिं याति न प्रीयते। कथंभूतयोरावयोः। आसेचनकावलोकनयोः आसेचनकं अतृप्तिजनकं अवलोकनं दर्शनं ययोस्तौ आसेचनकावलोकनौ तयोः। 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इति वचनात्। रजस्तमोबहुलेषु राज्यमद अज्ञानप्रचुरेषु प्राणिषु जीवेषु प्रथमतरमेव पूर्वमेव यदि धर्मोपदेशः क्रियते तदा महतीं शिरःशूलव्यथां मस्तकशूलपीडां करोति विदधाति। न केवलं शिरःशूलव्यथाम्। च अन्यत् वक्तुरुपदेशकस्य पुरुषस्य अवधीरणाय अवहेलनाय अनादराय भवति संजायते। तत्तस्मात् कारणात् एनं पार्थिवं अभ्यस्तरसप्रसरैः अनुशीलितशृङ्गाररसवीररसादिप्रसरैः विस्तरैरेव वचोभिर्वचनैरुल्लासयामि पल्लवयामि। हि यस्मात् कारणात् नयवेदिनो नीतिशास्त्रज्ञाः एवं वदन्ति। एवं कथमिति चेत्, अविदिततत्त्वे अविज्ञातधर्मस्वरूपे पुंसि पुरुषे छन्दानुवर्तनमपि तदिच्छानुसारेण वर्तनमपि आयत्यामुत्तरकाले अभिमतावाप्तये वाञ्छितफलप्राप्तये भवति। कस्मिन् किमिव।

'दलितरिपुदैत्यदर्पः प्रतापभरचकितखचरलोकेन्द्रः ।
कलिकालजलधिसेतुर्जयतु नृपः समरशौण्डीरः ॥ १७५ ॥
वर्णः ॥

सकलमङ्गलधाम जयकाम कमलालय निखिलनय शौर्यनिगद कदनैकदोहद ।
आनिगममसमानबल वैरिकाल जय जीव कामद ॥ १७६ ॥
मात्रा ॥

---

वनगजे विन्ध्यवनानीतहस्तिनि स्वादुकफलप्रलोभनं मिष्टफललोभदर्शनमिव । अथवा नयवेदिनः पुरुषस्येति षष्ठ्यन्तं पदं व्याख्येयम् । उपमालंकारः ॥

किमुपचक्रमे इत्याह—दलितेत्यादि । नृपः श्रीमारदत्तो जयतु सर्वोत्कर्षेण प्रवर्तताम् । कथंभूतः । दलितरिपुदैत्यदर्पः दलितश्चूर्णीकृतो रिपुदैत्यानां शत्रुसुरारीणां दर्पोऽवलेपो येन स तथोक्तः । पुनः कथंभूतो नृपः । प्रतापभरचकितखचरलोकेन्द्रः प्रतापभरेण प्रतापातिशयेन चकिताः कम्पिता भयं प्राप्ताः खचरलोकेन्द्रा विद्याधरलोकस्वामिनो यस्य स तथोक्तः । पुनः कथंभूतो नृपः । कलिकालजलधिसेतुः कलिकालो दुःख(ष)मकालः स एव जलधिः समुद्रो जडलोकसंभृतत्वात् तस्य सेतुस्तरणोपायः स तथोक्तः । अपरं कथंभूतः । समरशौण्डीरः समरे संग्रामे शौण्डीरस्त्यागविक्रमाभ्यां विश्रुतः । रूपकालंकारः । आर्याछन्दः । ईदृशी स्तुतिर्वर्णे उच्यते ॥

सकलेत्यादि । हे सकलमङ्गलधाम सकलानां समग्राणां मङ्गलानां कल्याणानां धाम मन्दिरं सकलमङ्गलधाम । [अत्र पुंलिङ्गम्, तेन नकारस्य लोप एव । 'संज्ञापूर्वको विधिरनित्यः' इति वचनात्, अथवा त्वमित्यस्य विशेषणत्वात् ।] 'वा नपुंसके' इत्यनेन नकारलोपः । हे जयकाम सर्वजगद्विजयाभिलाष । हे कमलालय लक्ष्मीनिधान । हे निखिलनय निखिलाः समग्रा नया नीतयो यत्र स तस्य संबोधनम् । हे शौर्यनिगद हे सौभव्यनिबन्धन । हे कदनैकदोहद कदनस्य संग्रामस्य एकः अद्वितीयो दोहदो मनोरथो यस्य स तस्य संबोधनम् । हे आनिगममसमानवल आनिगमं ऐतिह्यपर्यन्तं सिद्धान्ते सूचितं असमानं अनुपमं बलं सामर्थ्यं यस्य स तस्य संबोधनम् । हे वैरिकाल हे शत्रुकृतान्त । हे कामद हे वाञ्छितप्रदायक, त्वं जय जीव दीर्घायुर्भव । एतच्छन्दो मात्राभिर्गण्यते ।
उक्तं च—'..............................................................' ॥

---

१. 'वर्णनमुच्यते' इति सटीकपुस्तकपाठः. २. पुस्तकत्रयेऽप्युपलभ्यमानोऽयं पाठो न चमत्कारकारी; वस्तुतस्तु 'धाम' शब्दस्याजहल्लिङ्गत्वेन नपुंसकत्वे नलोपविकल्पः.

इति महति भवति किंचिद्वदामि निःशेषतस्तु नो पारयामि।
वक्तुं त्वदीयगुणगरिमधाम सर्वज्ञवचनविषयं हि नाम॥ १७७॥

चतुष्पदी॥

जय कमलकलशकुलिशाङ्कचरण सकलोपमानरुचिरचितकरण।
यमवरुणधनदशक्रावतार कल्याणविजय संसारसार॥ १७८॥
एकातपत्रवसुधोचिताङ्ग संग्रामकेलिदयिताभुजङ्ग।
विद्याविनोदसहजानुराग कीर्तिप्रबन्धभृतभुवनभाग॥ १७९॥
सत्पुरुषरत्नसंग्रहणनिघ्न गुरुदेवमहामुनिशमितविघ्न।
निखिलाश्रितजनकल्पद्रुमाभ धरणिप्रतिपालनपद्मनाभ॥ १८०॥

---

इतीति। इति पूर्वोक्तप्रकारेण महति महानुभावे वर्णाश्रमगुरौ वा भवति त्वयि किंचिदल्पमात्रं वदामि स्तुतिं करोमि। निःशेषतस्तु तव सर्वगुणस्तवने नैव पारयामि शक्नोमि। त्वदीयगुणगरिमधाम वक्तुं भवदीयगुणगुरुत्वतेजो वक्तुं वर्णयितुं सर्वज्ञवचनविषयं तीर्थंकरपरमदेववचनगोचरं वर्तते नामेति संभावनायाम्। चतुष्पदी नाम छन्दः। अतिशयालंकारः॥

जयेत्यादि। जय कमलकलशकुलिशाङ्कचरण कमलं च पद्मम्, कलशश्च घटः, कुलिशं च वज्रम्, ते अङ्का लक्षणानि चरणयोः पादयोर्यस्य स तथा तस्य संबोधनं हे तथोक्त, त्वं जय सर्वोत्कर्षेण प्रवर्तस्व। हे सकलोपमानानां रुचिरचितकरण सकलानां समग्राणां उपमानानां रुचिभिस्तेजोभी रचितानि निष्पादितानि करणानि मुखाद्यवयवानि यस्य स तथा तस्य संबोधनं हे तथोक्त। हे यमवरुणधनदशक्रावतार यमश्च दण्डकरणे कृतान्तावतारः, अगम्यतया वरुणावतारः, अर्थिजनानामाशापूरणे धनदावतारः, ऐश्वर्येण शक्रावतारः, तस्य संबोधनं हे तथोक्त। हे कल्याणविजय कल्याणः सर्वमङ्गलभूतो विजयो दिग्विजयो यस्य तस्य संबोधनं हे तथोक्त। हे संसारसार संसारे सारः सारभूतः स तस्य संबोधनम्॥

हे एकातपत्रवसुधोचिताङ्ग एकातपत्रा या वसुधा पृथ्वी तस्या उचितं योग्यं अङ्गं शरीरं यस्य तस्य संबोधनं हे तथोक्त। हे संग्रामकेलिदयिताभुजङ्ग संग्रामकेलिः समरक्रीडा सैव दयिता वल्लभस्त्री सुरतसुखदायित्वात् तस्याः भोगे भुजङ्गः कामी तस्य संबोधनम्। हे विद्याविनोदसहजानुराग विद्याविनोदे शास्त्रकुतूहले सहजः स्वाभाविकः अनुराग आत्मा (अ)कृत्रिमस्नेहो यस्य तस्य संबोधनम्। हे कीर्तिप्रबन्धभृतभुवनभाग कीर्तिप्रबन्धेन कीर्तिसमूहेन भृतः पूर्णो भुवनभागः पृथ्वीमण्डलं येन स तस्य संबोधनं हे तथोक्त॥

हे सत्पुरुषरत्नसंग्रहणनिघ्न सत्पुरुषास्त एव रत्नानि माणिक्यानि अनर्घ्यत्वात् तेषां

रणवीरवैरिकरिकृतविनोद शौण्डीरशिखामणिवन्द्यपाद ।
गुणघोषमुखरकोदण्डचण्डशरखण्डितरिपुगलनालखण्ड ॥ १८१ ॥
दोर्दण्डदलितपरबलगजेन्द्र निर्व्याजशौर्यतोषितसुरेन्द्र ।
कृतशत्रुकबन्धानर्ततर्ष जय समरमुक्तसुरकुसुमवर्ष ॥ १८२ ॥
निजभुजबलसाधितजगदसाध्य लक्ष्मीकुचनिबिडितबाहुमध्य ।
दुर्गाकरपीडनविषमनेत्र सर्वावनीनशेखरचरित्र ॥ १८३ ॥

---

संग्रहणे स्वीकरणे निम्नस्तत्परः तस्य संबोधनम् । हे गुरुदेवमहामुनिशमितविघ्न गुरूणां मातृपितृउपाध्यायादीनां महामुनीनां दिगम्बराणां शमितो निवारितो विघ्नः अन्तरायो येन तस्य संबोधनम् । हे निखिलाश्रितजनकल्पद्रुमाभ निखिलानां समस्तानां आश्रितजनानां सेवकानां कल्पद्रुमाभः कल्पवृक्षसदृशस्तस्य संबोधनम् । हे धरणिप्रतिपालनपद्मनाभ धरणेः पृथिव्याः प्रतिपालने रक्षणे पद्मनाभः श्रीनारायणः तस्य संबोधनम् ॥

हे रणवीरवैरिकरिकृतविनोद रणवीराः संग्रामशूराः ये वैरिणः शत्रवस्तेषां करिणां हस्तिनां कृतो विनोदो विनाशो येन तस्य संबोधनम् । हे शौण्डीरशिखामणिवन्द्यपाद शौण्डीराणां त्यागविक्रमाभ्यां विश्रुतानां नरेन्द्राणां शिखामणिभिः शिरोरत्नैः वन्द्यौ नमस्करणीयौ पादौ चरणौ यस्य तस्य संबोधनम् । गुणघोषमुखरकोदण्डचण्डशरखण्डितरिपुगलनालखण्ड गुणस्य प्रत्यञ्चायाः घोषेण टङ्कारेण मुखरं वाचालं कोदण्डं धनुस्तस्य संबन्धिनश्चण्डशराः प्रचण्डबाणास्तैः खण्डितानि छेदितानि रिपूणां शत्रूणां गलनालखण्डानि कण्ठनालवनानि येन तस्य संबोधनम् ॥

दोर्दण्डदलितपरबलगजेन्द्र दोर्दण्डेन बाहुदण्डेन दलिताश्चूर्णीकृताः परेषां शत्रूणां बलगजेन्द्राः सैन्यहस्तिनाथा येन तस्य संबोधनम् । निर्व्याजशौर्यतोषितसुरेन्द्र निर्व्याजेन निश्छद्मना शौर्येण सौभव्येन तोषिता आनन्दं प्रापिताः सुरेन्द्राः सौधर्मेन्द्रादयः अच्युतेन्द्रपर्यन्ताः शक्रा येन तस्य संबोधनम् । कृतशत्रुकबन्धानर्ततर्ष कृतो विहितः शत्रूणां अभियातीनां कबन्धानां शिरोरहितकायानां आनर्ते नर्तने तर्षस्तृष्णा अभिलाषो येन तस्य संबोधनम् । जय समरमुक्तसुरकुसुमवर्ष समरे संग्रामे मुक्तं सुरैर्देवैः कुसुमवर्षं पुष्पवृष्टिः यस्मिन् तस्य संबोधनम् हे राजन् , त्वं जय ॥

निजभुजबलसाधितजगदसाध्य निजभुजबलेन आत्मबाहुसामर्थ्येन साधितं निजहस्ते कृतं जगति संसारे असाध्यं दुःसाध्यं च सुखं येन तस्य संबोधनम् । लक्ष्मीकुचनिबिडितबाहुमध्य लक्ष्मीकुचाभ्यां लक्ष्मीस्तनाभ्यां निबिडितं गाढपीडितं बाहुमध्यं वक्षःस्थलं यस्य स तत्संबोधनम् । दुर्गाकरपीडितविषमनेत्र दुर्गाणां जलवनपर्वतादीनाम्, आकराणां रत्नाद्युत्पत्तिस्थानानाम्, पीडने विषमे वक्रे नेत्रे लोचने यस्य तस्य संबोधनम् । पक्षे—दुर्गायाः पार्वत्याः करपीडने विवाहे विषमनेत्रः त्रिलोचनः

चतुरुदधितटीवनगीतवर्ण वर्णस्थितिपालन दानकर्ण।
कर्णप्रदेशविश्रान्तनयन नयनम्रनृपतिसद्भावसदन ॥ १८४ ॥
सदनश्रितविषमधरोपकण्ठ कण्ठप्रशस्त हतनीतिकुण्ठ।
लाटीमुखाब्जसंभोगहंस कर्णाटयुवतिसुरतावतंस ॥ १८५ ॥
अन्ध्रीकुचकुड्मलकृतविलास चोलीनयनोत्पलवनविकास।
यवनीनितम्बनखपदविदग्ध मलयस्त्रीरतिभरकेलिमुग्ध।

---

श्रीमहादेवो भवति। सर्वावनीनशेखरचरित्र सर्वावनीनानां सर्वभूमिपतीनां शेखरं मुकुटप्रायं चरित्रमाधारो यस्य तस्य संबोधनम् ॥

चतुरुदधितटीवनगीतवर्ण चतुर्णां उदधीनां समुद्राणां तटीनां वनेषु उद्यानेषु गीतो वर्णितो वर्णो यशो यस्य तस्य संबोधनम्। हे वर्णस्थितिपालन वर्णानां ब्राह्मणादीनां स्थितिपालनं यस्मिन्। स्थितये पालनमिति यावत्। हे दानकर्ण दानेन कनकवर्षणेन कर्णः पूर्वकौन्तेयो यस्य स तस्य संबोधनम्। हे कर्णप्रदेशविश्रान्तनयन कर्णप्रदेशयोः शब्दग्रहसमीपयोर्विश्रान्ते विश्रामं प्राप्ते नयने लोचने यस्य तस्य संबोधनम्। हे दीर्घलोचन इत्यर्थः। नयनम्रनृपतिसद्भावसदन नयेन न्यायमार्गेण नम्राः पादयोः पतिताः ये नृपतयो राजानस्तेषां सद्भावस्य आकुलतायाः सदनं गृहं तस्य संबोधनम् ॥

सदनश्रितविषमधरोपकण्ठ सदनं गृहं श्रितानि आनीतानि विषमाणां असाध्यानां धराणां पृथ्वीनां उपकण्ठानि समीपानि येन तस्य संबोधनम्। अथवा सदने श्रिता निजगृहे स्थिता ये विषमा असाध्याः शत्रवस्तेषां धराणां पर्वतानां उपकण्ठे समीपे यस्य तस्य संबोधनम्। हे कण्ठप्रशस्त कण्ठे गले प्रशस्तो मनोहरस्तस्य संबोधनम्। हे हतनीतिकुण्ठ हता मारिता नीतिकुण्ठा न्यायक्रियासु मन्दाः परधनपरकलत्रलम्पटा राजानो येन तस्य संबोधनम्। लाटीमुखाब्जसंभोगहंस लाटीनां भृगकच्छदेशोद्भवानां स्त्रीणां मुखाब्जानां मुखकमलानां संभोगे क्रीडायां हंसः चक्राङ्गस्तस्य संबोधनम्। कर्णाटयुवतिसुरतावतंस कर्णाटयुवतीनां दक्षिणापथस्त्रीणां सुरते संभोगे क्रीडायां अवतंसः कर्णपूरः तस्य संबोधनम् ॥

अन्ध्रीकुचकुड्मलकृतविलास अन्ध्रीणां तिलङ्गदेशस्त्रीणां कुचकुड्मलैः स्तनमुकुलैः कृतो विहितो विलासः क्रीडा येन तस्य संबोधनम्। चोलीनयनोत्पलवनविकास चोलीनां समङ्गदेशस्त्रीणां नयनोत्पलवनानां नेत्रकुवलयोद्यानानां विकासो विकचता यस्मात् तस्य संबोधनम्। यवनीनितम्बनखपदविदग्ध यवनीनां खुरासानस्त्रीणां नितम्बेषु कटिपश्चाद्भागेषु नखपदेषु पुनर्भवस्थानेषु विदग्धः विचक्षणः तस्य संबोधनम्। मलयस्त्रीरतिभरकेलिमुग्ध मलयस्त्रीणां चन्दनाचलकामिनीनां रतिभरे संभोगातिशये या केलिः क्रीडा तत्र मुग्धः कोमलः। तदभिप्रायपालनपर इत्यर्थः। तस्य

वनवासियोषिदधरामृतार्ह सिंहलमहिलाननतिलकवर्ह ॥ १८६ ॥
पद्धतिका ॥

इति बुधजनकामः क्रीडितरामः सकलभुवनपतिपूजित ।
कृतबुधजनकामः क्षितिपतिरामस्त्वमिह चिरं जय विश्रुत' ॥ १८७ ॥
घत्ता ॥

तथा मुनिकुमारिकापि—
'लक्ष्मीरामानङ्गः सपत्नकुलकालविक्रमोत्तुङ्गः ।
कीर्तिविलासतमङ्गः प्रतापरङ्गश्चिरं जयतु ॥ १८८ ॥'

---

संबोधनम् । वनवासियोषिदधरामृतार्ह वनवासियोषितां गिरिसोपानरत(?)स्त्रीणां सह्यामचस्त्रीणां(?) अधरामृते अधरपीयूषपाने अर्हो योग्यस्तस्य संबोधनम् । सिंहलमहिला[नन]तिलकवर्ह सिंहलमहिलानां लङ्काद्वीपस्त्रीणां [आनने] तिलकवर्ह तिलकपत्रं तस्य संबोधनम् ॥ पद्धतिका षोडशमात्राछन्दः । संकरालंकारः ॥

इतीति । हे सकलभुवनपतिपूजित पृथ्वीमण्डलस्थितनरेन्द्राणां गृहीतदण्ड । हे विश्रुत त्रिभुवनविख्यात । त्वं भवान् इह अस्मिन् संसारे चिरं दीर्घकालं जय सर्वोत्कर्षेण प्रवर्तस्व । दीर्घायुर्भव । चिरं जीया इत्यर्थः । कथंभूतस्त्वम् । इति पूर्वोक्तप्रकारेण बुधजनकामः बुधजनानां विद्वज्जनानां कामः अभीष्टं यस्मादिति बुधजनकामः इत्यङ्कनाम(?) । अपरं कथंभूतस्त्वम् । क्रीडितरामः क्रीडिताः संयु(भु)क्ताः रामाः पूर्वोक्तलक्षणाः स्त्रियो येन स क्रीडितरामः । पुनः कथंभूतस्त्वम् । कृतबुधजनकामः कृतो विहितो बुधजनानां विद्वज्जनगुणानां कामो ([3]रोगो दारिद्र्यलक्षणो ) येन स तथोक्तः । अथवा कृतश्छेदितो बुधजनकानां विद्वज्जनगुणानां अमो रोगो दारिद्र्यलक्षणो येन तथोक्तः । 'कृञ् हिंसायाम्' इति धातोः प्रयोगात् । अपरं कथंभूतस्त्वम् । क्षितिपतिरामः क्षितिपतीनां मध्ये रामः श्रीमत्काकुत्स्थसमानः । घत्ता छन्दः । रूपकमिदम् ॥

तथा मुनिकुमारिकापि अभयमतिरपि स्तौति—प्रतापरङ्गः इत्यङ्कनाम । प्रतापप्रवर्तनभूमिप्रायः श्रीमारदत्तश्चिरं दीर्घकालं जयतु जीयात् । कथंभूतः । लक्ष्मीरामानङ्गः लक्ष्मीरेव रामा मनोहरकामिनी तदनुभवने अनङ्गः कामदेवः । अपरं कथंभूतः । सपत्नकुलकालविक्रमोत्तुङ्गः सपत्नानां शत्रूणां कुलं समूहस्तस्य कालस्य मृत्योः संबन्धी योऽसौ विक्रमः सामर्थ्यं तेन उत्तुङ्गः उन्नतः । पुनः कथंभूतः । कीर्तिविलासतमङ्गः कीर्तिविलासस्य संभोगस्य तमङ्गः प्रासादः । आर्या । रूपकमिदम् ॥

---

१. 'गिरिसोपाननगरादिस्त्रीणाम्' इत्यग्रे पाठः. २. 'इत्यङ्कनाम' इत्येव भवेत्.
३. अयं पाठो लेखकप्रमादजो भवेत्.

उत्सारितारिसर्पः शरणागतनृपतिचित्तसंतर्पः।
लक्ष्मीललामकूर्पस्तपतु चिरं नृपतिकन्दर्पः॥ १८९॥
भुवनाब्जसरस्तरणिर्धर्मामृतहरणिरुदयतरुधरणिः।
श्रीरमणीरतिसरणिर्मण्डलिकशिखामणिर्जीयात्॥ १९०॥

वर्णः॥

कुवलयोत्सवचन्द्र नृपतीन्द्र लक्ष्मीवर[1] कीर्तिसरदमृतवृष्टिपल्लवितबुधवन[2]।
आभुवनमभिमानधन धैर्यसदन जय विहितसदवन॥ १९१॥

मात्रा॥

---

अपरं कथंभूतः। उत्सारितारिसर्पः उत्सारिताः पलायनं कारिताः अरिसर्पाः शत्रुदीर्घपृष्ठा येन स तथोक्तः। पुनः शरणागतनृपतिचित्तसंतर्पः शरणं गृहमागता ये नृपतयस्तेषां चित्तसंतर्पो मनःप्रीणनं यस्मादिति स तथोक्तः। पुनः लक्ष्मीललामकूर्पः लक्ष्म्याः ललामस्य मस्तकस्य कूर्पः। भ्रुवोरन्तरालकेशः कूर्प उच्यते। मध्यप्रदेशस्तिलक इत्यर्थः। तपतु ऐश्वर्यवान् भवतु चिरं दीर्घकालं नृपतिकन्दर्पः भूपतिषु कन्दर्पः कामदेवः॥

**भुवनेति**। पुनः कथंभूतः। भुवनाब्जसरस्तरणिः भुवनं पृथ्वीमण्डलं तदेव अब्जसरः कमलवनं तद्विकासने तरणिः श्रीसूर्यः। पुनः कथंभूतः। धर्मामृतहरणिः धर्म एवामृतं जरामरणनिवारकत्वात् तद्वहने हरणिर्नाकः। पुनः कथंभूतः। उदयतरुधरणिः उदयस्त्रिःप्रकारकश्चयोपचयापचयलक्षणः स एव तरुः वृक्षो वाञ्छितफलप्रदायकत्वात् तस्य धरणिः भूमिः। पुनः कथंभूतः। श्रीरमणीरतिसरणिः श्रीरेव लक्ष्मीरेव रमणी उत्तमनायिका तस्या रतेः संभोगस्य सरणिर्मार्गः। पुनः कथंभूतः। मण्डलिकशिखामणिः मण्डलिकानां नरेन्द्राणां शिखामणिः शिरोरत्नं जीयात् चिरं जीयात्। रूपकम्। वर्णः॥

हे कुवलयोत्सवचन्द्र पृथ्वीवलयोत्पलविकासनशशाङ्क। हे नृपतीन्द्र राजाधिराज। हे लक्ष्मीवर श्रीनारायणावतार। हे कीर्तिसरदमृतवृष्टिपल्लवितबुधजन कीर्तिः पुण्यगुणकीर्तनं सैव सरन्ती प्रसरन्ती अमृतवृष्टिस्तया पल्लविता उल्लासं प्रापिताः बुधजनाः[1] विद्वांसो यस्य तथोक्तः। हे आभुवनमभिमानधन त्रैलोक्यपर्यन्तं अभिमानो धनं वित्तं यस्य तस्य संबोधनम्। हे धैर्यसदन धीरत्वमन्दिर, त्वं जय सर्वोत्कर्षेण प्रवर्तस्व। हे विहितसदवन विहितं कृतं सतां विद्वज्जनानां अवनं रक्षणं येन स तस्य संबोधनम्। मात्राछन्दः इदम्॥

---

१. 'धर' मूल०. २. 'जन' इति टीका०.

---

१. 'बुधवन' इति मूलोपलब्धप्राचीनपाठे 'पल्लवितमुल्लासं प्रापितं बुधा एव वनम्' इति बोध्यम्.

नृप महति भवति किंचिद्गिरामि वक्तुं गुणमखिलं नोत्तरामि ।
दीप्तिर्द्युमणेरवनीश यत्र का शक्तिः काचमणेर्हि तत्र ॥ १९२ ॥
चतुष्पदी ॥

जय लक्ष्मीकरकमलातपत्र सारस्वतरसनिष्यन्दपात्र ।
धर्मार्थकामसमवृत्तचित्त तीर्थार्थिमनोरथवर्तिवित्त ॥ १९३ ॥
शत्रुस्त्रीनेत्रविधूपलान्तनिश्च्योतचन्द्र रणकेलिकान्त ।
रिपुयुवतिहृदयसूर्याश्मशैलविरहानलजन्मद्युमणिलील ॥ १९४ ॥
विनतक्षितीशवक्षोब्जकोशविहितश्रीरामासंनिवेश ।
शरणागतनृपतिमनोभिलषितचिन्तामणिनिपुणगुणप्रतीत ॥ १९५ ॥

---

**नृपेति** । हे नृप राजाधिराज, महति गहानुभावे गरीयसि भवति त्वयि विषये किंचिदल्पमात्रं अहं गिरामि वर्णयामि । अखिलं समग्रं गुणं वक्तुं अहं नोत्तरामि न पारं गच्छामि । हि यस्मात् हे अवनीश पृथ्वीपते, यत्र यस्मिन् स्थाने द्युमणेः श्रीसूर्यस्य दीप्तिर्वर्तते तत्र काचमणेः का शक्तिः । न कापि शक्तिरित्यर्थः । चतुष्पदी नाम छन्दः ॥

**जयेति** । जय लक्ष्मीकरकमलातपत्र लक्ष्म्याः करकमलवत् क्रीडाकमलवत् आतपत्रं छत्रं यस्य तस्य संबोधनम् हे मारदत्त, त्वं जय । सारस्वतरसनिष्यन्दपात्र सरस्वत्याः अयं सारस्वतः स चासौ रसस्तस्य निष्यन्दस्य क्षरणस्य पात्रं आधारभूतं तस्य संबोधनम् हे मारदत्त । धर्मार्थकामसमवृत्तचित्त धर्मश्च अर्थश्च कामश्च तेषु समवृत्तं समानाचारं चित्तं यस्य तस्य संबोधनम् । एकं विराध्य अन्यं भुङ्क्ते इत्यर्थः । तीर्थार्थिमनोरथवर्तिवित्त तीर्थं धर्मपात्रं अर्थिनो याचकास्तेषां मनोरथपूरणं वित्तं धनं यस्य तस्य संबोधनम् ॥

**शत्रुस्त्रीति** । शत्रुस्त्रीनेत्रविधूपलान्तनिश्च्योतचन्द्र शत्रूणां स्त्रियस्तासां नेत्राणि तान्येव विधूपलाश्चन्द्रकान्तमणयस्तेषां अन्तानां कर्णप्रदेशपार्श्वे नेत्रप्रान्तानां निश्च्योते अश्रुजलमोचने चन्द्रो मृगलाञ्छनस्तस्य संबोधनम् । हे रणकेलिकान्त रणकेलयः संग्रामक्रीडास्ताः कान्ताः प्रिया यस्य तस्य संबोधनम् । रिपुयुवतिहृदयसूर्याश्मशैलविरहानलजन्मद्युमणिलील रिपूणां शत्रूणां युवतयः स्त्रियस्तासां हृदयानि जीवस्थानानि तान्येव सूर्याश्मशैलाः सूर्यकान्तमणिपर्वतास्तेषां विरहानलजन्मनि विरहवैश्वानरोत्पादने द्युमणेः श्रीसूर्यस्य लीला शोभा यस्य स तस्य संबोधनम् ॥

**विनतेति** । विनतक्षितीशवक्षोऽजकोशविहितश्रीरामासंनिवेश विनताः पादयोः पतिता ये क्षितीशा राजानस्तेषां वक्षोऽजकोशेषु हृदयकमलकर्णिकासु विहितः कृतः

भुवनत्रयधवलनसौधकुम्भ कीर्तिप्रबन्धभास्वद्विजृम्भ।
संग्रामरङ्गनर्तितकबन्ध वीरश्रीगीतयशःप्रबन्ध ॥ १९६ ॥
यः कोऽपि भवति खलतामुपैति यमवक्रयन्त्रवशतां स याति।
शौण्डीर्याश्चर्यितखचरेन्द्र दोर्दण्डदलितरिपुकुलकरीन्द्र ॥ १९७ ॥
यस्तव सेवासु विकारमेति तस्मात्प्रागेव श्रीरपैति।
यस्त्वां हतवृत्तिर्देव नृपतिरायोधनबद्धमतिः प्रयाति ॥ १९८ ॥

---

श्रीरामायाः लक्ष्मीश्रियः संनिवेशः प्रवेशो येन तस्य संबोधनम्। शरणागतनृपतिमनोभिलषितचिन्तामणिनिपुणगुणप्रतीत शरणार्थे आर्तिनिवारणार्थं आगता आयाताः ये नृपतयस्तेषां मनोभिलषिते वाञ्छितप्रदाने चिन्तामणिवत् निपुणगुणः प्रवीणगुणस्तेन प्रतीतो विख्यातः तस्य संबोधनम् ॥

भुवनेति। भुवनत्रयधवलनसौधकुम्भ भुवनत्रयस्य त्रैलोक्यस्य धवलने उज्ज्वलीकरणे सौधकुम्भः श्वेतद्रव्यद्रवघटस्तस्य संबोधनम्। कीर्तिप्रबन्धभास्वद्विजृम्भ कीर्तिप्रबन्धो विद्वज्जनरचितकीर्तिशास्त्रं स एव भास्वान् श्रीसूर्यस्तस्य विजृम्भः प्रवृत्तिर्यस्य स तस्य संबोधनम्। संग्रामरङ्गनर्तितकबन्ध संग्रामरङ्गे संग्रामाङ्गणे नर्तितानि नृत्यं कारितानि कबन्धानि मस्तकरहितशरीराणि येन स तस्य संबोधनम्। वीरश्रीगीतयशःप्रबन्ध वीरश्रिया वीरलक्ष्म्या गीतो वर्णितो यशसः प्रबन्धः सुकविरचितशास्त्रं येन सः यस्य स तस्य संबोधनम् ॥

य इति। यः कोऽपि भवति खलतामुपैति यः कश्चित्पुमान् भवति त्वयि विषये खलतां दुर्जनतां शत्रुतां उपैति गच्छति। यमवक्रयन्त्रवशतां स याति यमस्य कृतान्तस्य वक्रं मुखं तदेव यन्त्रं तैलपीडनाधिकरणं तस्य वशतां तदायत्तत्वं स पुमान् याति गच्छति। म्रियत इत्यर्थः। शौण्डीर्याश्चर्यितखचरेन्द्र शौण्डीर्येण त्यागविक्रमविश्रुततया आश्चर्यिता विस्मयं प्रापिताः खचरेन्द्रा विद्याधरनरेन्द्रा येन तस्य संबोधनम्। दोर्दण्डदलितरिपुकुलकरीन्द्र दोर्दण्डाभ्यां बाहुदण्डाभ्यां दलिता भूमौ आस्फाल्य चूर्णीकृता रिपुकुलानां शत्रुसमूहानां करीन्द्रा गजपतयो येन स तस्य संबोधनम् ॥

य इति। यस्तव सेवासु विकारमेति यो नृपतिस्तव भवतः सेवासु श्ववृत्तिषु विकारं विकृतिं एति गच्छति। तस्मात्प्रागेव श्रीरपैति तस्मात् नृणां पत्युः प्रागेव पूर्वमेव श्रीर्लक्ष्मीरपैति। यस्त्वां हतवृत्तिर्देव नृपतिरायोधनबद्धमतिः प्रयाति हे देव परमाराध्य, यो नृपतिर्नरेन्द्र आयोधनबद्धमतिः आयोधने संग्रामे बद्धा निश्चितीकृता नियन्त्रिता मतिर्बुद्धिर्यस्य स आयोधनबद्धमतिः त्वां भवन्तं प्रति प्रयाति गच्छति अभिषेणयति। स कथंभूतः। हतवृत्तिः हता विनष्टा वृत्तिः जीवनोपायो यस्य सः ॥

स करेणाङ्गाराकर्षणानि विषधरफणमणिभिर्भूषणानि ।
हरिकण्ठसटाभिर्वीजितानि दिक्करटिविषाणैः क्रीडितानि ।
फालेनाकाशमितानि नाम ननु कर्तुं वाञ्छति धैर्यधाम ॥ १९९ ॥
लक्ष्मीरतिलोल प्रणयिगङ्ग परकीर्तिवधूग्रहणाभिषङ्ग ।
यस्तव परनारीरतिनिवृत्तिमाख्याति यथार्थमसौ न वेत्ति ॥ २०० ॥
तव नासीरोद्धतरेणुरागमज्जत्किरणो रविरसितभागः ।
आभाति त्रपुदर्पणसमानविम्बः क्षितिरमणीरतिनिधान ॥ २०१ ॥

---

स हतवृत्तिः किं करोति । हे धैर्यधाम, करेण हस्तेन ननु अहो अङ्गाराकर्षणानि अग्निखण्डानामाताननानि कर्तुं वाञ्छति । स नृपतिः विषधरफणमणिभिर्भूषणानि विषधरस्य शेषनागस्य फणानां दर्वीणां संवन्धिभिर्मणिभिः रत्नैः कृत्वा भूषणानि आभरणानि कर्तुं वाञ्छति । हरिकण्ठसटाभिर्वीजितानि हरेः सिंहस्य कण्ठस्य ग्रीवायाः सटाभिः केसरैः कृत्वा वीजितानि चामरकर्माणि कर्तुं वाञ्छति । दिक्करटिविषाणैः क्रीडितानि दिक्करटिनां आशागजानां विषाणैर्दन्तमुसलैः क्रीडितानि रमणानि कर्तुं वाञ्छति । नामेति संभावनायाम् ॥

हे लक्ष्मीरतिलोल लक्ष्म्या रतौ भोगे लोलो लम्पटस्तस्य संवोधनम् । हे प्रणयिगङ्ग प्रणयिनी अग्रमहिषी गङ्गानाम्नी यस्य तस्य संवोधनम् । परकीर्तिवधूग्रहणाभिषङ्ग परकीर्तिवध्वाः शत्रुकीर्तिकामिन्याः ग्रहणे स्वीकरणे अभिषङ्गः तस्य संवोधनम् । यस्तव परनारीरतिनिवृत्तिमाख्याति यथार्थमसौ न वेत्ति यो विद्वान् तव भवतः परनारीरतिनिवृत्तिं परनारीसोदरत्वं आख्याति कथयति असौ विद्वान् यथार्थं सम्यगर्थं न वेत्ति न जानाति । यतो लक्ष्मीर्नारायणकलत्रम्, गङ्गा शान्तनोः कलत्रं श्रीमहादेवेन अवधृता च, परकीर्तिवधूः सापि शब्दच्छलेन परस्त्री वर्तते । कथं भवान् । परनारीसोदरः । निन्दास्तुतिरलंकारः ॥

[ [१]तव नासीरोद्धतरेणुरागमज्जत्किरणो रविरसितभागः । आभाति त्रपुदर्पणसमानविम्बः क्षितिरमणीरतिनिधान ] हे क्षितिरमणीरतिनिधान पृथ्वीस्त्रीसंभोगमन्दिर, तव भवतो नासीरस्य सेनायाः उद्धत उद्गत उच्छलितो योऽसौ रेणुर्धूलिस्तस्य रागेण मज्जन्तो ब्रुडन्तः किरणाः रश्मयो यस्य तथा एवंगुणविशिष्टो रविः श्रीसूर्यः असितभागो मलिनविम्बः सन् आभाति विदुषां चेतःसु चमत्करोति । कीदृशश्चमत्करोति । त्रपुदर्पणसमानविम्बः त्रपुणः पिच्चटस्य योऽसौ दर्पण आदर्शस्तस्य समानं सदृशं बिम्बं मण्डलं यस्य रवेः स तथा ॥

---

१. मूलपाठोऽयम्.

तव सेनाजनसेविततटासु परिशुष्यद्वारिषु निम्नगासु ।
करिधावधरणिसमतोचितानि नूनं भवन्ति नृप विस्तृतानि ॥ २०२ ॥
त्वत्कुञ्जरहयरथभटभरेण चूर्णीकृतदुर्गपरम्परेण ।
रिपुविषयेष्वहितारण्यदाव दुर्गत्वमुमाप्रतिमास्थमेव ॥ २०३ ॥
भवतोऽम्बुधिरोधःकाननेषु दिग्विजयव्याजप्रस्थितेषु ।
सैन्येषु द्विषतां दर्शनानि संमुखमायान्ति न गर्जितानि ॥ २०४ ॥

---

[ तव[1] सेनाजनसेविततटासु परिशुष्यद्वारिषु निम्नगासु । करिधावधरणिसमतोचितानि नूनं भवन्ति नृप, विस्तृतानि ] हे नृप, तव भवतः सेनाजनैः कटकलोकैः सेवितानि उषितानि निवासीकृतानि तटानि कूलानि रोधांसि यासां तास्तथा तासु । परिशुष्यद्वारिषु परि समन्तात् शुष्यन्ति विलयं यान्ति वारीणि जलानि यासां ताः परिशुष्यद्वारयस्तासु एवंगुणविशिष्टासु निम्नगासु गङ्गा-यमुना-सरयू-चामिला-रेवा-कावेर्यादिषु विस्तृतानि विस्तारा नूनं निश्चयेन भवन्ति संजायन्ते । कीदृशानि भवन्ति । करिधावधरणिसमतोचितानि करिधावधरणीनां गजदमनभूमीनां समता साम्यं तस्या उचितानि योग्यानि भवन्ति ॥

[त्वत्कुञ्जरहयरथभटभरेण चूर्णीकृतदुर्गपरम्परेण । रिपुविषयेष्वहितारण्यदाव दुर्गत्वमुमाप्रतिमास्थमेव] हे अहितारण्यदाव हे शत्रुवनदावानल, रिपुविषयेषु शत्रुदेशेषु दुर्गत्वं उमाप्रतिमास्थं वर्तते, नान्यत्र दुर्गमस्ति । केन कृत्वा । तद्धेतुगर्भितं कारणमाह— तव भवतः कुञ्जराश्च हस्तिनः, हयाश्च वीतयः, रथाश्च स्यन्दनाः, भटाश्च सहस्रभटलक्षभटकोटीभटाः पत्तयस्तेषां भरेण समूहेन । कथंभूतेन । चूर्णीकृता शतखण्डीकृता दुर्गाणां प्राकाराणां परम्परा श्रेणिर्येन स तथा तेन । हेतुपरिसंख्यालंकारः ॥

[भवतोऽम्बुधिरोधःकाननेषु दिग्विजयव्याजप्रस्थितेषु । सैन्येषु द्विषतां दर्शनानि संमुखमायान्ति न गर्जितानि] हे अहितारण्यदाव, भवतस्तव सैन्येषु कटकेषु अम्बुधिरोधःकाननेषु समुद्रतटवनेषु विषयेषु दिग्विजयव्याजप्रस्थितेषु दिग्विजयव्याजेन मिषेण प्रस्थितेषु प्रयाणं प्राप्तेषु सत्सु द्विषतां शत्रूणां दर्शनानि प्राभृतानि कोऽर्थः रत्नपट्टदुकूलाश्वगजस्त्रीरत्नानि सारवस्तूनि संमुखं अभिमुखं यान्ति, न गर्जितानि न गलवलितानि संमुखमायान्ति । दीपकालंकारः ॥

---

1. मूलपाठोऽयम्.

गृहव्याप्यः सलिलधयो नृचन्द्र कुलशैलाः केलिनगा नरेन्द्र।
लङ्कादिद्वीपविधिसमर्थभूतः प्रतिवेशनिभः कृतार्थ ॥ २०५ ॥
दिक्कुम्भिस्तम्भाः सोच्छ्रयस्य[1] जाताः प्रशस्तिपट्टा जयस्य।
यस्येत्थं तव महिमा महीन किमसाध्यं तस्य गुणैरहीन ॥ २०६ ॥
गर्जिं जहीहि भोजावनीश चेदीश विशाश्मवशं प्रदेशम्।
अश्मन्तक वेश्म विहाय याहि पल्लव लघु केलीरसमपैहि ॥ २०७ ॥
चोलेश जलधिमुल्लङ्घ्य तिष्ठ पाण्ड्य स्वयमुज्झ हतप्रतिष्ठ।
वेरम पर्यट मलयोपकण्ठमागच्छत नो चेत्पादपीठम् ॥ २०८ ॥
ईशस्य निषेवितुमाशु सदसि तव दूतैरेवं देव वचसि।
कथिते सति स क्षितिपः किमस्ति यः सेवाविधिषु न ते चकास्ति ॥२०९॥

---

[गृहवाप्यः[2] सलिलधयो नृचन्द्र कुलशैलाः केलिनगा नरेन्द्र। लङ्कादिद्वीपविधिसमर्थभूतः प्रतिवेशनिभः कृतार्थ ॥ दिक्कुम्भिस्तम्भाः सोच्छ्रयस्य जाताः प्रशस्तिपट्टा जयस्य। यस्येत्थं तव महिमा महीन किमसाध्यं तस्य गुणैरहीन] हे नृचन्द्र मानवशशाङ्क, हे नरेन्द्र राजाधिराज, हे कृतार्थ कृते पुण्ये अर्थः प्रयोजनं यस्येति स कृतार्थः कृतकृत्यो वा तस्य संबोधनम्। हे महीन पृथ्वीपते, हे गुणैरहीन गुणैरौदार्यशौण्डीर्यगाम्भीर्यवीर्यादिभिर्गुणैरहीनः परिपूर्णस्तस्य संबोधनम्। यस्य तव भवत इत्थममुना प्रकारेण महिमा माहात्म्यं वर्तते तस्य तव असाध्यं अगम्यं [किं] वर्तते, अपि तु न किमप्यसाध्यमस्ति। इत्थं कथमिति चेत्, सलिलधयः समुद्रा गृहवाप्यः सदनसरोवराणि वर्तन्ते। कुलशैलाः कुलपर्वता हिमवत्सह्यविन्ध्यादयः केलिनगाः क्रीडापर्वता वर्तन्ते। लङ्कादिद्वीपविधाने विषमस्थाने समर्थभूतोऽपि बलवत्तरोऽपि प्रतिवेशनिभः प्रतिगृहसमानो वर्तते। दिक्कुम्भिस्तम्भा दिग्गजेन्द्रबन्धनस्तम्भास्तव जयस्य प्रशस्तिपट्टा जाताः प्रसिद्धिपाषाणा बभूवुः। कथंभूतस्य जयस्य। सोच्छ्रयस्य लक्ष्म्युन्नतस्य। आक्षेपालंकारः॥

[गर्जिं जहीहि भोजावनीश चेदीश विशाश्मवशं प्रदेशम्। अश्मन्तक वेश्म विहाय याहि पल्लव लघु केलीरसमपैहि॥ चोलेश जलधिमुल्लङ्घ्य तिष्ठ पाण्ड्य स्वयमुज्झ हतप्रतिष्ठ। वेरम पर्यट मलयोपकण्ठमागच्छत नो चेत्पादपीठम्॥ ईशस्य निषेवितुमाशु सदसि तव दूतैरेवं देव वचसि। कथिते सति स क्षितिपः किमस्ति यः सेवाविधिषु न ते चकास्ति] हे देव हे राजन्, तव दूतैर्भवतो वचोहरैः एवं अमुना प्रकारेण वचसि वचने निर्मृष्टतया कथिते सति सदसि सभायां जल्पिते सति कश्चित् स क्षितिपो राजा किं अस्ति वर्तते,

---

१. 'श्र्योच्छ्रयस्य' इति सटीकपुस्तके. २. मूलपाठोऽयम्.

केरलमहिलामुखकमलहंस वङ्गीवनिताश्रवणावतंस।
चोलस्त्रीकुचकुड्मलविनोद पल्लवरमणीकृतविरहखेद ॥ २१० ॥
कुन्तलकान्तालकभङ्गनिरत मलयाङ्गनाङ्गनखदाननिरत।
वनवासियोषिदीक्षणविमुग्ध कर्णाटयुवतिकैतवविदग्ध।
कुरुजाङ्गलललनाकुचतनुत्र कम्बोजपुरन्ध्रीतिलकपत्र ॥ २११ ॥
पद्धतिका ॥

---

अपि तु न वर्तते। स कः। यो राजा ते तव सेवाविधिषु चरणसेवनविधानेषु ते न चकास्ति न जागर्ति, अपि तु सर्वोऽपि नृपवर्गस्तव सेवां करोतीत्यर्थः। एवं कथमिति चेत् हे भोजावनीश धरापते, त्वं गर्जि गर्जनं गलवल्गनं संग्रामसुभटत्वं जहीहि जहाहि मुञ्च। हे चेदीश कुण्डिनपुरपते, अश्मवशं प्रदेशं पर्वतसंबन्धिनीं भूमिं विश प्रवेशं कुरु। हे अश्मन्तक सपादलक्षपर्वतनिवासिन्, त्वं वेश्म गृहं विहाय त्यक्त्वा याहि गच्छ। हे पल्लव पञ्चद्रामिल, केलीरसं क्रीडास्वादं लघु शीघ्रं अपैहि परित्यज। हे चोलेश। चोलदेशो दक्षिणापथे वर्तते। [1]सङ्गापुरपते, जलधिं पूर्वसमुद्रं उल्लङ्घ्य परं तीरं गत्वा तिष्ठ आस्व। हे पाण्ड्य सूक्ष्मवस्त्रोत्पत्तिनगराधीश। दक्षिणापथा[2]श्रितः पाण्ड्यो देशो वर्तते। पाण्ड्यो देशो द्विविधः—पाण्ड्यः, अन्तरपाण्ड्यश्च। त्वं स्वयं गर्वं उज्झ परित्यज। कथंभूत हे पाण्ड्य। हतप्रतिष्ठ हता शतखण्डीकृता प्रतिष्ठा शोभा यस्येति तस्य तिरस्कारः क्रियते हे हतप्रतिष्ठ। हे वेरम दक्षिणापथपते, त्वं मलयोपकण्ठं चन्दनाचलसमीपं पर्यट पर्यटनं कुरु। एते सर्वेऽपि यूयं चेत् यद्येवं न कुरुत तर्हि आशु शीघ्रं ईशस्य श्रीमारदत्तमहाराजस्य पादपीठं सिंहासनं सेवितुमाराधितुं सदसि सभायां आगच्छत आयात। काकाक्षिगोलकन्यायेन सदसिशब्दस्य उभयत्र ग्रहणम्। आक्षेपालंकारः ॥

केरलमहिलामुखकमलहंस, अयोध्यानगरात् दक्षिणापथे केरलदेशो वर्तते तस्य संबन्धिन्यो या महिलाः स्त्रियस्तासां मुखकमलानां विकासने हंसः श्रीसूर्यस्तस्य संबोधनम्। अथवा तासां मुखकमलेषु विकासहंसः श्वेतगरुत्पक्षी। वङ्गीवनिताश्रवणावतंस वङ्गीवनितानां विनीतायाः अयोध्यायाः पूर्वदिक्स्त्रीणां रत्नपुरस्त्रीणां श्रवणेषु कर्णेषु अवतंसः कर्णपूरस्तस्य संबोधनम्। चोलस्त्रीकुचकुड्मलविनोद चोलस्त्रीणा विनीताया दक्षिणदिक्स्त्रीणां कुचकुड्मलेषु विनोदः क्रीडा यस्येति तस्य संबोधनम्। पल्लवरमणीकृतविरहखेद पल्लवरमणीनां पञ्चद्रामिलस्त्रीणां कृतो विहितो विरहस्य विप्रलम्भस्य वियोगस्य खेदो दुःखं येन तस्य संबोधनम् ॥

कुन्तलकान्तालकभङ्गनिरत कुन्तलकान्तानां पूर्वदेशस्त्रीणां अलकभङ्गेषु केशानां विरलीकरणेषु निरतस्तत्परस्तस्य संबोधनम्। मलयाङ्गनाङ्गनखदाननिरत मलयाङ्गनाङ्गे नखदाने पुनर्भवभेदकरणे निरतस्तत्परस्तस्य संबोधनम्। वनवासियोषिदीक्षणविमुग्ध

---

१. 'गङ्गापुर' इति सटीकपुस्तके. २. 'पथमाश्रित्य'.

नृपनृपतीश्वर भूरमणीश्वर यदिदमखिलगुणसंश्रय ।
उक्तं किंचित्त्वत्स्तुतिकृतिचित्तच्चित्रं न महोदय ॥ २१२ ॥

घत्ता ॥

यैरिन्दिरामन्दिर सुन्दरेन्द्र स्त्रीराजकन्दर्प नतैर्नरेन्द्रैः ।
दृष्टोऽसि दृष्टाः क्षितिप क्षितीशाः कामैर्न कैरुत्सवकारिभिस्ते ॥२१३॥

हस्तागतैस्त्रिदिवलोकगतैस्तटीध्र-
रन्ध्रान्तरालनिरतैश्च सपत्नजातैः ।
शौर्ये जगत्त्रयपुरीप्रथिते तवेत्थं
को नाम विक्रमपराक्रमवानिहास्तु ॥ २१४ ॥

---

वनवासियोषितां गिरिसोपानगरादिस्त्रीणां ईक्षणे अवलोकने विमुग्धः विशेषेण मोहवान् तस्य संबोधनम् । कर्णाटयुवतिकैतवविदग्ध कर्णाटयुवतीनां विदरादिस्त्रीणां कैतवे कपटेनालिङ्गने विदग्धश्चतुरस्तस्य संबोधनम् । कुरुजाङ्गलललनाकुचतनुत्र कुरुजाङ्गलललनानां हस्तिनापुरस्त्रीणां कुचयोस्तनुत्रं कञ्चुकस्तस्य संबोधनम् । कम्बोजपुरन्ध्रीतिलकपत्र कम्बोजपुरन्ध्रीणां काश्मीरादिदेशस्त्रीणां वृहन्मुण्डानां तिलकाभरणस्तस्य संबोधनम् ॥ पद्धतिका । षोडशमात्राछन्दः । रूपकम् ॥

हे नृपनृपतीश्वर राजाधिराज । हे भूरमणीश्वर हे पृथ्वीस्त्रीपते । हे अखिलगुणसंश्रय हे निखिलगुणनिवास । हे महोदय हे अद्भुतोदय । यत्किंचित् इदं पूर्वोक्तलक्षणं त्वयि किंचिदुक्तं प्रतिपादितम् । कथंभूतं उक्तम् । त्वत्स्तुतिकृतिचित् तव स्तुतिकृतौ भवतः स्तुतिकरणे चित् चेतनं आत्मस्वरूपं यत्र उक्ते तत् त्वत्स्तुतिकृतिचित् तत् उक्तं स्तुतिवचनं चित्रं आश्चर्यभूतं न भवति प्रत्युत तव गुणा एतस्मादपि अधिका वर्तन्ते । घत्ता । इदं घत्ताछन्दः । घत्तालक्षणं यथा—षष्टिमात्राभिर्घत्ता भवति । क्वचिद्द्विषष्टिमात्राभिर्भवति । सप्तविंशतिभेदा घत्ता भवति ॥

**यैरिन्दिरामन्दिरेत्यादि** । हे इन्दिरामन्दिर लक्ष्मीनिवास । हे सुन्दरेन्द्र हे मनोहरशक्र । हे स्त्रीराजकन्दर्प हे स्त्रीणां उत्तमकामदेव । हे क्षितिप हे पृथ्वीपते । यैर्नतैः नम्रीभूतैर्नरेन्द्रैर्नृपैस्त्वं दृष्टोऽसि अवलोकितोऽसि ते क्षितीशास्ते राजानः उत्सवकारिभिरानन्दकारिभिः कामैर्भोगैर्न दृष्टा नावलोकिताः, अपि तु सर्वैरपि कामैस्ते नरेन्द्रा दृष्टाः । आक्षेपालंकारः ॥

**हस्तागतैरित्यादि** । हे राजन्, इत्थं अमुना प्रकारेण तव भवतः सपत्नजातैः शत्रुसमूहैः शौर्ये सुभटत्वे जगत्त्रयपुरीप्रथिते सति त्रैलोक्यनगरीविख्याते सति कः पुमान् । नामेति संभावनायाम् । इह अस्मिन् संसारे विक्रमपराक्रमवान् सामर्थ्योद्यमवान् अस्तु भवतु । अपि तु न कश्चिद्विक्रमवान् पराक्रमवान् भवेत् । कथंभूतैः सपत्नजातैः । हस्ताग-

सोऽपि राजा तयोरेवमभिनन्दतोर्वाचि वपुषि चानन्यजनसाधारणीं मधुरतां निर्वर्ण्य 'क्वेदं करतलस्पर्शेनापि हार्यसौकुमार्यं वपुः, क्व चायं वयःपरिणामकठोरकरणैरपि महासत्त्वाधिकरणैर्निर्वोढुमशक्यारम्भस्तपःप्रारम्भः, क्वेमानि सकलचक्रवर्तिपदनिवेदनपिशुनानि कङ्केल्लिपल्लवच्छविषु करचरण-

---

तैर्बन्धनवद्धैः। बन्दीगृहे क्षिप्तैरित्यर्थः। पुनः कथंभूतैः शत्रुजातैः। त्रिदिवलोकगतैः स्वर्गलोकं प्राप्तैः। मृतैरित्यर्थः। अपरं कथंभूतैः शत्रुजातैः। तटीध्ररन्ध्रान्तरालनिरतैश्च तटीध्राणां पर्वतानां रन्ध्राणि प्रच्छन्नापादुकानि तेषां अन्तरालेषु मध्येषु प्रदेशेषु निरतैः स्थितैः। दीक्षां गृहीत्वा पर्वतगुहादिषु तपश्चरणप्राप्तैरित्यर्थः। समुच्चयाक्षेपालंकारः॥

स राजा पृथ्वीपालको भूपोऽपि अमुना प्रकारेण प्रविचिन्त्य सम्यग्विचार्य सप्रश्रयं विनयसहितं यथा भवत्येवं तन्मिथुनं प्रति मुनिकुमारकयुगलं प्रति बभाषे उक्तवान्। किमुक्तवान्। भवतोर्युवयोः प्रसूत्यै जन्मने। नामेति संभावनायाम्। को देशो वर्तते, भवतोः प्रसूत्यै उत्पत्तये किं वा कुलमन्वयो वर्तते, यत्र कुले भवतोर्युवयोः जन्म आत्मलाभो बभूव संजातम्। अज्ञातसंसारसुखं संसारसुखास्वादरहितं भवतश्चेतो मनः प्रव्रजनाय दीक्षाग्रहणाय कुतः कस्मात् कारणात् बाल्ये शिशुत्वे जातमुत्पन्नम्। एतत्पूर्वोक्तस्य प्रश्नत्रयस्य मम प्रार्थनतो मम याचनया उत्तरं अभिधेयं कथनीयम्। ईदृशो नृपो मुनिकुमारकयुगले प्रार्थनं कृतवानिति तमेवार्थं अर्थान्तरन्यासेन द्रढयति—सन्तः सत्पुरुषाः साधुषु रत्नत्रयाराधकेषु मुनिषु अनुकूलवाचो हितवचनाः कोमलालापाः भवन्ति। कथम्। हि। स्फुटमिति शेषः। अर्थान्तरन्यासालंकारः॥

इतीति किं प्रविचिन्त्य। चकारात् पुनश्च किं कृत्वा बभाषे। तयोरभयरुच्यभयमत्योरेवं पूर्वोक्तप्रकारेणाभिनन्दतोः स्तुतिं कुर्वतोः वाचि भारत्यां वपुषि च शरीरे अनन्यजनसाधारणीं अनुपमां मधुरतां मिष्टतां निर्वर्ण्य अवलोक्य चिन्तयेति(न्तितम्) राज्ञा—क्व इदं प्रत्यक्षीभूतं वपुः शरीरं वर्तते। कथंभूतं वपुः। करतलस्पर्शेनापि हार्यं सौकुमार्यं कोमलत्वं यस्य वपुषस्तत् करतलस्पर्शेनापि हार्यसौकुमार्यम्। क्व च अयं प्रत्यक्षीभूतः तपःप्रारम्भो वर्तते। कथंभूतस्तपःप्रारम्भः। वयःपरिणामकठोरकरणैरपि वयसो यौवनस्य परिणामेन परिपक्वतया कठोराणि कर्कशानि करणानि इन्द्रियाणि येषां ते वयःपरिणामकठोरकरणास्तैः महासत्त्वाधिकरणैः महासत्त्वस्य महासाहसस्य अधिकरणानि आधारभूता येषु पुरुषास्ते महासत्त्वाधिकरणास्तैर्महासत्त्वाधिकरणैः निर्वोढुं निर्वाहं कर्तुं अशक्यारम्भो अशक्यः कर्तुमिदं न शक्य आरम्भो राभस्यं यस्य तपःप्रारम्भस्य स तथोक्तः। क्व इमानि प्रत्यक्षीभूतानि करचरणतलेषु पाणिपादतलेषु लक्षणानि वर्तन्ते। कथंभूतेषु करचरणतलेषु कङ्केल्लिपल्लवच्छविषु अशोकतरुपल्लवसदृशेषु। कथंभूतानि लक्षणानि। सकलचक्रवर्तिपदनिवेदनपिशुनानि षट्खण्डपृथ्वीपतिराज्यकथनसूचकानि। क्व चायं

तलेषु लक्षणानि, क्व चायमादित एवाजन्मभिक्षाकसमक्रमः प्रक्रमः । अहो आश्चर्यम् । कथमाभ्यामसत्यतां नीतोऽयं प्रत्यङ्गफलनिर्देशः ।

किं च नीलमणिसस्यानि कुन्तलेषु, शिशिरकरपरार्धतां भालयोः, तरङ्गरेखाश्चिल्लीषु, रत्नसमुच्चयं लोचनयुगलयोः, कौस्तुभोत्पत्तिं कपोलेषु, अमृतधाराप्रवाहं नासयोः, गम्भीरत्वमालापेषु, प्रवालपल्लवोल्लासं रदनच्छदयोः, सुधारसप्रभा स्मितिषु, प्रचेतःपाशान्श्रवणविषये, कम्बुकान्तिं कण्ठयोः, वी-

---

प्रत्यक्षीभूतः प्रक्रमः प्रारम्भः । कथंभूतः प्रक्रमः । आदित एव प्रथमत एव आजन्मभिक्षाकसमक्रमः आजन्मतो जन्मत आरभ्य भिक्षां आकन्ति आस्वादयन्ति एते आजन्मभिक्षाकास्तैः समक्रमोऽनुपरिपाटी यस्य प्रक्रमस्य स तथोक्तः । अहो आश्चर्यम् अद्भुतमेतत् । कथं केन प्रकारेण द्वाभ्यां आभ्यां अयं प्रत्यक्षीभूतः प्रत्यङ्गफलनिर्देशः फलकथनं सामुद्रशास्त्रं असत्यतां नीतो व्यर्थतां प्रापितः । विषमालंकारः ॥

किं च अस्ति कश्चिद्विशेषः । नूनं निश्चयेन अनेन प्रत्यक्षीभूतेन प्रजापतिना ब्रह्मणा सपरिवारः समुद्रस्य परिवारसहितः पारावारसहितः पारावार एव समुद्र एव न अन्यः कश्चित्परमुत्कृष्टं निष्केवलं वा दारिद्यं दुर्गतत्वं दुर्विधत्वं आनिन्ये आनीतः । प्रजापतिना किं कुर्वता । [1]......................................................
उक्तं च विद्यानन्देन—'सृजति करोति प्रणयति घटयति निर्माति निर्मिमीते च । अनुतिष्ठति विदधाति च रचयति कल्पयति चेति करणार्थे ॥' [प्रजापतिना पुनः किं कुर्वता ।] [2]
..............................................प्रजापतिना पुनः किं कुर्वता । अस्य मिथुनस्य चिल्लीषु भ्रूषु तरङ्गरेखा कल्लोलरेखा लहरीरेखाः सृजता । प्रजापतिना पुनः किं कुर्वता । अस्य मिथुनस्य लोचनयुगलयोः नेत्रद्वन्द्वयोः रत्नसमुच्चयं श्वेतकृष्णरक्तमाणिक्यसमूहं सृजता । प्रजापतिना पुनः किं कुर्वता । अस्य मिथुनस्य कपोलेषु गण्डस्थलेषु कौस्तुभोत्पत्तिं कौस्तुभरत्नोत्पत्तिं सृजता । प्रजापतिना पुनः किं कुर्वता । अस्य मिथुनस्य आलापेषु स्वरेषु अमृतधाराप्रवाहं सृजता । [3]......................
नाम (स)योः गम्भीरत्वमतलस्पर्शत्वं सृजता । प्रजापतिना पुनः अस्य रदनच्छदयोरधरयोर्विषये प्रवालपल्लवोल्लासं विद्रुमकुम्पलप्रादुर्भावं सृजता । प्रजापतिना पुनः अस्य स्मितिषु ईषद्धासेषु सुधारसप्रभा अमृतरसतेजांसि सृजता । प्रजापतिना पुनः अस्य श्रवणविषये शब्दग्रहेषु प्रचेतःपाशान् वरुणदिक्पालायुधानि सृजता । प्रजापतिना पुनः अस्य कण्ठयोर्ग्रीवयोः कम्बुकान्तिं दक्षिणावर्तशोभां सृजता । प्रजापतिना पुनः

---

१. 'प्रवाहमालापेषु, गम्भीरत्वं नासयोः' इत्येवं पाठष्टीकानुसारी.

---

१.–२.–३. पुस्तकत्रयेऽप्यत्र पाठस्त्रुटितः.

चिविलसितानि वाहासु, लक्ष्मीचिह्नानि करतलेषु, रमावेश्मशोभामुरःस्थलयोः, वेत्रवेल्लितानि वलिषु, आवर्तविभ्रमं नाभिदेशयोः, पृथुत्वं नितम्बदेशे[1], वृत्तिगुणनिर्माणमुरुषु, मुक्ताफलप्रसूतिं चरणनखेषु, लावण्यरसनिर्भरत्वं चास्य मिथुनस्य तनौ, अनेन सृजता प्रजापतिना नूनं सपरिवारः पारावार एव परं दारिद्र्यमानिन्ये।

अपि च।

यत्रामृतेन समजन्म विभाति विश्वं
यत्रेन्दुना सह रतिं भजतेऽम्बुजश्रीः।
लावण्यमेव मधुरत्वमुपैति यत्र
तद्वर्ण्यते किमिव रूपमयं जनोऽस्य ॥ २१५ ॥

---

अस्य वाहासु भुजेषु वीचिविलसितानि लहरीशोभितानि सृजता। प्रजापतिना पुनः अस्य करतलेषु हस्ततलेषु लक्ष्मीचिह्नानि लक्ष्मीलक्षणानि सृजता। प्रजापतिना पुनः अस्य उरःस्थलयोर्हृदयस्थलयोः रमावेश्मशोभां लक्ष्मीमन्दिरशोभां सृजता। प्रजापतिना पुनः अस्य वलिषु उदररेखासु विषये वेत्रवेल्लितानि सृजता। प्रजापतिना पुनः अस्य नाभिदेशयोः आवर्तविभ्रमं सृजता। प्रजापतिना पुनः अस्य नितम्बदिशि कटिपश्चाद्भागप्रदेशे पृथुत्वं विस्तीर्णत्वं सृजता। प्रजापतिना पुनः अस्य उरुषु सक्थिषु वृत्तिगुणनिर्माणं सृजता वर्तुलगुणरचनां कुर्वता। प्रजापतिना पुनः चरणनखेषु पादपुनर्भवेषु मुक्ताफलप्रसूतिं मौक्तिकोत्पत्तिं सृजता। प्रजापतिना पुनरस्य तनौ सर्वस्मिन्नङ्गे लावण्यरसनिर्भरत्वं कान्तिरसगाढत्वं कुर्वता। उत्प्रेक्षालंकारः ॥

अपि च तथा च विशेषमाह—यत्रामृतेनेत्यादि। अस्य मुनिकुमारकयुगलस्य तत् रूपं स्वरूपं अयं प्रत्यक्षीभूतो जनो लोकः किमिव वर्ण्यते कीदृशमिव कथयेत्। तत्किं यत्र यस्मिन् रूपे विश्वं शरीरं आपादमस्तकपर्यन्तं शरीरं अमृतेन पीयूषेण समजन्म सहोत्पत्ति विभाति शोभते। यत्र यस्मिन् रूपे अम्बुजश्रीः कमललक्ष्मीः इन्दुना चन्द्रेण सह रतिं भजते संतोषं कुरुते। अम्बुजस्थानीये नेत्रयुगले चन्द्रस्थानीये द्वे मुखे इत्यर्थः। यत्र यस्मिन् रूपे लावण्यमेव लवणिमेव मधुरत्वं मिष्टत्वं उपैति गच्छति। लवणं क्षारगुणं मधुरत्वं अमृतवत् मिष्टगुणं एतत्सर्वं विपरीतं कविजनः कथं वर्णयति। अपि तु न शक्नोतीत्यर्थः। आक्षेपोपमा ॥

---

1. 'दिशि' इति पाठष्टीकानुसारी.

इति क्षणं च प्रविचिन्त्य भूपः सप्रश्रयं तन्मिथुनं बभाषे ।
को नाम देशो भवतोः प्रसूत्यै किं वा कुलं यत्र बभूव जन्म ॥२१६॥
अज्ञातसंसारसुखं च बाल्ये जातं कुतः प्रव्रजनाय चेतः ।
एतन्मम प्रार्थनतोऽभिधेयं सन्तो हि साधुष्वनुकूलवाचः ॥ २१७ ॥

**मुनिकुमारः—**

नान्यत्र दीक्षाग्रहणान्मुनीनां संकीर्तनं तत्त्रितयस्य युक्तम् ।
तथापि तत्कर्तुमहं यतिष्ये भवन्ति भव्येषु हि पक्षपाताः ॥ २१८ ॥

ध्यानज्योतिरपास्ततामसचयः स्फारस्फुरत्केवल-
ज्ञानाम्भोधितटैकदेशविलसत्त्रैलोक्यवेलाचलः ।
आनम्रेन्द्रशिखण्डमण्डनभवत्पादद्वयाम्भोरुहः
श्रीनाथ प्रथितान्वयस्य भवतो भूयाज्जिनः श्रेयसे ॥ २१९ ॥

---

मुनिकुमारः अभयरुचिर्ब्रूते—**नान्यत्रेत्यादि** । मुनीनां यतीनां तत्त्रितयस्य देश-कुलदीक्षाग्रहणत्रयस्य संकीर्तनं कथनं युक्तं न भवति । कथम् । अन्यत्र वर्जयित्वा । कस्मादन्यत्र । दीक्षाग्रहणात् । 'दिगितरर्तेऽन्यैश्च' इति सूत्रेण पञ्चमीविधानम् । देशकुलयोः संकीर्तनेनैवोत्पत्तिसद्भावो यस्मात् । यद्यप्येवं तथापि तत्कर्तुं तत्त्रितयस्य संकीर्तनं विधातु-महं यशस्तिलकनामा यतिः यतिष्ये यत्नं करिष्यामि । भव्येषु मुक्तियोग्येषु पुरुषेषु रत्न-त्रयोचितेषु पुरुषेषु पक्षपाताः पक्षपरिग्रहा भवन्ति संजायन्ते । कथं हि स्फुटमिति शेषः । अर्थान्तरन्यासालंकारः ॥

**ध्यानज्योतिरित्यादि** । हे श्रीनाथ हे लक्ष्मीपते, भवतस्तव जिनः श्रीमद्भगवद-र्हत्सर्वज्ञो वीतरागदेवः श्रेयसे कल्याणाय भूयाद्भवतु । कथंभूतस्य भवतः । प्रथितान्वय-स्य विख्यातहरिवंशसमुत्पन्नस्य । कथंभूतो जिनः । ध्यानज्योतिरपास्ततामसचयः ध्यान-ज्योतिषा शुक्लध्यानतेजसा अपास्तो विध्वस्तः समूलकाषं कषितस्तामसचयस्त्रिषष्टि-प्रकृतिसमूहान्धकारो येन स तथोक्तः । पुनः कथंभूतो जिनः । स्फारस्फुरत्केवलज्ञाना-म्भोधितटैकदेशविलसत्त्रैलोक्यवेलाचलः स्फारं प्रचुरतरं लोकालोकव्यापकं स्फुरत् योगिनां चेतःसु चमत्कुर्वत् यत्केवलज्ञानं पञ्चमं ज्ञानं तदेव अम्भोधिः समुद्रोऽतिगम्भी-रत्वात् अपर्यन्तत्वात् च तस्य तटं पारस्तस्यैकदेशे एकस्मिन् पार्श्वे विलसन् शोभमान-स्त्रैलोक्यवेलाचलस्त्रिभुवनवेलापर्वतो यस्य स तथोक्तः । पुनः कथंभूतो जिनः । आन-म्रेन्द्रशिखण्डमण्डनभवत्पादद्वयाम्भोरुहः आनम्राः समन्तात् चरणयोः पतिता ये इन्द्राः सौधर्मेन्द्राद्यच्युतपर्यन्ताः शक्रास्तेषां शिखण्डानां मस्तकानां मण्डनं भूषणं भवत्संजाय-मानं पादद्वयाम्भोरुहं चरणयुगलकमलं यस्य स तथोक्तः । रूपकातिशयालंकारः ॥

---

१. 'वदानाः' इति पाठः सटीकपुस्तके.

सोऽयमाशार्पितयशा महेन्द्रामरमान्यधीः।
देयात्ते संततानन्दं वस्त्वभीष्टं जिनाधिपः॥ २२०॥

इति सकलतार्किकलोकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योऽनवद्यगद्यपद्यविद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महाकाव्ये कथावतारो नाम प्रथम आश्वासः॥

---

अथेदानीं निजनामाङ्कं ददानाः सूरयः श्लोकमाहुः—सोऽयमित्यादि। स जगत्प्रसिद्धोऽयं प्रत्यक्षीभूतो जिनाधिपो जिनराजस्ते तुभ्यं अभीष्टं वस्तु वाञ्छितं वस्तु देयात् ददातु। कथंभूतं वस्तु। संततानन्दं संततं निरन्तरं आनन्दोऽनन्तसौख्यं यस्मिन् वस्तुनि तत् संततानन्दम्। परमनिर्वाणमित्यर्थः। कथंभूतो जिनाधिपः। आशार्पितयशाः आशासु दिक्षु अर्पितमारोपितं यशः पुण्यगुणकीर्तनं यस्य येन वा स आशार्पितयशाः। अपरं कथंभूतो जिनाधिपः। महेन्द्रामरमान्यधीः महेन्द्रैः सर्वनरेन्द्रैरमरैः सर्वदेवैर्मान्या पूजनीया धीः बुद्धिर्यस्य स तथोक्तः। अस्य श्लोकस्य चतुर्षु चरणेषु पूर्वौ वर्णौ गृह्यते, तेन 'सोमदेवः' इति नाम भवति। अतिशयालंकारः॥

इति [सकलतार्किकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योऽनवद्यगद्यपद्यविद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते] यशोधरमहाराजचरिते (यशस्तिलकापरनाम्नि) महाकाव्ये कथावतारो नाम प्रथम आश्वासः] परिच्छेदविशेषः। समाप्त इत्यर्थः। कथंभूते यशोधरमहाराजचरिते। श्रीसोमदेवसूरिणा विरचिते वर्णिते। पुनः कथंभूते। यशस्तिलकापरनाम्नि यशस्तिलकमिति अपरं द्वितीयं नामाभिधानं यस्य तत् तस्मिन् तथोक्ते। कथंभूतेन श्रीसोमदेवसूरिणा। श्रीमन्नेमिदेवभगवतः शिष्येण श्रीमांश्चासौ नेमिदेवो भगवानाचार्यः श्रीमन्नेमिदेवभगवान् तस्य तथोक्तस्य शिष्येण अन्तेवासिना। कथंभूतस्य नेमिदेवभगवतः। सकलतार्किकलोकचूडामणेः सकलाः समग्राश्च ते तार्किकलोकाः षट्तर्कचक्रवर्तिनस्तेषां चूडामणिः शिरोरत्नं तस्य तथोक्तस्य। कथंभूतेन श्रीसोमदेवसूरिणा सद्यस्तत्कालं अनवद्यगद्यपद्यविद्याधरास्तेषां चक्रवर्तिनः सार्वभौमास्तेषां शिखण्डानां मस्तकानां मण्डनीभवत् भूषणं संजायमानं चरणकमलं पादविसप्रसूनं यस्य स तथा तेन॥

इति श्रीविद्यानन्दभट्टारकप्रियशिष्येण भट्टारकश्रीमल्लिभूषणगुरुपरमाभीष्टगुरुभ्रात्रा श्रीलक्ष्मीचन्द्रभट्टारकाभिमतेन श्रीसिंहनन्दगुरुप्रार्थनया सिद्धान्तसागरचक्रनयाख्याकृतिनिमित्तं भट्टारकश्रीनीलकण्ठविद्वद्ब्रह्मराक्षसज्ञोटिङ्गभट्टझञ्झामरुद्भट्टादिनवनवतिमहावादिलब्धविजयेन तर्कव्याकरणछन्दोलंकारसिद्धान्तसाहित्यादिशास्त्रनिपुणमतिना प्राकृतव्याकरणाद्यनेकशास्त्ररचनाचुञ्चुना सूरिश्रीश्रुतसागरेण विरचितायां यशस्तिलकचन्द्रिकाभिधानायां यशोधरमहाराजचरितचम्पूमहाकाव्यटीकायां कथावतारप्रथमाश्वासचन्द्रिका परिसमाप्ता॥

ग्रन्थाग्रन्थसंख्या पञ्चचत्वारिंशच्छती॥

---

1. लेखकप्रमादपतितो मूलपाठः.

द्वितीय आश्वासः ।

श्रीकान्ताकुचकुम्भविभ्रमधरव्यापारकल्पद्रुमाः
स्वर्गस्त्रीजनलोचनोत्पलवनक्रीडाकृतार्थागमाः ।
जन्मापूर्वविभूतिवीक्षणपथप्रस्थानसिद्धाशिषः
पुष्यासुर्मनसो मतानि जगतः स्याद्वादिवादत्विषः ॥ १ ॥

---

अथेदानीं द्वितीयस्याश्वासस्य पद्बन्धनाम्नष्टीका क्रियते । तस्मिन्नाश्वासे आदिमङ्गलार्थं जिनवाक्स्तवनपुरःसरं श्रीसोमदेवाचार्यः नान्दीसूत्रमिदमाह—श्रीकान्तेत्यादि । स्याद्वादिवादत्विषः १ स्यादस्ति, स्यान्नास्ति, स्यादस्तिनास्ति, स्यादवाच्यम्, स्यादस्ति वा वक्तव्यम्, स्यान्नास्ति वा वक्तव्यम्, स्यादस्ति नास्ति वा वक्तव्यम्, इत्येवं स्याच्छब्दपूर्वकं प्रतिवस्तु सप्तभङ्गान् वदतीत्येवंशीलः स्याद्वादी श्रीमद्भगवदर्हत्सर्वज्ञवीतरागस्तस्य वादो द्वादशाङ्गशास्त्रं तस्य त्विषो वाण्यो वचनानि जगतस्त्रैलोक्यस्य तत्रस्थितभव्यजनसमूहस्य मनसश्चित्तस्य मतान्यभीष्टानि पुष्यासुः पोषयन्तु । कथंभूताः स्याद्वादिवादत्विषः । श्रियोऽभ्युदयलक्षणलक्ष्म्यस्ता एव कान्ताः स्त्रियस्तासां कुचाः स्तनास्त एव कुम्भाः कलशाः सुखामृताधारभूतत्वात्तेषां विभ्रमः शोभा तां धरन्तीति श्रीकान्ताकुचकुम्भविभ्रमधराः २........................कल्पद्रुमाः कल्पवृक्षाः । आविष्टलिङ्गत्वादत्र स्त्रीलिङ्गस्य विशेषणं पुंस्त्वम् । पुनः कथंभूताः । स्याद्वादिवादत्विषः स्वर्गस्त्रीजनलोचनोत्पलवनक्रीडाकृतार्थागमाः स्वर्गस्य संबन्धिनो ये स्त्रीजना देवाङ्गनासमूहास्तेषां लोचनानि नेत्राणि तान्येव उत्पलवनानि कुवलयकाननानि । सुखशीतलोत्पादहेतुत्वात् । तेषां तेषु वा या क्रीडा तया कृतार्थः कृतकृत्य आगम आगमनं यासां तास्तथोक्ताः । अपरं कथंभूताः स्याद्वादिवादत्विषः । जन्मापूर्वविभूतिवीक्षणपथप्रस्थानसिद्धाशिषः जन्मन आरभ्य आसंसारमारभ्य आगम आगमनं यासां या अपूर्वा विभूतिः परममुक्तिलक्ष्मीरित्यर्थस्तस्याः वीक्षणपथे अवलोकनमार्गे यत्प्रस्थानं प्रथमनप्रारम्भस्तस्मिन् सिद्धाशिषः श्रीसिद्धचक्रस्य पुष्पाक्षताशिषः । प्रस्थानसिद्धिहेतुत्वादित्यर्थः । उक्तं च—'सर्वथा[3]नियमत्यागी यथा दृष्टमपेक्षकः । स्याद्वादस्तावके न्यायेनान्येषु नात्मविद्विषाम् ॥' तथा चोक्तम्—'भारत्यां व्यवसायेन जिगीषायां रुचौ तथा । शोभायां पञ्चसु प्राहुः विड्ध्वनिं पूर्वसूरयः ॥' रूपकालंकारः । अत्र प्रथमचरणे नरेन्द्रलक्ष्मीप्राप्तिर्वर्णिता, द्वितीयचरणे देवेन्द्रलक्ष्मीसमागमो व्याख्यातः, तृतीयचरणे मुक्तिफलं दर्शितम्, एतत्त्रयदर्शनेन सप्त परमस्थानानि कथितानि भवन्ति । तानि कानीत्याह—'सज्जातिः सद्गृहस्थत्वं पारिव्राज्यं सुरेन्द्रता । साम्राज्यं परमार्हन्त्यं निर्वाणं चेति सप्तधा ॥' एतत्सर्वं जैनभारतीभक्त्या भवतीति भावार्थः ॥

---

१. 'स्यादस्त्यवाच्यम् । स्यान्नास्त्यवाच्यम्' इति सटीकपुस्तकपाठः. २. अत्र पाठः कियान्नष्टो भवेत्. ३. 'नियम' इति टीकानुसारी पाठः.

या नाकलोकपतिमानसराजहंसी
विद्याधरेश्वरविचारविहारदेवी ।
मर्त्याधिपश्रवणभूषणरत्नवल्ली
सा वः श्रियं वितरताज्जिनवाक्प्रसूतिः ॥ २ ॥

अहो जगत्त्रयप्रासादप्रकाशनकीर्तिकुलदेवतामहः महानुभावतोपलासारसृष्टिसूदितकलिकालव्याल धर्मावलोकमहीपाल परिप्राप्तसमस्तशास्त्रोदीर्णार्णवनिर्णय, समाकर्णय—अस्ति खल्विहैव षट्खण्डमण्डलीविभागविचित्रे भरतक्षेत्रे प्रहसितवसुवसतिकान्तयोऽवन्तयो नाम निखिललोकाभिलाषविलासिवस्तुसंपत्तिनिरस्तसुरपादपमदो जनपदः ।

---

पुनश्च भारतीश्रुतिविशेषणमाह—**या नाकलोकेत्यादि** । सा जगत्प्रसिद्धा जिनवाक्प्रसूतिः जैनभारती वो युष्मभ्यं श्रियं अभ्युदयं निःश्रेयसलक्षणोपलक्षितां लक्ष्मीं वितरताद्ददातु । सा का । या जिनवाक्प्रसूतिः नाकलोकपतिमानसराजहंसी नाकलोकपतेर्देवेन्द्रस्य मानसस्य चित्तसरोवरस्य [ क्रीडने क्रीडाकरणे ] राजहंसी राजहंसभार्या वर्तते । पुनः कथंभूता । विद्याधरेश्वरविचारविहारदेवी विद्याधरेश्वरा गणधरदेवा विद्याधरचक्रवर्तिनस्तेषां विचारेषु पर्यालोचनेषु विहारदेवी गृहदेवता वर्तते । पुनः कथंभूता । मर्त्याधिपश्रवणभूषणरत्नवल्ली मर्त्याधिपाः भरतादिश्रेणिकपर्यन्ता राजानस्तेषां श्रवणानां कर्णानां भूषणे मण्डने रत्नवल्ली रत्नजटितकर्णकुण्डलमित्यर्थः । अत्र वृत्ते स्वर्गलोकविद्याधरलोकभूमिगोचरनृपराज्यलक्ष्मीनां दायिका भारती भवतीति भावः । रूपकमिदम् ॥

**अहो इत्यादि** । अहो श्रीमारदत्तमहाराज, जगत्त्रयप्रासादप्रकाशनकीर्तिकुलदेवतामहः जगत्त्रयं त्रैलोक्यं तदेव प्रासाद ऊर्ध्वगतिहेतुत्वात्तस्य प्रकाशने उद्योतकरणे या कीर्तिः पुण्यगुणकीर्तनं सैव कुलदेवता पूर्वपुरुषसंततिसमागमत्वात् तया मह्यते लोकैः पूज्यते स तथा तस्य संबोधनं हे तथोक्त । अहो महानुभावतोपलासारसृष्टिसूदितकलिकालव्याल महानुभावता महाप्रभावः सैव उपलासारसृष्टिः पाषाणवेगवद्वृष्टिसर्गः तया सूदितो निपातितः कलिकाल एव व्यालो दुष्टगजः । अथवा सूदितो निमूलकाषंकपितः कलिकाल एव व्यालः कृष्णसर्पो येन स तथा तस्य संबोधनम् । अहो धर्मावलोकमहीपाल धर्मस्यावलोको रक्षणं तेनोपलक्षितो महीपालो राजा तस्य संबोधनम् । अहो परिप्राप्तसमस्तशास्त्रोदीर्णार्णवनिर्णय परिप्राप्तो विज्ञप्तः समस्तशास्त्रोदीर्णार्णवस्य सकलशास्त्रमहासमुद्रस्य निर्णयो निश्चयो येन स तथा तस्य संबोधनम् । समाकर्णय संमुखीभूय देशकुलदीक्षास्वरूपं सम्यक् त्वं शृणु । **अस्तीत्यादि** । खलु वाक्यालंकारे ।

श्रिया गृहाणि श्रीर्दानैर्दानान्यभ्युपपत्तिभिः ।
यत्र नैसर्गिकीं प्रीतिं भजन्ति सुकृतात्मनाम् ॥ ३ ॥

राजन्ते यत्र गेहानि खेलत्तर्णकमण्डलैः ।
वेलाचलकुलानीव कल्लोलैः क्षीरवारिधेः ॥ ४ ॥

यत्र स्खलद्गतैर्बालैः कान्ताः कुट्टिमभूमयः ।
हंसैः पद्मसरांसीव मृदुगद्गदभाषिभिः ॥ ५ ॥

---

इहैव भरतक्षेत्रेऽस्मिन्नेव जम्बूद्वीपसंबन्धिनि भरतक्षेत्रे अवन्तयो नाम जनपदो देशोऽस्ति विद्यते । कथंभूते भरतक्षेत्रे । षट्खण्डमण्डलीविभागविचित्रे षट्खण्डानां मण्डलीविभागैः देशविभागैः विचित्रे आश्चर्यकारिणि । कथंभूता अवन्तयः । प्रहसितवसुवसतिकान्तयः प्रहसिता तिरस्कृता वसुवसतेः स्वर्गलोकस्य कान्तिः शोभा याभिस्तास्तथोक्ताः । कथंभूतो जनपदः । निखिललोकाभिलाषविलासिवस्तुसंपत्तिनिरस्तसुरपादपमदः निखिलानां समस्तानां लोकानां पञ्चजनानां अभिलाषेषु वाञ्छासु विलसन्ति प्रवर्तन्ते इत्येवंशीलानि यानि तानि निखिललोकाभिलाषविलासीनि तानि च तानि वस्तूनि आभरणभोजनादीनि तेषां संपत्तिभिः प्राप्तिभिः निरस्तस्तिरस्कृतः सुरपादपानां कल्पवृक्षाणां मदोऽहंकारो येन जनपदेन स तथोक्तः । उपमैव ॥

**श्रियेत्यादि** । यत्र यस्मिन्नवन्तिजनपदे गृहाणि मन्दिराणि पस्त्यानि श्रिया सह लक्ष्म्या सार्धं नैसर्गिकीं स्वाभाविकीं प्रीतिं स्नेहं भजन्ति प्राप्नुवन्ति । केषां गृहाणि । सुकृतात्मनां पुण्यवत्पुरुषाणाम् । यत्र यस्मिन् देशे श्रीर्लक्ष्मीर्दानैः सह पात्रदानैः सह प्रीतिं भजन्ति । यत्र यस्मिन् देशे दानानि अभ्युपपत्तिभिरादरैः सह प्रीतिं भजन्ति । दीपकमिदम् ॥

**राजन्त इत्यादि** । यत्र यस्मिन्नवन्तिजनपदे खेलत्तर्णकमण्डलैः रममाणबालवत्सकसमूहैः कृत्वा गेहानि गृहाणि राजन्ते शोभन्ते । कैः कानीव राजन्ते । क्षीरवारिधेः क्षीरसमुद्रस्य कल्लोलैः कृत्वा वेलाचलकुलानीव समुद्रतटस्थितपर्वतवृन्दानीव । उपमैव ॥

**यत्रेत्यादि** । यत्र यस्मिन्नवन्तिजनपदे स्खलद्गतैर्गतिस्खलद्गमनैः बालैः शिशुभिः कृत्वा कुट्टिमभूमयो बद्धधरण्यः कान्ता मनोहरा वर्तन्ते । कुट्टिमभूमयः कानीव । पद्मसरांसीव कमलसरोवराणीव । यथा पद्मसरांसि श्वेतच्छदैः पक्षिभिः हंसैः कृत्वा कान्तानि मनोहराणि भवन्ति । कथंभूतैर्बालैर्हंसैश्च । मृदुगद्गदभाषिभिः मृदूनि कोमलानि गद्गदान्यस्फुटानि वचनानि भाषन्ते ब्रुवन्तीत्येवंशीला मृदुगद्गदभाषिणस्तैस्तथोक्तैः । उपमैव ॥

प्रजाप्रकाम्यसस्याढ्याः सर्वदा यत्र भूमयः ।
मुष्णन्तीवामरावासकल्पद्रुमवनश्रियम् ॥ ६ ॥
नित्यं कृतातिथेयेन धेनुकेन सुधारसैः ।
यत्राक्रियन्त देवानामपार्थाः कामधेनवः ॥ ७ ॥
विभ्रमोल्लासिभिर्यत्र बल्लवीनां विलोकितैः ।
हृता न बहु मन्यन्ते द्युसदोऽनिमिषाङ्गनाः ॥ ८ ॥
जीवितं कीर्तये यत्र दानाय द्रविणग्रहः ।
वपुः परोपकाराय धर्माय गृहपालनम् ॥ ९ ॥
बाल्यं विद्यागमैर्यत्र यौवनं गुरुसेवया ।
सर्वसङ्गपरित्यागैः संगतं चरमं वयः ॥ १० ॥

---

**प्रजेत्यादि** । यत्र यस्मिन्नवन्तिजनपदे भूमयः क्षेत्राणि सर्वदा सर्वकालं प्रजानां लोकानां प्रकाम्यैरभिलषणीयैः सस्यैर्धान्यविशेषैराढ्याः परिपूर्णा वर्तन्ते । भूमय किं कुर्वन्ति । अमरावासकल्पद्रुमवनश्रियं मुष्णन्तीव अमरावासः स्वर्गलोकस्तस्य कल्पद्रुमवनानां सुरवृक्षोद्यानानां श्रियं लक्ष्मीं मुष्णन्ति चोरयन्तीव । हेललंकारः ॥

**नित्यमित्यादि** । यत्र यस्मिन्नवन्तिजनपदे धेनुकेन सद्यःप्रसूतगोसमूहेन देवानां स्वार्गिकाणां कामधेनवः सुरसुरभयो अपार्था निरर्था अक्रियन्त चक्रिरे । कृता इत्यर्थः । कथंभूतेन धेनुकेन । कामधेनुनिरर्थकरणहेतुगर्भितं विशेषणमाह—सुधारसैरमृतरसैः कृत्वा नित्यं सर्वकालं कृतं आतिथेयं प्राघुणिकक्रिया येन धेनुकेन । काशेषे कृतानि येयन्ते (?) । हेतूपमालंकारः ॥

**विभ्रमेत्यादि** । यत्र यस्मिन्नवन्तिजनपदे द्युसदो देवा अनिमिषाङ्गनाः अप्सरसो बहु न मन्यन्ते अधिकतां न जानन्ति । तत्कारणगर्भितं विशेषणमाह—कथंभूता द्युसदः । बल्लवीनां गोपाङ्गनानां विलोकितैरवलोकनैर्हृता अनुरञ्जिताः । कथंभूतैर्विलोकितैः । विभ्रमोल्लासिभिः विभ्रमैर्भ्रूक्षेपैरुल्लसन्ति उन्नृत्यन्ति क्रीडन्तीत्येवंशीलानि विभ्रमोल्लासीनि तैः । हेतूपमालंकारः ॥

**जीवितमित्यादि** । यत्र यस्मिन्नवन्तिजनपदे जीवितं कालः कीर्तये यशसे वर्तते । यत्र यस्मिन् द्रव्यग्रहो लक्ष्मीसंग्रहो दानाय पात्रदानाय वर्तते । यत्र यस्मिन् वपुः शरीरं परोपकाराय परेषामवग्रहाय वर्तते । यत्र यस्मिन् गृहपालनं गृहस्थत्वं धर्माय पूजादानादिनिमित्तं वर्तते । दीपकालंकारः ॥

**बाल्यमित्यादि** । यत्र यस्मिन्नवन्तिजनपदे बाल्यं कुमारत्वं विद्यागमैः शास्त्रस्वीकारैः संगतं संयुक्तं वर्तते । लोकानामिति शेषः । यत्र यस्मिन् लोकानां यौवनं

द्वावेव च जनौ यत्र वसतो वसतिं प्रति ।
अर्थिन्यवाङ्मुखो यो न युद्धे यो न पराङ्मुखः ॥ ११ ॥

यत्र च बहिरेव मार्गभूमिषु निसर्गादशेषमनुष्यमनीषितसमसंपन्नविभवैः सकललोकोपसेव्यमानसंपद्भिः पाणिपल्लवार्पितस्थविस्तवकैस्त्रिदिवतापसानामपि संपादितसत्रमैत्रीमनोभिरपहसितसुरकाननानोकहैर्वनदेवीदानमण्डपचारुभिस्तरुभिः, अनेकनीरचरविकिरकलापचापलप्रबलानिलान्दोलितपालिन्दी-

---

तारुण्यं गुरुसेवया दिगम्बराणामाराधनेन संगतं वर्तते । यत्र यस्मिन् चरमं वयो वार्धक्यं सर्वसङ्गपरित्यागैः जिनदीक्षाग्रहणैः संगतं वर्तते । दीपकालंकारः ॥

**द्वावेवेत्यादि ।** यत्र यस्मिन्नवन्तिजनपदे वसतिंप्रति गृहंगृहंप्रति द्वावेव जनौ द्विप्रकारकावेव मानुषौ वसतस्तिष्ठतः । कौ तौ द्वौ । यः पुमान् अर्थिनि याचके अवाङ्मुखोऽधोमुखो न वर्तते । यस्तु जनः युद्धे संग्रामे पराङ्मुखः पृष्ठदाता न वर्तते । अतिशयालंकारः ॥

**यत्र चेत्यादि ।** यत्र यस्मिन्नवन्तिजनपदे प्रजानां लोकानां वृद्धा अपि श्रियो वृद्धिं प्राप्ता अपि लक्ष्म्यः परं केवलमाजन्मसु स्वस्थानेषु विस्तारयामासुः वृद्धिं गताः । कथंभूताः श्रियः । मार्गभूमिषु अध्वस्थानेषु बहिरेव नगराद्बाह्यप्रदेशेष्वेव तरुभिर्वृक्षैः सरःप्रदेशैः सरोवरस्थानैः लताप्रतानैः वल्लिविस्तारैरन्यैश्च वनराजिशाखिभिर्वनश्रेणिवृक्षैः कृतकृतार्थातिथयः कृता विहिताः कृतार्थाः परिपूर्णमनोरथाः अतिथयः प्राघूर्णिका याभिस्ताः कृतकृतार्थातिथयः । का इव आजन्मसु विस्तारयामासुः । कन्यका इव यथा कन्यकाः पतिंवराः कुमार्यः असंजातवरसमागमा अप्राप्तनवीनवरप्राप्तयः । कथंभूतैः तरुभिः । निसर्गात्स्वभावेन अशेषमनुष्यमनीषितसमसंपन्नविभवैः अशेषाणां विश्वेषां मनुष्याणां मानवानां मनीषितसमः अभिलाषकल्पः संपन्नो निष्पन्नो विभवः पत्रपल्लवपुष्पफलादिलक्षणा लक्ष्मीर्येषां तरूणां ते तथोक्तास्तैः । अपरं कथंभूतैस्तरुभिः । सकललोकोपसेव्यमानसंपद्भिः सकलैर्विश्वैर्लोकैः ब्राह्मणादिचाण्डालपर्यन्तैर्जनैरुपसेव्यमाना आस्वाद्यमाना संपत् पत्रपल्लवपुष्पफलच्छायादिलक्ष्मीर्येषां ते तथोक्तैः । पुनः कथंभूतैः । पाणिपल्लवार्पितस्थविस्तवकैः पाणिपल्लवेषु हस्तकमलेषु अर्पिताः स्थविस्तवकाः फलगुच्छा यैस्तरुभिस्ते तथा तैः । फलभारनम्रत्वादित्यर्थः । पुनः कथंभूतैस्तरुभिः । त्रिदिवतापसानामपि स्वर्गलोकमुनीनामपि संपादितसत्रमैत्रीमनोभिः संपादिता उत्पादिता सत्रमैत्रीदानमण्डपप्रीतिर्मनःसु चित्तेषु यैस्ते तथा तैः । पुनः कथंभूतैः । अपहसितसुरकाननानोकहैः अपहसितास्तिरस्कृताः सुरकाननानां स्वर्गलोकवनानां अनोकहाः कल्पद्रुमाः यैस्तरुभिस्ते तथा तैः । पुनः कथंभूतैस्तरुभिः । वनदेवीदानमण्डपचारुभिः वनदेवीनां वनदेवतानां दानमण्डपवत् सत्रशालावत् चारुभिर्मनोहरैः ।

संततिभिरविरलविकासोल्लसत्कुवलयकह्लारकैरवारविन्दमकरन्दबिन्दुस्पन्द-संदोहामोदसंदर्भिताभ्रपुष्पैरुत्तानालीकिनीदलहस्तोद्धारहृदयहारिभिर्विफ-लिताम्रतप्रसूतिदिवसैर्दिविजदेवार्चनोपयोगभागिभिर्जलदेवताप्रपानिवेशैः स-रःप्रदेशैः, मधुपमधुपानवशकोशकोशकास्रवत्किञ्जल्कासवासरालपरिमलोल्ला-सिभिर्लेखमुख्यवैखानसकुसुमावचयोचितैराखण्डलशिखण्डमण्डनकाण्डप्र-

---

तथा कथंभूतैः सरःप्रदेशैः । अनेकनीरचरविकिरकलापचापलप्रबलानिलान्दोलितपालि-न्दीसंततिभिः अनेके बहवो ये नीरचरविकिराः जलचरपक्षिणो हंससारसचक्रवाकज-लकाकादयस्तेषां कलापाः समूहास्तेषां चापलेन चपलत्वेन प्रबलः प्रचण्डो योऽसौ अनिलो वायुस्तेनान्दोलिताः कम्पिताः पालिन्दीसंततयो लहरीसमूहा यैः सरःप्रदेशैस्ते तथोक्तास्तैः । पुनः कथंभूतैः सरःप्रदेशैः । अविरलविकासोल्लसत्कुवलयकह्लारकैरवारवि-न्दमकरन्दविन्दुस्पन्दसंदोहामोदसंदर्भिताभ्रपुष्पैः अविरलः प्रचुरतरो योऽसौ विकासो विकोचत्वं तेन उल्लसन्ति उच्छलन्ति यानि कुवलयानि उत्पलानि कह्लाराणि च रक्त-कमलानि कैरवाणि च कुमुदानि श्वेतोत्पलानि अरविन्दानि च श्वेतकमलानि च तेषां मकरन्दो रसस्तस्य बिन्दवो विप्रुषस्तेषां स्पन्दाः क्षरणानि तेषां संदोहः समूहस्तस्य आमोदः परिमलं तेन संदर्भितानि मिश्रितानि अभ्रपुष्पाणि जलानि येषां जलप्रदेशानां ते तथा तैः । पुनः कथंभूतैः सरःप्रदेशैः । उत्ताननालीकिनीदलहस्तोद्धारहृदयहारिभिः उत्तानानि चपलानि यानि नालीकिनीदलानि पद्मिनीपत्राणि तान्येव हस्ताः पाणयस्तेषां उद्धारेण उच्चलनेन छायाकरणेन हृदयहारिभिरतिमनोहरैः । पुनः कथंभूतैः प्रदेशैः । विफलिताम्रतप्रसूतिदिवसैः विफलिता निष्फलीकृतास्तिरस्कृता अमृतप्रसूतिदिवसा वर्षा-दिनानि यैस्ते तथा तैः । अपरं कथंभूतैः सरःप्रदेशैः । दिविजदेवार्चनोपयोगभागिभिः दिविजानां स्वर्गिकाणामिन्द्राणां देवार्चनं अर्हत्पूजनं तस्य उपयोगं कार्यं भजन्ते आश्र-यन्तीत्येवंशीलास्ते तथोक्तास्तैः क्षीरसागरजलवदीषत्पाण्डुरत्वात् । पुनः कथंभूतैः सरः-प्रदेशैः । जलदेवताप्रपानिवेशैः जलदेवतानां जलदेवीनां प्रपानिवेशैः पानीयशालासदृ-शैः । तथा कथंभूतैर्लताप्रतानैः वल्लीमण्डपैः । मधुपमधुपानवशकोशकोशकास्रवत्किञ्जल्का-सवासरालपरिमलोल्लासिभिः मधुपानां भ्रमराणां यन्मधुपानं मकरन्दपानं मद्यपानं च तस्य वशा आधीनाः ये कोशाः कमलपुष्पमध्यास्त एव कोशकानि सुरापात्राणि तेभ्यः आस्रवन्तः क्षरन्तो ये किञ्जल्काः केसराणि तेषां आसवो मद्यं तस्यासरालोऽपर्यन्तो योऽसौ परिमलो विमर्दोत्थगन्धस्तेन उल्लसन्तीत्येवंशीला ये लताप्रतानास्ते तथोक्तास्तैः । पुनः कथंभूतैर्लताप्रतानैः । लेखमुख्यवैखानसकुसुमावचयोचितैः लेखेषु देवेषु ये मुख्य-वैखानसाः प्रधानमुनयस्तेषां कुसुमावचयाय पुष्पचुण्टनाय प्रसूनलवनाय उचिता यो-ग्यास्ते तथा तैः । पुनः कथंभूतैर्लताप्रतानैः । आखण्डलशिखण्डमण्डनकाण्डप्रसूनविडम्बि-

सूनविडम्बितखाण्डवप्रसवोत्पत्तिभिर्विलुप्तकल्पवल्लीसृष्टिसमयैः करकिसलयावलम्बितप्रसूनमञ्जरीस्रग्भिर्वसन्तविलासवसतिसंतानैर्लताप्रतानैः, अन्यैश्च निखिलभुवनजनजनितमनोरथावाप्तिभिः परिभूतभोगभूमिभूरुहप्रभावैः फलप्रदानोन्मुखपुण्यालेखिभिः वनराजिशाखिभिः कृतकृतार्थातिथयः प्रजानां वृद्धा अपि श्रियः कन्यका इवासंजातवरसमागमाः परमाजन्मसु विस्तारयामासुः।

मार्गोपान्तवनद्रुमावलिदलच्छायापनीतातपाः
　पूर्णाभ्यर्णसरोवतीर्णपवनव्याधूतदेहश्रमाः।
पुष्पैर्मन्दमुदः फलैर्भृतधियस्तोयैः कृतक्रीडनाः
　पान्था यत्र वहन्ति केलिकमलव्यालोलहारश्रियः॥ १२॥

---

तखाण्डवप्रसवोत्पत्तिभिर्विलुप्तकल्पवल्लीसृष्टिसमयैः आखण्डल इन्द्रस्तस्य शिखण्डस्य मस्तकाग्रस्य मण्डनकाण्डानि विभूषणप्रशस्तानि यानि प्रसूनानि पुष्पाणि तैर्विडम्बिता व्यर्थीकृताः खाण्डवस्य प्रसवानां पुष्पाणामुत्पत्तय उत्पादितानि ताभिः (तिरस्कृताभिः) कृत्वा विलुप्तः तिरस्कृतः कल्पवल्लीनां स्वर्गवीरुधां सृष्टेः सर्गस्य समयोऽवसरो यैर्लताप्रतानैस्ते तथोक्तास्तैः। पुनः कथंभूतैर्लताप्रतानैः। करकिसलयावलम्बितप्रसूनमञ्जरीस्रग्भिः करवत् हस्तवत् यानि किसलयानि पल्लवानि तेषु अवलम्बिता धृताः प्रसूनमञ्जरीस्रजः पुष्पवल्लरीमाला यैः लताप्रतानैस्तैस्तथोक्तैः। अपरं कथंभूतैर्लताप्रतानैः। वसन्तविलासवसतिसंतानैः वसन्तस्य वसन्तराजस्य विलासवसतिसंतानैः क्रीडागृहसदृशैः। तथा कथंभूतैर्वनराजिशाखिभिः। निखिलभुवनजनजनितमनोरथावाप्तिभिः निखिलभुवनजनानां विश्वलोकमानवानां जनिता उत्पादिता मनोरथानां दोहदानां अवाप्तिः प्राप्तिर्यैस्ते तथा तैः। पुनः कथंभूतैर्वनराजिशाखिभिः। परिभूतभोगभूमिरुहप्रभावैः परिभूतो मानभङ्गं प्रापितो भोगभूमिभूरुहाणां कुर्वादिकल्पतरूणां प्रभावो महिमा माहात्म्यं यैस्ते तथा तैः। पुनः कथंभूतैर्वनराजिशाखिभिः। फलप्रदानोन्मुखपुण्यालेखिभिः फलप्रदानाय उन्मुखो बद्धोत्कण्ठं पुण्यालेखी पवित्राकारा येषां वनराजिशाखिनां ते तथा तैः। उपमैव॥

**मार्गोपान्तेत्यादि।** यत्र अवन्तिषु जनपदे पान्थाः पथिकाः केलिकमलव्यालोलहारश्रियो वहन्ति केलिकमलानां व्यालोलाश्चपला हारश्रियो मालालक्ष्मीर्वहन्ति धारयन्ति। कथंभूताः पान्थाः। मार्गोपान्तवनद्रुमावलिदलच्छायापनीतातपाः मार्गोपान्तयोरध्वसमीपयोः संबन्धिनो ये वनद्रुमा उद्यानवृक्षास्तेषामावलिः पङ्क्तिस्तस्याः दलानि पर्णानि तेषां छाया अनातपस्तया अपनीतः स्फोटित आतपो घर्मो येषां पान्थानां ते तथोक्ताः। पुनः कथंभूताः पान्थाः। पूर्णाभ्यर्णसरोवतीर्णपवनव्याधूतदेहश्रमाः पूर्णानि

अपि च यत्र पलव्यवहारः सुवर्णदक्षिणासु, मधुसमागमः समासंवर्तेषु, परदारोदन्तः कामागमेषु, क्षणिकस्थितिर्दशबलशासनेषु, चापलविलासः पृषदश्वेषु, भावसंकरः संसर्गविद्यासु, परद्रव्याभिलाषः प्रासादकृतिषु, अक्रमगतिः काद्रवेयेषु, करकठिनताकर्णनं पुरुषपरीक्षासु, शस्त्रसंपातः पत्रच्छेदेषु, बन्धविधिस्तुरङ्गक्रीडासु, लिङ्गभेदः प्राकृतेषु, उपसर्गयोगो धातुषु, निपा-

---

जनभृतानि अभ्यर्णानि निकटतराणि यानि सरांसि जलाशयानि तडागानि सरोवराणि तेभ्योऽवतीर्णः समागतो योऽसौ पवनो वायुस्तेन व्याधूतः स्फेटितो देहानां शरीराणां श्रमः खेदो येषां पान्थानां ते तथोक्ताः। पुनः कथंभूताः। पुष्पैः कृत्वा मन्दमुदः प्रचुरहर्षाः निविडपरमानन्दाः। पुनः कथंभूताः। फलैः कृत्वा भृतधियो भोजनाकाङ्क्षारहिताः। पुनः कथंभूताः। तोयैः जलैः कृत्वा कृतक्रीडना विहितकेलयः। तूयन्ते आदीयन्ते गृह्यन्ते तृषार्तैरिति तोयानि। 'स्वराद्यः'। 'तु वृत्तिपूरणहिंसादानेषु' इति धातोः प्रयोगात्। उपमालंकारः॥

अपि चेत्यादि। यत्र यस्मिन् अवन्तिषु जनपदे पलव्यवहारो गद्याणकदशकेन पलमुच्यते पञ्चदश टङ्कानीत्यर्थस्तस्य व्यवहारो दानमादानं च सुवर्णदक्षिणासु कनकदानेषु। न तु मांसव्यवहारस्तत्र देशेऽस्ति। मधुसमागमः वसन्तागमनं समासंवर्तेषु वर्षप्रवर्तनेषु। न तु मद्यसमागमः। परदारोदन्तः परा उत्कृष्टा दाराः स्त्रियस्तेषामुदन्तो वार्ता कामागमेषु कामशास्त्रेषु। न तु परस्त्रीगमनं परेषां विदारणं वा परदारा उच्यते। क्षणिकस्थितिर्दशबलशासनेषु क्षणिकस्थितिः पक्षो बौद्धागमेषु वर्तते। न तु निजवाक्चलनम्। चापलविलासः पृषदश्वेषु चापलविलासः चपलत्वं पृषदश्वेषु मारुतेषु वर्तते। न तु परदारेषु हस्तादिक्षेपः। न च वृथा (धनुर्ग्रहणं) चापं लातीति भावः। भावसंकरः संसर्गविद्यासु संसर्गविद्यासु भरतशास्त्रेषु भावसंकरो वर्तते एकोनपञ्चाशद्भावानां मिश्रता वर्तते। न तु भावस्य क्रियायाः संकरो व्यामिश्रता वर्तते। प्रासादकृतिषु देवगृहनिर्मापणेषु परद्रव्याभिलाषः परस्योत्कृष्टस्य न्यायोपार्जनस्य द्रव्यस्य धनस्य अभिलाषो वर्तते। न तु[1] ..............................क्रमलङ्घनम्। करकठिनताकर्णनं पुरुषपरीक्षासु पुरुषपरीक्षासु सामुद्रिकशास्त्रेषु करकठिनताकर्णनं हस्तकर्कशताश्रवणं वर्तते। न तु करस्य सिद्धोदयस्य कठिनता। आधिक्यं वर्तते। उक्तं च—'अकर्मकठिनौ हस्तौ पादौ वा ध्वनिकोमलौ। यस्य पाणी च पादौ च तस्य राज्यं विनिर्दिशेत्॥' पत्रच्छेदेषु पुस्तकदलसंचरणेषु नागवल्लीदलच्छेदनेषु वा शस्त्रसंपातः छुरिकादिव्यापारो वर्तते। न तु लिङ्गच्छेदादौ शस्त्रपातोऽस्ति। तुरङ्गक्रीडासु अश्वकेलिषु बन्धविधि-

---

१. अत्र कियान्ग्रन्थस्त्रुटितः.

तश्रुतिः शब्दशास्त्रेषु, दोषचिन्ता भिषग्वचनेषु, भङ्गनिशमनं यमकवाक्येषु, सीताहरणश्रवणमितिहासेषु, बन्धुकलहाख्यानं भारतकथासु, कुरङ्गवृत्तिः केलिस्थानेषु, धर्मगुणच्छेदः संग्रामेषु, कुटिलता च कामकोदण्डकोटिषु ।

किं च ।

धर्मे यत्र मनोरथाः प्रणयिता यत्रातिथिप्रेक्षणे
त्यागे यत्र मनीषितानि मतयो यत्रोल्बणाः कीर्तिषु ।
सत्ये यत्र मनांसि विक्रमविधौ यत्रोत्सवो देहिनां
यत्रान्येऽपि निसर्गसङ्गनिपुणास्ते ते च सन्तो गुणाः ॥ १२ ॥

---

स्तरुमूलपीडनं वर्तते । न तु शृङ्खलादिबन्धनविधिः । प्राकृतेषु शास्त्रेषु लिङ्गभेदः स्त्रीपुंनपुंसकलिङ्गव्यभिचारो वर्तते । न तु शेफच्छेदनम् । उपसर्गयोगो धातुषु 'भू सत्तायाम्' इत्यादिनवगणेषु उपसर्गयोगः प्राद्युपसर्गसंसर्गो वर्तते । न तु उपसर्गः उत्पातः अजन्यं मुनीनां ध्यानादौ वर्तते । शब्दशास्त्रेषु व्याकरणेषु निपातश्रुतिः 'पुरंदरवाचंयमसर्वंसहद्विषंतपाश्व' इत्यादीनां शब्दानां श्रुतिः श्रवणं वर्तते न तु अश्वमेधराजसूयगोसवादिजीवादिजीवघातानां श्रुतिर्वेदा वर्तन्ते । भिषग्वचनेषु वैद्यकशास्त्रेषु दोषचिन्ता वातपित्तश्लेष्मविचारणं वर्तते । न तु परनिन्दाकरणम् । यमकवाक्येषु शब्दालंकारविशेषशास्त्रेषु भङ्गनिशमनं पदच्छेदश्रवणं वर्तते । न तु भङ्गस्य जीवविनाशस्य व्रतखण्डनायाश्च भङ्गश्रवणं वर्तते । इतिहासेषु रामायणादिषु सीताहरणश्रवणं सीतायाः जनकपुत्र्याः हरणश्रवणं हरणाकर्णनम् । न तु सीतायाः लक्ष्म्या उद्दालनं वर्तते । भारतकथासु पाण्डवपुराणेषु बन्धुकलहाख्यानं युधिष्ठिरदुर्योधनादियुद्धकथनं वर्तते । न तु भ्रातॄणां परस्परं कलहोऽस्ति । केलिस्थानेषु क्रीडाभूमिषु कुरङ्गवृत्तिः कुरङ्गवन्मृगवद्वृत्तिरुच्छलनं वर्तते । न तु धनाद्यर्थे परस्परं भीतिभङ्गोऽस्ति । संग्रामेषु युद्धेषु धर्मगुणच्छेदः धर्मस्य धनुषो गुणस्य प्रत्यञ्चायाश्छेदः खण्डनं वर्तते । न तु धर्मस्य दानपूजादिलक्षणस्य गुणस्य ब्रह्मचर्यादेश्छेदो वर्तते । कुटिलता च कामकोदण्डकोटिषु कन्दर्पचापाटनीषु कुटिलता वक्रता वर्तते । परिसंख्यालंकारः । उक्तं च—'यत्र साधारणं किंचिदेकत्र प्रतिपाद्यते । अन्यत्र तन्निवृत्त्यै सा परिसंख्योच्यते यथा ॥' इति

किं चास्ति कश्चिद्विशेषः । **धर्मे इत्यादि** । यत्र यस्मिन्नवन्तिषु जनपदे धर्मे पूजादानादिलक्षणे देहिनां प्राणिनां मनोरथा दोहदानि वर्तते । यत्र यस्मिन् प्रणयिता स्नेहित्वं अतिथिप्रेक्षणे यतिदानाय द्वारावलोकने वर्तते । यत्र यस्मिन् मनीषितानि इच्छा त्यागे दाने वर्तते । यत्र देशे कीर्तिषु यशःप्रसिद्धिषु उल्बणा उद्रिक्ता मतयो वर्तन्ते । यत्र देशे मनांसि चित्तानि सत्ये सत्यवचनभाषणे वर्तन्ते । यत्र यस्मिन्नवन्तिजनपदे विक्रमविधौ पराक्रमविधाने उत्सव उत्साहो वर्तते । यत्र देशे ते ते जगत्प्रसिद्धाः

तत्रावन्तिषु विख्याता पृथुवंशोद्भवात्मनाम्।
अस्ति विश्वंभरेशानां राज्यायोज्जयिनी पुरी॥ १४॥
सौधनद्धध्वजाप्रान्तमणिदर्पणलोचना।
या स्वयं त्रिदशावासलक्ष्मीं द्रष्टुमिवोत्थिता॥ १५॥
शोभन्ते यत्र सद्मानि सितकेतुसमुच्छ्रयैः।
हराद्रिशिखराणीव नवनिर्मोकनिर्गमैः॥ १६॥
नवपल्लवमालाङ्का यत्र तोरणपङ्क्तयः।
भान्तीव मेखलानन्दिनितम्बाः सदनश्रियः॥ १७॥

---

सन्तः समीचीना गुणाः औदार्यशौण्डीर्यगाम्भीर्यधैर्यवीर्यादयोऽन्येऽपि च अपरेऽपि वर्तन्ते। कथंभूता गुणाः। निसर्गसङ्गनिपुणाः निसर्गेण स्वभावेन परस्परं प्रीत्या कृत्वा निपुणाः प्रवीणाः निसर्गनिपुणाः। दीपकसमुच्चयालंकारः॥

**तत्रावन्तिष्वित्यादि**। तत्र तस्मिन्नवन्तिषु जनपदेषु उज्जयिनी नाम पुरी नगरी विख्याता त्रैलोक्यप्रसिद्धा अस्ति विद्यते। किमर्थं पुरी वर्तते। विश्वंभरेशानां पृथिवीपतीनां राज्याय राज्यनिमित्तम्। कथंभूतानां विश्वंभरेशानाम्। पृथुवंशोद्भवात्मनां पृथुवंशे इक्ष्वाकादिक्षत्रियकुलेषु उद्भव उत्पत्तिरात्मनां जीवानां येषां ते पृथुवंशोद्भवात्मानः तेषाम्। जात्यलंकारः॥

**सौधनद्धेत्यादि**। या उज्जयिनी पुरी त्रिदशावासलक्ष्मीं स्वर्गश्रियं द्रष्टुमवलोकयितुं स्वयमात्मनैवोच्छ्रितेवोद्भेद..............वर्तते। कथंभूता उज्जयिनी। सौधनद्धध्वजाप्रान्तमणिदर्पणलोचना सौधेषु राजसदनेषु नद्धा आरोपिता ये ध्वजास्तेषां प्रान्तेष्वग्रेषु ये मणिदर्पणा रत्नादर्शास्त एव लोचनानि नेत्राणि यस्याः सा तथोक्ता। उत्प्रेक्षालंकारः॥

**शोभन्त इत्यादि**। यत्र यस्यां नगर्यां सद्मानि गृहाणि सितकेतुसमुच्छ्रयैः शुक्लध्वजस्य सम्यगुत्थितिभिः शोभन्ते विभान्ति। कैः कानीव। नवनिर्मोकनिर्गमैः प्रत्यग्रसर्पकञ्चुलिकानिर्याणैः कृत्वा हराद्रिशिखराणीव कैलासपर्वतमस्तकानीव। उपमालंकारः॥

**नवपल्लवेत्यादि**। यत्र यस्यां पुर्यां तोरणपङ्क्तयो वन्दनमालाश्रेणयो भान्ति शोभन्ते। कथंभूतास्तोरणपङ्क्तयः। नवपल्लवमालाङ्काः प्रत्यग्रप्रवालस्रजोऽङ्कश्चिह्नं यासां तोरणपङ्क्तीनां तास्तथा। सदनश्रियः गृहलक्ष्म्याः मेखलानन्दिनितम्बा इव मेखलाभी रसनाभिरानन्दितं आनन्दवन्तो नितम्बा इव कटिपश्चाद्भागा इव। उक्तं च—'स्त्रीकट्यां मेखला काञ्ची सप्तकी रसनाः स्त्रियः'। उपमालंकारः॥

क्रीडत्कलापिरम्याणि यत्र हर्म्याणि कुर्वते ।
शरणश्रीसपर्यासु विफलाश्चामरक्रियाः ॥ १८ ॥
सर्वर्तुश्रीश्रितच्छाया निष्कुटोद्यानपादपाः ।
पौरकामदुहो यत्र भोगभूमिद्रुमा इव ॥ १९ ॥
नक्तं सिप्रानिलैर्यत्र जालमार्गानुगैः कृताः ।
वृथा रतिषु पौराणां यन्त्रव्यजनपुत्रिकाः ॥ २० ॥
चन्द्रोपलप्रणालाग्रैर्निशि चन्द्रातपस्रुतैः ।
हरन्ति यत्र हर्म्याणि यन्त्रधारागृहश्रियम् ॥ २१ ॥
यत्र सौधाग्रकुम्भेषु लब्धविश्रमणाः क्षणम् ।
व्योमाध्वनि सुखं यान्ति रविस्यन्दनवाजिनः ॥ २२ ॥

---

**क्रीडदित्यादि** । यत्र यस्यां पुर्यां हर्म्याणि अन्तःपुरगृहाणि शरणश्रीसपर्यासु गृहलक्ष्मीपूजासु चामरक्रियाः प्रकीर्णकोपचारान् विफला निरर्थकाः कुर्वते विदधति । कथंभूतानि हर्म्याणि । क्रीडत्कलापिरम्याणि क्रीडन्तो रममाणा ये कलापिनो मयूरास्तै रम्याणि मनोहराणि । हेतूपमालंकारः ॥

**सर्वेत्यादि** । यत्र यस्यामुज्जयिन्यां पुर्यां निष्कुटोद्यानपादपाः गृहारामवृक्षाः पौरकामदुहो नागरिकाणां वाञ्छितफलप्रदायिकाः वर्तन्ते । कथंभूताः निष्कुटोद्यानपादपाः । सर्वर्तुश्रीश्रितच्छायाः सर्वे च ते ऋतवो हिमशिशिरवसन्तग्रीष्मवर्षाशरदस्तेषां श्रीभिर्लक्ष्मीभिः श्रिता आश्रिता छाया शोभा येषां ते तथा । पुनः कथंभूताः । भोगभूमिद्रुमा इव कुरुभूमिवृक्षा इव । उपमालंकारः ॥

**नक्तमित्यादि** । यत्र यस्यामुज्जयिन्यां पुर्यां नक्तं रात्रौ सिप्रानिलैः सिप्रासरिन्मारुतैः पौराणां नगरौकसां रतिषु संभोगक्रीडासु यन्त्रव्यजनपुत्रिकाः यन्त्रेण कृत्वा व्यजनपुत्रिकाः तालवृन्तपुत्तलिकाः वृथा कृताः निरर्थका विहिताः । कथंभूतैः सिप्रानिलैः । जालमार्गानुगैः जालमार्गेषु वातायनमार्गेष्वनुगच्छन्ति पृष्ठतः समागच्छन्ति ये अनिलास्ते तथा तैः । जात्यलंकारः ॥

**चन्द्रोपलेत्यादि** । यत्र यस्यां पुर्यां निशि रात्रौ हर्म्याणि गृहाणि कर्तृभूतानि चन्द्रोपलप्रणालाग्रैः कृत्वा चन्द्रकान्तमणिप्रणालप्रान्तैः कृत्वा यन्त्रधारागृहश्रियं मेघमन्दिरशोभां हरन्ति तिरस्कुर्वन्ति । कथंभूतैश्चन्द्रोपलप्रणालाग्रैः । चन्द्रातपस्रुतैः चन्द्रातपेन शशाङ्कप्रभया स्रुतैः क्षरितैः । उपमालंकारः ॥

**यत्रेत्यादि** । यत्र उज्जयिन्यां पुर्यां रविस्यन्दनवाजिनः श्रीसूर्यरथस्य वाहाः सुखमनायासं यथा भवत्येवं व्योमाध्वनि आकाशमार्गे यान्ति गच्छन्ति । कथंभूता रविस्यन्दनवाजिनः । सौधाग्रकुम्भेषु राजमन्दिरप्रान्तफलकेषु क्षणं मुहूर्तमेकं लब्धविश्रमणाः प्राप्तविश्रामाः । प्रतिवस्तूपमालंकारः ॥

पस्त्यभित्तिमणिद्योतैर्दीप्ता यत्र निशास्वपि ।
वियोगाय न कोकानां भवन्ति गृहदीर्घिकाः ॥ २३ ॥
त्यागाय यत्र वित्तानि चित्तं धर्माय देहिनाम् ।
गृहाण्यागन्तुभोगाय विनयाय गुणागमः ॥ २४ ॥
सत्रवर्त्मनि पान्थानां बहुदातृपरिग्रहात् ।
मूढीभवन्ति चेतांसि यत्राभ्युपगमोक्तिषु ॥ २५ ॥
सर्वरत्नानि वार्धीनां सर्ववस्तूनि भूभृताम् ।
द्वीपानां सर्वसाराणि यत्र संजग्मिरे मिथः ॥ २६ ॥
वयस्या भोगभूमीनां सध्रीची सुरसंपदाम् ।
आली च भोगभूतीनां या बभूव निजश्रिया ॥ २७ ॥

---

**पस्त्यभित्तीत्यादि** । यत्र यस्यां नगर्यां निशास्वपि रात्रिष्वपि गृहदीर्घिकाः गृहवापिकाः कोकानां चक्रवाकानां वियोगाय विप्रलम्भाय न भवन्ति न जायन्ते । कथंभूताः गृहदीर्घिकाः । पस्त्यभित्तिमणिद्योतैर्दीप्ताः पस्त्यानां गृहाणां भित्तीनां कुड्यानां मणीनां रत्नानां द्योतैस्तेजोभिः दीप्तिं प्राप्ताः । भ्रान्तिमानलंकारः ॥

**त्यागायेत्यादि** । यत्र यस्यां नगर्यां देहिनां प्राणिनां वित्तानि धनानि त्यागाय दानाय वर्तन्ते । चित्तं मनो धर्माय दयालक्षणाय वर्तते । यत्र देहिनां गृहाणि आगन्तुभोगाय प्राघूर्णकनिर्देशाय वर्तते । यत्र नगर्यां गुणागमो गुणोपार्जनं शास्त्राभ्यासो विनयाय वर्तते । दीपकालंकारः ॥

**सत्रवर्त्मनीत्यादि** । यत्र यस्यां नगर्यां सत्रवर्त्मनि दानशालामार्गे पान्थानां पथिकानां चेतांसि मनांसि अभ्युपगमोक्तिषु अभ्युत्थानवचनेषु मूढीभवन्ति किंकर्तव्यतामूढानि भवन्ति । कस्मात् । बहुदातृपरिग्रहात् बहूनां प्रचुराणां दातॄणां दायकानां परिग्रहात् स्वीकारात् । अयमतिशयालंकारः ॥

**सर्वरत्नानीत्यादि** । यत्र यस्यामुज्जयिन्यां वार्धीनां सप्तसमुद्राणां सर्वरत्नानि श्वेतपीतहरितारुणकृष्णरत्नानि माणिक्यानि मिथः परस्परं संजग्मिरे संमिलितानि जातानि । भूभृतां पर्वतानां सर्ववस्तूनि सर्वे पदार्थाः कर्पूरचन्दनराजार्हग्रन्थिपर्णजाटामांसीधामेपत्तनादय मिथः संजग्मिरे । द्वीपानां सर्वसाराणि लङ्कादि अन्तर्द्वीपद्वीपानां समुद्रमध्यस्थितस्थानानां सर्वसाराणि सर्वधनानि मिथः संजग्मिरे । दीपकालंकारः ॥

**वयस्येत्यादि** । या उज्जयिनी पुरी निजश्रिया निजलक्ष्म्या कृत्वा भोगभूमीनां वयस्या सखी बभूव । सुरसंपदाममरलक्ष्मीणां सध्रीची सखी बभूव । भोगभूतीनां कर्पूरकस्तूरिकाचन्दनादिसंपदां आली सखी बभूव । दीपकालंकारः ॥

भ्रूचापविभ्रमोद्भ्रान्तनेत्रापाङ्गशिलीमुखाः ।
मुधा कुर्वन्ति कामिन्यो यत्र कामास्त्रगर्जितम् ॥ २८ ॥

अलककदलीकान्ताभोगाः पताकितलोचनाः
पृथुतरकुचक्रीडत्कुम्भा मदालसविभ्रमाः ।
स्मरकरिघटाः कामोद्दामा इवाहवकल्पिता-
स्त्रिभुवनजनानीतक्षोभा विभान्ति यदङ्गनाः ॥ २९ ॥

यत्र च कामिनीनां चिकुरेषु निसर्गकृष्णता न जनानां चरित्रेषु, सीमन्तेषु द्विधाभावो न स्वामिसेवासु, केकरालोकितेषु कुटिलत्वं न विन-

---

**भ्रूचापेत्यादि** । यत्र यस्यां पुर्यां कामिन्यः भ्रूचापविभ्रमोद्भ्रान्तनेत्रापाङ्गशिलीमुखाः भ्रुव एव चापानि धनूंषि वक्रस्वभावत्वात्तेषां विभ्रमा नामोन्नामास्तत्र उद्भ्रान्तानि चपलत्वं प्राप्तानि यानि नेत्राणि लोचनानि तेषामपाङ्गाः प्रान्तास्त एव शिलीमुखाः बाणाः मर्मवेधित्वात्[1]······यासां कामिनीनां तास्तथा । उपमालंकारः ॥

**अलककदलीत्यादि** । यस्या उज्जयिन्याः पुर्याः संबन्धित्वेन अङ्गनाः कमनीयकामिन्यो विभान्ति विशेषेण शोभन्ते । कथंभूता यदङ्गनाः । कामोद्दामाः कामेन कन्दर्पेणोद्दामा उत्कटाः । अपरं कथंभूताः । आहवकल्पिताः संग्रामसज्जीकृताः स्मरकरिघटा इव कन्दर्पगजघटा इव । कथंभूता यदङ्गनाः स्मरकरिघटाश्च । अलककदलीकान्ताभोगाः अलकाश्चूर्णकुन्तलास्त एव कदल्यो वैजयन्त्यो बृहद्ध्वजास्ताभिः कान्तो मनोहर आभोग आटोपो यासां तास्तथोक्ताः । पुनरपि कथंभूता यदङ्गनाः । पताकितलोचनाः पताकितानि पालिध्वजीकृतानि लोचनानि नेत्राणि यासां ताः । पुनः कथंभूता यदङ्गनाः । पृथुतरकुचक्रीडत्कुम्भाः पृथुतराः पीनोन्नता ये कुचाः स्तनास्त एव क्रीडन्त उल्लसन्तः कुम्भाः कलशा यासां ताः । पुनः कथंभूता यदङ्गनाः । मदालसविभ्रमाः मदेन यौवनमदेन अलसो मन्दोद्यमो विभ्रमो भ्रूक्षेपो यासां ताः । पुनः कथंभूता यदङ्गनाः । त्रिभुवनजनानीतक्षोभाः त्रिभुवनजनानां त्रैलोक्यलोकानां आनीतोऽवतारितः क्षोभश्चित्तचलनं याभिस्तास्तथोक्ताः । इत्यनेन गजघटानां बृहद्ध्वजलघुध्वजशिरसः पिण्डमदत्रिभुवनक्षोभ्यधर्मो गजघटानामवतारितः । रूपकोपमालंकारः ॥

यत्र यस्यामुज्जयिन्यां पुर्यां कामिनीनां नवयौवनस्त्रीणां चिकुरेषु केशेषु निसर्गकृष्णता स्वभावेन मेचकत्वं भ्रमरवर्णत्वं इन्द्रनीलरत्नतेजस्विता, न जनानां सम्यग्दृष्टिलोकानां चरित्रेषु आचरणेषु कृष्णता मलिनत्वं नैव वर्तते । सीमन्तेषु केशमार्गेषु द्विधाभाव उभयतोभावः, स्वामिसेवासु न द्विधाभावो न द्विमनस्कता । केकरालोकितेषु कटाक्षविलोकितेषु कुटिलत्वं वर्तते वक्रत्वं वर्तते, न विनयोपदेशेषु विनयकरणेषु कुटिलत्वं

---

1 त्रुटितमिव भाति.

योपदेशेषु, भ्रूलतासु भङ्गसंगमो न परस्परमैत्रीषु, लोचनेषु वर्णसंकरो न कुलाचारेषु, पयोधरेषु विवेकविकलता न परपरिभाषणेषु, मध्यदेशेषु दरिद्रता न मनीषितेषु, नितम्बेषु जडता न विद्याव्यतिकरेषु, चरणनखेषु वृद्धिविलोपदर्शनं न विभवमहोत्सवेषु, पादतलेषु पांसुलता न वृत्तेषु।

या देवायतनैर्महद्भिरमरक्रीडावतारैर्वनैः
सत्रैः प्रीणितपान्थसार्थहृदयैर्लक्ष्मीनिवासैर्गृहैः।
वापीभिर्जलदेवतावसतिभिर्देवोपमानैर्जनैः
स्वर्गावासपुरीव भाति विभवैरन्यैश्च तैस्तैरपि॥ ३०॥

---

मायित्वं न वर्तते। भ्रूलतासु भङ्गसंगमो भ्रूवल्लीषु भङ्गसंगम उत्क्षेपसंगतिः, न परस्परमैत्रीषु अन्योन्यप्रीतिषु विनाशः। लोचनेषु नेत्रेषु वर्णसंकरः शुक्लकृष्णताम्रवर्णमिश्रता वर्तते, न कुलाचारेषु विवाहादिषु वर्णसंकरो वर्तते। पयोधरेषु विवेकविकलता पयोधरेषु स्तनेषु विवेकविकलता परस्परसंलग्नता वर्तते, न परेषां परिभाषणेषु आलापेषु विवेकविकलता वर्तते चातुर्यरहितता न वर्तते। मध्यदेशेषु उदरप्रदेशेषु दरिद्रता क्षामता वर्तते, न मनीषितेषु वाञ्छितवस्तुषु दारिद्र्यं नास्ति। नितम्बेषु स्त्रीकटिपश्चाद्भागेषु जडता गुरुत्वं वर्तते, न विद्याव्यतिकरेषु शास्त्राभ्यासप्रघट्टकेषु जडता मूर्खत्वं नास्ति। चरणनखेषु पादनखरेषु वृद्धिविलोपदर्शनं नखलुना लवननिरीक्षणं वर्तते, न विभवमहोत्सवेषु न लक्ष्मीणां महोद्यमेषु वृद्धेर्वर्धनस्य कालान्तरदानस्य वा विलोपदर्शनं न वर्तते। पादतलेषु चरणाधोभागेषु पांसुलता धूलिधूसरत्वम्, न वृत्तेषु चारित्रेषु पांसुलता पुंश्चलत्वं न वर्तते। श्लेषपरिसंख्यालंकारः॥

**या देवायतनैरित्यादि।** या पुरी देवायतनैर्देवप्रासादैः कृत्वा स्वर्गावासपुरीव स्वर्गलोकनगरीव भाति शोभते। कथंभूतैर्देवायतनैः। महद्भिर्महामानैः या पुरी विभाति किं तु वनैरुद्यानैश्च स्वर्गावासपुरीव शोभते। कथंभूतैर्वनैः। अमरक्रीडावतारैः अमराणां देवानां क्रीडायाः कूर्दनस्यावतारः प्रवेशो येषु वनेषु तानि अमरक्रीडावताराणि तैः। तथा सत्रैर्दानशालाभिः स्वर्गावासपुरीव शोभते। कथंभूतैः सत्रैः। प्रीणितपान्थसार्थहृदयैः प्रीणितानि तर्पितानि पान्थसार्थानां पथिकसमूहानां हृदयानि चित्तानि यैः सत्रैस्तानि तैः। तथा गृहैर्मन्दिरैः स्वर्गावासपुरीव शोभते। कथंभूतैः गृहैः। लक्ष्मीनां निवासः स्थितिर्येषु गृहेषु तानि लक्ष्मीनिवासानि तैः तथा वापीभिर्दीर्घिकाभिः स्वर्गावासपुरीव शोभते। कथंभूताभिर्वापीभिः। जलदेवतानां वसतिभिर्निवासभूमिभिः तथा जनैर्मनुष्यैः स्वर्गावासपुरीव शोभते। कथंभूतैर्जनैः। देवानामुपमानं येषां ते देवोपमानास्तैः। तथा अन्यैश्च अपरैरपि तैस्तैर्जगत्प्रसिद्धैर्विभवैः संपद्भिः कृत्वा स्वर्गावासपुरीव भाति। उपमासमुच्चयालंकारः॥

तस्यां पराक्रमकुठारखण्डितसमस्तारातिसंतानतरुः, सकलवर्णाश्रमाचारपरिपालनगुरुः, गुरुरिव राज्यलक्ष्मीविनयोपदेशस्य, प्रथमयुगावतार इव सच्चरित्रस्य, धर्ममूर्तिरिव सत्यव्रतस्य, ब्रह्मालय इव परलोकाश्रयणस्य, त्रिदशावास इव मनोभिलषितस्य, पुष्पाकर इवोत्सवपरम्परागमनस्य, भूसर्ग इव सर्वपार्थिवगुणानां समवायः, प्रजापतिरिव लब्धवर्णानां धुरि वर्णनीयः, तारेश्वर इव चतुरुदधिमध्यवर्तिनः कुवलयस्य प्रसाधयिता, शरत्समय इव प्रतापवर्धितमित्रमण्डलः, हेमन्त इव पल्लविताश्रितकुन्दक-

---

अहो सौजन्यरत्नपरायण सौजन्यमेव सत्पुरुषतैव रत्नं अनर्घ्यमाणिक्यम् । त्रिभुवनोद्योतकारकत्वात् । तस्मिन् परायणस्तत्परस्तस्य संबोधनं हे सौजन्यरत्नपरायण । हे आमुष्यायण हे प्रसिद्धात्पत्युरुत्पन्न । राजन् मारदत्त । तस्यां उज्जयिन्यां पुर्यां यशोर्धनामा यशोर्घाभिधानः क्षितिपतिः पृथिवीपतिर्बभूव संजातः । कथंभूतो यशोर्घनामा क्षितिपतिः । पराक्रमकुठारखण्डितसमस्तारातिसंतानतरुः पराक्रमः शक्तिः । प्राण इति यावत् । स एव कुठारः परशुस्तीक्ष्णधारत्वात्कुठान् वृक्षान् इयर्ति गच्छतीति कुठारः कर्मत्वात् इति व्युत्पत्तेस्तेन खण्डिताः द्विधाकृताः समस्तानामरातीनां संतानतरवः कुलवृक्षा येन स तथा । पुनः कथंभूतो यशोर्घनामा क्षितिपतिः । सकलवर्णाश्रमाणां ब्रह्मचारिगृहस्थवानप्रस्थभिक्षाचाराणां परिपालने गुरुः पितृसदृशः । राज्यलक्ष्मीविनयोपदेशस्य राज्यलक्ष्मीविशिष्टानां नयानां नीतीनां उपदेशस्य विचारस्य गुरुरिव बृहस्पतिरिव । सच्चरित्रस्य सदाचारस्य प्रथमयुगावतार इव कृतयुगप्रवृत्तिरिव । सत्यव्रतस्य अनृतविरतिव्रतप्रतिपालस्य धर्ममूर्तिरिव धर्माकर इव । परलोकाश्रयणस्य परलोकप्राप्तेर्ब्रह्मालय इव मोक्ष इव । मनोभिलषितस्य मनोवाञ्छितप्राप्तेः त्रिदशावास इव स्वर्गलोक इव । उत्सवपरम्परागमनस्य महोत्सवश्रेणीनामागमनस्य पुष्पाकर इव । सर्वपार्थिवगुणानां समवायः सर्वेषां पार्थिवानां नरेन्द्राणां गुणानां त्यागादीनां समवायो मिलापकः भूसर्ग इव भूमेः सृष्टिरिव । यथा भूसर्गे भूमेः सृष्टौ सर्वे पार्थिवगुणा भवन्ति भारक्षमादयः समुद्रभूभृदुद्धरणादयश्च भवन्ति । लब्धवर्णानां पण्डितानां यशस्विनां धुरि आदौ वर्णनीयः श्लाघनीयः । क इव । प्रजापतिरिव आदिनाथ इव । 'प्रजापतिर्यः प्रथमं जिजीविषुः' इति वचनात् । चतुरुदधिमध्यवर्तिनश्चतुःसागरान्तर्वर्तिनः कुवलयस्य पृथ्वीमण्डलस्य प्रसाधयिता साधकः । क इव । तारेश्वर इव चन्द्रमा इव । यथा तारेश्वरः कुवलयस्य उत्पलसमूहस्य प्रसाधयिता अलंकर्ता भवति । प्रतापवर्धितमित्रमण्डलः प्रतापेन वर्धितानि मित्राणां एकदेशान्तरितनृपाणां मण्डलानि देशा येन स तथा । क इव । शरत्समय इव आश्विनकार्तिककाल इव । यथा शरत्समयः प्रकर्षेण तापेन वर्धितो मित्रमण्डलो वृद्धिं नीतः सूर्यमण्डलो भवति । पल्लविताश्रितकुन्दकन्दलः पल्लवितानि

न्दलः, शिशिर इव दूषितद्विषदङ्गनापाङ्गपङ्कजः, वसन्त इव समानन्दितद्विजातिः, ग्रीष्म इव शोषितपरवाहिनीप्रसरः, पयोदागम इव संतर्पितवनीपकपादपो बभूव यशोर्घनामा महाभागः सकलविद्याविशारदमतिः क्षितिपतिः ।

अहो सौजन्यरत्नपरायणामुष्यायण, ममानेन मनुष्यजन्मना प्रपितामहः पूर्वेण तु पिता ।

त्रिवेदीवेदिभिर्मान्यस्त्रिविक्रमपराक्रमः ।
त्रिदिवावतरत्कीर्तिस्त्रिलोकीपतिभिः समः ॥ २१ ॥

---

वृद्धिं प्रापितानि आश्रितानां सेवकानां कुन्दकन्दलानि अवभृथसमूहा यज्ञान्तस्नानानि येन स तथा । 'अवभृथा यत्र तत्र कुन्दौ व्रजति जन्मेजयः' इति श्रुतिः । क इव । हेमन्तः मार्गशीर्षपौषमासद्वयमिव । यथा हेमन्तो हेमन्तर्तुः कुन्दकन्दलानामट्टहासपुष्पलतानां पल्लवको भवति । दूषितद्विषदङ्गनापाङ्गपङ्कजः दूषितानि म्लानीकृतानि द्विषदङ्गनानां शत्रुस्त्रीणामपाङ्गपङ्कजानि नेत्रप्रान्तकमलानि येन स तथा । क इव । शिशिर इव माघफाल्गुनमास इव । यथा शिशिरर्तुः पङ्कजानि कमलानि दूषयति । समानन्दितद्विजातिः समानन्दिताः सम्यगानन्दं प्रापिताः द्विजातयो मुनयो जैनब्राह्मणा वा येन स तथा । क इव । वसन्त इव चैत्रवैशाखमासद्वयमिव । यथा वसन्तर्तुः द्विजातीनां कोकिलानां आनन्दयिता भवति । शोषितपरवाहिनीप्रसरः शोषितोऽल्पीकृतः परेषां शत्रूणां वाहिनीनां सेनानां प्रसरो व्याप्तिर्येन स तथा । क इव । ग्रीष्म इव यथा ग्रीष्मो ज्येष्ठाषाढमासः परवाहिनीनामुत्कृष्टनदीनां प्रसरस्य शोषको भवति । संतर्पितवनीपकपादपः संतर्पिताः वनीपकाः याचका एव पादपा येन स तथा तेन । क इव । पयोदागम इव यथा पयोदागमः श्रावणभाद्रपदमासे अव समन्तात् नीपकपादपानां धाराकदम्बवृक्षाणामन्येषां च तरूणां संतर्पको भवति । अपरं कथंभूतः । महाभागः महापुण्यवान् । पुनः कथंभूतः । सकलविद्याविशारदमतिः सकलासु विद्यासु धर्मार्थकाममोक्षशास्त्रेषु विशारदा विचक्षणा मतिः बुद्धिर्यस्य स तथा । अपरं कथंभूतः । मम अनेन मनुष्यजन्मना एतन्मनुष्यभवापेक्षया प्रपितामहः । पितुः पितामह इत्यर्थः । पूर्वेण तु जन्मना यशोधरभवापेक्षया पिता जनको वर्तते श्लेषोपमालंकारः ॥

अपरं कथंभूतः । **त्रिवेदीवेदीत्यादि** । त्रिवेदीवेदिभिः तर्कव्याकरणपुराणसिद्धान्तज्ञापकैः ऋग्वेदयजुर्वेदसामवेदज्ञापकैर्विद्वद्भिर्मान्यः । पुनः कथंभूतः । त्रिविक्रमपराक्रमः त्रिविक्रमस्येव नारायणस्येव पराक्रमो बलं यस्य स तथा । पुनः कथंभूतः । त्रिदिवावतरत्कीर्तिः त्रिदिवे स्वर्गलोके इन्द्रसभायामवतरन्ती प्रवेशं कुर्वती कीर्तिर्यस्य स

चतुर्वर्गसमारम्भश्चतुर्विद्यागमाग्रणीः ।
चतुःसमयसारज्ञश्चतुरम्भोधिविश्रुतः ॥ ३२ ॥
धर्मश्चित्ते करे त्यागः सत्यं वक्त्रे श्रुतं श्रुतौ ।
यस्यानन्यजनाधेयमेतद्भूषणतां गतम् ॥ ३३ ॥
येनार्थिजनतोऽत्यर्थं कामं पूरयता कृताः ।
सकामधेनवो व्यर्थाश्चिन्तामणिसुरद्रुमाः ॥ ३४ ॥
धर्मत्यागाज्जयी बाणो धनुर्युद्धे पराङ्मुखम् ।
ततो यस्याभवद्वैरिविजयाय भुजद्वयम् ॥ ३५ ॥

---

तथा । पुनः कथंभूतः । त्रिलोकीपतिभिः समः इन्द्रधरणेन्द्रचक्रवर्तिसमानः । उपमातिशयालंकारः ॥

**चतुर्वर्गेत्यादि** । कथंभूतो यशोर्घः चतुर्वर्गसमारम्भः चतुर्वर्गाणां धर्मार्थकाममोक्षाणां समारम्भः प्रवृत्तिर्यस्य स तथा । चतुर्विद्यागमाग्रणीः चतसृणां विद्यानां आन्वीक्षिकीत्रयीवार्तादण्डनीतीनां आगमः परिज्ञानं येषां ते चतुर्विद्यागमास्तेषु अग्रणीर्मुख्यः । पुनः चतुःसमयसारज्ञः चतुर्णां समयानां अर्हितशैववैदिकबौद्धराद्धान्तानां सारं गोप्यतत्वं जानातीति चतुःसमयसारज्ञश्चेति कप्प्रत्ययेन सिद्धत्वात् । पुनः चतुरम्भोधिविश्रुतः चतुर्षु अम्भोधिषु समुद्रेषु विश्रुतो विख्यातकीर्तिः । अतिशयालंकारः ॥

**धर्म इत्यादि** । यस्य यशोर्घमहाराजस्य एतत् वस्तु भूषणतां आभरणत्वं गतं प्राप्तम् । कथंभूतं एतत् वस्तु । अनन्यजनाधेयं न अन्यैर्जनैराधीयते अनन्यजनाधेयम् । असाधारणत्वमित्यर्थः । एतत्किम् । चित्ते हृदये धर्मः सर्वप्राणिदयालक्षणो भूषणतां गतः । करे हस्ते त्यागो दानं भूषणतां गतम् । वक्त्रे मुखे सत्यं सत्यवचनं भूषणतां गतम् । श्रुतौ कर्णयुगले श्रुतं शास्त्रं भूषणतां गतम् । दीपकोपमासमुच्चयालंकारः ॥

**येनेत्यादि** । येन यशोर्घेण राज्ञा चिन्तामणिसुरद्रुमाः चिन्तारत्नकल्पवृक्षाः व्यर्थाः कृताः व्यर्थीकृताः । कथंभूताश्चिन्तामणिसुरद्रुमाः । सकामधेनवः कामधेनुसहिताः । येन किं कुर्वता । अर्थिजनस्य अर्थिजनलोकस्य अत्यर्थमतिशयेन कामं वाञ्छितं पूरयता ददता । उपमालंकारः ॥

**धर्मत्यागादित्यादि** । यस्य यशोर्घस्य राज्ञः तत्तस्मात्कारणात् वैरिविजयाय शत्रुपराजयार्थं भुजद्वयं बाहुयुगलं अभवद्बभूव । तत्तस्मात् कारणात् बाणः खलु समो धर्मत्यागात् धनुर्मोक्षात् जयी जयवान् यो धर्मं प्राणिदयालक्षणं त्यजति न गृह्णाति । युद्धे संग्रामे पराङ्मुखो न भवति यो युद्धेषु संमुखो न भवति कातरतया पृष्ठं ददाति तन्न गृह्णाति । श्लेषालंकारः ॥

धिक्तं खङ्गं रणे यस्य प्रीतिः शत्रुगलग्रहे ।
दोर्दण्ड एव यस्यासीदतो विद्विष्टदण्डनः ॥ ३६ ॥
येनात्राश्चर्यशौण्डीर्ययशोरूपैः कुशेशयैः ।
प्रत्यादिश्यन्त दिक्पालकर्णभूषणविभ्रमाः ॥ ३७ ॥
अभवत्कोऽपि नाभागो यस्य लक्ष्मीषु भूभुजः ।
नाभाग इति तेनासौ पप्रथे जगतां मतः ॥ ३८ ॥
निष्कण्टकमहीभागो निर्विपक्षमहोदयः ।
निर्व्याबाधप्रजः प्राप यः परं नाहवोत्सवम् ॥ ३९ ॥

---

**धिक्तमित्यादि** । तं खङ्गं करवालं धिक् । निन्दितोऽयमित्यर्थः । कं तम् । यस्य खङ्गस्य रणे संग्रामे शत्रुगलग्रहे शत्रुकण्ठखण्डने प्रीतिरनुरागो न वर्तते अत एव कारणात् वक्रच्छलेन प्रत्युपकाररहितदोषकारणात् विद्विष्टदण्डनः शत्रुक्षयकरो दोर्दण्ड एव बाहुदण्ड एव आसीद्बभूव । रूपकश्लेषालंकारः ॥ तथा च वक्ष्यति—'कृतकार्येषु भृत्येषु नोपकुर्वन्ति ये नृपाः । जन्मान्तरेऽधिकर्धीनां ते भवेद्गृहकिंकराः'[1] ॥

**येनेत्यादि** । येन यशोर्घेण राज्ञा अत्र अस्मिन् संसारे दिक्पालकर्णभूषणविभ्रमाः दिक्पालनरेन्द्राणां इन्द्रादीनां वा कर्णानां भूषणविभ्रमा अवतंसशोभाः कर्मतापन्नाः प्रत्यादिश्यन्त निषेधं प्रापिताः । निराकृता इत्यर्थः । कैः कृत्वा । आश्चर्यशौण्डीर्ययशोरूपैः अद्भुतत्यागविक्रमपुण्यगुणानुकीर्तनस्वरूपैः कृत्वा कुशेशयैः कमलैः कृत्वा । उपमालंकारः॥

**अभवदित्यादि** । यस्य भूभुजो यशोर्घस्य राज्ञो लक्ष्मीषु धनेषु कोऽपि पुमान् अभागो अलब्धांशो नाभवन्न बभूव तेन कारणेन असौ राजा नाभाग इति प्रथितः पप्रथे प्रसिद्धिं गतः । नाभाग इति द्वितीयं नाम प्राप्तवानित्यर्थः । कथंभूतः । जगतां मतः जगति स्थितलोकैर्नाभाग इति कथित इत्यर्थः । अनुबन्धमतिः । 'बुद्धिपूजार्थेभ्यः क्तः' इति वचनात् कर्तरि क्तप्रत्ययः । 'कर्तृकर्मणोः कृति नित्यम्' इति वचनात् कर्तरि षष्ठी । श्लेषोपमालंकारः ॥

**निष्कण्टकेत्यादि** । यो नाभागो यशोर्घमहाराजः आहवोत्सवं परं केवलं निश्चयेन वा प्राप । सर्वान् प्राप परं संग्रामोत्सवं न प्राप्तवानित्यर्थः । कस्मादाहवोत्सवं न प्राप । तद्धेतुगर्भितं विशेषणमाह—कथंभूतो राजा । निष्कण्टकमहीभागः निष्कण्टकः क्षुद्रशत्रुरहितो महीभागो देशो यस्य स तथा । अपरं कथंभूतः । निर्विपक्षमहोदयः निर्विपक्षवैरिशत्रुरहितो महानुदयश्च य उपचयचयोपचयलक्षणस्त्रिविध उदयो यस्य स तथा । पुनः कथंभूतः । निर्व्याबाधप्रजः निर्व्याबाधा उपद्रवरहिता प्रजा लोको यस्य स तथा । हेत्वलंकारः ॥

---

1. 'स्युस्तद्गृह' इति भवेत्.

भूपतेर्यस्य माकन्दमञ्जरीहृदयंगमाः ।
बभूवुर्भुवनेशानां कर्णपूराय कीर्तयः ॥ ४० ॥
गुणरत्नाम्बुधेर्यस्य ब्रह्मस्तम्बनिकेतने ।
सदा धवलनारम्भं सुधाकुम्भायते यशः ॥ ४१ ॥
यश्चक्षुः सर्वलोकानां यो दक्षः क्षितिरक्षणे ।
यः स्वयंभूर्जगद्वृद्धेर्यः श्रिया पुरुषोत्तमः ॥ ४२ ॥
प्रागद्रिमन्दरहिमाचलसेतुबन्ध-
मर्यादमल्पकमिदं भुवनं विलोक्य ।
स्वीयं यशः पृथुतरं व्यभजत्क्षितीन्द्र-
श्चन्द्रच्छलादुपरि शेषमिषादधस्तात् ॥ ४३ ॥

---

**भूपतेरित्यादि** । यस्य भूपतेर्यशोर्धमहाराजस्य कीर्तयः पुण्यगुणकीर्तनानि भुवनेशानामिन्द्रधरणेन्द्रचक्रवर्त्यादीनां कर्णपूराय कर्णावतंसनिमित्तं बभूवुः भवन्ति स्म । कथंभूताः कीर्तयः । माकन्दमञ्जरीहृदयंगमाः माकन्दस्य आम्रवृक्षस्य मञ्जर्यो वल्लर्यस्तद्वत् हृदयंगमाः मनोहरास्तास्तथा । उपमालंकारः ॥

**गुणरत्नेत्यादि** । यस्य यशोर्धमहाराजस्य यशः पुण्यगुणव्यावर्णनं ब्रह्मस्तम्भनिकेतने ब्रह्माण्डमन्दिरे सदा सर्वकालं सुधाकुम्भायते पूर्णरसघट इवाचरति । कथंभूतं यशः । धवलनारम्भं उज्ज्वलीकरणव्यापारम् । यस्य कथंभूतस्य । गुणरत्नाम्बुधेर्गुणमाणिक्यसमुद्रस्य । रूपकोपमालंकारः ॥

**यश्चक्षुरित्यादि** । यो यशोर्धमहाराजः स सर्वलोकानां निखिलजनानां चक्षुः लोचनं वर्तते । कस्मात् । सन्मार्गदर्शकत्वात् । यो यशोर्धमहाराजः क्षितिरक्षणे पृथ्वीपालने दक्षो विचक्षणो वर्तते । यो यशोर्धमहाराजः जगद्वृद्धेः प्रजावर्धनस्य स्वयंभूर्ब्रह्मा वर्तते । यो यशोर्धमहाराजः श्रिया लक्ष्म्या कृत्वा पुरुषोत्तमो नारायणो वर्तते । चक्षुःशब्देन चक्षुष्मान् कुलकरः दक्षशब्देन प्रजापतिः स्वयंभूशब्देन वृषभनाथः पुरुषोत्तमशब्देन श्रीकृष्ण इति केचित् । रूपकालंकारः ॥

**प्रागित्यादि** । क्षितीन्द्रः श्रीयशोर्धमहाराजः स्वीयं स्वकीयं यशः चन्द्रच्छलात् शशाङ्कमिषेण उपरि आकाशे व्यभजत् विभागीचकार । शेषमिषात् शेषनागपदेन अधस्तात्पातालभूमौ व्यभजत् विभागीचकार । किं कृत्वा । पूर्वं इदं प्रत्यक्षीभूतं भुवनं मर्त्यलोकं अल्पकं अत्यल्पं विलोक्य दृष्ट्वा । पुनश्च किं कृत्वा । स्वीयं यशः पृथुतरं विलोक्य प्रचुरतरं निरीक्ष्य । कथंभूतमिदं भुवनम् । प्रागद्रिमन्दरहिमाचलसेतुबन्धम-

यं प्रतापकम्पितसुरासुरलोकपरिवृढमनवरतोदितोदितविजयानकस्वन-सूचितसकलदिक्पालसेवासमयराढमुपायनीकृताङ्कुशमर्यादमदमदिरामोदा-स्वादोन्मदमधुकरकुलकोलाहलरवपुनरुक्तडिण्डिमाडम्बरकरिघटाः समर्पित-कशावशेषकदनकन्दुकविनोदविनीताजानेयजुहूराणनिवहाः समुपानीतकु-

---

र्योर्द प्रागद्रिश्चोदयाचलो मन्दरश्चास्तपर्वतः हिमाचलश्च हिमालयपर्वतः सेतुबन्धश्चार्वा-क्पर्वतस्ते मर्यादाः अवधिर्यस्य तथोक्तम् । उपमालंकारः ॥

**यमित्यादि** । षड्विभक्तीः सूचयति । प्रथमा तु पूर्वं असूचीतः । जैनेन्द्रव्याकरणे प्रथमा वा, द्वितीया ईप्, तृतीया भा, चतुर्थी अप्, पञ्चमी का, षष्ठी ता, सप्तमी ईप्, ता एवं सू-चयति—यं यशोर्धमहाराजं धरणिपतयः सर्वेऽपि राजानः सिषेविरे सेवितवन्तः । यं कथं-भूतम् । प्रतापकम्पितसुरासुरलोकपरिवृढम् सुरलोकाश्च कल्पवासिनः, असुरलोकाश्च भवन-व्यन्तरज्योतिरमराः, तेषां परिवृढाः प्रभवः स्वामिनः प्रतापेन [दुःसह]तेजसा कम्पिताः सुरासुरलोकपरिवृढा येन स तथा तम् । अपरं कथंभूतम् । अनवरतोदितोदितविजयान-कस्वनसूचितसकलदिक्पालसेवासमयराढम् अनवरतं निरन्तरं उदितादप्युदितः अत्यु-त्कृष्टो योऽसौ विजयो दिग्विजयस्तस्य संबन्धिनो ये आनकाः पटहाः पटु हन्यन्ते पटहा इति तेषां स्वनैः शब्दैः सूचितो ज्ञापितः सकलानां समस्तानां दिक्पालानां राज्ञां तेषां सेवासमय उत्सवलग्नकालस्तस्य राढा शोभा यस्य स तथा तम् । कथंभूताः धरणि-पतयः । उपायनीकृताङ्कुशमर्यादमदमदिरामोदास्वादोन्मदमधुकरकुलकोलाहलरवपु-नरुक्तडिण्डिमाडम्बरकरिघटाः अङ्कुशः सृणिर्मर्यादा अवधिर्यासां करिघटानां ता अङ्कुशमर्यादाः । मद एव दानमेव मदिरा मद्यं तस्या आमोदः परिमलस्तस्यास्वादेन आघ्राणेन उन्मदो हर्षवन्तो मत्ता वा ये मधुकरा भ्रमरास्तेषां कुलानि समूहास्तेषां कोलाहलरवैर्झङ्कारशब्दैः पुनरुक्ता द्विगुणीकृता डिण्डिमाडम्बराः वादित्राटोपा यासां करिघटानां ता मदमदिरामोदस्वादोन्मदमधुकरकुलकोलाहलरवपुनरुक्तडिण्डिमाडम्बराः उपायनीकृताः प्राभृतीकृता उपढौकिता अङ्कुशमर्यादाः सारिपर्यन्ता मदमदिरामोद-स्वादोन्मदमधुकरकुलकोलाहलरवपुनरुक्तडिण्डिमाडम्बराः विशेषणत्रयविशिष्टाः करि-घटा गजानां घटना यैर्धरणिपतिभिस्ते तथोक्ताः । पुनरपि कथंभूताः धरणिपतयः । समर्पितकशावशेषकदनकन्दुकविनोदविनीताजानेयजुहूराणनिवहाः कशा चर्मयष्टिः । सर्जनकमिति यावत् । कशा अवशेषा मर्यादा येषां जुहूराणानां ते कशावशेषाः । कदन-मेव संग्राम एव कन्दुकविनोदो गेन्दुकक्रीडा येषां ते कदनकन्दुकविनोदाः विनीताश्च साधु शिक्षिता अश्वा आजानेयाश्च कुलीनाश्च । समर्पिताः प्राभृतीकृता उपढौकिताः क-शावशेषकदनकन्दुकविनोदविनीताजानेयानां जुहूराणानामश्वानां निवहाः समूहा यैस्ते । पुनः कथंभूताः धरणिपतयः । समुपानीतकुलधनावधिविविधरत्नखचितकवचकाञ्च-नसिचयनिचयाः विविधैर्नानाप्रकारै रत्नैर्माणिक्यैः खचितानि जटितानि यानि कवचानि

लधनावधिविविधरत्नखचितकवचकाञ्चनसिचयनिचयाः प्रदर्शितनिजान्वयपरम्परायातापहसितसुरसुन्दरीविभ्रमरम्भोरुसंदर्भाः सिषेविरे धरणिपतयः।

शौण्डीर्यधैर्यविजयार्जनसंकथासु
यं वर्णयन्ति गुणिनो गुणरत्नराशिम्।
औदार्यनिर्जितसुरद्रुमकामधेनुं
यं च स्तुवन्ति जगतां पतयोऽधुनापि॥ ४४॥

येन निःशेषविष्टपनिविष्टद्विष्टकण्टकोत्पाटनार्पितकरकृपाणेन निजभुजविजयार्जनजनितजगत्कल्याणपरम्परेण च नितान्तखातपर्यस्तपुरपर्यन्तधर-

---

वारवाणानि..........विविधरत्नखचितकवचकाञ्चनसिचयनिचयाः समुपानीताः प्राभृतीकृताः कुलधनावधयः पूर्वपुरुषसंचितधनमर्यादा विविधरत्नखचितकवचकाञ्चनसिचयनिचया यैस्ते तथोक्ताः। पुनः कथंभूताः धरणिपतयः। प्रदर्शितनिजान्वयपरम्परायातापहसितसुरसुन्दरीविभ्रमरम्भोरुसंदर्भाः निजान्वयस्य निजकुलस्य परम्परायां श्रेणौ आयाता उत्पन्ना अपहसितास्तिरस्कृताः सुरसुन्दरीणां देवाङ्गनानां विभ्रमाः विलासाः याभिस्ता अपहसितसुरसुन्दरीविभ्रमा एवंगुणविशिष्टा या रम्भोरव उत्तमकन्यास्तासां संदर्भाः रम्भोरुसंदर्भाः समूहाः प्रदर्शिता उपायनीकृता निजान्वयपरम्परायातानां अपहसितसुरसुन्दरीविभ्रमाणां रम्भोरूणां संदर्भाः समूहा यैस्ते तथोक्ताः। अतिशयोपमालंकारः॥

**शौण्डीर्येत्यादि**। जगतां पतयः इन्द्रधरणेन्द्रनरेन्द्राः अधुनापि इदानीमपि यं यशोर्घं शौण्डीर्यधैर्यविजयार्जनसंकथासु वर्णयन्ति। शौण्डीर्यं च त्यागविक्रमाभ्यां विश्रुतत्वम्, धैर्यं च निष्प्रकम्पित्वम्, विजयार्जनं च दिग्विजयः, शौण्डीर्यधैर्यविजयार्जनानि तेषां संकथासु वार्तासु वर्णयन्ति स्तुवन्ति। कथंभूता जगतां पतयः। गुणिनः। कथंभूतं यम्। औदार्यनिर्जितसुरद्रुमकामधेनुम्। औदार्येण दातृत्वेन कृत्वा निर्जितास्तिरस्कृताः सुरद्रुमाः कल्पवृक्षाः कामधेनवः सुरभयो येन स तथा तम्। उपमालंकारः॥

**येनेत्यादि**। येन यशोर्धमहाराजेन भूमिभुजो राजानः कर्मतापन्नाः येन यशोर्घेण कर्तृभूतेन स्वस्यात्मनो रोषतोषयोः रोषे सति तोषे च सति समतां साहश्यमानिन्यिरे आनीताः। कथंभूतेन येन राज्ञा। निःशेषविष्टपनिविष्टद्विष्टकण्टकोत्पाटनार्पितकरकृपाणेन निःशेषे सर्वस्मिन् विष्टपे भूमण्डले निविष्टाः स्थिता ये द्विष्टाः शत्रुभूमिपास्त एव कण्टकाः सूक्ष्मतीक्ष्णाग्रमुखाः। दुष्टाशया इत्यर्थः। तेषामुत्पाटनाय मूलादुन्मूलनार्थमर्पितो धृतः करे हस्ते कृपाणः खड्गो येन स तथा तेन। पुनः कथंभूतेन राज्ञा। निजभुजविजयार्जनजनितजगत्कल्याणपरम्परेण च निजभुजेन स्वबाहुना यद्विजयार्जनं तेन जनिता उत्पादिता जगतः पृथ्वीमण्डलस्य कल्याणानां श्रेयसां परम्परा श्रेणिर्येन स तथोक्तस्तेन। रोषे सति कथंभूताः भूमिभुजः। [कृताः] नितान्तखातपर्यस्तपुरपर्य-

णयः समदमातङ्गसंगतगेहगोचराः प्रहृष्टहरिविहाराकुलितनिकेतनवीथयः संचरत्खङ्गिप्रकाण्डसंकटदुर्गद्वारदेशाः प्रशान्तसमस्तकृत्यव्यासयः प्रथिततीर्थोपासनाविर्भवदाश्चर्यैश्वर्याः सविभ्रमभ्रान्तमहिषीप्रचारभरितभवनभूमयः परपदाराधनप्रकटमहामन्त्रप्रभावाः सकलजगद्व्यतिरिक्तोद्योगयोगोपायप्र-

---

न्तधरणयः नितान्तमतिशयेन खाता विदारिताः पर्यस्ता भग्नाः पुराणां नगराणां पर्यन्तधरणयो नगरबहिर्भागभूमयो येषां ते तथोक्ताः। तोषे सति कथंभूता भूमिभुजः कृताः। नितान्तखातपर्यस्तपुरपर्यन्तधरणयः नितान्तमतिशयेन खाताभिः खातिकाभिः पर्यस्ता वेष्टिताः पुराणां पर्यन्तधरणयो येषां ते तथोक्ताः। रोषे सति कथंभूताः कृताः। समदमातङ्गसंगतगेहगोचराः समदैः साहंकारैर्मातङ्गैश्चाण्डालैः संगताः संयुक्ताः। समदमातङ्गैर्मदोन्मत्तहस्तिभिः संगता सहिता गेहगोचरा गृहसंचरभूमयो येषां ते तथोक्ताः। अपरं रोषे सति कथंभूताः। प्रहृष्टहरिविहाराकुलितनिकेतवीथयः प्रहृष्टानां हर्षमितानां हरीणां वानराणां विहारेण पर्यटनेन आकुलिता विह्वलीकृता व्याप्ता निकेतनानां गृहाणां वीथयो मार्गा येषां ते तथोक्ताः। हर्षे सति कथंभूताः। प्रहृष्टैर्हर्षमितैर्हरिभिर्घोटकैर्विहारैर्विशिष्टमौक्तिकमालाभिराकुलिताः शोभिताः निकेतनानां सौधानां वीथयः प्रतोल्यो येषां ते तथोक्ताः। पुना रोषे सति कथंभूताः। संचरत्खङ्गिप्रकाण्डसंकटदुर्गद्वारदेशाः संचरतां प्रवेशं कुर्वतां खङ्गिनां वाध्रीणसानां गण्डकानां प्रकाण्डैः संकटा व्याप्ता दुर्गा मनुष्यैः प्रवेष्टुमशक्या द्वारदेशा प्राकारद्वारप्रदेशा उद्वशत्वात् गृहप्रवेशा येषां ते तथा। तोषे सति संचरद्भिः खङ्गिप्रकाण्डैः करवालकरप्रशस्तपुरुषैः संकटा दुःसंचारा दुर्गद्वारदेशाः प्राकारद्वारप्रवेशा येषां ते तथा। पुना रोषे सति कथंभूताः। प्रशान्तसमस्तकृत्यव्यासयः प्रशान्ता उपशमं गताः समस्तानां समग्राणां कृत्यानां राजकार्याणां व्यासयः प्रवृत्तयो येषां ते तथा। तोषे सति प्रशान्ताः समस्ताः कृत्यव्यासयो भेद्यव्यासयो येषां ते तथा। रोषे सति कथंभूताः। प्रथिततीर्थोपासनाविर्भवदाश्चर्यैश्वर्याः प्रथितानि यानि तीर्थानि प्रयागगङ्गाद्वारषण्मासद्वारावतीप्रयाणवाणारसीप्रवेशास्तेषामुपासनेन समीपनिवासेन तपश्चरणकरणेन आविर्भवन्ति प्रकटीभवन्ति आश्चर्याणि आश्चर्यभूतानि ऐश्वर्याण्यणिमाद्यष्टसिद्धयो येषां ते तथा। तोषे सति प्रथिता विख्याता ये तीर्था मन्त्रिपुरोहितसेनापतिप्रभृत्यष्टादश प्रकृतयस्तेषामुपासनेन सेवया आविर्भवन्ति प्रकटीभवन्ति प्रादुर्भवन्ति आश्चर्यभूतानि ऐश्वर्याणि नार्पल्यानि येषां ते तथा। राज्ञामष्टादशतीर्थानि यथा—सेनापतिर्गणको राजश्रेष्ठी दण्डाधिपो मन्त्री महत्तरो बलवत्तरश्चत्वारो वर्णाश्चतुरङ्गबलं पुरोहितोऽमात्यो महामात्यश्चेति। विदेहेषु ब्राह्मणवर्णो नास्तीति सप्तदशतीर्थानि। रोषे सति कथंभूताः। सविभ्रमभ्रान्तमहिषीप्रचारभरितभवनभूमयः वीनां पक्षिणां भ्रमः पर्यटनं विभ्रमः सविभ्रमेण काकादिपातसहितेन भ्रान्ताः पर्यटिता या महिष्यो रक्ताक्ष्यस्तासां प्रचारेण पङ्कभक्षणेन भरिता व्याप्ता भवनभूमयो येषां ते तथा। तोषे सति सविभ्रमा सभ्रूक्षेपा भ्रान्ताः पर्यटन्त्यो या महिष्यः पट्टमहादेव्यस्तासां प्रचारेण गमनागमनेन भरिता व्याप्ता भवनभूमयो येषां ते तथा। रोषे सति परपदाराधनप्रकटमहामन्त्रप्रभावाः

साधितप्रकृष्टात्मीयप्रवृत्तयः श्रीफलोपयोगातिशयविशेषवशीकृतविश्वविश्वंभराभृत्कटकाः प्रसीददनवद्यविद्यामन्दाकिनीप्रवाहविनिर्मूलितनिखिलसुखान्तरायतरवः स्वस्य रोषतोषयोः समतामानिन्यिरे भूमिभुजः ।

---

परपदस्य मोक्षस्य आराधनेन प्रकटः स्फुटीभूतो महामन्त्रस्य पञ्चनमस्कारादेः 'ॐ नमः शिवाय' इत्यादिश्च प्रभावो माहात्म्यं येषां ते तथा । तोषे सति परैः शत्रुभिः पदाराधनेन चरणसेवया प्रकटः स्फुटीभूतो महामन्त्रस्य पञ्चाङ्गमन्त्रस्य प्रभावो माहात्म्यं येषां ते तथोक्ताः । तथा चोक्तम्—'सहायसाधनोपायो देशकोशवलावलम् । विपत्तेश्च प्रतीकारः पञ्चाङ्गो मन्त्र इष्यते ॥' अथवा प्रकारान्तरेण पञ्चाङ्गो मन्त्रः—कर्मणामारम्भोपायः पुरुषद्रव्यसंपत् देशकालप्रविभागो विनिपातः प्रतीकारः कार्यश्चेति । रोषे सति कथंभूताः । सकलजगद्व्यतिरिक्तोद्योगयोगोपायप्रसाधितप्रकृष्टात्मीयप्रवृत्तयः सकलात् समग्रात् जगतः संसारलोकात् व्यतिरिक्तोऽधिकतरो योऽसावुद्योग उद्यमस्तेनोपलक्षितो योऽसौ योगः समाधिस्तस्योपायो वैराग्यादिसामग्री तेन प्रसाधिता प्राप्ता प्रकृष्टा उत्कृष्टा आत्मीया आत्महिता प्रवृत्तिरालम्भनादिलक्षणा यैस्ते तथोक्ताः । उक्तं च—'साम्यं स्वास्थ्यं समाधिश्च योगश्चेतोनिरोधनम् । शुद्धोपयोग इत्येते भवन्त्येकार्थवाचकाः ॥' तोषे सति सकलजगद्व्यतिरिक्तः सर्वलोकाधिको योऽसावुद्योगः अभिषेणनं शत्रुसंमुखगमनं स्यात् योऽसौ योगः अलब्धलाभस्तस्योपायः सामदानदण्डभेदलक्षणस्तेन प्रसाधिता स्वीकृता प्रकृष्टा अनन्यनृपसाधारणीया आत्मीया आत्महिता प्रवृत्तिर्व्यापारो यैस्ते तथोक्ताः । रोषे सति श्रीफलोपयोगातिशयविशेषवशीकृतविश्वविश्वंभराभृत्कटकाः श्रीफलानां बिल्वफलपत्रादीनां उपयोग आस्वादनं तदतिशयेन विशेषेण वशीकृतानि स्वीकृतानि विश्वेषां सर्वेषां विश्वंभराभृतां पर्वतानां कटकानि तटानि यैस्ते तथा । तोषे सति श्रीणां लक्ष्मीणां फलानि सर्वेन्द्रियसुखानि तेषां उपयोगाय आस्वादनाय अतिशयेन विशेषेण वशीकृताः विश्वेषां सर्वेषां विश्वंभराभृतां सामन्तानां कटकाः सैन्यानि यैस्ते तथा । रोषे सति प्रसीददनवद्यविद्यामन्दाकिनीप्रवाहविनिर्मूलितनिखिलसुखान्तरायतरवः प्रसीदन्ती प्रसन्नीभवन्ती यानवद्यविद्या कर्ममलकलङ्करहिता घातिसंघातघातलक्षणा विद्या या केवलज्ञानं सैव मन्दाकिनी नदी स्वर्गमृत्युपाताललोकमार्गत्रयगामित्वात्तस्याः प्रवाहेण पूरेण विनिर्मूलिता समूलकाषं कषिता निखिलानां समग्राणां सुखानां परमानन्दलक्षणानां अन्तरायतरवो विघ्नवृक्षा यैस्ते तथा । तोषे सति प्रसीदन्ती प्रसन्नीभवन्ती या अनवद्यविद्या आन्वीक्षिकीदण्डनीतित्रयीवार्तालक्षणा राजविद्याचतुष्टयी सैव मन्दाकिनी स्वर्णदी तस्याः प्रवाहेण संततप्रवर्तनेन विनिर्मूलिता मूलादुन्मूलिता निखिलसुखान्तरायतरवः सर्वेन्द्रियसौख्यविघ्नवृक्षा यैस्ते तथा । श्लेषोपमालंकारः ॥

येन व्यधायि द्वयमेव राज्ञा सुदुर्लभं प्रार्थितकामदेन ।
त्यागार्थिनां यावदयं जनोऽर्थी शौण्डीरशब्दः क्षितिपान्तरेषु ॥ ४५ ॥

यस्मै सच्चरित्रपवित्रकीर्तिकौमुदीसमासादितप्रीतिप्रसरः सर्वस्वमिव स्थैर्यं मन्दरः, सरित्पतिर्गाम्भीर्यम्, अनङ्गः सौभाग्यम्, अमरगुरुरैतिह्यरहस्यम्, सुरतरुः सेव्यत्वम्, अवनिः क्षान्तिम्, अनङ्गश्रीर्महत्त्वम्, सरस्वती सिद्धिं वाचि, लक्ष्मीर्निदेशकर्मणि, चिन्तामणिर्मनसि, कुलदेवी वपुषि, वैवस्वतः सकलजनवश्यतायाम्, एवमन्येऽपि वरुणवैश्रवणप्रभृतयः कुलधनानीव स्वभागधेयानि स्पर्शयामासुः ।

---

**येन व्यधायीत्यादि** । येन राज्ञा यशोर्धमहाराजेन प्रार्थितकामदेन याचिताभीष्टदायिना द्वयमेव न अधिकं सुदुर्लभं अतिशयेन दुर्लभं व्यधायि कृतम् । किं तदभीष्टद्वयम् । क्षितिपान्तरेषु त्यागार्थिनां दानिनां तावत् अनुक्रमेण अयं जनः अर्थी लोकः अर्थी याचको वर्तते सुदुर्लभः कृतः । कोऽप्यर्थी न वर्तते यस्मै दानं दीयते । शौण्डीरशब्दस्त्यागविक्रमाभ्यां विश्रुतः कृतः । कोऽपि नास्तीति भावः । निन्दास्तुत्यलंकारः ॥

**यस्मै इत्यादि** । यस्मै यशोर्धाय राज्ञे मन्दरो मेरुगिरिः स्थैर्यं स्थिरत्वं स्पर्शयामास दत्तवान् । कथंभूतं स्थैर्यम् । सर्वस्वमिव धनमिव । कथंभूतो मन्दरः । सच्चरित्रपवित्रकीर्तिकौमुदीसमासादितप्रीतिप्रसरः सत्समीचीनं चरित्रं परनारीसोदरत्वं कीर्तिधर्मोचितदानित्वं परोपकारित्वं परदोषग्रहिलत्वं परद्रव्यसंतोषित्वं परदुःखसहकारित्वं निजगुणभाषणे मूकत्वं न्यायमार्गप्रवर्तित्वं अप्रियवचनेऽपि प्रियकारित्वम् । तथा चोक्तम्—'न ब्रूते परदूषणं परगुणं वक्त्यल्पमप्यन्वहं संतोषं वहते परर्द्धिषु परं वार्तासु धत्ते शुचम् । स्वल्पाघं न करोति नोज्झति नयं नौचित्यमुल्लङ्घयत्युक्तोऽप्यप्रियमप्रियं न रचयत्येतच्चरित्रं सताम् ॥' इत्युक्तलक्षणस्य चरित्रस्य या पवित्रा सर्वजनपापनाशिनी कीर्तिर्यशःप्रसिद्धिः सैव कौमुदी चन्द्रज्योत्स्ना तया समासादितः प्राप्तो यः प्रीतेरनुरागस्य प्रसरो व्याप्तिर्येन मन्दरेण स तथोक्तः । यस्मै यशोर्धाय सरित्पतिः समुद्रः गाम्भीर्यं गम्भीरत्वमतलस्पर्शत्वं स्पर्शयामास । अनङ्गः कन्दर्पः सौभाग्यं सुभगत्वं यस्य वार्तापि श्रुता प्रीतिमुत्पादयति तत्सौभाग्यं आदेयमूर्तित्वं स्पर्शयामास । अमरगुरुर्बृहस्पतिरैतिह्यरहस्यं नीतिशास्त्रहृदयं अनादिवार्तामर्म स्पर्शयामास । सुरतरुः कल्पवृक्षः सेव्यत्वं आश्रयणीयत्वं स्पर्शयामास । अवनिर्भूमिदेवता क्षान्तिं उत्तमक्षमां स्पर्शयामास । अनङ्गश्रीराकाशलक्ष्मीर्महत्त्वं अनल्पत्वं स्पर्शयामास । सरस्वती जैनभारती वाचि वाचायां सिद्धिं वचनसिद्धिं स्पर्शयामास । लक्ष्मीश्चन्द्रवृद्धभगिनी निदेशकर्मणि सिद्धिं स्पर्शयामास । चिन्तामणिर्मनसि सिद्धिं स्पर्शयामास । कुलदेवी वपुषि । वैवस्वतो यमदेवता सकलजनवश्यतां सर्वलोकवशीकरणसिद्धिं स्पर्शयामास । एवममुना प्रकारेण अन्येऽपि वरुणवै-

यस्मै प्रजापालनवर्णभाजे ददुः सुराः स्वांशममी नृपाय ।
ऐश्वर्यमिन्द्रस्तपनः प्रतापं कलाः कलावांश्च वलं वलालः ॥ ४६ ॥

यस्मादभूदयं लोकश्चतुर्वर्गफलोदयः ।
अन्यायभुजगाभोगगारुत्मतमणेर्नृपात् ॥ ४७ ॥

नभोभूभोगिलोकार्हैः स्रोतोभिर्भुवनत्रये ।
ततान भूभृतो यस्मात्कीर्तिस्त्रिपथगापगा ॥ ४८ ॥

यस्मात्पूर्वे परे भूपा न गुणैरतिशिश्यिरे ।
मध्यमोऽपि स्मृतस्तेषामुत्तमः प्रथमश्च सः ॥ ४९ ॥

---

श्रवणप्रभृतयः पाशिकुवेरप्रमुख्या अगम्यत्वाक्षयनिधानवत्त्वप्रभृतिगुणवन्तः स्वभागधेयानि निजगुणदानानि स्पर्शयामासुर्दत्तवन्तः । कथंभूतानि स्वभागधेयानि । कुलधनानीव पूर्वपुरुषसंचितवित्तानीव । दीपकालंकारः ॥

**यस्मै इत्यादि** । यस्मै यशोर्घाय नृपाय राज्ञे अमी एते प्रत्यक्षीभूताः सुरा देवाः स्वांशं निजभागधेयं ददुर्विश्राणयामासुः । कथंभूताय यस्मै । प्रजापालनवर्णभाजे प्रजापालनस्य लोकानां रक्षणस्य वर्णं यशो भजते प्रजापालनवर्णभाक् तस्मै प्रजापालनवर्णभाजे । अमी के । इन्द्र ऐश्वर्यं ईश्वरत्वं ददौ । तपनः श्रीभास्करः प्रतापं ददौ । कलावांश्चन्द्रः कलाः ददौ । वलालो वासुर्वलं सामर्थ्यं ददौ । समुच्चयालंकारः ॥ अव्विभक्ती समाप्ता ॥

अथेदानीं पञ्चभिर्वृत्तैः काविभक्तिं निरूपयन्नाचार्यः—**यस्मादित्यादि** । यस्मान्नृपात् नरेन्द्राद्यशोर्घात् अयं प्रत्यक्षीभूतो लोकः मनुष्यलोकश्चतुर्वर्गफलोदयो धर्मार्थकामंमोक्षफलवान् अभूद्बभूव । कथंभूताद्यस्मात् । अन्यायभुजगाभोगगारुत्मतमणेः अन्यायः अनीतिः स एव भुजगः सर्पः पापविषसंभृतमुखत्वात् कुटिलगत्या च तस्य आसमन्ताद्भोगः फणामण्डलं तस्य संकोचने गारुत्मतमणेः विषापहारत्वात् । रूपकालंकारः ॥

**नभोभू इत्यादि** । यस्मात् भूभृतो नरेन्द्रात् पक्षे हिमाचलात् कीर्तिस्त्रिपथगापगा कीर्तिगङ्गानदी स्रोतोभिः प्रवाहैर्भुवनत्रये त्रैलोक्ये ततान विश्रुता । कथंभूतैः स्रोतोभिः । नभोभूभोगिलोकार्हैः नभोलोक ऊर्ध्वलोको भूलोको मध्यलोकः भोगिलोकः पातालं तत्र स्थितलोकैरर्हाणि पूज्यानि नभोभूभोगिलोकार्हाणि तैः । स्वर्गमृत्युपाताललोककर्णपरंपराभिः कीर्तिस्ततानेत्यर्थः । रूपकश्लेषालंकारः ॥

**यस्मादित्यादि** । यस्मान्नरेन्द्रात् पूर्वे अतीताः भूपा नरेन्द्राः परे भविष्यन्तो भूपाः गुणैः कृत्वा न अतिशिश्यिरे न अतिशयवन्तो बभूवुः । तेषां नरेन्द्राणां मध्ये मध्यमोऽपि मध्यवर्त्यपि स नरेन्द्र उत्तमः स्मृतः प्रथमश्च स्मृतः । उपमालंकारः ॥

अन्य एवाचलः कश्चिदेष नूनं महीपतिः।
प्रबभूव परं यस्माल्लक्ष्म्या सह सरस्वती ॥ ५० ॥

यस्मादशेषगुणरत्ननिधेर्महीशा-
देते गुणा जगति पप्रथिरे महान्तः।
शौर्यं हरावमरधेनुषु कामदत्वं
गाम्भीर्यमम्बुधिषु भास्वति च प्रतापः ॥ ५१ ॥

यस्य शराभ्यासावसरेषु बद्धमुष्टिता न वसुविश्राणनेषु, पत्रभङ्गेषु भुजगता न हृषीकविलसितेषु, भूषणेषु विकृतिदर्शनं न मनोविजृम्भितेषु, मदगजेषु परप्रणेयता न कार्यानुष्ठानेषु, विलासिनीगतिषु स्खलितता न प्रतापेषु, करिकर्णेषु चपलता न कर्मारम्भेषु।

---

**अन्य इत्यादि।** एष महीपतिर्यशोधर्ममहाराजः नूनं निश्चयेन अन्य एव अपूर्वः कश्चिदनिर्वचनीयः अचलः पर्वतो वर्तते। यस्मादचलात् परं निश्चयेन लक्ष्म्या सह सरस्वती प्रबभूव प्रसूता। यस्मादचलात् सरस्वतीनाम नदी प्रभवति तस्माल्लक्ष्मीर्न प्रभवतीति व्यतिरेकालंकारः। रूपकं च ॥

**यस्मादित्यादि।** यस्मान्महीशात्पृथ्वीपतेरेते प्रत्यक्षीभूता महान्तो गुरुतरा गुणाः शौर्यादयो जगति संसारे पप्रथिरे विश्रु(स्तृ)ताः। कथंभूताद्यस्मात्। अशेषगुणरत्ननिधेः अशेषाः समग्राः ये गुणास्त एव रत्नानि त्रिभुवनद्योतकारत्वात् तेषां निधिः शेवधिरक्षयनिधानं तस्मात् तथोक्तात्। एते के। हरौ श्रीनारायणे शौर्यं सुभटत्वं पप्रथे। अमरधेनुषु कामधेनुषु कामदत्वं अभीष्टफलदायित्वं पप्रथे। अम्बुधिषु समुद्रेषु गाम्भीर्यमतलस्पर्शत्वमधरताधस्त्वमगाधत्वं पप्रथे। भास्वति श्रीसूर्ये प्रतापः पप्रथे। चकारोऽनुक्तसमुच्चयार्थः। तेनात्युत्कृष्टसमुच्चयालंकारः ॥

ताविभक्तिं दर्शयति—**यस्येत्यादि।** यस्य यशोधर्ममहाराजस्य शराभ्यासावसरेषु बाणगुणिनिकाप्रस्तावेषु बद्धमुष्टिता वर्तते, न वसुविश्राणनेषु बद्धमुष्टिता कृपणता वर्तते। पत्रभङ्गेषु कर्पूरकस्तूरीचन्दनादिविलेपनेषु भुजगता बाहुविलेपनं भुजयोर्गच्छतीति भुजगः पत्रभङ्गस्तस्य भावो भुजगता पत्रावलीषु वर्तते, न हृषीकविलसितेषु इन्द्रियचेष्टितेषु भुजगता विटत्वं वर्तते। भूषणेषु विकृतिदर्शनं विविधाकृतिविधानं तस्या दर्शनं आलोकनं वर्तते, न मनोविजृम्भितेषु चित्तप्रसरेषु विकृतिदर्शनं असच्चेष्टितं वर्तते। मदगजेषु मत्तकुञ्जरेषु परप्रणेयता प्रान्तारकर्तव्यता वर्तते, न कार्यानुष्ठानेषु परप्रणेयता परायत्तता वर्तते। विलासिनीगतिषु कमनीयकामिनीगमनेषु स्खलितता शुक्रमोचनता वर्तते, न प्रतापेषु स्खलितता खण्डनं वर्तते। करिकर्णेषु

पातालवेलावनवारिवासविश्वंभराभृत्क्रमणाच्चिराय ।
खिन्नेव कीर्तिः क्षितिपस्य यस्य विश्राम्यति स्म त्रिदिवालयेषु ॥ ५२ ॥

यस्मिन्दिग्जैत्रयात्राकृतकुतूहले च बभूवुर्महावाहिन्यः संध्याचमनकुल्या इव, वेलावनानि पुष्पावचयभूमय इव, पयोधयो जलकेलिदीर्घिका इव, द्वीपान्तराणि प्रतिवेशनिवेशा इव, कुलशिखरिणः क्रीडाचला इव, दिक्पालभवनान्युपकार्या इव, ककुप्कुम्भिस्तम्भाः प्रशस्तिशिला इव ।

यस्मिन्महीं शासति भूमिनाथे बभूवुरल्पे किल कल्पलोकाः ।
मनीषितावाप्तमनोरथानां स्वर्गाय यस्मान्न मनः प्रजानाम् ॥ ५३ ॥

---

चपलता गजश्रवणेषु चापल्यं वर्तते, न कर्मारम्भेषु कार्यप्रारम्भेषु चपलता गृहीतमुक्तता वर्तते । उक्तं च—'नारभ्यते किमपि विघ्नभयेन नीचैः संजातविघ्नमधमाश्च परित्यजन्ति । संछिद्यमानतनवोऽपि समाप्तविघ्ना नारब्धमुत्तमजनास्तु परित्यजन्ति ॥' परिसंख्याश्लेषालंकारः ॥

**पातालेत्यादि** । यस्य क्षितिपस्य यशोर्घस्य राज्ञः कीर्तिः पुण्यगुणानुकीर्तनं चिराय दीर्घकालं त्रिदिवालयेषु स्वर्गविमानेषु देवेषु वा विश्राम्यति स्म तिष्ठति स्म तस्थौ । कथंभूता कीर्तिः । उत्प्रेक्ष्यते—पातालवेलावनवारिवासविश्वंभराभृत्क्रमणात्[1] खिन्नेव श्रान्तेव पातालानि च नागलोकाः वेलावनानि च व्यन्तरनिवासाः वारिवासाश्च असंख्येयसमुद्राः विश्वंभराभृतश्च कुलपर्वतास्तेषु (सद्)भ्रमणं चिराय दीर्घकालं पर्यटनं तत्तथोक्तं तस्मात् । उत्प्रेक्षालंकारः ॥

अथेदानीमीब्विभक्तिं दर्शयति—**यस्मिन्नित्यादि** । यस्मिन् यशोर्घमहाराजे दिग्जैत्रयात्राकृतकुतूहले सति दिग्विजयविहितविनोदे सति महावाहिन्यो महानद्यः सरयूशुतुद्रिस्वर्णदीशमनस्वस्तनर्मदाप्रभृतयः संध्याचमनकुल्या इव सामायिकवेलोपस्पर्शकृत्रिमनद्य इव बभूवुः संजाताः । वेलावनानि समुद्रतटोद्यानानि पुष्पावचयभूमय इव कुसुमचुण्टनवाटिका इव बभूवुः । पयोधयश्चत्वारः समुद्राः जलकेलिदीर्घिका इव तोयक्रीडावापिका इव बभूवुः । द्वीपान्तराणि प्रतिवेशनिवेशा इव बभूवुः । कुलशिखरिणो हिमवद्विन्ध्यसह्याचलादयः क्रीडाचला इव केलिपर्वता इव बभूवुः । दिक्पालभवनानि इन्द्रादीनां गृहाणि उपकार्या इव (मठ)नवमण्डपादिराजसदनानीव बभूवुः । ककुप्कुम्भिस्तम्भा दिग्गजेन्द्रालानस्तम्भाः प्रशस्तिशिला इव प्रसिद्धलेखनपट्टा इव बभूवुः । दीपकोपमालंकारः ॥

**यस्मिन्निति** । यस्मिन् भूमिनाथे यशोर्घमहाराजे महीं पृथ्वीं शासति प्रतिपालयति सति । किलेति लोकोक्तौ शास्त्रोक्तौ वा । कल्पलोकाः स्वर्गलोकाः अल्पेच्छतरा

---

१. 'भृत्सङ्क्रमणात्' इति पाठः.

अहो महीपाल नृपस्य तस्य त्वद्वंशजा चन्द्रमतिः प्रियासीत् ।
पतिव्रतत्वेन महीसपत्न्याः प्राप्तोपरिष्टात्पदवी यया हि ॥ ५४ ॥
सामूद्रतिस्तस्य मनोभवस्य धर्मावनिर्धर्मपरायणस्य ।
गुणैकधाम्नो गुणरत्नभूमिः कलाविनोदस्य कलाप्रसूतिः ॥ ५५ ॥
शीलेन दृष्टान्तपदं जनानां निदर्शनत्वं पतिसुव्रतेन ।
पत्युर्निदेशावसरोपचारादाचार्यकं या च सतीषु लेभे ॥ ५६ ॥
रूपं भर्तरि भावेन सौभाग्यं विनयेन च ।
कलावत्त्वमृजुत्वेन भूषयामास यात्मनः ॥ ५७ ॥

---

बभूवुः संजाताः । कस्मात् कारणात् । यस्मात् प्रजानां लोकानां मनश्चित्तं स्वर्गाय न वर्तते । कथंभूतानां प्रजानाम् । मनीषितावाप्तमनोरथानां मनीषितानि मनोवाञ्छितानि अवाप्तानि प्राप्तानि मनोरथैर्दोहदैर्यासां तास्तथोक्तास्तासाम् । हेत्वलंकारः ॥

**अहो महीपाल इत्यादि** । हे मारदत्त महाराज, तस्य यशोर्घस्य महाराजस्य चन्द्रमतिश्चन्द्रमतिनाम्नी प्रिया वल्लभा पट्टमहादेवी आसीद्बभूव । कथंभूता चन्द्रमतिः । त्वद्वंशजा त्वदीयकुले संजाता । यया चन्द्रमत्या पतिव्रतत्वेन भर्तृभक्तित्वेन महीसपत्न्याः मह्येव भूमिरेव सपत्नी अपरा भार्या महीसपत्नी तस्याः महीसपत्न्याः पृथ्वीप्रतिभार्यायाः उपरिष्टादधिकतरा पदवी पदं प्राप्ता । व्यतिपतिव्रता बभूवेत्यर्थः । रूपकालंकारः ॥

**साभूदित्यादि** । तस्य यशोर्घस्य मनोभवस्य कामदेवस्य सा चन्द्रमतिर्महादेवी रतिरभूत् । तस्य धर्मपरायणस्य धर्मतत्परस्य धर्मावनिर्धर्मभूमिरभूद्बभूव । तस्य गुणैकधाम्नः गुणानामद्वितीयगृहस्य गुणरत्नभूमिर्गुणमणीनां खनिरभूत् । तस्य नृपस्य कलाविनोदस्य कलाकुतूहलस्य कलाप्रसूतिः कलानामुत्पत्तिरभूत् । दीपकालंकारः । रूपकोपमा च ॥

**शीलेनेत्यादि** । या चन्द्रमतिः शीलेन ब्रह्मचर्यप्रतिपालनेन जनानां लोकानां दृष्टान्तपदं उदाहरणस्थानं लेभे प्राप्तवती । या चन्द्रमतिर्महादेवी पतिसुव्रतेन पत्युर्गमनं करोति अन्यं पुमांसं पितृपुत्रसदृशं मन्यते इति पत्युः संबन्धि सुष्ठु शोभनं व्रतं पतिसुव्रतं तेन पतिसुव्रतेन कृत्वा जनानां लोकानां निदर्शनत्वं लेभे । या चन्द्रमतिः पत्युर्भर्तुर्निदेशावसरोपचारात् आदेशसमयप्रतिपालनात् सतीषु साध्वीषु विषये आचार्यकं आचार्यत्वं लेभे लब्धवती । उपमादीपकालंकारः ॥

**रूपमित्यादि** । या चन्द्रमतिः भर्तरि पत्यौ भावेन अनुरागेण कृत्वा आत्मनः स्वस्य शोभनं वर्णं भूषयामास अलंचकार । या चन्द्रमतिः विनयेन कृत्वा सौभाग्यं सुभगत्वं प्रीतिजनकत्वं भूषयामास । या चन्द्रमतिः ऋजुत्वेन सरलतया अकुटिलतया कलावत्त्वं कलाविज्ञत्वं भूषयामास । दीपकालंकारः ॥

अपि च सत्यपि महति शुद्धान्ते या दयेव धर्मस्य, नयपद्धतिरिव स्याद्वादस्य, नीतिरिव राज्यस्य, क्षान्तिरिव तपसः, अनुत्सेकस्थितिरिव श्रुतस्य, कीर्तिरिव जीवितव्यस्य, विजयवैजयन्तीव मनसिजस्य, माकन्दमञ्जरीव पुष्पाकरस्य, कल्पलतेव त्रिदिवद्रुमस्य, कल्याणपरम्परेव पुण्योदयदिवसस्य, तस्य महीपतेर्मतिदेवतायाः प्रणयप्रासादाधिष्ठानभूमिरासीत् ।

यस्याश्च भर्तुः श्रीर्विलासवयस्येव, कीर्तिः प्रसाधनसखीव, सागराम्बरा मनोरथानुचरीव, सरस्वती विनोदभुजिष्येव, भूषणलक्ष्मीर्निजरूपावलोकनादर्शकेलिरिव भवन्ती स्त्रीत्वेनैव सापत्न्यमभजत्, न पुनः प्रणयप्रसरखण्डनेन ।

---

अपि च तथा च या चन्द्रमतिः महति बृहति अतिप्रचुरे सहस्रगणनावति शुद्धान्ते अन्तःपुरे निर्मलचित्ते वसति सत्यपि तस्य यशोर्घस्य महीपते राज्ञो मतिदेवतायाः बुद्धिदेवतायाः प्रणयप्रासादाधिष्ठानभूमिरासीत् प्रणयः स्नेहः स एव प्रासाद उन्नतोज्ज्वलत्वात् तस्य अधिष्ठानभूमिर्भवति मूलं भवति । कथमिव । धर्मस्य दयेव । यथा दया धर्मस्य मूलं भवति । स्याद्वादस्य अनेकान्तमनसः नयपद्धतिरिव नैगमादिनयानां मार्ग इव । यथा नयपद्धतिः स्याद्वादस्य मूलं भवति । राज्यस्य नीतिरिव यथा नीतिर्न्यायमार्गो राज्यस्य अधिष्ठानभूमिर्भवति । तपसः क्षान्तिरिव यथा तपश्चरणस्य क्षान्तिः क्षमा अधिष्ठानभूमिर्भवति । अनुत्सेकस्थितिरिव श्रुतस्य यथाश्रुतस्य शास्त्रस्य अनुत्सेकस्थितिरगर्भस्वभावो अधिष्ठानभूमिर्भवति । कीर्तिरिव जीवितव्यस्य यथा कीर्तिर्जीवितव्यस्य प्राणधारणस्य अधिष्ठानभूमिर्भवति । विजयवैजयन्तीव मनसिजस्य यथा मनसिजस्य कन्दर्पस्य विजयवैजयन्ती त्रिजगज्जयलब्धध्वजा अधिष्ठानभूमिर्भवति । यथा माकन्दमञ्जरी सहकारवल्लरी पुष्पाकरस्य वसन्तस्य अधिष्ठानभूमिर्भवति । यथा कल्पलता कल्पवल्ली त्रिदिवद्रुमस्य कल्पवृक्षस्य अधिष्ठानभूमिर्भवति । यथा कल्याणपरम्परा शुभश्रेणिः पुण्योदयदिवसस्य पुण्यपाकदिनस्य अधिष्ठानभूमिर्भवति । दीपकोपमालंकारः ॥

यस्याश्चन्द्रमतेर्भर्तुः श्रीः लक्ष्मीः स्त्रीत्वेनैव सापत्न्यं सपत्नीत्वं सपत्नीभावमभजत्, न पुनः प्रणयप्रसरखण्डनेन स्नेहव्याप्तिविध्वंसनेन सापत्न्यमभजत् । भर्तुः श्रीः किं कुर्वती । विलासवयस्येव भवन्तीति विलासस्य संभोगस्य वयस्येव साहाय्यदायिका सखीव भवन्ती संजायमाना । यस्याश्च भर्तुः कीर्तिः स्त्रीत्वेनैव सापत्न्यमभजत्, न पुनः प्रणयप्रसरखण्डनेन सापत्न्यमभजत् । कीर्तिः किं कुर्वती । प्रसाधनसखीव भवन्ती सैरन्ध्रीव संजायमाना । उक्तं च—'सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका ।' तथा चोक्तम्—'चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनप्रचारज्ञा सैरन्ध्री कथ्यते बुधैः ॥'

एवं तयोर्मरुदेवीनाभिराजमहाराजयोरिव परस्परानुबन्धपेशलं त्रिवर्गफलमनुभवतोरेकदा पुत्रप्रार्थनमनोरथावसथस्य तीर्थकालपालनपथस्य प्रकाशितपरस्परप्रीतिरसस्य दिवसस्य ब्राह्मसमयावर्ते मुहूर्ते मिथःसंभाषणकथः प्रावर्ततायमुदन्तः—

आखण्डलः किल सुतत्वमुपागतो मे
विद्याः प्रसाध्य सुरलोकगुरूपदिष्टाः।
मत्केतने तनयजन्ममहोत्सवश्रीः
कामं व्यधायि च जनैः किल मोदमानैः॥ ५८॥

---

यस्याश्च भर्तुः सागराम्बरा पृथ्वी स्त्रीत्वेनैव सापत्न्यमभजत्, न पुनः प्रणयप्रसरखण्डनेन सापत्न्यमभजत्। सागराम्बरा किं कुर्वती। मनोरथानुचरीव भवन्ती मनोरथानां वाञ्छापूरणानां अनुचरीव किंकरीव संजायमाना। यस्याश्च भर्तुः सरस्वतीभर्तुर्भारती स्त्रीत्वेनैव सापत्न्यमभजत् न पुनः प्रणयप्रसरखण्डनेन। सरस्वती किं कुर्वती। विनोदस्य कुतूहलस्य नर्मकरणस्य भुजिष्येव किंकरीगणिकेव भवन्ती। 'भुजिष्या गणिका' इति देश्यात्। यस्याश्च भर्तुर्भूषणलक्ष्मीः स्त्रीत्वेनैव सापत्न्यमभजत्, न पुनः प्रणयप्रसरखण्डनेन। भूषणलक्ष्मीराभरणलक्ष्मीः किं कुर्वती। निजरूपावलोकनादर्शकेलिरिव भवन्ती निजरूपस्य आत्मीयरूपस्य अवलोकने निरीक्षणे आदर्शकेलिरिव दर्पणक्रीडेव भवन्ती। दीपकोपमालंकारः॥

एवमसुना प्रकारेण तयोश्चन्द्रमतियशोर्घयोर्मरुदेवीनाभिराजमहाराजयोरिव मरुदेवीनाभिराजसदृशयोरिव परस्परानुबन्धपेशलं धर्ममविराध्यार्थकामानुभवनं काममविराध्य धर्मार्थानुभवनं परस्परानुबन्धपेशलमुच्यते। ईदृग्विधं त्रिवर्गफलं धर्मार्थकामफलमनुभवतोरास्वादयतोः सतोरेकदा एकस्मिन्नवसरे पुत्रप्रार्थनमनोरथावसथस्य पुत्रस्य प्रार्थनस्य याचनस्य मनोरथाभिलाषस्य आवसथस्य गृहस्य तीर्थकालपालनपथस्य चतुर्थदिवसस्नाता स्त्री तीर्थं उच्यते तस्य कालपालनस्य रतिदानस्य पन्था मार्गो यस्मिन् दिवसे तीर्थकालपालनपथस्तस्य तीर्थकालपालनपथस्य प्रकाशितपरस्परप्रीतिरसस्य प्रकटितान्योन्यप्रणयानुभवनस्य। एवं विशेषणत्रयविशिष्टदिवसस्य दिनस्य ब्राह्मसमयावर्ते रात्रिशेषे मुहूर्ते समये मिथः एकान्ते परस्परं वा संभाषणकथा आलापनकथासंयुक्तो अयं वक्ष्यमाणलक्षणोपलक्षितः उदन्तो वार्ता प्रावर्तत संजातः। उपमालंकारः॥

अयं क उदन्तः प्रावर्तत इत्याह—आखण्डल इत्यादि। युग्मम्। हे देव यशोर्घमहाराज, मया चन्द्रमत्या निशावसाने पश्चिमरात्रौ इत्थमसुना प्रकारेण किमपि किंचित्स्वप्ने निद्रायां व्यलोकि दृष्टम्। कथंभूतं किमपि। तव संततिहेतुभूतम् भवतः संतानकारणभूतम्। इत्थं कथमिति चेत् आखण्डलः शक्रः। किल वाक्यालंकारे। मे मम

इत्थं मया किमपि देव निशावसाने
स्वप्ने व्यलोकि तव संततिहेतुभूतम् ।
आकर्ण्य तन्नरपतिर्निजगाद देवीं
पुत्रोऽचिरात्तव भविष्यति कामितश्रीः ॥ ५९ ॥

ततः किल

अवर्धि मध्येन सहाश्रितानां मनोरथैश्चन्द्रमतेः सुदत्याः ।
मुखप्रदेशे च बभूव कृष्णं कुचद्वयं वैरिबलेन सार्धम् ॥ ६० ॥

सिंहानां शौर्यकेलीषु चतुरम्भोधिवीक्षणे ।
मत्तद्विपविनोदेषु सा बबन्ध मनः किल ॥ ६१ ॥

यस्माद्गुणाः पार्थिवलोकभाजः प्रायेण गर्भाश्रयिणो बभूवुः ।
तस्मात्किलासीत्पृथिवीगुणेषु तस्याः परं दोहदमायताक्ष्याः ॥ ६२ ॥

---

सुतत्वं पुत्रत्वमुपागत आयातः । किं कृत्वा । पूर्वं सुरलोकगुरूपदिष्टा बृहस्पतिना कथिता विद्याः शब्दशास्त्रादिकाः प्रसाध्य पठित्वा मत्केतने मम चन्द्रमतेर्मन्दिरे जनैर्लोकैः किल तनयजन्ममहोत्सवश्रीः पुत्रजन्मोत्सवलक्ष्मीः कामं यथेष्टं व्यधायि चक्रे कृता । कथंभूतैर्जनैः । मोदमानैः हर्षमानैः । तत् वचनं नरपतिर्यशोर्घः आकर्ण्य श्रुत्वा देवीं चन्द्रमतीं प्रति निजगाद उक्तवान् । किं निजगाद । हे देवि, तव भवत्याः अचिरात्स्तोककालेन पुत्रः सुतो भविष्यति उत्पत्स्यति । कथंभूतः पुत्रः । कामितश्रीः भुक्तलक्ष्मीकः । जात्यलंकारः । युग्मम् ॥

ततः तदनन्तरं किल लोकोक्तौ । **अवर्धीति** । चन्द्रमतेश्चन्द्रमतिमहादेव्याः सुदत्याः शोभनदन्तवत्याः मध्येन उदरेण अवर्धि ववृधे । कथमवर्धि । सह सार्धम् । कैः सह । आश्रितानां मनोरथैरभिलाषैः सह सार्धम् । कुचद्वयं स्तनयुगलं मुखप्रदेशे चूचुकस्थाने कृष्णं कृष्णवर्णं च बभूव संजातम् । कथम् । सार्धम् । केन सार्धम् । वैरिबलेन शत्रुसामर्थ्येन शत्रुसैन्येन वा सह । सहोक्त्यलंकारः ॥

**सिंहानामित्यादि** । सा चन्द्रमतिः । किलेति लोकोक्तौ शास्त्रोक्तौ वा । मनो बबन्ध दोहदं चकार । केषु दोहदं चकार । सिंहानां पञ्चाननानां हर्यक्षाणां शौर्यकेलीषु मनो बबन्ध । तथा चतुरम्भोधिवीक्षणे चतुर्णामम्भोधीनां वीक्षणे अवलोकने मनो बबन्ध । तथा मत्तद्विपविनोदेषु मत्तद्विपैः सह विनोदेषु क्रीडाकरणेषु मनो बबन्ध । दीपकालंकारः ॥

**यस्मादित्यादि** । यस्मात्कारणात् पार्थिवलोकभाजो राजलोकाश्रिता गुणाः प्रायेण बाहुल्येन गर्भाश्रयिणो गर्भमादिं कृत्वा बभूवुर्भवन्ति स्म । 'प्रयोगतश्च' इति वचनात् यस्मात् शब्दयोगे वर्तमानकाले परोक्षा । तस्मात् कारणात् किलेति लोकोक्तौ शास्त्रोक्तौ

अन्यैव काचिद्वदनेन्दुलक्ष्मीरन्यैव नेत्रोत्पलकान्तिरासीत् ।
अन्यैव तस्याः कुचकुम्भशोभा मणेरिवान्तर्धृतरागवर्तेः ॥ ६३ ॥
गर्भभर्मणि महीपतिराप्तानादिदेश भिषजः किल तस्याः ।
चित्तवित्तसदृशं विधिमुच्चैर्निर्ममे तदुचितं च स देव्याः ॥ ६४ ॥
इत्थं मिथोऽवोचदसौ महीक्षिन्मनस्विनीं तां किल सत्त्वशान्त्यै ।
मासोऽष्टमात्पूर्वमिदं त्वयोच्चैर्हासादिकं कर्म न देवि कार्यम् ॥ ६५ ॥
तैस्तैर्विधानैर्द्वययत्नपूर्वैः स सूतिकासद्म चकार भूपः ।
मासे पुनर्वैजननेऽवतीर्णे तस्याः प्रसूतेः समयः किलासीत् ॥ ६६ ॥

---

वा तस्याश्चन्द्रमतेर्महादेव्याः आयताक्ष्याः कर्णान्तविश्रान्तलोचनायाः पृथिवीगुणेषु मृत्तिकाकुम्भभित्तिभक्षणेषु परं केवलं दोहदं मनोरथं आसीद्बभूव । हेत्वलंकारः ॥

**अन्यैवेत्यादि** । तस्याश्चन्द्रमतेर्महादेव्याः संबन्धित्वेन वदनेन्दुलक्ष्मीर्मुखचन्द्रशोभा काचिदनिर्वचनीया अन्यैव अपूर्वैव आसीद्बभूव । पुनः नेत्रोत्पलकान्तिर्लोचनकुवलयप्रभा अन्यैव अपूर्वा आसीत् । पुनः कुचकुम्भशोभा स्तनकलशशोभा अन्यैवापूर्वा आसीत् । तस्याः कस्या इव । अन्तर्धृतरागवर्तेः मध्यस्थापितनीलपत्रादिसंयोगात् मणेरिव रत्नस्येव । दीपकोपमालंकारः ॥

**गर्भभर्मणीत्यादि** । स महीपतिः यशोर्धमहाराजः किलेति लोकोक्तौ तस्याः देव्याः गर्भभर्मणि गर्भपोषणे आप्तान् हितकारकान् भिषजो वैद्यान् आदिदेश आदेशं ददौ । चित्तवित्तसदृशं विधिं यादृशं मनो वर्तते तत्सदृशं विधिं गर्भाधानपुंसवनसीमन्तोन्नयेन लक्षणमुच्चैरतिशयेन तदुचितं गर्भयोग्यं स्वयं निर्ममे स्वयमेव निर्मितवान् । उक्तं च—'गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा । षष्ठेऽष्टमे वा सीमन्तो मासेऽन्ते जातकर्म च ॥' इति याज्ञवल्क्यस्मृतौ एकादश श्लोकाः । महापुराणे तु—'धृतिस्तु सप्तमे मासि कार्या तद्वत्क्रियादरैः । गृहमेधिभी रच्यन्ते मानसैर्गर्भवृद्धये ॥' धृतिर्नाम क्रिया सीमन्तोन्नयनम् । इति जात्यलंकारः । समुच्चयालंकारो वा ॥

**इत्थमित्यादि** । असौ महीक्षित् यशोर्धस्तां मनस्विनीं मानवतीं स्त्रियं मिथ एकान्ते । किलेति लोकोक्तौ शास्त्रोक्तौ वा । सत्त्वशान्त्यै गर्भस्थितजीवशान्त्यर्थं इत्थं अमुना प्रकारेण अवोचत् उवाच । इत्थं कथमिति चेत् हे देवि, अष्टमात् मासो अष्टममासं यावत् पूर्वं इदं प्रत्यक्षीभूतं हासादिकं कर्म नर्मक्रियाहसनं च त्वया भवत्या उच्चैरुन्नतशब्देन न कार्यं न कर्तव्यम् । अष्टमे मासे गर्भस्य ओजः मातुः शरीरमागच्छति । नवमे तु मासे तदोजः गर्भं समागच्छति । तेन सप्तमे नवमे वा मासे जातो जीवति । अष्टमे तु मासे जातो न जीवति । इयमपि जातिः ॥

**तैस्तैरित्यादि** । स यशोर्धो भूपो राजा तैस्तैर्लोकप्रसिद्धैर्विधानैः कर्तव्यैः सूति-

अन्यत्र राहोः शुभदैरशेषैर्ग्रहैः प्रशस्तेऽवसरे वभूव ।
अस्यां पुरा जन्मनि चन्द्रमत्यां ममात्मलाभः परमोत्सवेन ॥ ६७ ॥

नृत्यद्वृद्धपुरन्ध्रिगेयसुभगाः सोल्लासहल्लानना:
खेलद्वामनकामिनीप्रियभुवः सानन्दधात्रीकुलाः ।
पिष्टापीडविडम्ब्यमानजरतीसीमन्तकान्ताङ्गणा-
स्तूरोद्यावरवैः समं किल बभुः शुद्धान्तमध्यास्तदा ॥ ६८ ॥

---

कासद्म चकार प्रसवनगृहं कृतवान् । कथंभूतैर्विधानैः । द्वययत्नपूर्वैः द्वयस्य गर्भ-गर्भिणीद्वयस्य यत्नो रक्षणोपायः पूर्वो येषु विधानेषु तानि द्वययत्नपूर्वाणि तैस्तथोक्तैः । पुनः पुनरपि तदनन्तरं वैजनने मासे नवमे मासे अवतीर्णे आगते सति तस्याश्चन्द्र-मतेः प्रसूतेः समयो जन्मनोऽवसरः किल आसीद्बभूव । जातिरियम् ॥

अन्यत्रेत्यादि । हे राजन् मारदत्त, अस्यामभयमतौ पुरा जन्मनि पूर्वभवे चन्द्र-मत्यां सत्यां परमोत्सवेन परमानन्देन मम आत्मलाभो जन्म वभूव संजातः । कस्मिन् समये आत्मलाभो वभूव । अशेषैः समग्रैः शुभदैः कल्याणकारकैर्ग्रहैः सूर्यादिभिरष्टभिः कृत्वा प्रशस्ते प्रशंसनीये अवसरे वेलाया लग्ने । कथं आत्मलाभो वभूव । अन्यत्र विना । कस्माद्विना । राहोः अभ्रमिणवात्(?) । अन्ये सर्वे ग्रहाः शुभा वभूवुः राहूरोविनाभूदि-त्यर्थः । उत्तरत्र विशेषेणापायसंभवात् जातिरियम् ॥

नृत्यद्वृद्धेत्यादि । तदा तस्मिन् काले तूरोद्यावरवैर्वादित्रोत्सवशब्दैः समं सार्धं किल निश्चयेन शुद्धान्तमध्याः अन्तःपुरप्रदेशाः बभुः शोभिताः । कथंभूताः शुद्धान्त-मध्याः । नृत्यद्वृद्धपुरन्ध्रिगेयसुभगाः नृत्यन्त्यो नर्तनं तन्वन्त्यो वृद्धा जराजीर्णाः पुरन्ध्र्यः पुरन्ध्रयः स्त्रियस्तासां गेयैर्गानैः सुभगाः प्रीतिजनकाः । पुनः कथंभूताः शुद्धान्तमध्याः । सोल्लासहल्लाननाः सोल्लासानि सानन्दानि हल्लानां आसीतिकपुरुषाणां आननानि मु-खानि येषु शुद्धान्तेषु ते तथोक्ताः । पुनः कथंभूताः शुद्धान्तमध्याः । खेलद्वामनकामिनी-प्रियभुवः खेलन्त्यो नर्तनं कुर्वन्त्यो या वामनकामिन्यः संकुचितसर्वाङ्गशरीराः खट्टु(ड)-राः स्त्रियस्ताभिः प्रिया मनोज्ञा भूर्भूमिर्येषु शुद्धान्तमध्येषु ते तथा । पुनः कथंभूताः शुद्धान्तमध्याः । सानन्दधात्रीकुलाः सानन्दानि सहर्षाणि धात्रीणां उपमातॄणां स्तन-दायिकानां कुलानि समूहा येषु ते तथा । पुनः कथंभूताः शुद्धान्तमध्याः । पिष्टापीड-विडम्ब्यमानजरतीसीमन्तकान्ताङ्गणाः पिष्टानां पञ्चवर्णचूर्णानां आपीडः समूहस्तेन विडम्ब्यमानाः कदर्थ्यमानाः जरतीनां वृद्धस्त्रीणां सीमन्ताः केशमार्गास्तैः कान्तानि मनोहराणि अङ्गणानि गृहाग्रभूमयो येषां शुद्धान्तमध्यानां ते तथा । जात्यलंकारः ॥

आमन्दं पल्लवीनां रतिरभसभरप्राप्तकेलीविनोदाः
सामोदं केरलीनां मुखकमलवनामोदपानप्रगल्भाः।
आशैत्यं कुन्तलीनां कुचकलशरसावासकाराः समीराः
काले वान्ति स्म तस्मिन्किल मलयलतानर्तिनो दाक्षिणात्याः॥६९॥
व्योम काम इवाप्तानामगच्छत्स्वच्छतां मुहुः।
समपादि प्रसादश्च दिशां बन्धुदृशामिव॥ ७०॥
दुन्दुभिध्वनिरुत्तस्थे मोदाय सुहृदां दिवि।
हरिश्चन्द्रपुरीलोकध्वनिर्ध्वंसाय च द्विषाम्॥ ७१॥

---

**आमन्दमित्यादि**। तस्मिन् काले यशोधरमहाराजजन्मावसरे दाक्षिणात्याः दक्षिणदेशसंबन्धिनः समीरा वायवश्च पवनाः किल निश्चयेन वान्ति स्म प्रवर्तन्ते स्म। कथं वान्ति स्म। आमन्दं शनैः शनैः। कस्मादामन्दं वान्ति। पल्लवीनां दक्षिणदेशस्थितगिरिसोपनगरस्त्रीणां रतिरभसस्य मैथुनक्रीडावेगस्य योऽसौ भरोऽतिशयस्तेन प्राप्तो लब्धः केलीविनोदः क्रीडाकुतूहलं यैः समीरैस्ते रतिरभसभरप्राप्तकेलीविनोदाः। पुनश्च समीराः कथं वान्ति स्म। सामोदं परिमलसहितं यथा भवत्येवम्। कथंभूताः समीराः। केरलीनां दक्षिणदेशसंबन्धिकेरलदेशस्त्रीणां मुखकमलवनामोदपानप्रगल्भाः मुखान्येव कमलवनानि बिसप्रसूनकान्ताराणि तेषामामोदपाने मुखवासनगन्धास्वादने प्रगल्भाः प्रौढतराः। पुनश्च समीराः कथं वान्ति स्म। आशैत्यं आसमन्तात् शीतत्वं यथा भवत्येवम्। अपरं किंविशिष्टाः समीराः। कुन्तलीनां दक्षिणदेशस्थितकुन्तलदेशस्त्रीणां कुचकलशरसावासकाराः कुचा एव कलशाः पयसः आधारहेतुत्वात् तेषां रसो मैथुनक्रीडाश्रमसंजातप्रस्वेदजलं तत्र आवासकाराः कियत्कालनिवासिनः। पुनश्च किंरूपाः समीराः। मलयलतानर्तिनः मलयाचलपर्वते या लताश्चन्दनतरुशाखास्ता नर्तयन्ति झम्प(कथ)यन्तीत्येवंशीलास्ते मलयलतानर्तिनः। हेतुरलंकारः। शीतो मन्दः सुरभिश्च वायुर्वर्णित इति ज्ञातव्यम्॥

**व्योमेत्यादि**। व्योम आकाशं मुहुर्वारंवारं स्वच्छतां निर्मलतां अगच्छत् जगाम। क इव। आप्तानां हितानां काम इव वाञ्छेव। दिशां ककुभां प्रसादः प्रसन्नता निर्मलता समपादि संजातः। प्रसादः कासामिव। बन्धुदृशामिव बन्धुवर्गनेत्राणामिव। समुच्चयोपमालंकारः॥

**दुन्दुभीत्यादि**। दिवि आकाशे दुन्दुभिध्वनिः पटहनादः उत्तस्थे उत्थितः। किमर्थम्। सुहृदां बन्धुवर्गनेत्राणां मोदाय हर्षाय। तथा दिवि आकाशे हरिश्चन्द्रपुरीलोकध्वनिर्गन्धर्वनगरीलोकाध्वान उत्तस्थे। किमर्थम्। द्विषां शत्रूणां ध्वंसाय विनाशनिमित्तम्। दीपकसमुच्चयालंकारः॥

राज्ञः समृद्धये स्वर्गात्पुष्पवृष्टिः पुरेऽपतत् ।
गेहे शिखण्डिमण्डूकवृष्टिश्च श्रीच्छिदे द्विषः ॥ ७२ ॥
श्रिये निजश्रिया राज्ञश्चारवस्तरवो बभुः ।
त एवारातिलोकानामुत्पाताय पुरे पुनः ॥ ७३ ॥

उल्ललास नृपतेः सदनेषु संपदे युवतिमङ्गलशब्दः ।
विद्विषां च नगरे विगमाय संततं धवलमौकुलिनादः ॥ ७४ ॥

अपि च ।

आनन्दवाद्यरवपूरितदिङ्मुखानि
पौराङ्गनाजनविनोदमनोहराणि ।
आमुक्तकेतुरचितोत्सवतोरणानि
कामं तदा शुशुभिरे नगरे गृहाणि ॥ ७५ ॥

---

**राज्ञ इत्यादि** । पुरे नगरे स्वर्गादाकाशात् पुष्पवृष्टिः कुसुमवर्षा अपतत्पपात । किमर्थम् । राज्ञो यशोर्घस्य समृद्धये लक्ष्मीनिमित्तम् । द्विषः शत्रुवर्गस्य गेहे शिखण्डिमण्डूकवृष्टिश्चूलसहितभेकवर्षा अपतत्पपात । किमर्थम् । द्विषः शत्रुवर्गस्य श्रीच्छिदे लक्ष्मीविनाशनिमित्तम् । दीपकालंकारः ॥

**श्रिय इत्यादि** । निजश्रिया निजपुष्पफलपल्लवशोभया चारवो मनोज्ञास्तरवो वृक्षा बभुः शोभिताः । किमर्थम् । राज्ञो यशोधरस्य श्रिये लक्ष्मीनिमित्तं त एव तरवः अरातिलोकानां पुरे नगरे पुनर्बभुः शोभिताः । किमर्थम् । उत्पाताय विनाशनिमित्तम् । अकाले फलितत्वात् । दीपकालंकारः ॥

**उल्ललासेत्यादि** । नृपतेर्यशोर्घस्य सदनेषु गृहेषु युवतिमङ्गलशब्दः स्त्रीणां धवलगानध्वनिरुल्ललास उच्छलितः । किमर्थम् । संपदे राज्ञो लक्ष्मीनिमित्तं विद्विषां नगरे शत्रूणां पुरे संततमुपर्युपरि धवलमौकुलिनादः श्वेतकाकध्वनिरुल्ललास । किमर्थम् । विद्विषां विगमाय विनाशाय । दीपकालंकारः ॥

अपि च तथा च । **आनन्देत्यादि** । तदा तस्मिन् श्रीयशोधरजन्मकाले नगरे उज्जयिनीपत्तने गृहाणि वेश्मानि कामं यथेष्टं शुशुभिरे शोभितानि । कथंभूतानि गृहाणि । आनन्दवाद्यरवपूरितदिङ्मुखानि आनन्दवाद्यानामुत्सवतूर्याणां रवैः शब्दैः पूरितानि भृतानि दिशां ककुभां मुखानि आस्यानि यैस्तानि । पुनः कथंभूतानि गृहाणि । पौराङ्गनाजनविनोदमनोहराणि पौराङ्गनाजनानां नगरस्त्रीसमूहानां विनोदैः क्रीडाभिर्मनोहराणि मनोज्ञानि । पुनः कथंभूतानि । आमुक्तकेतुरचितोत्सवतोरणानि आमुक्ता बद्धाः केतवो ध्वजा येषु गृहेषु तानि आमुक्तकेतूनि रचितानि कल्पितानि उत्सवस्य

आखण्डलप्रतिमपुत्रवतां धुरीणः
स्त्रीलोचनोत्पलविलासरसप्रवीणः ।
त्रैलोक्यपावनयशःकिरणोदयेन
त्वं नन्दतात्तनयजन्ममहोत्सवेन ॥ ७६ ॥

धर्मः पल्लवितः श्रियः कुसुमिताः कामः फलैः श्लाघ्यते
वंशस्ते क्षितिनाथ संप्रति परां छायां श्रितः कामपि ।
भूदेवी सकृतार्थतामुपगता मूलान्वयानां पुन-
श्चित्ते माति न देव सान्द्रितरसस्त्वत्पुत्रजन्मोत्सवः ॥ ७७ ॥

तथा ।

सानन्दं बन्दिवृन्दैः क्वचिदवनिपतिः स्तूयते प्रार्थितार्थै-
र्वन्धूनां तुष्टिदानैः क्वचिदतनुमुदः सौविदल्लास्त्वरन्ते ।

---

महोत्सवस्य संबन्धीनि तोरणानि आमुक्तकेतुरञ्चितोत्सवतोरणानि । अपि चेति शब्देन समुच्चयालंकारः ॥

तथा तेनैव प्रकारेण । सानन्दमिति । सानन्दं आनन्दसहितं यथा भवत्येवं वन्दिवृन्दैः वारजीवसमूहैरवनिपतिर्यशोघैः क्वचित् कस्मिंश्चित्स्थाने स्तूयते श्लाघ्यते। कथंभूतैः बन्दि-वृन्दैः । प्रार्थितार्थैः प्रार्थिता याचिताः सुवर्णपट्टाम्बरतुरगादयः अर्थाः पदार्थाः यैस्ते तथा तैः। वन्दिवृन्दैः कथं स्तूयते । हे देव, त्वं भवान् तनयजन्ममहोत्सवेन पुत्रजन्ममहान-न्देन नन्दतात् वर्धस्व । कथंभूतेन तनयजन्ममहोत्सवेन । त्रैलोक्यपावनयशःकिरणोद-येन त्रैलोक्यस्य त्रिभुवनस्य पावनाः पवित्रीकरणा ये यशःकिरणा पुण्यगुणानुकीर्तिरश्मयः तेषां उदय उत्पत्तिर्यत्र महोत्सवे स तथा तेन । कथंभूतस्त्वम् । आखण्डलप्रतिमपुत्रवतां धुरीणः आखण्डलप्रतिमाः इन्द्रसदृशाः पुत्रा विद्यन्ते येषां ते आखण्डलप्रतिमपुत्रव-न्तस्तेषां मध्ये त्वं धुरिणो धौरेयो धुरि वर्णनीयः । पुनः कथंभूतस्त्वम् । स्त्रीलोचनोत्पलवि-लासरसप्रवीणः स्त्रीणां कमनीयकामिनीनां लोचनोत्पलानां नेत्रकुवलयानां विलासरस उल्लासरसस्तत्र प्रवीणश्चतुरः । हे देव, इदानीं धर्मः पूजादानादिलक्षणः पल्लवितः उल्लासं प्राप्तः । श्रियो लक्ष्म्यः कुसुमिताः पुष्पिताः । कामः स्त्रीभोगफलैः कृत्वा श्लाघ्यते प्रश-स्यते । तथा धर्मार्थकामास्त्रयः पदार्थाः सिद्धा इत्यर्थः । हे क्षितिनाथ पृथिवीपते, ते तव वंशः अन्वयः संप्रति इदानीं परामुत्कृष्टां छायां शोभां कामपि अपूर्वामनिर्वचनीयां श्रित आश्रितः। हे देव, भूदेवी सकृतार्थतां कृतार्थत्वसहितामुपगता प्राप्ता आयाता । मूला-न्वयानां मन्त्रिणां चित्ते मनसि त्वत्पुत्रजन्मोत्सवो भवदीयतनयोत्पत्तिमहोत्सवः पुनर्न माति भरितत्वात् अवकाशं न लभते । कथंभूतस्त्वत्पुत्रजन्मोत्सवः । सान्द्रितरसः निबिडी-

आकल्पं भर्तृलक्ष्मीमियमनुभवतात्पुत्रपौत्रैश्च सार्धं
देवीत्येवं पुरोधाः क्वचिदपि च पठत्याशिषः कामितश्रीः ॥ ७८ ॥
स्वर्गः कल्पद्रुमैर्भूः कुलधरणिधरैर्गौरधाम्ना पयोधि-
र्द्यौः पूष्णा भोगिलोको भुजगपरिवृढेनाकरक्ष्मेव रत्नैः।
देवस्तावच्चिराय प्रथितपृथुयशाः कीर्तिपृथ्वी तथेयं
देवी च स्तात्प्रमोदावहदिवसवती पुत्रजन्मोत्सवेन ॥ ७९ ॥

राजापि तदा

वस्तुवस्त्रवसुवाहनवर्षं याचकेषु स तथा किल चक्रे।
जातकल्पविटपिष्विव भूयस्तेषु याचनमनो न यथासीत् ॥ ८० ॥

---

भूतानुरागः। न केवलं वन्दिवृन्दैरवनिपतिः स्तूयते, किंतु क्वचित् कस्मिंश्चित्स्थाने सौविदल्लाः कञ्चुकिनः त्वरन्ते उत्सुका गच्छन्ति। कथंभूताः सौविदल्लाः। बन्धूनां स्वजनवर्गाणां तुष्टिदानैः हर्षदानैः कृत्वा अतनुमुदः प्रचुरहर्षाः वर्तन्ते। अपि च तथा च क्वचित्कस्मिंश्चित्स्थाने पुरोधाः परोहितः एवं अमुना प्रकारेण आशिषः आशीर्वादान् पठति व्यक्तं वदति। कथंभूतः पुरोधाः। कामितश्रीः वाञ्छितलक्ष्मीकः। एवं कथमिति चेत् इयं प्रत्यक्षीभूता देवी चन्द्रमती महादेवी आकल्पं दीर्घकालं भर्तृलक्ष्मीं पतिलक्ष्मीमनुभवतात् भुङ्क्ताम्। कथम्। सार्धं सह। कैः सार्धम्। पुत्रपौत्रैश्च सह। चकारात् प्रपौत्रैश्च सह। समुच्चयालंकारः ॥

**स्वर्ग इत्यादि।** पुरोधा आशीर्वादं ददाति—देवो यशोर्घमहाराजस्तावदनुक्रमेण चिराय दीर्घकालं पुत्रजन्मोत्सवेन प्रमोदावहदिवसवान् प्रमोदकारिदिवसवान् स्ताद्भवतु। 'अर्थवशाद्विभक्तिविपरिणामः' इति वचनादेवास्य पुंस्त्वैकवचनं दीयते। कथंभूतो देवः। प्रथितपृथुयशाः प्रथितं विख्यातं पृथु विस्तीर्णं त्रिभुवनव्यापकं यशः पुण्यगुणानुकीर्तनं यस्य तथोक्तः। तथा तेनैव प्रकारेण इयं प्रत्यक्षीभूता देवी चन्द्रमती महादेवी च पुत्रजन्ममहोत्सवेन प्रमोदावहदिवसवती चिराय दीर्घकालं स्ताद्भवतु। कथंभूता देवी। कीर्तिपृथ्वी कीर्तिः पृथु विस्तीर्णा यस्याः सा तथा। देवः क इव। स्वर्ग इव देवलोक इव। यथा स्वर्गः कल्पद्रुमैः कृत्वा प्रमोददिवसवान् भवति। देवी केव। भूरिव पृथ्वीव। यथा भूः कुलधरणिधरैः कुलपर्वतैः कृत्वा प्रमोददिवसवती भवति। देवः क इव। पयोधिरिव समुद्र इव। यथा पयोधिः गौरधाम्ना चन्द्रेण कृत्वा प्रमोदावहदिवसवान् भवति। देवी केव। द्यौरिव आकाशमिव। यथा द्यौः पूष्णा सूर्येण प्रमोदावहदिवसवती भवति। देवः क इव। भोगिलोक इव पाताललोक इव। यथा भोगिलोको भुजगपरिवृढेन शेषनागेन्द्रेण प्रमोदावहदिवसवान् भवति। देवी केव। आकरक्ष्मेव आकरभूमिरिव। यथा आकरक्ष्मा रत्नैः कृत्वा प्रमोदावहदिवसवती भवति। यथासंख्यसमुच्चयोपमालंकारः ॥

**राजापि तदा।** तस्मिन् काले राजापि यशोर्घमहाराजः। **वस्त्वित्यादि।** याचकेषु

जातक्रियां किल विधाय स भूपतिर्मे
चक्रे यशोधर इति प्रथितं च नाम ।
यज्जीवितादपि निजान्वयजन्मभाजां
चेतः परं स्पृहयति स्म यशोर्जनाय ॥ ८१ ॥

पुनश्च किल तद्दशावशाद्ग्रथनमनोहरैः सुकविलोकवाक्कुसुमसरैर्बान्धवजनश्रवणभूतां नीयमानव्यवस्थाः क्रमेणोत्तानशयदरहसितजानुचङ्क्रमणस्खलद्गतिगद्गदालापावस्थाः समनुबभूव ।

तथा हि ।

मुक्तः क्षुभ्यति मञ्चकेषु लभते नैवान्यहस्ते रतिं
तातस्याङ्कगतश्च वक्षसि कुचावन्वेषते व्याकुलः ।

---

वन्दिवारजीवनादिषु । किलेति लोकोक्तौ । तथा तेन प्रकारेण वस्तुवस्त्रवसुवाहनानि तेषां वर्षो विसर्ग उत्सर्गो वितरणं स तथा तं चक्रे कृतवान् । तथा कथमिति चेत् यथा येन प्रकारेण तेषु याचकेषु याचनमनः अभ्यर्थनचित्तं भूयः पुनरपि न आसीन्न बभूव । कथंभूतेषु याचकेषु । जातकल्पविटपिष्विव जाता उत्पन्ना कल्पविटपिनः कल्पवृक्षा येषु तथा तेषु । उपमालंकारः ॥

**जातक्रियामित्यादि** । स भूपतिर्मे मम यशोधर इति प्रथितं विख्यातं नाम अभिधानं चक्रे कृतवान् । किं कृत्वा । पूर्वं जातक्रियां नालकर्तनादिकर्म किलेति लोकोक्तौ विधाय कृत्वा । यन्नाम निजान्वयजन्मभाजां निजवंशोत्पन्नानां नरेन्द्राणां चेतः जीवितादपि परमुत्कृष्टं यशोर्जनाय यशउपार्जनार्थं स्पृहयति स्म वाञ्छितम् । जात्यलंकारः॥

पुनश्च पुनरपि च किलेति लोकोक्तौ वा क्रमेण अनुक्रमेण उत्तानशयदरहसितजानुचङ्क्रमणस्खलद्गतिगद्गदालापावस्थाः स यशोधरकुमारः सम्यक्प्रकारेण अनुबभूव अनुभूतवान् । बालस्य पञ्चावस्था भुक्तवानित्यर्थः । उत्तानशयश्च उत्तानः सन् उपरिमुखः सन् शेते उत्तानशयनम्, दरहसितं च मनाग्हासः, जानुचङ्क्रमणं च अष्ठीवद्भ्यां गमनम्, स्खलद्गतिश्च स्खलद्गमनम्, गद्गदालापाश्च अस्फुटवचनानि, त एव अवस्थास्तेषां वा अवस्थाः अवस्थानानि ताः कर्मतापन्नाः । कथंभूता अवस्थाः । सुकविलोकवाक्कुसुमसरैः सत्कविसमूहवचनपुष्पमालाभिः बान्धवजनश्रवणभूषणतां नीयमानव्यवस्थाः बान्धवजनानां कुटुम्बवर्गाणां श्रवणानां श्रुतीनां भूषणतामाभरणतां नीयमानव्यवस्था नीयमानाः प्राप्यमाना व्यवस्था अवस्थितिर्यासां अवस्थानां तास्तथोक्तास्ताः । कथंभूतैः सुकविलोकवाक्कुसुमसरैः । तद्दशावशाद्ग्रथनमनोहरैः तद्दशावशाद्बा[ला]वस्थावशात् ग्रथनेन गुम्फनेन मनोहरैः मनोज्ञैः ॥

तथा हि ता एवावस्था वर्णयति—**मुक्त इत्यादि** । मञ्चकेषु पल्यङ्केषु मुक्तो धृतः

स्वाङ्गुष्ठं वदने निधाय पिबति स्तन्येन शून्यानन-
स्तं निष्पीड्य पुनश्च रोदिति शिशोश्चित्रं विचित्रा स्थितिः॥ ८२ ॥
दृष्टेषु पूर्वं रमते गृहीतः स्पृष्टः कपोले च सफेनहासः ।
पुरोधसां स्वस्त्ययनोपचारमादाय हस्तेन मुखे दधाति ॥ ८३ ॥
यत्रैव देवः सदयं विलोकते तत्रैव ते नाथ सुतोऽपि सादरः ।
न केवलं देहगुणैः समस्त्वया धियाप्ययं नूनमभिन्नवर्तनः ॥ ८४ ॥
यदेष बालोऽपि विनीतचित्तः कृतादरो बन्धुषु तन्न चित्रम् ।
को नाम चन्द्रस्य कलाप्रवृद्धौ नीलोत्पलोल्लासविधौ गुरुर्वा ॥ ८५ ॥
स्वल्पं रङ्गति जानुहस्तचरणः किंचित्कृतालम्बनः
स्तोकं मुक्तकराङ्गुलिः परिपतन्धात्र्या नितम्बे धृतः ।

---

क्षुभ्यति व्याकुलो भवति । अन्यहस्ते रतिं संतोषं च नैव लभते न प्राप्नोति । तातस्य पितुरङ्कगत उत्सङ्गं प्राप्तः सन् वक्षसि हृदये कुचौ स्तनावन्वेषते मार्गति । कथंभूतः । व्याकुलो दुर्बलीभूतः । स्वाङ्गुष्ठं निजहस्तज्येष्ठं वदने मुखे निधाय धृत्वा पिबति धयति । स्तन्येन दुग्धेन शून्याननो रिक्तमुखस्तं स्वाङ्गुष्ठं निष्पीड्य पीडयित्वा पुनश्च पुनरपि रोदिति रोदनं करोति । शिशोर्बालकस्य स्थितिः स्वभावो विचित्रा नानाप्रकारा । चित्रमाश्चर्यमेतत् । अर्थान्तरन्यासालंकारः ॥

**दृष्टेषु पूर्वमित्यादि** । गृहीतः सन् पूर्वं दृष्टेषु मनुष्येषु रमते क्रीडति । कपोले स्पृष्टः छुपितः सन् सफेनहासो भवति । पुरोधसां पुरोहितानां स्वस्त्ययनोपचारं अक्षतादिदानं हस्तेन करेण आदाय गृहीत्वा मुखे दधाति आस्ये धरति जात्यलंकारः ॥

**यत्रैवेत्यादि** । हे नाथ, यत्रैव यस्मिन्नेव पुरुषे देवः पृथ्वीपतिः सदयं दयासहितं यथा भवत्येवं विलोकते पश्यति, तत्रैव पुरुषे ते तव सुतोऽपि पुत्रोऽपि सादरो भवति आदरवान् जायते । न केवलं देहगुणैः कृत्वा त्वया भवता समः सदृशो वर्तते, किं तु अयं पुत्रो धिया बुद्ध्यापि नूनं निश्चयेन अभिन्नवर्तनः अपृथग्वर्ती वर्तते । जात्यलंकारः ॥

**यदेष इत्यादि** । हे नाथ, एष तव पुत्रो बालोऽपि शिशुरपि विनीतचित्तः विनयवन्मनाः सन् बन्धुषु कुटुम्बवर्गेषु कृतादरो विहितसन्मानः तच्चित्रमाश्चर्यं न वर्तते । अमुमेवार्थं आक्षेपेण द्रढयति—कलाप्रवृद्धौ कलानां वर्धने नीलोत्पलोल्लासविधौ इन्दीवराणां विकासविधाने वा । नामेति संभावनायाम् । चन्द्रस्य को गुरुर्वर्तते शिक्षको वर्तते । अपि तु न कश्चिद्गुरुरित्यर्थः । आक्षेपालंकारः ॥

**स्वल्पमित्यादि** । स्वल्पं स्तोकं रङ्गति चलति । कथंभूतः सन् स्वल्पं रङ्गति ।

स्कन्धारोहणजातधीः पुनरयं तस्याः कचाकर्षणे
क्रूरालोकनकोपकल्मषमनास्तद्वक्त्रमाहन्ति च ॥ ८६ ॥
आदायालकजालकान्मणिचितं पत्रं करे न्यस्यति
स्थाने तस्य दधाति हस्तवलयं द्वाभ्यां विहीनः पुनः ।
मुक्त्वा घर्घरमालिकां कटितटाद्बद्ध्वा च तां पादयो-
र्निश्चेष्टः शिशुरेष जातरुदितः खेदाय मोदाय च ॥ ८७ ॥
तद्गेहं वनमेव यत्र शिशवः खेलन्ति न प्राङ्गणे
तेषां जन्म वृथैव लोचनपथं याता न येषां सुताः ।

---

जानुहस्तचरणः जानुभ्यां अष्ठीवद्भ्यां हस्ताभ्यां पाणिभ्यां चरति गच्छतीत्येवंशीलः जानुहस्तचरणः । 'नन्द्यादेर्ल्युः' इति कर्तरि ल्युप्रत्ययः । किंचित्कृतालम्बनः किंचित् मनाक् कृतालम्बनः कृतं विहितं आलम्बनं अङ्गुल्योरवलगनं येन स तथा । स्तोकं मनाक् मुक्तकराङ्गुलिः मुक्ते परित्यक्ते करयोरङ्गुल्यौ येन स मुक्तकराङ्गुलिः सन् परिपतन् भूमौ पतन् सन् धात्र्या उपमात्रा नितम्बे कटिपश्चाद्भागे धृतः सन् स्कन्धारोहणजातधीर्भवति स्कन्धचटमोत्पन्नबुद्धिर्भवति । पुनः पुनरपि अयं बालकस्तस्याः स्तनदायिन्याः कचाकर्षणे सति क्रूरावलोकने सति कोपकल्मषमनाः कोपेन क्रोधेन कलुषितचित्तः सन् तद्वक्त्रं धात्र्याः मातुर्वा आहन्ति च ताडयति । जात्यलंकारः ॥

**आदायेत्यादि** । धात्र्याः मातुर्वा अलकजालकान् चूर्णकुन्तलसमूहान् मणिचितं रत्नजटितं पत्रं तिलकं आदाय गृहीत्वा करे हस्ते न्यस्यति धरति । (तस्य मणिरचितपत्रस्थाने ललाटे हस्तवलयं करकङ्कणं दधाति धरति ।) द्वाभ्यां पत्रवलयाभ्यां विहीनः सन् पुनः पश्चात् घर्घरमालिकां कटितटात् मुक्त्वा छोटयित्वा तां घर्घरमालिकां पादयोर्निजचरणयोर्बद्ध्वा वेष्टयित्वा एष प्रत्यक्षीभूतः शिशुर्बालको निश्चेष्टः सन् बद्धपादत्वाच्चलनक्रियारहितः सन् जातरुदित उत्पन्नरोदनः खेदाय दुःखाय मोदाय हर्षाय च भवति । जात्यलंकारः ॥

**तद्गेहमित्यादि** । हे नृपते हे राजन् , तद्गेहं तत्प्रसिद्धं गृहं वनमेव अटव्येव । तत्किम् । यत्र गेहे प्राङ्गणे चत्वरे शिशवो बालका न खेलन्ति न रमन्ते । हे नृप, तेषां पुरुषाणां जन्म उत्पत्तिर्वृथैव फल्ग्वेव निष्फलमेव । तेषां केषाम् । येषां पुरुषाणां सुताः पुत्राः लोचनपथं नेत्रमार्गं न याता न गताः । न दृष्टा इत्यर्थः । हे नृपते, तेषां पुरुषाणां अङ्गविलेपनं च कर्पूरकस्तूरीचन्दनयक्षकर्दमादिविलेपनमङ्गरागः पङ्कोपदेहैः समं कर्दमविलेपनैः सदृशम् ।

---

१. अयं पाठः सटीकपुस्तके नोपलभ्यते.

तेषामङ्गविलेपनं च नृपते पङ्कोपदेहैः समं
येषां धूलिविधूसरात्मजरजश्चर्चा न वक्षःस्थले ॥ ८८ ॥

लोलालकानि बहलाञ्जनलोचनानि
केलिश्रमश्वसितदुर्ललिताधराणि ।
आलिङ्गनोद्गतवपुःपुलकाः सुतानां
चुम्बन्ति ये वदनकानि त एव धन्याः ॥ ८९ ॥

अम्बां तात इति ब्रवीति पितरं चाम्बेति संभाषते
धात्रीपूर्वनिवेदितानि च पदान्यर्धोक्तितो जल्पति ।
शिक्षालापविधौ प्रकुप्यति धृतो नास्ते स्थिरोऽयं क्वचि-
द्व्याहूतो न शृणोति धावति पुनः प्रत्युत्थितः सत्वरम् ॥ ९० ॥

तदनु निवर्तिते प्रवर्तितसमस्तलोकोत्सवशर्मणि चौलकर्मणि सवयः-

---

तेषां केषाम् । येषां पुरुषाणां धूलिविधूसरात्मजरजश्चर्चाः धूलिभिः विधूसरः ईषत्पाण्डुरो योऽसावात्मजः पुत्रस्तस्य रजश्चर्चा धूलिविलेपनं वक्षःस्थले हृदयस्थले न वर्तते । रूपकोपमालंकारः ॥

**लोलालकानीत्यादि** । हे नृपते, ये पुरुषाः सुतानां पुत्राणां वदनकानि मुग्धमुखानि चुम्बन्ति मुखेन स्पृशन्ति त एव पुरुषा धन्याः पुण्यवन्तः । कथंभूतास्ते पुरुषाः । आलिङ्गनोद्गतवपुःपुलकाः आलिङ्गनेन आश्लेषेण उपगूहनेन उद्गता उत्पन्ना वपुषि शरीरे पुलका रोमहर्षणानि येषां ते तथा । कथंभूतानि वदनकानि । लोलालकानि चञ्चलकुन्तलानि । पुनः कथंभूतानि वदनकानि । बहलाञ्जनलोचनानि बहलं प्रचुरं अञ्जनं कज्जलं लोचनेषु नेत्रेषु येषां तानि तथा । पुनः कथंभूतानि वदनकानि । केलिश्रमश्वसितदुर्ललिताधराणि केलीनां क्रीडानां श्रमेण खेदेन यानि श्वसितानि निःश्वासास्तैर्दुर्ललितानि दुर्मनोहरा अधरा दन्तवास सि येषां तानि तथा च । जात्यलंकारः ॥

**अम्बामित्यादि** । अम्बां मातरं तात इति ब्रवीति हे पितरिति जल्पति आलपति । पितरं च अम्ब हे मातरिति ब्रवीति । धात्रीपूर्वनिवेदितानि च पदानि धात्र्या उपमात्रा पूर्वं निवेदितानि पदानि शब्दान् अर्धोक्तितः साम्युक्तितो जल्पति वक्ति । शिक्षालापविधौ 'हे पुत्र, एवं क्रियते' इति शिक्षाविधाने प्रकुप्यति कोपं करोति । अयं पुत्रो धृतो रक्षितः सन् क्वचित् कस्मिंश्चित् स्थाने स्थिरो निश्चलः सन् न आस्ते न तिष्ठति । व्याहूत आमन्त्रितः सन् न शृणोति वचनं नाकर्णयति । पुनः पश्चात् प्रत्युत्थितः स्खलितोत्थितः सन् सत्वरं शीघ्रं धावति उत्सुकां गतिं करोति । जात्यलंकारः ॥

तदनु बालावस्थानन्तरं चौलकर्मणि मुण्डनकर्मणि निवर्तिते निष्पादिते सति

सचिवसुतकृतानुशीलनः समाचरितगुरुकुलोपनयनः, प्रजापतिरिव सर्ववर्णागमेषु, पारिरक्षक इव प्रसंख्यानोपदेशेषु, पूज्यपाद इव शब्दैतिह्येषु, स्याद्वादेश्वर इव धर्माख्यानेषु, अकलङ्कदेव इव प्रमाणशास्त्रेषु, पणिपुत्र इव पदप्रयोगेषु, कविरिव राजराद्धान्तेषु, रोमपाद इव गजविद्यासु, रैवत इव

अहं तदा तस्मिन् कुमारकाले गुरुजनैस्तद्विधोपाध्यायैरुपदिश्यमानाः शिक्ष्यमाणाः विद्याः शास्त्राणि जग्राह गृहीतवान् । कथंभूताः विद्याः । भूपकुलभूषणहेतुभूताः राजकुलमण्डनराजभूताः । कथंभूतः सन् विद्याः जग्राह । स्वाध्यायधीः स्वाध्याये पाठे धीर्बुद्धिर्यस्य स स्वाध्यायधीः । [[1]अपरं कथंभूतः सन् विद्याः जग्राह । नियमवान् ब्रह्मचर्यव्रतोपपन्नः । पुनः कथंभूतः सन् विद्या जग्राह । विनयोपपन्नः गुरुशुश्रूषातत्परः ।] पुनः कथंभूतः सन् विद्या जग्राह । सकलविद्याविदाश्चर्यप्रवणनैपुण्यं आश्रितः सन् सर्वविद्याविदग्धानां आश्चर्यप्रवणं चित्तचमत्कारकरणकुशलनैपुण्यं प्राप्तः सन् । पुनः कथंभूतः सन् विद्या जग्राह । परिप्राप्तगोदानावसरः परिप्राप्तः समीपमागतो गोदानावसरो गोदानसमयो ब्रह्मचर्याश्रमविसर्जनं यस्य स परिप्राप्तगोदानावसरः । विद्याः क इव जग्राह । पयोधिरिव समुद्र इव यथा पयोधिः स्रोतस्विनीर्नदीर्गृह्णाति । कथंभूताः स्रोतस्विनीः । अनेकमार्गाः नानानिम्नोन्नतप्रदेशागताः तथा विद्याश्च अनेकमतसंबन्धिनीः जग्राह । कथंभूते चौलकर्मणि । प्रवर्तितसमस्तलोकोत्सवशर्मणि प्रवर्तितं समस्तानां लोकानां जनानां उत्सवेन महोत्सवेन शर्म सौख्यं यस्मादिति तत्तथा तस्मिन् । अहं कथंभूतः । सवयःसचिवसुतकृतानुशीलनः सवयोभिः समवयोभिः सचिवसुतैर्मन्त्रिसुतैः सह कृतमनुष्ठितं अनुशीलनं विद्याभ्यासो येन स तथोक्तः । पुनः कथंभूतोऽहम् । समाचरितगुरुकुलोपनयनः समाचरितं सम्यगनुष्ठितं गुरुकुलेन पुरोहितादिना उपनयनं यज्ञोपवीतमुञ्जीवन्धनदर्भग्रहणादि यस्य स तथोक्तः । पुनरपि कथंभूतोऽहम् । सर्ववर्णागमेषु सर्वाक्षरस्वीकरणेषु नैपुण्यमाश्रितः । क इव । प्रजापतिरिव ब्रह्मेव यथा प्रजापतिः सर्वेषां वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां आगमेषु नैपुण्यमाश्रयति । पुनरपि कथंभूतोऽहम् । प्रसंख्यानोपदेशेषु गणितशास्त्रेषु नैपुण्यमाश्रितः । क इव । पारिरक्षक इव यथा पारिरक्षको यतिः प्रसंख्यानोपदेशेषु जपशास्त्रेषु नैपुण्यं प्राप्नोति । पुनः कथंभूतोऽहम् । शब्दैतिह्येषु व्याकरणशास्त्रेषु नैपुण्यमाश्रितः । क इव । यथा पूज्यपादो देवनन्दी भट्टारकः शब्दशास्त्रेषु नैपुण्यमाश्रयति । अपरं कथंभूतोऽहम् । धर्माख्यानेषु धर्मशास्त्रेषु नैपुण्यमाश्रितः । क इव । स्याद्वादेश्वरः इव यथा स्याद्वादेश्वरः सर्वज्ञः धर्माख्यानेषु दयालक्षणधर्मकथनलक्षणेषु नैपुण्यमाश्रयति । पुनः कथंभूतोहम् । प्रमाणशास्त्रेषु तर्कग्रन्थेषु नैपुण्यमाश्रितः । क इव । अकलङ्कदेव इव यथा अकलङ्कदेवो निष्कलङ्कस्य भ्राता प्रमाणशास्त्रेषु मीमांसाराधनेषु नैपुण्यमाश्रयति । पुनः कथंभूतोऽहम् । पदप्रयोगेषु सुमण्डि-

[1] एतत्कोष्ठान्तर्गतपाठः सटीकपुस्तके त्रुटितः.

हयनयेषु, अरुण इव रथचर्यासु, परशुराम इव शस्त्राधिगमेषु, शुकनास इव रत्नपरीक्षासु, भरत इव संगीतकमतेषु, त्वष्टकिरिव विचित्रकर्मसु, काशिराज इव शरीरोपचारेषु, काव्य इव व्यूहरचनासु, दत्तक इव कन्तुसिद्धान्तेषु, चन्द्रायणीश इवापरास्वपि कलासु, सकलविद्याविदाश्चर्यप्रवणनैपुण्यमहमाश्रितः परिप्राप्तगोदानावसरश्च

विद्यास्तदा गुरुजनैरुपदिश्यमानाः
स्वाध्यायधीर्नियमवान्विनयोपपन्नः ।
जग्राह भूपकुलभूषणहेतुभूताः
स्रोतस्विनीरिव पयोधिरनेकमार्गाः ॥ ९१ ॥

---

तशब्देषु (सूक्तिवन्तशास्त्रेषु) नैपुण्यमाश्रितः । क इव । पणिपुत्र इव पाणिन्याचार्य इव यथा पणिपुत्रः पदप्रयोगेषु नैपुण्यमाश्रयति । पुनः कथंभूतोऽहम् । राजराद्धान्तेषु नीतिशास्त्रेषु नैपुण्यमाश्रितः । क इव । कविरिव शुक्र इव यथा कविः राजराद्धान्तेषु नैपुण्यमाश्रयति । उक्तं च—'शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः ।' पञ्चिकाकारेषु श्रीदेवाचार्यः कविशब्देन बृहस्पतिमाह । पुनः कथंभूतोऽहम् । गजविद्यासु हस्तिशास्त्रेषु नैपुण्यमाश्रितः । क इव । रोमपाद इव यथा रोमपादः अङ्गराजो गजविद्यासु नैपुण्यमाश्रितः । पुनः कथंभूतोऽहम् । हयनयेषु शालिहोत्रशास्त्रेषु नैपुण्यमाश्रितः । क इव । रैवत इव यथा रैवतो रविसुतः अश्वशास्त्रेषु नैपुण्यमाश्रयति । पुनः कथंभूतोऽहम् । रथचर्यासु स्यन्दनकर्मसु नैपुण्यमाश्रितः । क इव । अरुण इव यथा अरुणः सूर्यसारथिः रथकर्मसु नैपुण्यमाश्रयति । पुनः कथंभूतोऽहम् । शस्त्राधिगमेषु आयुधविज्ञानेषु नैपुण्यमाश्रितः । क इव परशुराम इव यथा परशुरामो जमदग्निरेणुकासुतः शस्त्राधिगमेषु नैपुण्यमाश्रयति । पुनः कथंभूतोऽहम्। रत्नपरीक्षासु नैपुण्यमाश्रितः । क इव । शुकनास इव यथा शुकनासोऽगस्त्यो रत्नपरीक्षासु नैपुण्यमाश्रयति । पुनः कथंभूतोऽहम् । संगीतकमतेषु गीतनृत्यवादित्रशास्त्रेषु नैपुण्यमाश्रितः । क इव । भरत इव यथा भरतः ऋषभदेवपुत्रः संगीतकमतेषु नैपुण्यमाश्रयति । पुनः कथंभूतोऽहम् । विचित्रकर्मसु नानाचित्रशास्त्रेषु नैपुण्यमाश्रितः । क इव । त्वष्टकिरिव यथा त्वष्टकिर्देवसूत्रधारो विचित्रकर्मसु नैपुण्यमाश्रयति । पुनः कथंभूतोऽहम् । शरीरोपचारेषु नैपुण्यमाश्रितः । क इव । काशिराज इव यथा काशिराजो धन्वन्तरिः शरीरोपचारेषु वैद्यकशास्त्रेषु नैपुण्यमाश्रयति । पुनः कथंभूतोऽहम् । व्यूहरचनासु नैपुण्यमाश्रितः । क इव । काव्य इव यथा काव्यो दैत्यगुरुः शुक्रः व्यूहरचनासु नैपुण्यमाश्रयति । पुनः कथंभूतोऽहम् । कन्तुसिद्धान्तेषु नैपुण्यमाश्रितः । क इव । दत्तक इव यथा दत्तकः

असंपादितसंस्कारं सुजातमपि रत्नवत्।
सुतरत्नं महीशानां सत्पदाय न जायते ॥ ९२ ॥
सौधाय राज्यबन्धाय द्वावेतौ न सतां मतौ।
घुणक्षीणप्रभः स्तम्भः स्वातन्त्र्योपहतः सुतः ॥ ९३ ॥

पुनरुल्लिखितलाञ्छनचन्द्रसमवदनमण्डले लक्ष्मीकुचकलशविजयिभुजशिखरसौन्दर्यभाजि सपत्नसंतानतरुस्तम्बोत्पाटनपटुदोर्दण्डमण्डलीविड-

---

कामशास्त्राचार्यः कन्तुसिद्धान्तेषु कामशास्त्रेषु नैपुण्यमाश्रयति। पुनः कथंभूतोऽहम्। अपरास्वपि कलासु नैपुण्यमाश्रितः चतुःषष्टिकलासु नैपुण्यमाश्रितः। क इव। चन्द्रायणीश इव। यथा चन्द्रायणीशश्चन्द्रकलासु नैपुण्यमाश्रितः। श्लेषोपमादीपकसमुच्चयालंकारः ॥

**असंपादितेत्यादि**। महीशानां राज्ञां सुजातमपि सुतरत्नं पुत्रमाणिक्यं सत्पदाय राज्यपदनिमित्तं न जायते न भवति। कथंभूतं सुतरत्नम्। असंपादितसंस्कारम् अनिष्पादितविद्याभ्यासम्। किंवत्। रत्नवत् माणिक्यवत् यथा रत्नं असंपादितसंस्कारं वेकटकृतसंस्काररहितं सुजातमपि वैदूर्यखनावुत्पन्नमपि सत्पदाय शोभनस्थानाय तरलस्थाननिमित्तं न जायते न भवति। उपमालंकारः ॥

**सौधायेत्यादि**। एतौ द्वौ पदार्थौ सतां विद्वज्जनानां सौधाय राजसदनाय राज्यबन्धाय राज्यस्थापननिमित्तं न मतौ न कथितौ। न योग्यावित्यर्थः। एतौ द्वौ कौ। घुणक्षीणप्रभः कीटकविशेषभक्षितत्वात् क्षीणप्रभो निस्तेजस्कः स्तम्भः सौधाधारकाष्ठम्। अन्यश्च स्वातन्त्र्योपहतो यदृच्छया पर्यटनविनष्टः सुतः पुत्रश्च। यथासंख्यालंकारः ॥

पुनश्च पुनरपि मयि यशोधरे पितरं यशोर्घं उपचरति सेवमाने सति, तातेऽपि च मय्यपि मज्जन्मना मम समुद्भवेन ननु भुवं पृथ्वीं अनुशासति सति प्रतिपालयति सति, काश्चित् कियन्तोऽपि समाः वर्षाणि व्यतीयुर्गताः व्यतिक्रान्ताः। कस्मिन् सति काश्चित्समा व्यतीयुः। मम मे तारुण्यलावण्ये उदीर्णे उद्रिक्ते अवतीर्णे आगते सति। कथंभूते तारुण्यलावण्ये। उल्लिखितलाञ्छनचन्द्रसमवदनमण्डले उल्लिखितं दूरीकृतं लाञ्छनं मृगाकारो यस्य स उल्लिखितलाञ्छनः स चासौ चन्द्रश्चन्द्रमास्तेन समं सदृशं वदनमण्डलं मुखमण्डलं यस्मिन् तारुण्यलावण्ये तत्तथोक्तं तस्मिन्। पुनः कथंभूते तारुण्यलावण्ये। लक्ष्मीकुचकलशविजयिभुजशिखरसौन्दर्यभाजि लक्ष्म्याः कुचकलशौ स्तनघटौ तौ विजयते तिरस्कुर्वतीत्येवंशीलं लक्ष्मीकुचकलशविजयिनी ते च ते भुजशिखरे उन्नतस्कन्धप्रदेशौ तयोः सौन्दर्यं सुन्दरत्वं भजते आश्रयति यत् तारुण्यलावण्यं तल्लक्ष्मीकुचकलशविजयिभुजशिखरसौन्दर्यभाक् तस्मिन्। पुनः कथंभूते तारुण्यलावण्ये। सपत्नसंतानतरुस्तम्बोत्पाटनपटुदोर्दण्डमण्डलीविडम्बितस्तम्बेरमकराकारे सपत्नानां शत्रूणां संतानः कुलं स एव तरुस्तम्बः वृक्षस्कन्धस्तस्योत्पाटने उन्मूलने पटुश्चतुरतरा या

म्बितस्तम्बेरमकराकारे श्रीसरस्वतीजलकेलिदीर्घिकालाघवकरणचतुरचक्षुषि मनागुद्भिद्यमानरोमश्यामिकामदरेखामण्डितगण्डस्थले दिग्गजालानस्तम्भशोभमानोरुणि स्मरविलासनिवासविलासिनीजनोन्मादसंपादनसिद्धौषधे संसारसारजन्मनि मनोजनटनाट्यमनोभिनवपात्रे निःशृङ्गशृङ्गारोत्तरङ्गान्तरङ्गभङ्गीभङ्गुरकरणवृत्तिनि समुत्सर्पद्दर्पोद्रेकाधःकृतजगत्रये सतातजनस्य च परिजनस्य जनितयौवराज्यकण्ठिकाबन्धनमनोरथेऽवतीर्णे ममोदीर्णे तारुण्यलावण्ये,

---

दोर्दण्डमण्डली तया विडम्बितस्तिरस्कारमानीतः स्तम्बेरमस्य गजस्य कराकारः शुण्डादण्डसंस्थानं येन तारुण्यलावण्येन तत्तथोक्तं तस्मिन्। पुनः कथंभूते तारुण्यलावण्ये। श्रीसरस्वतीजलकेलिदीर्घिकालाघवकरणचतुरचक्षुषि श्रीश्च अभ्युदयलक्ष्मीः, सरस्वती च जैनभारती, तयोर्जलकेलिदीर्घिके जलक्रीडावापिके तयोर्लाघवकरणं तिरस्कारकरणं तस्मिन् चतुरे विचक्षणे चक्षुषी लोचने यस्मिन् तत्तथोक्तं तस्मिन् । पुनः कथंभूते तारुण्यलावण्ये । मनागुद्भिद्यमानरोमश्यामिकामदरेखामण्डितगण्डस्थले मनागीषदुद्भिद्यमानानि यानि रोमणि मुख्यलोमानि तेषां श्यामिका परेषां श्यामलत्वे ते एव मदरेखे दानरेखे ताभ्यां मण्डिते शोभिते गण्डस्थले कपोलस्थले यस्मिन् तत्तथोक्तं तस्मिन् । पुनः कथंभूते तारुण्यलावण्ये । दिग्गजालानस्तम्भशोभमानोरुणि दिग्गजालानस्तम्भवद्दिग्गजेन्द्रबन्धनस्तम्भाविव शोभमानौ अतिमनोहरौ ऊरू सक्थिनी यस्मिन् तारुण्यलावण्ये तद्दिग्गजालानस्तम्भशोभमानोरु तस्मिन्। पुनरपि कथंभूते तारुण्यलावण्ये। स्मरविलासनिवासविलासिनीजनोन्मादसंपादनसिद्धौषधे स्मरस्य कन्दर्पस्य विलासः संभोगक्रीडा तस्य निवासा मन्दिरप्रायाः ये विलासिनीजना मनोहरस्त्रीसमूहास्तेषामुन्मादसंपादने उन्मत्तत्वकरणे ग्रथिलत्वविधाने सिद्धौषधं निष्पन्नौषधसदृशं यत्तारुण्यलावण्यं तत्तथा तस्मिन् । पुनः कथंभूते तारुण्यलावण्ये । संसारसारजन्मनि संसारे सारं जन्म यस्य तारुण्यलावण्यस्य तत्तथा तस्मिन् । पुनः कथंभूते तारुण्यलावण्ये । मनोजनटनाट्यमानमनोभिनवपात्रे मनोजः कन्दर्पः स एव नटो भरताचार्यस्तेन नाट्यमानं नर्तमानं मनोभिनवपात्रं चित्तप्रत्यग्रपात्रं यस्मिन् तत्तथोक्तं तस्मिन् । पुनः कथंभूते तारुण्यलावण्ये । निःशृङ्गशृङ्गारोत्तरङ्गान्तरङ्गभङ्गीभङ्गुरकरणवृत्तिनि निःशृङ्गो निरङ्कुशो योऽसौ शृङ्गारः वस्त्राभरणादिभावस्तेन उत्तरङ्गमुत्कल्लोलं यदन्तरङ्गं मनस्तस्य भङ्गी वैचित्री तया भङ्गुरा विघटनशीला करणानां पञ्चेन्द्रियाणां वृत्तिः प्रवृत्तिर्यस्मिन् तारुण्यलावण्ये तत्तथोक्तं तस्मिन् । पुनः कथंभूते तारुण्यलावण्ये । समुत्सर्पद्दर्पोद्रेकाधःकृतजगत्रये समुत्सर्पन्नुत्पद्यमानो योऽसौ दर्पोद्रेको मदाधिक्यं तेन अधःकृतं पादतले समानीतं जगत्रयं स्वर्गमृत्युपातालभुवनं यत्र तारुण्यलावण्ये तत्तथा तस्मिन् । पुनः कथंभूते तारुण्यलावण्ये । सतात-

तथा—

नितम्बलक्ष्म्या हृदयश्रिया च नित्यं निजावासमहत्त्वलोभात् ।
कृताल्पसीमो भजते च मध्यस्तदा तनुत्वं परमस्मदीयः ॥ ९४ ॥

को मन्त्री नृपतेर्यशोधर इति ख्यातः सुतः को रणे
हन्ता वैरिबलं यशोधर इति ख्यातः सुतः कः सखा ।
कार्यारम्भविधौ यशोधर इति ख्यातः सुतो यस्य मे
लोकेष्वेवमवाप तातविषये प्रश्नोत्तरत्वं स्थितिः ॥ ९५ ॥

पुनश्च गुरुमिवान्तेवासिनि स्वामिनमिव भृत्ये परंज्योतिरिव योगवरचक्षुषि पितरमुपचरति सति, विश्रम्भेषु च द्वितीय इव हृदये, निदेशकर्मणि

---

जनस्य च परिजनस्य जनितयौवराज्यकण्ठिकाबन्धनमनोरथे सतातजनस्य तातलोकसहितस्य परिजनस्य जनित उत्पादितो यौवराज्यपदस्य कण्ठिकाबन्धनमनोरथः स्थूलमुक्ताफलविनिर्मितग्रीवाभरणविन्यासनमनोरथो दौर्हृदं यत्र तारुण्यलावण्ये तत्तथोक्तं तस्मिन् । तथा तेनैव प्रकारेण तारुण्यलावण्यागमनप्रकारेण तदा तस्मिन् तारुण्यलावण्यागमनकाले परं केवलं अस्मदीयो मध्यो ममोदरप्रदेशः तनुत्वं क्षामत्वं भजते चाभजत् प्राप्तवान् । कथंभूतो मध्यः । नितम्बलक्ष्म्या कटिपश्चात्प्रदेशश्रिया हृदयश्रिया च वक्षःस्थललक्ष्म्या च नित्यं सर्वकालं निजावासमहत्त्वलोभात् स्वकीयआवासबृहत्त्वलौल्यात् कृताल्पसीम इव कृता अल्पा सीमा मर्यादा यस्य मध्यस्य स कृताल्पसीमः । उत्प्रेक्षालंकारः ॥

**को मन्त्रीत्यादि** । यस्य जगत्प्रसिद्धस्य मे मम यशोधरकुमारस्य स्थितिः स्वभावो लोकेषु प्रश्नकारकजनेषु एवममुना प्रकारेण तातविषये यशोर्घमहाराजगोचरे प्रश्नोत्तरत्वं अवाप प्राप्तवती(वान्) । एवं कथमिति चेत् लोकः पृच्छति नृपतेर्यशोर्घमहाराजस्य मन्त्री बुद्धिसचिवः को वर्तते । अपरलोकः कथयति यशोधर इत्यभिधानः ख्यातो जगत्प्रसिद्धः सुतः पुत्रो वर्तते । कोऽपि लोकः पृच्छति नृपतेर्यशोर्घमहाराजस्य रणे संग्रामे वैरिबलं शत्रुसैन्यं हन्ता विध्वंसकः सेनापतिः को वर्तते । अपरो लोकस्तस्योत्तरं ददाति यशोधर इत्यभिधानः ख्यातः पृथिव्यां प्रसिद्धो वर्तते । कश्चिल्लोकः पृच्छति नृपतेर्यशोर्घमहाराजस्य कार्यारम्भविधौ सैन्यचालनाद्यारम्भविधाने सखा मित्रं को वर्तते । अपरस्तु कथयति यशोधर इत्यभिधानः ख्यातः सुतो वर्तते । प्रश्नोत्तरालंकारः ॥

मयि किं कुर्वति सति कतिचित् समयान् व्यतीयुः । पितरं वप्तारं उपचरति सेवमाने सति । कं कस्मिन्निव । गुरुमाचार्यं अन्तेवासिनि शिष्ये इव यथा अन्तेवासी गुरुमुपचरति । सेवमाने सति स्वामिनं राजानं भृत्ये इव सेवके इव यथा भृत्यः स्वामिनमुपचरति । पुनः कं कस्मिन्निव । परंज्योतिः परमात्मानं योगवरचक्षुषीव यथा योगवरचक्षुर्योगी-

धनक्रीत इव दासे, विधेयतायां स्वकीय इव चेतसि, निर्विकल्पतायामव्यभिचारिणीव सुहृदि, मयि प्रतिपन्नतदाराधनैकतानमनसि, अपरेषु च तेषु तेषु तदाज्ञावसरेष्वेकमप्यात्मानं हृद्यांशाविवोदकपात्रेष्वनेकमिव दर्शयति, दानमानाभ्यामन्यत्र सर्वमपि परिजनं तदादेशविधिषु विदूरयति, देवताराधनेषु च तातस्य प्रतिचारिणि, गुरुजनोपासनेषु प्रतिवपुषि, धर्मनियोगेषु पुरोधसि, शास्त्राभ्यासेषु शिष्यसधर्मणि, विद्यागोष्ठीषु कलोदाहरणसाक्षिणि, रथचर्यासु यन्तरि, करिविनोदेष्वभिषादिनि, हयक्रीडासु चामरधृति, स्वैरविहारेष्वातपत्रोपक्ृति, धर्मासनेषु कार्यपुरश्चारिणि, समरसमयेषु सुभटा-

---

श्वरोऽध्यात्मविद्यतिः परंज्योतिरुपचरति । पुनश्च कथंभूते सति काश्चित्समा व्यतीयुः । विश्रम्भेषु विश्वासेषु द्वितीये अपरे हृदये इव मनसीव । निदेशकर्मणि आदेशकरणे धनक्रीते दासे इव स्वायत्ते येन गृहीते कर्मकरे इव । विधेयतायां कर्तव्यतायां स्वकीये निजे चेतसीव चित्ते इव । निर्विकल्पतायां आदेशस्य अविचारणायां अव्यभिचारिणी अवैपरीत्यभागिनी सुहृदीव सख्यामिव । प्रतिपन्नतदाराधनैकतानमनसि प्रतिपन्नमङ्गीकृतं तदाराधने एकतानं अनन्यवृत्ति मनश्चित्तं यस्य सोऽहं प्रतिपन्नतदाराधनैकतानमनास्तस्मिन् । पुनश्च मयि किं कुर्वति सति काश्चित्समा व्यतीयुः । अपरेष्वन्येषु तेषु तेषु जगत्प्रसिद्धेषु तदाज्ञावसरेषु पितुरादेशसमयेष्वेकमप्यद्वितीयमप्यात्मानं मम जीवनमनेकं नानाप्रकारं दर्शयतीव प्रेक्षयतीव । केषु कस्मिन्निव । उदकपात्रेषु उदकभाजनेषु हृद्यांशाविव चन्द्रमसीव । पुनश्च मयि किं कुर्वति सति । दानमानाभ्यामन्यत्र सर्वमपि परिजनं तदादेशविधिषु विदूरयति सति तदादेशविधिषु पितुः शिष्टविधानेषु सर्वमपि परिजनं समस्तमपि परिवारं विदूरयति उत्सारयति सति । कथम् । अन्यत्र विना ताभ्यां विना दानमानाभ्यां दानाद्विना मानाच्च विना दानं च पितैव ददाति । पुनश्च मयि कथंभूते सति । देवताराधनेषु च देवतापूजासु तातस्य वप्तुः प्रतिचारिणि प्रतिचारके सति । पुनश्च मयि कथंभूते सति । गुरुजनोपासनेषु प्रतिवपुषि गुरुजनानां मातृपितृउपाध्यायादीनां उपासनेषु सेवासु प्रतिवपुषि प्रतिशरीरे । [पुनश्च मयि कथंभूते सति । धर्मनियोगेषु पुरोधसि धर्ममार्गेषु पुरोहिते सति ।] पुनश्च मयि कथंभूते सति । शास्त्राभ्यासेषु शास्त्रानुशीलनेषु शिष्यसधर्मणि शिष्यसदृशे सति । पुनश्च मयि कथंभूते सति । विद्यागोष्ठीषु विद्याचारेषु कलोदाहरणसाक्षिणि कलानां उदाहरणानां दृष्टान्तवचनानां साक्षिणि प्रतिभुवि सति । पुनश्च मयि कथंभूते सति । रथचर्यासु रथप्रवीणेषु यन्तरि सारथौ सति । पुनश्च मयि कथंभूते सति । करिविनोदेषु अभिषादिनि हस्तिनां क्रीडासु अभिषादिनि प्रोतारे आधोरणे सति । पुनश्च मयि कथंभूते सति । हयक्रीडासु चामरधृति अश्वकेलिषु चामरधृति प्रकीर्णकधारिणि सति । पुनश्च मयि कथंभूते सति । स्वैर-

ग्रेसरतया विक्रमिणि, परेण च तेन तेन विनयकर्मणा सकलस्यापि लोकस्य वदनारविन्देषु स्वकीयं यशोहंसं प्रचारयति, श्रवणाञ्जलिपुटेषु च निजकीर्तिसुधारसं प्रवर्षयति,

तातेऽपि मज्जन्मना रत्नाकर इवेन्दिरानुजेन धर्माराम इव फलसंपदा प्राक्पर्वत इव द्युमणिमण्डलेन सर्गादिदिवस इव प्रजापतिना द्वीपमध्य इव मन्दरेणात्मानं बहुमन्यमाने, सकलाकूपारकरपरिग्रहां कुलस्त्रियमिवैकभोग्यां भुवमनुशासति सति, तैस्तैर्मनोभिलाषासादिसंवादैः सुखसंकथाविनोदैर्मुहूर्तसमया इव समाः काश्चिद्व्यतीयुः।

---

विहारेषु वनक्रीडादिषु आतपत्रोपकृति छत्रोपकारके सति। पुनः कथंभूते सति। धर्मासनेषु कार्यपुरश्चारिणि धर्मासनेषु आस्थानेषु सभासु विषये कार्याणां पुरश्चारिणि अग्रगण्ये सति। पुनः कथंभूते सति। समरसमयेषु सुभटाग्रेसरतया विक्रमिणि संग्रामावसरेषु सुभटानां सहस्रभटलक्षभटकोटीभटानां अग्रेसरतया मुख्यत्वेन विक्रमिणि पराक्रमकारिणि। पुनश्च किं कुर्वति सति। परेण च तेन तेन विनयकर्मणा सकलस्यापि लोकस्य वदनारविन्देषु स्वकीयं यशोहंसं प्रचारयति परेण च उक्तोर्वरितेन तेन तेन जगत्प्रसिद्धेन विनयकर्मणा प्रश्रयव्यतिकरेण सकलस्यापि समग्रस्यापि लोकस्य जनस्य वदनारविन्देषु मुखकमलेषु स्वकीयं निजं यशोहंसं यशःश्वेतच्छदं पक्षिणं प्रचारयति प्रवेशयति सति। पुनश्च किं कुर्वति सति। श्रवणाञ्जलिपुटेषु च निजकीर्तिसुधारसं प्रवर्षयति सति कर्णाञ्जलिपुटेषु आत्मीयकीर्तिद्रवं अमृतद्रवं सकलेन लोकेन वर्षणं कारयति सति॥

तातेऽपि मज्जन्मना मम संभवेन किं कुर्वाणे सति। आत्मानं बहुमन्यमाने सति। कस्मिन् केनेव। इन्दिरानुजेन लक्ष्मीलघुभ्रात्रा चन्द्रेण कृत्वा रत्नाकरे समुद्र इव आत्मानं बहुमन्यमाने। पुनः कस्मिन् केनेव। धर्मारामे फलसंपदेव यथा फलसंपदा कृत्वा फलसंपत्त्या कृत्वा धर्मारामो धर्मोद्यानं आत्मानं बहुमन्यते। पुनः कस्मिन् केनेव। द्युमणिमण्डलेन श्रीसूर्यबिम्बेन प्राक्पर्वत उदयाचल इव आत्मानं बहु मन्यते। पुनः कस्मिन् केनेव। प्रजापतिना सर्गादिदिवसे इव यथा प्रजापतिना ब्रह्मणा कृत्वा सर्गादिदिवसे सृष्टिप्रथमदिन आत्मानं बहुमन्यते। पुनः कस्मिन्केनेव। द्वीपमध्य इव मन्दरेण यथा मन्दरेण मेरुणा द्वीपमध्ये जम्बूद्वीप आत्मानं बहु मन्यते। ताते पुनः किं कुर्वति सति। भुवं पृथ्वीं एकभोग्यां अद्वितीयपुरुषभोग्यां अनुशासति पालयति सति। कथंभूतां भुवम्। सकलाकूपारकरपरिग्रहां सकलाः समग्राः ये अकूपाराश्चत्वारः समुद्रास्तेषां तेषु वा करस्य भागधेयस्य परिग्रहः स्वीकारो यस्यां भुवि सा सकलाकूपारकरपरिग्रहा ताम्। पुनः कथंभूतां भुवम्। कुलस्त्रियमिव यथा

एवं रत्नकाञ्चनयोरिव समसमायोगेन धनदनलकूबरयोरिव परस्परप्रीत्या धनंजयजयन्तयोरिव महोपचयैश्वर्यरसेनाधोक्षजमनोजयोरिव चान्योन्यानुवर्तनेन नित्यमावयोर्वर्तमानयोरेकदा पुरंदरपुरपताकाञ्चलचुम्बनोचितमण्डले वनेजवनविकासविलासाविरलवारलाजनमनसि मनसिजकलहविगलितकालेयपौलोमीकपोलकोमले हरिहर्म्यभर्मनिर्मितकलशकान्तिविलोपिनि पुरुहूतपुरंध्रिकाधरप्रसाधनजतुरसोत्कटपटलपेशले शचीश्रवणावतंसार्पितपारिजातमञ्जरीजालजयिनि सुरतसहचरोपचारच्युतालक्तकलेपसंपल्लवेषु स्तुतिमुखराम्वरचरीनिकुरुम्वविम्बाधरपल्लवेषु विकचमानकमलकोशप्रकाशप्रसरैः करैः पुन-

---

कुलस्त्रीः कुलवधूरेकभोग्या भवति । समाः कथंभूताः । तैस्तैर्जगत्प्रसिद्धैः सुखसंकथाविनोदैः सुखस्य परमानन्दलक्षणस्य संवन्धिनो ये कथाविनोदाः कथाकुतूहलानि तैः सुखसंकथाविनोदैः मुहूर्तसमया इव घटीद्वयलक्षणा इव । कथंभूतैः सुखसंकथाविनोदैः । मनोभिलाषासादिसंवादैः मनोभिलाषाणामासादिनः प्रापकाः संवादाः साधुवचनानि येषु सुखसंकथाविनोदेषु ते तथा तैः ॥

**एवमित्यादि** । एवममुना प्रकारेण नित्यं सर्वकालमावयोः पितापुत्रयोर्यशोर्घयशोधरयोरन्योन्यानुवर्तनेन परस्परानुकूलतया वर्तमानयोः सतोरेकदा एकस्मिन्नवसरे तस्य जगत्प्रसिद्धस्य यशोर्घमहाराजस्य आज्यावेक्षणं घृतमध्ये मुखावलोकनं दर्पणनिरीक्षणं च कुर्वतः पलिताङ्कुरदर्शनमभूत् पलितकेशनवोद्भिद्विलोकनं वभूव(मभूत्) । कथंभूतस्य यशोर्घमहाराजस्य । विजयोर्जितराज्यस्य विजयेन सर्वशत्रूणामभिमानमर्दनेन ऊर्जितमुन्नतमप्रतिहतं राज्यं राज्यव्यापारो यस्य स विजयोर्जितराज्यस्तस्य विजयोर्जितराज्यस्य । इति क्रियाकारकसंवन्धः । आवयोः कथंभूतयोः सतोः । समसमायोगेन सदृशसंयोगेन कृत्वा रत्नकाञ्चनयोरिव मत्पिता रत्नसदृशः अहं काञ्चनसदृशः । परस्परप्रीत्या अन्योन्यस्नेहेन धनदनलकूबरयोरिव यशोर्घो धनदसदृशः अहं यशोधरः नलकूबरसदृशः कुवेरपुत्रसमानः । महोपचयैश्वर्यरसेन कृत्वा महान् गरीय उपचयो वृद्धिस्तेनोपलक्षितं यदैश्वर्यं विभूतिस्तस्य रसेन अनुरागेण धनंजयजयन्तयोरिव यशोर्घो धनंजयसदृशो देवेन्द्रसमानः अहं जयन्तसदृशो देवेन्द्रपुत्रसमानः । अन्योन्यानुवर्तनेन परस्परानुकूलतया अधोक्षजमनोजयोरिव नारायणप्रद्युम्नयोरिव । पुनश्च कस्मिन् सति किं कुर्वति सति पलिताङ्कुरदर्शनमभूत् । गभस्तिमति (मालिनि) श्रीसूर्ये पुनः पुनरपि करैः किरणैः कृत्वा स्तुतिमुखराम्वरचरीनिकुरुम्वविम्वाधरपल्लवेषु अपरमेव पूर्वमेव किमपि अनिर्वचनीयं अयावकाहार्यं अयावकेन अलक्तकेन आसमन्तात् हर्तुं शक्यते तिरस्कर्तुं शक्यते उपमानं प्राप्तुं शक्यते अयावक-

रपरमेव किमप्ययावकाहार्यं सौन्दर्यं सृजति सति गभस्तिमति, तपनतापसोन्छितच्छाये इव तमस्तापिच्छगुलुञ्छतुच्छे वियत्कच्छे, सकलदिक्पालवि-

हार्यं ईदृग्विधं सौन्दर्यं मनोहरत्वं रक्तिमानं सृजति कुर्वति सति। स्तुतिभिः कृत्वा स्तुतिषु वा स्तवनेषु मुखरा वाचाला याः अम्बरचर्यः देव्यो विद्याधर्यो वा तासां निकुरुम्बाः समूहास्तेषां बिम्बाधरपल्लवेषु परिपक्वतिन्दुकेरिफलसदृशौष्ठप्रान्तेषु करैः सौन्दर्यं सृजति सति। कथंभूतेषु स्तुतिमुखराम्बरचरीनिकुरुम्बबिम्बाधरपल्लवेषु। सुरतसहचरोपचारच्युतालक्तकलेपसंपल्लवेषु सुरतसहचराणां मैथुनक्रीडासखीनां भर्तृणां उपचारस्य पूजायाः संबन्धी च्युतः पतितो योऽसावलक्तकलेपो लाक्षारसलेपनं तस्य संपत् शोभा तस्याः लवा लेशा येषु अधरपल्लवेषु ते सुरतसहचरोपचारच्युतालक्तकलेपसंपल्लवास्तेषु। कथंभूतैः करैः। विकचमानकमलकोशप्रकाशप्रसरैः विकचमानानि विकसन्ति यानि कमलानि पद्मानि तेषां कोशो मध्यप्रदेशस्तस्य प्रकाशवत्तेजोवत्प्रसरः प्रवर्तनं येषां कराणां ते तथोक्तास्तैः। कथंभूते गभस्तिमति(मालिनि)। पुरंदरपुरपताकाञ्चलचुम्बनोचितमण्डले पुरंदरस्य यत्पुरं नगरं पूर्वदिशि संस्थितं इन्द्रदिक्पालपत्तनं तस्य पताका ध्वजास्तासामञ्चलानि प्रान्तास्तेषां चुम्बने स्पर्शने उचितं योग्यं निकटतरं मण्डलं बिम्बं यस्य गभस्तिमतः स तथोक्तस्तस्मिन्। पुनः कथंभूते गभस्तिमति। वनेजवनविकासविलासाविरलवारलाजनमनसि वनेजवनानां कमलसमूहानां विकासः स्फुटत्वं तस्य विलासो भोगस्तत्र अविरलं घनं वारलाजनानां हंसीसमूहानां मनश्चित्तं यस्मिन् गभस्तिमति स वनेजवनविकासविलासाविरलवारलाजनमनास्तस्मिन्। पुनः कथंभूते गभस्तिमति। मनसिजकलहविगलितकालेयपौलोमीकपोलकोमले मनसिजस्य कन्दर्पस्य कलहो मैथुनक्रीडा तेन विगलितं च्युतं कालेयं कुङ्कुमं यस्य स चासौ पौलोमीकपोल इन्द्रस्त्रीगण्डस्थलं तद्वत्कोमलो मृदुलो मनोहरः तस्मिन्। तत्पुरुषः समासः। पुनः कथंभूते गभस्तिमति। हरिहर्म्यभर्मनिर्मितकलशकान्तिविलोपिनि हरिहर्म्यं इन्द्रभवनं तस्य संबन्धी भर्मनिर्मितः काञ्चनमयो योऽसौ कलशस्तस्य कान्तिः शोभा तां विलोपयतीत्येवंशीलो हरिहर्म्यभर्मनिर्मितकलशकान्तिविलोपी तस्मिन्। पुनः कथंभूते गभस्तिमति। पुरुहूतपुरंध्रिकाधरप्रसाधनजतुरसोत्कटपटलपेशले पुरुहूतस्य इन्द्रस्य पुरंध्रिका बालपत्नी तस्याः अधरो दन्तच्छदस्तस्य प्रसाधनं मण्डनं योऽसौ जतुरसो द्रुमामयनिर्यासस्तेनोत्कटः पुटो योऽसौ पटलः पिचूपूपस्तद्वत् पेशलस्तस्मिन्। पुनः कथंभूते गभस्तिमति। शचीश्रवणावतंसार्पितपारिजातमञ्जरीजालजयिनि शच्या इन्द्राण्याः श्रवणयोः कर्णयोः अवतंसाय कर्णपूराय अर्पितं यत्पारिजातमञ्जरीजालं दिव्यपुष्पवल्लरीसमूहस्तज्जयति तिरस्करोतीत्येवंशीलः शचीश्रवणावतंसार्पितपारिजातमञ्जरीजालजयी तस्मिन्। पुनः कथंभूते सति पलिताङ्कुरदर्शनमभूत्। वियत्कच्छे गगनवने तमस्तापिच्छगुलुञ्छतुच्छे तमो अन्धकारं तदेव तापिच्छं कालस्कन्धवृक्षस्तस्य गुलुञ्छैर्गुच्छैर्भि-

लासिनीसीमन्तसिन्दूरसंततिसुन्दरालेखरेखासु गगनविशिखासु, खरकिरण-केसरिक्रमान्तिभीत इवापरगिरिशिखरान्तरविहारिणि शिशिरकरकरिणि, प्रालेयलवलिपिषु विलीनेष्विव लोकलोचनालोकलोपिषु नक्षत्रनिकरेषु, विधुरावसर इव मित्रैकशेषतां विभ्राणे नभसि, वीरनरेश्वर इव करमात्रतन्त्रतयात्मप्रतापप्रकाशनावसायेऽदितितनये, अरुणमणिमहीभृत्प्रभापिञ्जरितरुचि-

---

स्तुच्छे हीने सति । कस्मिन्निव । तपनतापसोज्झितच्छाये इव तपनः श्रीसूर्यः स एव तापसः तपश्चरणकरणत्वात्तेन उज्झिता शे(स्फे)टिता छाया तस्य वियत्कच्छस्य स तपनतापसोज्झितच्छायः तस्मिन् । वृक्षस्य पत्रपुष्पेषु चुण्टितेषु छाया न भवतीति भावः । पुनश्च कासु सतीषु पलिताङ्कुरदर्शनमभूत् । सकलदिक्पालविलासिनीसीमन्तसिन्दूरसंततिसुन्दरालेखरेखासु गगनविशिखासु आकाशमार्गेषु । कथंभूतासु गगनविशिखासु । सकलाश्च ते दिक्पालाः इन्द्राग्नियमनिर्ऋतिवरुणवायुकुवेरेशानास्तेषां विलासिनीनां सीमन्तेषु केशभागेषु याः सिन्दूरसंततयो गर्भनामश्रेणयस्तद्वत् सुन्दारा मनोहरा आलेखरेखा विन्यासरेखा यासु गगनविशिखासु तास्तथा तासु । पुनश्च कस्मिन् सति पलिताङ्कुरदर्शनमभूत् । शिशिरकरकरिणि चन्द्रहस्तिनि अपरगिरिशिखरान्तरविहारिणि अस्ताचलपर्वतशृङ्गस्य अन्तरे अन्तरस्मिन् विहारिणि पर्यटति सति । कथंभूते शिशिरकरकरिणि । उत्प्रेक्षते—खरकिरणकेसरिक्रमाक्रान्तिभीत इव खरकिरणः श्रीसूर्यः स एव केसरी सिंहः गगनाटव्यामेकाकिविहारित्वात् तस्य क्रमाः पादास्तेषामाक्रान्तिर्व्याप्तिस्तस्या भीतो भयं प्राप्तः खरकिरणकेसरिक्रमाक्रान्तिभीतस्तस्मिन् तथोक्ते । पुनश्च केषु सत्सु पलिताङ्कुरदर्शनमभूत् । नक्षत्रनिकरेषु तारासमूहेषु लोकलोचनालोकलोपिषु सत्सु लोकानां लोचनानि नेत्राणि तेषामालोकात् उद्योतात् लुम्पन्तीत्येवंशीलाः लोकलोचनालोकलोपिनस्तेषु । लोकानां दृष्टिषु नायान्तीत्यर्थः । नक्षत्रनिकरेषु कथंभूतेषु । उत्प्रेक्षते—प्रालेयलवलिपिषु विलीनेष्विव विगलितेष्विव । पुनश्च कस्मिन् सति पलिताङ्कुरदर्शनमभूत् । नभसि आकाशे मित्रैकशेषतां विभ्राणे सति । सूर्य एव एकः अद्वितीय आकाशे स्थितः, अपरे नक्षत्रादयः सर्वे नष्टा इत्यर्थः । नभसि कथंभूते । उत्प्रेक्षते—विधुरावसरे इव विधुरावसरे कष्टवेलायां मित्रमेव समीपे तिष्ठति, अन्ये सर्वेऽपि पलायन्ते नश्यन्ति । पुनश्च कस्मिन् सति पलिताङ्कुरदर्शनमभूत् । अदितितनये श्रीसूर्ये करमात्रतन्त्रतया किरणमात्रपरिग्रहतया आत्मप्रतापप्रकाशनावसाये आत्मनः प्रतापस्य प्रकाशने प्रकटने अवसाय उद्यमो यस्य स तथोक्तस्तस्मिन् । कस्मिन्निव । वीरनरेश्वर इव यथा वीरनरेश्वरः क्षुत्रकवीरो नृपः करमात्रेण अल्पभागधेयेन तन्त्रेण सैन्येन आत्मप्रतापप्रकाशनावसायो भवति । अपरं कस्मिन् सति पलिताङ्कुरदर्शनमभूत् । समस्तेऽपि समग्रेऽपि विहायस्याकाशे उपलक्ष्यमाणे सति । कथंभूते विहायसि ।

प्रविरलनीलिके विफलफेनस्फीतिनि निस्तरङ्गसङ्गे सागराम्भसीवोपलक्ष्यमाणे समस्तेऽपि विहायसि, भूर्जकुजवल्कलदुकूले लतालतान्तनूतनोत्तंसचकासिनि विकसत्कोकनदामोदसान्द्रितशरीरे विश्वंभराधरदरोज्झितनिर्झरशीकरासारमुक्ताफलितवपुषि दिक्करटिकटकन्दरद्रवद्दानासवास्वादलङ्घिते सविधप्रधावद्गन्धलुब्धमधुकरीसमाजकूजितालोकशब्दसंदर्भिणि झिल्लीकाझल्लरी-

---

अरुणमणिमहीभृत्प्रभापिञ्जरितरुचिप्रविरलनीलिके। अरुणमणिमहीभृतो रक्तमणिपर्वतस्य उदयाचलस्य प्रभाभिस्तेजोभिः पिञ्जरिता पीतरक्तीकृता या रुचिः शोभा तया प्रविरला अल्पतरा नीलिका कृष्णभावो यस्य विहायसस्तथोक्तं तस्मिन्। विहायसि कथंभूते। निस्तरङ्गसङ्गे सागराम्भसीव कल्लोलसङ्गरहिते समुद्रजले इव। कथंभूते सागराम्भसि। विफलफेनस्फीतिनि विफला नष्टा फेनस्फीतिर्डिण्डीरवृद्धिर्यस्येति तद्विफलफेनस्फीति तस्मिन् विफलफेनस्फीतिनि। यथा समुद्रजलमध्यस्थितरक्तमणिपर्वततेजसा अलनीलिकं (?) समुद्रजलं भवति। पुनश्च कस्मिन् सति पलिताङ्कुरदर्शनमभूत्। मरुति वायौ शनैः शनैर्मन्दं मन्दं परिसरति पर्यटति प्रवर्तमाने आगच्छति। मरुति कथंभूते। दिवाभुजगे इव दिवाकामुके इव यथा दिवाभुजगो हि कामी सीमन्तिनीः संभावयितुं संभूषयितुं संतोषयितुं शनैः शनैः परिसरति तथा ककुप्सीमन्तिनीर्दिग्वधूः संभावयितुं मरुत्यागच्छति सति। कथंभूते मरुद्दिवाभुजगे। भूर्जकुजवल्कलदुकूले भूर्जकुजा भूर्जवृक्षास्तेषां वल्कलानि त्वचो दुकूलानि यस्य स तथा तस्मिन्। पुनः कथंभूते मरुद्दिवाभुजगे। लतालतान्तनूतनोत्तंसचकासिनि लतानां वल्लीनां लतान्तानि पुष्पाणि तान्येव नूतनोत्तंसः मुकुटं कर्णपूरश्च तेन चकास्ति शोभते इत्येवंशीलः लतालतान्तनूतनोत्तंसचकासी तस्मिन्। पुनरपि कथंभूते मरुद्दिवाभुजगे। विकसत्कोकनदामोदसान्द्रितशरीरे विकसन्ति स्फुटन्ति यानि कोकनदानि रक्तकमलानि तेषामामोदेन परिमलेन सान्द्रितं स्थूलितं शरीरं यस्य स तथोक्तस्तस्मिन्। पुनः कथंभूते मरुद्दिवाभुजगे। विश्वंभराधरदरोज्झितनिर्झरशीकरासारमुक्ताफलितवपुषि विश्वंभराधराः पर्वतास्तेषां दराभिर्गुहाभिरुज्झिता मुक्ता ये निर्झरशीकरा अधःपतत्पानीयप्रवाहास्तेषामासाराः समूहास्तैर्मुक्ताफलितं मौक्तिकाभरणसहितं कृतं वपुः शरीरं यस्य स तथोक्तस्तस्मिन्। पुनः कथंभूते मरुद्दिवाभुजगे। दिक्करटिकटकन्दरद्रवद्दानासवास्वादलङ्घिते दिक्करटिनां दिग्गजानां कटकन्दराणि कपोलस्थलविवराणि तेभ्यो द्रवत् प्रस्रवत् यद्दानं मदस्तदेव आसवो मद्यं तस्य आस्वादेन पानेन लङ्घितो विह्वलीभूतो यत्र तत्र संचरणशीलस्तस्मिन्। पुनः कथंभूते मरुद्दिवाभुजगे। सविधप्रधावद्गन्धलुब्धमधुकरीसमाजकूजितालोकशब्दसंदर्भिणि सविधे समीपे प्रधावन्त्यः शीघ्रगतिं कुर्वन्त्यो या गन्धलुब्धमधुकर्यः परिमललम्पटभ्रमर्यस्तासां समाजः समूहस्तस्य कूजितं शब्दितं तदेव आलोकशब्दो जयजयशब्दस्तस्य संदर्भो गुम्फो विद्यते यस्य स तथोक्तस्तस्मिन्।

स्वरसूचितसंचारे ककुप्सीमन्तिनीः संभावयितुं दिवाभुजगे इव शनैः शनैः परिसरति मरुति, त्रिदिवमुनिमण्डलीस्खलितजलदेवताजलकेलिकुतूहले जाह्नवीजले, वासरकरमुद्दिश्य द्विजातिहस्तोदस्तास्तोकस्तवकरक्तचन्दनच्छटाछद्मसिन्दूर्यमाणमण्डले व्योमसामजकुम्भस्थले, पालिन्दमन्दिरोदरतारतरोच्चार्यमाणमागधमङ्गलोल्लासतुन्दिले नगरदेवताङ्गणास्फालितविविधवाद्योद्धुरध्वानलोहले नवसमागमानन्दमन्थरमिथुनचरपतङ्गप्रलापकाहले कमलि-

पुनः कथंभूते मरुद्दिवाभुजगे । झिल्लीकाझल्लरीस्वरसूचितसंचारे झिल्लीका कंसायस्तित्तिर्यो जीवाः पतङ्गजालयस्ता एव झल्लर्यो जयघण्टास्तासां स्वरेण शब्देन सूचितो ज्ञापितः संचार आगमनं यस्य स तथोक्तस्तस्मिन् । पुनः कस्मिन् सति पलिताङ्कुरदर्शनमभूत् । जाह्नवीजले सति । कथंभूते । त्रिदिवमुनिमण्डलीस्खलितजलदेवताजलकेलिकुतूहले त्रिदिवस्य स्वर्गस्य ये मुनयो लौकान्तिकास्तेषां मण्डलीः श्रेणीः । कस्यचित्तीर्थकरपरमदेवस्य वैराग्योत्पत्तिनिमित्तं जाह्नवीमार्गे कृतगमनत्वात् जाह्नवीजलमार्गे समागतत्वात् । अथवा त्रिदिवमुनिमण्डली सप्तर्षिश्रेणिस्तया स्खलितं विघ्नितं लज्जितत्वात् जलदेवतानां जलकेलिकुतूहलं जलक्रीडावेगो यस्मिन् जाह्नवीजले स तथा तस्मिन् । पुनः कस्मिन् सति पलिताङ्कुरदर्शनमभूत् । व्योमसामजकुम्भस्थले सति व्योमाकाशमेव सामजो हस्ती कृष्णवर्णत्वात्तस्य कुम्भस्थलं शिरःपिण्डस्थानं तस्मिन् सति । कथंभूते व्योमसामजकुम्भस्थले[1] वासरकरमुद्दिश्य द्विजातिहस्तोदस्तास्तोकस्तवकरक्तचन्दनच्छटाछद्मसिन्दूर्यमाणमण्डले··· देशः प्रदेशो यस्य व्योमसामजकुम्भस्थलस्य तत्तथा तस्मिन् । पुनश्च कस्मिन् सति पलिताङ्कुरदर्शनमभूत् । गृहदीर्घिकासु गृहवापिकासु द्रुहिणद्विजकुलकोलाहले द्रुहिणद्विजानां ब्रह्मपक्षाणां हंसानां कुलानि समूहास्तेषां कोलाहलः कलकलशब्दो द्रुहिणद्विजकुलकोलाहलस्तस्मिन् सर्वतः सर्वत्र समुच्छलति उत्पद्यमाने सति । कथंभूते द्रुहिणद्विजकुलकोलाहले । पालिन्दमन्दिरोदरतारतरोच्चार्यमाणमागधमङ्गलोल्लासतुन्दिले पालिन्दो नरेन्द्रस्तस्य मन्दिरमावासस्तस्योदरं मध्यप्रदेशस्तस्मिन् तारतरमत्युच्चैस्तरमुच्चार्यमाणं पठ्यमानं यन्मागधानां नम्राचार्याणां बोधकाराणां मङ्गलं मङ्गलपाठस्तस्योल्लासेनोच्छलनेन तुन्दिलः स्थूलस्तस्मिन् । पुनः कथंभूते द्रुहिणद्विजकुलकोलाहले । नगरदेवताङ्गणास्फालितविविधवाद्योद्धुरध्वानलोहले नगरदेवतायाः पुराधिष्ठायिकायाः अङ्गणे चत्वरे गृहाग्रभूमौ आस्फालितानि ताडितानि विविधानि नानाप्रकाराणि यानि वाद्यानि वेणुवल्लकीपणवानकमृदङ्गशङ्खकाहलत्रिवलितालादीनि वादित्राणि तेषामुद्धुरा उत्कटा ये ध्वानाः शब्दास्तैर्लोहलः अस्फुटस्तस्मिन् । अत्र नगरे देवताशब्देन जिनमन्दिरादिकं ज्ञातव्यम् । अपरं कथंभूते द्रुहिणद्विजकुलकोलाहले । नवसमागमानन्दमन्थुरमिथुनचरपतङ्गप्रलापकाहले नवसमागमेन प्रत्यग्रागमनेन

१. अत्र किंचित्त्रुटितं भाति.

नीमधुमत्तमत्तालिकलकलोत्ताले सहचरीरतिरसिकसारसरसितसरले क्रीडाकृतार्थकुररकामिनीव्याहारवहले वीचिकाचयप्रचारप्रारम्भविजृम्भितकुक्कुभकुहकुहानादशब्दाले प्रमदवनानोकहकुहरकुलायनिलीनशुकसारिकाशावशब्दासराले सुरासुरसमरसंप्लव इवादिपुरुषोत्पत्तिदिवस इवामृतमथनकाल इव सेतुबन्धप्रबन्ध इव प्रथमयुगावतारपुण्याह इव च सर्वतः समुच्छलति गृहदीर्घिकासु द्रुहिणद्विजकुलकोलाहले, निजनियोगव्यग्राङ्गनासं-

योऽसावानन्दस्तेन मन्थरा मन्दगामिनो ये मिथुनचरपतङ्गाश्चक्रवाकपक्षिणस्तेषां प्रलापैरनर्थकशब्दैः काहलो गम्भीरस्तस्मिन्। पुनः कथंभूते द्रुहिणद्विजकुलकोलाहले। कमलिनीमधुमत्तमत्तालिकलकलोत्ताले कमलिनीनां पद्मिनीनां मधुभिर्मकरन्दैः पुष्परसैर्मत्तास्तृप्तास्तथा मत्ता मदं प्राप्ता ये अलयो भ्रमरास्तेषां कलकलेन कोलाहलेन उत्ताल उत्सुकस्तस्मिन्। पुनः कथंभूते द्रुहिणद्विजकुलकोलाहले। सहचरीरतिरसिकसारसरसितसरले सहचरी सारसी तस्या रतौ सुरते रसिकः सानुरागो योऽसौ सारसः विलीनाङ्गो दीर्घजङ्घस्तस्य रसितेन शब्दितेन सरलोऽकुटिलस्तस्मिन्। पुनः कथंभूते द्रुहिणद्विजकुलकोलाहले। क्रीडाकृतार्थकुररकामिनीव्याहारवहले क्रीडया कृतार्था सुरतेन कृतकृत्या या कुररकामिनी उत्क्रोशभार्या कङ्कणहारिका तस्या व्याहारेण शब्देन वहलः प्रचुरस्तस्मिन्। पुनः कथंभूते द्रुहिणद्विजकुलकोलाहले। वीचिकाचयप्रचारप्रारम्भविजृम्भितकुक्कुभकुहकुहानादशब्दाले वीचिकानां लहरीणां चयेषु समूहेषु योऽसौ प्रचारः संचरणं तस्य प्रारम्भेण उद्यमेन विजृम्भितः प्रभृतो योऽसौ कुक्कुभकुहकुहानादो जलकाकशब्दविशेषध्वनिस्तेन शब्दाले मुखरे। पुनः कथंभूते द्रुहिणद्विजकुलकोलाहले। प्रमदवनानोकहकुहरकुलायनिलीनशुकसारिकाशावशब्दासराले प्रमदवनानां नृपोद्यानानां संबन्धिनो ये अनोकहा वृक्षास्तेषां कुहरेषु मध्येषु ये कुलाया नीडास्तेषु निलीना उपविष्टाः शुकाश्च कीराः सारिकाश्च पीतपादास्तासां शावा अपत्यानि तेषां शब्दैः कूजितैरसरालः प्रचुरतरस्तस्मिन्। पुनः कथंभूते द्रुहिणद्विजकुलकोलाहले। सुरासुरसमरसंप्लवे इव सुराश्च असुराश्च सुरासुरा देवदैत्याः तेषां समरस्य संग्रामस्य संप्लवः संगमस्तस्मिन् इव। पुनः कथंभूते द्रुहिणद्विजकुलकोलाहले। आदिपुरुषोत्पत्तिदिवसे इव आदिपुरुषस्य श्रीवृषभनाथस्य उत्पत्तिदिवसो जन्मदिनं तस्मिन्निव। पुनः कथंभूते द्रुहिणद्विजकुलकोलाहले। अमृतमथनकाले इव अमृतमथनं देवदानवैः क्षीरसागरमथनं तस्य कालोऽवसरः अमृतमथनकालस्तस्मिन्निव। पुनः कथंभूते द्रुहिणद्विजकुलकोलाहले। सेतुबन्धप्रबन्धे इव सेतुबन्धो रामलक्ष्मणहनुमत्सुग्रीवादिभिः कृतो योऽसौ समुद्रतरणोपायस्तस्य प्रबन्धः प्रघट्टकः सेतुबन्धप्रबन्धस्तस्मिन्निव। पुनः कथंभूते द्रुहिणद्विजकुलकोलाहले। प्रथमयुगावतारपुण्याहे इव प्रथमयुगावतार आदिनाथराज्योपदेशनकालस्तस्मिन् यत्पुण्याहं पाठः प्रथमयुगावतारपुण्याहं तस्मिन्निव। तथा चोक्तम्—'आषाढमासवहुलप्रतिपद्दिवसे कृती। कृत्वा कृतयुगारम्भं प्राजापत्यमुपेयिवान्॥' पुनः केषु सत्सु। पलिताङ्कुरद-

चरणरणन्मणिमञ्जीरस्वरसंकराव्यक्तालप्तिव्यतिकरेषु राजभवनभूमिषु भोगावलीपाठकेषु, त्रोटिकोटिविघटितपुटनिवेशैर्मृणालिनीपलाशैर्निशानिरशनविवशकायं बालिशनिकायं स्मरसंमर्दच्छर्दितौधस्यैः पयोधरास्यैर्बालवतीष्वभिसारिकास्विवाश्वासयन्तीषु मरालीषु, करेणुकरोल्लसितसल्लकीपल्लवापनीयमानपरागोपदेहे नागनिवहे, तत्क्षणक्षरत्क्षीरप्रतीक्ष्यमाणातिथिषु व्रजलोकवीथिषु, आगामिजगत्सर्वसंपादनाकुलकर्मणि, प्रजापाल-

---

र्शनमभूत् । राजभवनभूमिषु नृपावासस्थानकेषु भोगावलीपाठकेषु गीतकारशब्देषु सत्सु । कथंभूतेषु भोगावलीपाठकेषु । निजनियोगव्यग्राङ्गनासंचरणरणन्मणिमञ्जीरस्वरसंकराव्यक्तालप्तिव्यतिकरेषु निजेषु स्वकीयेषु नियोगेषु अधिकारेषु व्यग्राः व्यावृत्ता या अङ्गनाः कमनीयकामिन्यस्तासां संचरणैः प्रचारैः रणन्तः शब्दायमाना ये मणिमञ्जीराः पञ्चविधमाणिक्यजटितनूपुरास्तेषां स्वराणां शब्दानां योऽसौ संकरो व्यामिश्रता तेन अव्यक्तः अस्फुट आलप्तिव्यतिकरो नादप्रघट्टको येषु भोगावलीपाठकेषु ते तथोक्तास्तेषु । पुनश्च कासु सतीषु पलिताङ्कुरदर्शनमभूत् । मरालीषु सतीषु । किं कुर्वतीषु सतीषु । बालिशनिकायं अपत्यसमूहं मृणालिनीपलाशैः पद्मिनीनवपल्लवैः कृत्वा आश्वासयन्तीषु । कथंभूतैर्मृणालिनीपलाशैः त्रोटिकोटिविघटितपुटनिवेशैः त्रोटीनां चञ्चूनां कोटिभिरग्रैः कृत्वा विघटितस्त्रोटितः पुटनिवेशः संलग्नप्रदेशो येषां मृणालिनीपलाशानां तानि तैः । कथंभूतं बालिशनिकायम् । निशायां निरशनेन निर्भोजनेन विवशः कायो यस्य स निशानिरशनविवशकायस्तम् । कथंभूतासु मरालीषु । बालवतीषु शिशुमतीषु अभिसारिकास्विव कान्तसंकेतगतासु स्त्रीष्विव । उक्तं च—'कान्तार्थिनी तु या याति संकेतं साभिसारिका' । एवंविधलक्षणासु बालवतीष्वभिसारिकास्विव यथा बालवत्योऽभिसारिकाः पयोधरास्यैः स्तनाग्रैर्बालिशनिकायं बालसमूहं प्रभातकाले आश्वासयन्ति । कथंभूतैः पयोधरास्यैः । स्मरस्य कन्दर्पस्य संमर्देन संमेलनेन पीडनेन छर्दितमुद्वान्तं औधस्यं दुग्धं यैः पयोधरास्यैस्तानि तथा तैः । पुनश्च कस्मिन्सति पलिताङ्कुरदर्शनमभूत् । नागनिवहे हस्तियूथे सति । कथंभूते नागनिवहे । करेणुकरोल्लसितसल्लकीपल्लवापनीयमानपरागोपदेहे करेणूनां हस्तिनीनां करैः शुण्डादण्डैरुल्लसितानि त्रोटितानि यानि सल्लकीपल्लवानि वायुवृक्षप्रवालानि तैरपनीयमानः स्फेट्यमानः परागोपदेहो धूल्युपयोगो रेणुसमूहो यस्य नागनिवहस्य स तथोक्तस्तस्मिन् । पुनश्च कासु सतीषु पलिताङ्कुरदर्शनमभूत् । व्रजलोकवीथिषु सतीषु व्रजो गोकुलं तस्य लोकाः गोकुलिकास्तेषां वीथयो मार्गास्तासु व्रजलोकवीथिषु सतीषु । कथंभूतासु । तत्क्षणक्षरत्क्षीरप्रतीक्ष्यमाणातिथिषु तत्कालक्षरत्क्षीरेण प्रस्रवद्दुग्धेन प्रतीक्ष्यमाणाः पूज्यमाना अतिथयः प्राघूर्णिका यासु तास्तथा तासु । पुनश्च कस्मिन्सति पलिताङ्कुरदर्शनमभूत् । ब्रह्मणि धातरि सति । ब्रह्मणि कथंभूते सति । आगामिजगतः भविष्यल्लोकस्य सर्वस्य समग्रस्य संपादने

नोपायनिरतान्तःकरणे नारायणे, प्रलयकालकलासंभालनार्दिनि कपर्दिनि, अनेकमखाह्वानगमनमूढमतिकक्षे सहस्राक्षे, होमाजिह्मब्राह्मणसमिध्यमानमहसि हुतान्धसि, त्रिविष्टपव्यापारपरायणावस्थे मध्यस्थे, क्षपाक्षयक्षीणाकाङ्क्षवक्षसि रक्षसि, नूत्नरत्नयत्नाहितमनोरथे पाथोनिधिनाथे, प्रसंख्यानोन्मुखवैखानसमनोविनीयमानात्मनि मातरिश्वनि, वनीपकसंतर्पणोद्घाटितकोशे धनेशे, योगनिद्रोद्रेकमुद्रिताक्षिपक्षे विशालाक्षे, धरोद्धरणाधीनचे-

---

आकुले किंकर्तव्यतामूढं कर्म व्यापारो यस्य स तथा तस्मिन् आगामिजगत्सर्वसंपादनाकुलकर्मणि। पुनश्च कस्मिन्सति। नारायणे सति। कथंभूते नारायणे। प्रजापालनोपायनिरतान्तःकरणे प्रजापालनस्य ब्रह्मणा सृष्टसृष्टिरक्षणस्य उपायोऽभ्युपाय उद्यमस्तस्मिन् निरतं तत्परं अन्तःकरणं मनो यस्य स तथा तस्मिन्। पुनश्च कस्मिन्सति। कपर्दिनि रुद्रे सति। कथंभूते कपर्दिनि सति। प्रलयकालकलासंभालनार्दिनि प्रलयकालकलायाः लोकसंहरणवेलायाः संभालनं स्मरणं अर्दति गच्छति इत्येवंशीलस्तस्मिन्। पुनश्च कस्मिन्सति। सहस्राक्षे देवेन्द्रे सति। कथंभूते सति। अनेकमखाह्वानगमनमूढमतिकक्षे अनेके बहवो मखा यज्ञास्तेष्वाह्वानं त्रिनिकायानां ज्योतिर्व्यन्तरकल्पवासिनां भवनवासिभिरामन्त्रणं गमनं च स्वयं तत्र गमनं स्वयं पञ्चकल्याणेषु गमनं तस्मिन् मूढो व्याकुलो मतिकक्षो बुद्धिलता यस्य स तथा तस्मिन्। पुनश्च कस्मिन्सति। हुतान्धसि अग्नौ सति। कथंभूते सति। होमाजिह्मब्राह्मणसमिध्यमानमहसि होमोऽग्नावाहुतीनां दानं तस्मिन् अजिह्माः प्रगुणा ये ब्राह्मणाः द्विजन्मानस्तैः समिध्यमानं प्रज्वाल्यमानं दीप्यमानं महस्तेजो यस्य हुतान्धसः स तथा तस्मिन् होमाजिह्मब्राह्मणसमिध्यमानमहसि। पुनश्च कस्मिन्सति। मध्यस्थे यमे सति। कथंभूते सति। त्रिविष्टपव्यापारपरायणावस्थे त्रयाणां विष्टपानां लोकानां व्यापारः प्रवर्तनं तस्मिन् परायणा तत्परा अवस्था व्यवस्थितिर्यस्य स तथा तस्मिन्। पुनश्च कस्मिन्सति। रक्षसि सति। कथंभूते सति। क्षपाक्षयक्षीणाकाङ्क्षवक्षसि क्षपायाः रात्रेः क्षयेण दिवसप्रारम्भेण क्षीणाकाङ्क्षं निराशं वक्षो हृदयं यस्य तत्तथोक्तं तस्मिन्। पुनश्च कस्मिन्सति। पाथोनिधिनाथे सति। कथंभूते सति। नूत्नरत्नयत्नाहितमनोरथे ........................ मनोरथ इच्छा येन स तथा तस्मिन्। पुनश्च कस्मिन्सति। मातरिश्वनि वाते सति। कथंभूते। प्रसंख्यानोन्मुखवैखानसमनोविनीयमानात्मनि प्रसंख्याने ध्याने जपे वा उन्मुखास्तत्परा ये वैखानसास्तपस्विनस्तेषां मनःसु विनीयमानः संकोच्यमान आत्मा स्वरूपं यस्य मातरिश्वनः स तथोक्तस्तस्मिन् सति। पुनश्च कस्मिन्सति। धनेशे कुबेरे सति। कथंभूते सति। वनीपकसंतर्पणोद्घाटितकोशे वनीपकानां याचकानां संतर्पणाय प्रीणनाय उद्घाटितः प्रकटीकृतः कोशो भाण्डागारो येन स तथोक्तस्तस्मिन्। पुनश्च कस्मिन्सति। विशालाक्षे रुद्रे सति। कथंभूते सति विशालाक्षे। योगनिद्रोद्रेकमुद्रिताक्षिपक्षे योगनिद्राया उद्रेकेण आधिक्येन मुद्रिता मी-

तसि चक्षुःश्रवसि, परस्पराचरितसमय इव स्वकीयक्रियाकाण्डकण्डुलहृदये भुवनत्रये, पुनः खरदण्डिनीखण्डेषु चक्रवाकविकिरपरिषदि वन्धूकजीवेषु विद्रुमारामराजिषु पारापतपतङ्गचरणेषु सिन्दूरितशिरःपिण्डशुण्डालघटायां च विभक्तारुणिमनीवार्यमणि संजाते सूर्यमणिमुकुरुन्दसुन्दरे,

'दुःस्वप्नोपशमाय दुर्जनसमालोकागतैनश्छिदे
　दुश्चिन्ताहतये दुरीहितभवद्विघ्नव्युदासाय च।
भूयः कल्पितदक्षिणैः कृतजयाघोषोत्सवं ब्राह्मणै-
　राज्यावीक्षणमेतदस्तु भवतः सर्वेप्सितावाप्तये ॥ ९६ ॥

---

लिता अक्षिपक्ष्मा लोचनपक्ष्माणि येन स तथोक्तस्तस्मिन्। पुनश्च कस्मिन्सति। चक्षुः-श्रवसि शेषनागे। कथंभूते सति। धरोद्धरणाधीनचेतसि धरायाः पृथिव्या उद्धरणे उच्चलने अधीनं तत्परं चेतो मनो यस्य स तथोक्तस्तस्मिन्। पुनश्च कस्मिन्सति पलिताङ्कुदर्शनमभूत्। भुवनत्रये त्रैलोक्ये सति। कथंभूते भुवनत्रये। स्वकीयक्रियाकाण्डकण्डुलहृदये स्वकीयक्रियाकाण्डेषु निजाचारसमूहेषु कण्डुलं उद्यतं हृदयं मनो यस्य स तथा तस्मिन्। पुनः कथंभूते भुवनत्रये। उत्प्रेक्ष्यते—परस्पराचरितसमय इव [1] ................ ................।पुनश्च कस्मिन्सति। पुनर् अर्यमणि श्रीसूर्ये सूर्यमणिमुकुरुन्दसुन्दरे अर्ककान्तरत्नमुकुरवद्दर्पणवत् सुन्दरे मनोहरे संजाते सति। उज्ज्वलतां संप्राप्ते सतीत्यर्थः। पुनः कथंभूते अर्यमणि। उत्प्रेक्ष्यते—विभक्तारुणिमनि विभक्तो विभागीकृत्य दत्तो अरुणिमा रक्तत्वं येन स तथा तस्मिन् विभक्तारुणिमनि इव। केषु पदार्थेषु अरुणिमा विभक्त इत्याह—खरदण्डिनीखण्डेषु पद्मिनीवनेषु रक्तकमलेषु। तथा चक्रवाकविकिरपरिषदि चक्रवाकपक्षिणां समूहे। तथा वन्धूकजीवेषु मध्याह्नपक्षेषु। तथा विद्रुमारामराजिषु प्रवालवनश्रेणिषु। तथा पारापतपतङ्गचरणेषु कलरवपक्षिपातेषु। तथा सिन्दूरितशिरःपिण्डशुण्डालघटायां च। विभ्रम इति संवन्धः। तस्यः यशोर्घमहाराजस्य किं कुर्वतः पलिताङ्कुरदर्शनमभूत्। इति अमुना प्रकारेण बन्दिवृन्दोक्तसूक्तीः स्तुतिपाठकसमूहभणितसुवचनानि समाकर्णयतः संशृण्वतः। कीदृश्यः सूक्तीः समाकर्णयतः। दुःस्वप्नेत्यादि। हे राजन्, एतत्प्रत्यक्षीभूतं आज्यावेक्षणं भवतस्तव सर्वेप्सितावाप्तये अस्तु निखिलाभीष्टवस्तुप्राप्तये भवतु। आज्यावेक्षणं कथं भवति। ब्राह्मणैर्विप्रैः कृतजयाघोषोत्सवं यथा भवत्येवं कृतो विहितो जयशब्दस्य आघोषो ध्वनिस्तस्योत्सव आनन्दो यत्र आज्यावेक्षणकर्मणि कृतजयाघोषोत्सवम्। कथंभूतैर्ब्राह्मणैः। भूयःकल्पितदक्षिणैः भूयसी प्रचुरतरा कल्पिता समर्थिता दत्ता दक्षिणा हिरण्यादिदानं येभ्यस्ते तथा तैः। आज्यावेक्षणं किमर्थं क्रियते इत्याह—दुःस्वप्नोपशमाय दुष्टस्वप्नप्रशमनाय।

---

१. त्रुटिचिह्नं पुस्तकत्रयेऽप्येवमेव.

यो दर्शयन्निजतनौ भुवनं समस्तं
जातः समो भगवता मधुसूदनेन।
लीलाविलासवसतिश्च मृगेक्षणानां
क्षोणीश मङ्गलकरो मुकुरः स तेऽस्तु' ॥ ९७ ॥

इति बन्दिवृन्दोक्तसूक्तीः समाकर्णयतो विजयोर्जितराज्यस्याज्यावेक्षणं दर्पणनिरीक्षणं च कुर्वतः तस्य यशोर्घमहाराजस्य पलिताङ्कुरदर्शनमभूत्। तं च हस्तेनावलम्ब्यालोक्य च स मे तातः किलैवमचिन्तयत्—

'मतिविभवविनाशोत्पातकेतुप्रतानः
सुरतसुखसरोजोच्छेदनीहारसारः।
मदनमदविनोदानन्दकन्दावमर्द-
प्रपतदशनिदण्डाडम्बरः केश एषः ॥ ९८ ॥

---

तथा दुर्जनसमालोकागतैनश्छिदे दुर्जनानां पापिष्ठलोकानां समालोकेन दर्शनेन आगतमुपढौकितं यत् एनः पापं तस्य छित् छेदनं तस्यै दुर्जनसमालोकागतैनश्छिदे। ('सत्सूद्विषद्रुहयुजविदभिदश्छिदजिनीराजामुपसर्गेऽपि' इत्यनेन किं प्रतथा।) दुश्चिन्ता परधनपरकलत्रादिग्रहणचिन्तनं दुश्चिन्ता तस्या हतिर्विनाशः तस्यै दुश्चिन्ताहतये। तथा दुरीहितभवद्विघ्नव्युदासाय च दुरीहितेन दुश्चेष्टितेन भवन्तः संजायमाना ये विघ्ना अन्तरायास्तेषां व्युदासो विनाशस्तस्मै दुरीहितभवद्विघ्नव्युदासाय। समुच्चयालंकारः ॥

**यो दर्शयन्नित्यादि।** हे क्षोणीश हे पृथ्वीपते राजाधिराज, स जगत्प्रसिद्धो मुकुरो दर्पणः ते तव मङ्गलकरः श्रेयस्करो भवतु। स कः। यो मुकुरो भगवता परमेश्वरेण मधुसूदनेन जरासंधवैरिणा नारायणेन समः सदृशो जातः। पुनः कथंभूतो मुकुरः। मृगेक्षणानां मृगलोचनानां स्त्रीणां लीलाविलासवसतिः लीलानां विदग्धचेष्टानां विलासवसतिः क्रीडामन्दिरं लीलाविलासवसतिः। उक्तं च—'हेलाविलासविब्बोकलीलाललितविभ्रमाः। स्त्रीणां शृङ्गारचेष्टाः स्युर्हावपर्यायवाचकाः ॥' समुच्चयालंकारः ॥

तं चेत्यादि। तं पलिताङ्कुरं हस्तेनावलम्ब्य करे कृत्वा आलोक्य च दृष्ट्वा च स जगत्प्रसिद्धो मे मम यशोधरस्य तातः पिता किलेति लोकोक्तौ। एवं वक्ष्यमाणलक्षणोपलक्षितप्रकारेण अचिन्तयत् विचारयामास। एवं कथमिति चेत्—**मतीत्यादि।** एष प्रत्यक्षीभूतः पलितः केशः कुन्तलः। कथंभूतः। मतिविभवविनाशोत्पातकेतुप्रतानः मतिरेव विभवो लक्ष्मीरिष्टभोगदायकत्वात् तस्य विनाशः क्षयस्तदर्थमुत्पातकेतुप्रतानो नवमग्रहोदयसदृशः। पुनः कथंभूत एष केशः। सुरतसुखसरोजोच्छेदनीहारसारः सुरतसुखं स्त्रीसंभोगसौख्यं तदेव सरोजं कमलं पुण्यसूर्योदये विकाशित्वात् तस्योच्छेदो

करणकरिणां दर्पोद्रेकप्रदारणवेणवो
हृदयहरिणस्येहाध्वंसप्रसाधनवागुराः ।
मनसिजमनोभङ्गासङ्गे चिताभसितागमाः
शुचिरुचिवशाः केशाः पुंसां यमोत्सवकेतवः ॥ ९९ ॥

कुन्दावदातैर्दयितावलोकितैर्दुग्धद्युतैः स्त्रीदशनच्छदामृतैः ।
सदा सहावासरसार्थने जने किमत्र चित्रं यदयं शुचिः कचः ॥ १०० ॥

जरावल्लीतन्तुर्मनसिजचिताचक्रभसितं
यमव्यालक्रीडासरणिसलिलं केशमिषतः ।

---

विनाशस्तदर्थं नीहारसारः प्रालेयसमासः । पुनः कथंभूतः । मदनमदविनोदानन्दकन्दावमर्दप्रपतदशनिदण्डाडम्बरः मदनस्य कन्दर्पस्य योऽसौ मदो दर्पस्तेन(स्तस्य) विनोदः स्त्रीरमणकुतूहलं तस्माद्योऽसावानन्दः सुखं स एव कन्दो मूलं तस्यावमर्दश्चूर्णीकरणं तदर्थं प्रपतदशनिदण्डाडम्बरः प्रपततः आगच्छतो अशनिदण्डस्य विद्युद्दण्डस्य आडम्बरः शोभा यस्येति स तथोक्तः । रूपकालंकारः ॥

**करणेत्यादि** । शुचिरुचिवशाश्चन्द्रवन्निर्मलाः पुंसां पुरुषाणां केशाः कुन्तलाः । कथंभूताः । करणकरिणामिन्द्रियगजानां दर्पोद्रेकप्रदारणवेणवः दर्पस्य मदनस्य उद्रेक आधिक्यं तस्य प्रदारणे विनाशने वेणवो वंशवृक्षाः । पुनः कथंभूताः केशाः । हृदयहरिणस्य मनोमृगस्य ईहाध्वंसप्रसाधने चेष्टाविनाशकरणे वागुरा बन्धनपाशाः । पुनः कथंभूताः केशाः । मनसिजमनोभङ्गासङ्गे कन्दर्पेच्छाभङ्गकरणे चिताभसितागमाः भस्मभूताः । पुनः कथंभूताः केशाः । यमोत्सवकेतवः यमस्य कृतान्तस्य उत्सवकेतवो महोत्सवध्वजाः । रूपकालंकारः ॥

**कुन्दावदातैरित्यादि** । दयितावलोकितैः स्त्रीणां कटाक्षविक्षेपावलोकितैः सह सदा सर्वकालं सहावासरसार्थने सहवासानुरागप्रार्थके जने लोके यतश्चायं कचः केशः शुचिरुज्ज्वलो वर्तते तदत्र संसारे किं चित्रं किमाश्चर्यम् । अपि तु न किमपि आश्चर्यम् शुचित्वहेतुगर्भितं विशेषणमाह—कथंभूतैर्दयितावलोकितैः । कुन्दावदातैरट्टहासकुसुमवदुज्ज्वलैः । तथा स्त्रीदशनच्छदामृतैः स्त्रीणां अधरामृतैः सह सदा सर्वकालं सहावासरसार्थने जने यदयं कचः शुचिर्वर्तते तदत्र चित्रं किम् । न किमपि चित्रम् । तद्धेतुगर्भितं विशेषणमाह—कथंभूतैः स्त्रीदशनच्छदामृतैः । दुग्धद्युतैर्गोक्षीरवदुज्ज्वलैः । हेत्वाक्षेपालंकारः ॥

**जरावल्लीतन्तुरित्यादि** । इदं पलितं केशमिषतः पलितकेशव्याजेन जरावल्लीतन्तुर्वर्तते । जरा वार्धक्यं सैव वल्ली दुःखफलदायिकत्वात् तस्यास्तन्तुस्तन्तुसदृशः सूत्रसदृशः । इदं पमितकेशमिषतः पलितकेशमिषात् मनसिजचिताचक्रभसितं मनसिजस्य परेतक-

महामोहे पुंसां विषतरुजटाजालमलघु
प्रियालोकप्रीतिस्थितिविरतये पत्रकमिदम् ॥ १०१ ॥

तारुण्यकाले मददुर्दिनैर्या सितेतरैः स्त्रीनयनैः प्रजाता।
कृष्णच्छविः साद्य शिरोरुहश्रीर्जरारजक्या क्रियतेऽवदाता ॥ १०२ ॥

अपि च कामिनीजनविलासविद्रुत्सारणेषु चण्डालदण्डा इव, प्रलयप्रारम्भवार्ताकर्णनेषु मृत्युदूतागमनमार्गा इव, शृङ्गाररसप्रसरनिवारणेषु परागराजिसमागमा इव, स्वान्तस्फुरितखण्डनेषु परशुधारावपाता इव, करणग्रामविगमेषु धूमकेतूद्गमा इव, वपुर्लावण्योल्लेखनेषु स्फटिकशला-

---

न्दर्पस्य या चिता मृतकाग्निस्तस्याश्चक्रं मण्डलं तस्य भसितं भस्मसदृशम्। पुनश्च इदं पलितकेशमिषतः यमव्यालक्रीडासरणिसलिलं यमो मृत्युः स एव व्यालो दुष्टगजः सर्वलोकविध्वंसकत्वात् तस्य क्रीडासरणिः केलिकृत्रिमनदी तस्याः सलिलमुज्ज्वलमुदकम्। पुनः कथंभूतमिदं पलितम्। महामोहे महा अचेतनत्वोत्पादने पुंसां पुरुषाणां विषतरुजटाजालं विषतरोर्विषवृक्षस्य जटाजालं मूलसमूहः। कथंभूतं विषतरुजटाजालम्। अलघु महत्। अपरं कथंभूतमिदं पलितम्। प्रियालोकप्रीतिस्थितिविरतये पत्रकम्। प्रियाणां स्त्रीणां आलोको निरीक्षणं तस्य प्रीतिः प्रेम तस्याः स्थितिर्व्यवस्था तस्याः विरतिर्विनाशः प्रियालोकप्रीतिस्थितिविरतिस्तस्यै पत्रकं करोतकरपत्रं लेखपत्रं वा। रूपकमिदम्॥

तारुण्यकाले इत्यादि। या शिरोरुहश्रीः केशलक्ष्मीस्तारुण्यकाले यौवनकाले स्त्रीनयनैः कृष्णच्छविः प्रजाता कृष्णकान्तिर्बभूव। कथंभूतैः स्त्रीनयनैः। मददुर्दिनैः मदतिमिरैः। कथंभूतैः। सितेतरैः कृष्णवर्णैः। सा शिरोरुहश्रीः अद्य इदानीं जरारजक्या धोवणिक्या वार्धक्यपरिचारकया परिवर्तिकया अवदाता उज्ज्वला क्रियते विधीयते। हेत्वलंकारः॥

अपि च तथा च अमी प्रत्यक्षीभूताः मनुष्याणां मानवानां पलिताङ्कुराः कृश(शुक्ल)-केशनवोद्भिदः। कथंभूताः। कामिनीजनविलासविद्रुत्सारणेषु स्त्रीसमूहविलासविष्ठाविदूरीकरणेषु चण्डालदण्डा इव। चण्डालानां दण्डाः पशुपर्शुकास्थीनि विद्रुत्सर्जनकानि भवन्ति। कथंभूताः पलिताङ्कुराः। प्रलयप्रारम्भवार्ताकर्णनेषु मृत्युदूतागमनमार्गा इव प्रलयो मरणकालस्तस्य प्रारम्भो राभस्यं तस्य वार्ता वृत्तान्तं तस्या आकर्णनानि श्रवणानि तेषु मृत्योर्यमस्य दूतानामागमनमार्गा इव आयानस्य पन्थान इव। कथंभूताः पलिताङ्कुराः। शृङ्गाररसप्रसरनिवारणेषु परागराजिसमागमा इव शृङ्गाररसस्य शृङ्गाराम्बुजलस्य प्रसरो व्याप्तिस्तस्य निवारणेषु निषेधेषु परागराजेर्धूलीसमूहस्य समागमा आगमनानीव। पुनः स्वान्तस्फुरितखण्डनेषु परशुधारावपाता इव स्वान्तं मनस्तस्य स्फुरितं चेष्टितं तस्य खण्डनेषु छेदनेषु कुठारधाराणां पातानीव। पुनः करणग्रामविगमेषु धूमकेतूद्गमा इव करणग्रा-

कावतारा इव, आगामिमतिमहामोहाविर्भावेषु विषतरुप्रसवपरिचया इव, मनःसरसि च मनसिजद्विजानवसरसूचनेषु कीकसाभोगा इव, अमी मनुष्याणां पलिताङ्कुराः ।

अपि च ।

अज्ञस्य जन्तोः पलिताङ्कुरेक्षणं भवेन्मनोभङ्गकृते न धीमतः ।
संसारतृष्णाभुजगीविजृम्भणप्रशान्तिसीमाश्चिकुरा हि पाण्डुराः ॥१०३॥

मुक्तिश्रियः प्रणयवीक्षणजालमार्गाः
पुंसां चतुर्थपुरुषार्थतरुप्ररोहाः ।
निःश्रेयसामृतरसागमनाग्रदूताः
शुक्लाः कचा ननु तपश्चरणोपदेशाः ॥ १०४ ॥

---

माणां इन्द्रियसंवसथानां विगमेषु उद्वासेषु अग्निप्रादुर्भावा इव । पुनः वपुर्लावण्योल्लेखनेषु स्फटिकशलाकावतारा इव वपुषः शरीरस्य लावण्यं कान्तिस्तस्योल्लेखनेषु उत्खननेषु कर्पूरपारीणां संगमा इव । पुनः आगामिमतिमहामोहाविर्भावेषु विषतरुप्रसवपरिचया इव आगमिष्यतीति आगामि मतेर्बुद्धेर्महान् गुरुतरो योऽसौ मोहो वैचित्यं तस्य आविर्भावेषु प्रादुर्भावेषु विषवृक्षस्य पुष्पसंगमा इव । पुनः मनःसरसि च मनसिजद्विजानवसरसूचनेषु कीकसाभोगा इव मनःसरसि हृदयसरोवरे मनसिजद्विजस्य कन्दर्पब्राह्मणस्य कामकर्मचाण्डालस्य अनवसरसूचनेषु अयोग्यजल(काल)कथनेषु कीकसाभोगा इव अस्थिकीलकविस्तारा इव । उपमा समुच्चयालंकारः ॥

अपि च अथवा अर्थान्तरेण पलिताङ्कुरान्वर्णयत्याचार्यः—**अज्ञस्येत्यादि** । पाण्डुराश्चिकुराः पलिताः केशा अज्ञस्य बहिरात्मनो जन्तोर्जीवस्य पलिताङ्कुरेक्षणं शुक्लकेशाङ्कुरदर्शनं मनोभङ्गकृते चित्तभङ्गकार्याय भवेत् संजायेत, न धीमतो बुद्धिमतस्तत्त्वज्ञानिनो मनोभङ्गकृते न भवति । स तत्त्वज्ञानी एवं चिन्तयति—पाण्डुराः चिकुराः संसारतृष्णाभुजगीविजृम्भणप्रशान्तिसीमाः संसारस्य तृष्णा इन्द्रियविषयाभिलाषो लोभ आशा सैव भुजगी कालसर्पिणी अन्तर्दुष्टत्वात् तस्या विजृम्भणं प्रसरस्तस्य प्रशान्तिसीमाः सीमानो शान्तिमर्यादाः । रूपकालंकारः ॥

**मुक्तिश्रिय इत्यादि** । पुंसां पुरुषाणां शुक्लाः कचाः पाण्डुराः केशाः ननु निश्चयेन मुक्तिश्रियो मुक्तिलक्ष्म्याः प्रणयवीक्षणे स्नेहावलोकने जालमार्गाः गवाक्षछिद्राणि । पुनः कथंभूताः । चतुर्थपुरुषार्थतरुप्ररोहाः चतुर्थस्तुरीयः पुरुषार्थो मोक्षः स एव तरुर्वृक्षः सुखफलच्छायादायकत्वात् तस्य प्ररोहाः अङ्कुराः । पुनः कथंभूताः । निःश्रेयसामृतरसागम-

तदनु संजातनिर्वेदसंवेदनहृदयः सविधतरनिःश्रेयसाभ्युदयः सच्चरितलोकलोचनचन्द्रमाः पुनरिमाः किल शीलसाराः ससार संसारसागरोत्तरणपोतपात्रदशा द्वादशाप्यनुप्रेक्षाः ।

तथा हि ।

उत्सृज्य जीवितजलं बहिरन्तरेते
रिक्ता विशन्ति मरुतो जलयन्त्रकल्पाः ।
एकोद्यमं जरति यूनि महत्यणौ च
सर्वंकषः पुनरयं यतते कृतान्तः ॥ १०५ ॥

---

नाग्रदूताः निःश्रेयसं निर्वाणं तदेव अमृतरसो अमृतधाराप्रवाहस्तस्य आगमनस्य अग्रदूता प्रथमसंदेशहराः । पुनः कथंभूताः । तपश्चरणोपदेशाः दीक्षाग्रहणशास्त्राणि ॥

तदनु तदनन्तरं पलिताङ्कुरदर्शनादनन्तरं स यशोधर्महाराजः पुनः पुनरपि इमा वक्ष्यमाणलक्षणोपलक्षिताः किल लोकोक्तौ वा द्वादशापि द्विषडपि अनुप्रेक्षा भावनाः ससार चिन्तयामास । भूपः कथंभूतः । संजातनिर्वेदसंवेदनहृदयः संजात उत्पन्नो योऽसौ निर्वेदः संसारशरीरभोगत्रिविधवैराग्यं संवेदनं धर्मफलं च सानुरागता । अथवा निर्वेदस्य संवेदनं विचारणं हृदये मनसि यस्य स संजातनिर्वेदसंवेदनहृदयः । पुनः कथंभूतः । सविधतरनिःश्रेयसाभ्युदयः सविधतरः अतिनिकटवर्ती निःश्रेयसस्य निर्वाणस्य अभ्युदयः परिपाको यस्य स तथोक्तः । पुनः कथंभूतः । सच्चरितलोकलोचनचन्द्रमाः सच्चरितलोकानां सदाचारमनुष्याणां महामुनीनां च लोचनचन्द्रमाः आनन्दकारकः । कथंभूता अनुप्रेक्षाः । शीलसाराः शीलेषु अष्टादशशीलसहस्रेषु सर्वयत्याचारेषु साराः सारभूताः । पुनः कथंभूता अनुप्रेक्षाः । संसारसागरोत्तरणपोतपात्रदशाः संसारश्चतुर्गतिलक्षणः स एव सागरः समुद्रः पर्यन्तरहितत्वात् तस्योत्तरणे पारप्रापणे पारगमने पोतपात्रस्य प्रवहणपात्रस्य दशाः घटिकाप्रायाः । रूपकालंकारः ॥

तथाहि तदेव निरूपयति—उत्सृज्येत्यादि । एते स्वसंवेदनप्रत्यक्षीभूता मरुत उच्छ्वासलक्षणा वायवो जीवितजलमायुस्तोयं बहिरुत्सृज्य बाह्ये मुक्त्वा रिक्ताः सन्तः अन्तर्मध्ये विशन्ति संचरन्ति । कथंभूताः मरुतः । जलयन्त्रकल्पाः अरहट्ट(घट्ट)घटीमालासदृशाः । अयं प्रत्यक्षीभूतः कृतान्तो यमः जरति वृद्धजीवे, यूनि तरुणपुरुषे, महति नृपादौ गुरुपुरुषे, अणौ च दरिद्रे लघुपुरुषे, एकोद्यमं यथा भवत्येवं यतते विनाशयितुं यत्नं करोति । कथंभूतः कृतान्तः । सर्वंकषः पुनः दावानलसदृशः । पुनःशब्द इवार्थे वर्तते । उपमालंकारः ॥

लावण्ययौवनमनोहरणीयताद्याः
कायेष्वमी यदि गुणाश्चिरमावसन्ति।
सन्तो न जातु रमणीरमणीयसारं
संसारमेनमवधीरयितुं यतन्ते ॥ १०६ ॥
उच्चैःपदं नयति जन्तुमधः पुनस्तं
वात्येव रेणुनिचयं चपला विभूतिः।
श्राम्यत्यतीव जनता वनितासुखाय
ताः सूतवत्करगता अपि विप्लवन्ते ॥ १०७ ॥
शूरं विनीतमिव सज्जनवत्कुलीनं
विद्यामहान्तमिव धार्मिकमुत्सृजन्ती।

---

**लावण्येत्यादि**। अमी एते लावण्ययौवनमनोहरणीयताद्याः गुणा यदि चेत् कायेषु चिरं दीर्घकालं आवसन्ति शरीरेषु तिष्ठन्ति। लावण्यं च कान्तिर्यौवनं च तारुण्यं मनोहरणीयता च आदेयमूर्तिता आद्या येषां रूपसौभाग्यादीनां गणनां ते लावण्ययौवनमनोहरणीयताद्याः। तर्हि सन्तः सत्पुरुषाः एनं प्रत्यक्षीभूतं संसारमाजवं जवभावमवधीरयितुं निराकर्तुं जातु कदाचिदपि न यतन्ते नोद्यमं कुर्वन्ति। सदाकालं संसार एव तिष्ठन्ति। कथंभूतं संसारम्। रमणीरमणीयसारं रमणीभिः कमनीयकामिनीभिः रमणीयं मनोहरं सारं मध्यो यस्य स तथा तम्। समुच्चयोपमालंकारः ॥

**उच्चैरित्यादि**। विभूतिरैश्वर्यं कथंभूतं जन्तुं प्राणिनं कर्मतापन्नमुच्चैःपदं राज्यमित्यादि द्वितीयं कर्म नयति प्रापयति। पुनः पश्चात् विभूतिस्तं जन्तुं प्राणिनमधो नीचैस्तरं स्थानं रङ्कानरकादिकं पदं नयति प्रापयति। कथंभूता विभूतिः। चपला वेगवत्तरा। कं केव। रेणुनिचयं रजःसमूहं वात्या प्रथमं उच्चैर्नयति पश्चादधः पातयति। जनता लोको वनितासुखाय उत्तमस्त्रीसंभोगसुखाय अतीव श्राम्यत्यतिशयेन खेदं करोति सेवाकृषिवाणिज्यादिकं व्यापारं करोति। उक्तं च—'वनिता जनितात्यर्थानुरागायां च योषितिः'। ता वनिताः करगता अपि नश्यन्ति सूतवत् करगता अपि मुष्टिमध्ये यत्नेन धृता अपि विप्लवन्ते नश्यन्ति। किंवत्। सूतवत् पारदरसवत्। पूर्ववृत्ते लावण्यादिकमनित्यमुक्तम्, अस्मिन्वृत्ते राज्यलक्ष्मीरनित्येति सूचितम्। उपमालंकारः ॥

**शूरमित्यादि**। इयं प्रत्यक्षीभूता लक्ष्मीर्धनं लोकं पञ्चजनं कलुषीकरोति पापीशं विदधाति। 'लोभमूलानि पापानि' इति वचनात्। लक्ष्मीः किं कुर्वती। शूरं सहस्रभटलक्षभटकोटिभटविध्वंसकं पुरुषमुत्सृजन्ती परिहरन्ती। कमिव। विनीतमिव प्रश्रयवन्तं पुमांसमिव। शूरं विनीतं च परिहरतीत्यर्थः। लक्ष्मीः पुनः किं कुर्वती। कुलीनं उत्तमकुलं

चिन्ताज्वरप्रसवभूमिरियं हि लोकं
लक्ष्मीः खलक्षणसखी कलुषीकरोति ॥ १०८ ॥
वाचि भ्रुवोर्दृशि गतावलकावलीषु
यासां मनःकुटिलतास्तटिनीतरङ्गाः ।
अन्तर्नमान्त इव दृष्टिपथे प्रयाताः
कस्ताः करोतु सरलास्तरलायताक्षीः ॥ १०९ ॥
संहारबद्धकवलस्य यमस्य लोके
कः पश्यतो हरविधेरवधिं प्रयातः ।
यस्माज्जगत्त्रयपुरीपरमेश्वरोऽपि
तत्राहितोद्यमगुणे विधुरावधानः ॥ ११० ॥

---

पुरुषं उत्सृजन्ती । किंवत् । सज्जनवत् पुरुषवत् परोपकारिणमिव । यथा कुलवन्तं परिहरति तथा परोपकारिणमपि परिहरतीत्यर्थः । लक्ष्मीः पुनः किं कुर्वती । धार्मिकमुत्सृजन्ती धार्मिकं धर्मिष्ठं उत्सृजन्ती । कथमिव । विद्यामहान्तमिव विद्यया शास्त्रेण महान् गुरुर्विद्यामहान् तं विद्यामहान्तं धार्मिकं विद्वांसं परिहरतीत्यर्थः । कथंभूता लक्ष्मीः । चिन्ताज्वरप्रसवभूमिः चिन्तया आर्त्या उत्पन्नो योऽसौ ज्वरः संतापस्तस्य प्रसवभूमिरुत्पत्तिस्थानं चिन्ताज्वरप्रसवभूमिः । पुनः कथंभूता लक्ष्मीः । खलक्षणसखी खलवत् दुर्जनवत् क्षणसखी अल्पकालस्नेहिनी । उक्तं च—'अभ्रच्छाया तृणादग्निः खले प्रीतिः स्थले जलम् । वेश्यारागः कुमित्रं च षडेते बुद्बुदोपमाः ॥' उपमालंकारः ॥

**वाचीत्यादि** । ताः जगत्प्रसिद्धास्तरलायताक्षीः तरलानि चपलानि आयतानि दीर्घाणि कर्णान्तविश्रान्तानि अक्षीणि लोचनानि यासां तास्तरलायताक्ष्यस्ताः तरलायताक्षीः कः पुमान् सरला अकुटिलाः करोतु विदधातु । अपि तु न कश्चित्करोतीत्यर्थः । ताः काः । यासां स्त्रीणां मनःकुटिलता हृदयवक्रता तटिनीतरङ्गा नदीकल्लोला दृष्टिपथे लोचनमार्गे प्रयाता आयाता लोकैः प्रत्यक्षेण दृष्टाः कस्मिन् कस्मिन् स्थाने प्रत्यक्षेण दृष्टाः वाचि वचने कुटिलताः प्रत्यक्षेण दृष्टाः भ्रुवोर्लोचनोपरिरोमराजीद्वये दृशि लोचनयुगले गतौ गमने अलकावलीषु केशश्रेणिषु कस्मात् प्रत्यक्षेण दृष्टाः अन्तश्चेतसि नमान्त इव अवकाशमलभमान इव । रूपकोपमालंकारः ॥

**संहारबद्धकवलस्येत्यादि** । कः पुमान् यमस्य कृतान्तस्य लोके संसारे अवधिं मर्यादाविनाशम् । अन्तमित्यर्थः । प्रयातः गतः । अपि तु न कश्चित्प्रयात इत्यर्थः । कथंभूतस्य यमस्य । संहारार्थं मोटयित्वा खादनार्थं बद्धकवलस्य सज्जीकृतपञ्चाङ्गुलस्य । अपरं कथंभूतस्य । पश्यतोहरविधेः पश्यतोहरस्य चौरस्य विधिरनुष्ठानं यस्य

इत्थं क्षणक्षयहुताशमुखे पतन्ति
वस्तूनि वीक्ष्य परितः सुकृती यतात्मा ।
तत्कर्म किंचिदनुसर्तुमयं यतेत
यस्मिन्नसौ नयनगोचरतां न याति ॥ १११ ॥

इत्यनित्यानुप्रेक्षा ॥ १ ॥

दत्तोदयेऽर्थनिचये हृदये स्वकार्ये
सर्वः समाहितमतिः पुरतः समास्ते ।
जाते त्वपायसमयेऽम्बुपतौ पतत्रेः
पोतादिव द्रुतवतः शरणं न तेऽस्ति ॥ ११२ ॥

---

स तथा तस्य । 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इति वचनात् षष्ठ्या अलुक्समासः । यथा वाचोयुक्तिः दिशोदण्डः पश्यतोहरः । कस्मादवधिं न प्रयातः । यस्मात्कारणात् जगत्त्रयपुरीपरमेश्वरोऽपि तीर्थंकरोऽपि तत्र यमे आहितोद्यमगुणे कृतोत्साहगुणे सति विधुरावधानः विफलप्रयत्नः । दृष्टान्तालंकार आक्षेपश्च ॥

**इत्थमित्यादि** । अयं सुकृती हेयोपादेयविवेकवान् पुरुषो यतात्मा प्रमादरहितः सन् तत्किंचित् योगिगम्यं कर्म अनुसर्तुं आश्रयितुं यतेत यत्नं कुर्वीत । तत्किम् । यस्मिन् कर्मणि सति असौ प्रत्यक्षीभूतो यमो नयनगोचरतां न याति पुनरपि नेत्राभ्यां न दृश्यते । किं कृत्वा । इत्थं पूर्वोक्तप्रकारेण वस्तूनि यौवनशरीरादीनि परितः समन्तात् क्षणक्षयहुताशमुखे पतन्ति गच्छन्ति वीक्ष्य क्षणो यमः स एव क्षयहुताशः प्रलयकालाग्निस्तस्य मुखं वक्त्रं क्षणक्षयहुताशमुखे पतन्ति वीक्ष्य दृष्ट्वा । रूपकालंकारः ॥ इत्थमनित्यानुप्रेक्षा अध्रुवानुप्रेक्षा सप्तभिर्वृत्तैः समाप्तेत्यर्थः ॥

**दत्तोदयेत्यादि** । हे जीव, सर्वः प्राणी ते तव पुरतः अग्रतः किंकरतया समाहितमतिः सावधानमनाः सन् समास्ते तिष्ठति । सेवते इत्यर्थः । कस्मिन् सति । अर्थनिचये धनसमूहे दत्तोदये सति उदयमागते सति । पुनश्च कस्मिन् सति सर्वः प्राणी पुरतः समास्ते । स्वकार्ये धनकार्ये हृदये चित्ते वर्तमाने सति । अपायसमये मृत्युकाले तु पुनर्जाते उत्पन्ने सति कोऽपि पुमान् शरणं नास्ति (अर्थिनमर्थो भवति) । ते तव कस्येव । अम्बुपतौ समुद्रे पोतात्प्रवहणात् द्रुतवतश्च्युतस्य पतत्रेरिव पक्षिण इव । यथा समुद्रे पोतात् च्युतस्य पक्षिणः कोऽपि पुमान् शरणं न भवति । स पतत्रिः समुद्रे उड्डीयमानः सन् तत्रैव समुद्रे त्रुडित्वा म्रियते इत्यर्थः । 'पतेरत्रिस्त्रैः' इति वचनात् अत्रिप्रत्ययः । उपमालंकारः ॥

बन्धुव्रजैः सुभटकोटिभिराप्तवर्गै-
र्मन्त्रास्त्रतन्त्रविधिभिः परिरक्ष्यमाणः।
जन्तुर्बलादधिबलोऽपि कृतान्तदूतै-
रानीयते यमवशाय वराक एकः॥ ११३॥
संसीदतस्तव न जातु समस्ति शास्ता
त्वत्तः परः परमवाप्तसमग्रबोधेः।
तस्यां स्थिते त्वयि यतो दुरितोपताप-
सेनेयमेव सुविधे विधुराश्रया स्यात्॥ ११४॥

इत्यशरणानुप्रेक्षा॥ २॥

कर्मार्पितं क्रमगतिः पुरुषः शरीर-
मेकं त्यजत्यपरमाभजते भवाब्धौ।

---

बन्धुव्रजैरित्यादि। जन्तुर्जीवः कृतान्तदूतैर्यमप्रणिधिभिर्यमवशाय कृतान्तस्वाधीन्याय एकः असहायो वराकस्तपस्वी आनीयते प्राप्यते। कथंभूतः सन्। परिरक्ष्यमाणः सन् प्रतिपाल्यमानः सन्। कैः। बन्धुव्रजैः कुटुम्बवर्गैः तथा सुभटकोटिभिः परिरक्ष्यमाणः सुभटानां सहस्रभटलक्षभटकोटिभटानां कोटिभिः शतलक्षैः स तथा आप्तवर्गैः पितृमातृमन्त्रिपुरोहितगुरूपाध्यायादिभिः परिरक्ष्यमाणः। पुनः कैः कृत्वा परिरक्ष्यमाणः। मन्त्रास्त्रतन्त्रविधिभिः मन्त्रयन्त्रादिविधिभिर्विधानैरस्त्रविधिभिः खड्गादिरक्षाभिस्तन्त्रविधिभिश्चतुरङ्गसैन्यवेष्टनविधानैर्जयमूलादिभिर्वा। कथंभूतो जन्तुः। बलात् सर्वस्मात् सैन्यात् अधिकबलोऽपि अधिकपराक्रमोऽपि राक्षसविशेषादधिकबलोऽपि। दीपकोपमालंकारः॥

संसीदत इत्यादि। हे सुविधे सच्चरित्रात्मन्, तव भवतः संसीदतो दुःखीभवतः त्वत्तः परः त्वदन्यः पुमान् परं निश्चयेन जातु कदाचित् शास्ता रक्षको न समस्ति न सम्यग्वर्तते। किंतु तव च शास्ता त्वमेव वर्तसे इत्यर्थः। कथंभूतात्त्वत्तः। अवाप्तसमग्रबोधेः अवाप्ता प्राप्ता समग्रा परिपूर्णा बोधिः सम्यग्दर्शनज्ञानचारित्रत्रयं येन स तथा तस्मात्। यस्मात् कारणात् तस्यां रत्नत्रयप्राप्तिलक्षणायां बोधौ त्वयि भवति स्थिते आरूढे सति इयमेव दुरितोपतापसेना पापसंतापसमूहः विधुराश्रया कष्टाश्रयामृतेव स्याद्भवेत्। रूपकालंकारः॥ इति अमुना प्रकारेण त्रिभिर्वसन्ततिलकावृत्तैरशरणानुप्रेक्षा समाप्ता॥

कर्मार्पितमित्यादि। पुरुष आत्मा एकं शरीरं कलेवरं त्यजति मुञ्चति अपरं शरीरमाभजते आश्रयति। कस्मिन्। भवाब्धौ संसारसमुद्रे। कथंभूतं शरीरम्। कर्मा-

शैलूषयोषिदिव संसृतिरेनमेषा
नाना विडम्बयति चित्रकरैः प्रपञ्चैः ॥ ११५ ॥

दैवाद्धनेष्वधिगतेषु पटुर्न कायः
काये पटौ न पुनरायुरवाप्तवित्तम् ।
इत्थं परस्परहतात्मभिरात्मधर्मै-
र्लोकं सुदुःखयति जन्मकरः प्रवन्धः ॥ ११६ ॥

आस्तां भवान्तरविधौ सुविपर्ययोऽय-
मत्रैव जन्मनि नृणामधरोच्चभावः ।
अल्पः पृथुः पृथुरपि क्षणतोऽल्प एव
स्वामी भवत्यनुचरः स च तत्पदार्हः ॥ ११७ ॥

---

र्पितं शरीरनाम कर्मणा उपढौकितम् । दत्तमित्यर्थः । कथंभूतः पुरुषः । क्रमगतिः एकां गतिं त्य(भु)क्त्वा द्वितीयां गतिं गच्छति इति क्रमगतिः । एषा प्रत्यक्षीभूता संसृतिः संसारः कथ्यते । सा संसृतिः किं करोति । एनं पुरुषमात्मानं नानाप्रपञ्चैर्नानावेषैर्वि-डम्बयति विगोपयति । कथंभूतैः । चित्रकरैः सर्वलोकानां चिन्ताश्चर्योत्पादकैः । संसृतिः कैव । शैलूषयोषिदिव नटभार्येव । रूपकोपमालंकारः ॥

**दैवादित्यादि** । प्रवन्धः प्रकृतिस्थित्यनुभागप्रदेशलक्षश्चतुःप्रकारः कर्मबन्ध आ-त्मधर्मैर्निजस्वभावैः कृत्वा लोकं प्राणिवर्गं सुदुःखयति सुष्ठु अतिशयेन दुःखं करोति । कथंभूतः प्रवन्धः । जन्मकरः भवान्तराणामुत्पादकः । कथंभूतैः आत्मधर्मैः । इत्थं अमुना प्रकारेण परस्परहतात्मभिः परस्परेण अन्योन्येन हतो विध्वंसित आत्मा स्व-भावो येषां आत्मधर्माणां परस्परहतात्मानस्तैः । इत्थं कथमिति चेत् दैवात् कर्मोदयात् धनेषु स्वापतेयेषु अधिगतेषु प्राप्तेषु कायः शरीरं पटुरुत्कृष्टं न भवति । दैवात्काये शरीरे पटौ रोगरहिते सति पुनः पुनरपि आयुर्न भवति । कथंभूतमायुः । अवाप्तवित्तं परिप्राप्तधनं न भवति । जात्यलंकारः ॥

**आस्तामित्यादि** । अयं प्रत्यक्षीभूतः सुविपर्ययः सुष्ठु विपर्यासः भवान्तरविधौ जन्मान्तरविधाने न भवतीति आस्तां तिष्ठतु चेत् अत्रैव जन्मनि अस्मिन्नेव भवे नृणां मनुष्याणां अधरोच्चभावः नीचोच्चपर्यायो भवति । तमेव दर्शयति—अल्पः पुमान् नि-र्धनो जीवः पृथुर्विपुलो धनवान् भवति, पृथुरपि विपुलधनवानपि क्षणतो मुहूर्तमात्रात् अल्प एव निर्धन एव भवति । स्वामी राजा अनुचरः किंकरो भवति, स च किंकरः तत्पदार्हः स्वामिपदयोग्यो भवति । दीपकालंकारः ॥

वैचित्र्यमित्थमनुभूय भवाम्बुराशे-
रातङ्कवाडवविडम्बितजन्तुवारेः ।
को नाम जन्मविषपादपपुष्पकल्पैः
स्वं मोहयेन्मृगदृशां कृतधीः कटाक्षैः ॥ ११८ ॥

इति संसारानुप्रेक्षा ॥ ३ ॥

एकस्त्वमाविशसि जन्मनि संक्षये च
भोक्तुं स्वयं स्वकृतकर्मफलानुबन्धम् ।
अन्यो न जातु सुखदुःखविधौ सहायः
स्वाजीवनाय मिलितं विटपेटकं ते ॥ ११९ ॥

---

**वैचित्र्यमित्यादि** । नामेति संभावनायाम् । कः कृतधीर्विधाता हेयोपादेयविवेकवान् मृगदृशां मृगलोचनानां स्त्रीणां कटाक्षैरपाङ्गवीक्षणैः स्वमात्मानं मोहयेत् विह्वलीकुर्यात् । अपि तु न कश्चिन्मोहयेदित्यर्थः । कथंभूतैः कटाक्षैः जन्मविषपादपपुष्पकल्पैः जन्म संसारः स एव विषपादपो विषवृक्षो दुःखफलदायकत्वात् तस्य पुष्पकल्पाः कुसुमसदृशास्तैः । किं कृत्वा । पूर्वं भवाम्बुराशेः संसारसमुद्रस्य इत्थं पूर्वोक्तप्रकारेण वैचित्र्यं वैचित्रीनानात्वं अनुभूय भूत्वा । ज्ञात्वा इत्यर्थः । कथंभूतस्य भवाम्बुराशेः । आतङ्कवाडवविडम्बितजन्तुवारेः सद्यः प्राणहरो व्याधिरातङ्क उच्यते स एव वाडवो वडवानलस्तस्मिन् विडम्बितानि कदर्थितानि जन्तुवारीणि प्राणिवर्गजलानि येन भवाम्बुराशिना स तथोक्तस्तस्य । रूपकालंकारः ॥ इति एतैश्चतुर्भिर्वृत्तैः संसारानुप्रेक्षा समाप्ता ॥

**एक इत्यादि** । हे जीव, त्वं भवान् एकः असहायः जन्मनि गर्भवासे आविशसि प्रवेशं करोषि । संक्षये मरणे च एक आविशसि । किं कर्तुं आविशसि । स्वकृतकर्मफलानुबन्धं भोक्तुं अनुभवितुं स्वेन आत्मना कृतमनुष्ठितं यत्कर्म पुण्यरूपं वा पापरूपं तस्य फलस्य सुखरूपस्य दुःखरूपस्य अनुबन्धं संबन्धं भोक्तुं आविशसि । कथम् । स्वयं आत्मना न तत्र कश्चित्प्रवेशं कारयति । उक्तं च—'स्वयं कर्म करोत्यात्मा स्वयं तत्फलमश्नुते । स्वयं भ्रमति संसारे स्वयं तस्माद्विमुच्यते ॥' अन्यः कोऽपि पुमान् सुखदुःखविधौ सुखकरणे दुःखविधाने च जातु कदाचित् सहायो न वर्तते तर्हि पुत्रकलत्रमित्रादिवृन्दं किं सहायं तव भवति । हे जीव, ते तव विटपेटकं शत्रु अवस्कन्धो मिलितं एकत्रीभूतं वर्तते । किमर्थम् । मिलितं स्वाजीवनाय स्वस्य आत्मनः आजीवनाय प्राणनाय । रूपकालंकारः ॥

बाह्यः परिग्रहविधिस्तव दूरमास्तां
देहोऽयमेति न समं सहसंभवोऽपि ।
किं ताम्यसि त्वमनिशं क्षणदृष्टनष्टै-
र्दारात्मजद्रविणमन्दिरमोहपाशैः ॥ १२० ॥

संशोच्य शोकविवशो दिवसं तमेक-
मन्येद्युरादरपरः स्वजनस्तवार्थे ।
कायोऽपि भस्म भवति प्रचयाच्चिताग्नेः
संसारयन्त्रघटिकाघटने त्वमेकः ॥ १२१ ॥

एष स्वयं तमचलैर्ननु कर्मजालै-
र्लूतेव वेष्टयति नष्टमतिः स्वमेकः ।
पुण्यात्पुनः प्रशमतन्तुकृतावलम्ब-
स्तद्धाम धावति विधूतसमस्तबाधम् ॥ १२२ ॥

इत्येकत्वानुप्रेक्षा ॥ ४ ॥

---

**बाह्य इत्यादि** । हे जीव, बाह्यः परिग्रहविधिः कलत्रपुत्रमित्रादिकस्तावत् दूरं विप्रकृष्टं आस्तां तिष्ठतु । अयं प्रत्यक्षीभूतो देहः शरीरं समं सार्धं न याति नागच्छति । कथंभूतो देहः । सहसंभवोऽपि जन्मना सह संजातोऽपि । हे जीव, त्वं भवान् दारात्मजद्रविणमन्दिरमोहपाशैः किं किमर्थं अनिशं निरन्तरं ताम्यसि आत्मानं बध्नासि । दाराश्च कलत्राणि आत्मजाश्च पुत्राः द्रविणं धनं मन्दिरं गृहं च तानि च तानि मोहपाशबन्धनानि तैस्तथोक्तैः । कथंभूतैर्दारात्मजद्रविणमन्दिरमोहपाशैः । क्षणदृष्टनष्टैः तत्क्षणे मुहूर्तमेकं दृष्टा अपरेण मुहूर्तेन नष्टा क्षणदृष्टनष्टास्तैः । रूपकालंकारः ॥

**संशोच्येत्यादि** । हे जीव, स्वजनः कुटुम्बवर्गः शोकविवशः सन् तं मरणसंबन्धि एकदिनं संशोच्य शोकं कृत्वा अन्येद्युरन्यस्मिन्नहनि तवार्थे भवतो धने आदरपरो भवति । कायोऽपि शरीरोऽपि चिताग्नेः श्मशानाग्नेः प्रचयात् समूहात् भस्म संजायते । संसारयन्त्रघटिकाघटने संसार एव यन्त्रं अरघट्टस्तस्य संबन्धिन्यो या घटिकाः क्षुद्रघटयस्तासां घटने चालनव्यापारे त्वमेव भवानेव एकः अद्वितीयो वर्तसे । स्वजनादिकः कोऽपि नास्ति । रूपकालंकारः ॥

**एष इत्यादि** । हे जीव, एष प्रत्यक्षीभूतो जीवः एकोऽसहायो नष्टमतिर्निर्विवेकस्तस्मादात्मानं स्वयं आत्मना ननु निश्चयेन अचलैर्वज्रलेपप्रायैः कर्मजालैः कर्मसमूहैर्वेष्टयति बध्नाति । केव । लूतेव ऊर्णनाभनाम कीटक इव । उक्तं च—'लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः' । पुनः कर्मजालवेष्टनादनन्तरं पुण्यात् पुण्योदयात् पूजा-

देहात्मकोऽहमिति चेतसि मा कृथास्त्वं
त्वत्तो यतोऽस्य वपुषः परमो विवेकः।
त्वं धर्मशर्मवसतिः परितोऽवसायः
कायः पुनर्जडतया गतधीनिकायः॥ १२३॥
आसीदति त्वयि सति प्रतनोति कायः
क्रान्ते तिरोभवति भूपवनादिरूपैः।
भूतात्मकस्य मृतवन्न सुखादिभाव-
स्तस्मात्कृती करणतः पृथगेव जीवः॥ १२४॥
सानन्दमव्ययमनादिमनन्तशक्ति-
मुद्द्योतिनं निरुपलेपगुणं प्रकृत्या।

---

दानोपवासव्रतसम्यक्त्वलक्षणपुण्यविपाकात् प्रशमतन्तुः कृतावलम्बः सन् कर्मोपशमसूत्रविहितावलम्बनः तत् तद्योगिनां प्रसिद्धं धाम मोक्षस्थानं धावति उत्सुको गच्छति। एकेन समयेन लोकाग्रमाश्रयति। कथंभूतं धाम। विधूतसमस्तबाधं मूलादुन्मूलितसमस्तदुःखम्। उपमालंकारः॥ इत्येभिश्चतुर्भिर्वृत्तैरेकत्वानुप्रेक्षा समाप्ता॥

**देहात्मक इत्यादि**। हे जीव हे आत्मन्, अहं देहात्मकः शरीरमयो वर्तते इति ईदृशं विकल्पं चेतसि मनसि त्वं मा कृथाः मैवं कार्षीः। यतो यस्मात् कारणात् अस्य वपुषः अस्य शरीरस्य त्वत्तो भवत्सकाशात् परम उत्कृष्टो विवेकः पृथग्भावो वर्तते। कोऽसौ विवेक इत्याह—त्वमात्मा धर्मशर्मवसतिः अनन्तज्ञानानन्तदर्शनानन्तवीर्यानन्तसौख्यसंयुक्तचेतनस्वभावो धर्म उच्यते, परमानन्दलक्षणं सुखं शर्मोच्यते। धर्मश्च शर्म च धर्मशर्मणी तयोर्वसतिर्निवासो धर्मशर्मवसतिः। त्वं पुनः कथंभूतः। परितोऽवसायः सर्वाङ्गचेतनस्वभावः। कायः पुनः शरीरं तु जडतया अचेतनतया गतधीनिकायो नष्टचेतनसमूहः। जात्यलंकारः॥

**आसीदतीत्यादि**। हे आत्मन्, त्वयि आत्मनि सति विद्यमाने कायः शरीरं आसीदति, न केवलमासीदति त्वयि सति प्रतनोति च वृद्धिं याति च। हे जीव, त्वयि आत्मनि सति कायो भूपवनादिरूपैः पृथिव्याद्यग्निरूपैस्तिरोभवति अदृश्यो भवति। भूतात्मकस्य पृथिव्यप्तेजोवायुस्वभावस्य कायस्य सुखादिभावः सुखदुःखादिवेदनं न वर्तते। किंवत्। मृतवत् मृतकस्येव यथा मृतकस्य सुखादिभावो न वर्तते। तस्मात् कारणात् कृती पुण्यवान् भवति। करणतः शरीरात् जीव आत्मा पृथगेव भिन्न एव वर्तते। उपमालंकारः॥

**सानन्दमित्यादि**। अमी प्रत्यक्षीभूता योगिनां दुरिताग्नयः कर्मवैश्वानरा इमं स्वानुभूतिप्रत्यक्षं पुरुषमात्मानं संतापयन्ति उत्क्रामयन्ति। कथंभूता दुरिताग्नयः। समृद्धाः

कृत्वा जडाश्रयमिमं पुरुषं समृद्धाः
संतापयन्ति रसवद्दुरिताग्नयोऽमी ॥ १२५ ॥
कर्मास्रवानुभवनात्पुरुषः परोऽपि
प्राप्नोति पातमशुभासु भवावनीषु ।
तस्मात्तयोः परमभेदविदो विदग्धाः
श्रेयस्तदादधतु यत्र न जन्मयोगः ॥ १२६ ॥

इति पृथक्त्वानुप्रेक्षा ॥ ५ ॥

---

प्रवृद्धाः प्रज्वलिताः । उदयमागता इत्यर्थः । किं कृत्वा पूर्वं संतापयन्ति । जडाश्रयं शरीराश्रयं कृत्वा । किंवत्संतापयन्ति । रसवत् यथा रसं पारदं जडाश्रयं पानीयाश्रयं कृत्वा अग्नयो रसमुत्तापयन्ति । रसं पानीयं वा संतापयन्ति । उक्तं च—'वार्वारि कं पयोऽम्भोऽम्बु पाथोर्णः सलिलं जलम् । शरं वनं कुशं नीरं तोयं जीवनमव्विषम् ॥ घनरसो रसश्च' । कथंभूतं पुरुषम् । सानन्दं अनन्तसौख्यसहितम् । अव्ययं अविनश्वरं मृत्युरहितम् । अनादिं आदिरहितम् । अनन्तशक्तिं केवलज्ञानदर्शनाभ्यां अनन्तवस्तुस्वरूपग्राहकत्वात् । उद्द्योतिनं लोकालोकस्वरूपप्रकाशकत्वात् । निरुपलेपगुणं निश्चयेन कर्ममलकलङ्करहितम् । प्रकृत्या स्वभावेन । एतद्विशेषणषट्कं पारदरसस्यापि दातव्यम् । रूपकोपमालंकारः ॥

**कर्मास्रवानुभवनादित्यादि** । पुरुष आत्मा परोऽपि श्रोत्रियब्राह्मणवदुत्तमोऽपि अशुभासु पापरूपासु अपवित्रासु भवावनीषु चाण्डालादिभवान्तरभूमिषु पातं पतनं प्राप्नोति लभते । कस्मात्पतनं प्राप्नोति । कर्मास्रवानुभवनात् कर्ममद्यास्वादनात् । उक्तं च वादिराजेन महाकविना—'कर्मणा कवलिता जनिता जातः पुरान्तरजनङ्गमवाटे । कर्मकोद्रवरसेन हि मत्तः किं किमेत्यशुभधाम न जीवः ॥' 'स्वागतेति रनभाद्गुरुयुग्मम्' इति वचनात् स्वागता छन्द इदम् । स वादिराजोऽपि श्रीसोमदेवाचार्यस्य शिष्यः, 'वादीभसिंहोऽपि मदीयशिष्यः श्रीवादिराजोऽपि मदीयशिष्यः' इत्युक्तत्वाच्च । तस्मात् कारणात् तयोः कायपुरुषयोः शरीरात्मनोः परमभेदविदः निश्चयेन अत्यन्तभेदज्ञानिनो विदग्धाः हेयोपादेयविवेकवन्तः पुरुषाः तत्किमपि श्रेयः आदधतु आचरन्तु । तत्किम् । यत्र श्रेयसि न जन्मयोगः संसारो न वर्तते न भवति । पुनर्भवो न स्यादित्यर्थः । रूपकालंकारः ॥ इति एतैः काव्यैश्चतुर्भिर्वृत्तकैः पृथक्त्वानुप्रेक्षा अन्यत्वानुप्रेक्षा समाप्ता । उक्तं च—'क्षीरनीरवदेकत्र स्थितयोर्देहदेहिनोः । भेदो यदि ततोऽन्यत्र कलत्रादिषु का कथा ॥'

---

१. 'मुत्पादयन्ति' इति सटीकपुस्तके.

आधीयते यदिह वस्तु गुणाय कान्तं
काये तदेव मुहुरेत्य पवित्रभावम्।
छायाप्रतारितमतिर्मलरन्ध्रबन्धं
किं जीव लालयसि भङ्गुरमेतदङ्गम्॥ १२७॥

योषिद्भिरादृतकरं कृतमण्डनश्री-
र्यः कामचामररुचिस्तव केशपाशः।
सोऽयं त्वयि श्रवणगोचरतां प्रयाते
प्रेतावनीषु वनवायसवासगोऽभूत्॥ १२८॥

अन्तर्बहिर्यदि भवेद्वपुषः शरीरं
दैवात्तदानुभवनं ननु दूरमास्ताम्।

---

आधीयत इत्यादि। हे जीव, इह अस्मिन् काये शरीरे यद्वस्तु कर्पूरागुरुचन्दनकुसुमादिकं वस्तु गुणाय सुगन्धत्वादिगुणनिमित्तं कान्तं अतिमनोहरं आधीयते क्रियते, तदेव वस्तु मुहुरतिशयेन अपवित्रभावं अशुचित्वं एति गच्छति। तेन कारणेन हे आत्मन्, एतत्प्रत्यक्षीभूतं अङ्गं शरीरं किमर्थं लालयसि पुनः पुनः पोषयसि। कथंभूतस्त्वम्। छायाप्रतारितमतिः छायया गौरश्यामादिवर्णेन प्रतारिता वञ्चिता मतिर्यस्य स त्वं छायाप्रतारितमतिः। कथंभूतं अङ्गम्। मलरन्ध्रबन्धं मलानां विष्ठानां रन्ध्राणि छिद्राणि तेषां बन्धः प्रघट्टको यत्र तन्मलरन्ध्रबन्धम्। पुनः कथंभूतं अङ्गम्। भङ्गुरं स्वयमेव विनश्वरम्। जात्यलंकारः॥

योषिद्भिरित्यादि। हे जीवेति संबोधनपदं पूर्वोक्तमेव ग्राह्यम्। तेनोपमेयम्। हे जीव हे आत्मन्, यस्तव भवतः केशपाशः कुन्तलकलापः। कथंभूतः केशपाशः। कामचामररुचिः कामस्य कन्दर्पनरेन्द्रस्य चामररुचिः चामरवत् प्रकीर्णवत् रुचिः शोभा यस्येति स कामचामररुचिः। कृष्णवर्ण इत्यर्थः। कथंभूतः केशपाशः। योषिद्भिर्मृदुकरकमलाभिः स्त्रीभिः कृतमण्डनश्रीः जातीचम्पकमुक्तबन्धनादिपुष्पवासिततैलेन कृता मण्डनश्रीः शोभा लक्ष्मीर्यस्य सः। कथम्। आदृतकरं आदृतौ आदरपरौ करौ हस्तौ यस्मिन् मण्डनकरणकर्मणि तत् आदृतकरम् यथा भवत्येवम्। स पूर्वोक्तलक्षणः केशपाशः अयं प्रत्यक्षीभूतः त्वयि आत्मनि श्रवणगोचरतां प्रयाते मरणं प्राप्ते सति प्रेतावनीषु श्मशानभूमिषु वनवायसवासगः सर्वाङ्गकृष्णकाकगलकप्राप्तोऽभूद्बभूव। उपमालंकारः॥

अन्तरित्यादि। हे जीव, अन्तः शरीरं अन्तर्गतं शरीरं यदि चेत् वपुषः शरीरात् बहिर्बाह्ये भवेत् दैवात् दैवयोगात् तदा तस्मिन्काले शरीरस्य अनुभवनं ननु अहो

कौतूहलादपि यदीक्षितुमुत्सहेत
कुर्यात्तदाभिरतिमत्र भवाञ्शरीरे ॥ १२९ ॥
तस्मान्निसर्गमलिनादपि लब्धतत्त्वाः
कीनाशकेलिमनवाप्तधियोऽचिराय ।
कायादतः किमपि तत्फलमर्जयन्तु
यस्मादनन्तसुखसस्यविभूतिरेषा ॥ १३० ॥

इत्यशुचित्वानुप्रेक्षा ॥ ६ ॥

अन्तःकषायकलुषोऽशुभयोगसङ्गा-
त्कर्माण्युपार्जयसि बन्धनिबन्धनानि ।
रज्जूः करेणुवशगः करटी यथैता-
स्त्वं जीव मुञ्च तदिमानि दुरीहितानि ॥ १३१ ॥

---

दूरं विप्रकृष्टं आस्तां तिष्ठतु । तस्मिन् काले कौतूहलादपि कुतूहलमात्रादपि यदीक्षितुं द्रष्टुं उत्सहेत तदा अत्र शरीरे अभिरतिं संमुखीभूय मरणं कुर्यात् विदध्यात् । जात्यलंकारः ॥

**तस्मादित्यादि** । तस्मात्कारणात् अतः एतस्मात् कायात् किमपि अनिर्वचनीयं तत् योगिनां प्रसिद्धं लब्धतत्त्वाः पुरुषाः हेयोपादेयविवेकवन्तः पुरुषाः फलं लाभं अचिराय अर्जयन्तु गृह्णन्तु । यस्मात् फलात् एषा अनन्तसुखसस्यविभूतिः आत्यन्तिकसौख्यफलविभूतिरैश्वर्यं भवति । कथंभूतात् । अतः एतस्मात् कायात् । निसर्गमलिनादपि स्वभावेन कश्मलीभूतादपि । कथंभूताः लब्धतत्त्वाः । कीनाशकेलिं यमक्रीडां प्रति अनवाप्तधियः अप्राप्तबुद्धयः । यावन्मरणं नायान्तीत्यर्थः । रूपकालंकारः । तथा चोक्तम्—'व्यापत्पर्वभयं विरामविरसं मूलेऽप्यभोगोचितं विष्वक् क्षुत्क्षतपातकुष्ठ(?)कुपितग्राम्यामयैश्छिद्रितम् । मानुष्यं घुणभक्षितेक्षुसदृशं नामैकरम्यं परं निःसारं परलोकबीजमचिरात्कृत्वेह सारीकुरु ॥' इति । एतैश्चतुर्भिर्वृत्तैरशुचित्वानुप्रेक्षा समाप्ता ॥

**अन्तरित्यादि** । हे जीव, त्वं अन्तर्मनसि कषायकलुषः क्रोधमानमायालोभैर्मलिनः सन् अशुभयोगसङ्गात् अशुभयोगाश्रयणात्कारणात् कर्माणि प्रकृतिस्थित्यनुभागप्रदेशलक्षणानि बन्धानां निबन्धनानि कारणानि कर्माणि आश्रयाण्युपार्जयसि स्वीकरोषि । यथा येन प्रकारेण करेणुवशगः करटी हस्तिनीलम्पटः करी एताः राजमन्दिरप्रत्यक्षीभूता रज्जूर्बन्धनानि उपार्जयति । तत्तस्मात् कारणात् हे जीव, त्वं भवान् इमानि प्रत्यक्षीभूतानि दुरीहितानि दुश्चेष्टितानि मुञ्च त्यज । उपमालंकारः ॥

---

१. 'संमूलभागोचितम्' क.

संकल्पकल्पतरुसंश्रयणात्त्वदीयं
चेतो निमज्जति मनोरथसागरेऽस्मिन्।
तत्रार्थतस्तव चकास्ति न किंचनापि
पक्षे परं भवसि कल्मषसंश्रयस्य॥ १३२॥
सेर्ष्यं विभूतिषु मनीषितसंश्रयाणां
चक्षुर्भवत्तव निजार्तिषु मोघवाञ्छम्।
पापागमाय परमेव भवेद्विमूढ
कामात्कुतः सुकृतदूरवतां हितानि॥ १३३॥
दौर्विध्यदग्धमनसोऽन्तरुपात्तभुक्ते-
श्चित्तं यथोल्लसति ते स्फुरितोत्तरङ्गम्।

---

संकल्पेत्यादि। हे जीवेति संबोधनपदं पूर्वोक्तमेव ग्राह्यम्। तेनायमर्थः। हे जीव, संकल्पकल्पतरुसंश्रयणादाश्रयणात् त्वदीयं तव चेतो मनः आत्मा अस्मिन् प्रत्यक्षीभूते मनोरथसागरे दोहदसमुद्रे निमज्जति ब्रुडति संकल्पश्चित्तोन्नतिः स एव कल्पतरुर्वाञ्छितफलप्रदायकत्वात् तस्य संश्रयणमवबन्धनं तस्मात्। तत्र संकल्पतरुसंश्रयणे अर्थतः परमार्थतस्तव भवतः किंचनापि किंचिदपि न चकास्ति इष्टव्याद्यनुभवनं चकास्ति भवति। परं केवलं निश्चयेन वा कल्मषसंश्रयस्य पापाश्रयस्य पक्षे भवति स्वीकारवान् भवति। रूपकालंकारः। तथा चोक्तम्—'दट्ठूण परकलत्तं रामं मा वहसि हियय मज्जम्मि। पावेण पाव लिप्पसि पावं मावहसि त्वं च शुद्धो हि॥'

सेर्ष्यमित्यादि। हे जीव, तव चक्षुः तव दृष्टिः। त्वदीयं मन इत्यर्थः। निजार्तिषु आर्तेषु वस्त्वाकाङ्क्षासु भवत्संजायमानं वर्तते। कथंभूतं चक्षुः। मोघवाञ्छं विफलेच्छम्। मनीषितसंश्रयाणां विभूतिषु स्वर्गादिसौख्यसंबन्धिनां वस्तूनां विभूतिषु ऐश्वर्येषु सेर्ष्यं द्वेषसहितं वर्तते। परं केवलं पापागमाय पापोपार्जनाय एवेति निश्चितं भवेत्संजायेत। रे विमूढ हेयोपादेयविकलात्मन्, कामात् वाञ्छामात्रात् मनोरथमात्रात् सुकृतदूरवतां पुण्यकर्मरहितानां हितानि सौख्यानि कुतः। न कुतोऽपीत्यर्थः। आक्षेपालंकारः॥

दौर्विध्येत्यादि। हे आत्मन्, ते तव चित्तं मनः यथा येन प्रकारेण अन्तरुपात्तभुक्तेः संकल्पेन गृहीतभोजनस्य ततो भुक्तिग्रहणार्थमिति भावः। उल्लसति प्रवर्तते। कथंभूतं चित्तम्। स्फुरितोत्तरङ्गं स्फुरिता उत्पन्ना उत्तरङ्गा उत्कटा उल्लोला मनोरथा यस्येति स्फुरितोत्तरङ्गम्। कथंभूतस्य ते। दौर्विध्यदग्धमनसः दौर्विध्येन निर्धनत्वेन

---

१-२. 'भवसि' इति भवेत्. ३. 'आर्तेष्व' इति सटीकपाठः, परंतु 'आर्तिषु' इति भवेत्. ४. 'भुक्त' इति सटीकपाठः.

धाम्नि स्फुरेद्यदि तथा परमात्मसंज्ञे
कौतस्कुती तव भवेद्विफला प्रसूतिः ॥ १३४ ॥

इत्याश्रवानुप्रेक्षा ॥ ७ ॥

आगच्छतोऽभिनवकार्मणरेणुराशे-
र्जीवः करोति यदवस्खलनं वितन्द्रः ।
सत्तत्त्वचामरधरैः[1] प्रणिधानहस्तैः
सन्तो विदुस्तमिह संवरमात्मनीनम् ॥ १३५ ॥

यस्त्वां विचिन्तयति संचरते विचारै-
श्चार्वीं चिनोति परिमुञ्चति चण्डभावम् ।
चेतो निकुञ्चति समञ्चति वृत्तमुच्चैः
स क्षेत्रनाथ निरुणद्धि कृती रजांसि ॥ १३६ ॥

---

दग्धं भस्मीकृतं मनो यस्य । हे जीव, तथा तेन प्रकारेण परमात्मसंज्ञे धाम्नि वहिस्तत्त्वान्तस्तत्त्वनाम्नि धाम्नि स्थाने तेजसि वा यदि चेत्स्फुरेत् कुर्यात् । चेष्टयेत् इत्यर्थः । तर्हि तव प्रसूतिर्भवत उत्पत्तिर्जन्म विफला निष्फला कौतस्कुती भवेत् । कुतो भवा कौतस्कुती । न कुतश्चिद्भवेदित्यर्थः । तव जन्म सफलमेव भवेत् । आक्षेपालंकारः ॥ इति चतुर्भिर्वृत्तैराश्रवानुप्रेक्षा समाप्ता ॥

**आगच्छत इत्यादि** । सन्तः सत्पुरुषा इह अस्मिन् संसारे तं संवरं विदुर्जानन्ति । कथयन्तीत्यर्थः । कथंभूतं संवरम् । आत्मनीनं आत्महितम् । तं कम् । आगच्छतः ढौकमानस्य अभिनवकार्मणरेणुराशेः नवीनकर्मसंवन्धिपुद्गलपरमाणुसमूहस्य जीव आत्मा वितन्द्रः अप्रमत्तः सन् यत् अवस्खलनं निषेधं करोति । कैः कृत्वा अवस्खलनं करोति । प्रणिधानहस्तैः शुभध्यानपाणिभिः । कथंभूतैः प्रणिधानहस्तैः । स्वतत्त्वचामरधरैः आत्मतत्त्वप्रकीर्णकधारिभिः । रूपकालंकारः ॥

**य इत्यादि** । हे क्षेत्रनाथ आत्मन्, स त्वं कृती पुण्यवान् सन् रजांसि पापाश्रवान् निरुणद्धि प्रतिवध्नीहि । स कः । स त्वमेव आत्मैव । तथापि स कः । यस्त्वां आत्मानं विचिन्तयति ध्यायति । य आत्मा विचारैर्विवेकैर्भेदज्ञानैरात्मनि संचरते प्रवेशं करोति । 'उदः श्चरः सकर्मक' इत्यधिकारे 'समस्तृतीयायुक्तात्' इत्यनेन सूत्रेण 'चर' धातोरात्मनेपदित्वम् । य आत्मा चार्वीं बुद्धिं ज्ञानस्वरूपां चिनोति विस्तारं नयति । य आत्मा चण्डभावं क्रोधं परिमुञ्चति त्यजति । य आत्मा चेतो मनो निकुञ्चति विषयकषायेषु गच्छत्संकोचयति । य आत्मा उच्चैरतिशयेन वृत्तं चारित्रं समञ्चति समागच्छति प्रतिपालयति स त्वं आत्मा वर्तसे । अनुपमानालंकारः ॥

---

1. 'स्वतत्त्व' इति टीकासंमतपाठः।

नीरन्ध्रसंधिरवधीरितनीरपूरः
पोतः सरित्पतिमपैति यथानपायः।
जीवस्तथा क्षपितपूर्वतमःप्रतानः
क्षीणाश्रवश्च परमं पदमाश्रयेत ॥ १३७ ॥

इति संवरानुप्रेक्षा ॥ ८ ॥

मध्याधरोर्ध्वरचनः पवनत्रयान्त-
स्तुल्यः स्थितेन जघनस्थकरेण पुंसा।
एकस्थितिस्तव निकेतनमेष लोक-
स्त्रस्यन्निकीर्णजठरोऽग्रनिषण्णमोक्षः ॥ १३८ ॥

---

**नीरन्ध्रसंधिरित्यादि**। पोतः प्रवहणं यथा येन प्रकारेण अनपायो निर्विघ्नः दुर्वातवार्दलादिरहितः सन् सरित्पतिं समुद्रं अपैति तीर्त्वा पारं गच्छति। कथंभूतः पोतः। नीरन्ध्रसंधिः निश्छिद्रः संधिरहितश्च। पुनः कथंभूतः पोतः। अवधीरितनीरपूरः दूरीकृतमध्यागतजलसमूहः। तथा तेनैव प्रकारेण जीव आत्मा क्षपितपूर्वतमःप्रतानः निर्जीर्णपूर्वकर्मसमूहः क्षीणाश्रवश्च अभिनवकर्माश्रवरहितः परमं पदं मोक्षं आश्रयेत स्वीकरोति। दृष्टान्तालंकारः॥ इति त्रिभिर्वृत्तैः संवरानुप्रेक्षा समाप्ता॥

**मध्येत्यादि**। हे जीव, एष प्रत्यक्षीभूतो लोकस्त्रैलोक्यं तव निकेतनं तव गृहं वर्तते। कथंभूतो लोकः। मध्याधरोर्ध्वरचनः मध्यो मर्त्यलोकः, अधरोऽधोलोकः, ऊर्ध्व ऊर्ध्वलोकः, एतैस्त्रिभिर्लोकै रचना निष्पत्तिर्यस्य स मध्याधरोर्ध्वरचनः। पुनः कथंभूतो लोकः। पवनत्रयान्तः पवनानां घनवातघनोदधितनुवातवातानां त्रयं अन्ते अवसाने वृक्षस्य त्वक्समानाकारं यस्य स तथा। पुनः कथंभूतो लोकः। पुंसा पुरुषेण तुल्यः सदृशः। कथंभूतेन पुंसा। स्थितेन प्रसारितपादोर्द्धेदेन। अपरं कथंभूतेन पुंसा। जघनस्थकरेण जघनं कट्यग्रभागस्तस्मिन् तिष्ठत इति जघनस्थौ कटीतटस्थौ करौ हस्तौ यस्य स जघनस्थकरस्तेन तथा। पुनः कथंभूतो लोकः। एकस्थितिः एको महास्कन्धः स्थितिर्यस्य स एकस्थितिः। ईदृग्विधोऽन्यः कोऽपि स्कन्धे नास्ति। पुनः कथंभूतो लोकः। त्रस्यन्निकीर्णजठरः त्रसद्भिः जीवैर्निकीर्णो भृतो जठर उदरो यस्य स त्रस्यन्निकीर्णजठरः। त्रसजीवसंभृतरज्जुविस्तारः त्रयोदशरज्जूर्ध्वमध्यसद्भावः सप्तनरकाधःस्थितैकरज्जुत्रसजीवशून्यत्वात् सा चतुर्दशीरज्जुरित्यर्थः। एषां षण्णामपि नरकाणां अधोभागे एकैका रज्जुः त्रसजीवरहिता वर्तते। लोकपूर्णसमुद्घातापेक्षया चतुर्दशस्वपि रज्जुषु त्रससद्भावो वर्तत एवेत्यागमरहस्यं ज्ञातव्यम्। पुनः कथंभूतः। अग्रनिषण्णमोक्षः अग्रे उपरितनभागे निषण्णमोक्षः स्थितमोक्षः पञ्चचत्वारिंशल्लक्षयोजनविस्तार आयामो यस्य लोकस्य सः अग्रनिषण्णमोक्षः। उपमालंकारः॥

कर्ता न तावदिह कोऽपि धियेच्छया वा
　दृष्टोऽन्यथा कटकृतावपि स प्रसङ्गः ।
कार्यं किमत्र सदनादिषु तक्षकाद्यै-
　राहृत्य चेत्रिभुवनं पुरुषः करोति ॥ १३९ ॥

त्वं कल्मषावृतमतिर्निरये तिरश्चि
　पुण्योचितो दिवि नृषु द्वयकर्मयोगात् ।
इत्थं निषीदसि जगत्त्रयमन्दिरेऽस्मि-
　न्स्वैरं प्रचारविधये तव लोक एषः ॥ १४० ॥

अत्रास्ति जीव न च किंचिदभुक्तमुक्तं
　स्थानं त्वया निखिलतः परिशीलनेन ।

---

**कर्तेत्यादि** । हे आत्मन्, इह अस्मिन् संसारे कोऽपि रुद्रादिकस्तावत्कर्ता न वर्तते । कया । धिया बुद्ध्या कृत्वा, अथवा इच्छया वाञ्छया कृत्वा, कर्ता न वर्तते नास्ति । भवति चेत् तर्हि सत्यपि तृणादिके बुद्धौ इच्छायां च सत्यां कटो निष्पद्यते, न च तथा दृश्यते, अत एव धिया इच्छया वा कोऽपि कर्ता न दृष्टः । अन्यथा दृष्टश्चेत्, कटकृतावपि हारनिष्पत्तावपि स कर्तृप्रसङ्गो दृष्टः । एवं सति अत्र अस्मिन् जगति तक्षकाद्यैः सूत्रधारदृषद्भेदकादिभिः सदनादिषु गृहादिनिष्पादनेषु किं कार्यम् । अपि तु न किमपि कार्यम् । आहृत्य वस्तूनि परमाण्वादीनि मेलयित्वा कश्चित्पुरुषः त्रिभुवनं करोति उर्वीपर्वततर्वादिकं सर्वं विदधाति । य एवं त्रिभुवनं विदधाति तस्य गृहादिकरणे किं दुष्करं तेन कर्तृवादः सर्वोऽपि मिथ्यैव वर्तते । आक्षेपालंकारः ॥

**त्वमित्यादि** । हे आत्मन्, इत्थं अमुना प्रकारेण त्वं भवान् अस्मिन् जगत्त्रयमन्दिरे त्रैलोक्यवेश्मनि निषीदसि तिष्ठसि । उत्पद्यस(?) इत्यर्थः । त्वं कुत्र कुत्र तिष्ठसि कल्मषावृतमतिः निष्केवलपापवेष्टितबुद्धिर्निरये नरके तिरश्चि तिर्यग्गतौ च तिष्ठसि, पुण्येन उचितो योग्यः सन् दिवि स्वर्गे सर्वार्थसिद्धिपर्यन्ते निषीदसि । द्वयकर्मयोगात् पापपुण्यकर्मसामग्रीयोगात् नृषु मनुष्यगतिषु निषीदसि । एष प्रत्यक्षीभूतो लोकः तव भवतः स्वैरं तवेच्छानुसारेण प्रचारविधये पर्यटनविधाने वर्तते । रूपकालंकारः ॥

**अत्रेत्यादि** । हे जीव, अत्र अस्मिन् लोके किंचित्स्थानं त्वया अभुक्तमुक्तं पूर्वं भुक्तं पश्चान्मुक्तं न चैवास्ति वर्तते । कुतः । निखिलतः समस्तभावेन । लोकसंबन्धि स्थानं त्वया निखिलं समस्तं भुक्तं मुक्तं चेत्यर्थः । केन कृत्वा अभुक्तमुक्तं न वर्तते । परिशीलनेन

---

१. 'राहत्य' इति मूलपाठः.

---

१. 'निष्पद्येत' इति भवेत्.　२. 'विषये' इति सटीकपुस्तकपाठः.

तत्केवलं विगलिताखिलकर्मजालं
स्पृष्टं कुतूहलधियापि न जातु धाम ॥ १४१ ॥

इति लोकानुप्रेक्षा ॥ ९ ॥

आपातरम्यरचनैर्विरसावसानै-
र्जन्मोद्भवैः सुखलवैः स्खलितान्तरङ्गः ।
दुःखानुषङ्गकरमर्जितवान्यदेन-
स्तत्त्वं सहस्व हतजीव नवप्रयातम् ॥ १४२ ॥

कालुष्यमेषि यदिह स्वयमात्मकामो
जागर्ति तत्र ननु कर्म पुरातनं ते ।
योऽहिं विवर्धयति कोऽपि विमुग्धबुद्धिः
स्वस्योदयाय स नरः प्रवरः कथं स्यात् ॥ १४३ ॥

---

समन्तादभ्यासेन । अनन्तवारान् पुनः पुनरभ्यासेन भुक्तं मुक्तं चेत्यर्थः । तर्हि किमर्थं भुक्तमुक्तं वर्तते किंवा सर्वमेवानुभुक्तमुक्तम्, तज्जगत्प्रसिद्धं केवलमेकं धाम स्थानं जातु कदाचिदपि कुतूहलधिया विनोदेनापि स्पृष्टं न वर्तते । कथंभूतं तद्धाम । विगलिताखिलकर्मजालम् विगलितानि नष्टानि अखिलानि समस्तानि मूलोत्तरप्रकृतिभेदभिन्नानि कर्मजालानि कर्मसमूहानि यस्मिन् यस्माद्वा तथा । जात्यलंकारः ॥ इति लोकानुप्रेक्षा समाप्ता ॥

**आपातरम्यरचनैरित्यादि** । हे हतजीव हतो नष्टश्चासौ जीवः हतजीवः, अथवा हता जीवाः प्राणिनो येन स हतजीवस्तस्य संबोधनं क्रियते हे हतजीव, तत् त्वं नवप्रयातं प्रत्यग्रमायातं कर्मविपाकं सहस्व क्षमस्व अनुभव । तत्किम् । यत् एनः पापं अर्जितवान् । कथंभूतमेनः । दुःखानुषङ्गकरं शारीरमानसागन्तुकदुःखोत्पादकम् । कथंभूतस्त्वम् । सुखलवैर्वनितादिभोगसुखलेशैः स्खलितान्तरङ्गः चलितचित्तः । कथंभूतैः सुखलवैः । आपातरम्यरचनैः अनुभवकाले मनोहरविधानैः । पुनः कथंभूतैः सुखलवैः । विरसावसानैः विरसं कटुतरं नीरसं अवसानं पर्यन्तो येषां तानि तथा तैः । पुनः कथंभूतैः सुखलवैः । जन्मोद्भवैः संसारोत्पन्नैः इष्टस्रग्वनिताचन्दनादिभिः अथवा जन्म संसारः तस्योद्भव उत्पत्तिर्येषां सुखलवानां ते तथा तैः । जात्यलंकारः ॥

**कालुष्यमित्यादि** । हे जीव, यस्त्वं इह अस्मिन् संसारे कालुष्यं परिणामस्यानिर्मलत्वमेषि गच्छसि । कथम् । स्वयमात्मनैव । कथंभूतस्त्वम् । आत्मकामः आत्मनि कामो विषयाभिलाषो यस्य स आत्मकामः । तत्र आत्मकामे ननु निश्चयेन ते तव

---

१. 'तया' मूल०.

आतङ्कपावकशिखाः सरसावलेखाः
स्वस्थे मनाग्मनसि ते लघु विस्मरन्ति ।
तत्कालजातमतिविस्फुरितानि पश्चा-
ज्जीवान्यथा यदि भवन्ति कुतोऽप्रियं ते ॥ १४४ ॥

इति निर्जरानुप्रेक्षा ॥ १० ॥

श्रद्धाभिसंधिरवधूतबहिःसमीह-
स्तत्त्वावसायसलिलाहितमूलबन्धः ।
आत्मा यमात्मनि तनोति फलद्वयार्थी
धर्मं तमाहुरमृतोपमसस्यमाप्ताः ॥ १४५ ॥

---

पुरातनं पूर्वोपार्जितं कर्म पुण्यं पापं वा जागर्ति विद्यते । अमुमेवार्थं आक्षेपेण द्रढय-ति—यः कोऽपि यः कश्चित्पुमान् विमुग्धबुद्धिः अज्ञानिनां चक्रवर्ती अहिं सर्पं विवर्ध-यति दुग्धादिना पोषयति । किमर्थम् । स्वस्य आत्मनः उदयाय कल्याणार्थम् । स नरः स पुमान् प्रवरः श्रेष्ठः कथं स्यात् केन प्रकारेण भवेत् । अपि तु न कथमपि स्यादि-त्यर्थः । आक्षेपालंकारः ॥

**आतङ्केत्यादि** । हे जीव, आतङ्कपावकशिखाः रोगवैश्वानरज्वालास्ते तव मनसि चेतसि मनाक् ईषत्स्वस्थे सुखिनि सति लघु शीघ्रं विस्मरन्ति स्मृतिं नायान्ति हृदये न चमत्कुर्वन्ति । कथंभूता आतङ्कपावकशिखाः । सरसावलेखाः सरसः प्रत्यग्रो अव-लेखो अनुभवो यासां ताः । हे जीव, तत्कालजातमतिविस्फुरितानि तत्काले रोग-काले जातान्युत्पन्नानि मतेर्बुद्धेर्यानि विस्फुरितानि चमत्कृतानि अहं रोगमुक्तो यदा भविष्यामि तदा पश्चान्निश्चयेन धर्मं करिष्यामीति विचारणानि यदि अन्यथा भवन्ति न विस्मरन्ति तर्हि जीव, ते तव अप्रियं पापापार्जनं कुतः । न कुतोऽपीत्यर्थः । रूपकाक्षे-पालंकारः । इति निर्जरानुप्रेक्षा समाप्ता ॥

**श्रद्धेत्यादि** । आत्मा जीवो यं धर्मं अमृतं आत्मनि तनोति विस्तारयति तं धर्मं अर्जयन्ति । के ते । आप्ताः सर्वज्ञाः । कथंभूतं धर्मम् । अमृतोपमसस्यं अमृतोपमफलम् । कथंभूत आत्मा । श्रद्धाभिसंधिः श्रद्धायां सम्यग्दर्शने अभिसंधिरभिप्रायो यस्य स तथा । पुनः कथंभूत आत्मा । अवधूतबहिःसमीहः अवधूता दूरीकृता बहिः-समीहा पञ्चेन्द्रियविषयवाञ्छा येन स तथा । पापक्रियाविरमणलक्षणचारित्रसंयुक्त इत्यर्थः । पुनः कथंभूत आत्मा । तत्त्वावसायसलिलाहितमूलबन्धः तत्त्वानां जीवाजी-वाश्रवबन्धसंवरनिर्जरामोक्षलक्षणानां सप्तानां तत्त्वानां पुण्यपापद्वयसंयुक्तनवपदार्थानां जीवपुद्गलधर्माधर्मकालाकाशानां षड्द्रव्याणां कालरहितपञ्चास्तिकायानां अवसायः

मैत्रीदयादमशमागमनिर्वृतानां
बाह्येन्द्रियप्रसरवर्जितमानसानाम्।
विद्याप्रभाप्रहतमोहमहाग्रहाणां
धर्मः परापरफलः सुलभो नराणाम् ॥ १४६ ॥
इच्छाः फलैः कलयति प्ररुणद्धि बाधाः
सृष्टेरसाम्यविभुरभ्युदयादिभिर्यः।
ज्योतींषि दूतयति चात्मसमीहितेषु
धर्मः स शर्मनिधिरस्तु सतां हिताय ॥ १४७ ॥

---

सम्यग्ज्ञानं स एव सलिलं पानीयं संसारतृष्णानिवारकत्वात्तेनाहित आरोपितो मूलबन्धो येनात्मना स तथोक्तः। श्रीदिगम्बराचार्यप्रतीतिसंयुक्तसम्यग्ज्ञान इत्यर्थः। पुनः कथंभूत आत्मा। फलद्वयार्थी। स्वर्गमोक्षफलद्वयाकाङ्क्षी इत्यर्थः। रूपकोपमालंकारः॥

**मैत्रीत्यादि**। नराणां मनुष्याणां धर्मः सुलभः सुग्रहो भवति। कथंभूतो धर्मः। परापरफलः परं फलं मोक्षः अपरं फलं अभ्युदयलक्षणं सांसारिकं सुखं यस्मादिति परापरफलः। कथंभूतानां नराणां धर्मः सुलभो भवतीत्याह—मैत्रीदयादमशमागमनिर्वृतानाम् मैत्री च अद्वेषः, दया च परहितवृत्तिः, दमश्च पञ्चेन्द्रियजितेन्द्रियत्वम्, शमश्च उत्तमक्षमा, आगमश्च जिनसूत्रम्, अथवा मैत्रीदयादमशमानां आगमेन प्राप्त्या निर्वृता आनन्दं प्राप्ताः सुखीभूता ये ते मैत्रीदयादमशमागमनिर्वृतास्तेषां तथोक्तानाम्। पुनः कीदृशानां नराणां धर्मः सुलभो भवति। बाह्येन्द्रियप्रसरवर्जितमानसानाम् बाह्येषु स्पर्शरसगन्धवर्णशब्दरूपेषु पञ्चेन्द्रियविषयेषु इन्द्रियाणां प्रसरः प्रवृत्तिस्तेन वर्जितं रहितं मानसं चित्तं येषां ते तथा तेषाम्। पुनः कीदृशानां नराणां धर्मः सुलभो भवति। विद्याप्रभाप्रहतमोहमहाग्रहाणाम् विद्या सर्वज्ञप्रणीतशास्त्रं तस्याः प्रभा माहात्म्यं तया प्रहतो विध्वंसितो मोहः अज्ञानं स एव महाग्रहो महापिशाचः प्रथिल्य(?)कारकत्वात् यैस्ते तथा तेषाम्। रूपकालंकारः॥

**इच्छा इत्यादि**। स जगत्प्रसिद्धो धर्मः सतां विद्वज्जनानां हिताय मोक्षायास्तु भवतु। स कः यो धर्मः फलैः कृत्वा पुत्रकलत्रधनधान्यारोग्यादिभिः कृत्वा इच्छाः मनोरथान् कलयति पूरयति। यो धर्मः बाधाः शारीरमानसागन्तुकादीनि दुःखानि प्ररुणद्धि निषेधयति। यो धर्मः अभ्युदयादिभिः कृत्वा राज्यादिभिः कृत्वा असाम्यविभुः अनुपमसमर्थः। यो धर्मः ज्योतींषि श्रुतावधिमनःपर्यायादीनि दूतयति मोक्षदूतान् प्रेरयति प्रहिणोति। केषु दूतान्प्रहिणोति। आत्मसमीहितेषु अनन्तज्ञानादिचतुष्टयेषु। कथंभूतो धर्मः। यथोक्तविशेषणविशिष्टः शर्मनिधिः शर्मणां सौख्यानां निधिर्निधानं शर्मनिधिः। रूपकोपमालंकारः॥

देहोपहारकुतपैः स्वपरोपतापैः
　　कृत्वाध्वरेश्वरमिषं विदलन्मनीषाः ।
धर्मैषिणो य इह केचन मान्धभाज-
　　स्ते जातजीवितधियो विषमापिबन्ति ॥ १४८ ॥

येऽन्यत्र मन्त्रमहिमेक्षणमुग्धबोधाः
　　शर्वैषिणः पुनरतः शिवतां गृणन्ति ।
ते नावितारणदृशो दृषदोऽवलम्ब्य
　　दुष्पारमम्बुधिजलं परिलङ्घयन्ति ॥ १४९ ॥

धर्मश्रुतेरिह परत्र च येऽविचाराः
　　संदिह्य तामसदृशः सततं यतन्ते ।
दुग्धाभिधानसमताविलबुद्धयस्ते
　　नूनं गवार्करसपानपरा भवन्तु ॥ १५० ॥

---

देहोपेति । इह अस्मिन् संसारे ये केचन मान्धभाजो जडस्वभावाः कर्मचाण्डाला अध्वरेश्वरमिषं कृत्वा अध्वरस्य यागस्य ईश्वरस्य रुद्रपूजाया मिषं छद्म कृत्वा विधाय धर्मैषिणो धर्मवाञ्छका भवन्ति । कैः कृत्वा अध्वरेश्वरमिषं कुर्वन्ति । देहोपहारकुतपैः देहानां नरस्त्रीपशूनां अ(उ)पहारः शरीरविध्वंसनमसिजलादिभिः कुतपास्तूर्याणि वेदवचनानि इत्यर्थस्तैः । कथंभूतैर्देहोपहारकुतपैः । स्वपरोपतापैः कथकापरदुःखहेतुभूतैः । ते पुरुषाः जातजीवितधियः जीवितार्थंबुद्धयः विषं हलाहलं आपिबन्ति आस्वादयन्ति । कथंभूतास्ते पुरुषाः । विदलन्मनीषाः । दुर्बुद्धय इत्यर्थः । रूपकोपमालंकारः, दृष्टान्तो वा ॥

ये इत्यादि । ये पुरुषा अन्यत्र सर्वज्ञं वीतरागं दृष्ट्वा मतान्तरे मन्त्रमहिमेक्षणमुग्धबोधाः सन्तः मन्त्राणां महिमा माहात्म्यं तस्य ईक्षणेन अवलोकनेन मुग्धबोधाः अचतुरबुद्धयो मनुष्याः शर्वैषिणो रुद्रमतानुसारिणः पुरुषाः पुनः पश्चात् आराधनादनन्तरं अतः अस्मात् रुद्रात् शिवतां मुक्तत्वं वयं मुक्ता भविष्याम इति गृणन्ति जानन्ति ते पुरुषाः नावितारणदृशः नौकायां तारणबुद्धयः दृषदः पाषाणान् अवलम्ब्य गृहीत्वा आरुह्य दुष्पारं पाररहितं अम्बुधिजलं समुद्रतोयं परिलङ्घयन्ति उत्तरन्ति । दृष्टान्तालंकारः ॥

धर्मश्रुतेत्यादि । धर्मश्रुतेर्धर्मश्रवणात् इह अस्मिन् आर्हतमते परत्र च वेदोक्तार्थे ये पुरुषा अविचाराः संदिह्य संदेहं कृत्वा पञ्च जैनाभासाश्च तामसदृशो मिथ्यादृष्टयः सततं निरन्तरं यतन्ते धर्मार्थं चेष्टन्ते ते पुरुषाः दुग्धाभिधानसमताविलबु-

अज्ञस्य शक्तिरसमर्थविधेर्निबोध-
स्तौ चारुचेरियममू तुदती न किंचित्।
अन्धाङ्घ्रिहीनहतवाञ्छितमानसानां
दृष्टा न जातु हितवृत्तिरनन्तराया ॥ १५१ ॥
चार्व्यौ रुचौ तदुचिताचरणे च नृणां
दृष्टार्थसिद्धिरगदादिनिषेवणेषु।
तस्मात्परापरफलप्रदधर्मकामाः
सन्तस्त्रयावगमनीतिपरा भवन्तु ॥ १५२ ॥

इति धर्मानुप्रेक्षा ॥ ११ ॥

---

द्धयः क्षीरनाम्ना समतया सादृश्येन आविलबुद्धयः अतुच्छबुद्धयः कश्मलमतयः नूनं निश्चयेन गवार्करसपानपराः गोरसे सुरभिदुग्धे अर्करसे मन्दारक्षारे च पानपरा आस्वादनतत्परा भवन्तु संजायन्ताम्। निषेधालंकारः ॥

अज्ञेत्यादि। अज्ञस्य ज्ञानहीनस्य शक्तिश्चारित्रं न किं तुदति, असमर्थविधेः चारित्रहीनस्य पुरुषस्य निबोधो ज्ञानं न किंचिद्भवति, अरुचेः सम्यक्त्वहीनस्य तौ च शक्तिनिबोधौ न किंचिद्भवतः, इयमरुचिः तत्त्वानामश्रद्धानं अमू शक्तिनिबोधौ कर्मतापन्नौ तुदती व्यथयन्ती वर्तेते। अमुमेवार्थं दृष्टान्तेन द्रढयति—अन्धाङ्घ्रिहीनहतवाञ्छितमानसानां जातु कदाचित् हितवृत्तिर्मोक्षप्रवृत्तिरनन्तराया निर्विघ्ना न दृष्टा न विलोकिता। अन्धश्चक्षुर्विकलः पुमानङ्घ्रिविहीनः पङ्गुः पुरुषः हतवाञ्छितमानसः अरुचिः पुमान् अन्धाङ्घ्रिहीनहतवाञ्छितमानसास्तेषां अन्धाङ्घ्रिहीनहतवाञ्छितमानसानाम्। उक्तं च—'वनशिखिनि मृतोऽन्धः संचरन् बाढमङ्घ्रिद्वितयविकलमूर्तिर्वीक्ष्यमाणोऽपि पङ्गूः। अपि सनयनपादोऽश्रद्दधानश्च तस्माद्दृगवगमचरित्रैः संयुतैरेव सिद्धिः ॥' दृष्टान्तालंकारः ॥

चार्व्यामित्यादि। चार्व्यां सम्यग्ज्ञाने सति रुचौ सम्यग्दर्शने सति तदुचिताचरणे च सम्यक्चारित्रे सति अगदादिनिषेवणेषु औषधखादनादिषु नृणां अर्थसिद्धिः रोगादिविनाशः कार्यसिद्धिर्दृष्टा अवलोकिता कथिता। औषधमन्त्रादिकं यदि सम्यग्जानाति रुचिबलेन च कटुकमप्यौषधं पातुमिच्छति तदुचिताचरणे च रुचिबलात् कटुकमप्यौषधं पिबति च तस्य रोगविनाशो भवति उल्लासो भवति तथा सम्यग्दर्शनचारित्रैः कर्मरोगमुक्तो भवति। तस्मात्कारणात् परापरफलप्रदधर्मकामाः परं फलं निःश्रेयसं अपरं फलं अभ्युदयलक्षणं ते द्वे अपि प्रयच्छति इति परापरफलप्रदः स चासौ धर्मः परापरफलप्रदधर्मस्तस्य कामोऽभिलाषो येषां पुरुषाणां ते परापरफलप्रदधर्म-

संसारसागरमिमं भ्रमता नितान्तं
जीवेन मानवभवः समवापि दैवात् ।
तत्रापि यद्भुवनमान्यकुले प्रसूतिः
सत्संगतिश्च तदिहान्धकवर्तकीयम् ॥ १५३ ॥

कृच्छ्राद्वनस्पतिगतेश्च्युत एष जीवः
श्वभ्रेषु कल्मषवशेन पुनः प्रयाति ।
तेभ्यः परस्परविरोधिमृगप्रसूता-
वस्याः पशुप्रतिनिभेषु कुमानवेषु ॥ १५४ ॥

संसारयन्त्रमुदयास्तघटीपरीतं
सातानतामसगुणं भृतमाधितोयैः ।

---

कामाः सन्तः आसन्नभव्यजीवाः त्रयावगमनीतिपराः सम्यग्दर्शनज्ञानचारित्रपरिज्ञानन-यतत्परा भवन्तु संजायन्ताम् । दृष्टान्तालंकारः ॥ इति धर्मानुप्रेक्षा समाप्ता ॥

**संसारसागरमित्यादि** । संसारसागरं समुद्रं इमं प्रत्यक्षीभूतं चतुर्गतिलक्षणं भ्रमता पर्यटता नितान्तमतिशयेन जीवेनात्मना कर्तृभूतेन मानवभवः कर्मतापन्नो दैवात् पुण्यकर्मोदयात् समवापि संप्राप्तः, तत्रापि मानवभवेऽपि सति यद्भुवनमान्यकुले प्रसूतिर्भवति द्विजनृपतिवणिग्वर्णकुले जन्म भवति सत्संगतिश्च भवति महामुनीनां संगमश्च भवति तत् इह अस्मिन् संसारे अन्धकवर्तकीयं अन्धकवर्तकीयो दृष्टान्तः यथा कश्चिदन्धकः पुमान् करतलेन करं ताडयन् वर्तते तस्य करद्वयमध्यवर्तकः पक्षिविशेषः समायाति स तु दुर्लभस्तथा मानवभवे सत्संगतिर्दुर्लभा वर्तते । उपमालंकारः ॥

**कृच्छ्रादित्यादि** । एष स्वानुभूतिप्रत्यक्षीभूतो जीव आत्मा कृच्छ्रात् कष्टात् अनन्तकालदुःखानुभवितत्वात् वनस्पतिर्गतेः निर्गतवान् च्युतो निर्गमः सन् कल्मषवशेन पापवशेन पुनः पुनरपि वारंवारं श्वभ्रेषु सप्तमहानरकेषु प्रयाति नारकपर्यायान् गृह्णाति तेभ्यः श्वभ्रेभ्यः सकाशात् च्युतः सन् परस्परविरोधिमृगप्रसूतौ अन्योन्यवैरिमृगजन्मनि प्रयाति गच्छति सिंहगजमृगव्याघ्रमूषकमार्जाराहिनकुलसर्पमयूरश्येनवर्तकादितिर्यक्षु उत्पद्यते । अस्या मृगप्रसूतेः सकाशात् च्युतः सन् पशुप्रतिनिभेषु तिर्यक्सदृशेषु कुमानवेषु कुत्सितमनुष्येषु शशकर्णशष्कुलीकर्णलम्बकर्णकालमुखशूकरमुखसिंहमुखव्याघ्रमुखविद्युन्मुखएकोरुलाङ्गूलिकशृङ्गिकुभोगभूमिमनुष्येषु उत्पद्यते म्लेच्छेषु जायते । उपमालंकारः ॥

**संसारयन्त्रमित्यादि** । एष जीव इति पूर्वोक्तमेव ग्राह्यम् । इत्थं अमुना प्रकारेण संसारयन्त्रं संसारघरट्टं आवाहयेत् चालयेत् । कथंभूतं संसारयन्त्रम् । उदयास्तघटीपरीतं

इत्थं चतुर्गतिसरित्परिवर्तमध्य-
मावाहयेत्स्वकृतकर्मफलानि भोक्तुम् ॥ १५५ ॥
आतङ्कशोकभयभोगकलत्रपुत्रै-
र्यः खेदयेन्मनुजजन्म मनोरथाप्तम्।
नूनं स भस्मकृतधीरिह रत्नराशि-
मुद्दीपयेदतनुमोहमलीमसात्मा ॥ १५६ ॥
बाह्यप्रपञ्चविमुखस्य शमोन्मुखस्य
भूतानुकम्पनरुचः प्रियतत्त्ववाचः।

---

उदयाश्च सूर्योदया अस्ताश्च सूर्यास्तमनानि उदयास्तास्त एव घट्यो जलघटिकास्ताभिः परीतं वेष्टितम्। पुनः कथंभूतं संसारयन्त्रम्। सातानतामसगुणं सातानः सविस्तरस्तामसः पापसमूहः स एव गुणो वरलोकभाषया वरत्रा यस्मिन् संसारयन्त्रे तत् सातानतामसगुणम्। पुनः कथंभूतं संसारयन्त्रम्। आधितोयैर्भृतं आधितोयैर्मानसीपीडाजलैर्भृतं पूरितम्। पुनरपि कथंभूतम्। चतुर्गतिसरित्परिवर्तमध्यं चतस्रश्च ता गतयो नारकतिर्यङ्मनुष्यदेवगतयस्ता एव सरितो नद्यस्तासां तासु वा परिवर्तकारी चक्रवत्परिभ्रमणकारी मध्यो यस्य संसारयन्त्रस्य तत्तथोक्तम्। ईदृग्विधं संसारयन्त्रं किमर्थमावाहयेत् स्वकृतकर्मफलानि भोक्तुं निजोपार्जितपुण्यपापफलानि सुखदुःखरूपाणि भोक्तुमनुभवितुम्। रूपकालंकारः॥

आतङ्केत्यादि। आतङ्कश्च रोगश्च, शोकः पश्चात्तापः, भयं च सत्त्वादिभीतिः, भोगाश्च कर्पूरकस्तूरीचन्दनपुष्पवसनादयः, कलत्राणि इष्टस्त्रियः, पुत्राश्च अपत्यानि, आतङ्कशोकभयभोगकलत्रपुत्रास्तैः करणतामापन्नैः कृत्वा यः पुमान् कर्तृभूतो मनुजजन्म मनुष्यभवं कर्मतापन्नं खेदयेत् निर्गमयेत्। कथंभूतं मनुजजन्म। मनोरथाप्तं मनोरथैरनेकदोहदैराप्तं लब्धं स पुमान् नूनं निश्चयेन भस्मकृतधीः भस्मनिमित्तं इह अस्मिन् संसारे रत्नराशिं अनर्घ्यमाणिक्यपुञ्जं उद्दीपयेत् प्रज्वालयेत्। स पुमान् कथंभूतः। अतनुमोहमलीमसात्मा अतनुर्महान् योऽसौ मोहो अज्ञानं लक्ष्मीवितर्को वा इच्छा तेन मलीमसो मलकलुषितपापेनातिकश्मलीकृत आत्मा चेतनो यस्य स अतनुमोहमलीमसात्मा। दृष्टान्तालंकारः॥

बाह्येत्यादि। इयं प्रत्यक्षीभूता बोधिः रत्नत्रयप्राप्तिर्भव्यस्य रत्नत्रययोग्यस्य पुरुषस्य तस्मै जगत्प्रसिद्धाय पदाय मोक्षस्थानाय अस्तु भवतु संजायताम्। कथंभूतस्य भव्यस्य। बाह्यप्रपञ्चविमुखस्य बाह्यप्रपञ्चो विषयकषायविस्तारस्तस्मात् विमुखस्य पराङ्मुखस्य। पुनः कथंभूतस्य भव्यस्य। शमोन्मुखस्य प्रशमोन्मुखस्य। पुनः कथंभूतस्य

प्रत्यक्प्रवृत्तहृदयस्य जितेन्द्रियस्य
भव्यस्य बोधिरियमस्तु पदाय तस्मै ॥ १५७ ॥

इति बोध्यनुप्रेक्षा ॥ १२ ॥

तथा—

'कृतः कीर्तिज्योत्स्नाप्रसरदमृतासारसलिलै-
रयं ब्रह्मस्तम्बो धवलभवनाभोगसुभगः ।
भुजस्तम्भालानादियमपि रमासिन्धुरवधू-
र्वशं नीता दृप्तद्विषदगमभङ्गैर्मृधवने ॥ १५८ ॥

---

भव्यस्य । भूतानुकम्पनरुचः भूतानां सर्वप्राणिनां अनुकम्पने कारुण्यकरणे दयाविधाने रुचिः श्रद्धा यस्य स भूतानुकम्पनरुक् तस्य भूतानुकम्पनरुचः । अपरं कथंभूतस्य भव्यस्य । प्रियतत्त्ववाचः प्रियाः कर्णामृतप्रायाः तत्त्वं परमार्थभूता वाचो वाण्यो यस्य स प्रियतत्त्ववाक् तस्य प्रियतत्त्ववाचः । भूयोऽपि कथंभूतस्य भव्यस्य । प्रत्यक्प्रवृत्तहृदयस्य प्रतीचि पश्चाज्ज्योतिषि परमात्मस्वरूपे प्रवृत्तं अधिकृतं नियुक्तं हृदयं मनो यस्य स प्रत्यक्प्रवृत्तहृदयस्तस्य । पुनः कथंभूतस्य भव्यस्य । जितेन्द्रियस्य जितानि स्ववशीकृतानि इन्द्रियाणि स्पर्शनादीनि येन स जितेन्द्रियस्तस्य । जात्यलंकारः, अतिशयालंकारः इति ॥ एतैः पञ्चभिर्वृत्तैर्बोध्यनुप्रेक्षा समाप्ता ॥

तथा स राजा रहसि एकान्ते तेषां अचिराय वेगेन समाहूय आकार्य एवं वक्ष्यमाणलक्षणोपलक्षितप्रकारेण अबूबुधद्बोधयामास । कथंभूते रहसि । निवारितनिखिलजनसदसि निवारितं निषिद्धं निखिलानां समस्तानां जनानां मन्त्रिपुरोहितसेनापतिप्रभृतीनां लोकानां सदः समूहो यत्र रहसि तत्तथोक्तं तस्मिन् । स कथंभूतो राजा । विदूरितसंसारसुखसंकल्पः विदूरितो दूरीकृतः परित्यक्तः संसारसुखस्य स्रग्वनिताचन्दनादिकस्य संकल्पश्चित्तोन्नतिर्येन स तथोक्तः । स राजा पुनः कथंभूतः । चेतोविनिश्चिततपश्चरणकल्पः चेतसि मनसि विनिश्चितो निर्णीतस्तपश्चरणस्य दीक्षायाः कल्पो रचना येन स तथा । किं कृत्वा पूर्वमबूबुधत् । इति एवं विचिन्त्य सम्यक् विचार्य । इतीति किम् । **कृत इत्यादि** । कीर्तिज्योत्स्नाप्रसरदमृतासारसलिलैः कृत्वा अयं प्रत्यक्षीभूतो ब्रह्मस्तम्बस्त्रैलोक्यं धवलभवनाभोगसुभगः कृतः धवलानि उज्ज्वलानि भवनानि गृहाणि तेषामाभोगः परिपूर्णता तेन सुभगो मनोहरः सर्वलोकप्रीतिजनकः कीर्तिरेव ज्योत्स्ना चन्द्रिका तया प्रसरन् व्याप्नुवन् अमृतासारो अमृतवृष्टिस्तस्य सलिलैः रसैः कृत्वा उज्ज्वलः कृत इत्यर्थः । तथा मृधवने संग्रामाङ्गणे दृप्तद्विषदगमभङ्गैः दृप्ता गर्विता ये द्विषन्तः शत्रवस्त एव अगमा वृक्षाः दुःखफलदायकत्वात्तेषां भङ्गैः शतखण्ड-

लताकान्तारम्यास्तरुपरिजनाकीर्णवसुधा-
स्तटीध्रप्रासादाः कमलसुहृदानन्दितभुवः।
अरण्यानीर्लक्ष्मीरिव मुहुरुपाश्रित्य हृदयं
परस्थानावाप्तेर्विजयि भवतान्मामकमिदम्॥ १५९॥

इति विचिन्त्य विदूरितसंसारसुखसंकल्पश्चेतोविनिश्चिततपश्चरणकल्पः समाहूयाचिराय निवारितनिखिलजनसदसि रहसि मामेवमबूबुधत्—'समस्तशास्त्ररहस्योपास्तिपेशलबुभुत्स वत्स, इयं हि राज्यरमाभिलाषितसमागमापि प्रायो निसर्गविनीताचारमपि राजकुमारमभिनवयौवनाङ्गनेव च्छलयति सद्वृत्तोपपत्तिषु मनसि, अन्धयति सन्मार्गदर्शनेषु लोचनयोः, ब-

---

करणैः। भुजस्तम्भालानात् दोर्दण्डस्तम्भबन्धनात् इयं प्रत्यक्षीभूता रमासिन्धुरवधूरपि लक्ष्मीकरेणुरपि वशं नीता स्ववशे कृता। रूपकालंकारः॥

लतेत्यादि। इदं प्रत्यक्षीभूतं मामकं मदीयं हृदयं मनः अरण्यानीर्महान्त्यरण्यानि उपाश्रित्य परस्थानावाप्तेर्मोक्षस्थानप्राप्तेर्विजयि जयवत् भवताद्भूयाद्भवतु। अरण्यानीः कथंभूताः। लताकान्तारम्याः लता वल्ल्यस्ता एव कान्ताः स्त्रियः कोमलशरीरत्वात्ताभी रम्या अतिमनोहराः। पुनः कथंभूता अरण्यानीः। तरुपरिजनाकीर्णवसुधाः तरवो वृक्षास्त एव परिजनाः कुटुम्बवर्गाः दुःखपरितापनिवारकत्वात्तैराकीर्णा व्याप्ता वसुधा भूमिर्यासु तास्तथोक्ताः। अरण्यानीः पुनः कथंभूताः। तटीध्रप्रासादाः पर्वता एव मन्दिराः यासु तास्तथोक्ताः। पुनः कथंभूताः अरण्यानीः। कमलसुहृदानन्दितभुवः कमला मृगास्त एव सुहृदो मित्राणि पुरस्तादाश्रितत्वात्तैरानन्दिताः आनन्दं प्रापिता शोभिता भूर्भूमिर्यासामरण्यानीनां तास्तथोक्ताः। अरण्यानीः पुनः कथंभूताः। लक्ष्मीरिव राज्यलक्ष्मीसदृशाः। रूपकोपमालंकारः॥

स राजा मां किं अबूबुधत्—समस्तेत्यादि। हे समस्तशास्त्ररहस्योपास्तिपेशलबुभुत्स समस्तानां समग्राणां शास्त्राणां ग्रन्थानां रहस्यस्य गोप्यसत्त्वस्य या उपास्तिः रहस्यानुशीलनं मुहुर्मुहुरभ्यासस्तया पेशला मनोहारिणी बुभुत्सा बोद्धुमिच्छा मीमांसा विचारणा यस्य स तथोक्तस्तस्य संबोधनं तथोक्त हे वत्स हे पुत्र, इयं प्रत्यक्षीभूता राज्यरमा राज्यलक्ष्मीरभिलाषितसमागमापि वाञ्छितफलदायिन्यपि प्रायो बाहुल्येन निसर्गविनीताचारमपि स्वभावेन विनयवन्तमपि राजकुमारं राजपुत्रं छलयति प्रथयति। कथम्। हि निश्चयेन। केव छलयति। अभिनवयौवनाङ्गनेव प्रत्यग्रतारुण्यसंयुक्तनितम्बिनीव। कस्मिन् छलयति। मनसि चित्ते। केषु छलयति। सद्वृत्तोपपत्तिषु सदाचाराङ्गीकारेषु। पुनश्च राज्यरमा किं करोति। लोचनयोर्नेत्रयोर्विषये अन्धयति अन्धं

धिरयति हितोपदेशेषु श्रवणयोः, निपातयति च नियमेन दुरन्तासु तासु व्यसनसंततिषु । यौवनाविर्भावः पुनः क्षात्रपुत्राणां भूतावतार इव हेतुरात्मविडम्बनस्य, प्रसवागम इव कारणं मदस्य, उन्मादयोग इव प्रसवभूमिरज्ञानविलसितस्य, मदनकारकोपयोग इव च निदानमनर्थपरम्परायाः । तदुभयस्याप्युपस्थितस्याङ्ग विक्रमतुङ्ग समागमसुखं धर्मसहितं तथानुभव यथा न भवसि परेषां तदन्तरायविषयः ।

यतः ।

तातस्तावज्जडनिधिरभूत्सोदरः कालकूटः
कृष्णे यस्या प्रणयपरता पङ्कजाते रतिश्च ।
लक्ष्म्यास्तस्याः सकलनृपतिस्वैरिणीवृत्तिभाजः
कः प्रेमान्धो भवतु कृतधीर्लोकविप्लाविकायाः ॥ १६० ॥

---

करोति । केषु । सन्मार्गदर्शनेषु धर्मभागविलोकनेषु । राज्यरमा पुनश्च किं करोति । श्रवणयोः बधिरयति बधिरं करोति मूकं विदधाति । केषु । हितोपदेशेषु पथ्यवचनेषु । राज्यरमा पुनश्च किं करोति । निपातयति निश्चितं पातयति । चकार उक्तसमुच्चयार्थः । कासु । नियमेन निश्चयेन दुरन्तासु निरवद्यानां तासु(?) जगत्प्रसिद्धासु व्यसनसंततिषु दुःसमूहेषु । क्षात्रपुत्राणां राजपुत्राणां यौवनाविर्भावः पुनः तारुण्यवयश्च आत्मविडम्बनस्य जीवकदर्थनस्य हेतुः कारणं वर्तते । क इव । भूतावतार इव मण्डले पिशाचप्रवेश इव । पुनः कथंभूतो यौवनाविर्भावः । मदस्य दर्पस्य कारणं हेतुः । क इव । प्रसवागम इव मद्यपानमिव । यौवनाविर्भावः पुनः कथंभूतः । अज्ञानविलसितस्य मूर्खत्ववृद्धेः प्रसवभूमिः उत्पत्तिस्थानम् । क इव । उन्मादयोग इव वातलताप्रसङ्ग इव । यौवनाविर्भावः पुनः कथंभूतः । अनर्थपरम्परायाः कार्यभङ्गश्रेण्याः निदानम् । क इव । मदनकारकोपयोग इव मदनकारकाणां मदनोत्पादककोद्रवाणां उपयोग इव भोजनमिव । चकार उक्तसमुच्चयार्थः । तस्मात् हे पुत्र, उभयस्यापि राज्यलक्ष्मीयौवनाविर्भावद्वयस्यापि उपस्थितस्य आगतस्य अङ्ग अहो पुत्रक, अहो विक्रमतुङ्ग पराक्रमोन्नत, समागमसुखं उभयप्रेम राज्यरमायौवनागमसुखं धर्मसहितं तथा तेन प्रकारेण त्वं अनुभव आस्वादय । तथा कथम् । यथा त्वं न भवसि परेषां शत्रूणां तदन्तरायविषयः राज्यरमायौवनाविर्भावविघ्नगोचरः ॥

यतो यस्मात् कारणात् । [ तात इत्यादि । ] तस्याः लक्ष्म्याः कः पुमान् कृतधीर्धर्मबुद्धिः प्रेमान्धो भवतु । अपि तु न कश्चित् । तस्याः कस्या लक्ष्म्याः । तावत्तातः पिता जडनिधिः पक्षे मूर्खत्वनिधिरभूद्बभूव । सोदरो लघुभ्राता कालकूटः विषं वर्तते मृत्युहेतुर्वर्तते । यस्याः लक्ष्म्याः कृष्णे श्रीरामेपि नारायणे मलिनहृदये च प्रणयपरता स्ने-

यस्मिन्रजः प्रसरति स्खलितादिवोच्चै-
रान्ध्यादिव प्रबलता तमसश्चकास्ति।
सत्वं तिरोभवति भीतमिवाङ्गजाग्ने-
स्तद्यौवनं विनय सज्जनसंगमेन ॥ १६१ ॥

नयविनयचातुरीरुचिरचरित्रपवित्र पुत्र, त्वयि स्वभावादेव विदूरितागसि महाभागमनसि न किंचिदुपदेष्टव्यमस्ति। यस्माद्बालकालकेलिष्वपि तव प्रवृत्तयः केसरिकिशोरकस्येव पराक्रमाक्रान्तवैरिकरिविहारभूमयः, पयोधरसमयस्यैव शरासारप्रसरसूत्रितसपत्नपुरप्रासादमेदिनीदूर्वाङ्कुरप्ररोहाः, श-

---

हृतात्पर्यं वर्तते। यस्याः लक्ष्म्याः पङ्कजाते कमले पापोत्पन्ने पुरुषे रतिर्वर्तते। चकारो दोषाणामुक्तसमुच्चयार्थः। कथंभूतायाः लक्ष्म्याः। सकलनृपतिस्वैरिणीवृत्तिभाजः सकलैः समस्तैर्नृपतिभी राजभिः स्वैरिणीवृत्तं पुंश्चल्याचारो भजते सेवते आश्रयति या सा सकलनृपतिस्वैरिणीवृत्तिभाक् तस्याः। अपरं कथंभूतायाः लक्ष्म्याः। लोकविप्लाविकायाः विघ्नकारिण्याः। हेत्वलंकारः॥

**यस्मिन्नित्यादि।** हे पुत्र, तद्यौवनं तत्तारुण्यं सज्जनसंगमेनं साधुलोकसंगत्या विनय निर्गमय। त्वं यत्किंचित् यस्मिन् यौवने सति रजः प्रसरति अपवादो भवति। कस्मादिव। स्खलितादिव पापे आचारादिव कथम्। उच्चैरतिशयेन यस्मिन् यौवने तमसः अज्ञानस्य प्रबलता प्रौढत्वं चकास्ति भवति। कस्मादिव। आन्ध्यादिव चक्षुर्विहीनत्वादिव। यस्मिन् यौवने सत्वं प्रसन्नतागुणः तिरोभवति नश्यति। किमिव। अङ्गजाग्नेः कामाग्नेर्भीतमिव चकितमिव। उपमालंकारः॥

**[नयेत्यादि।]** हे नयविनयचातुरीरुचिरचरित्रपवित्र नयश्च नीतिमार्गः अन्यायवर्जनम्, विनयश्च गुरुपादपतनम्, तयोः चातुरी विचक्षणत्वं तया रुचिरमतिमनोहरं यच्चरित्रं सदाचारं क्रिया तेन पवित्रः पावनः स तथा तस्य संबोधनं हे तथोक्त। हे पुत्र वत्सल, त्वयि भवति विषये स्वभावादेव प्रकृत्यैव विदूरितागसि विवर्जितापराधे महाभागमनसि पुण्यवन्मानसे किंचित्किमपि उपदेष्टव्यं शिक्षणीयं नास्ति न विद्यते। कस्मात् शिक्षणीयं नास्ति। यस्मात्कारणात् तव प्रवृत्तयो भवतश्चेष्टितानि बालकालकेलिष्वपि आस्तां तावद्यौवने शिशुकालक्रीडास्वपि। कथंभूताः प्रवृत्तयो वर्तन्ते। पराक्रमाक्रान्तवैरिकरिविहारभूमयः पराक्रमेण निजबलेन आक्रान्ता व्यापिता वैरिकरिणां शत्रुगजानां विहारभूमयः करिधावनधरणयः पर्यटनभूमयो यासु प्रवृत्तिषु तास्तथोक्ताः। तव कथंभूतस्य केसरिकिशोरकस्येव पञ्चाननबालकस्येव। पुनः कथंभूतास्तव प्रवृत्तयः। शरासारप्रसरसूत्रितसपत्नपुरप्रासादमेदिनीदूर्वाङ्कुरप्ररोहाः शरासारप्रसरसूत्रिता आरोपिताः

रच्चन्द्रस्येव निखिलजगद्धामधवलनारब्धयशःप्रकाशामृतवृष्टयः, सुरफलेग्रहेरिव संतर्पितार्थिजनहृदयमनोरथाः, प्रतिपन्नदीक्षितस्येव सत्यशुचिवचनरचनाप्रपञ्चितयः, प्रथमयुगावतारस्येव धर्ममहोत्सवपरायणाः, सुधापयोधरस्येव प्रमोदितसकलभुवनभागभुवः । तत्परमेतदेवाशास्महे—भवन्तु श्रीसरस्वतीसमागमानुबन्धीनि सिन्धुसलिलानीव चिरमायूंषि, परिपालयतु भवान्प्र-

---

सपत्नानां शत्रूणां पुराणां नगराणां प्रासादानां मन्दिराणां मेदिनीषु भूमिषु दूर्वाङ्कुराणां प्ररोहाः प्रादुर्भावास्तास्तथोक्ताः । तव कथंभूतस्य । पयोधरसमयस्येव जलदकालस्येव यथा पयोधरसमयस्य प्रवृत्तयः सराणां जलानाम् । तथा चोक्तम्—'बवयोर्डलयोश्चैव रलयोः शषयोस्तथा । अभेदमेव वाञ्छन्ति येऽलंकारविदो बुधाः ॥' आसारस्य वेगवद्वर्षस्य प्रसरेण व्याप्त्या सूत्रिताः सपत्नपुरप्रासादमेदिनीषु दूर्वाङ्कुरप्ररोहाः शतपर्वाङ्कुरप्ररोहा भवन्ति । पुनः कथंभूतास्तव प्रवृत्तयः । निखिलजगद्धामधवलनारब्धयशःप्रकाशामृतवृष्टयः निखिलं समग्रं यज्जगत् त्रैलोक्यं तदेव धाम गृहं तस्य धवलने उज्ज्वलीकरणे आरब्धा रचिता यशःप्रकाश एव अमृतवृष्टिर्याभिः प्रवृत्तिभिस्तास्तथोक्ताः । तव कथंभूतस्य । शरच्चन्द्रस्येव यथा शरच्चन्द्रस्य प्रवृत्तयः सर्वजगद्गृहधवलने आरब्धामृतवृष्टयो भवन्ति । पुनः कथंभूतास्तव प्रवृत्तयः । संतर्पितार्थिजनहृदयमनोरथाः संतर्पिता सम्यक्प्रीणिता अर्थिजनानां याचकानां हृदयमनोरथाः चित्तवाञ्छा याभिः प्रवृत्तिभिस्तास्तथोक्ताः । तव कथंभूतस्य । सुरफलग्रहेरिव कल्पवृक्षस्येव यथा कल्पवृक्षस्य प्रवृत्तयो अर्थिजनहृदयमनोरथान् तर्पयन्ति । पुनः कथंभूतास्तव प्रवृत्तयः । सत्यशुचिवचनरचनाप्रपञ्चितयः सति सत्पुरुषे भवं सत्यं अनृतवर्जितं वचनं तेन शुचीनि पवित्राणि यानि वचनानि तेषां रचनानां कल्पनानां प्रपञ्चितिर्विस्तारो यासु प्रवृत्तिषु तास्तथोक्ताः । तव कथंभूतस्य । प्रतिपन्नदीक्षितस्येव अङ्गीकृतमहाव्रतस्य मुनेर्वृत्तयः सत्यशुचिवचनरचनाप्रपञ्चितयो भवन्ति । पुनः कथंभूतास्तव प्रवृत्तयः । धर्ममहोत्सवपरायणाः धर्ममहोत्सवेषु पूजादानादिलक्षणेषु परायणास्तत्परास्ताः । तव कथंभूतस्य । प्रथमयुगावतारस्येव कृतयुगप्रथमप्रवेशस्येव । पुनः कथंभूतास्तव प्रवृत्तयः । प्रमोदितसकलभुवनभागभुवः प्रमोदिता हर्षं प्रापिताः सकलभुवनभागस्य त्रैलोक्यप्रदेशस्य मर्त्यलोकस्य वा भुवो भूमयो याभिः प्रवृत्तिभिस्ताः प्रमोदितसकलभुवनभागभुवः । तव कथंभूतस्य । सुधापयोधरस्येव अमृतमेघस्येव । यद्यपि तव किमप्युपदेष्टव्यं नास्ति तत्तस्मात् करणात् परं केवलं एतदेव इदमेव वयं आशास्महे आशीर्वादान् ददामहे—भवन्तु संजायन्तां श्रीसरस्वतीसमागमानुबन्धीनि लक्ष्मीसरस्वतीसमागमवर्तीनि चिरं दीर्घकालं तव आयूंषि जीवितकालाः भवन्तु । कानीव । सिन्धुसलिलानीव समुद्रजलानीव । इदं प्रत्यक्षीभूतं अशेषं समग्रं इलावलयं भूमिमण्डलं भवान् परिपालयतु त्वं रक्ष । क इव । प्रजापतिरिव वृषभनाथ इव । कथंभूतं

जापतिरिव पूर्वावनीश्वरपरम्परायातपरिपालनोपदेशमशेषमिदमिलावलयम्, विश्रामयतु चास्माकमरालकालमवनिभारोद्धरणग्लपितमिमं युगंधरप्रदेशम् । वयं तु सांप्रतं भवद्भुजगजारोपितसमस्तसाम्राज्यभाराश्चिरायप्रार्थितचतुर्थपुरुषार्थसमर्थनमनोरथसाराः परंवयःपरिणतिदूतीनिवेदितनिसर्गप्रणयायास्तपोवनाश्रमरमायाः समागमावसरवर्त्मानमिवात्मानं कर्तुमीहामहे ।'

**यशोधरः**—'समस्तभुवनभूपालस्तूयमानकीर्तिकुलदेवत तात, युक्तमेवैतत् । किंतु क्षितिपतिसुतानामखिलमनोरथेषु कामधेनुरपीयं राज्यलक्ष्मीः सकलदिक्पालकुलश्लाध्यमानपादसेव देव, तातमन्तरेण किमपि सुखमुत्पा-

---

इलावलयम् । पूर्वावनीश्वरपरम्परायातपरिपालनोपदेशम् पूर्वे प्रथमे भरतादय अवनीश्वराः पृथिवीपतयस्तेषां परम्परया प्रवाहेण आयाताः आगताः परिपालनस्य रक्षणस्य उपदेशः शिक्षा यस्य इलावलयस्य तत्तथोक्तम् । इमं प्रत्यक्षीभूतं अस्माकं युगंधरप्रदेशं स्कन्धं भवान् विश्रामयतु विश्रामं प्रापयतु । कथंभूतं युगंधरप्रदेशम् । अरालकालप्रचुरकालपर्यन्तं अवनिभारोद्धरणग्लपितं अवनेः पृथिव्याः भारोद्धरणेन भारोच्चलनेन ग्लपितं श्रान्तम् । वयं तु एते वयं तपोवनाश्रमरमायाः तपोवनलक्ष्म्याः समागमावसरवर्त्मानमिव समागमस्य अवसरस्तस्य वर्त्म मार्गो यस्यात्मनः समागमावसरवर्त्मानमिव तथोक्तम् आत्मानं निजचेतनस्वभावं कर्तुं विधातुं सांप्रतमिदानीं ईहामहे इच्छाम । इवशब्द एवमेव । कथंभूता वयम् । भवद्भुजगजारोपितसमस्तसाम्राज्यभाराः भवतस्तव भुजो दोर्दण्डः स एव गजो गजेन्द्रः सर्वभारक्षमत्वात् तस्मिन् आरोपितो निवेशितः समस्तसाम्राज्यस्य सकलपृथ्वीराज्यस्य भारो भरो यैस्ते तथोक्ताः । पुनः कथंभूता वयम् । चिराय दीर्घकालेन प्रार्थितः याचितः चतुर्थः पुरुषार्थो मोक्षस्तस्य समर्थनस्य परिपूर्णकारणस्य ये मनोरथा दोहदानि तैः साराः सारीभूता बलवत्तराः । कथंभूतायास्तपोवनाश्रमरमायाः । परंवयःपरिणतिदूतीनिवेदितनिसर्गप्रणयायाः परवयसो वार्धकस्य परिणतिः पर्यायः सैव दूती संदेशहारिणी तया निवेदितः कथितो निसर्गप्रणयः स्वभावप्रेम यस्याः सा तथा तस्याः ॥

**यशोधरो** ब्रूते—हे समस्तभुवनभूपालस्तूयमानकीर्तिकुलदेवत समस्तभुवनस्य पृथ्वीमण्डलस्य भूपालै राजभिः स्तूयमाना कीर्तिकुलदेवता यस्य स तथा तस्य संबोधनं हे समस्तभुवनभूपालस्तूयमानकीर्तिकुलदेवत हे तथोक्त । हे तात हे पितः । युक्तमेवैतत् एतावता युक्तं न भवति । किंतु क्षितिपतिसुतानां राजपुत्राणां अखिलमनोरथेषु समस्ताशयेषु कामधेनुरपि दिव्यगौरपि इयं राजलक्ष्मीरेषा नार्पत्यसंपत् हे सकलदिक्पालकुलश्लाध्यमानपादसेव सकलैः समस्तैः दिक्पालकुलै राज्यबृन्दैः श्लाध्यमाना स्तूयमाना पादसेवा

दयत्यपि पुनः कार्यव्यासङ्गपरम्पराभिर्मदनफलप्रयुक्तिरिव भुक्तमाहारमतिबहुलहृदयखेदमुद्वमयति।

स्वच्छन्दवृत्तेः शनिदृष्टिरेषा सुखोत्सवोपायविधौ च विष्टिः।
केतूद्गतिः केलिमनोरथानां श्रीः स्याद्विना तातमनर्थहेतुः॥ १६२॥
विना विनेतारमयं वृथा स्याद्यथा गजानां विनयोपदेशः।
राज्यं तथा राजकुमारकाणां विना विनेतारमिदं वृथैव॥ १६३॥

---

यस्य स तथा तस्य संबोधनं हे तथोक्त। हे देव हे राजन्। तातमन्तरेण पितरमन्तरेण विना किमपि किंचिदपि सुखं शर्म उत्पादयति जनयत्यपि। अपीति संभावनायाम्। पुनः कार्यव्यासङ्गपरम्पराभिः कार्यस्य योऽसौ व्यासङ्गः प्रसङ्गस्तस्य परम्पराः ताभिः कृत्वा मदनफलप्रयुक्तिरिव राजफलभक्षणमिव भुक्तमाहारमास्वादितमतिबहुलहृदयखेदम् अतिप्रचुरं यस्य भवत्येवं उद्वमयति बहिर्निष्कासयति॥

**स्वच्छन्दवृत्तेरित्यादि।** तातं पितरं विना एषा इयं श्रीर्लक्ष्मीरर्थनहेतुर्दुःखकारणं स्याद्भवेत्। कथंभूता एषा श्रीः। स्वच्छन्दवृत्तेः स्वाधीनप्रवर्तनस्य शनिदृष्टिः परिपूर्णशनैश्चरदृष्टिः। तथा चोक्तम्—'दशमतृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रे च। पश्यन्ति पादवृद्ध्या फलानि चैव प्रयच्छन्ति॥' पुनः कथंभूता इयं श्रीः। सुखोत्सवोपायविधौ च विष्टिः सुखस्य उत्सवोपायविधाने विष्टिः। सप्तमं करणं सुखकार्यं भुनक्तीत्यर्थः। तथा चोक्तम्—'कृष्णे च त्रिदशारात्रौ दिवा सप्तचतुर्दशी। चतुर्थ्येकादशीरात्रौ अष्टमी पूर्णिमा दिवा॥' कानि तानि सप्तकरणानि—'ववं च बालवं चैव कौलवं तैतिलं तथा। वणिजं गरं च विष्टिश्च एवं करणसप्तकम्॥' चत्वारि स्थिरकरणानि। तथा-चोक्तम्—'चतुर्दशी या शशिभिः प्रहीणा तस्या विभागे शकुनिर्द्वितीये। दशद्वयोस्तश्चतुरङ्घ्रिनागे किंस्तुघ्नमाद्ये प्रतिपद्दले च॥' कथंभूता श्रीः। केलिमनोरथानां केतूद्गतिः क्रीडादोहदानां नवमग्रहोदयः क्रीडां भनक्तीत्यर्थरूपकम्॥

**विनेत्यादि।** यथा येन प्रकारेण गजानां हस्तिनां विनयोपदेशः शिक्षोपदेशो विनेतारं विना हस्तिपकं विना वृथा स्यान्निष्फलो भवेत्। तथा राजकुमारकाणां राजपुत्राणां इदं राज्यं विनेतारं पितरं विना वृथा स्यात्। दृष्टान्तालंकारः॥

---

१. 'गृहाधिष्ठितराशेः सकाशाद्दशमे तृतीये पाददृष्ट्या पश्यति। नवमपञ्चमे द्विपाददृष्ट्या पश्यति। चतुर्थाष्टमे तृतीयपाददृष्ट्या पश्यति। कलत्रे सप्तमे संपूर्णदृष्ट्या पश्यति' इत्यर्थः।

गुरावर्पितभूभाराः सुखं ये न समासते।
तेषां दिवापि धीव्योम्नि चिन्ताध्वान्तं विजृम्भताम् ॥ १६४ ॥

किं च।

पुत्रास्ते ननु पुण्यकीर्तनपदं तेऽनर्घ्यजन्मोत्सवा-
स्ते पुत्रार्थिजनस्य वंशतिलकास्ते च श्रियः केतनम्।
आदेशावसरे गुरोरनुचराः शिष्याः श्रुताराधने
कोपे सप्रणयाः प्रसादसमये ये च प्रसन्नोदयाः ॥ १६५ ॥

निजप्रतापभावसंभावितभूर्भुःस्वस्त्रयीमहोद्याव देव, 'आत्मा वै पुत्रः' इति विदितशास्त्रहृदयानां गृहमेधीयानां पुराणपुरुषावगाह्यमैतिह्यम्। इदानीं

---

गुरावित्यादि। ये राजपुत्राः गुरौ, पितरि अर्पितभूभाराः समारोपितभूमिभाराः सुखेन यथा भवत्येवं न समासते न सम्यक् तिष्ठन्ति। तेषां राजपुत्राणां दिवापि दिवसेऽपि। अपिशब्दाद्रात्रावपि। धीव्योम्नि बुद्ध्याकाशे चिन्ताध्वान्तं अत्यन्धकारं विजृम्भतां प्रसरतु। रूपकालंकारः॥

किं च। ईषद्विशेषं वर्णयतीत्यर्थः। पुत्रा इत्यादि। ते पुत्रा ननु निश्चयेन पुण्यकीर्तनपदं पवित्रकीर्तेः स्थानं भवन्ति। ते पुत्रा अनर्घ्यजन्मोत्सवाः दुर्लभजन्ममहोत्सवाः भवन्ति। ते पुत्राः पुत्रार्थिजनस्य पुत्रार्थिलोकस्य वंशतिलकाः कुलमण्डनं भवन्ति। ते पुत्राः श्रियो लक्ष्म्याः केतनं गृहं च भवन्ति। ते के। ये पुत्राः गुरोः पितुरादेशावसरे आदेशकाले अनुचराः किंकरा भवन्ति। श्रुताराधने शास्त्राभ्यासकाले शिष्याः अन्तेवासिनो भवन्ति। गुरोः कोपे सप्रणयाः सस्नेहा भवन्ति। गुरोः प्रसादसमये कारुण्यकाले प्रसन्नोदयाः प्रसन्नहृदया निर्मलचेतसश्च भवन्ति। रूपकालंकारः। समुच्चयालंकारश्च॥

निजप्रतापेत्यादि। हे निजप्रतापप्रभावसंभावितभूर्भुवःस्वस्त्रयीमहोद्याव निजप्रतापस्य स्वकीयतेजसः प्रभावेन माहात्म्येन संभावितो हृदयमानीतो भूर्भुवःस्वःत्रय्या अधोमध्योर्ध्वलोके महोद्याव उत्सवो येन स तथा तस्य संबोधनं हे तथोक्त। हे देव हे राजाधिराज परमाराध्य। 'आत्मा वै पुत्रः' इति वेदे वाक्यमस्ति। पुत्रो वै निश्चयेन आत्मा वर्तते इतीदृशं गृहमेधीयानां गृहस्थानां ऐतिह्यमनादिवार्ता वर्तते। कथंभूतमैतिह्यम्। पुराणपुरुषावगाह्यम् पुराणपुरुषेण श्रीनारायणेन अवगाह्यं माननीयम्। कथंभूतानां गृहमेधीयानाम्। विदितशास्त्रहृदयानां विज्ञातवेदशास्त्रमर्मणाम्। उक्तं च उपनिषत्काण्डे—'अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक' इति। सोऽयं

तमन्तरेण को नाम निःश्रेयसधाम परस्तपःप्रारम्भावसरः । स्वकीयवंशाभिवृद्धिक्षेत्रात्पुत्राद्धर्मोऽपि नापरः समस्ति । यतः शास्त्रकृतः पुमांसं प्रसाधितात्मीयान्वयोदयमीमांसं दुरीहितागमाज्जन्मान्तरसंगमात्त्रायते यस्तं पुत्रं निर्वर्णयन्ति ।

ततः ।

राज्यस्य तपसो वापि देवे श्रितवति श्रियम् ।
अहं छायेव देवस्य सहवृत्तिपरायणः ॥ १६६ ॥

इत्येकताचित्तसंतानस्य प्रतिजिज्ञासमानस्य मे प्रत्यादिश्य त्रिदशैरप्यनुल्लङ्घनीयव्यापारेण भ्रूक्षेपेण व्याहारव्यवहारमादाय स्वकीयान्मुक्ति-

---

मनुष्यलोकः पुत्रेणैव जय्यो नान्येन । कर्मणा पितृलोकः, विद्यया देवलोकस्त्रैलोक्यानां श्रेष्ठस्तस्माद्विद्यां प्रशंसन्ति । हे तात, इदानीमधुना तमन्तरेण पुत्रं विना को नाम । नामेति संभावनायाम् । पर अन्यस्तपःप्रारम्भावसरः । कथंभूतस्तपःप्रारम्भावसरः । निःश्रेयसधाम निर्वाणस्थानम् । हे तात, पुत्रादपरो धर्मोऽपि न समस्ति न सम्यग्वर्तते । कथंभूतात्पुत्रात् । स्वकीयवंशाभिवृद्धिक्षेत्रात् निजान्वयवंशवृक्षाभिवर्धनभूमिस्थानात् । यतो यस्मात्करणात् शास्त्रकृतो व्यासवाल्मीकियाज्ञवल्क्यपाराशरादयो विद्वांसो जन्मान्तरसंगमात् पुनर्भवसंगतेर्यः पुमांसं त्रायते रक्षति तं पुत्रं निर्वर्णयन्ति । कथंभूतं पुमांसम् । प्रसाधितात्मीयान्वयोदयमीमांसम् । प्रसाधिता सम्यग्ज्ञाता आत्मीयस्य निजस्य अन्वयस्य कुलस्य उदयस्य मीमांसा विचारणा येन पुंसा स तथा तम् । कथंभूताज्जन्मान्तरसंगमात् । दुरीहितागमात् दुरीहितस्य दुश्चेष्टितस्य पापकर्मण आगमो यस्मिन् जन्मान्तरसंगमे स तथा तस्मात् ॥

ततस्तस्मात् कारणात् । [ **राज्यस्येति** । ] राज्यस्य श्रियं तपसो वापि श्रियं देवे त्वयि श्रितवति आश्रितवति सति अहं देवस्य तव सहवृत्तिपरायणः सहगमनतत्परो भविष्यामि । केव । छायेव तव शरीरस्य छायासमानः ॥

**इतीति** । इति अमुना प्रकारेण एकताचित्तसंतानस्य एकाग्रमनःप्रवृत्तेः प्रतिजिज्ञासमानस्य प्रतिज्ञां कुर्वाणस्य भ्रूक्षेपेण नेत्रोपरिस्थितरोमराज्या कृत्वा व्याहारव्यवहारं वचनप्रवर्तनं प्रत्यादिश्य निषिध्य कण्ठदेशात् एकावलीं आदाय हारविशेषं गृहीत्वा मे मम बबन्ध मे ग्रीवां निचिक्षेप । कथंभूतेन भ्रूक्षेपेण । त्रिदशैरपि आसतां तावन्मनुष्याः देवैरपि अनुल्लङ्घनीयव्यापारेण अनतिक्रमणीयचेष्टितेन । कण्ठदेशात् कथंभूतात् । स्वकीयादात्मीयात् । पुनः कथंभूतात् कण्ठदेशात् । मुक्तिलक्ष्मीसमालिङ्गनाभ्यासात् मुक्तिलक्ष्म्याः मुक्तिश्रियः संबन्धि यत्समालिङ्गनमुपग्रहणं तदभ्यासे

लक्ष्मीसमालिङ्गनाभ्यासात्कण्ठदेशादखिलमहीवलयवश्यतादेशमालामिव तारतरलमुक्ताफलामेकावलीं बबन्ध ।

यौवराज्याय समादिश्य च पट्टबन्धविवाहमहोत्सवाय खेदमोदमन्दायमानसर्गं सामन्तवर्गं विहितबहुसभाजनं परिजनं च भगवतः समस्तश्रुतस्कन्धोद्धरणसमर्थमतिप्रसरस्य संयमधरस्य महर्षेः संनिकर्षे मनोजसामजमदमहोदधितरङ्गसंचयमिव कचनिचयमपहायाभिलषितमन्वतिष्ठत् ।

तदन्वपरेद्युर्मम महादेव्या यागनागस्य तुरगस्य चानुकूलात्मन्यहनि वि-

---

समीपे यस्य कण्ठदेशस्य स तथा तस्मात् । कथंभूतामेकावलीम् । अखिलमहीवलयवश्यतादेशमालामिव अखिलस्य समस्तस्य महीवलयस्य भूमण्डलस्य वश्यतादेशः वशीकरणनिमित्तं तस्य मालामिव स्रजमिव । पुनः कथंभूतामेकावलीम् । तारतरलमुक्ताफलां ताराणि उज्ज्वलानि तरलान्यपि नायकीभूतानि मुक्ताफलानि यस्यां सा तथा ताम् ।

स राजा यशोर्धः संयमधरस्य महर्षेः संनिकर्षे समीपे अभिलषितमन्वतिष्ठत् दीक्षां जग्राह । किं कृत्वा । पूर्वं सामन्तवर्गं नृपतिसमूहं परिजनं च कुटुम्बवर्गं च यौवराज्याय युवराजस्थापनार्थं पट्टबन्धविवाहमहोत्सवाय वा राज्यपट्टबन्धमहोत्सवाय विवाहमहोत्सवाय च समादिश्य आदेशं दत्वा । कथंभूतं सामन्तवर्गम् । खेदमोदमन्दायमानसर्गम् खेदस्य दुःखस्य मोदस्य हर्षस्य च मन्दायमानो वर्धमानः सर्गः सृष्टिर्यस्य स तथा तम् । कथंभूतं परिजनम् । विहितबहुसभाजनम् । विहितमाचरितं बहु प्रचुरं सभाजनं प्रीतिर्येन परिजनेन स तथा तम् । कथंभूतस्य संयमधरस्य । भगवतः इन्द्रादिसेवितस्य । उक्तं च—'ऐश्वर्यस्य समग्रस्य तपसो नियमः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इति स्मृतिः ॥' एवं षडर्थविशेषणविशिष्टो भगो विद्यते यस्य स भवति भगवान् तस्य भगवतः । पुनः कथंभूतस्य संयमधरस्य । समस्तश्रुतस्कन्धोद्धरणसमर्थमतिप्रसरस्य समस्तश्रुतस्कन्धस्य द्वादशाङ्गशास्त्रस्य उद्धरणेन ग्रन्थतोऽर्थतश्च ज्ञानेन समर्थः प्रौढतरो बलवत्तरो मतिप्रसर आभिनिवोधिकज्ञानं यस्य स तथा तस्य । किं कृत्वा पूर्वमभिलषितमन्वतिष्ठत् । कचनिचयं केशकलापं अपहाय लुञ्चित्वा पञ्चमुष्टिभिर्लोचं कृत्वा । कथंभूतं कचनिचयम् । मनोजसामजमदमहोदधितरङ्गसंचयमिव मनोजः कन्दर्पः स एव सामजो गजस्तस्य मदो दर्पः स एव महोदधिर्महासमुद्रः । अपामतिगम्भीरत्वात् । तस्य तरङ्गसंचयमिव कल्लोलानां समूहमिव ॥

तदन्वित्यादि । तदनु यशोर्धमहाराजस्य दीक्षणादनन्तरं अपरेद्युरन्यस्मिन्नहनि मम यशोधरस्य महादेव्या अमृतमतेर्यागनागस्य पट्टहस्तिनस्तुरगस्य च यदास्य अनु-

हितगणकाह्वानः प्रतापवर्धनः सस्थपतिः सेनापतिः परिकल्पितसकलपट्टबन्धोत्सवोपकरणसंभारः शुभसंरम्भसारः पुण्यपानीयपूतोपान्ताश्रयाश्रमविप्रायाः शिप्रायास्तीरतरुणतरुविराजमानहरितः सरितः कूले कमनीयलीले यथोक्तलक्षणायां प्राक्प्रवणायां च भुवि समं समाचरितमहावीथीप्रचारेण शाखानगरेणानेकरत्नचितमेतदुचितमतिविचित्रवस्त्रशोभापनीतातपमभिषेकमण्डपमनेकतोरणमञ्चवेदिकावासविभक्तकक्षान्तरं संनिकायं विरचय्य,

---

कूलात्मनि हितस्वरूपे अहनि दिवसे विहितगणकाह्वानः कृतमौहूर्तिकामन्त्रणः प्रतापवर्धनो नाम सेनापतिरित्याचरत् इति कार्यं चकार । कथंभूतः सेनापतिः । सस्थपतिर्वास्तुविद्याचार्यसंयुक्तः । पुनः कथंभूतः सेनापतिः । परिकल्पितसकलपट्टबन्धोत्सवोपकरणसंभारः परिकल्पितो मेलितः सकलः समग्रः पट्टबन्धोत्सवसंबन्धी उपकरणसंभार उपस्करसमूहो येन स तथोक्तः । पुनः कथंभूतः प्रतापवर्धनसेनापतिः । शुभसंरम्भसारः मङ्गलेषु श्रेयस्करेषु संरम्भेषु सारः अतिचतुरः । किं कृत्वा । पूर्वं शिप्रायाः सरितः शिप्रानाम नद्याः कूले तटे प्राक्प्रवणायां पूर्वदिग्मुख्यायां भुवि अभिषेकमण्डपं संनिकायं गृहं विरचय्य विरचनं कारयित्वा । कथंभूतायाः शिप्रायाः सरितः । पुण्यपानीयपूतोपान्ताश्रयाश्रमविप्रायाः पुण्यं पवित्रं यत्पानीयमुदकं तेन पूताः पवित्रीकृता उपान्ताश्रयाश्रमाः तटविहितास्पदगृहाः विप्राः यतयो वा यया शिप्रया तथा तस्याः । पुनः कथंभूतायाः शिप्रायाः । तीरतरुणतरुविराजमानहरितः तीरसंबन्धिनो ये तरुणतरवो नवीनवृक्षास्तैर्विराजमानाः शोभमानाः हरितो दिशो यस्याः सा तथा तस्याः । कथंभूते कूले । कमनीयलीले कमनीया मनोहरा लीला शोभा यस्य कूलस्य तत्कमनीयलीलं तस्मिन् । कथंभूतायां भुवि । यथोक्तलक्षणायां वास्तुशास्त्रोक्तस्वरूपायाम् । अभिषेकमण्डपं कथं विरचय्य । शाखानगरेण समं प्रतिनगरेण सार्धम् । कथंभूतेन शाखानगरेण समाचरितमहावीथीप्रचारेण समाचरितः सम्यग्विहितो महावीथीप्रचारो हट्टमार्गप्रवर्तनं यस्य शाखानगरस्य तत्तथोक्तं तेन । कथंभूतमभिषेकमण्डपम् । अनेकरत्नचितं नानाविधमाणिक्यजटितम् । सुवर्णमयशोभाधिकमित्यर्थः । पुनः कथंभूतमभिषेकमण्डपम् । एतदुचितं विवाहपट्टाभिषेकयोग्यम् । पुनः कथंभूतमभिषेकमण्डपम् । अतिविचित्रवस्त्रशोभापनीतातपम् । अतिविचित्राणामतिमनोहराणां वस्त्राणां शोभाभिराडम्बरैरपनीतो दूरीकृत आतपो घर्मो येन अभिषेकमण्डपेन स तथा तम् । पुनः कथंभूतमभिषेकमण्डपम् । अनेकतोरणमञ्चवेदिकावासविभक्तकक्षान्तरम् । अनेकैर्बहुभिस्तोरणैरुपलक्षिता मञ्चाः प्रासादाश्च वेदिकाश्च कपिशीर्षरहितप्राकारा आवासाश्च धनवतां गृहाः तैर्विभक्तानि रचितानि कक्षान्तराणि वास्तुभूमयो यस्य स तथा तम् । कथंभूतः सेनापतिः । दिशि

दिशि दिशि निवेशिताशेषनरेश्वरशिविरः सपरिवारः समाहूय गजवाजिबलयोरधिकृतवंशमुद्धताङ्कुशमहामात्रं शालिहोत्रं च महासाधकम् 'अतित्वरितमुभाभ्यामपि भवद्भ्यामुभयनयनेदिष्टैः स्वामिहितप्रतिष्ठैः सहोन्नीय द्वे अप्याद्ये सेनाङ्गे देवस्य विज्ञापनीये' इत्याचरत् ।

तावुभावपि तद्वचनात्तथाचर्य तत्र परशुरामान्वयावकाश उद्धताङ्कुशस्तावदेवं मां व्यजिज्ञपत्—'देव, प्रतापवर्धनसेनापतिनिदेशान्मयोत्साहिताभिनि-

---

दिशि निवेशिताशेषनरेश्वरशिविरः दिशि दिशि सर्वदिक्षु निवेशितानि उपवेशितानि अशेषाणां सर्वेषां नरेश्वराणां राज्ञां शिविराणि सैन्यानि येन स तथोक्तः । पुनः कथंभूतः सेनापतिः । सपरिवारः निजपरिवारसहितः । किं कृत्वा पूर्वमित्याचरत् । उद्धताङ्कुशमहामात्रं उद्धताङ्कुशं नाम महामात्रं गजसेनामुख्यं शालिहोत्रं च अश्वसाधनकं समाहूय आकार्य । कथंभूतमुद्धताङ्कुशमहामात्रं शालिहोत्रं च । गजवाजिबलयोरधिकृतवंशम् गजबले अश्वबले च अधिकारी वंशः कुलं यस्य यथासंख्यं स तथा तम् । कथंभूतं उद्धताङ्कुशमहामात्रं शालिहोत्रं च । महासाधकं च प्रधानकर्माणं सेनापतिरित्याचरत् । इतीति किम् । भो उद्धताङ्कुश, भो शालिहोत्र, भवद्भ्यां युवाभ्यां उभाभ्यामपि द्वाभ्यामपि अतित्वरितमतिशीघ्रं उभयनयनेदिष्टैः गजवाजिशास्त्रविचक्षणैः साधुभिः पुरुषैः स्वामिहितप्रतिष्ठैः निजस्वामिहितसन्निष्ठैः तत्परैः सह सार्धं उन्नीय परीक्ष्य द्वे अपि गजवाजिलक्षणे आद्ये प्रथमे सेनाङ्गे देवस्य यशोधरस्य विज्ञापनीये निरूपणीये ॥

तावुभावपि उद्धताङ्कुशशालिहोत्रौ तद्वचनात् सेनापत्यादेशात् तथा तेनैव प्रकारेण आचर्य पूर्वोक्तपुरुषैः सह परीक्ष्य तत्र द्वयोर्मध्ये तावत् अनुक्रमेण उद्धताङ्कुशो नाम महामात्रो मां यशोधरं व्यजिज्ञपत् विज्ञापयामास । कथंभूत उद्धताङ्कुशः । परशुरामान्वयावकाशः । परशुरामकुलोत्पन्न इत्यर्थः । एवं कथमिति चेत्, हे देव, प्रतापवर्धनसेनापतिनिदेशात् आदेशात् सूरिपरिषत् विद्वन्मण्डली मन्मुखेन एवं विज्ञापयति । किं कृत्वा । पूर्वं एनं जगत्प्रसिद्धं कलिङ्गविषयाधिपतिप्रहितप्रतिवर्षदेयवेदण्डमण्डलीमध्ये एकं सिन्धुरं परीक्ष्य कलिङ्गविषयस्य योऽसावधिपतिः तेन प्रहिता प्रेषिता या प्रतिवर्षं वर्षं प्रति देया दातव्या वेदण्डमण्डली हस्तिसमूहः तस्या मध्ये एकमद्वितीयं सिन्धुरं परीक्ष्य । कथंभूतं सिन्धुरम् । देवस्य तव अनीकिनीतिलकवर्हं सेनामण्डनम् । पुनः कथंभूतम् । सपर्यार्हं पादप्रक्षालनपूजायोग्यम् । पुनः कथंभूतम् । उदयगिरिनामकं उदयगिरिरिति नाम यस्य स तथा तम् । कथंभूता सूरिपरिषत् । मया उद्धताङ्कुशेन गुरुराजमुख्याभ्यां च गुरुमुख्येन च राजमुख्येन च उत्साहिताभिनिवेशा उद्यमं प्रापिताभिप्रायाः । पुनः कथंभूता

वेशा गुरुराजमुख्याभ्यामिभचारियाज्ञवल्क्यवाद्धलिनरनारदराजपुत्रगौतमादिमहामुनिप्रणीतमतङ्गजैतिह्यावगाहसमीहमानमनःप्रचारा अतीतपरमेश्वरप्रसादासादितवीरामृतगणाधिपत्यसत्कारा विदितनिरवद्योपनिषत्सूरिपरिषद्देवस्यानीकिनीतिलकवर्हे सपर्यार्हे कलिङ्गविषयाधिपतिप्रहितप्रतिवर्षदेयवेदण्डमण्डलीमध्ये सिन्धुरमेकमुदयगिरिनामकं परीक्ष्य मन्मुखेनैवं विज्ञापयति—

तथा हि-कलिङ्गजं वनेन,कुलेनैरावणम् , समं प्रचारेण,देशेन साधारणम् ,

---

सूरिपरिषत् । इभचारियाज्ञवल्क्यवाद्धलिनरनारदराजपुत्रगौतमादिमहामुनिप्रणीतमतङ्गजैतिह्यावगाहसमीहमानमनःप्रचारा इभचारी च याज्ञवल्क्यवाद्धलिश्च नरश्च नारदश्च राजपुत्रश्च गौतमश्च इभचारियाज्ञवल्क्यवाद्धलिनरनारदराजपुत्रगौतमाः ते आदिर्येषां गर्गादीनां महामुनीनां तैः प्रणीतानि यानि मतङ्गजैतिह्यानि गजपरीक्षाशास्त्राणि तेषामवगाहेन पठितपाठिताभ्यासेन समीहमानः प्रवर्तमानो मनःप्रचारश्चित्तव्यापारो यस्याः सूरिपरिषदः सा तथोक्ता । सूरिपरिषत्पुनः कथंभूता । अतीतपरमेश्वरप्रसादासादितवीरा अतीतपरमेश्वरस्य यशोर्घमहाराजस्य प्रसादेन आसादिताः प्राप्ताः वीरा वीरगणा हस्तिशिक्षादायिनो यया सा तथा । पुनः कथंभूता सूरिपरिषत् । अमृतगणाधिपत्यसत्कारा अमृतगणाधिपत्यस्य हस्तिवैद्यस्य सत्कारः सन्मानो यस्याः सा तथा । पुनः कथंभूता सूरिपरिषत् । विदितनिरवद्योपनिषत् विदिता विज्ञाता निरवद्या निर्दोषा उपनिषदधिकरणं कृतं यया सा तथोक्ता ॥

तथाहि । उद्धताङ्कुशस्तदेवं विज्ञापयति—कलिङ्गजेत्यादि । कलिङ्गजं वनेन । वनेन कृत्वा कलिङ्गजं सिन्धुरं विज्ञापयति । विशेषणतृतीया । उक्तं च—'उत्कलानां च देशस्य दक्षिणस्यार्णवस्य च । सह्यस्य चैव विन्ध्यस्य मध्ये कालिङ्गजं वनम् ॥' तथा च—'कुलजातिवयोरूपैश्वारवर्ष्मबलायुषाम् । सत्त्वप्रचारसंस्थानदेशलक्षणरंहसा ॥ एषां चतुर्दशानां तु यो गुणानां समाश्रयः । स राज्ञो यागनागः स्याद्भूरिभूतिसमृद्धये ॥' तथा च—'कालिङ्गजा गजाः श्रेष्ठाः' इति वचनात् । कथंभूतं सिन्धुरम् । कुलेन ऐरावणगजः । श्वेतवर्णो भवति स ऐरावणगजकुल उच्यते । 'हरिर्वा(द्वा) श्यामवर्णो वा कालो वा व्यक्तवर्णकः । हरितः कुमुदाभो वा कुलवर्णः समुच्यते ॥' समं प्रचारेण । गिरिनदीनां प्रचारेषु समप्रचारस्तस्यैव प्रशस्तता । तदाह—'मिश्रो वा गिरिचारी वा कलिङ्गाकारजानिकः । सात्त्विको भद्रजातिश्च स तत्त्वात्कादिभिः शुभः । इत्येतैर्लक्षणैर्युक्तं यागनागं प्रचक्षते ॥' देशेन साधारणम् । 'अनूपजाङ्गलगुणैः समं साधारणः स्मृतः ।' जल-

---

१. 'वाह्नलि' ख.

भद्रं जन्मना, संस्थानेन समसंबद्धम्, उत्सेधायामपरिणाहैः समसुविभक्तसर्वकायम्, आयुषा द्वादशापि दशा भुञ्जानम्, अङ्गेन स्वायतव्यायतच्छविम्, आशंसनीयं वर्णप्रभाच्छायासंपत्तिभिः, कल्याणमाचारशीलशोभावेदितैः, प्रशस्तं लक्षणव्यञ्जनाभ्याम्, उत्तमं बलवर्ष्मवयोजवैः, ब्राह्मं संबन्धि-

---

प्रायेऽपि देशे प्रवर्तते, निर्जलदेशेऽपि प्रवर्तते स साधारणः कथ्यते। भद्रं जन्मना। जात्या कृत्वा भद्रं विज्ञापयति। संस्थानेन समसंबद्धम्। उत्सेधायामपरिणाहैः समसुविभक्तसर्वकायम्। समेन संस्थानेन सुष्ठु विभक्तो विभागीकृतः सर्वकायः शरीरं यस्य स तम्। समचतुरस्रसंस्थानेन संबद्धशरीरमित्यर्थः। उत्सेध ऊर्ध्वता, आयामो दीर्घता, परिणाहो वृत्तता, एतैर्गुणैः समसंबद्धशरीरम्। आयुषा द्वादशापि दशा भुञ्जानम्। दशवार्षिकी एकादशा ईदृशीः द्वादशापि दशाः भुञ्जानं जीवन्तम्। अङ्गेन स्वायतव्यायतच्छविम्। स्वायता ऊर्ध्ववृत्तिरहिता व्यायता तिर्यग्वलिरहिता छविस्त्वचा यस्य स तथा तं विज्ञापयति। आशंसनीयं वर्णप्रभाच्छायासंपत्तिभिः। आशंसनीयः वर्णः पूर्वोक्तलक्षणः प्रभा कान्तिश्छाया पार्थिवी आप्या तैजसी नाम्ना अन्यतमा वर्तते विज्ञापयति। कल्याणं शुभं विज्ञापयति। [कैः।] आचारशीलशोभावेदितैः आचारः कायगतः शीलं मनोगतं शोभा शरीरोपचयशोभा शरीरोपचयविशेषः। सा शोभा सप्तधा भवति। तदुक्तम्—'सालोहिता प्रतिच्छन्ना तृतीया पक्षलेपना। समकक्षा चतुर्थी स्यात्पञ्चमी समतल्पता। व्यतिकीर्णा च षष्ठी स्यात् द्रोणिका सप्तमी स्मृता॥' सप्तशोभासु मध्ये श्रेयसी चतुर्थी—'चतुर्थीशोभया युक्तो मदयुद्धक्षमो गजः।' इति वचनात्। आवेदितं अर्थवेदिता तैराचारशीलशोभावेदितैः कृत्वा। प्रशस्तं लक्षणव्यञ्जनाभ्याम्। प्रशस्तं विज्ञापयति। काभ्याम्। लक्षणव्यञ्जनाभ्याम्। तदुक्तम्—'लक्षणं जन्मसंबन्धमाजीवादिति निश्चितम्। पश्चाद्यर्त्कि व्रजेयस्तु तद्व्यञ्जनमिति स्मृतम्॥' अथवा कररदनादिकं लक्षणं बिन्दुस्वस्तिकादिकं व्यञ्जनम्। उत्तमं विज्ञापयति। कैः। बलवर्ष्मवयोजवैः कृत्वा। बलमध्वगमनस्तम्भप्रमर्दनभारारोपणक्षमणलक्षणम्, वर्ष्म शरीरं सप्तोत्सेधेन वायामदशपरिणाहलक्षणप्रमाणम्, वयस्त्रयोविंशतेर्वर्षाणामूर्ध्वमाषष्टिम्, जवो भद्रस्यायमुत्तमः दशधनुर्व्यवहितं वीरपञ्चाशद्धनुर्मध्ये यदि गृह्णीयात् तैर्बलवर्ष्मवयोजवैः। तदुक्तम्—'वीथ्यादौ दश सप्त पञ्च पुरुषं कृत्वा पदाभ्यन्तरे भद्रामन्दमृगानवेति गमिनोर्गर्जीवेनोच्छिताः (?)। पञ्चाशत्पद एव तत्पदशते सार्धे पदानां शते गृह्णीयुः स्वनवत्कमोक्तधनुषा वंशे निदेशादरात्॥' पदाभिधधनूंषीत्यर्थः। ब्राह्मं संबन्धिलक्षणेन। ब्राह्मं ब्रह्मदैवतसंबन्धिलक्षणेन ब्राह्मं विज्ञापयति। तदुक्तम्—'ननु बिन्दुसदन्तेषु कुशातलनिभच्छविः। चारुदृष्टित्वमन्येक्षो ब्राह्मः सर्वा-

---

१. 'वलि' क. २ 'गर्जनेन उत्थिता' क. ३ 'मिते साद' क.

लक्षणेन, भवन्तमिवानवद्यैर्गतिरूपसत्त्वस्वरानूकैः प्रियालोकम्, विनायकमिव पृथुपरिपूर्णायतमुखम्, अशोकपुष्पमिवारुणं तालुनि, कमलकोशमिव शोणप्रकाशमन्तरास्ये, पीनोपचितकायमुरोमणिविक्षोभकटकपोलसृक्कसु, अनुन्नतानवनतसुप्रमाणकुम्भम्, ऋजुपूर्णह्रस्वकन्धरम्, अलिनीलघनदीर्घस्निग्धकेशपेशलम्, समसूद्गतव्यूढमस्तकपिण्डम्, अनल्पासनावकाशम्, आरोपितकार्मुकाकारपरिणतानुवंशम्, अजकुक्षिम्, अनुपदिग्धपेचकम्,

---

र्थसाधनः ॥' भवन्तमिवानवद्यैर्गतिरूपसत्त्वस्वरानूकैः प्रियालोकम् । भवन्तमिव त्वत्सदृशं प्रियालोकं प्रियदर्शनं विज्ञापयति । कैः कृत्वा । गतिरूपसत्त्वस्वरानूकैः गतिर्गजवाजिशार्दूलादीनाम्, रूपं देवमनुष्यविद्याधरादीनाम्, सत्त्वं मनुष्ययक्षगन्धर्वादीनाम्, स्वरो जीमूतशङ्खादीनां अनूकं अनूकरोति । सदृशतामिति यावत् । अनूकशब्दो गत्यादीनां प्रत्येकमपि संवन्धनीयः । गतिश्च रूपं च सत्त्वं च स्वरश्च गतिरूपसत्त्वस्वरास्तेषामनूकैः सादृश्यैः । कथंभूतैर्गत्यादीनां सादृश्यैः । अनवद्यैर्निर्दोषैः । पुनः कथंभूतं विज्ञापयति । विनायकमिव पृथुपरिपूर्णायतमुखम् । पृथु विस्तीर्णं परिपूर्णं संपूर्णं आयतं दीर्घं मुखं यस्य स तथा तं विघ्नराजमिव । पुनः कथंभूतम् । अशोकपुष्पमिवारुणं तालुनि । तालुनि तालुविषये अरुणमव्यक्तरागम् । किमिव । अशोकपुष्पमिव यथा अशोकपुष्पं अरुणं भवति । पुनः कथंभूतम् । कमलकोशमिव शोणप्रकाशमन्तरास्ये । अन्तरास्ये मुखमध्ये शोणप्रकाशं कोकनदच्छविम् । किमिव । कमलकोशमिव पद्मगर्भमिव । पुनः कथंभूतम् । पीनोपचितकायमुरोमणिविक्षोभकटककपोलसृक्कसु । उरोमणि हृदयं विक्षोभकटकः श्रोणिफलकं कपोलौ गण्डस्थले सृक्कणी ओष्ठप्रान्तौ तानि तेषु पीनोपचितकायं स्थूलवृद्धशरीरम् । पुनः कथंभूतम् । अनुन्नतानवनतसुप्रमाणकुम्भम् । न उन्नतौ अत्युच्चौ न अवनतौ नीचैस्तरौ सुप्रमाणौ उत्तमस्त्रीस्तनाकारौ कुम्भौ शिरसः पिण्डौ यस्य स तथा तम् । पुनः कथंभूतम् । ऋजुपूर्णह्रस्वकन्धरम् । ऋजुरवक्रा पूर्णा मांसला ह्रस्वा अदीर्घा कन्धरा ग्रीवा यस्य स तथा तम् । पुनः कथंभूतम् । अलिनीलघनदीर्घस्निग्धकेशपेशलम् । अलिवद्भ्रमरवन्नीलाः कृष्णवर्णा घना अविरला दीर्घा अह्रस्वा स्निग्धाः कान्तिमन्तो ये केशास्तैः पेशलो अतिमनोहरस्तम् । पुनः कथंभूतम् । समसूद्गतव्यूढमस्तकपिण्डम् । समः अव्यक्तः सुष्ठु अतिशयेन उद्गतः प्रादुर्भूतो व्यूढो निबिडो मस्तकपिण्डः यस्य स तम् । पुनः कथंभूतम् । अनल्पासनावकाशम् । अनल्पो बृहदासनस्य पृष्ठदेशस्य अवकाशः संमितिर्यस्य स तथा तम् । पुनः कथंभूतम् । आरोपितकार्मुकाकारपरिणतानुवंशम् । आरोपितं सप्रत्यञ्चं यत् कार्मुकं धनुस्तदाकारेण परिणतः पर्यायं गतो अनुवंशः अनुक्रमेण वंशः पृष्ठं यस्य स तथा तम् । पुनः कथंभूतम् । अजकुक्षिम् । अजस्येव छागस्येव उभयपार्श्वयोरुन्नतः कुक्षिरुदरं यस्य स तथा

ईषत्संवर्तकोन्नतभूमिदेशस्पर्शिगोलाङ्गूलवालधिम्, अभिव्यक्तोभयपुष्करम्, वराहजघनापरम्, आम्रपल्लवसंकाशकोशम्, अतीव सुप्रतिष्ठितैः समुद्गकूर्माकृतिभिर्गात्रापरतलैः पातालतले निपतन्तीमुद्धरन्तमिव मेदिनीम्, उत्सर्पद्भिरष्टमीहिमांशुनिभसुनिविष्टश्लिष्टविंशतिनखमयूखप्ररोहैर्भुवनसरसि विजृम्भमाणस्य तव यशोहंसस्य मृणालजालानीव परिकल्पयन्तम्, आनुपूर्वीपृथुवृत्तायतकोमलाभोगेन भविष्यदनेकजन्यजयादेशरेखाभिरिव कतिभि-

---

तम्। पुनः कथंभूतम्। अनुपदिग्धपेचकम्। अस्थूलपुच्छमूलम्। पुनः कथंभूतम्? ईषत्संवर्तकोन्नतभूमिदेशस्पर्शिगोलाङ्गूलवालधिम्। ईषन्मनाक् संवर्तके वालधिप्रदेशे उन्नत उच्चो भूमिदेशस्पर्शी गोलाङ्गूलवत् वृषभपुच्छवत् वालधिः पुच्छो यस्य स तथा तम्। पुनः कथंभूतम्। अभिव्यक्तोभयपुष्करम्। अभिव्यक्ते प्रकटे उभये अधःस्तनोर्ध्वसंबन्धिनी पुष्करे शुण्डाग्रभागे यस्य स तथा। पुनः कथंभूतम्। वराहजघनापरम्। वराहस्य अरण्यशूकरस्य जघनवत् कट्यग्रभागवत् अपरं पश्चिमदेशो यस्य स तथा तम्। पुनः कथंभूतम्। आम्रपल्लवसंकाशकोशम्। आम्रस्य सहकारस्य पल्लवं प्रवालस्तेन संकाशः सदृशः कोशो मेद्रं यस्य स तथा तम्। सिन्धुरं किं कुर्वन्तम्। अतीव सुप्रतिष्ठितैः समुद्गकूर्माकृतिभिर्गात्रापरतलैः पातालतले निपतन्तीमुद्धरन्तमिव मेदिनीम्। गात्रापरतलैः गात्रं अग्रकायो अपरं पश्चात्कायस्तयोस्तलान्यधःशरीराणि गात्रापरतलानि तैः कृत्वा मेदिनीं पृथ्वीं उद्धरन्तमिव। मेदिनीं किं कुर्वन्तीम्। पातालतले निपतन्तीं रसातले निमज्जन्तीम्। कथंभूतैर्गात्रापरतलैः। अतीव सुप्रतिष्ठितैः अतिशयेन निश्चलैः। पुनः कथंभूतैः। समुद्गकूर्माकृतिभिः समुद्गः करण्डविशेषः कूर्मः कच्छपस्तयोरिव आकृतिराकारो येषां गात्रापरतलानां तानि समुद्गकूर्माकृतीनि तैः। पुनश्च किं कुर्वन्तं विज्ञापयति। उत्सर्पद्भिरष्टमीहिमांशुनिभसुनिविष्टश्लिष्टविंशतिनखमयूखप्ररोहैर्भुवनसरसि विजृम्भमाणस्य तव यशोहंसस्य मृणालजालानीव परिकल्पयन्तम्। तव यशोहंसस्य भवतः पुण्यगुणानुकीर्तनश्वेतच्छदपक्षिणो मृणालजालानि पद्मिनीकन्दवृन्दानि परिकल्पयन्तमिव भक्षणार्थमुपढौकयन्तमिव। किं कुर्वाणस्य तव यशोहंसस्य। भुवनसरसि विजृम्भमाणस्य भुवनसरसि त्रैलोक्यसरोवरे विजृम्भमाणस्य विशेषेण प्रसारं कुर्वाणस्य पर्यटतः। व्याप्नुवानस्येत्यर्थः। कैः कृत्वा मृणालजालानि परिकल्पयन्तम्। अष्टमीहिमांशुना अर्धचन्द्रेण निभाः सदृशाः सुनिविष्टाः निश्चलास्ते च ते श्लिष्टाः परस्परं संलग्ना विंशतिर्द्विर्दशपरिमाणा ये नखाः कामाङ्कुशास्तेषां मयूखाः किरणास्त एव प्ररोहा अङ्कुरास्ते तथा तैः। कथंभूतैः नखमयूखप्ररोहैः। उत्सर्पद्भिरूर्ध्वं गच्छद्भिः। पुनश्च किं कुर्वन्तं विज्ञापयति। आनुपूर्वीपृथुवृत्तायतकोमलाभोगेन भविष्यदनेकजन्यजयादेश

श्चिद्वलिभिरलंकृतेन सुस्रोतसा मृदुदीर्घविस्तृताङ्गुलिना करेण मुहुर्मुहुरितस्ततो विनिकीर्णैर्वमथुपाथःशीकरैर्दिक्पालपुरपुरंध्रीणां पट्टबन्धावसरेऽस्मिन्मुक्ताफलोपायनानीव दिशन्तम्, अनवरतमुच्छलता मलयजागुरुसरोजकेतकोत्पलकुमुदामोदसंवादिना मदवदनसौरभेण भवदैश्वर्यदर्शनाश-

---

रेखाभिरिव कतिभिश्चिद्वलिभिरलंकृतेन सुस्रोतसा मृदुदीर्घविस्तृताङ्गुलिना करेण मुहुर्मुहुरितस्ततो विनिकीर्णैर्वमथुपाथःशीकरैर्दिक्पालपुरंध्रीणां पट्टबन्धावसरेऽस्मिन्मुक्ताफलोपायनानीव दिशन्तम्, अस्मिन्प्रत्यक्षीभूते पट्टबन्धावसरे राज्यपट्टबन्धसमये दिक्पालपुरपुरंध्रीणां इन्द्रादिदिक्पालानां पुराणां नगराणां पुरंध्रीणां कमनीयकामिनीनां मुक्ताफलोपायनानि मौक्तिकेयप्राभृतानि दिशन्तमर्पयन्तमिव । कैः कृत्वा मुक्ताफलोपायनानि दिशन्तम् । वमथुपाथःशीकरैरुद्गारजलकणैः । कथंभूतैर्वमथुपाथःशीकरैः । करेण शुण्डादण्डेन मुहुर्मुहुर्वारंवारं इतस्ततो यत्र तत्र विनिकीर्णैर्विनिक्षिप्तैः । कथंभूतेन करेण । आनुपूर्वीपृथुवृत्तायतकोमलाभोगेन आनुपूर्व्या अनुक्रमेण पृथुः स्थूलो वृत्तो वर्तुलाकारः आयतो दीर्घः कोमलः सुकुमारः आभोगः परिपूर्णता यस्य करस्य स तथा तेन । पुनः कथंभूतेन करेण । कतिभिश्चित्कियत्प्रमाणाभिर्वलिभिः स्वकरसंकोचरेखाभिरलंकृतेन शोभितेन । कथंभूताभिर्वलिभिः । भविष्यदनेकजन्यजयादेशरेखाभिरिव भविष्यन्ति अनागतानि अनेकानि बहूनि जन्यानि संग्रामास्तेषु जयस्य विजयस्य प्राप्तेरादेशस्य कथनस्य रेखाभिरिव गणनाराजिभिरिव । पुनः कथंभूतेन करेण । सुस्रोतसा सुष्ठु शोभनं स्रोतो मदप्रवाहो यस्य स सुस्रोतास्तेन । पुनः कथंभूतेन करेण । मृदुदीर्घविस्तृताङ्गुलिना मृदु कोमलं दीर्घा लम्बायमाना विस्तृता विस्तारं प्रापिता अङ्गुलयो यस्य स तेन । पुनः किं कुर्वन्तं विज्ञापयति । अनवरतमुच्छलता मलयजागुरुसरोजकेतकोत्पलकुमुदामोदसंवादिना मदवदनसौरभेण भवदैश्वर्यदर्शनाशयावतीर्णानामम्बरचरकुमारकाणामर्घमिवोत्क्षिपन्तम् । मदवदनसौरभेण मदेनोपलक्षितं यद्वदनं मुखं तस्य सौरभेण परिमलेन अम्बरचरकुमारकाणां देवविद्याधरपुत्राणां अर्घं पूजा इव समुदायमुत्क्षिपन्तमिव उन्मुञ्चन्तमिव । कथंभूतानामम्बरचरकुमारकाणाम् । भवदैश्वर्यदर्शनाशयावतीर्णानाम् भवतस्तव ऐश्वर्यं प्रभुत्वं तस्य दर्शनाशयेन अवलोकनमनसा अवतीर्णानामागतानाम् । कथंभूतेन मदवदनसौरभेण । अनवरतं निरन्तरं उच्छलता आकाशे उत्पतता । अपरं कथंभूतेन मदवदनसौरभेण । मलयजागुरुसरोजकेतकोत्पलकुमुदामोदसंवादिना मलयजं गन्धसारम् । चन्दनमिति यावत् । अगुरुः कृमिजग्धम् । काकतुण्डं लोहम् । राजार्हमिति यावत् । सरोजानि कमलानि, केतकानि केतकीपुष्पाणि, उत्पलानि कुमुदानि, कैरवाणि । श्वेतोत्पलानि इति यावत् । तावत्तेषामामोदं परिमलं संवदत्यनुकरोत्युपमां धरतीत्येवंशीलं तत्तथोक्तं तेन । पुनश्च किं कुर्वन्तम् ।

यावतीर्णानामम्बरचरकुमारकाणामर्घमिवोत्क्षिपन्तम्, अम्भोधरगम्भीरमधुरध्वनिना बृंहितेन सकलयागनागसाधनाधिपत्यमिवात्मनि विनिवेदयन्तम्, अरालपक्ष्मणः स्थिरप्रसन्नायतव्यक्तरक्तशुक्लकृष्णदृष्टिभागस्य मणिरुचो लोचनयुगलस्यारविन्दपरागपिङ्गलैरपाङ्गपातैः ककुबङ्गनासु पिष्टातकचूर्णमिव किरन्तम्, मनागदक्षिणोन्नतेन ताम्रचूडहलोपशोभिना समसुजातमधुसन्निकाशदशनद्वितयेन विदधानमिव नाकलोकावलोकनकुतूहलिन्यास्त्व-

---

अम्भोधरगम्भीरमधुरध्वनिना बृंहितेन सकलयागनागसाधनाधिपत्यमिवात्मनि विनिवेदयन्तम्। बृंहितेन गर्जितेन कृत्वा सकलयागनागसाधनाधिपत्यं सकलानां समस्तानां यागनागसाधनानां पट्टयोग्यगजसैन्यानां आधिपत्यं प्रभुत्वं आत्मनि स्वस्मिन् विनिवेदयन्तं सूचयन्तमिव । किंविशिष्टेन बृंहितेन । अम्भोधरगम्भीरमधुरध्वनिना अम्भोधरस्य जलधरस्येव गम्भीरः अतलस्पर्शो मधुरः कर्णामृतप्रायो ध्वनिः शब्दो यस्य बृंहितस्य तत्तथा तेन । पुनः किं कुर्वन्तम् । अरालपक्ष्मणः स्थिरप्रसन्नायतव्यक्तरक्तशुक्लकृष्णदृष्टिभागस्य मणिरुचो लोचनयुगलस्यारविन्दपरागपिङ्गलैरपाङ्गपातैः ककुबङ्गनासु पिष्टातकचूर्णमिव किरन्तम् । लोचनयुगलस्य अपाङ्गपातैः कटाक्षविक्षेपैः ककुबङ्गनासु दिग्वनितासु पिष्टातकचूर्णं पटवासचूर्णं किरन्तमिव । किंलक्षणैरपाङ्गपातैः । अरविन्दपरागपिङ्गलैः अरविन्दस्य कमलस्य परागो रजस्तद्वत् पिङ्गलैर्गोरोचनावर्णैः । किंलक्षणस्य लोचनयुगलस्य । अरालपक्ष्मणः घनस्निग्धनेत्ररोम्णः । पुनः किंलक्षणस्य लोचनयुगलस्य । स्थिरप्रसन्नायतव्यक्तरक्तशुक्लकृष्णदृष्टिभागस्य स्थिरा निश्चलाः प्रसन्ना निर्मला आयता दीर्घा व्यक्ताः स्फुटतरा रक्ताः लोहिताः शुक्ला उज्ज्वलाः कृष्णा यमकायसदृशाः दृष्टिभागा अवलोकनप्रदेशा यस्य लोचनयुगलस्य तत्तथोक्तं तस्य । पुनः कथंभूतस्य लोचनयुगलस्य । मणिरुचः शुक्लकृष्णरक्ततेजसः । पुनश्च किं कुर्वाणं विज्ञापयति । मनागदक्षिणोन्नतेन ताम्रचूडहलोपशोभिना समसुजातमधुसन्निकाशदशनद्वितयेन विदधानमिव नाकलोकावलोकनकुतूहलिन्यास्त्वत्कीर्तेः सोपानमार्गम् । समसुजातमधुसन्निकाशदशनद्वितयेन समं शोभनपरिणाहनिर्गमं सुजातं रथेषाकृति मधुसन्निकाशं क्षौद्रवर्णं तच्च दशनद्वितयं दन्तमुखयुगलं तेन तथोक्तेन कृत्वा नाकलोकावलोकनकुतूहलिन्याः नाकलोकः स्वर्गलोकस्तस्यावलोकने निरीक्षणे कुतूहलं विनोदो विद्यते यस्याः सा तथा तस्यास्त्वत्कीर्तेः सोपानमार्गं आरोहणमार्गं विदधानमिव रचयन्तमिव । कथंभूतेन दशनद्वितयेन । मनागदक्षिणोन्नतेन मनाक् ईषत् दक्षिणपार्श्वे उन्नतं मनागदक्षिणोन्नतं तेन । तथा चोक्तम्—'दक्षिणोन्नतमित्याहुर्दन्ते चार्वङ्गुलोन्नते । यवमात्रोन्नते केचित्तथा वामोन्नतं विदुः ॥' पुनरपि कथंभूतेन दशनद्वितयेन । ताम्रचूडहलोपशोभिना ताम्रचूडः कुक्कुटस्तस्य हलं चरणयोः पश्चादङ्गुलिस्तद्वत् उपशोभते रा-

त्कीर्तेः सोपानमार्गम्, असिराततप्रलम्बबहलसुकुमारोदयेन कर्णतालद्वयेनोद्यावदुन्दुभीनां नादमिव पुनरुक्तयन्तम्, उदग्रतया च खर्वयन्तमिव धरणिधरशिखराणि, समन्तात्प्रसरद्भिः सरस्वतीहासापहासिभिर्देहप्रभापटलैः स्वकीयशरीरश्रिताया वीरश्रियः पर्यन्तेषु सितसरसिरुहोपहारमिव संपादयन्तम्, अन्तरान्तराध्वजशङ्खचक्रस्वस्तिकनन्द्यावर्तविन्यासाभिः प्रदक्षिणावर्तवृत्तिभिः सूक्ष्ममुखस्निग्धाङ्गजराजिभिरणुतरबिन्दुमालाभिश्च निचितोचितप्रतीकम्, आपादितोत्सवसपर्यमिव विजयलक्ष्मीनिवासम्, एवमन्यैरपि बहलविपुलव्यक्तसंनिवेशमनोहारिभिर्मानोन्मानप्रमाणसमन्वितैश्चतुर्विधैरपि प्रदेशैरनूनानतिरि-

---

जते इत्येवंशीलं तत्तथोक्तं तेन । पुनश्च किं कुर्वन्तं विज्ञापयति । असिराततप्रलम्बबहलसुकुमारोदयेन कर्णतालद्वयेनोद्यावदुन्दुभीनां नादमिव पुनरुक्तयन्तम् । कर्णतालद्वयेन ताडपत्राकारकर्णद्वितयेन कृत्वा उद्यावदुन्दुभीनां आनन्दभेरीणां नादं ध्वनिं पुनरुक्तयन्तमिव द्विगुणीकुर्वन्तमिव । संताडनवशात् ध्वनिरुत्पद्यते । कथंभूतेन कर्णतालद्वयेन । असिराततप्रलम्बबहलसुकुमारोदयेन न सिराभिस्ततो (अदृष्टस्ताभिर्व्याप्तो यः) असिराततप्रलम्बो दीर्घतरो बहलो विस्तीर्णः सुकुमारः सुकोमल उदयो यस्य कर्णतालद्वयस्य तत्तथोक्तं तेन । पुनः किं कुर्वन्तम् । उदग्रतया उन्नततया धरणिधरशिखराणि पर्वतशृङ्गाणि खर्वयन्तमिव ह्रस्वीकुर्वन्तमिव । पुनः किं कुर्वन्तम् । देहप्रभापटलैः शरीरकान्तिसमूहैः कृत्वा वीरश्रियः वीरलक्ष्म्याः पर्यन्तेषु सितसरसिरुहोपहारं श्वेतकमलपूजनं संपादयन्तमिव । कथंभूतायाः वीरश्रियः । स्वकीयशरीरश्रितायाः स्वकीयं स्वस्य शरीरं श्रिताया आश्रितायाः । कथंभूतैर्देहप्रभापटलैः । समन्तात्प्रसरद्भिः सर्वत्र व्याप्नुवद्भिः । पुनः कथंभूतैर्देहप्रभापटलैः । सरस्वतीहासापहासिभिः भारतीहासं तिरस्कुर्वद्भिः । उज्ज्वलैरित्यर्थः । पुनः कथंभूतं विज्ञापयति । सूक्ष्ममुखस्निग्धाङ्गजराजिभिः । सूक्ष्ममुखाः स्निग्धा अरूक्षा अङ्गजानां (गजानां) रोमाणां राजयस्ताभिः कृत्वा अणुतरबिन्दुमालाभिः सूक्ष्मतरबिन्दूनां राजिभिश्च कृत्वा निचितोचितप्रतीकं निचिताः परिपूर्णजटिता उचिता योग्याः प्रतीकाः शरीरावयवा यस्य स निचितोचितप्रतीकस्तम् । कथंभूताभिः सूक्ष्ममुखस्निग्धाङ्गजराजिभिः । अन्तरान्तरा मध्ये मध्ये ध्वजशङ्खचक्रस्वस्तिकनन्द्यावर्तविन्यासाभिः ध्वजश्च शङ्खश्च चक्रं च स्वस्तिकश्च नन्द्यावर्तश्च ते तथोक्तास्तेषां विन्यासो रचना यासु अङ्गजराजिषु तास्तथोक्तास्ताभिः । पुनः कथंभूताभिरङ्गजराजिभिः । प्रदक्षिणावर्तवृत्तिभिः प्रदक्षिणावर्ता वृत्तिः प्रवृत्तिर्यासां तास्तथोक्ताभिः । पुनः कथंभूतम् । आपादितोत्सवसपर्यमिव आपादिता विहिता कृता रचिता उत्सवसपर्या महोत्सवपूजनं यस्य स तथा तम् । पुनः कथंभूतम् । विजयलक्ष्मीनिवासं जगज्जयश्रीनि-

क्तम्, आचक्षाणमिव सप्तधास्थितत्वेन स्वामिनः सप्तसमुद्रमुद्रं शासनं महामहीशमहामात्राणाम्, द्वादशस्वपि क्षेत्रेषु शुभसमुदायप्रत्यङ्गफलम्, निष्पन्नयोगिनमिव क्षान्तं रूपादिषु विषयेषु, दिव्यर्षिमिव सर्वज्ञम्, असितर्तिमिव तेजस्विनम्, अभिजातमिवोदयप्रत्ययैर्विशुद्धम्, अधोक्षजमिव कामवन्तम्,

---

वासस्तम्। पुनः कथंभूतम्। एवममुना प्रकारेण अन्यैरपि परैरपि चतुर्विधैरपि प्रदेशैः देशसद्भाविनः मानिकाः उपधानिकाः लाक्षणिकाश्चेति चतुःप्रकारैः प्रदेशैः शरीरावयवैरनूनातिरिक्तं न्यूनाधिकतारहितं विज्ञापयति। उक्तं च—'देशसद्भाविनं केचित् मानिकाश्चोपधानिकाः। केचिल्लाक्षणिकाश्चेति प्रदेशाश्च चतुर्विधाः॥' कथंभूतैश्चतुर्विधैरपि प्रदेशैः। वहलविपुलव्यक्तसंनिवेशमनोहारिभिः वहलो घनतरो विपुलो महान् व्यक्तः स्फुटः संनिवेशो विन्यासो येषां प्रदेशानां ते वहलविपुलव्यक्तसंनिवेशास्तैर्मनो हरन्तीत्येवंशीलास्ते तथा तैः। पुनः कथंभूतैरपि चतुर्विधैः प्रदेशैः। मानोन्मानप्रमाणसमन्वितैः मानं च उन्मानं च प्रमाणं च मानोन्मानप्रमाणानि तैः समन्विताः संयुक्ता ये प्रदेशास्ते तथा तैः। तथा चोक्तम्—'ऊर्ध्वमानं तु विज्ञेयमुन्मानं तिर्यगाश्रयम्। प्रमाणं परिणाहेन त्रिध्वयं लक्षणक्रमः॥' पुनश्च किं कुर्वाणं विज्ञापयति। सप्तधास्थितत्वेन। तथा हि—'ओजस्तेजो वलं शौर्यं सत्वसंहननं जयः। प्रशस्तैः सप्तभिश्चैतैः स गजः सप्तधा स्थितः॥' इत्युक्तलक्षणेन सप्तधास्थितत्वेन। महामहीशमहामात्राणां महानृपाणां महाहस्तिपालकानां च स्वामिनस्तव सप्तसमुद्रमुद्रं सप्तसागरपर्यन्तं शासनं आज्ञां आचक्षाणमिव कथयन्तमिव सूचयन्तमिवं। पुनश्च कथंभूतं विज्ञापयति। द्वादशस्वपि क्षेत्रेषु द्वादशराजमण्डलीषु द्वादशकायेषु शुभसमुदायप्रत्यङ्गफलं कल्याणसमूहशरीरफलं विज्ञापयति। कानि तानि द्वादशक्षेत्राणि द्वादशशरीराणि। हस्तरदनमुखशिरोनयनकर्णग्रीवागात्रोरोजघनमेढ्रकायलक्षणानि। कथंभूतम्। निष्पन्नयोगिनमिव क्षान्तम्। रूपादिषु विषयेषु (रसनादिषु) रसस्पर्शगन्धवर्णलक्षणेषु पञ्चसु विषयेषु क्षान्तं भवति अविचलं भवति चित्तम्। कमिव। निष्पन्नयोगिनमिव। यथा निष्पन्नो योगी वीतरागो मुनिः रूपादिषु विषयेषु क्षान्तो भवति। पुनः कथंभूतम्। सर्वज्ञं सर्ववस्तुज्ञातारं कथयति। कमिव। दिव्यर्षिमिव। यथा दिव्यर्षिः केवलज्ञानी पुमान् सर्वज्ञो भवति। पुनः कथंभूतं विज्ञापयति। तेजस्विनं प्रतापवन्तम्। कमिव। असितर्तिमिव अग्निमिव। यथा असितर्तिस्तेजस्वी भवति। तथा चोक्तम्—'भारस्यातीव वहनं विद्यात्तेजस्विनं गजम्'। पुनः कथंभूतम्। अभिजातमिवोदयप्रत्ययैर्विशुद्धम् उदयो जन्म पुरोभागगमनं च प्रत्ययो विश्वासः प्रत्यासन्नगमनं च उदयौ च प्रत्ययौ च उदयप्रत्ययास्तैरुदयप्रत्ययैर्विशुद्धं अधिगतं विज्ञापयति। कमिव। अभिजातमिव कुलीनमानव-

---

१. 'ततम्' क.

अमृतकान्तिमिवासंतापम्, आयोधनाग्रेसरमिव मनस्विनम्, अनाद्यूनमिव सुभगम्, आकरस्थानमिवान्येषामपि गुणरत्नानाम् ।

अत्रावसरे करिकलभाभिधानो वाग्जीवनोऽध्यगीष्ट गजप्रशंसावृत्तानीमानि—

यस्माद्भानुरभूत्ततोऽण्डशकलाद्धस्ते धृतादात्मभू-
र्गायन्सामपदानि यान्गणपतेर्वक्त्रानुरूपाकृतीन् ।
अस्राक्षीत्क्षितिरक्षणक्षमबलांस्ते हस्तिनस्ते नृप
प्रायः प्रीतिकृतो भवन्तु विजयश्रीकेलिकीर्तिप्रदाः ॥ १६७ ॥

---

मिव । यथा अभिजातः पुमान् उदयप्रत्ययैर्विशुद्धो भवति । पुनः कथंभूतम् । अधोक्षजमिव कामवन्तम् । 'जिघांसुं सर्वसत्त्वानां कामवन्तं प्रचक्षते' । कमिव । अधोक्षजमिव । यथा अधोक्षजो नारायणः कामवान् प्रद्युम्नवान् भवति । पुनः कथंभूतम् । अमृतकान्तिमिवासंतापम् । 'अन्नादीनां च सहनादसंतापं विदुर्बुधाः' । कमि । अमृतकान्तिमिव । यथा अमृतकान्तिश्चन्द्रोऽसंतापः शिशिरो भवति । पुनः कथंभूतम् । आयोधनाग्रेसरमिव मनस्विनं शूरं विज्ञापयति । 'सर्वकर्मसहत्वाच्च विद्यान्नाथं मनस्विनम्' । कमिव । आयोधनाग्रेसरमिव । यथा आयोधने संग्रामे अग्रेसरः पुमान् अग्रणीः पुरुषो मनस्वी अभिमानवान् भवति । पुनः कथंभूतं विज्ञापयति । अनाद्यूनमिव सुभगं विज्ञापयति । अल्पाहारं कथयति । आद्यूनः कूराग्निर्न आद्यूनो अनाद्यूनः । अल्पभोजी इत्यर्थः । तदुक्तम्–'अल्पाहारेण यस्तृप्तः सुभगः स गजोत्तमः' । कमिव । यथा अनाद्यूनो अल्पाहारः पुमान् सुभगो भवति । उक्तं च–'आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते' । पुनः कथंभूतम् । आकरस्थानमिव अन्येषामपि गुणरत्नानाम् । एवममुना प्रकारेण अन्येषामपि अपरेषामपि गुणरत्नानां गुणमाणिक्यानामाकरस्थानमुत्पत्तिस्थानं विज्ञापयति ।

अत्रावसरे अस्मिन्प्रस्तावे करिकलभाभिधानः करिणां गजानां कला चातुर्यम्, करिकलाया आभा शोभा यस्येति करिकलभः, करिकलभः अभिधानं नाम यस्येति स करिकलभाभिधानो वाग्जीवनो भट्टः इमानि वक्ष्यमाणानि गजप्रशंसावृत्तानि पद्यानि अध्यगीष्ट अपठत् पपाठ—**यस्मादित्यादि** । हे नृप, ते तव हस्तिनः प्रायो बाहुल्येन प्रीतिकृतो भवन्तु हर्षोत्पादकाः सन्तु । कथंभूतास्ते हस्तिनः । विजयश्रीकेलिकीर्तिप्रदाः विजयश्रियो विजयलक्ष्म्याः या केलिः क्रीडा तस्याः सकाशात् या कीर्तिः पुण्यगुणकीर्तनं तां प्रयच्छन्ति इति विजयश्रीकेलिकीर्तिप्रदाः । ते हस्तिनः के । यान् हस्तिनः आत्मभूर्ब्रह्मा ततस्तस्मात् अण्डशकलात् पिण्डखण्डात् हस्ते धृतात् करे कृतात् अस्राक्षीत् असृजत् सृष्टवान् । ततः कस्मादण्डशकलात् । यस्मात् भानुरभूत् श्रीभास्कर उत्पन्नः । आत्मभूः

---

१. 'द्वन्नाथं' क.

अतः प्रभाते परमेष्ठिनन्दनान्समर्च्य पश्यन्करिणो नरेश्वरः ।
न केवलं तस्य रणेषु कीर्तयः स सार्वभौमश्च भवत्यसंशयम् ॥ १६८ ॥

सामोद्भवाय शुभलक्षणलक्षिताय
दिव्यात्मने सकलदेवनिकेतनाय ।
कल्याणमङ्गलमहोत्सवकारणाय
तुभ्यं नमः करिवराय वराय नित्यम् ॥ १६९ ॥

रवेरिवास्मादुषसि प्रबुद्धाद्दृष्टात्प्रसन्नेन्द्रियदृश्यमूर्तेः ।
दुःस्वप्नदुष्टग्रहदुष्टचेष्टाः प्रयान्ति नाशं सहसा नृपस्य ॥ १७० ॥

---

किं कुर्वन् । सामपदानि गायन् सामवेदवाक्यानि पठन् प्लुताक्षरबहुलत्वात् गानं कुर्वन् मन्दगमनहेतुत्वात् मन्दगमनानस्राक्षीदिति भावः । कथंभूतान् । गणपतेः लम्बोदरस्य वक्त्रं मुखं तस्यानुरूपा सदृशा आकृतिः आकारो येषां तान् । पुनः कथंभूतान् अस्राक्षीत् । क्षितिरक्षणक्षमबलान् । पृथ्वीमण्डलप्रतिपालनसमर्थसामर्थ्यानिति शेषः । उपमालंकारः ॥

**अत इत्यादि** । स नरेश्वरः असंशयं निःसंदेहं सार्वभौमश्च भवतीति । न केवलं तस्य नरेश्वरस्य रणेषु संग्रामेषु कीर्तय एव भवन्ति, अपि तु सार्वभौमश्च भवतीति चकारार्थः । नरेश्वरः किं कुर्वन् । अत एतस्मात् कारणात् प्रभाते व्युष्टसमये करिणः पश्यन् । किं कृत्वा । पूर्वं समर्च्य पूजयित्वा । कथंभूतान् करिणः । परमेष्ठिनन्दनान् ब्रह्मपुत्रान् । समुच्चयालंकारः ॥

**सामोद्भवायेत्यादि** । तुभ्यं ते करिवराय गजाय नित्यं सर्वकालं नमोऽस्तु । किमर्थं नमः । वराय वरदानार्थम् । कथंभूताय करिवराय । सामोद्भवाय सामवेदोत्पन्नाय । पुनः कथंभूताय करिवराय । शुभलक्षणलक्षिताय कल्याणलक्ष्मशोभिताय । दिव्यात्मने अतिमनोहराय । सकलदेवनिकेतनाय सकलानां सर्वेषां देवानामिन्द्रादीनां निकेतनाय मन्दिराय । कल्याणमङ्गलमहोत्सवकारणाय कल्याणं शुभं मङ्गलं सुखदानं पापविध्वंसो वा महोत्सवो महानन्दस्तेषां कारणाय । हेतवे इति शेषः । अतिशयालंकारः ॥

**रवेरित्यादि** । अस्माद्गजात् उषसि प्रबुद्धात् प्रभाते जागरितात् दृष्टात् अवलोकितात् नृपस्य राज्ञः सहसा शीघ्रेण दुःस्वप्नदुष्टग्रहदुष्टचेष्टाः नाशं प्रयान्ति । दुःस्वप्नदुष्टग्रहचेष्टानां दुराचाराणां पापस्य फलं न भवतीत्यर्थः । कथंभूतादस्माद्गजात् । प्रसन्नेन्द्रियदृश्यमूर्तेः प्रसन्नैः प्रसादवद्भिरिन्द्रियैश्चक्षुरादिभिः दृश्या अवलोकनीया मूर्तिः शरीरं यस्य स तथा तस्मात् । अस्मात्कस्मादिव । रवेरिव । यथा रवेः श्रीसूर्यात् प्रसन्नादिविशेषणविशिष्टात् दुःस्वप्नादिकं विनाशं गच्छति । उपमालंकारः ॥

ये पूजयन्ति करिणं कृतयज्ञदीक्षं
मन्त्राक्षरैर्जपितकर्णयुगं नरेन्द्राः ।
तेषां शुभानि मदबृंहितकान्तिचेष्टा-
च्छायादिभिः स कथयेदहितक्षयं च ॥ १७१ ॥
वृत्तानुपूर्वपृथुकोमलदीर्घहस्तः
पद्माभपुष्करमुखः कलविङ्कनेत्रः ।
यष्टीरदो वहलदुन्दुभिघोषकर्ण-
श्चन्द्रार्धविंशतिनखः करटी जयाय ॥ १७२ ॥
वीरैः प्रधावद्भिरितस्ततः पुरः करेणुभिर्मार्गनिकाचवन्धनैः ।
आतोद्यवाद्यैः करिणां पलायनैः प्रभावयेत्तं नृपतिर्गजेश्वरम् ॥ १७३ ॥

---

**ये पूजयन्तीत्यादि** । ये नरेन्द्राः करिणं पूजयन्ति । कथंभूतं करिणम् । कृतयज्ञदीक्षं राजदीक्षम् । पुनः कथंभूतं करिणम् । मन्त्राक्षरैः कृत्वा जपितकर्णयुगं विन्यस्तमन्त्राहारकरणयुगलम् । तेषां राज्ञां स करी शुभानि कल्याणानि कथयेत् सूचयेत् । न केवलं शुभानि कथयेत्, अहितक्षयं शत्रुविनाशं च कथयेत् । काभिः कृत्वा कथयेत् । मदवृंहितकान्तिचेष्टाच्छायादिभिः मदश्च दानं वृंहितं च गर्जनं कान्तिश्च प्रभा चेष्टा च कर्णशुण्डादण्डादिव्यापारश्छाया च स तेजस्कता ताः आदिर्यां (दयो या) सां तास्तथा ताभिः । अतिशयालंकारः ॥

**वृत्तेत्यादि** । ईदृग्विधः करटी गजो जयाय शत्रुविध्वंसनाय भवति । कथंभूतः करटी । वृत्तानुपूर्वपृथुकोमलदीर्घहस्तः वृत्तो वर्तुलाकार आनुपूर्वेण अनुक्रमेण पृथुः स्थूलः कोमलो मृदुः दीर्घः प्रलम्वो हस्तः शुण्डादण्डो यस्य स तथोक्तः । पुनः कथंभूतः । पद्माभपुष्करमुखः पद्माभं रक्तकमलसदृशं पुष्करमुखं शुण्डाग्रं यस्य स तथोक्तः । पुनः कथंभूतः । कलविङ्कनेत्रः । कलविङ्कः लोकभाषया 'चिडो' । तदाकारे चटकसदृशे नेत्रे यस्य स तथोक्तः । पुनः कथंभूतः । यष्टीरदः यष्टीवत् रदौ दन्तौ यस्य स यष्टीरदः । तथा चोक्तम्—'फलभारंनता शाखा यष्टिरित्युच्यते बुधैः । त्रिरात्रोषितचन्द्रस्य खेलं वा यष्टिरुच्यते ॥' (?) पुनः कथंभूतः । वहलदुन्दुभिघोषकर्णः वहलौ पृथू दुन्दुभिघोषौ पटहसदृशशब्दौ कर्णौ यस्य स तथा । पुनः कथंभूतः । चन्द्रार्धविंशतिनखः चन्द्रस्य अर्धसदृशा चन्द्रार्धाकारा विंशतिर्नखा यस्य स तथोक्तः । उपमालंकारः ॥

**वीरैरित्यादि** । नृपतिर्नरेन्द्रस्तं यागहस्तिनं प्रभावयेत् प्रसिद्धं कारयेत् । किं कृत्वा

---

१. समासवाच्यर्धशब्दाभावान्नात्रार्धशब्दस्य पूर्वप्रयोगः.

---

१. 'रोन्नता' ख. २. 'खं गदा' ख.

इत्थं सिन्धुरचेष्टितानि चरतः श्रुत्वा रिपूणां गणः
त्रासादस्तसमस्तविग्रहभरः स्याद्भृत्य इत्याचरन् ।
एते हस्तिन एष वाजिनिवहः क्षोणीयमेते वयं
देव ब्रूहि यदत्र भाति भवतः सर्वत्र सज्जा वयम् ॥ १७४ ॥
सुभट इव विशस्त्रः स्वामिहीनेव सेना
जनपद इव दुर्गैः क्षीणरक्षाविधानः ।
बलमवनिपतीनां वारणेन्द्रैर्विहीनं
वशमवशमवश्यं वैरिवर्गैः क्रियेत ॥ १७५ ॥
भयेषु दुर्गाणि जलेषु सेतवो गृहाणि मार्गेषु रणेषु राक्षसाः ।
मनःप्रसादेषु विनोदवेधसो गजा इवान्यत्किमिहास्ति वाहनम् ॥१७६॥

---

प्रभावयेत् । वीरैः सुभटैः । किं कुर्वद्भिर्वीरैः । पुरो अग्रत इतस्ततो यत्र तत्र प्रधावद्भिर्वेगवद्भिर्गतिं कुर्वद्भिः । तथा करेणुभिरपरगजसंघट्टनैः । तथा मार्गनिकाचबन्धनैः मार्गे तटिकार्गलाबन्धनैः स तथा आतोद्यवाद्यैः वादित्रवादनैः प्रभावयेत् । तथा करिणां पलायनैः अपरगजानां नाशनैः प्रभावयेत् । दीपकालंकारः ॥

इत्थमित्यादि । इत्थं अमुना प्रकारेण सिन्धुरचेष्टितानि गजविलसितानि चरतो हेरिकाच्छ्रुत्वा आकर्ण्य रिपूणां गणाः शत्रूणां समूहास्त्रासात् भयात् अस्तसमस्तविग्रहभरः परित्यक्तसर्वसंग्रामातिशयो भृत्यः सेवकः स्यात् । रिपूणां गणः किं कुर्वन् । भृत्यः स्यात् इति अमुना प्रकारेण आचरन् विदधन् । इतीति किम् । हे देव हे राजन्, एते प्रत्यक्षीभूताः अस्माकं हस्तिनः वर्तन्ते । एष प्रत्यक्षीभूतो वाजिनिवहो अश्वसमूहो वर्तते । इयं प्रत्यक्षीभूता क्षोणी पृथिवी वर्तते । एते प्रत्यक्षीभूता वयं च सेवका वर्तामहे । अत्र एषु पदार्थेषु यद्भवतस्तव यद्भाति चमत्करोति तुभ्यं रोचते तत्त्वं ब्रूहि आदेशं देहि । सर्वत्र हस्त्यश्वक्षोणीस्वसमर्पणे वयं सज्जा एव वर्तामहे । रूपकालंकारः ॥

सुभट इत्यादि । अवनीपतीनां भूमिपतीनां वारणेन्द्रैः गजेन्द्रैर्विहीनं रहितं बलं सैन्यं वैरिवर्गैः शत्रुवर्गैरवशं परवशं सत् अवश्यं निश्चयेन वशं स्वाधीनं क्रियेत विधीयेत । क इव । विशस्त्रः सुभट इव शस्त्रहीनो योद्धेव । तथा स्वामिहीना सेनेव नायकवर्जिता चमूरिव । तथा दुर्गैः प्राकारैः क्षीणरक्षाविधानो रहितरक्षाकरणः जनपद इव देश इव । चतुर्योपमालंकारः ॥

भयेष्वित्यादि । इह अस्मिन् संसारे गजा इव हस्तिसदृशं किमन्यद्वाहनमस्ति । हस्तिसदृशमन्यद्वाहनं नास्तीत्यर्थः । कथंभूताः गजाः । भयेषु भीतिषु आतङ्केषु दुर्गाणि प्राकाराः । जलेषु सेतवस्तरणोपायाः । मार्गेषु अध्वसु गृहाणि पस्त्यानि । रणेषु संग्रामेषु

अरिनगरकपाटस्फोटने वज्रदण्डा-
श्चलदचलनिपाताः शत्रुसैन्यावमर्दे ।
गुरुभरविनियोगे स्वामिनः कामितार्थाः
प्रतिकरभयकाले सिन्धुराः सेतुबन्धाः ॥ १७७ ॥

परं प्रधानस्तुरगो रथो नरः कदाचिदेकं प्रहरेन्न वा युधि ।
स्वदेहजैरष्टभिरायुधैरयं करी तु हन्यादखिलं रिपोर्बलम् ॥ १७८ ॥

मणिरणितनिनादादप्रभावः परेषां
भवति नभसि केतुप्रेक्षणाद्देहसादः ।
व्रजति च सहसा यैः प्राणितं प्राप्तमात्रैः
क्षितिप युधि समं तैर्वाहनं नान्यदस्ति ॥ १७९ ॥

---

राक्षसाः पलाशिनः । मनःप्रसादेषु चित्तप्रसन्नीकरणेषु विनोदवेधसः कौतुकविचक्षणाः । रूपकालंकारः ॥

**अरिनगरेत्यादि** । सिन्धुराः कथंभूताः । अरिनगरकपाटस्फोटने वज्रदण्डाः अरीणां शत्रूणां नगराणां पत्तनानां कपाटानां स्फोटने विदारणे वज्रदण्डाः वज्रपाताः । चलदचलनिपाताः गच्छत्पर्वतसंपाताः शत्रुसैन्यावमर्दे शत्रुसेनाचूर्णकरणे । गुरुभरविनियोगे महाभारोच्चलनकार्ये स्वामिनो नरेन्द्रस्य कामितार्थाः वाञ्छितदायकाः । प्रतिकरिभयकाले शत्रुगजभीत्यवसरे सिन्धुराः सेतुबन्धाः सिन्धुराः गजाः तरणोपायाः । रूपकालंकारः ॥

**परं प्रधान इत्यादि** । प्रधानः प्रधानभूतो मुख्यस्तुरगोऽश्वो रथः स्यन्दनो नरः सुभटपदातिर्युधि संग्रामे एकं परं शत्रुं कदाचित्कदापि प्रहरेत् मारयेत् न वा प्रहरेत् अथवा न प्रहरेत् । अयं करी तु हस्ती रिपोः शत्रोरखिलं समग्रं बलं सैन्यं स्वदेहजैर्निजशरीरोत्पन्नैरष्टभिरायुधैर्दन्तशुण्डापादपुच्छलक्षणैः हन्यात् हिंस्यात् । अतिशयालंकारः ॥

**मणिरणितनिनादादित्यादि** । हे क्षितिप हे राजन्, युधि संग्रामे तैर्जगत्प्रसिद्धैः गजैर्हस्तिभिः समं सदृशं अन्यदपरं वाहनं यत्र नास्ति न विद्यते । तैः कैः । यैर्हस्तिभिः कृत्वा मणिरणितनिनादात् पादचक्रणत्कारशब्दात्परेषां शत्रूणाम् अप्रभावो अमाहात्म्यं भवति । नभसि आकाशे केतुप्रेक्षणात् ध्वजदर्शनात् परेषां शत्रूणां देहसादो गात्रभङ्गो भवति । यैर्गजैः प्राप्तमात्रैर्निकटागमनमात्रैः सहसा शीघ्रं प्राणितं जीवितं व्रजति विनश्यति । चकार उक्तसमुच्चयार्थः । दीपकालंकारः ॥

पुरः प्रत्यक्पक्षभ्रमिभिरभिहन्तुं व्यवसिते
गतैः सर्वैर्गर्वात्समरसमये सिन्धुरपतौ ।
विदीर्णे मातङ्गैस्तुरगनिवहैश्चापि दलितं
रथैः प्रास्तं पद्भैः पिशितकवलीभूतमचिरात् ॥ १८० ॥

दण्डासंहतभोगमण्डलविधीन्व्यूहान्रणप्राङ्गणे
देव द्विष्टजनैश्चिरेण रचितान्स्वप्नेऽप्यभेद्यान्परैः ।
कोऽभेत्स्यद्यदि नाभविष्यदवनीपालस्य दानद्रव-
द्रोणीतीरनिषण्णषट्पदततिर्दुर्वारणो वारणः ॥ १८१ ॥

अभिजनकुलजात्याचारदेहप्रशस्तः
सुविहितविनयश्चेद्यस्य चेत्कोऽपि हस्ती ।

---

**पुर इत्यादि।** पुरोऽग्रतः प्रत्यक् पश्चाद्भागेन पक्षयोः सव्यापसव्यभागयोः भ्रमिभिर्भ्रमणैः कृत्वाभिहन्तुं मारयितुं गर्वात् सर्वैः गतैर्जवैर्गमनस्थूलोच्चयमध्यमोपजवनगमनैः सिन्धुरपतौ अस्मिन् यागहस्तिनि समरसमये संग्रामसमये व्यवसिते उद्यमने सति किं जातम्। मातङ्गैः शत्रुगजैः अचिराद्वेगेन विदीर्णं विदारणं प्राप्तं तुरगनिवहैरश्वसमूहैरपि दलितं विदारणं प्राप्तम्। रथैः स्यन्दनैः प्रास्तं प्रध्वंसं प्राप्तम्। पद्भैः पदातिभिः पिशितकवलीभूतं मांसपिण्डीभूतम्। चकार उक्तसमुच्चयार्थः। समुच्चयालंकारः॥

**दण्डेत्यादि।** हे देव हे राजन्, रणप्राङ्गणे द्विष्टजनैः शत्रुसमूहैः चिरेण दीर्घकालेन रचितान् कल्पितान् व्यूहान् सेनाविन्यासभेदान् कः पुमान् अभेत्स्यत् व्यदारयिष्यत्। अपि तु न कश्चिदपि व्यदारयिष्यदित्यर्थः। यदि चेत् अवनिपालस्य नरेन्द्रस्य वारणो गजो नाभविष्यत् न समजनिष्यत्। कथंभूतान् व्यूहान्। दण्डासंहतभोगमण्डलविधीन् दण्डश्च दण्डाकारव्यूहः, असंहतश्च यत्र तत्र विक्षिप्तव्यूहः, भोगश्च सर्पशरीराकारव्यूहः, मण्डलश्च वर्तुलाकारव्यूहः, दण्डासंहतभोगमण्डलास्ते विधयो विधानानि येषां व्यूहानां ते तथा तान्। तथा चोक्तम्—'दण्डो दण्डो यमव्यूहो विक्षिप्तश्चाथ संहतः। स्याद्भोगिभोगवद्भोगो मण्डलो मण्डलाकृतिः॥' पुनः कथंभूतान् व्यूहान्। परैः शत्रुभिः स्वप्नेऽपि अभेद्यान् अविदार्यान्। न केवलं प्रत्यक्षं अभेद्यान्, अपि तु स्वप्नेषु अभेद्यान्। कथंभूतो वारणः। दानद्रवद्रोणीतीरनिषण्णषट्पदततिः दानद्रवस्य मदजलस्य या द्रोणी पर्वतसंध्युत्पन्ननदी तस्यास्तीरे तटे निषण्णा उपविष्टाः षट्पदानां भ्रमराणां ततयः श्रेणयो यत्र वारणे स तथोक्तः। पुनः कथंभूतः। दुर्वारणः दुःखेन महता कष्टेन वारणं निषेधो यस्य स तथा। आक्षेपालंकारः॥

**अभिजनेत्यादि।** तस्य राज्ञो नरेन्द्रस्य परेषां शत्रूणां एतत्प्रत्यक्षीभूतं चेष्टितं

तपति तपनविम्बे दानवानामिवैत-
त्प्रभवति न परेषा चेष्टितं तस्य राज्ञः ॥ १८२ ॥

अविनीते यथा राज्ञि न चिरं नन्दति क्षितिः ।
तथाविनीतशुण्डालं वलं नारिवलं जयेत् ॥ १८३ ॥

गजस्थितोऽस्त्रैर्नृप एक एव जेता सहस्रस्य भवेत्परेषाम् ।
आसीनसिंहं नगमापतन्तमस्ताश्मवर्षं प्रसहेत को हि ॥ १८४ ॥

हन्ता सहस्रशोऽन्येषां सोढास्त्राणां सहस्रशः ।
रणे करिसमो नास्ति रथेषु नृषु वाजिषु ॥ १८५ ॥

---

व्यापारो न प्रभवति न समर्थो भवति । तस्य कस्य । यस्य राज्ञः कोऽपि आस्तां तावद्धस्ती भवति । कथंभूतो हस्ती । अभिजनकुलजात्याचारदेहप्रशस्तः अभिजनं मन इति श्रीदेवनामा पञ्जिकाकारः, कुलं च पितृपक्षः, जातिश्च मातृपक्षः, आचारश्च निजस्वामिनः अप्रतिकूलत्वम्, देहश्च यथोक्तलक्षणं शरीरम्, अभिजनकुलजात्याचारदेहास्तैः प्रशस्तः प्रशंसनीयः स तथा चेत् यदि सुविहितविनयः सुशिक्षितो भवति । परेषां दानवानामिवैतत् प्रचेष्टितं प्रचारः । तपनविम्वे श्रीभास्करमण्डले तपति सति चेष्टितं न प्रभवति । किं तु रात्रावेव संचार इत्यर्थः । क्रियोपमालंकारः ॥

अविनीते इत्यादि । यथा येन प्रकारेण अविनीते अशिक्षिते राज्ञि राजनि क्षितिः पृथ्वी चिरं दीर्घकालं न नन्दति न समृद्धा भवति, तथा अविनीतशुण्डालमशिक्षितजं वलं सैन्यं अरिवलं शत्रुसैन्यं न जयेत् न तिरस्कुर्यात् । अविनीताः शुण्डाला गजा यस्मिन् वले तदविनीतशुण्डालं वलं कर्तृभूतं अरिवलं कर्मतापन्नम् । दृष्टान्तालंकारः ॥

गजस्थित इत्यादि । नृपो राजा एक एव असहायः गजस्थितो हस्तिनमारूढः अस्त्रैरायुधैः कृत्वा परेषां शत्रूणां सहस्रस्य लक्षादेर्जेता जयनशीलो भवेत् संजायते । अमुमेवार्थं आक्षेपेण द्रढयति—आसीनसिंहं नगं पर्वतं आसीन उपविष्टः सिंहो यत्र स तथा तं आपतन्तमागच्छन्तं कः पुमान् प्रसहेत सोढुं शक्नुयात् । अपि तु न कश्चिच्छक्नुयादित्यर्थः । कथंभूतं नगम् । अस्ताश्मवर्षम् अस्तः प्रेरितो अश्मनां पाषाणानां वर्षो वृष्टिर्येन नगेन स तथा तम् । कथम् । हि स्फुटमिति शेषः । आक्षेपालंकारः ॥

हन्तेत्यादि । रणे संग्रामे करिसमो हस्तिसदृशो रथेषु स्यन्दनेषु नृषु पदातिषु वाजिषु अश्वेषु एकोऽपि नास्ति कोऽपि न विद्यते । कथंभूतः करी । अन्येषां शत्रूणां सहस्रशो असंख्यातान् हन्ता विध्वंसकः । अस्त्राणां आयुधानां सहस्रशः असंख्यातान् सोढा सहनशीलः । उपमालंकारः ॥

भुजगशिरसि रत्नं वारिधौ द्वीपलोकः
स्फुरदुरगसमन्ते भूमिदेशे निधानम्।
न भवति नृप धृष्यं यद्वदेवान्यसत्त्वै-
र्गजपतिमधिरूढस्तद्वदेव क्षितीशः॥ १८६॥

हयः प्रधावे हनने कृतान्तः सुहृन्निदेशेऽस्त्रविधौ प्रहर्ता।
विलासिनी नर्तनकर्मकाले शिष्योऽपि चान्यत्र गिरः करीन्द्रः॥१८७॥

गजबन्धे नरेन्द्रस्य व्रतमेतत्करिष्वयम्।
अस्नानपानभुक्तेषु तत्क्रियः स्यान्न यत्स्वयम्॥ १८८॥

बलेन कायेन जवेन कर्मणा परैरतुल्याः परमेण चायुषा।
महीभुजां भाग्यबलान्महीतले कृतावतारास्त्रिदिवान्मतङ्गजाः॥ १८९॥

---

भुजगशिरसीत्यादि। हे नृप हे राजन्, यद्वत् यथा भुजगशिरसि सर्पमस्तके रत्नं अन्यसत्त्वैरपरप्राणिभिः धृष्यं गृहीतव्यं न भवति न जायते। वारिधौ समुद्रे द्वीपलोको लङ्कादिद्वीपमानवो अन्यसत्त्वैर्यद्वत् धृष्यो न भवति। तथा। स्फुरदुरगसमन्ते विस्फुरत्सर्पसमीपे भूमिदेशे भूमिस्थाने स्थितं निधानं अन्यसत्त्वैर्यद्वत् धृष्यं न भवति। तद्वदेव गजपतिं गजाधीश्वरं अधिरूढश्चढितः क्षितीशो राजा अन्यसत्त्वैर्धृष्यो न भवति। दृष्टान्तालंकारः॥

हय इत्यादि। करीन्द्रो गजेन्द्रः कथंभूतः। प्रधावे वेगवद्गमने हयोऽश्वो वर्तते। हनने शत्रुमारणे कृतान्तो यमो वर्तते। निदेशे आदेशकर्मणि सुहृत् किंकरो वर्तते। अस्त्रविधौ आयुधविधाने प्रहर्ता शत्रुमारको वर्तते। नर्तनकर्मकाले नृत्यविधानावसरे विलासिनी वेश्या वर्तते। गिरोऽन्यत्र च वाणीं विना शिष्योऽन्तेवासी वर्तते। वचनं नास्ति, अन्यत्सर्वं जानाति। असमस्तरूपकालंकारः॥

गजबन्ध इत्यादि। गजबन्धे हस्तिसंग्रहे नरेन्द्रस्य राज्ञः एतद्व्रतं एष नियमो भवति। एतत्किम्। अयं नरेन्द्रः करिषु हस्तिषु अस्नानपानभुक्तेषु हस्तिस्नानं विना हस्तिभोजनं विना यत् स्वयमात्मना तत्क्रियः स्नानपानभोजनक्रियो न स्यात्। जात्यलंकारः॥

बलेनेत्यादि। मतङ्गजाः हस्तिनस्त्रिदिवात् स्वर्गलोकात् महीतले कृतावताराः पृथ्वीमण्डले लब्धजन्मानः। कस्मान्महीतले कृतावताराः। महीभुजां राज्ञां भाग्यबलात् पुण्यप्रकर्षात्। कथंभूता मतङ्गजाः। बलेन सामर्थ्येन पराक्रमेण कायेन शरीरेण जवेन वेगेन कर्मणा व्यापारेण परमेण उत्कृष्टेन आयुषा जीवितकालेन च परैर्जीवादिभिरतुल्या असाधारणाः। जात्यलंकारः॥

महान्तोऽमी सन्तोऽप्यमितबलसंपन्नवपुषो
यदेवं तिष्ठन्ति क्षितिपशरणे शान्तमतयः ।
तदत्र श्रद्धेयं गजनयबुधैः कारणमिदं
मुनीन्द्राणां शापः सुरपतिनिदेशश्च नियतम् ॥ १९० ॥

अनेकसमरसंप्रहारव्रणविजयप्रशस्तिश्रृङ्गारितगात्रः शालिहोत्रः कलिकालबृहस्पते कुम्भिनीपते, तथैव मन्मुखेनापि साश्चर्यशौर्यनिर्जिताशेषद्विषदाचार्यपरिषद्देवस्यार्हणावन्तमर्वन्तं विज्ञापयति—तथाहि । देव देवमिव भद्रजात्यमङ्गेन, देव देवमिव वासवं सत्त्वेन, देव देवमिव सुभगा-

---

**महान्त इत्यादि** । अमी हस्तिनो महान्तो गुरुतराः सन्तोऽपि असितबलसंपन्नवपुषो अमर्यादीभूतपराक्रमसंयुक्तशरीराः यत् क्षितिपशरणे राजमन्दिरे शान्तमतयः अक्रूरचित्ताः सन्तस्तिष्ठन्ति आसते । तदस्मिन् संसारे गजनयबुधैर्गजशास्त्रनयशास्त्रनिपुणैः पुरुषैरिदमेतत्कारणं हेतुः श्रद्धेयं रोचनीयं ज्ञातव्यमिति । इदं किम् । नियतं निश्चितं मुनीन्द्राणां शापः कारणं च अन्यत् सुरपतिनिदेशः शक्रादेशः कारणं ज्ञातव्यमिति । अनुपमालंकारः ॥

**अनेकेत्यादि** । अथ शालिहोत्रोऽश्वसाधनिको उद्धताङ्कुशवचनादनन्तरं ब्रूते । कथंभूतः शालिहोत्रः । अनेकसमरसंप्रहारव्रणविजयप्रशस्तिश्रृङ्गारितगात्रः अनेके बहवो ये समराः संग्रामास्तेषु संप्रहारव्रणैः निष्ठुरप्रहारघातैर्विजयप्रशस्तिभिः शत्रुजयनप्रसिद्धिभिः श्रृङ्गारितं शोभितं गात्रं शरीरं यस्य स तथोक्तः । शालिहोत्रः किं विज्ञापयति—हे कलिकालबृहस्पते हे महाबुद्धे यशोधरमहाराज । हे कुम्भिनीपते हे [भूमिनाथ] राजाधिराज । तथैव तेनैव प्रकारेण उद्धताङ्कुशप्रहारेण मन्मुखेनापि । न केवलम् उद्धताङ्कुशमुखेनापितु मन्मुखेनापि आचार्यपरिषत् अश्वपरीक्षाचार्यसभा सेनापतिनिदेशः देवस्य यशोधरमहाराजस्य अर्वन्तमश्वरत्नं विज्ञापयति । कथंभूतमर्वन्तम् । अर्हणावन्तम् अर्हणा पादप्रक्षालनतत्पूजनतन्नमस्कारलक्षणपूजायोग्यम् । कथंभूता आचार्यपरिषत् । साश्चर्यशौर्यनिर्जिताशेषद्विषत् साश्चर्यं अत्यद्भुतं यच्छौर्यं सौभट्यं तेन निर्जिता पराभवमानीता मानभङ्गं प्रापिता अशेषाः समग्रा द्विषन्तः शत्रवो यया आचार्यपरिषदा सा तथा । किं विज्ञापयति—**तथाहीति** । तदेव दर्शयति—देव, देवमिव भद्रजात्यमङ्गेन हे देव हे राजन्, देवमिव भवन्तमिव अङ्गेन शरीरेण भद्रजात्यं विज्ञापयति । उक्तं च—'सात्विकश्लक्ष्णं रोम त्वक्सुखसंचारविग्रहः । बुद्धिमानविषादी च भद्रः स्यात्त्रासवर्जितः ॥' हे देव, सत्त्वेन मनसा वासवमिन्द्रं विज्ञापयति । कमिव । देवमिव भवन्तमिव । यथा भवान् सत्त्वेन कृत्वा वासवो वर्तते । उक्तं च—'तेजो विभूतिविक्रान्तैः सत्वमैन्द्रं विनिर्दिशेत् । देव, देवमिव

लोकं समप्रकृत्या, देव देवमिव समं संस्थानेन, देव देवमिवावगाढं वयसा द्वितीयां दशन्तम्, देव देवमिवानुभवितारमायुषा दशापि दशाः, देव देवमिव पार्थिवं छायया, देव देवमिव वरीयांसं बलेन, देव देवमिव कण्ठीरवमानूकेन, देव देवमिव समुद्रघोषं स्वरेण, देव देवमिव कुलेन काम्बोजम्, वाजिराजं च जवेन, देव देवस्य यशोराशिमिव श्वेतमानं वर्णेन, देव देवस्य चित्तमिव सूक्ष्मदर्शनं तनूरुहेषु, देव देवस्यारिवर्गमिव मग्नवंशं पृष्ठप्रदेशे, देव देवस्य वीरश्रीविलासचामरमिव रमणीयं वालधौ, देव देवस्य

---

सुभगालोकं समप्रकृत्या हे देव हे राजन्, समप्रकृत्या अविषमस्वभावेन सुभगालोकं परेषां प्रीतिजनकदर्शनं विज्ञापयति। कमिव। देवमिव भवन्तमिव। यथा भवान् समप्रकृत्या कृत्वा सुभगालोको भवति। हे देव संस्थानेन आकृत्या समं चतुरस्रं विज्ञापयति। कमिव देवमिव। यथा भवान् संस्थानेन समो वर्तते। देव, देवमिवावगाढं वयसा द्वितीयां दशन्तम्। हे देव [दशन्तशब्देन दशां जानीयात्] वयसा यौवनावस्थया कृत्वा द्वितीयां द्वयोः पूरणीं दशन्तं दशां अवगाढं व्याप्तम्। आरूढमिति यावत्। उक्तं च—
सर्वकर्मसहो दृप्तः परां वृद्धिमुपागतः। द्वितीयस्यां दशायां स्याद्वाहः संप्राप्तवाहनः ॥' अथ कासौ दशा। 'आयुर्द्वात्रिंशतं तेषां दशाश्च दश कीर्तिताः। त्रयोऽब्दाश्च दशाहानि द्वौ च मासौ दशा मता ॥' हे देव, आयुषा कृत्वा दशापि दशाः अनुभवितारं भोक्तारम्। भोक्ष्यतीत्यर्थः। कमिव। देवमिव भवन्तमिव। यथा भवान् आयुषा कृत्वा दशापि दशा भोक्ष्यति। हे देव, छायया कृत्वा पार्थिवं विज्ञापयति। कमिव। देवमिव भवन्तमिव। छायया कृत्वा पार्थिवो वर्तते। उक्तं च—'अनेकवर्णा सुस्निग्धा गम्भीरा महती स्थिरा। प्रशस्ता पार्थिवीच्छाया मनोदृष्टिप्रसादिनी ॥' हे देव हे राजन्, बलेन भारागमनसामर्थ्येन वरीयांसं अतिशयेन गुरुतरम्। कमिव। देवमिव भवन्तमिव। यथा भवान् बलेन वरीयान् भवति। हे देव हे राजन्, आनूकेन अन्वयेन बलेन यो कण्ठीरवं सिंहं विज्ञापयति। कमिव। देवमिव भवन्तमिव। यथा भवान् आनूकेन कण्ठीरवो भवति। हे देव, स्वरेण ध्वनिना समुद्रघोषं विज्ञापयति। कमिव। भवन्तमिव यथा भवान् स्वरेण समुद्रघोषो भवति। हे देव, कुलेन जात्या काम्बोजं वाह्लीकदेशोद्भवं विज्ञापयति। कमिव। देवमिव भवन्तमिव। यथा देवेति पूर्वोक्तमेव संबोधनपदं ग्राह्यम्। हे देव, जवेन वेगेन वाजिराजं गरुडं विज्ञापयति। हे देव, वर्णेन श्वेतमानं श्वेतीकुर्वाणं विज्ञापयति। कमिव। देवस्य यशोराशिमिव। यथा देवस्य यशोराशिः श्वेतमानो वर्तते। 'श्वेतः प्रधानो वर्णानाम्' इति वचनात्। यत इन्द्रस्य अश्व उच्चैःश्रवाः श्वेतवर्णो भवति। हे देव, तनूरुहेषु रोमसु सूक्ष्मदर्शनं सूक्ष्मावलोकनम्। कमिव। देवस्य चित्तमिव। यथा देवस्य चित्तं तव मनः सूक्ष्मदर्शनं भवति। हे देव पृष्ठप्रदेशे आसनप्रदेशे मग्नवंशं अदृष्टपृष्ठस्थलम्।

कीर्तिकुलदेवताकुन्तलकलापमिव मनोहरं केसरेषु, देव देवस्य प्रतापमिव विशालं ललाटासनजघनवक्षस्त्रिकेषु, देव शिखण्डिकण्ठाभोगमिव कान्तं कन्धरायाम्, इभकुम्भार्धमिव परार्ध्यं शिरसि, प्लक्षतरुपरिवर्तितच्छदपृष्ठमिव कमनीयं कर्णयोः, उल्लिखितमिव निर्मांसं हनुजानुजङ्घावदनघोणासु, स्फटिकमणिविनिर्मितमिव सुप्रकाशं लोचनयोः, नीररुहबर्हमिव तलिनं सृक्कोष्ठजिह्वासु, देव देवस्य हृदयमिव गम्भीरं तालुनि, कमलकोशमिव शुभंयुगन्त-

---

कमिव । देवस्यारिवर्गमिव । यथा देवस्य अरिवर्गः शत्रुवर्गो मग्नवंशः क्षयगतकुलो भवति । हे देव, वालधौ पुच्छविषये रमणीयं मनोहरम् । कमिव । देवस्य वीरश्रीविलासचामरमिव । यथा देवस्य वीरश्रियो वीरलक्ष्म्याः संबन्धि श्वेतविलासचामरं क्रीडाप्रकीर्णकं रमणीयं भवति । हे देव, केसरेषु स्कन्धदेशेषु मनोहरं चित्तानुरञ्जकं विज्ञापयति । कमिव । देवस्य तव कीर्तिकुलदेवताकुन्तलकलापमिव । यथा देवस्य कुलदेवतायाः कुन्तलकलापो मनोहरो भवति । हे देव, ललाटासनजघनवक्षस्त्रिकेषु ललाटं च भालम्, आसनं च पृष्ठभागः, जघनं च कट्यग्रभागः, वक्षश्च हृदयस्थलम्, त्रिकं च पृष्ठवंशाधरे त्रिकसंज्ञम्, तेषु ललाटासनजघनवक्षस्त्रिकेषु पञ्चस्थानेषु विशालं विस्तीर्णं विज्ञापयति । कमिव । देवस्य प्रतापमिव । यथा देवस्य प्रतापो विशालो भवति । हे देव, कन्धरायां ग्रीवायां कान्तं मनोहरं विज्ञापयति । कमिव । शिखण्डिकण्ठाभोगमिव परिणतमयूरकण्ठविस्तारमिव । यथा शिखण्डिकण्ठाभोगः कान्तो मनोहरो भवति । अत्र मयूरकण्ठस्याकारः संस्थानमेव गृह्यते, न तु वर्णः । शिरसि मस्तके परार्ध्यं शुभं विज्ञापयति । कमिव । इभकुम्भार्धमिव हस्तिकुम्भार्धमिव । हे देव, कर्णयोः श्रवणयोः कमनीयं मनोहरं विज्ञापयति । कमिव । प्लक्षतरुपरिवर्तितच्छदपृष्ठमिव प्लक्षतरुः वटवृक्षः पर्कटितरुसंबन्धिनौ परिवर्तितौ उद्वलितौ यौ छदौ पर्णे तयोः पृष्ठभागमिव विज्ञापयति । हे देव, हनुजानुजङ्घावदनघोणासु विषये हनुश्च चिबुकं कपोलानामधोभागः, जानुनी च अष्ठीवन्तौ, जङ्घाश्च जान्वधोभागाः, वदनं च मुखम्, घोणा च नासिका, तासु तथोक्तासु निर्मांसं मांसरहितं विज्ञापयति । कमिव । उल्लिखितमिव उत्कीर्णमिव कण्टकछिन्नमिव । हे देव हे राजन्, लोचनयोः नेत्रयोः सुप्रकाशं सुष्ठु तेजस्कं विज्ञापयति । कमिव । स्फटिकमणिविनिर्मितमिव काश्मीरमणिनिष्पादितमिव । हे देव, सृक्कोष्ठजिह्वासु सृक्कणी च ओष्ठप्रान्तौ, ओष्ठौ अधरौ, जिह्वा च रसना, तासु सृक्कोष्ठजिह्वासु तलिनं तनुं विज्ञापयति । तथा चोक्तम्—'सृक्के स्वच्छेव विरले तलिनं पृष्ठिनिर्मितम् ।' 'विरलं तनु' इत्यमरः । कमिव । नीररुहबर्हमिव कमलपत्रमिव । हे देव, तालुनि काकुदे गम्भीरं अगाधम् । कमिव । देवस्य तव हृदयमिव । यथा देवहृदयं गम्भीरं वर्तते । हे देव, अन्तरास्ये मुखमध्ये शुभंयुक् शोभनं विज्ञापयति । कमिव । कमलकोशमिव । यथा कमलकोशःपद्मगर्भं शुभंयुग्

रास्ये, चन्द्रकलाशकलसंपादितमिव सुन्दरं दशनेषु, लक्ष्मीकुचकलशमिव पीवरं स्कन्धे, भटजूटमिवोद्बद्धं कृपीटदिशि, अजस्रजवाभ्यसादिव सुविभक्तघनगात्रम्, अवलीकैः खरखुराकृतिभिः शफैर्गतिप्रारम्भेषु रजस्वलत्वादिव भुवमस्पृशन्तम्, अमृतजलधिप्रतिबिम्बितेन्दुसंवादिना निटिलपुण्ड्रकेण कथयन्तमिव सकलायामिलायामवनिपालस्यैकातपत्रवर्यम्, अहीनाविच्छिन्नाविचलितप्रदक्षिणवृत्तिभिर्देवमणिनिःश्रेणिश्रीवृक्षरोचमानादिनामभिरावर्तैः शुक्तिमुकुलावलीढकादिभिश्च तद्विशेषैराश्रितोचितप्रदेशमुदाहरन्तमिव

---

भवति। दशनेषु दन्तेषु सुन्दरमतिमनोहरं विज्ञापयति। कमिव। चन्द्रकलाशकलसंपादितमिव द्वितीयाचन्द्रखण्डैर्निष्पादितमिव। स्कन्धे ककुदविषये पीवरं स्थूलं विज्ञापयति। कमिव। लक्ष्मीकुचकलशमिव लक्ष्म्याः स्तनकुम्भमिव। कृपीटदिशि उद्बद्धं उत्तरदिशि तनूदरं भटजूटमिव। यथा सुभटस्य जूटः केशपाशः तनूदर उद्बद्धश्च भवति। सुविभक्तघनगात्रं सुविभक्तं सुविश्राणितं सुविभागीकृतं घनं निबिडं गात्रं शरीरं यस्य स तथा तं विज्ञापयति। कुतः कस्मात्। अजस्रजवाभ्यासादिव निरन्तरवेगानुशीलनादिव। हे देव, गतिप्रारम्भेषु गतिकरणेषु शफैः खुरैः भुवं पृथ्वीं अस्पृशन्तं अच्छुपन्तम्। कस्मात्। उत्प्रेक्षते—रजस्वलत्वादिव रजो धूलिः विद्यते यस्याः सा रजस्वला (अस्त्यर्थे वलवतसोस्त्वसौ मत्वर्थीयः।) रजस्वलायाः भावः रजस्वलात्वं तस्मात् रजस्वलात्वात्। यथा रजस्वला स्त्री ऋतुमती नरस्य स्प्रष्टुं योग्या न भवति। कथंभूतैः शफैः। अवलीकैः रेखारहितैः नीरेखैः। कथंभूतैः शफैः। खरखुराकृतिभिर्गर्दभखुराकारैः। निटिलपुण्ड्रकेण ललाटतिलकेन अवनिपालस्य भूपतेः सकलायां समग्रायामिलायां भूमौ एकातपत्रवर्यं एकच्छत्रमुख्यं ऐश्वर्यस्वं ऐश्वर्यस्वामित्वं कथयन्तमिव। कथंभूतेन निटिलपुण्ड्रकेण। अमृतजलधिप्रतिबिम्बितेन्दुसंवादिना अमृतजलधौ क्षीरसागरे प्रतिबिम्बितः प्रतिफलितो य इन्दुः परिपूर्णचन्द्रस्तं संवदत्यनुकरोतीत्येवंशीलः अमृतजलधिप्रतिबिम्बितेन्दुसंवादी तेन तथा। अहीनाविच्छिन्नाविचलितप्रदक्षिणवृत्तिभिर्देवमणिनिःश्रेणिश्रीवृक्षरोचमानादिनामभिरावर्तैः शुक्तिमुकुलावलीढकादिभिश्च तद्विशेषैराश्रितोचितप्रदेशमुदाहरन्तमिव देवस्य कल्याणपरम्पराम् हे देव, आवर्तैः रोमावर्तैः कृत्वा आश्रितोचितप्रदेशं अङ्कितयोग्यस्थानं विज्ञापयति। किं कुर्वन्तम्। देवस्य तव कल्याणपरम्परां शुभानां श्रेणिमुदाहरन्तमिव सूचयन्तमिव। कथंभूतैरावर्तैः। अहीना अविच्छिन्ना सुच्छाया अविचलिता अभ्रष्टा प्रदक्षिणा वामेतरवृत्तिर्येषां आवर्तानां ते अहीनाविच्छिन्नाविचलितप्रदक्षिणवृत्तयस्तैस्तथोक्तैः। पुनः कथंभूतैरावर्तैः। देवमणिनिः-

---

१. 'अकम्पित' सटीकपुस्तकपाठः.

देवस्य कल्याणपरम्पराम्, एवमपरैरपि लक्षणैर्दशस्वपि क्षेत्रेषु प्रशस्तं विजयवैनतेयनामधेयमत्र प्रस्तावे वाजिविनोदमकरन्देन बन्दिना सलीलमभ्यधायि तुरङ्गमगुणसंकीर्तनानीमानि वृत्तानि—

गिरयो गिरिकप्रख्याः सरितः सारिणीसमाः ।
भवन्ति लङ्घने यस्य कासारा इव सागराः ॥ १९१ ॥
एता दिशश्चतस्रोऽपि चतुश्चरणगोचराः ।
स्यदे यस्य प्रजायन्ते गोपुराङ्गणसन्निभाः ॥ १९२ ॥

---

श्रेणिश्रीवृक्षरोचमानादिनामभिः देवमणिर्निर्गलादेशो ग्रीवाधोभागः, निःश्रेणिर्ललाटे उपर्युपरि त्रय आवर्ताः, श्रीवृक्षः पर्याणप्रदेशः, रोचमानः कण्ठप्रदेशः, ते आदिर्येषां तानि नामानि येषामावर्तानां ते देवमणिनिःश्रेणिश्रीवृक्षरोचमानादिनामानस्तैस्तथोक्तैः । न केवलमेतैरेवावर्तैराश्रितोचितप्रदेशम्, अपि तु शुक्तिमुकुलावलीढकादिभिश्च तद्विशेषैः शुक्तिर्मुक्तास्फोटकसदृशी, मुकुलं कुड्मलोपमम्, अवलीढकं गवालीढसमानाकारम्, तानि आदिर्येषां आवर्तानां ते शुक्तिमुकुलावलीढकादयस्तैः तद्विशेषैः(?) । मकामरकाभेदंदरित्यर्थः । एवमपरैरपि लक्षणैर्दशस्वपि क्षेत्रेषु प्रशस्तम् एवममुना प्रकारेण अपरैरपि शालिहोत्रशास्त्रोक्तैर्लक्षणैः कृत्वा दशस्वपि क्षेत्रेषु दशस्वपि गात्रेषु प्रशंसनीयं विज्ञापयति । कानि तानि दश क्षेत्राणि । 'तानि वक्त्रशिरोग्रीवावंशोवक्षश्च पञ्चमम् । हृदयासनकक्षाश्च नाभिः सप्तममेव च । कुक्ष्यष्टमं खुरे जानु जङ्घाश्च दशमं मतम् ॥' विजयवैनतेय इति नाम यस्य अर्वतः स विजयवैनतेयनामधेयस्तं तथोक्तम् । अत्र प्रस्तावे अस्मिन् अवसरे वाजिविनोदमकरन्देन नाम्ना बन्दिना स्तुतिपाठकेन सलीलं विदग्धचेष्टया तुरङ्गमगुणसंकीर्तनानि अश्वगुणस्तवनानि इमानि वक्ष्यमाणलक्षणोपलक्षितानि वृत्तानि पद्यानि अभ्यधायि पठितानि अभिहितानि पठ्यन्ते स्म । 'इजात्मनेपदे प्रथमैकवचने' इत्यधिकारे 'भावकर्मणोश्च' इति इच्प्रत्ययो अद्यतन्याः प्रथमैकवचनं च ।

**गिरय इत्यादि** । यस्य तुरङ्गमस्य लङ्घने उत्फालने गिरयः पर्वताः गिरिकप्रख्याः क्रीडाकन्दुकसमाना भवन्ति जायन्ते । सरितो नद्यः सारिणीसमाः धोरणीसमाः सदृशा भवन्ति । सागराः समुद्राः कासारा इव (तल्ला इव) तडागसदृशा भवन्ति । उपमामध्यदीपकालंकारः ॥

**एता इत्यादि** । यस्य तुरङ्गमस्य स्यदे जवे वेगे सति । 'स्यदो जवे' इति निपातः । एताः प्रत्यक्षीभूताः दिशो हरितश्चतस्रोऽपि चतुःसंख्या अपि चतुश्चरणगोचराश्चतुःपादगम्याः सत्यो गोपुराङ्गणसन्निभाः पुरद्वाराग्रभूमिसदृशाः प्रजायन्ते भवन्ति । उपमालंकारः ॥

प्राप्नुवन्ति जवे यस्य भूमावपतिता अपि।
निषादिनां पुरक्षिप्ताः शल्यबालाः करग्रहम्॥ १९३॥
यस्य प्रवेगवेलायां सकाननधराधरा।
धरणिः खुरलग्नेव सार्धमध्वनि धावति॥ १९४॥

किं च।

बालबालधितनूरुहपृष्ठे वंशकेसरशिरःश्रवणेषु।
वक्त्रनेत्रहृदयोदरदेशे कण्ठकोशखुरजानुजवेषु॥ १९५॥
अन्यत्र स्वल्पदोषोऽपि यद्येतेषु न दोषवान्।
शुभावर्तच्छविच्छायो हयः स्याद्विजयोदयः॥ १९६॥

---

प्राप्नुवन्तीत्यादि। यस्य तुरङ्गमस्य जवे वेगे सति शल्यबालाः सपुङ्खबाणाः पुरः अग्रतः क्षिप्ताः मुक्ताः सन्तो भूमौ अपतिता अपि निषादिनां अश्ववाराणां करग्रहं हस्तग्राह्यं प्राप्नुवन्ति लभन्ते। पूर्वं निषादिभिर्बाणा मुक्ताः, पश्चादश्वप्रेरिताः यावद्बाणा गच्छन्ति तावदश्वो गतः, पश्चात्तैरेव निषादिभिस्ते बाणा भूमावापतिता एव गृहीता इत्यर्थः। अतिशयालंकारः॥

यस्येत्यादि। यस्य तुरङ्गमस्य प्रवेगवेलायां उत्कृष्टजवावसरे धरणिः भूमिः अध्वनि मार्गे सार्धं धावति तुरङ्गमेन सह यान्तीव दृश्यते। कथंभूता धरणिः। सकाननधराधरा वनपर्वतसहिता। अपरं कथंभूता। खुरलग्नेव शफवलितेव। उत्प्रेक्षालंकारः॥

किंच विशेषवर्णनं करोति—बालेति। हयस्तुरगः शुभावर्तच्छविच्छायः सन् शुभाः कल्याणकारका आवर्ताः भ्रमरकाः छविश्च रोमतेजः छाया च कान्तिर्यस्य स शुभावर्तच्छविच्छायः। एवंगुणविशिष्टो हयो विजयोदयः स्यात् शत्रुपराजयदायकः स्याद्भवेत्। यदि चेत् अन्यत्र पूर्ववृत्तलक्षणादन्यत्स्वल्पदोषोऽपि भवति। एतेषु न दोषवान् एतेषु स्थानेषु निर्दोष एव। एतेषु केषु। बालबालधितनूरुहपृष्ठे बालबालधिः सकेशपुच्छः तनूरुहाश्च रोमाणि पृष्ठं च आसनप्रदेशः बालबालधितनूरुहपृष्ठे। समाहारो द्वन्द्वः। वंशकेसरशिरःश्रवणेषु वंशश्च पृष्ठास्थि केसराश्च स्कन्धकेशाः शिरश्च मस्तकं श्रवणौ कर्णौ वंशकेसरशिरःश्रवणास्तेषु। वक्त्रनेत्रहृदयोदरदेशे वक्त्रं मुखं नेत्रे च लोचने हृदयं च वक्षःस्थलमुदरं च कुक्षिः वक्त्रनेत्रहृदयोदराणि तेषां देशः स्थानं वक्त्रनेत्रहृदयोदरदेशस्तस्मिन्। कण्ठकोशखुरजानुजवेषु कण्ठश्च ग्रीवा कोशश्च लिङ्गं खुराश्च शफाः जानूनि च जङ्घानां संधयः। अष्ठीवन्तीत्यर्थः। जवश्च वेगः कण्ठकोशखुरजानुजवास्तेषु। समुच्चयालंकारः॥ युग्मम्॥

---

१. 'लग्नेव' सटीकपुस्तकपाठः.

मुक्ताफलेन्दीवरकाञ्चनाभाः किंजल्कभिन्नाञ्जनभृङ्गशोभाः ।
वालारुणाशोकशुकप्रकाशास्तुरङ्गमा भूमिभुजां जयेशाः ॥ १९७ ॥
गजेन्द्रकण्ठीरवतानकानां भेरीमृदङ्गानकनीरदानाम् ।
समस्वराः स्वामिनि हेषितेन भवन्ति वाहाः परमुत्सवेहाः ॥ १९८ ॥
नीरेजनीलोत्पलमालतीनां सर्पिर्मधुक्षीरमदैः समानाः ।
स्वेदे मुखे श्रोतसि येषु गन्धास्ते वाजिनः कामदुहो नृपेषु ॥ १९९ ॥

---

**मुक्ताफलेत्यादि** । भूमिभुजां राज्ञां तुरङ्गमा अश्वा जयेशा जयसमर्थाः भवन्ति । कथंभूतास्तुरङ्गमाः । मुक्ताफलेन्दीवरकाञ्चनाभाः मुक्ताफलानि च शौक्तिकेयानि, इन्दीवराणि च नीलोत्पलानि, काञ्चनं सुवर्णम्, मुक्ताफलेन्दीवरकाञ्चनानि तेषां आभा वर्णो येषां ते तथोक्ताः । शुक्लश्यामवर्णा इत्यर्थः । पुनः कथंभूताः । किंजल्कभिन्नाञ्जनभृङ्गशोभाः किंजल्कः केसरः, भिन्नाञ्जनं च मर्दितमषी, भृङ्गाश्च भ्रमराः, तेषां शोभा वर्णो येषां ते तथोक्ताः । गोरोचनावर्ण-इन्द्रनीलवर्ण-कृष्णाश्च । पुनः कथंभूताः । वालारुणाशोकशुकप्रकाशाः वालारुणश्च उदयभास्करः, अशोकश्च पिण्डीद्रुमः, शुकश्च कीरः, एतेषां प्रकाशो वर्णो येषां ते वालारुणाशोकशुकप्रकाशाः ते तथोक्ताः । अव्यक्तरागरक्तवर्णहरितवर्णा इत्यर्थः । उपमालंकारः ॥

**गजेन्द्रेत्यादि** । वाहास्तुरङ्गमा हेषितेन शब्दितेन । ध्वनितेनेति यावत् । स्वामिनि राजनि परं निश्चयेन उत्सवेहा महोत्सवचेष्टिता भवन्ति । कथंभूताः । गजेन्द्रकण्ठीरवतानकानां समस्वराः गजेन्द्रो यूथनाथः, कण्ठीरवश्च पञ्चाननः, तानकाश्च वृषभाः, गजेन्द्रकण्ठीरवतानकास्तेषां समस्वराः । भेरीमृदङ्गानकनीरदानां समस्वराः भेरी च भम्भा, मृदङ्गश्च मर्दलः, आनकश्च पटहः, नीरदश्च जलधरः, भेरीमृदङ्गानकनीरदास्तेषां समस्वराः । समुच्चयालंकारः ॥

**नीरेजेत्यादि** । नीरेजनीलोत्पलमालतीनां ते वाजिनः स्वस्थाः नृपेषु राजसु कामदुहो वाञ्छितप्रदा भवन्ति । ते के । येषु स्वेदे प्रस्वेदे मुखे वक्त्रे श्रोतसि कर्णद्वये गन्धाः परिमला भवन्ति । कथंभूता गन्धाः । नीरेजनीलोत्पलमालतीनां समानाः सदृशाः नीरेजं कमलम्, नीलोत्पलं इन्दीवरम्, मालती जाती, नीरेजनीलोत्पलमालत्यस्तासां समानाः सदृशा गन्धाः । तथोक्तम्—धन्वन्तरिनिघण्टुज्ञानी मनोज्ञानि सुमना राजपुत्री प्रियंवदा मालती हृद्यगन्धा चत्वेतिका तैलभाविनी तथा द्वितीया जाती वा संप्रहसन्ती चमूवसन्तजा शीतला शीतसंवासा सेव्या भ्रमरबान्धवाः मनागरक्तवर्णा ज्ञातव्याः । [पुनः] कथंभूताः गन्धाः । सर्पिर्मधुक्षीरमदैः सर्पिश्च घृतम्, मधु च क्षौद्रम्, क्षीरं च दुग्धम्, मदश्च गजदानम्, सर्पिर्मधुक्षीरमदास्तैस्तथोक्तैः समानाः । उपमालंकारः ॥

हंसप्लवङ्गपञ्चास्यद्विपशार्दूलसंनिभैः ।
मितद्रवः क्षितीन्द्राणामानूकैर्विजयप्रदाः ॥ २०० ॥
ध्वजहलकलशकुशेशयकुलिशशशाङ्कार्धचक्रसमाः ।
तोरणतरवारिनिभास्तुरगेऽङ्गजवृत्तयः श्रेष्ठाः ॥ २०१ ॥
वक्षसि वाह्वोरलिके शफदेशे कर्णमूलयोश्चैव ।
आवर्तास्तुरगाणां शस्ताः केशान्तयोस्तथा शुक्तिः ॥ २०२ ॥
विशालभाला वहिरानतास्याः सूक्ष्मत्वचः पीवरवाहुदेशाः ।
सुदीर्घजङ्घाः पृथुपृष्ठमध्यास्तनूदराः कामकृतस्तुरङ्गाः ॥ २०३ ॥

---

**हंसेत्यादि** । हंसप्लवङ्गपञ्चास्यद्विपशार्दूलसंनिभैः हंसश्च श्वेतच्छदः प्लवङ्गश्च कपिः, पञ्चास्यश्च सिंहः, द्विपश्च हस्ती, शार्दूलश्च व्याघ्रः, तेषां संनिभैः सदृशैः आनूकैः नितम्बैः कृत्वा मितद्रवस्तुरङ्गमाः क्षितीन्द्राणां राज्ञां विजयप्रदा विजयदायका भवन्ति । उपमालंकारः ॥

**ध्वजेत्यादि** । तुरगे तुरङ्गमे अङ्गजवृत्तयो रोमावर्ताः श्रेष्ठाः प्रशंसनीया भवन्ति । कथंभूता अङ्गजवृत्तयः । ध्वजहलकलशकुशेशयकुलिशशशाङ्कार्धचक्रसमाः ध्वजश्च पताका, हलं च लाङ्गलम्, कलशश्च घटः, कुशेशयं च कमलम्, कुलिशं च वज्रम्, शशाङ्कार्धं च अर्धचन्द्रः, चक्रं च भूमितलम्, तानि ध्वजहलकलशकुशेशयकुलिशशशाङ्कार्धचक्राणि तैः समाः सदृशाः । पुनः कथंभूता अङ्गजवृत्तयः । तोरणतरवारिनिभाः तोरणं च द्वादशस्तम्भविन्यासः, तरवारिश्च एकधारखड्गः, ताभ्यां निभाः सदृशास्तोरणतरवारिनिभाः । उपमालंकारः ॥

**वक्षसीत्यादि** । तुरगाणां तुरङ्गमाणां आवर्ताः भ्रमरकाः शस्ताः प्रशंसनीया भवन्ति । कुत्र कुत्र । वक्षसि हृदयस्थले, तथा बाह्वोर्भुजयोर्विषये, तथा अलिके ललाटे, तथा शफदेशे चतुर्णां खुराणां उपरितनभागे, तथा कर्णमूलयोः श्रवणमूलयोर्विषये, तथा केशान्तयोर्ग्रीवोभयप्रदेशयोः शुक्तिर्मुक्तास्फोटाकारैरावर्तैः शस्तौ भवतः । समुच्चयालंकारः ॥

**विशालेत्यादि** । तुरङ्गास्तुरङ्गमाः कामकृत इष्टफलदायका भवन्ति । कथंभूतास्तुरङ्गाः । विशालभालाः विस्तीर्णललाटप्रदेशाः । पुनः कथंभूताः । वहिरानतास्याः वाह्यप्रदेशे निम्नमुखाः । पुनः कथंभूताः । सूक्ष्मत्वचः सूक्ष्मा च तुच्छा त्वक् त्वचा येषां ते तथा । पुनः पीवरवाहुदेशाः स्थूलबाहुप्रदेशाः । पुनः सुदीर्घजङ्घाः अत्यायतप्रसृताः । पुनः पृथुपृष्ठमध्याः विस्तीर्णासनप्रदेशाः । पुनः तनूदराः मध्यक्षामाः । जात्यलंकारः ॥

जीमूतकान्तिर्घनघोषहेषः करीन्द्रलीलागतिराज्यगन्धः ।
प्रियः परं माल्यविलेपनानामारोहणार्हस्तुरगो नृपस्य ॥ २०४ ॥

कदनकन्दुककेलिविलासिनः परवलस्खलने परिघा हयाः ।
सकलभूवलयेक्षणदृष्टयः समरकालमनोरथसिद्धयः ॥ २०५ ॥

अन्यूनाधिकदेहाः समसुविभक्ताश्च वर्ष्मभिः सर्वैः ।
संहतघनाङ्गवन्धाः कृतविनयाः कामदास्तुरगाः ॥ २०६ ॥

जयः करे तस्य रणेषु राज्ञः काले परं वर्षति वासवश्च ।
धर्मार्थकामाभ्युदयः प्रजानामेकोऽपि यस्यास्ति हयः प्रशस्तः ॥२०७॥

---

**जीमूतकान्तिरित्यादि** । तुरगस्तुरङ्गमो नृपस्य राज्ञ आरोहणार्हः चढनयोग्यो भवति । कथंभूतस्तुरगः । जीमूतकान्तिर्मेघवर्णः, घनघोषहेषः मेघध्वनिसमानहेषारवः, करीन्द्रलीलागतिः हस्तिनाथवदनायासमन्दगमनः, आज्यगन्धः घृतसदृशपरिमलशरीरः । पुनः कथंभूतः । माल्यविलेपनानां च पुष्पचन्दनानां परमतिशयेन प्रियः । उपमालंकारः ॥

**कदनेत्यादि** । हया अश्वाः । कथंभूता हयाः । कदनकन्दुककेलिविलासिनः कन्दुकस्य केलिः क्रीडाकरणं कन्दुककेलिः, कदनः संग्राम एव कन्दुककेलिस्तत्र विलासो येषां ते कदनकन्दुककेलिविलासिनः । पुनः कथंभूता हयाः । परवलस्खलने परिघाः परेषां शत्रूणां वलस्य सैन्यस्य स्खलने प्रतिष्टम्भने परिघा अर्गलाः । पुनः कथंभूता हयाः । सकलभूवलयेक्षणदृष्टयः सकलस्य समग्रस्य भूवलयस्य पृथ्वीमण्डलस्य ईक्षणे अवलोकने दृष्टयो लोचनानि येषाम् । पुनः कथंभूताः हयाः । समरकालमनोरथसिद्धयः समरकाले संग्रामावसरे मनोरथानां वाञ्छितानां सिद्धयः प्राप्तिकराः । रूपकालंकारः ॥

**अन्यूनेत्यादि** । तुरगास्तुरङ्गमाः कामदा वाञ्छितप्रदायका भवन्ति । कथंभूतास्तुरगाः । अन्यूनाधिकदेहाः हीनाङ्गाधिकाङ्गरहितशरीराः । पुनः कथंभूताः । सर्वैः समग्रैर्वर्ष्मभिरुत्सेधायामपरिणाहैः कृत्वा समसुविभक्ताः समानविभागीकृताः समानविश्राणिताः । पुनः कथंभूताः । संहतघनाङ्गवन्धाः संहतो न्यस्तो घनो निविडो अङ्गवन्धः शरीररचना येषां ते संहतघनाङ्गवन्धाः । पुनः कथंभूताः । कृतविनयाः सूर्यमण्डलचन्द्राकारश्रीवत्सत्रिकूटयौवनषट्पद्मकूर्मसर्वतोभद्रमलकवीणावर्तस्वस्तिकाविगतिषु शिक्षिताः । समुच्चयालंकारः ॥

**जय इत्यादि** । यस्य राज्ञ एकोऽपि हयः प्रशस्तः प्रशंसनीयः अस्ति भवति तस्य राज्ञः रणेषु संग्रामेषु जयः शत्रुपराजयः करे हस्ते भवति । वासवो मेघः परं निश्चयेन काले अवसरे वर्षति क्षरति । तस्य राज्ञः प्रजानां लोकानां धर्मार्थकामाभ्युदयो भवति । धर्मश्च पूजादानलक्षणः, अर्थश्च धनधान्यादिलक्षणः, कामश्च इष्टस्रग्वनिताचन्दनादिभोगः पञ्चेन्द्रियविषयसौख्यं धर्मार्थकामास्तेषु अभ्युदयः उत्पत्तिर्भवति । समुच्चयालंकारः ॥

कुलाचलकुचाम्भोधिनितम्बा वाहिनीभुजा।
धरा पुरानना स्त्रीव तस्य यस्य तुरङ्गमाः॥ २०८॥

इति बन्दिभ्यां ताभ्यामुक्ते विज्ञप्ती निशम्य विश्राण्य च पञ्चाङ्गलयनाधिकमङ्गस्पृष्टकमुत्तरीयदुकूलाञ्चलपिहितबिम्बिना सिद्धादेशप्रमुखेन मौहूर्तिकसमाजेन, 'देव, प्रासादं संपाद्य प्रतिमां निवेशयेत्, प्रतिमां वा निवेश्य प्रासादं संपादयेत्, सति सामर्थ्ये प्रासादसंपादनं प्रतिमानिवेशनं च युगपत्कुर्यात्, इति यथा—तथा समाचरितदारकर्मणः पट्टबन्धोत्सवम्,

---

**कुलाचलेत्यादि।** यस्य राज्ञः तुरङ्गमा वर्तन्ते तस्य राज्ञो धरा पृथ्वी भवति। केव। स्त्रीव स्त्रीसदृशी। कथंभूता धरा। कुलाचलकुचा कुलाचलौ उदयास्तपर्वतौ तावेव कुचौ स्तनौ यस्याः सा कुलाचलकुचा। पुनः कथंभूता। अम्भोधिनितम्बा अम्भोधिः समुद्रो नितम्बः कटिपश्चाद्भागो यस्याः सा तथा। पुनः कथंभूता। वाहिनीभुजा वाहिन्यौ गङ्गासिन्धू नद्यौ भुजौ यस्याः सा तथा। पुनः कथंभूता। पुरानना पुरं राजधानी आननं मुखं यस्याः सा तथा। रूपकालंकारः॥

**इतीत्यादि।** किल निश्चयेन तदा तस्मिन् काले हस्त्यश्ववर्णनावसाने अहं संपादितद्वितीयाश्रमदीक्षाभिषेकश्च संजग्मे संपादित उत्पादितो द्वितीयाश्रमस्य गृहस्थाश्रमस्य दीक्षाया अभिषेको मङ्गलस्नानं यस्य संपादितद्वितीयाश्रमदीक्षाभिषेकः, चकाराद्राज्याभिषेकश्च, संजग्मे संजातः। किं कृत्वा पूर्वम्। इति पूर्वोक्तप्रकारेण बन्दिभ्यां स्तुतिपाठकाभ्यां ताभ्यां करिकलाभः करिकलाभिधानः वाजिविनोदमकरन्दाभ्यां उक्ते विज्ञप्ते विज्ञप्ती विज्ञापने निशम्य श्रुत्वा। पुनश्च किं कृत्वा पूर्वम्। पञ्चाङ्गलयनाधिकं कटयूर्ध्वकायकरद्वयमस्तकसंबन्धि आभरणवस्त्रादिकादपि अधिकं अधिकतरं अङ्गस्पृष्टकं निजशरीरलग्नं वस्तु ताभ्यां उभाभ्यां विश्राण्य दत्वा। कथंभूतोऽहम्। सिद्धादेशप्रमुखेन सिद्धादेशनामा प्रमुखो मुख्यो यस्य मौहूर्तिकसमाजस्य स सिद्धादेशप्रमुखस्तेन सिद्धादेशप्रमुखेन मौहूर्तिकसमाजेन गणकसमूहेन इति अमुना प्रकारेण विनिवेदितसविधतरोत्सवसमयः विनिवेदितो विज्ञापितः सविधतरो निकटवर्ती उत्सवसमयो विवाहपट्टाभिषेकावसरः। कथंभूतेन मौहूर्तिकसमाजेन। उत्तरीयदुकूलाञ्चलपिहितबिम्बिना उत्तरीयमुपरितनं यत् दुकूलं पट्टकूलवस्त्रं तस्य अञ्चलेन प्रान्तेन पिहिता झम्पिता बिम्बी मुखं यस्य स उत्तरीयदुकूलाञ्चलपिहितबिम्बी तेन तथोक्तेन। इतीति किम्। हे देव हे राजन्, प्रासादं देवभवनं संपाद्य निष्पाद्य प्रतिमां प्रतिच्छायं निवेशयेत् स्थापयेत्। प्रतिमां प्रतिबिम्बं वा निवेश्य स्थापयित्वा प्रासादं संपादयेत् देवमन्दिरं निष्पादयेत्। सामर्थ्ये सति समर्थतायां विद्यमानायां सत्यां प्रासादसंपादनं देवग्रहनिष्पादनं प्रतिमानिवेशनं च बिम्बस्थापनं च युगपत्समकालं कुर्यात् विदध्यात्। इति ईदृशो न्यायो यथा येन

कृतपट्टबन्धोत्सवस्य वा दारकर्म, सत्यनुगुणनायुक्ते लग्ने दारकर्म पट्टबन्धोत्सवं च सह समाचरेदित्यत्र बीजाङ्कुरयोरिव न कश्चित्पूर्वापरक्रमनियमः। कोहलिनीफलपुष्पयोरिव सहभावे वा विरोधः कोऽपि समस्ति। ततः श्रूयतामुभयोत्सवलग्नविशुद्धिः।

तथा हि—सुकविकाव्यकथाविनोददोहदमाघ माघस्तावदयं मासः, सपत्नसंतानसरःशोषशुचे शुचिः पक्षः, दुर्वारवैरिकुलकामिनीवैधव्यदीक्षागुरो गुरुर्वारः, अनवरतवसुविश्राणनसंतर्पितसमस्तातिथे तिथिः पञ्चमी प्रणतभू-

---

प्रकारेण वर्तते, तथा तेन प्रासादप्रतिमाकारेण समाचरितदारकर्मणः कृतविवाहराज्ञः पट्टबन्धोत्सवं पट्टाभिषेकं पट्टबन्धं समाचरेत् कुर्यात्। कृतपट्टबन्धोत्सवस्य राज्ञः वाथ वा दारकर्म समाचरेत् विवाहं कुर्यात्। अनुगुणनायुक्ते अनुकूलनासंयुक्ते लग्ने शश्युदये 'राशीनामुदयो लग्नम्' इति वचनात् सति विद्यमाने दारकर्म विवाहमहोत्सवं पट्टबन्धोत्सवं च राज्यपट्टाभिषेकं च सह युगपत् समाचरेत् समं कुर्यात् इत्यत्र अस्मिन् कार्यद्वये बीजाङ्कुरयोरिव पूर्वं बीजं पश्चादङ्कुरः पूर्वमङ्कुरः पश्चाद्बीजं बीजाङ्कुरौ युगपद्भवत एव। पूर्वापरक्रमनियमः पूर्वपश्चादनुक्रमनिर्धारणं न कश्चिद्वर्तते न कोऽप्यस्ति। कोहलिनीफलपुष्पयोरिव कूष्माण्डीत(स)स्यकुसुमवत् सहभावे युगपद्भावे वा कोऽपि कश्चिद्विरोधो न समस्ति न समग्वर्तते। ततस्तस्मात् कारणात् उभयोत्सवलग्नविशुद्धिः दारकर्मपट्टबन्धोत्सवमुहूर्तविशुद्धिः कर्मतापन्ना भवता कर्तृभूतेन श्रूयतामाकर्ण्यताम्।

तथाहि। तमेव निरूपयति उभयोत्सवलग्नविशुद्धिं निरूपयति—हे सुकविकाव्यकथाविनोददोहदमाघ सुकवीनां काव्यकथाविनोददोहदे क्रीडामनोरथे माघो माघकविसदृशः हे राजन् भूपते तस्य संबोधनं हे तथोक्त, माघो माघनामा तावदनुक्रमेण अयं इदानीं वर्तमानो मासः वर्तते। हे सपत्नसंतानसरःशोषशुचे सपत्नाः शत्रवस्तेषां संतानः समूह एव सरस्तडागः जडमृतत्वात् तस्य शोषे निर्जलीकरणे शुचिराषाढमासः सपत्नसंतानसरःशोषशुचिस्तस्य संबोधनं हे तथोक्त, शुचिः शुक्लः पक्षो वर्तते। हे दुर्वारवैरिकुलकामिनीवैधव्यदीक्षागुरो दुःखेन महता कष्टेन वारयितुमशक्या दुर्वारास्ते च ते वैरिणः शत्रवस्तेषां कुलं समूहं तस्य कामिन्यो विलासिन्यस्तासां वैधव्यं विश्वस्तात्वं तस्य दीक्षा व्रतस्य ग्रहणं रण्डात्वप्रतिपालनं तस्या गुरुर्निषेकादिकृद्गुरुः दुर्वारवैरिकुलकामिनीवैधव्यदीक्षागुरुस्तस्य (कीर्तनं) संबोधनं क्रियते हे तथोक्त, गुरुर्बृहस्पतिनाम वारो दिनं वर्तते। हे अनवरतवसुविश्राणनसंतर्पितसमस्तातिथे अनवरतं निरन्तरं वसोः कनकरत्नस्य विश्राणनं वितरणं वर्षणं तेन संतर्पिताः सम्यक्प्रीणिताः समस्ता निखिला अपि अतिथयः पात्राणि येन स तथा तस्य संबोधनं हे तथोक्त, तिथिः

पालाङ्गनाशृङ्गारसमागमाभयप्रदानोत्तर उत्तरानक्षत्रम्, प्रचण्डदोर्दण्डमण्डनकण्डूलद्विष्टदानवदमनसंपादितजगत्त्रयीहर्षण हर्षणो योगः, शौर्यधैर्यौदार्यवीर्यादिक्षत्रियचरित्रकीर्तनकथाप्रथम प्रथमं करणम्, निजप्रतापगुणगायनीकृतामरमिथुन मिथुनोदयः समयः, सकललोकलोचनोत्सवचन्द्र चन्द्र

---

पञ्चमी वर्तते। गुरौ पूर्णासिद्धियोगः सूचित इत्यर्थः। हे प्रणतभूपालाङ्गनाशृङ्गारसमागमाभयप्रदानोत्तर प्रणताः पादयोः पतिता ये भूपालाः सामन्तास्तेषामङ्गनानां कमनीयकामिनीनां शृङ्गारसमागमे अलंकरणकाले अलंकारकरणे अभयप्रदाने निर्भयत्वकरणे उत्तरः श्रेष्ठः प्रणतभूपालाङ्गनाशृङ्गारसमागमाभयप्रदानोत्तरस्तस्य संबोधनं हे तथोक्त, उत्तरानक्षत्रं उत्तराभाद्रपदं नाम नक्षत्रं वर्तते। तथा चोक्तम्—'कन्याविवाहे निर्वेधो मघास्वात्युत्तरात्रये। मूलानुराधाहस्तेषु रेवतीरोहिणीमृगे॥' हे प्रचण्डदोर्दण्डमण्डनकण्डूलद्विष्टदानवदमनसंपादितजगत्त्रयीहर्षण प्रचण्डा बलवत्तरा ये दोर्दण्डा बाहुर्गलानि तैर्मण्डनं संग्रामसूत्रं कण्डूलाः खर्जूमन्तो ये द्विष्टाः शत्रवस्त एव दानवा दैत्यास्तेषां दमनेन मानमर्दनेन भङ्गकरणेन संपादितं जगत्त्रय्यास्त्रैलोक्यस्य हर्षणमानन्दो येन स तथा तस्य संबोधनं हे तथोक्त, हर्षणो नाम योगो वर्तते। योगाः सप्तविंशतिर्भवन्ति। ते के—'विष्कम्भः प्रीतिरायुष्मान्सौभाग्यः शोभनस्तथा। अतिगण्डः सुकर्मा च धृतिः शूलं तथैव च॥ गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा। वज्रः सिद्धिर्व्यतीपातो वरीयान्परिघः शिवः। सिद्धिः साध्यः शुभः शुक्लो ब्रह्मा ऐन्द्रोऽथ वैधृतिः॥' इति गणनया हर्षणश्चतुर्दशो योगः। हे शौर्यधैर्यौदार्यवीर्यादिक्षत्रियचरित्रकीर्तनकथाप्रथम शूरस्य भावः कर्म वा शौर्यं सौभव्यं सहस्रभटकोटिभटादिकत्वम्, धीरस्य भावो धैर्यं संग्रामादनिवर्तकत्वम्, उदारस्य भावः औदार्यं व्यञ्जनवत् अविद्यमानोऽपि घनस्य दातृत्वम्, वीरे भवं वीर्यं सामर्थ्यम्, आदिशब्दात् शौण्डीर्यगाम्भीर्यादिकं यत् क्षत्रियाणां राजपुत्राणां चरित्रस्य कीर्तनं शब्दनं कथनं तस्य कथा वार्ता तस्यां प्रथमो यस्तस्य संबोधनं हे तथोक्त, प्रथमं करणं वर्तते। करणान्येकादश भवन्ति। तन्मध्ये सप्त चलानि, चत्वारि स्थिराणि। कानि तानि चलानि—'ववं च बालवं चैव कौलवं तैत्तलं तथा। गरं च वणिजं चैव विष्टिरुक्ता च सप्तमम्॥' तत्र स्थिराणि चत्वारि करणानि। उक्तं च—'चतुर्दशी या तु शशिप्रहीणे तस्या विहीने शकुनिर्द्वितीये। दशार्धयोस्तश्चरमहिभागे किंस्तुघ्नमाद्ये प्रतिपद्दले च॥' इति वचनात् प्रथमं करणं ववनाम। हे निजप्रतापगुणगायनीकृतामरमिथुन निज आत्मीयो योऽसौ प्रतापः कोशदण्डाद्यतिरेकस्तस्य गुणस्य गायनी गान्धर्वीकृतामरमिथुनानि स्त्रीपुरुषयुगलानि येन स तथा हे तथोक्त, मिथुनोदयः समयः मिथुनलग्नस्य उदयो वर्तते। मिथुनकन्यातुलाधनुः पूर्वार्धानि मानुषास्तेन धनुःपूर्वार्धं मानवाकारं अपरार्धमश्वाकारम्। हे सकललोकलोचनोत्सवचन्द्र सकलाश्च ते लोकाश्च सकललोकास्तेषां लोचनानामुत्सवे आनन्दकरणे चन्द्रः शीतांशुस्तस्य संबोधनं हे तथोक्त,

एकादशो लग्नस्य, श्रीसरस्वतीप्रसाधितपूर्वपाणिग्रह ग्रहगणः सर्वोऽपि सप्तमाष्टमद्वादशदेशाश्रयशून्यो लग्नस्य, कल्याणपरम्परासंपत्संपन्नदैवमानुष मानुषो लग्नांशकश्च, अशेषविश्वंभरेश्वरातिशायिजन्मोत्सवदिवस दिवसतारातारेश्वरावस्थाश्च प्रकामं प्रशस्ताः, विशेषेण तु गुरुवलं महादेव्याः, देवस्य चादित्यबलम्। तदुत्तिष्ठतु देवः' इति विनिवेदितसविधतरोत्सवसमयः समुपसृत्य विलासिनीजनजन्यमानमङ्गलालापं तमभिषेकमण्डपममरालयमिव सरत्नरजतकार्तस्वरकलशम्, ईश्वरश्वशुरमिव विविधौषधिसनाथम्, अकूपारमिव समु-

---

चन्द्रश्चन्द्रमा लग्नस्य मिथुनलग्नस्य एकादशो वर्तते। हे श्रीसरस्वतीप्रसाधितपूर्वपाणिग्रह श्रीश्च लक्ष्मीः, सरस्वती च भारती, अनयोः प्रसाधितः कृतः पूर्वं प्रथमं पाणिग्रहो येन स तस्य संवोधनं हे तथोक्त, सर्वोऽपि समस्तोऽपि ग्रहगणो लग्नस्य सप्तमाष्टमद्वादशदेशाश्रयशून्यो वर्तते। सप्तमे च स्थाने अष्टमे च स्थाने द्वादशे च स्थाने कोऽपि ग्रहो न वर्तते। हे कल्याणपरम्परासंपत्संपन्नदैवमानुष कल्याणानां शुभानां परम्परा श्रेणिः सैव संपत् तया संपन्नः परिपूर्णः दैवमानुषो दिव्यमानवस्तस्य संवोधनं हे तथोक्त मानुषो लग्नांशकः वृषलग्नस्य मिथुनांशो द्विपदत्वात् मानुषः द्विपदः चतुष्पदश्च अपदमध्ये। हे अशेषविश्वंभरेश्वरातिशायिजन्मोत्सवदिवस विश्वंभरायाः पृथिव्या ईश्वरा विश्वंभरेश्वराः, अशेषाश्च ते विश्वंभरेश्वराश्च तैः विश्वंभरेश्वरैः अतिशायि अत्युत्कृष्टं जन्म उत्सवदिवसो यस्य स तथा तस्य संवोधनं हे तथोक्त, दिवसतारातारेश्वरावस्थाश्च प्रकामं प्रशस्ताः दिवसाश्च 'प्रवासनष्टाख्यमृतंजयाख्या हास्या रतिक्रीडितसप्तमुक्ता क्रूराह्वया कम्पितसुस्थिताश्च ॥' तेषु मध्ये दिवसावस्था अतिशयेन प्रशस्ता वर्तते। तारा तारावस्था प्रशस्ता वर्तन्ते। तदुक्तम्—'जन्मतारा द्वितीया च षष्ठी चैव चतुर्थिका। अष्टमी नवमी चैव षड् ताराश्च शुभावहाः ॥' एतावता तृतीया पञ्चमी सप्तमी च तारा अशुभा इत्यर्थः। यस्मिन् नक्षत्रे जन्म भवति तस्माद्गण्यते। तारेश्वरश्च चन्द्रस्तस्याप्यवस्था प्रथमा अतिशयेन प्रशस्ता वर्तते। विशेषेण तु महादेव्या अमृतमतेर्गुरुवलं वर्तते। देवस्य च भवत आदित्यबलं वर्तते। तत्तस्मात् कारणात् देवो भवान् उत्तिष्ठतु उद्भवो भवतु उद्गातु। किं कृत्वा। पूर्वं संपादितद्वितीयाश्रमदीक्षाभिषेकमण्डपं समुपसृत्य सम्यगाश्रित्य। कथंभूतमभिषेकमण्डपम्। विलासिनीजनजन्यमानमङ्गलालापम् विलासिनीजनैः स्त्रीजनैर्वाराङ्गनासमूहैर्वा जन्यमानाः क्रियमाणाः मङ्गलालापा मङ्गलशब्दा यस्मिन् मण्डपे स तथा तम्। पुनः कथंभूतमभिषेकमण्डपम्। सरत्नरजतकार्तस्वरकलशम् कार्तस्वरस्य सुवर्णस्य ये कलशाः पूर्णकुम्भाः रत्नरजतकार्तस्वरकलशास्तत्सहितम्। अथवा रत्नानामपि कलशास्तत्र वर्तन्त एव। कमिव। अमरालयमिव मेरुगिरिमिव। यथा अमरालयो रत्नरजतकार्तस्वर-

द्रगापगाम्भःसुभगम्, अर्हन्निवासमिव प्रसाधितसितातपत्रचामरसिंहासनम्, अम्बुजासनशयमिव कुतपाङ्कुरालंकृतमध्यम्, एवमपरेष्वपि तेषु तेष्वभिलषितेषु वस्तुषु कल्पग्राममिव परिपूरितकामम्, अन्वयागतकुलदेवतोपकण्ठपरिकल्पितसकलकुलधनायुधम्, आप्तलोकापनीयमानमानवसंवाधम्,

यत्पाकोन्मुखमुक्तशुक्तिपटलैर्मुक्ताफलैः स्फारितं
यत्सद्यःप्रविरूढकन्दलदलैरुल्लासितं विद्रुमैः।

---

कलशसहितो भवति। पुनः कथंभूतमभिषेकमण्डपम्। विविधौषधिसनाथम् द्वापञ्चाशदौषधादिसहितं सर्वौषधिसहितं वा। कमिव। ईश्वरश्वशुरमिव हिमवत्पर्वतमिव। यथा हिमवान् नानाप्रकारौषधिसहितो भवति। पुनः कथंभूतमभिषेकमण्डपम्। समुद्रगापगाम्भःसुभगम् समुद्रं गच्छति या सा आपगा नदी तस्याः अम्भोभिर्जलैः सुभगं अतिमनोहरम्। कमिव। अकूपारमिव। यथा अकूपारः समुद्रगापगाम्भःसुभगो भवति। पुनः कथंभूतमभिषेकमण्डपम्। प्रसाधितसितातपत्रचामरसिंहासनम् सितातपत्राणि श्वेतच्छत्राणि, चामराणि च प्रकीर्णकानि, सिंहासनं च सिंहविष्टरम्, सितातपत्रचामरसिंहासनानि प्रसाधितानि मण्डितानि सितातपत्रचामरसिंहासनानि यस्मिन्नभिषेकमण्डपे स प्रसाधितसितातपत्रचामरसिंहासनस्तम्। कमिव। अर्हन्निवासमिव सर्वज्ञसमवसरणसदृशम्। यथा अर्हन्निवासः प्रसाधितातपत्रचामरसिंहासनो भवति। पुनः कथंभूतमभिषेकमण्डपम्। कुतपाङ्कुरालंकृतमध्यम् कुतपाङ्कुरैः प्रत्ययदर्भैरलंकृतः शृङ्गारितो मध्यो मध्यप्रदेशो यस्य मण्डपस्य स तथा तम्। कमिव। अम्बुजासनशयमिव ब्रह्महस्तमिव। यथा अम्बुजासनशयः दर्भाङ्कुरालंकृतः शृङ्गारितमध्यो भवति। पुनः कथंभूतमभिषेकमण्डपम्। एवममुना प्रकारेण अपरेष्वपि तेषु तेषु जगत्प्रसिद्धेषु अभिलषितेषु वस्तुषु मङ्गलभूतेषु पदार्थेषु परिपूरितकामं परिपूर्णाभिलाषम्। कमिव। कल्पग्राममिव स्वर्गलोकमिव। यथा कल्पग्रामः सर्ववस्तुषु परिपूरितकामो भवति। पुनः कथंभूतमभिषेकमण्डपम्। अन्वयागतकुलदेवतोपकण्ठपरिकल्पितसकलकुलधनायुधम् अन्वयागता निजकुलसंबन्धिनी या कुलदेवता अम्बिकापरमेश्वरी तस्या उपकण्ठे समीपे परिकल्पितानि समन्ताद्धृतानि सकलानि समग्राणि कुलधनानि पूर्वपुरुषोपार्जितस्वापतेयानि आयुधानि शस्त्राणि च यस्मिन् अभिषेकमण्डपे स तथा तम्। पुनः कथंभूतमभिषेकमण्डपम्। आप्तलोकापनीयमानमानवसंवाधम् आप्तलोकैः हितकुटुम्बवर्गैः अपनीयमाना दूरीक्रियमाणा मानवानां मनुष्याणां संबाधा संकीर्णता यत्र स तथा तम्। अहं किं कुर्वन्। संपादितद्वितीयाश्रमदीक्षाभिषेकः संजग्मे संजातः। इति अमुना प्रकारेण जलकेलिविलासात् जलकेलिविलासनामवैतालिकात् बोधकारात् मज्जनावसरवृत्तानि स्नानसमयकवितानि आकर्णयन् शृण्वन्। इतीति किम्।

यत्पाकेत्यादि। लक्ष्मीरमणी(ण्या) विनोदः क्रीडा यस्य स लक्ष्मीरमणीविनोदस्तस्य

यन्नारायणनाभिपङ्कजरजोराजीभिरापिञ्जरं
तल्लक्ष्मीरमणीविनोद जलधेः पाथोऽस्तु ते प्रीतये ॥ २०९ ॥
यत्राभूदमृतातपः सुरकरी कल्पद्रुमः कौस्तुभो
लक्ष्मीरप्सरसां गणश्च सुधया सार्धं बुधानां मुदे ।
यद्भूयो भुवनोपकारिचरितैरासेव्यमानं घनै-
स्तद्रत्नाकरवारि मज्जनविधौ भूयात्तव श्रेयसे ॥ २१० ॥

---

संबोधनं हे तथोक्त हे राजन्, तत्प्रसिद्धं जलधेः समुद्रस्य पाथो जलं ते तव प्रीतये हर्षाय अस्तु भवतु। तत्किम्। यत्पाथः मुक्ताफलैः मौक्तिकैः स्फारितं प्रचुरीकृतम्। कथंभूतैः मुक्ताफलैः। पाकोन्मुखीनि पचमानानि निष्पन्नानि तया पाकोन्मुखतया मुक्तानि त्यक्तानि शुक्तीनां मुक्तास्फोटानां पटलानि प्रतरणानि मण्डलानि यैस्तानि पाकोन्मुखमुक्तशुक्तिपटलानि तैस्तथोक्तैः। पाकोन्मुखशब्दात् तत्प्रत्ययो लुप्तः, समासेनैव तत्प्रत्ययस्योक्तत्वात्। तत्किम्। यत्पाथः विद्रुमैः प्रवालैरुल्लासितं शोभमानम्। कथंभूतैः प्रवालैः। सद्यःप्रविरूढकन्दलदलैः सद्यस्तत्कालं प्रविरूढानि प्रादुर्भूतानि कन्दलदलानि वल्लीसमूहानि येषां विद्रुमाणां ते तथा तैः। विद्रुमशब्देनात्र समुद्रसंबन्धिप्रवालमणयो ज्ञातव्याः। तत्किम्। यत्पाथः नारायणनाभिपङ्कजरजोराजीभिरापिञ्जरम् नरस्य वसुदेवस्यापत्यं पुमान् नारायणः। अथवा नारासु जलेषु अयनं यस्यासौ नारायणः। कृष्णस्य क्षीरसागरजलमध्ये शयनकारित्वात् समुद्रस्य मध्यस्थितद्वारवतीनिवासका [ रित्वात् वा ]। नारायणनाभिपङ्कजरजोराजीभिरापिञ्जरं समन्तात् ईषद्वा पीतवर्णम्। रूपकालंकारः ॥

**यत्रेत्यादि**। तत्प्रसिद्धं पूर्वोक्तलक्षणं वा रत्नाकरवारि क्षीरसागरजलं मज्जनविधौ स्नानविधाने तव भवतः श्रेयसे मङ्गलाय भूयाद्भवतु। तत्किम्। यत्र रत्नाकरवारिणि अमृतातपः चन्द्रोऽभूत् बभूव। यत्र रत्नाकरवारिणि सुरकरी ऐरावतो नाम उत्पन्नः। तथा यत्र कल्पद्रुमः संजातः। तथा यत्र कौस्तुभो नाम रत्नमभूत्। तथा यत्र लक्ष्मीरभूत् कृष्णभार्या संजाता। तथा यत्र रत्नाकरवारिणि अप्सरसां रम्भातिलोत्तमोर्वशीमेनिकादीनां स्वर्गवेश्यानां गणः समूहोऽभूद्बभूव। कथम्। सार्धं सह। कया सह। सुधया सह अमृतेन समम्। एतत्सर्वं किमर्थमभूत्। बुधानां विद्वज्जनानां मुदे हर्षाय। तथा यद्रत्नाकरवारि घनैर्मेघैरासेव्यमानमास्वाद्यमानं वर्तते। कथम्। भूयो वारंवारम्। कथंभूतैर्घनैः। भुवनोपकारिचरितैः भुवनस्य मर्त्यलोकस्य उपकारि उपकारकं चरितमाचारो येषां ते भुवनोपकारिचरितास्तैः। तथा चोक्तं कालिदासेन महाकविना—'लक्ष्मीकौस्तुभपारिजातकसुराधन्वन्तरिश्चन्द्रमा गावः कामदुघाः सुरेश्वरगजो रम्भादिदेवाङ्गनाः। अश्वः सप्तमुखः सुधा हरिधनुः शङ्खो विषं चाम्बुधे रत्नानीति चतुर्दश प्रतिदिनं कुर्वन्तु वो मङ्गलम् ॥' समुच्चयालंकारः ॥

यन्नाकलोकमुनिमानसकल्मषाणां
काश्र्यं करोति सकृदेव कृताभिषेकम् ।
प्रालेयशैलशिखराश्रमतापसानां
सेव्यं च यत्तव तदम्बु मुदेऽस्तु गाङ्गम् ॥ २११ ॥

यास्तीराश्रमवासितापसकुलैः संध्याविधावुल्बणाः
सेव्यन्ते प्रतिवासरं सुरगणैर्याः पुण्यपण्यापणाः ।
उह्यन्ते शशिमौलिना च शिरसा त्वन्मज्जनायेव या-
स्ता वारः सवनाय सन्तु भवतो भागीरथीसंभवाः ॥ २१२ ॥

यमुनानर्मदागोदाचन्द्रभागासरस्वती ।
सरयूसिन्धुशोणोत्थैर्जलैर्देवोऽभिषिच्यताम् ॥ २१३ ॥

इति जलकेलिविलासाद्वैतालिकान्मज्जनावसरवृत्तान्याकर्णयन्,

---

**यन्नाकलोकेत्यादि** । तद्गाङ्गमम्बु तव मुदे आनन्दाय अस्तु भवतु । यत्किम् । यत् गाङ्गमम्बु सकृदेव एकवारमपि कृताभिषेकं स्नानीयं सत् नाकलोकमुनिमानसकल्मषाणां कार्श्यं करोति विदधाति नाकलोकस्य स्वर्गस्य ये मुनयो मरीच्यत्रीत्यादयस्तेषां मानसं मनः आत्मा तस्य कल्मषाणां पापानां कार्श्यं तनुत्वं विदधाति । कथंभूतं गाङ्गं अम्बु । प्रालेयशैलशिखराश्रमतापसानां प्रालेयशैलस्य हिमाचलस्य शिखरेषु आश्रमः स्थितिर्येषां ते प्रालेयशैलशिखराश्रमास्ते च ते तापसा मुनयस्तेषां च सेव्यं स्नानपानासनधावनादियोग्यम् । अतिशयालंकारः ॥

**या इत्यादि** । हे राजन्, ताः भागीरथीसंभवा वारो जलानि भवतस्तव सवनाय स्नानाय सन्तु भवन्तु । ताः काः । याः वारः तीराश्रमवासितापसकुलैः तीरयोस्तटयोराश्रमेषु गृहेषु वसन्तीत्येवंशीलधर्मास्तीराश्रमवासिनस्ते च ते तापसा मुनयस्तेषां कुलैः समूहैः प्रतिवासरं दिनं दिनं प्रति सेव्यन्ते । कथंभूता वारः । संध्याविधौ संध्यावन्दनविधाने उल्बणा उद्रिक्ताः । न केवलं तापसकुलैः सेव्यन्ते, सुरगणैर्देवसमूहैश्च याः सेव्यन्ते । कथंभूता वारः । पुण्यपण्यापणाः पुण्यमेव पण्यं क्रयस्तस्य आपणाः हट्टमार्गसदृशाः । या वारः शशिमौलिना श्रीमहादेवेन शिरसा मस्तकेन उह्यन्ते ध्रियन्ते । किमर्थम् । त्वन्मज्जनाय इव भवतः स्नाननिमित्तमिव । उत्प्रेक्षालंकारः ॥

**यमुनेत्यादि** । देवः श्रीयशोधरमहाराजो जलैः कृत्वा अभिषिच्यतां स्नाप्यताम् । कथंभूतैर्जलैः । यमुनानर्मदागोदाचन्द्रभागासरस्वतीसरयूसिन्धुशोणोत्थैः यमुना च कालिन्दी सूरतनया, नर्मदा च रेवा मेकलकन्यका, गोदा च नदीविशेषा, सरस्वती च निम्नगाविशेषः, सरयूश्च अयोध्याधोवर्तिनी नदी, सिन्धुश्च पश्चिमसमुद्रगामिन्यापगा,

उल्लोलालकवीचिभिर्विचलितापाङ्गोत्पलश्रेणिभिः
प्रक्षुभ्यत्कुचचक्रवाकमिथुनैर्व्यालोलनाभीह्रदैः ।
वारस्त्रीनिवहैः सतूर्यनिनदं जाताभिषेकोत्सवः
कामं स्फारितकाञ्चिदेशपुलिनैः सिन्धुप्रवाहैरिव ॥ २१४ ॥

पुनः सारस्वतसर्ग इव धृतधवलदुकूलमाल्यविलेपनालंकारः, समारक्षणदक्षाङ्गरक्षसारः, समाश्रित्य मार्जनीयं देशमाचरितोपस्पर्शनः, कुशपूतपा-

---

शोणश्च नदविशेषः, तेभ्य उत्था उत्थानं येषां जलानां तानि तथोक्तानि तैः । समुच्चयालंकारः ॥

**उल्लोलेत्यादि** । कथंभूतोऽहम् । वारस्त्रीनिवहैः वारस्यावसरस्य संबन्धिनो ये स्त्रीनिवहाः स्त्रीसमूहाः वारस्त्रीनिवहास्तैर्वारस्त्रीनिवहैः । वेश्याजनसमूहैरित्यर्थः । जाताभिषेकोत्सवः समाप्तपट्टाभिषेकमहोत्सवः । कथम् । सतूर्यनिनदं अनेकवादित्रध्वनिसहितं यथा भवत्येवम् । कथंभूतैर्वारस्त्रीनिवहैः । उल्लोलालकवीचिभिः उल्लोला उत्कर्षेण चपला अलकाश्चूर्णकुन्तलास्तेषां वीचयो लहर्यो येषु वारस्त्रीनिवहेषु तथा तैः । पुनः कथंभूतैर्वारस्त्रीनिवहैः । विचलितापाङ्गोत्पलश्रेणिभिः विचलिता विविधप्रकारचेष्टिता ये अपाङ्गाः नेत्रप्रान्तास्त एव उत्पलश्रेणयः वकुलसमूहाः येषु ते तथा तैः । पुनः कथंभूतैः वारस्त्रीनिवहैः । प्रक्षुभ्यत्कुचचक्रवाकमिथुनैः.................................................................................................. ।

पुनः कथंभूतैः वारस्त्रीनिवहैः । व्यालोलनाभीह्रदैः व्यालोला विशेषेण चपला नाभीह्रदा नाभीविवरा येषु ते तथा तैः । पुनः कथंभूतैर्वारस्त्रीनिवहैः काममतिशयेन स्फारितकाञ्चिदेशपुलिनैः स्फारितानि उच्चैःकृतानि काञ्चिदेशाः कट्यग्रभागा एव पुलिनानि तोयान्वितसिकताद्वीपानि येषु ते तथा तैः । पुनः कथंभूतैः वारस्त्रीनिवहैः । सिन्धुप्रवाहैरिव । यथा सिन्धुप्रवाहाः उल्लोलवीचयः विचलितोत्पलसमूहाः संचलच्चक्रवाकमिथुनाः व्यालोलह्रदा स्फारितपुलिनाश्च भवन्ति । रूपकोपमालंकारः ॥

पुनरभिषेकोत्सवानन्तरम् । कथंभूतोऽहम् । धृतधवलदुकूलमाल्यविलेपनालंकारः धवलं च पट्टदूकूलम्, माल्यं च पुष्पदामानि, विलेपनं च धृता अङ्गेच्छ(ष्वा)रोपिता धवलदुकूलमाल्यविलेपालंकारा येन स तथा । कथंभूतः सारस्वतसर्ग इव । सरस्वत्या अयं सारस्वतः सर्गः सृष्टिः । यथा सरस्वत्याः सर्गः धवलदुकूलमाल्यविलेपनालंकारो भवति । पुनः कथंभूतोऽहम् । समारक्षणदक्षाङ्गरक्षसारः समन्तादारक्षणे रक्षाविधाने दक्षाः समर्था ये अङ्गरक्षाः शरीररक्षकाः सारा बलवत्तरा यस्य स तथा । पुनः कथंभूतोऽहम् । आचरितोपस्पर्शनः आचरितं कृतं उपस्पर्शनं आचमनं येन स आचरितोपस्पर्शनः । किं कृत्वा पूर्वम् । मार्जनीयं देशं हस्तपादप्रक्षालनोचितं स्थानं समाश्रित्य गत्वा । पुनः

नीयपरिकल्पितसकलोपकरणप्रोक्षणः, पर्युपास्यासुतीवलद्वितीयः पृषदाज्येनामिक्षया च समेधितमहसं द्रविणोदशमनेकसुविदत्रवस्तुव्यस्तहस्तैर्निवर्तितयजत्र(न)कर्मभिर्यायजूकलोकैर्जनितजैवातृकमन्त्राशीर्वादविधिभिर्यथाविधानम्, 'अहो लक्ष्मीनिवासहृदय, विलासिनीविनोदचन्द्रोदय, श्रीमतीपतिश्रीवर्मनृपनन्दनामृतमतिमहादेवीपुरःसराभिर्महामण्डलेश्वरपतिंवराभिः

---

कथंभूतोऽहम्। कुशपूतपानीयपरिकल्पितसकलोपकरणप्रोक्षणः कुशैर्दर्भैः पूतं पवित्रं यत्पानीयमुदकं तेन परिकल्पितं सकलानां समस्तानां उपकरणानां उपहारपात्राणां प्रोक्षणमभ्युक्षणं येन स तथा। किं कृत्वा पूर्वं संपादितद्वितीयाश्रमदीक्षाभिषेकः संजग्मे। आसुतीवलद्वितीयः आसुतीवलो यज्वा द्वितीयो यस्य स तथा। यज्वना सहितः सन् द्रविणोदशं अग्निं पर्युपास्य सेवित्वा। विवाहहोमं कृत्वा इत्यर्थः। केन कृत्वा द्रविणोदशं पर्युपास्य। पृषदाज्येन दधिमिश्रसर्पिषा, न केवलं दधिमिश्रसर्पिषा, आमिक्षया च दधिमिश्रोत्कलितक्षीरेण च। तथा चोक्तम्—'शृते क्षीरे दधिक्षिप्तमामिक्षा कथ्यते बुधैः'। कथंभूतं द्रविणोदशम्। समेधितमहसं घृतेन प्रज्वालिततेजसम्। अग्निं कथं पर्युपास्य। यायजूकलोकैर्होतृभिः यथाविधानं उक्तक्रमेण यथा भवत्येव। कथंभूतैर्यायजूकलोकैः। अनेकसुविदत्रवस्तुव्यस्तहस्तैः अनेकानि नानाप्रकाराणि सुविदत्राणि मङ्गलभूतानि यानि वस्तूनि नालिकेरखर्जूरकदलादीनि तैर्व्यस्ता व्यापृता हस्ताः करा येषां यायजूकलोकानां ते तथा तैः। पुनः कथंभूतैर्यायजूकलोकैः। निर्वर्तितयजत्र(न)कर्मभिः निर्वर्तितं निष्पादितं यजत्र(न)कर्म अग्निहोत्रो यैस्ते निर्वर्तितयजत्र(न)कर्माणस्तैः। पुनः कथंभूतैर्यायजूकलोकैः। जनितजैवातृकमन्त्राशीर्वादविधिभिः जनित उत्पादितो जैवातृकमन्त्रैः आयुर्वर्धनपरैर्मन्त्रैराशीर्वादविधिर्यैस्ते तथा तैः। अहं किं कुर्वन् संजग्मे। इति अमुना प्रकारेण मनोजकुञ्जरात् वन्दिनः स्तुतिपाठकात् वचांसि वचनानि निशमयन्नाकर्णयन्। मनोजकुञ्जरात्किं कुर्वन्तम्। मां अमृतमतिमहादेवीं च प्रतिपठतः। इतीति किम्। अहोलक्ष्मीनिवासहृदय लक्ष्म्याः निवासभूतं हृदयं यस्य स तथा तस्य संबोधनं हे तथोक्त। अहो विलासिनीविनोदचन्द्रोदय विलासिनीनां सद्वनितानां विनोदाय क्रीडनाय चन्द्रोदयः शशाङ्कोदयस्तस्य संबोधनं हे तथोक्त। महामण्डलेश्वरपतिंवराभिः समन्तादिह तत्तस्मात् कारणात् इह अस्मिन् प्रस्तावे भवतोर्युवयोरिदानीमधुना किमाशास्यते क आशीर्वादो दीयते। परं केवलं प्रीतिरस्तु प्रेम भवतु। कथंभूतयोर्भवतोः। भवती च भवांश्च भवन्तौ तयोर्भवतोः। रतिमनोभवयोरिव रतिकन्दर्पयोर्यथा। कथंभूताभिः मण्डलेश्वरपतिंवराभिः श्रीमतिपतिश्रीवर्मनृपनन्दनामृतमतिमहादेवीपुरःसराभिः श्रीमत्याः पतिर्भर्ता श्रीमतीनाममहादेवीकान्तः स चासौ श्रीवर्मनृपः श्रीवर्मनाम महाराजस्तस्य नन्दना सुता सा चासौ अमृतमतिमहादेवी अमृतमतिरिति नाम्नी पट्टमहादेवी

शतानन्द इव श्रुतिभिः, खाण्डवोद्यानदेश इव कल्पलताभिः, समुद्रीयोदकाभोग इव वेलानदीभिः, प्रथमतीर्थंकरावतारसमय इव रत्नवृष्टिभिः, त्रिदिवपर्वत इव नक्षत्रपङ्क्तिभिः, पार्वणेन्दुरिव कलाभिः, सरोवकाश इव कमलिनीभिः, माधव इव वनलक्ष्मीभिः समम्

लक्ष्मीरियं त्वमपि माधव एव साक्षा-
देषा शची सुरपतिस्त्वमपि प्रतीतः।
आशास्यते तदिह किं भवतोरिदानीं
प्रीतिः परं रतिमनोभवयोरिवास्तु ॥ २१५ ॥

एषा हिमांशुमणिनिर्मितदेहयष्टि-
स्त्वं चन्द्रचूर्णरचितावयवश्च साक्षात्।
एवं न चेत्कथमियं तव संगमेन
प्रत्यङ्गनिर्गतजला सुतनुश्चकास्ति ॥ २१६ ॥

---

सा पुरःसरा मुख्या यासां पतिंवराणां तास्तथा ताभिः। कथंभूतस्त्वम्। शतानन्द इव श्रुतिभिः। यथा शतानन्दः श्रुतिभिर्वेदवाग्भिः सह प्रीतिमान् भवति। पुनः कथंभूतस्त्वम्। खाण्डवोद्यानदेश इव कल्पलताभिः। यथा स्वर्गलोकवनप्रदेशः कल्पवल्लीलताभिः कल्पवल्लीभिः समं प्रीतिमान् भवति। पुनः कथंभूतस्त्वम्। समुद्रीयोदकाभोग इव वेलानदीभिः। ......................। पुनः कथंभूतस्त्वम्। प्रथमतीर्थंकरावतारसमय इव रत्नवृष्टिभिः। यथा प्रथमतीर्थंकरावतारसमयो वृषभस्वर्गव्यवसा(ना)वसरो रत्नवृष्टिभिः समं प्रतिमान् भवति। पुनः कथंभूतस्त्वम्। त्रिदिवपर्वत इव नक्षत्रपङ्क्तिभिः। यथा त्रिदिवपर्वतो मेरुः नक्षत्रपङ्क्तिभिः समं प्रीतिमान् भवति। पुनः कथंभूतस्त्वम्। पार्वणेन्दुरिव कलाभिः। यथा पार्वणेन्दुः पूर्णिमाचन्द्रः कलाभिः समं प्रीतिमान् भवति। पुनः कथंभूतस्त्वम्। सरोवकाश इव कमलिनीभिः। यथा सरोवकाशः सरोवरप्रदेशः कमलिनीभिः समं प्रीतिमान् भवति। पुनः कथंभूतस्त्वम्। माधव इव वनलक्ष्मीभिः। यथा माधवो वैशाखमासो वनलक्ष्मीभिः समं प्रीतिमान् भवति।

**लक्ष्मीरित्यादि। एषेत्यादि।** हे राजन्, इयममृतमतिमहादेवी लक्ष्मीर्वर्तते, त्वमपि भवानपि साक्षात् प्रत्यक्षेण माधव एव श्रीनारायण एव। एषा अमृतमतिमहादेवी शचीन्द्राणी वर्तते, त्वमपि भवानपि साक्षात् प्रतीतो विख्यातः सुरपतिः शक्र एव वर्तसे। एषा अमृतमतिमहादेवी हिमांशुमणिनिर्मितदेहयष्टिर्वर्तते हिमांशुमणिश्चन्द्रकान्तरत्नानि तैर्निर्मिता निष्पादिता देहयष्टिरुत्तमशरीरं यस्याः सा तथा, त्वं भवान् साक्षात् निश्चयेन चन्द्रचूर्णरचितावयवश्च वर्तसे चन्द्रचूर्णैः शशाङ्कक्षोदैः रचिता

त्वं चन्द्ररुचिरेषा तु सत्यं कमललोचना।
कथं त्वयान्यथा दृष्टा भवेत्कुड्मलितेक्षणा॥ २१७॥

उक्ता वक्ति न किंचिदुत्तरमियं नालोकितालोकते
शय्यायां विहितागमा च विवशश्वासोल्बणं वेपते।
नर्मालापविधौ सकोपहृदया गन्तुं पुनर्वाञ्छति
प्रीतिं कस्य तथापि नो वितनुते बाला नवे संगमे॥ २१८॥

किंचित्केकरवीक्षितं किमपि च भ्रूभङ्गलीलायितं
किंचिन्मन्मनभाषितं किमपि च श्लेषाभिलाषेहितम्।
इत्थं मुग्धतया बहिर्विलसितं वध्वा नवे संगमे
चित्तस्थेन मनोभुवा बलवता नीवी खलत्वं कृतम्॥ २१९॥

---

निर्मापिता अवयवाः शरीराणि यस्य स तथा। चेद्यदि एवं न भवति तर्हि इयं सुतनुः शोभनशरीरा तव संगमेन भवतः संपर्केण प्रत्यङ्गनिर्गतजला सर्वाङ्गप्रतिच्छन्ना कथं चकास्ति केन प्रकारेण भवति। अपि तु न कथमपि। अनुमानालंकारः॥

**त्वमित्यादि।** हे राजन्, त्वं भवान् चन्द्ररुचिश्चन्द्रातपो वर्तसे, एषा तु देवी सत्यं निश्चयेन कमललोचना वर्तते। अन्यथा एवं यदि न भवति तर्हि त्वया भवता दृष्टावलोकिता सती कथं केन प्रकारेण कुड्मलितेक्षणा संकुचितलोचना भवेत्। अपि तु न कथमपि भवेत्। अनुमित्यलंकारः॥

**उक्तेत्यादि।** हे राजन्, इयं देवी उक्ता आलपिता सती किंचिदुत्तरं न वक्ति न ब्रूते। आलोकिता निरीक्षिता सती नालोकते न पश्यति। शय्यायां पर्यङ्के विहितागमा कृतसंगतिः सती वेपते कम्पते। कथम्। विवशश्वासोल्बणम् विवशाः परवशाः ये श्वासा उच्छ्वासास्तैरुल्बणमुद्रिक्तं यथा भवत्येवम्। नर्मालापविधौ वक्रवचनविधाने सकोपहृदया कुपितचित्ता सती पुनः गन्तुं वाञ्छति पलायितुमिच्छति। युक्तोऽयमर्थः। नवे संगमे प्रथममेलापके बाला वनिता कस्य पुरुषस्य तथापि प्रीतिं प्रेमाणं नो वितनुते न विस्तारयति। अपि तु सर्वस्यापि विस्तारयतीत्यर्थः। अर्थान्तरन्यासालंकारः॥

**किंचिदित्यादि।** इत्थं अमुना प्रकारेण मुग्धतया कोमलत्वेन वध्वाः स्त्रियो नवे संगमे प्रथमे संगमे बहिर्विलसितं वर्तते। इत्थं कथमिति चेत्। किंचिन्मनाक् केकरवीक्षितं कटाक्षलीलान्वितमवलोकनम्। किमपि च अतिबन्धनाय भ्रूभङ्गलीलायितं नेत्रोपरिरोमराज्युपक्षेपशोभासहितम्। किंचिन्मनाक् मन्मनभाषितं अस्फुटजल्पितम्। किमपि च अपूर्वं अनिर्वचनीयं श्लेषाभिलाषेहितं परिरम्भचेष्टितम्। अस्मिन्नवसरे

विदलदलकवासे लोललीलावतंसे
नवनयनविलासे मन्मनालापहासे ।
क्षितिरमण तव स्यात्स्फारशृङ्गारलास्ये
सरभसमबलास्ये कामकेली रहस्ये ॥ २२० ॥'

इति माममृतमतिमहादेवीं च प्रतिपठतो मनोजकुञ्जराद्वन्दिनो वचांसि निशमयन्, किल तदाहं संजग्मे संपादितद्वितीयाश्रमदीक्षाभिषेकश्च

करितुरङ्गमवह्निपुरोधसां तदनु दक्षिणवृत्तिभिरिङ्गितैः ।
जलधरानकशङ्खपिकस्वनैः श्रुतिसुखैर्ध्वनिभिश्च जयावहैः ॥ २२१ ॥

---

चित्तस्थेन मनसि वर्तमानेन वलवता प्रौढतरेण मनोभुवा कन्दर्पेण नीवी कटिवस्त्रवन्धनं खलत्वं दुर्जनत्वं कृतं रचितमिति । उपमालंकारः ॥

**विदलदलकवास इत्यादि** । हे क्षितिरमण पृथ्वीपते, अवलास्ये वनितामुखे तव रहस्ये एकान्ते सरभसं उत्कतया वेगसंयुक्तं यथा भवत्येवं कामकेलिः कामक्रीडा स्याद्भवेत् । कथंभूते अवलास्ये । विदलदलकवासे विदलत् चूर्णीभवत् अलकानां कुन्तलानां वासः स्त्रीभिर्यस्मिन् अवलास्ये तत्तथा तस्मिन् । पुनः कथंभूते अवलास्ये । लोललीलावतंसे लोलं चपलं लीलायां कामक्रीडायां अवतंसं कर्णपूरो यस्मिन् तत्तथा तस्मिन् । पुनः कथंभूते । नवनयनविलासे नवाः प्रत्यग्राः नयनयोः विलासा लोचनचेष्टितानि यस्मिन् तत्तथा तस्मिन् । पुनः कथंभूते । मन्मनालापहास्ये मन्मनालापः अस्फुटशब्दो हासो यत्र तत्तथा तस्मिन् । पुनः कथंभूते । स्फारशृङ्गारलास्ये स्फारं प्रचुरतरं शृङ्गारस्य लास्यं नर्तनं यत्र तत्तथा तस्मिन् । अत्र शृङ्गाररसः ॥

**इति मामित्यादि** । हे मारदत्तमहाराज, तदा तस्मिन् काले अहं तां जगत्प्रसिद्धां उज्जयिनीनाम्नीं राजधानीं पुरीं अनु संमुखीकृत्य । किलेति लोकोक्तौ वा निश्चयेन वा । प्रत्यावव्रते प्रत्याजगाम । नदीतीरात् नगरं प्राप्त इत्यर्थः । कथंभूतः सन् अहं प्रत्यावव्रते । समानन्दितमतिः सम्यगाह्लादितमनाः । कैः कृत्वा समानन्दितमतिः ॥

**करीत्यादि** । करितुरङ्गमवह्निपुरोधसां हस्त्यश्वाग्निपुरोहितानां तदनु तदनन्तरं दक्षिणवृत्तिभिर्दक्षिणपार्श्वे इङ्गितैश्चलितैः । पुनश्च कैः समानन्दितमतिः । जलधरानकशङ्खपिकस्वनैः मेघगर्जितपटहवादनशङ्खध्वनिकोकिलशब्दैः । कथंभूतैः जलधरादिशब्दैः । श्रुतिसुखैः कर्णामृतप्रायैः । न केवलं समानन्दितमतिः जयावहैर्ध्वनिभिश्च जय जीव नन्द वर्धस्वेत्यादिभिः जयकारिभिः शब्दैः । जात्यलंकारः ॥

समानन्दितमतिर्विधायात्मनस्तत्रितयस्य च पट्टबन्धोत्सवमिति मधुकलोकविहितमङ्गलान्युपचर्य राज्यलक्ष्मीचिह्नानि संभाव्य च।

अपहसितपुष्पदन्तं कुवलयकमलावबोधनादेव।
अधरितसकलमहीधरमाभाति तवातपत्रमिदमेकम्॥ २२२॥

द्विषद्द्विपमदध्वंसाद्भूभृतां शिरसि स्थितः।
आरोहतां क्षितीशानां सिंहः सिंहासनं नृपः॥ २२३॥

मृगमदतिलकेऽस्मिन्नर्धचन्द्रावदाते
जलनिधिरसनोर्वीभाजनैश्वर्यवर्ये।

---

**समेत्यादि।** किं कृत्वा पूर्वं प्रत्यावृत्ते। आत्मनः स्वस्य तत्रितयस्य च हस्त्यश्वदेवीजयस्य पट्टबन्धोत्सवं पट्टबन्धमहोत्सवं विधाय कृत्वा। पुनश्च किं कृत्वा पूर्वम्। इति अमुना प्रकारेण मधुकलोकविहितमङ्गलानि राज्यलक्ष्मीचिह्नानि उपचर्य स्वीकृत्य मधु हृदयंगमं कायन्तीति मधुका वन्दिनस्तेषां लोकाः समूहास्तैर्विहितानि मङ्गलानि उपश्लोकितानि मधुकलोकविहितमङ्गलानि। न केवलं राज्यलक्ष्मीचिह्नानि उपचर्य संभाव्य च समीचीनानि मत्वा। इतीति किम्।

**अपहसितेत्यादि।** हे देव, इदं प्रत्यक्षीभूतं एकं अद्वितीयं आतपत्रं छत्रं तव भवतः आभाति शोभते। कथंभूतमातपत्रम्। अपहसितपुष्पदन्तं तिरस्कृतचन्द्रादित्यम्। कस्मात्। कुवलयकमलावबोधनात् कुवलयस्य पृथ्वीवलयस्य पक्षे उत्पलसमूहस्य अवबोधनात् चन्द्रस्य तिरस्कारकम्, कमलायाः लक्ष्मीकमलानां अवबोधनात् आनन्दकारणात् आदित्यतिरस्कारकम्। पुनः कथंभूतमातपत्रम्। अधरितसकलमहीधरम् अधरिताः अधःस्थापिताः सकलाः समग्राः महीधरा राजानो येन तत्तथोक्तम्। पुष्पदन्तावपि सर्वपर्वतान् अधः कुरुतः॥

**द्विषदित्यादि।** नृपः श्रीयशोधरमहाराजः सिंहासनं हरिविष्टरं आरोहतां आरोहतु। कथंभूतो नृपः। क्षितीशानां पृथिवीपतीनां सिंहो हर्यक्षः। कस्मात्सिंहः। द्विषद्द्विपमदध्वंसात् द्विषन्तः शत्रवस्त एव द्विपाः हस्तिनस्तेषां मदेन खण्डेन ध्वंसो विनाशो द्विषद्द्विपमदध्वंसस्तस्मात्। पुनः कथंभूतो नृपः। भूभृतां नरेन्द्राणां पर्वतानां च शिरसि मस्तके शिखरेऽवस्थितो विहितस्थानः। हेतूपमालंकारः॥

**मृगमदतिलकेऽस्मिन्नित्यादि।** हे क्षितिरमण पृथिवीपते, तव भवतः अस्मिन् ललाटे पट्टबन्धो मस्तकालंकारोऽस्तु भवतु। कथंभूते ललाटे। मृगमदतिलके कस्तूरिकातिलकसहिते। पुनः कथंभूते ललाटे। अर्धचन्द्रावदाते अष्टमीचन्द्रवन्निर्मले। पुनः कथंभूते ललाटे। जलनिधिरसनोर्वीभाजनैश्वर्यवर्ये जलनिधिः समुद्रः स एव रसना मेख-

जनितसकललोकानल्पकल्पप्रमोदः
क्षितिरमण ललाटे पट्टबन्धस्तवास्तु ॥ २२४ ॥
विद्विष्टदर्पदीपार्चिर्नन्दनानिलपेशलैः ।
चामरैः सेव्यतां देवः श्रीकटाक्षोपहासिभिः ॥ २२५ ॥

खड्गश्च तवायम्

लक्ष्मीविनोदकुमुदाकरचन्द्रहासः
संग्रामकेलिनलिनीवनसूर्यहासः ।
विद्विष्टदैत्यमदमान्ध्यहराट्टहासः
कीर्तिस्त्रियास्त्रिभुवनोदयमोदहासः ॥ २२६ ॥

---

लादाम यस्याः सा जलनिधिरसना सा च उर्वी पृथ्वी तस्याः भाजनं स्थानं तस्य ऐश्वर्यं स्वामित्वं तेन वर्यं मुख्यं यत् ललाटं तत् जलनिधिरसनोर्वीभाजनैश्वर्यवर्यं तस्मिन् । कथंभूतः पट्टबन्धः । जनितसकललोकानल्पकल्पप्रमोदः जनित उत्पादितः सकललोकानां अनल्पकल्पेषु बहुवर्षकोटिषु प्रमोद आनन्दो येन पट्टबन्धेन स तथोक्तः । हेतूपमालंकारः ॥

**विद्विष्टेत्यादि** । देवः श्रीयशोधरमहाराजश्चामरैश्चमरीरुहैः सेव्यतां वीज्यताम् । कथंभूतैश्चामरैः । विद्विष्टदर्पदीपार्चिर्नन्दनानिलपेशलैः विद्विष्टाः शत्रवस्तेषां दर्प औत्कव्यं स एव दीपार्चिः अधूमदीपः मन्दतेजस्कत्वात् तस्य नन्दनो विध्यापको योऽसावनिलो वातस्तेन पेशलानि मनोहराणि तथा तैः । पुनः कथंभूतैश्चामरैः । श्रीकटाक्षोपहासिभिः श्रियो लक्ष्म्याः ये कटाक्षा अपाङ्गावलोकनानि तान् उपहसन्तीत्येवंशीलानि श्रीकटाक्षोपहासीनि तैः । रूपकोपमालंकारः ॥

**लक्ष्मीविनोदेत्यादि** । हे देव, अयं प्रत्यक्षीभूतः खड्गश्च करवालः । कथंभूतः । लक्ष्मीविनोदकुमुदाकरचन्द्रहासः लक्ष्म्याः श्रियो योऽसौ विनोदः क्रीडा स एव कुमुदाकरः कैरवः तद्विकाशे चन्द्रहासश्चन्द्रज्योत्स्नासदृशः । पुनः कथंभूतः । संग्रामकेलिनलिनीवनसूर्यहासः संग्रामकेली रणक्रीडा सैव नलिनीवनं पद्मिनीखण्डस्तद्विकाशे सूर्यहासः सूर्यतेजः । पुनः कथंभूतः । विद्विष्टदैत्यमदमान्ध्यहराट्टहासः विद्विष्टाः शत्रवस्त एव दैत्याः दानवास्तेषां मदो दर्पस्तस्य मान्ध्यमप्राचुर्यं तस्य प्रलयकरणे हराट्टहासो रुद्रमहाहासः । पुनः कथंभूतः । कीर्तिस्त्रियास्त्रिभुवनोदयमोदहासः कीर्तिरेव स्त्री तस्याः कीर्तिस्त्रियाः त्रिभुवनस्य उदय उद्गमनं तेन मोदस्तस्य हासो हसनम् । रूपकालंकारः ॥

मन्ये भुजामण्डलमण्डनेऽस्मिँल्लोकत्रयी तिष्ठति ते कृपाणे।
स्थितः स्थितिं कम्पित एष कम्पं कुतोऽन्यथा नाथ करोति तस्याः॥२२७॥

एषा मही तव करे करभाजि चापे
कर्णान्तसङ्गिनि गुणे त्वयि संगता श्रीः।
लक्ष्यानुवर्तिनि शरे तव देव जाता
जाता न के त्वदनुवृत्तिपरा नरेन्द्राः॥ २२८॥

मन्त्रिपुरोहितमहामात्यसेनाधिपतिसखः पूर्णपात्रवायनकप्रसादसंप्रदायैः समस्तमनुरागरसोत्सर्पत्प्रमोदोत्सर्गं द्विजातिपरिजनसामन्तवर्गमाचरितगज-

---

**मन्ये इत्यादि**। हे नाथ हे राजन्, अस्मिन् प्रत्यक्षीभूते ते तव कृपाणे कौक्षेये अहं एवं मन्ये जाने लोकत्रयी तिष्ठति त्रैलोक्यं वसति। कथंभूते कृपाणे। भुजामण्डलमण्डने वाहुप्रदेशाभरणे। अन्यथा यदि कृपाणे लोकत्रयी न वसति तर्हि कृपाणः स्थितः सन् तस्या लोकत्रय्याः स्थितिं कथं करोति। एष कृपाणः कम्पितः सन् कम्पं कुतः करोति। अनुमानालंकारः॥

**एषा इत्यादि**। हे देव हे राजन्, तव भवतः करे हस्ते करभाजि चापे सति हस्तभागिनि धनुषि सति एषा प्रत्यक्षीभूता मही पृथ्वी तव संवन्धिनी जाता॥ गुणे प्रत्यञ्चायां कर्णान्तसङ्गिनि आकृष्टे सति लक्ष्मीस्त्वयि भवति संगता मिलिता। हे देव, तव भवतः शरे वाणे लक्ष्यानुवर्तिनि वेध्यसंमुखेजाते सति के नरेन्द्राः त्वदनुवृत्तिपराः त्वत्सेवका न जाताः। अपि तु सर्वेऽपि त्वत्सेवका जाता इत्यर्थः। सहोक्त्यलंकारः॥

**मन्त्रीत्यादि**। अहं कथंभूतः सन् राजधानीमनु प्रत्याववृते। मन्त्रिपुरोहितमहामात्यसेनाधिपतिसखः मन्त्री च सचिवः, पुरोहितश्च त्रिविधापत्प्रतीकर्ता, महामात्यश्च सर्वनिजदेशाधिकारी, सेनाधिपतिश्च चमूनायकः मन्त्रिपुरोहितमहामात्यसेनाधिपतयः ते सखायोऽभीष्टतया निकटवर्तिनो यस्य स तथोक्तः। 'राजन् अहन् सखि' इत्यनेन अनुप्रत्ययान्तो निपातः। कथं प्रत्याववृते। समस्तं समग्रं द्विजातिपरिजनसामन्तवर्गं पूर्णपात्रवायनकप्रसादसंप्रदायैः अनुरागरसोत्सर्पत्प्रमोदोत्सर्गं यथा भवत्येवम् पूर्णपात्रं च दक्षिणया द्विजातिवर्गं च संमान्य, वायनकं वलाहनकदानं परिजनवर्गं संमान्य, प्रसादश्च प्रसन्नीभवनं पूर्णपात्रवायनकप्रसादास्तेषां संप्रदायैः सम्यग्दानैः कृत्वा अनुरागः अकृत्रिमस्नेहस्तस्य रसेन भावनया उत्सर्पन् प्रादुर्भवन् प्रमोदस्य हर्षस्य उत्सर्ग उत्साहो यस्मिन् प्रत्यावर्तनकर्मणि स तथोक्तः। द्विजातयश्च ब्राह्मणाः, परिजनाश्च कुटुम्बवर्गाः, सामन्ताश्च देशपतयो द्विजातिपरिजनसामन्तास्तेषां वर्गः समूहो यत्र अनुरागरसोत्सर्पत् प्रमोदोसर्गे तत्तथोक्तम्। अत्रायमर्थः—पूर्णपात्रेण द्विजातयः प्र-

वाजिनीराजनैः समरसंकथावरीयोभिर्विहितसर्वसन्नहनघोषणैरनन्यसामान्यजन्यार्जितकीर्तिप्रसाधनपुनरुक्तालंकारविधिभिः सकललोकविधीयमानयशश्चन्दनवन्दनैर्निवातकवचनिचिताङ्गयष्टिभिः परश्शतैराप्तपुरुषैरपरैश्चात्मसमसंभावनैः कृपाणपाणिभिरग्रेसरैर्नरैः परिवृतः, समन्तादित्वरैरनवरतमशेषसत्त्वापहारव्यवहारघर्घरध्वनिभिरुदात्तदीर्घदण्डविडम्बितदोर्दण्डमण्डलैः

---

मोदं प्रापिताः, वायनकेन परिजनाः प्रमोदं प्रापिताः, प्रसाददानेन सामन्ताः प्रमोदं प्रापिता इत्यर्थः । यथासंख्यालंकारः । पुनरहं कथंभूतः सन् राजधानीं प्रत्यावव्रते । आप्तपुरुषैर्हितपुरुषैः प्रत्यावृतः परिवृतो वेष्टितः । कथंभूतैराप्तपुरुषैः । आचरितगजवाजिनीराजनैः आचरितानि कृतानि गजस्य यागहस्तिनो वाजिनश्च विजयवैजतेयनामाश्वस्य नीराजनं पूजनं यैराप्तपुरुषैस्ते आचरितगजवाजिनीराजनास्तैः । पुनः कथंभूतैराप्तपुरुषैः । समरसंकथावरीयोभिः समरस्य संग्रामस्य संकथाभिः समीचीनवार्ताभिः वरीयोभिरतिशयेन गुरुभिरित्यर्थः । पुनः कथंभूतैराप्तपुरुषैः । विहितसर्वसन्नहनघोषणैः विहिता कृता सर्वेषां सन्नहनस्य संनाहस्वीकारस्य घोषणा उच्चैर्वचनं यैस्ते तथा तैः । पुनः कथंभूतैराप्तपुरुषैः । अनन्यसामान्यजन्यार्जितकीर्तिप्रसाधनपुनरुक्तालंकारविधिभिः अनन्यसामान्यः अनुपमो योऽसौ जन्यः संग्रामस्तस्मिन् अर्जिता उपार्जिता या कीर्तिः यशः सैव प्रसाधनं मण्डनं ततः पुनरुक्तो द्विगुणीकृतो अलंकारविधिराभरणविधानं यैस्ते तथा तैः । पुनः कथंभूतैराप्तपुरुषैः । सकललोकविधीयमानयशश्चन्दनवन्दनैः सकलाश्च ते लोका बालगोपालादयस्तैर्विधीयमानं यद्यशः कीर्तिस्तदेव चन्दनं हरिचन्दनद्रवस्तस्य वन्दनानि तिलकानि येषां ते तथोक्तास्तैः । पुनः कथंभूतैराप्तपुरुषैः । निवातकवचनिचिताङ्गयष्टिभिः निवातानि निविडानि यानि कवचानि कार्पासास्तैर्निचिता निगडिता अङ्गयष्टय उत्तमशरीराणि येषां ते तथोक्तास्तैः । कतिसंख्योपेतैराप्तपुरुषैः । परश्शतैः शतादधिकगमनैः । उक्तं च—'परश्शताद्यास्ते येषां परा संख्या शतादिकात्' । एवं परःशताः परःसहस्राः परोलक्षाः परःकोटय इति शब्दा ज्ञातव्याः । न केवलमाप्तपुरुषैरावृतः, अपरैश्च अन्यैश्चाग्रेसरैः जयनशीलैर्नरैः पुरुषैः परिवृतो वेष्टितः । कथंभूतैः अग्रेसरैः नरैः । आत्मसमसंभावनैः यशोधरमहाराजसदृशैः । पुनः कथंभूतैरग्रेसरैर्नरैः । कृपाणपाणिभिः उत्खातखड्गकरैरित्यर्थः । पुनः कथंभूतोऽहं प्रत्यावव्रते । प्रशास्तृभिः समन्तात्सर्वतः इत्वरैरितस्ततो धावनशीलैः । पुनः कथंभूतैः । अनवरतं निरन्तरं अशेषसत्त्वापहारव्यवहारघर्घरध्वनिभिः अशेषाः

---

१. 'नाज्झलौ' इति सूत्रस्थभाष्यकैयटाद्यनुरोधेन टीकोपलभ्यमानेषु परश्शतादिशब्देषु सुटः परादित्वेनापदान्ततया रुत्वोत्वविसर्गादीनामप्राप्त्या तद्घटितप्रयोगाश्चिन्त्याः.

प्रशास्तृभिरग्रेगूभिश्च गोलधनुर्धरगोधाधिष्ठितवृत्तिभिर्वाताश्वैरुदक्यापण्डकपोगण्डचण्डालादिकादृशीकसमुत्सारणकुशलैर्विशोधितमार्गः संजातपरमोत्सवसंसर्ग इति पुण्यश्लोकालापहृदयालुभिः कुलवृद्धैराघोषितपुण्याहपरम्परः।

दधिदूर्वाक्षतपुष्पचन्दनरसैर्गोरोचनालालसै-
र्ध्वजदीपव्यजनातपत्रमुकुरैरापूर्णकुम्भोत्करैः।
विहितानन्दमहोत्सवः कुलवधूगीतप्रसाधैरिमै[1]-
र्नृप वाद्यैरपि जातमङ्गलरवः पायाश्चिरं मेदिनीम् ॥ २२९ ॥

---

समस्ताः सत्त्वाः प्राणिनस्तेषां अपहारव्यवहारे दूरीकरणव्यापारे घर्घरः कण्ठाभ्यन्तरावर्ती ध्वनिः शब्दो येषां ते तथोक्तास्तैः। पुनः कथंभूतैः। उदात्तदीर्घदण्डविडम्बितदोर्दण्डमण्डलैः उदात्ता उद्गृहीता उन्नता दीर्घा आयता ये दण्डाः लगुडानि तैर्विडम्बितानि तिरस्कृतानि दोर्दण्डमण्डलानि वाहुदण्डवलयानि येषां ते तथा तैः। कथंभूतैरग्रेसरैः। गोलधनुर्धरगोधाधिष्ठितवृत्तिभिः। धरशब्दः प्रत्येकमभिसंवध्यते। तेन गोलधराश्च गोफणाहस्ता धनुर्धराश्च चापपाणयः भवन्त्येव। गोधाः पुरुषास्तैरधिष्ठिता आरोपिता वृत्तिर्येषां ते तथा तैः। पुनः कथंभूतैः। अग्रेगूभिश्च वाताश्वैः कुकुटिकैः कपटभाषणशीलैः। अपरं कथंभूतैः। उदक्यापण्डकपोगण्डचण्डालादिकादृशीकसमुत्सारणकुशलैः उदक्याश्च उदकयोग्या रजस्वलास्त्रियः, पण्डकाश्च नपुंसकानि, पोगण्डाश्च विकलाङ्गाः, चण्डालादिकाश्च मातङ्गादयः, ते च ते अदृशीकानवलोकान् अयोग्यास्तेषां समुत्सारणे दूरीकरणे प्रत्यायनविधाने कुशलाः प्रवीणास्ते तथा तैः। अहं कथंभूतः प्रत्यावृत्ते। संजात उत्पन्नः परमोत्सवस्य संसर्गः संगमो यस्य स तथोक्तः। पुनः कथंभूतोऽहं प्रत्यावृत्ते। इति अमुना प्रकारेण पुण्यश्लोकालापहृदयालुभिः पुण्याः पवित्राश्च ते श्लोका वृत्तानि तेषामालापेषु लपनेषु हृदयालवश्चतुरचेतसः। सुहृदया इत्यर्थः। ते तथा तैः। ईदृग्विधैः कुलवृद्धैः अन्वयजरद्भिः आघोषितपुण्याहपरम्परः आघोषिता उच्चैरुच्चारिता पुण्याहस्य पुण्यदिनस्य परम्परा श्रेणिर्यस्य स तथोक्तः। इतीति किम्।

दधीत्यादि। हे नृप, इमैः पदार्थैः जातमङ्गलरवः समुत्पन्नमङ्गलध्वनिस्त्वं चिरं दीर्घकालं मेदिनीं पृथ्वीं पायाः पाहि रक्ष प्रतिपालय त्वम्। कथंभूतस्त्वम्। विहितानन्दमहोत्सवः विहितः कृतः आनन्दसंबन्धी महोत्सवो मङ्गलं यस्य स तथा। इमैः

1. मूले टीकायां चोपलभ्यमानः 'इमैः' इति प्रयोगो व्याकरणविरुद्ध इति कथं महाकविना प्रयुक्तः.

यावद्द्यौरवनिः कुलावनिभृतः शेषः पयोराशयः
सूर्यः शीतरुचिर्दिशः सुरपतिर्ब्रह्मा च सर्गैः सह ।
एतेषां द्विगुणीकृतोदयजयस्तत्साम्यभाजात्मना
तावत्त्वं क्षितिपाल पालय महीं जातोत्सवैः कामितैः ॥२३०॥

योषाः सुभूषाः करिणः प्रशस्ता नराश्च रत्नाम्बरहेमहस्ताः ।
तव प्रयाणे नृप संमुखाः स्युः प्रादेशनानीव महीपतीनाम् ॥ २३१ ॥

---

कैः । दधिदूर्वाक्षतपुष्पचन्दनरसैः दधि च घनीभूतक्षीरम्, दूर्वा च शतपर्वा, अक्षताश्च तण्डुलाः, पुष्पाणि च प्रसवाः, चन्दनरसश्च श्रीखण्डद्रवः दधिदूर्वाक्षतपुष्पचन्दनरसास्तैः । पुनश्च कैः जातमङ्गलरवः गोरोचनालालसैः गोरोचनालालसितैः । पुनश्च कैः कृत्वा जातमङ्गलरवः । ध्वजदीपव्यजनातपत्रमुकुरैः ध्वजाश्च पताकाः, दीपश्च प्रदीपकलिका, व्यजनानि च तालवृन्तानि, आतपत्राणि च छत्राणि, मुकुराश्च दर्पणाः ध्वजदीपव्यजनातपत्रमुकुरास्तैः । पुनश्च कैः । आपूर्णकुम्भोत्करैः जलपूर्णघटसमूहैः । पुनश्च कैः । कुलवधूगीतप्रसाद्यैः कुलवधूनां कुलस्त्रीणां यानि गीतानि गानानि तैः प्रसाद्यानि प्रसन्नीकरणीयानि प्रसन्नीभूतानि ईदृग्विधैः वाद्यैरपि वादित्रैरपि जातमङ्गलरवः । समुच्चयालंकारः ॥

**यावदित्यादि** । हे क्षितिपाल हे यशोधरमहाराज, त्वं भवान् कामितैर्मनोवाञ्छितैः कृत्वा जातोत्सवः समुत्पन्नानन्दः सन् साम्यभाजात्मना स्वर्गादिसमानेन आत्मना जीवेन सह एतेषां स्वर्गादीनां द्विगुणीकृतोदयजयः द्विगुणीभूतजयोदयः सन् महीं पालय भूमण्डलस्य रक्षां कुरु । तावत्कियत् । यावत् द्यौः स्वर्गः उर्व(म)न्तरिक्षं वा वर्तते, यावत्कालं अवनिः पृथ्वी वर्तते, यावत्कालं कुलावनिभृतः पर्वताः वर्तन्ते, यावत्कालं शेषो धरणेन्द्रो वर्तते, यावत्कालं पयोराशयः समुद्राः वर्तन्ते, यावत्कालं सूर्यः श्रीभास्करो वर्तते, यावत्कालं शीतरुचिश्चन्द्रमा वर्तते, यावत्कालं दिशः पूर्वादयो वर्तन्ते, यावत्कालं सुरपतिर्देवेन्द्रो वर्तते, यावत्कालं सर्गैः सह त्रिभुवनैः सह ब्रह्मा विरञ्चिश्चिरंजीवो वा वर्तते । दीपकालंकारः ॥

**योषा इत्यादि** । हे नृप, तव प्रयाणे राजधानीं प्रति गमनप्रारम्भे संमुखाः संमुखायाताः स्युर्भवेयुः । काः । योषाः स्त्रियः । कथंभूताः । सुभूषाः शोभनवस्त्राभरणमण्डिताः । करिणो हस्तिनश्च । कथंभूताः । प्रशस्ताः गजपरीक्षाशास्त्रवर्णितलक्षणाः । नराश्च पुरुषाः । कथंभूताः । रत्नाम्बरहेमहस्ताः रत्नानि च माणिक्यानि अम्बराणि च वस्त्राणि हेम च सुवर्णं तानि हस्तानि येषां ते तथोक्ताः । एतानि पूर्वोक्तानि वस्तूनि कथंभूतानि । महीपतीनां नरेन्द्राणां प्रादेशनानीव प्राभृतकानीव । उपमालंकारः ॥

भूयाद्गन्धवहैः सार्धमनुलोमोऽर्कनन्दनः।
तथातोद्यैः समं नन्द्याद्दधिवक्त्रः कलस्वनः॥ २३२॥
गजस्यास्येव शौण्डीरवदान्यद्विषतामपि।
निदधातु पदं मूर्ध्नि देवः सर्वजगत्पतिः॥ २३३॥

अपि च।

ब्रह्मन्नाहवजैत्रमन्त्रसुभगास्तूर्णं कुरु व्याहृती-
र्द्रागिन्द्र प्रहिणु द्विषां विजितये दिव्यास्त्रतन्त्रं रथम्।
दिक्पालाः पुनरेव सत्वरममी देवस्य सेवाविधा-
वित्थं पार्थिवनाथ कत्थनपरः शङ्खध्वनिर्जृम्भताम्॥ २३४॥

---

**भूयादित्यादि**। हे राजन्, तव प्रयाणे संजायमाने सति अर्कनन्दनः काकः गन्धवहैः वायुभिः सार्धं अनुलोमः सानुकूलः संमुखवपुः(?) पृष्ठगामी भूयात्। तथा तेनैव प्रकारेण आतोद्यैर्हस्तवाद्यैः समं सार्धं दधिवक्त्रो गर्दभः कलस्वनो मधुरशब्दो नन्द्यात् समृद्धिकारको भूयात्। सहोक्त्यलंकारः॥

**गजस्येत्यादि**। देवः श्रीयशोधरमहाराजः शौण्डीरवदान्यद्विषतामपि शौण्डीरास्त्यागविक्रमाभ्यां विश्रुताः वदान्याः प्रियवाग्दानशीलास्ते च ते द्विषन्तः शत्रवस्तेषां शौण्डीरवदान्यद्विषतां मूर्ध्नि मस्तके पदं चरणं निदधातु धरतु। कस्येव। अस्य गजस्येव यथा गजस्य मस्तके पदं निदधाति देवस्तथा शत्रूणामपि। कथंभूतो देवः। सर्वजगत्पतिः आसमुद्रान्तपृथ्वीपतिः। उपमालंकारः॥

**अपि च। ब्रह्मन्नित्यादि**। हे पार्थिवनाथ राजाधिराज श्रीयशोधरमहाज, इत्थममुना प्रकारेण कत्थनपरः सूचनपरः शङ्खध्वनिः शङ्खनादो जृम्भतां प्रसरतु। इत्थं कथमिति चेत् हे ब्रह्मन् हे विधातः, त्वं तूर्णं शीघ्रं व्याहृतीर्वेदध्वनीन् कुरु विधेहि। कथंभूता व्याहृतीः। आहवजैत्रमन्त्रसुभगाः आहवस्य संग्रामस्य जैत्राः जयनशीला ये मन्त्राः चत्वारिंशदध्यायोक्तकाण्ड्या मन्त्रा उच्यन्ते अथर्वणमन्त्रा वा, तैः सुभगाः हृदयप्रियाः। पुनश्च किं कथयति शङ्खध्वनिः। हे इन्द्र, द्राक् शीघ्रं त्वं रथं प्रहिणु स्यन्दनं प्रस्थापय प्रेषय। किमर्थम्। द्विषां शत्रूणां विजितये जयनाय। कथंभूतं रथम्। दिव्यास्त्रतन्त्रम् दिव्यानि देवताधिष्ठितानि यान्यस्त्राणि आयुधानि तेषां तन्त्रं साधनं यत्र रथे स तथा तम्। उक्तं च—'तन्त्रं शास्त्रं कुलं तन्त्रं तन्त्रं सिद्धौषधिक्रिया। तन्त्रं सुखं बलं तन्त्रं तन्त्रं पाठनसाधनम्॥' पुनश्च किं सूचयति शङ्खध्वनिः। हे दिक्पालाः, पुनर्वारंवारं सत्वरं शीघ्रं अमी प्रत्यक्षीभूता एत आगच्छत यूयम्। किमर्थम्। देवस्य श्रीयशोधरमहाराजस्य सेवाविधौ हसनिकाविधाने। उत्प्रेक्षालंकारः॥

उत्तालैः कर्णतालैः किमिदमिति मनोव्याकुलं दिक्करीन्द्रैः
प्रत्याक्षिप्तार्वगर्वस्खलितकरयुगं सादिना भास्करस्य ।
सद्यःसंत्रस्तकान्तापरिचयचटुलैर्यः श्रुतः सिद्धसार्थैः
स स्ताद्दिक्पालसेवावसरविधिकरस्तूरघोषस्तवायम् ॥ २३५ ॥

पुलोमात्मजानुगतः सुरपतिरिवैरावणं तयामृतमतिमहादेव्या सहारुह्य तं कुञ्जरेश्वरममरतरुप्रसूनमञ्जरीभिरिवोभयतः कामिनीकरवलयमणिमरीचिमेचकरुचिभिश्चामरपरम्पराभिरुपसेव्यमानः कौमुदीचन्द्रमण्डलविलासिनातपत्राभोगेनाम्बरसरसि परिकल्पितापरापरप्रदेशोद्दण्डपुण्डरीकानीकः सेवाग-

---

उत्तालैरित्यादि । हे राजन्, स जगत्प्रसिद्धः अयं प्रत्यक्षीभूतस्तव भवतस्तूरघोषो वाद्यध्वनिः दिक्पालसेवावसरविधिकरः स्तात् दिक्पालानां नरेन्द्राणां सेवावसरविधिं सेवाप्रस्तावविधानं करोति सूचयति इति दिक्पालसेवावसरविधिकरः स्तात् भवतु । स कः । तद्यदोर्नित्यसंवन्धत्वात् यस्तूरघोषः श्रुत आकर्णितः । कैराकर्णितः । दिक्करीन्द्रैः दिग्गजेन्द्रैः । कैः कृत्वा श्रुतः । कर्णतालैः कर्णतालपत्रैः । कथंभूतैः कर्णतालैः । उत्तालैरुत्सुकैः(?) । कथं श्रुतः । इति अमुना प्रकारेण व्याकुलं विह्वलं मनो यथा भवत्येवम् । इतीति किम् । इदं किं किमेतद्गर्जतीति । पुनश्च तूरघोषः केन श्रुतः । भास्करस्य श्रीसूर्यस्य सादिना सारथिना । कथं श्रुतः । प्रत्याक्षिप्तार्वगर्वस्खलितकरयुगं प्रत्याक्षिप्तो विध्वंसितोऽर्वतां सप्ताश्वानां योऽसौ गर्वस्तेन स्खलितमकृताकर्षणं करयुगं यथा भवत्येवम् । नश्यतोऽश्वान् करयुगेन सा[दी]धर्तुं नाशकदित्यर्थः । पुनः कैः श्रुतः । सिद्धसार्थैः विद्याधरसमूहैः । कथंभूतैः सिद्धसार्थैः । सद्यःसंत्रस्तकान्तापरिचयचटुलैः सद्यस्तत्कालं संत्रस्ता भयं प्राप्ता याः कान्ताः देवविशेषभार्यास्तासां परिचयेन संगत्या चटुलाः पलायितुं चपलाः सद्यःसंत्रस्तकान्तापरिचयचटुलास्तैः । हेललंकारः ॥

पुलोमेत्यादि । किं कृत्वा पूर्वं राजधानीमनु प्रत्यावव्रते । तं उदयगिरिनामधेयं कुञ्जरेश्वरं यागहस्तिनं तया श्रीमतीपतिश्रीधर्मनृपतिनन्दनया अमृतमतिमहादेव्या सह आरुह्य आरोहणं कृत्वा । अहं कथंभूतः प्रत्यावव्रते । सुरपतिरिव देवेन्द्र इव । यथा सुरपतिः पुलोमात्मजानुगतः शचीसहितः ऐरावणमारोहति । पुनः कथंभूतोऽहं प्रत्यावव्रते । उभयतो द्वयोः पार्श्वयोर्हस्तिन्यारूढकामिनीनां करैश्चामरपरम्पराभिरुपसेव्यमानः चमरीरुहश्रेणिभिर्वीज्यमानः । कथंभूताभिः चामरपरम्पराभिः । कामिनीकरवलयमणिमरीचिमेचकरुचिभिः कामिनीनां वारस्त्रीणां करवलयमणीनां करकङ्कणरत्नानां मरीचिभिः किरणैर्मेचकरुचिभिः श्यामलतेजोभिः । उक्तं च—'कृष्णेऽन्धकारे मायूरचन्द्रके श्यामलेऽपि च । मेचकः कथ्यते विद्भिश्चतुर्ष्व-

तानेकमहासामन्तमुकुटमाणिक्योन्मुखमयूखशेखरिताञ्चलपल्लवैर्विचित्ररत्नर-चितकाण्डकोटिभिः विविधाकृतिपताकादुकूलैरपरामिव दिवं भुवं चान्तरा त्रिदिवद्रुमोद्यानश्रियं विस्तारयन् जय जीव राज नन्द वर्धस्वेत्यादिबन्दि-वृन्दालापवहलमूलेन वेणुवीणानुगताङ्गनागीतपल्लवितवृत्तिना स्खलत्खली-

---

र्थेषु योजितः ॥' कथंभूताभिश्चामरपरम्पराभिः । अमरतरुप्रसूनमञ्जरीभिरिव कल्पवृ-क्षपुष्पवल्लरीभिरिव । पुनः कथंभूतः प्रत्यावृत्ते । आतपत्राभोगेन छत्राडम्बरेण अम्बरसरसि आकाशसरोवरे परिकल्पितापरापरप्रदेशोद्दण्डपुण्डरीकानीकः परिक-ल्पितानि अपरापरप्रदेशेषु सर्वत्र उद्दण्डानि उन्नतानि पुण्डरीकाणां श्वेतकमलानां अनीकानि समूहा यस्य स तथोक्तः । कथंभूतेन आतपत्राभोगेन । कौमुदीचन्द्रम-ण्डलविलासिना कौमुदीचन्द्रमण्डलवत् ज्योत्स्नासंयुक्तचन्द्रबिम्बवत् विलसनशीलेन । किं कुर्वन्नहं प्रत्यावृत्ते । विविधाकृतिपताकादुकूलैः कृत्वा अनेकाकारध्वजवस्त्रैः कृत्वा दिवं भुवं चान्तरा द्यावाभूम्योर्मध्ये अपरां द्वितीयां त्रिदिवद्रुमोद्यानश्रियं कल्पवृक्षवनलक्ष्मीं विस्तारयन्निव । कथंभूतैर्विविधाकृतिपताकादुकूलैः सेवागतानेक-महासामन्तमुकुटमाणिक्योन्मुखमयूखशेखरिताञ्चलपल्लवैः सेवायामाराधनायामागता उ-पढौकिता ये अनेके बहवो महासामन्ताः देशपतयस्तेषां मुकुटानां संबन्धीनि माणिक्यानि रत्नानि तेषामुन्मुखा ऊर्ध्वाग्रा ये मयूखाः किरणास्तैः शेखरितानि मुकुटवन्ति कृतानि अञ्चलपल्लवानि वस्त्रप्रान्तप्रवालानि येषां पताकादुकूलानां तानि तथोक्तानि तैः । पुनः कथंभूतैः पताकादुकूलैः । विचित्ररत्नरचितकाण्डकोटिभिः विचित्रैर्नानाप्रकारैः श्वेतपीतहरितारुणकृष्णै रत्नैर्माणिक्यै रचिता जटिताः काण्ड-कोट्यो दण्डाग्राणि येषां तानि तथा तैः । पुनरपि कथंभूतोऽहं प्रत्यावृत्ते । दुन्दु-भीनां पटहानां स्वनेन ध्वनिना आनन्दितनिखिलभुवनः हर्षप्रापितसमस्तपृथ्वीम-ण्डलजनः । कथंभूतानां दुन्दुभीनाम् । प्रक्षोभिताम्भोधिनाभीनां प्रक्षोभिता संचा-लिता अम्भोधेः समुद्रस्य नाभिर्मध्यप्रदेशो यैर्दुन्दुभिभिस्ते प्रक्षोभिताम्भोनिधि-नाभयस्तेषाम् । कथंभूतेन स्वनेन । जय जीव राज नन्द वर्धस्वेत्यादिबन्दिवृन्दाला-पबहलमूलेन हे देव, त्वं जय सर्वोत्कर्षेण प्रवर्तस्व । हे देव, जीव त्वं दीर्घायुर्भव । हे देव, त्वं राज दीप्तिमान् भव । हे देव, त्वं नन्द समृद्धिं प्राप्नुहि । हे देव, त्वं वर्धस्व पुत्रपौत्रशाखाधनधान्यादिभिर्वृद्धिं प्राप्नुहि । इति ईदृक् आशिष आदिर्येषामालापा-नाम् । आदिशब्दात् शत्रून् क्षय इत्यादयः । ये बन्दिवृन्दानां स्तुतिपाठकसमूहानां ये आलापा आशीर्वादवचनानि तैर्बहलं स्थूलं मूलं प्रथमारम्भो यस्य दुन्दुभिस्वनस्य स तथोक्तस्तेन । पुनः कथंभूतेन दुन्दुभिस्वनेन । वेणुवीणानुगताङ्गनागीतपल्लवितवृत्ति-ना वेणवश्च सच्छिद्रवंशाः वीणाश्च विपञ्चिकास्तासामनुगतानि मिश्रितानि यानि

नाननहयह्रेषाघोषघस्मरेण मदमन्दिमोड्डमरगण्डमण्डलशुण्डालगलनालनादसान्द्रश्रुतिना दिक्पालपुरप्रासादपालीप्रवेशमांसलेन वेलाचलकुलगुहासङ्गसंजातमन्थरिम्णा प्रक्षोभिताम्भोधिनाभीनां दुन्दुभीनां स्वनेनानन्दितनिखिलभुवनस्तां मन्दाक्षितामरावतीरामणीयकां राजधानीमनु किल तदाहं प्रत्यावव्रृते ।

ततः सैन्यसीमन्तिनीचरणप्रणिपातप्रणयिमानसाप्रणीतप्रसृतासंवाहनविनोदकर्माणः कृतनितम्बस्थलीखेलखेदाः संजनितनाभिदरकुहरविहरणाः

---

अङ्गनानां स्त्रीणां गीतानि गानानि तैः पल्लविता सप्तस्थाने वृद्धिं गता वृत्तिर्मूर्च्छना यस्य स तथोक्तेन । पुनः कथंभूतेन स्वनेन । स्खलत्खलीनाननहयहेषाघोषघस्मरेण स्खलन्ति क्षुभ्यन्ति यानि खलीनानि कदिकास्तैरुपलक्षितानि आननानि मुखानि येषां ते स्खलत्खलीनाननास्ते च ते हयास्तुरङ्गमास्तेषां हेषा शब्दविशेषा ध्वनयः तेषां घस्मरः सर्वभक्षको विलोपक इत्यर्थस्तेन । पुनः कथंभूतेन स्वनेन । मदमन्दिमोड्डमरगण्डमण्डलशुण्डालगलनालनादसान्द्रश्रुतिना मदस्य दानस्य मन्दिमा प्राचुर्यं·········· ························································तेन नादाः शब्दास्तैः सान्द्रा द्विगुणीकृता श्रुतिः शब्दो यस्य दुन्दुभिस्वनस्य स तथा तेन । पुनः कथंभूतेन दुन्दुभिस्वनेन । दिक्पालपुरप्रासादपालीप्रवेशमांसलेन दिक्पालानामिन्द्रादीनां यानि पुराणि नगराणि तेषु ये प्रासादा देवगृहास्तेषां पाल्यो वेदिकाः कपिशीर्षरहितप्राकारास्तासां प्रवेशेन भित्त्वा मध्यगमनेन मांसलः । स्थूल इति यावत् । तेन । पुनः कथंभूतेन दुन्दुभिस्वनेन । वेलाचलकुलगुहासङ्गसंजातमन्थरिम्णा वेलाचलानां समुद्रतटपर्वतानां कुलानि समूहास्तेषां गुहाः कन्दरास्तासां सङ्गेन मध्यदेशेन संजात उत्पन्नो मन्थरिमा मन्दगामित्वं प्राचुर्यं यस्य स तथा तेन । कथंभूतां राजधानीम् । मन्दाक्षितामरावतीरामणीयकां मन्दाक्षितां ह्रेपितां लज्जां प्रापितां अमरावत्या इन्द्रनगर्या रामणीयकं रमणीयत्वं यस्याः सा मन्दाक्षितामरावतीरामणीयका तां तथोक्ताम् ।

ततस्तदनन्तरं बलसंचरणरेणवः सैन्यगमनरजांसि व्यजृम्भन्त प्रसस्रुः प्रसृताः प्रसरन्ति स्म । कथंभूतास्ते बलसंचरणरेणवः । प्रियतमा इव स्त्रीणां भर्तार इव । कथंभूता रेणवः । सैन्यसीमन्तिनीचरणप्रणिपातप्रणयिमानसाप्रणीतप्रसृतासंवाहनविनोदकर्माणः सैन्यान्येव सीमन्तिन्यः कमनीयकामिन्य आदेशकारकत्वात् तासां चरणाः पादास्तेषां प्रणिपातेषु पादपतनेषु प्रणयीनि स्नेहवन्ति यानि मानसानि चित्तानि तैराप्रणीतमासमन्तात् प्रसृतं उत्कृष्टं वृद्धिंगतं आसंवाहनविनोदकर्म पादसं-

प्रतिपन्नवालिवहिनीजलक्रीडाः परिमलितस्तनस्तम्बडम्बराः परिपीताधरामृतलावण्याः परिक्लिष्टनयनकमलकान्तयः समाचरितसीमन्तप्रान्तचुम्बनाः सूत्रितसुरतसमागमाः प्रियतमा इव, पुनरमरसुन्दरीवदनचन्द्रकवलाः ककुबङ्गनालकप्रसाधनपिष्टातकचूर्णाश्चतुरुदधिवेलावनदेवतापटवासाः पुनरु-

---

मर्दनक्रीडाकर्मं यै रेणुभिः ते तथोक्ताः। भर्तृवत् पूर्वपादेषु लग्ना इत्यर्थः। पुनः कथंभूताः रेणवः। कृतनितम्बस्थलीखेलखेदाः कृतो विहितः नितम्बस्थलीषु कटिपश्चाद्भागप्रदेशेषु खेलैः क्रीडाभिः खेदो दुःखं विषादो वा यैस्ते तथोक्ताः। यथा भर्तारः स्त्रीणां नितम्बस्थलीषु घातैः प्रहारैः खेदमुत्पादयन्ति । पुनः कथंभूता रेणवः । संजनितनाभिदरकुहरविहरणाः संजनितानि सम्यगुत्पादितानि नाभिदरकुहरेषु तुन्दीविवरगह्वरेषु विहरणानि पर्यटनानि यैस्ते तथोक्ताः। यथा प्रियतमाः भर्तारः स्त्रीणां नाभिदरकुहरेषु विहरणानि कुर्वन्ति। पुनः कथंभूता रेणवः। प्रतिपन्नवलिवाहिनीजलक्रीडा प्रतिपन्ना अङ्गीकृता वलिवाहिनीषु त्रिवलीनदीषु जलक्रीडा उदकक्रीडा उदकक्रीडनानि यैस्ते तथोक्ताः। यथा भर्तारः स्त्रीणां त्रिवलीनदीषु जलक्रीडां कुर्वन्ति। पुनः कथंभूताः रेणवः । परिमलितस्तनस्तम्बडम्बराः परिमलिताः समन्तान्मर्दिताः स्तनस्तम्बानां कुचतटानामाडम्बरा आटोपा यैस्ते तथोक्ताः । यथा भर्तारः स्त्रीणां स्तनस्तम्बानां मर्दनाडम्बरान् कुर्वन्ति । पुनः कथंभूताः रेणवः । परिपीताधरामृतलावण्याः परिपीता आस्वादिता अधरामृतलावण्यानि ओष्ठपीयूषकान्तयो यैस्ते तथोक्ताः । यथा भर्तारः स्त्रीणाम् अधरामृतलावण्यानि पिबन्ति। पुनः कथंभूता रेणवः। परिक्लिष्टनयनकमलकान्तयः परिक्लिष्टा मलिनीकृता नयनकमलानां लोचनविषयप्रसूतानां कान्तयो रुचयो यैस्ते तथोक्ताः। यथा भर्तारः स्त्रीणां नयनकमलकान्तीर्लोचनकमलरुचीर्लोचनचुम्बनेन मलिनयन्ति। पुनः कथंभूता रेणवः। समाचरितसीमन्तप्रान्तचुम्बनाः समाचरितः सम्यगनुष्ठितः सीमन्तप्रान्तेषु केशपाशेषु चुम्बनानि स्पर्शानि यैस्ते तथोक्ताः। यथा भर्तारः स्त्रीणां सीमन्तप्रान्तेषु चुम्बनानि वक्त्रसंयोगानि कुर्वन्ति। कथंभूताः प्रियतमाः। सूत्रितसुरतसमागमाः सूत्रितः सूचितः सुरतस्य संभोगक्रीडायाः समागमोऽवसरो यैस्ते सूत्रितसुरतसमागमाः। पुनः कथंभूता बलसंचरणरेणवः। पुनः पुनरपि अमरसुन्दरीवदनचन्द्रकवलाः अमरसुन्दरीणां देवाङ्गनानां वदनानां मुखानां चन्द्रकवलाः मुखमण्डनप्रायाः। पुनः कथंभूताः रेणवः। ककुबङ्गनालकप्रसाधनपिष्टातकचूर्णाः ककुभो दिश एवाङ्गना ललना तस्या अलकप्रसाधनं केशसुगन्धीकरणं तदर्थं पिष्टातकचूर्णं पटवासचूर्णानीव चतुरुदधिवेलावनदेवतापटवासाः चत्वारश्च ते उदधयः समुद्रास्तेषां वेलावनेषु तटवनेषु याः देवतास्तासां पटवासाः वस्त्रसुगन्धीकरणचूर्णानीव। पुनः कथंभूता रेणवः। पुनरुक्त-

क्तदिक्करटिपांशुप्रमाथाः परिकल्पितधूर्जटिजटोद्धूलनारम्भाः कुलशैलशिखण्डिमण्डनकदम्बमकरन्दाः पलिताङ्कुरिताम्बरचरकामिनीकुन्तलकलापाः प्रधूसरितरविरथतुरगकेसराः स्तिमितगगनापगापयःप्रवाहाः सकलदिक्पालमौलिमणिमयूखप्रसरनिरसननीहाराः पाण्डुरितारातिकुलविलासिनीगण्डमण्डलाः प्रदर्शितागामिविरहानलधूमोद्गमकलापा इव निखिलरोधोन्तरालमवनिमयसर्गसृष्टमिव कर्तुमावृत्ता व्यजृम्भन्त केतकीप्रसवपरागस्पर्धिनो बलसंचरणरेणवः ।

---

दिक्करटिपांशुप्रमथाः पुनरुक्तो द्विगुणीकृतो दिक्करटिनां दिग्गजानां पांशुप्रमाथो धूल्युत्क्षेपणं यैस्ते तथोक्ताः । पुनः कथंभूता रेणवः । परिकल्पितधूर्जटिजटोद्धूलनारम्भाः परिकल्पितः समन्ताद्विहितो धूर्जटेर्महादेवस्य जटानां उद्धूलनारम्भो धूलिधूरणप्रारम्भो यैस्ते तथोक्ताः । पुनः कथंभूताः रेणवः । कुलशैलशिखण्डिमण्डनकदम्बमकरन्दाः कुलशैलानां कुलपर्वतानां शिखण्डिनां मस्तकानां शिखराणां मण्डने कदम्बमकरन्दाः······ कुन्दपुष्परसाः । पुनः कथंभूता रेणवः । पलिताङ्कुरिताम्बरचरकामिनीकुन्तलकलापाः पलिताङ्कुरिताः पाण्डुरीकृताः अम्बरचरकामिनीनां देवविद्याधरस्त्रीणां कुन्तलकलापाः केशहस्ता यैस्ते तथोक्ताः । पुनः कथंभूता रेणवः । प्रधूसरितरविरथतुरगकेसराः प्रधूसरिताः ईषत्पाण्डुरीकृता रवेः श्रीसूर्यस्य रथस्य स्यन्दनस्य तुरगाणां अश्वानां केसराः स्कन्धकेशा यैस्ते तथोक्ताः । पुनः कथंभूता रेणवः । स्तिमितगगनापगापयःप्रवाहाः स्तिमिताः स्तोकीकृता गगनापगायाः आकाशापगायाः नद्याः पयःप्रवाहा जलप्रपूरा यैस्ते तथोक्ताः । पुनः कथंभूता रेणवः । सकलदिक्पालमौलिमणिमयूखप्रसरनिरसननीहाराः सकलानां समग्राणां दिक्पालानामिन्द्रादीनां मौलीनां मुकुटानां मणीनां रत्नानां मयूखानां किरणानां प्रसराणां प्रवृत्तीनां निरसने निरसनानां नीहाराः प्रालेयसदृशाः पाण्डुरीकरणत्वात् । पुनः कथंभूता रेणवः । पाण्डुरितारातिकुलविलासिनीगण्डमण्डलाः पाण्डुरितानि पाण्डुरीकृतानि अरातिकुलानां शत्रुसमूहानां विलासिनीनां च वधूनां गण्डमण्डलानि कपोलस्थलानि यैस्ते तथोक्ताः । पुनः कथंभूता रेणवः । प्रदर्शितागामिविरहानलधूमोद्गमकलापा इव प्रदर्शिताः प्रकटीकृताः आगामिनो भविष्यतो विरहानलस्य विप्रलम्भवैश्वानरस्य धूमोद्गमस्य प्रादुर्भावस्य पर्यायान्तरोत्पत्तेः कलापाः समूहा इव । पुनः कथंभूता रेणवः । निखिलरोधोन्तरालमवनिमयसर्गसृष्टमिव निखिलं समस्तं रोधोन्तरालं आकाशभूमिमध्यं अवनिमयसर्गसृष्टं भूमिमयेन सर्गेण निधानेन सृष्टं निर्मितं कर्तुमावृत्ता इव प्रवृत्ता इव । पुनः कथंभूता रेणवः । केतकीप्रसवपरागस्पर्धिनः केतकीनां पुष्पतरुविशेषाणां प्रसवानां पुष्पाणां परागैर्धूलिभिः सह स्पर्धिनः । तिरस्करणशीला इत्यर्थः । रूपकप्रायालंकारः ॥

पुनः करिकदलिकानिकरनिरस्तातपप्रसराः परस्परमिलत्पताकापटप्रतानविहितवितानाडम्बराः ससंरम्भसंचरद्रथकट्योड्डमरपांसवः करटिकटस्यन्दमानमदजलजनितकर्दमास्तुरगवेगखरखुरक्षोदनिबिडभूमयः करभक्रमसंपातमसृणतलाः पदश्रमश्रान्तसीमन्तिनीघनघर्मजलगलद्घुसृणरसप्रसाधितसंमार्जनाः सेनाङ्गनास्तनक्षोभविभ्रश्यन्मुक्ताभरणमणिरचितरङ्गवलयाः पुरोपवनदेवताप्रकीर्णकुसुमोपहाराः समजनिषत सभाकुट्टिमादपि मनोहराः प्रयाणमार्गाः ।

---

पुनः पुनरपि सभाकुट्टिमादपि आस्थानिकाया बद्धभूमेरपि अधिकमनोहराः प्रयाणमार्गाः गमनमार्गाः समजनिषत संजायन्ते स्म संजाताः । कथंभूताः प्रयाणमार्गाः । करिकदलिकानिकरनिरस्तातपप्रसराः करिणां गजानां कदलिकानां ध्वजपिच्छानां मयूरपिच्छच्छत्राणां निकरैः समूहैः निरस्तो विध्वंसित आतपप्रसरो घर्मप्रवृत्तिर्येषां प्रयाणमार्गाणां ते तथा । पुनः कथंभूताः प्रयाणमार्गाः । परस्परमिलत्पताकापटप्रतानविहितवितानाडम्बराः परस्परमन्योन्यं मिलन्तः आश्लिष्यन्तः पताकापटानां ध्वजवस्त्राणां प्रतानाः समूहास्तैर्विहितः परिकल्पितो वितानानां चन्द्रोपकानां आडम्बर आटोपो येषु ते तथोक्ताः । पुनः कथंभूताः प्रयाणमार्गाः । ससंरम्भसंचरद्रथकट्योड्डमरपांसवः ससंरम्भं सोत्तालं संचरन्त्यो रथकट्याः स्यन्दनसमूहास्तासां उड्डमरा उत्कटाः स्थूलाः पांसवो धूलयो येषु ते तथोक्ताः । पुनः कथंभूताः प्रयाणमार्गाः । करटिकटस्यन्दमानमदजलजनितकर्दमाः करटिनां गजानां कटेभ्यो गण्डस्थलेभ्यः स्यन्दमानानि श्चोतन्ति यानि मदजलानि दानोदकानि तैर्जनित उत्पादितः कर्दमो निषद्वरो येषु मार्गेषु ते तथोक्ताः । पुनः कथंभूताः प्रयाणमार्गाः । तुरगवेगखरखुरक्षोदनिबिडभूमयः तुरगाणां अश्वानां वेगेनोपलक्षिताः खराः कठिनाः लोहटङ्कसदृशा ये खुरः पादप्रान्तास्तेषां क्षोदैः संक्षेप(पेष)णैर्निबिडा बद्धजाला(ता) भूमिर्येषां ते तथोक्ताः । पुनः कथंभूताः प्रयाणमार्गाः। करभक्रमसंपातमसृणतलाः करभाः क्रमेलकास्तेषां क्रमाणां पादानां संपातैर्मसृणानि श्लक्ष्णानि दर्पणसदृशानि तलानि उपरितनभागा येषां प्रयाणमार्गाणां ते तथोक्ताः । पुनः कथंभूताः प्रयाणमार्गाः । पदश्रमश्रान्तसीमन्तिनीघनघर्मजलगलद्घुसृणरसप्रसाधितसंमार्जनाः पदस्य मार्गस्य श्रमः खेदस्तेन श्रान्ताः खेदं प्राप्ताः याः सीमन्तिन्यो नवयौवनाः स्त्रियस्तासां घनं प्रचुरं यत् घर्मजलं प्रस्वेदोदकं तेन गलन्नधः पतन् योऽसौ घुसृणरसः कुङ्कुमद्रवस्तेन प्रसाधितं कृतं संमार्जनं छटको येषां मार्गाणां ते तथोक्ताः । पुनः कथंभूताः प्रयाणमार्गाः । सेनाङ्गनास्तनक्षोभविभ्रश्यन्मुक्ताभरणमणिरचितरङ्गप्रचया(वलयाः) सेनानां संबन्धिन्यो या अङ्गनाः स्त्रियस्तासां स्तनाः वक्षोजास्तेषां क्षोभेण संघटनेन विभ्रश्यन्तो ये मुक्ता मुक्ताफलानि आभरणमणयश्च सुवर्णाभरणरत्नानि तै रचिता निर्मिता रङ्गप्रचयाः (वलयाः) चतुष्कपूरणा येषां प्रयाणमार्गाणां ते तथोक्ताः । पुनः कथंभूताः प्रयाणमार्गाः ।

ततोऽतिसविधसैन्यसमालोकनोत्तालविलासिनीसंकुलसौधशृङ्गमावर्जितोत्सवसपर्यासङ्गमपहसितसुरमन्दिरं पुरमवलोक्य हंहो महाकविकाव्यकथावतंस सरस्वतीविलासमानसोत्तंसहंस प्रादुरासन्किल तदा मन्मतिलतायास्त्वादृशजनश्रवणभूषणोचितविधयः सूक्तिमञ्जर्यः । तथा हि—

नितम्बशोभां वलभीर्विधाय काञ्चीगुणं तोरणपुष्पमालाः ।
ध्वजावलीर्लोलभुजाः स्वयं मे पुरः पुरी नृत्तमिवातनोति ॥ २३६ ॥

---

पुरोपवनदेवताप्रकीर्णकुसुमोपहाराः पुरोपवनानां नगरोद्यानानां संबन्धिन्यो या वनदेवताः कान्तारदेवतास्ताभिः प्रकीर्णोऽधिक्षिप्तः कुसुमानां पुष्पाणां उपहारः पूजनं उपचयो वा येषां ते तथोक्ताः । जात्यलंकारः ॥

ततस्तदनन्तरं हंहो महाकविकाव्यकथावतंस महाकवीनां चिरंतनकवीश्वराणां काव्यकथा कवित्वरचनावतंसः कर्णपूरः श्रवणाभरणं यस्य स तथा तस्य संबोधनं हे तथोक्त । हे सरस्वतीविलासमानसोत्तंसहंस सरस्वत्या भारत्याः योऽसौ विलासः क्रीडा स एव मानसं मानससरोवरं तस्योत्तंसे तत्तीरप्रदेशे हंसो मानसौका सरस्वतीविलासमानसोत्तंसहंसस्तस्य संबोधनं क्रियते । हे तथोक्त श्रीमारदत्त महाराज । उक्तं च— 'आत्मा पक्षी मुनिर्धर्मसुरगोरावणो रविः । हंस इत्युच्यते विद्भिरेते कार्यविचक्षणैः ॥' किल निश्चयेन तदा तस्मिन् राजधान्यागमनकाले मन्मतिलतायाः मद्बुद्धिवल्ल्याः (समृद्धेः पत्न्याः ) सूक्तिमञ्जर्यः सुवचनवल्ल्यः[1] प्रादुरासन् प्रादुर्बभूवुः । कथंभूताः सूक्तिमञ्जर्यः । त्वादृशजनश्रवणभूषणोचितविधयः त्वादृशा जना भवत्सदृशाः साधुलोका महान्तः पृथ्वीपतयस्तेषां श्रवणानि शब्दग्रहास्तेषां भूषणे मण्डने उचितो विधिः कर्तव्यं यासां सूक्तिमञ्जरीणां तास्तथोक्ताः । किं कृत्वा पूर्वं सूक्तिमञ्जर्यः प्रादुरासन् । 'अस् भुवि' इत्यकर्मकधातोः प्रयोगात् कर्तर्युक्तिः । पुरमवलोक्य उज्जयिनीपत्तनं दृष्ट्वा । कथंभूतं पुरम् । अतिसविधसैन्यसमालोकनोत्तालविलासिनीसंकुलसौधशृङ्गम् अतिसविधानि अतिनिकटवर्तीनि यानि सैन्यानि कटकानि तेषां समालोकने संदर्शने उत्ताला उन्मुखा या विलासिन्यो मत्तकामिन्यः । उक्तं च—'रूपयौवनसंपन्ना नारी स्यान्मत्तकामिनी ।' ताभिः संकुलानि व्याकुलानि (व्याप्तानि) सौधानां राजसदनानां शृङ्गाणि शिखराणि यस्य पुरस्य तत्तथोक्तम् । पुनः कथंभूतं पुरम् । आवर्जितोत्सवसपर्यासङ्गम् आवर्जितः कृत उत्सवसपर्याया ध्वजारोपणपट्टशालाद्याच्छादनशोभायाः सङ्गः संगमो यस्य पुरस्य तत्तथोक्तम् । पुनः कथंभूतं पुरम् । अपहसितसुरमन्दिरम् अपहसितानि तिरस्कृतानि सुरमन्दिराणि इन्द्रभवनानि येन पुरेण तदपहसितसुरमन्दिरम् ॥ तथा हि । तान्येव सूक्तिवचनानि वर्णयति—नितम्बशोभामित्यादि । पुरी नगरी मे मम पुरो यतः स्वयमात्मना नृत्तं नर्तनमातनोतीव कुर्वतीव वर्तते । किं कृत्वा पूर्वं

---

1. 'वल्लरिर्मञ्जरिः स्त्रियौ' इति कोशवाक्याद्ध्रस्वान्तोऽपि मञ्जरिशब्दः.

सौधाग्रभागेषु पुराङ्गनानां नीलोत्पलस्पर्धिभिरीक्षणैर्मे ।
आनन्दभावादियमम्बरश्रीः पुष्पोपहाराय कृतादरेव ॥ २३७॥
गवाक्षमार्गेषु विलासिनीनां विलोचनैर्मौक्तिकबिम्बकान्तैः ।
संदर्भितेयं नगरी चकास्ति नक्षत्रकीर्णेव सुमेरुभूमिः ॥ २३८ ॥
अमी पुरंध्रीवदनैः प्रकामं वातायनाः पूरितरन्ध्रभागाः ।
श्रियं वहन्तीव सरःस्थलीनां वीचीविभक्ताम्बुजषण्डभाजाम् ॥ २३९ ॥
मनोभवव्यालप्रबोधसुधोपलासारसुन्दरैः कामदेवप्रासादसंपादनसूत्रपातका-

---

नृत्तमातनोति । वलभीः पट्टलाधरा वंशपञ्जरो वलभीत्युच्यते ताः वलभीः नितम्बशोभां विधाय स्त्रीकटीपश्चाद्भागो नितम्बस्तस्य शोभां कृत्वा । पुनश्च किं कृत्वा । पूर्वं तोरणपुष्पमालाः काञ्चीगुणं संजीनकलापं विधाय कृत्वा । पुनश्च किं कृत्वा । ध्वजावलीः पताकापङ्क्तीर्लोलभुजाः चपलबाहुर्विधाय कृत्वा । रूपकोत्प्रेक्षालंकारः ॥

**सौधाग्रभागेष्वित्यादि** । इयं प्रत्यक्षीभूता अम्बरश्रीराकाशलक्ष्मीर्मे मम पुष्पोपहाराय कुसुमवर्षणाय कृतादरेव वर्तते । कस्मात् । आनन्दभावात् हर्षभरात् । कैः कृत्वा पुष्पोपहारं करोति । ईक्षणैर्लोचनैः कृत्वा । कासामीक्षणैः । सौधाग्रभागेषु स्थितानां पुराङ्गनानां नगरस्त्रीणां संबन्धिभिर्लोचनैः । कथंभूतैः ईक्षणैः । नीलोत्पलस्पर्धिभिः इन्दीवराणां तिरस्करणशीलैः । उपमोत्प्रेक्षालंकारः ॥

**गवाक्षमार्गेष्वित्यादि** । इयं नगरी गवाक्षमार्गेषु वातायनछिद्रेषु विलासिनीनां स्त्रीणां विलोचनैर्नेत्रैः संदर्भिता संयुक्ता चकास्ति शोभते । कथंभूतैर्विलोचनैः । मौक्तिकबिम्बकान्तैः मौक्तिकानां मुक्ताफलानां बिम्बैः प्रतिच्छायाभिः कान्तैर्मनोहरैः । नगरी कीदृशी चकास्ति । नक्षत्रकीर्णा तारामण्डलमण्डिता सुमेरुभूमिरिव मेरुपर्वतभूमिरिव । उपमालंकारः ॥

**अमीत्यादि** । अमी प्रत्यक्षीभूता वातायनाः गवाक्षमार्गाः पुरंध्रीवदनैः स्त्रीणां मुखैः प्रकामं यथेष्टं पूरितरन्ध्रभागाः आवृतप्रदेशाः श्रियं शोभां वहन्ति धारयन्ति । कासां श्रियं वहन्ति । सरःस्थलीनामिव सरोवरप्रदेशानामिव । कथंभूतानां सरःस्थलीनाम् । वीचीविभक्ताम्बुजषण्डभाजाम् वीचीभिर्लहरीभिः विभक्तानि विश्राणितानि चढितानि यान्यम्बुजानि कमलानि तेषां षण्डाः समूहास्तान् भजन्ते आश्रयन्ति याः सरःस्थल्यस्ता वीचीविभक्ताम्बुजषण्डभाजस्तासाम् । कथंभूतैरपाङ्गावलोकितैः । मनोभवव्यालप्रबोधसुधोपलासारसुन्दरैः मनोभवः कन्दर्पः स एव व्यालः कालसर्पस्तस्य प्रबोधाय जागरणाय सुधोपलानां चन्द्रकान्तमणीनां आसारो वेगवद्वर्षस्तद्वत् सुन्दरैः मनोहरैः चन्द्रकान्तदृषद्वृष्टिसदृशैः । पुनः कथंभूतैः । कामदेवप्रासादसंपादनसूत्रपात-

न्तिभिः प्रणयकलहंसक्रीडनमृणालजालैरिवापाङ्गावलोकितैः, पुनरुक्तेनेव लाजाञ्जलिवर्षेणात्मानं फलार्थिनो लोकस्य कुसुमितमिव कुर्वन्नम्बरश्रीनृत्यहस्तैरिव पवमानचञ्चलचलनसंगताङ्गसुभगवृत्तिभिर्विविधवर्णविनिर्माणमनोहराडम्बरैरन्तरान्तरामुक्तकलक्वणन्मणिकिङ्किणीजालमालाभिः महोत्सवपताकांशुकाञ्चलपल्लवैः प्रत्यावर्तमानमार्तण्डकरप्रसरम्, गगनलक्ष्मीवक्षोजमण्डलैरिव स्वकीयकान्तिपिञ्जरितनभोभोगभित्तिभिः काञ्चनकलशैः परिकल्पिताभ्रंलिहशिखरिशिखरपरम्पराशोभम्, त्रिदिवदीर्घिकातरङ्गैरिवेतस्ततः

---

कान्तिभिः कामदेवः कन्दर्पः स एव प्रासादस्तस्य संपादने उत्पादने सूत्रपातकान्तिभिः सूत्रारोपणसदृशैः । पुनः कथंभूतैः । प्रणयकलहंसक्रीडनमृणालजालैः प्रणयः स्नेहः स एव कलहंसो राजहंसस्तस्य क्रीडने रमणे मृणालजालैरिव पद्मिनीकन्दसमूहैरिव । कथंभूतं त्रिभुवनतिलकं नाम राजसदनम् । महोत्सवपताकांशुकाञ्चलपल्लवैः प्रत्यावर्तमानमार्तण्डकरप्रसरम् । महोत्सवस्य पताकांशुकाञ्चलपल्लवैः वस्त्रप्रान्तप्रवालैः प्रत्यावर्तमानः पराङ्मुखीक्रियमाणो मार्तण्डस्य सूर्यस्य करप्रसरः किरणप्रवृत्तिर्यत्र राजसदने तत्प्रत्यावर्तमानमार्तण्डकरप्रसरम् । कथंभूतैर्महोत्सवपताकांशुकाञ्चलपल्लवैः । अम्बरश्रीनृत्यहस्तैरिव अम्बरश्रीराकाशलक्ष्मीस्तस्या नृत्यहस्तैर्नर्तनकरैरिव । पुनः कथंभूतैर्महोत्सवपताकांशुकाञ्चलपल्लवैः । पवमानचञ्चलचलनसंगताङ्गसुभगवृत्तिभिः चञ्चलचलनसंगताङ्गसुभगा अतिमनोहरा वृत्तिः प्रवृत्तिर्येषां अंशुकपल्लवानां ते तथोक्तास्तैः । पुनः कथंभूतैर्महोत्सवपताकांशुकाञ्चलपल्लवैः । विविधवर्णविनिर्माणमनोहराडम्बरैः विविधवर्णविनिर्माणेन पञ्चवर्णरचनया मनोहरो हृदयंगमो आडम्बर आटोपो येषां पताकांशुकाञ्चलपल्लवानां ते तथोक्तास्तैः । पुनः कथंभूतैर्महोत्सवपताकांशुकाञ्चलपल्लवैः । अन्तरान्तरामुक्तकलक्वणन्मणिकिङ्किणीजालमालाभिः अन्तरे अन्तरे मध्ये मध्ये आमुक्ताः कलाः मधुरशब्दाः क्वणन्त्यः शब्दायमाना या मणिकिङ्किण्यो रत्नजटितसुवर्णक्षुद्रघण्टिकास्तासां जालमाला समूहश्रेणिर्विद्यते येषां ते तथा तैः । पुनः कथंभूतं त्रिभुवनतिलकं नाम राजसदनम् । काञ्चनकलशैः शातकुम्भैः परिकल्पिताभ्रंलिहशिखरिशिखरपरम्पराशोभम् परिकल्पिता रचिता अभ्रंलिहशिखरिणां उन्नतपर्वतानां शिखराणां शृङ्गाणां परम्पराणां श्रेणीनां शोभा आभा यत्र राजसदने तत्तथोक्तम् । कथंभूतैः काञ्चनकलशैः । गगनलक्ष्मीवक्षोजमण्डलैरिव स्वकीयकान्तिपिञ्जरितनभोभोगभित्तिभिः स्वकीयकान्तिभिर्निजप्रभाभिः पिञ्जरिता पीतरक्तीकृता नभोभोगभित्तयः आकाशप्रदेशकुड्या यैस्ते तथा तैः । पुनः कथंभूतं राजसदनम् । इतस्ततः प्रधावद्भिः इतस्ततो यत्र तत्र प्रधावद्भिः प्रगच्छद्भिः सुधादीधितिप्रबन्धैः श्वेतद्रव्यकिरणप्रसरसमूहैर्धवलिताखिलदिग्वलयं धवलितं उज्ज्वलीकृतमखिलं समग्रं दिग्वलयं दिङ्मण्डलं येन तत्तथोक्तम् । कथंभूतैः सुधादीधितिप्रबन्धैः । त्रिदिवदीर्घिकातरङ्गैरिव गङ्गा-

प्रधावद्भिः सुधादीधितिप्रबन्धैर्धवलिताखिलदिग्वलयम्, अहीश्वरवेश्मदेवताविलासदोलाभिरिव रत्नमयस्तम्भावलम्बितमुक्ताप्रलम्बप्रबलप्रवालानेकदिव्यदुकूलसंदोहाभिरुपरितनदेशोत्तम्भितध्वजप्रान्तप्रोतमरकतमणिमुकुरन्दकिरणहरिताङ्कुरप्रलोभमन्दितद्युमणिरथतुरगवेगाभिरुत्तुङ्गोत्तरङ्गतोरणपङ्क्तिभिः प्रकाशितकुबेरपुरीरामणीयकावतारम्, महामण्डलेश्वरैरनवरतमुपायनीकृतकरीन्द्रमदलक्ष्मीजनितसंमार्जनम्, उपाहूताजानेयहयाननोद्गीर्णडिण्डीरपिण्डपुण्डरीकविहितोपहारम्, अनेकप्रहितदूतहस्तविन्यस्तवस्तुविरचितरङ्गा-

---

नदीकल्लोलैरिव। पुनः कथंभूतं राजसदनम्। उत्तुङ्गोत्तरङ्गतोरणपङ्क्तिभिः प्रकाशितकुबेरपुरीरामणीयकावतारम् प्रकाशितः प्रकटीकृतः कुबेरस्य धनदस्य पुर्याः अलकाया रामणीयकः अतिमनोहरः अवतारो रचनाविशेषो येन राजसदनेन तत्तथोक्तम्। कथंभूताभिस्तोरणपङ्क्तिभिः। अहीश्वरवेश्मदेवताविलासदोलाभिरिव अहीश्वरस्य शेषनागस्य वेश्मदेवतायाः विलासदोलाभिरिव क्रीडाप्रेङ्खाभिरिव। पुनः कथंभूताभिस्तोरणपङ्क्तिभिः। रत्नमयस्तम्भावलम्बितमुक्ताप्रलम्बप्रबलप्रवालानेकदिव्यदुकूलसंदोहाभिः रत्नमयस्तम्भेषु माणिक्यघटितस्तम्भेषु अवलम्बितानि आमुक्तानि यानि मुक्ताप्रलम्बानि मुक्ताफलानि दीर्घमालाः तथा प्रबलाः स्थूला ये प्रवाला विद्रुमास्तथा अनेकानि दिव्यानि अमानुषाणि दुकूलानि वस्त्राणि तेषां संदोहाः समूहा यासु तोरणपङ्क्तिषु तास्तथा ताभिः। पुनः कथंभूताभिस्तोरणपङ्क्तिभिः। उपरितनदेशोत्तम्भितध्वजप्रान्तप्रोतमरकतमणिमुकुरन्दकिरणहरिताङ्कुरप्रलोभमन्दितद्युमणिरथतुरगवेगाभिः उपरितनदेशेषु प्रान्तप्रदेशेषु उत्तम्भिता बद्धा ये ध्वजाः पताकास्तेषां प्रान्तेषु प्रोताः प्रवेशिता ये मरकतमणयः त एव मुकुरन्दा हरितरत्नदर्पणास्तेषां किरणहरिताङ्कुरा रश्मिनीलप्ररोहास्तेषां प्रलोभेन आकाङ्क्षया मन्दितोऽल्पीकृतो द्युमणेः श्रीसूर्यस्य रथस्य स्यन्दनस्य तुरगाणां घोटकानां वेगो रयो याभिस्तोरणपङ्क्तिभिस्तास्तथा ताभिः। पुनः कथंभूतं राजसदनम्। महामण्डलेश्वरैर्महासामन्तैरनवरतं निरन्तरं उपायनीकृतकरीन्द्रमदलक्ष्मीजनितसंमार्जनं उपायनीकृताः प्राभृतीकृताः उपढौकिता ये करीन्द्रा गजनायकास्तेषां मदलक्ष्मीसंपद्भिर्जनितमुत्पादितं संमार्जनं सेचनं छटको यत्र राजसदने तत्तथोक्तम्। पुनः कथंभूतं राजसदनम्। उपाहूताजानेयहयाननोद्गीर्णडिण्डीरपिण्डपुण्डरीकविहितोपहारम् उपाहूता उपढौकिता ये आजानेयहयाः कुलीनाश्वास्तेषामाननैर्मुखैरुद्गीर्णा उद्वान्ता ये डिण्डीरपिण्डाः फेनराशयस्त एव पुण्डरीकानि महोत्पलानि श्वेतकमलानि तैर्विहितः कृतः उपहारः पूजनं यत्र राजसदने तत्तथोक्तम्। पुनः कथंभूतं राजसदनम्। अनेकप्रहितदूतहस्तविन्यस्तवस्तुविरचितरङ्गार्चनम् अनेके बहवः प्रहिताः परै राजभिः प्रेषिता ये दूता वचोहरास्तेषां हस्तेषु पाणिषु विन्यस्तानि आरोपितानि यानि वस्तूनि

र्चनम्, अवसर्पितवारविलासिनीसंचरणवाचालतुलाकोटिक्वणिताकुलितविनोदवारलम् ।

किं च प्रजापतिपुरमिवाप्यदुर्वासोधिष्ठितम्, पुरंदरागारमिवाप्यपारिजातम्, चित्रभानुभवनमिवाप्यधूमश्यामलम्, धर्मधाम इवाप्यदुरीहितव्यवहारम्, पुण्यजनावासमिवाप्यराक्षसभावम्, प्रचेतःपस्त्यमिवाप्यजडाशयम्,

---

रत्नकनकपट्टदुकूलादीनि तैर्विरचितरङ्गार्चनमग्रभूमिपूजनं यस्य त्रिभुवनतिलकसदनस्य तत्तथोक्तम् । पुनः कथंभूतं राजसदनम् । अवसर्पितवारविलासिनीसंचरणवाचालतुलाकोटिक्वणिताकुलितविनोदवारलम् अव समन्तात्सर्पिताः प्रसृता या वारविलासिन्यो वारो वेलासमयस्तद्विलासिन्यो वारविलासिन्यो वेश्याजनास्तासां संचरणेन प्रवेशेन वाचाला ये तुलाकोट्यो नूपुराणि तेषां क्वणितैः शब्दितैराकुलिता विह्वलीभूता विनोदवारलाः क्रीडाहंस्यो यत्र राजसदने तत्तथोक्तम् ।

किं च अस्ति कश्चिद्विशेषोऽत्र । कथंभूतं राजसदनम् । प्रजापतिपुरमिवाप्यदुर्वासोधिष्ठितम् दुष्टानि मलिनानि तानि यानि । ननु यत् प्रजापतिपुरं ब्रह्मनगरं तत् अदुर्वासोधिष्ठितं कथं भवति । विरुद्धमेतत् । परिह्रियते—अदुर्वासोधिष्ठितं अमलिनवस्त्रमनुष्योपेतम् । अपि निश्चयेन इति स्पष्टम् । पुनः कथंभूतं राजसदनम् । पुरंदरागारमिवाप्यपारिजातम् । ननु यत् पुरंदरागारसदृशं इन्द्रमन्दिरसमानं तत् अपारिजातं पारिजातपुष्परहितं कथं भवति । पारिः स्वर्गस्तत्र जातानि इति विग्रहः । विरुद्धमेतत् । परिह्रियते—अपगतानि नष्टानि अरीणां शत्रूणां जातानि समूहानि यस्मादिति तत् अपारिजातमिति स्वच्छम् । पुनः कथंभूतं राजसदनम् । चित्रभानुभवनमिवाप्यधूमश्यामलम् । ननु यत् चित्रभानुभवनं अग्निमन्दिरं तत् अधूमश्यामलं धूमेन अमलिनं कथं भवति इत्यपि विरुद्धम् । तत्रापि शङ्क्यम् । चित्रा नानाप्रकारा भानवोऽनेकमाणिक्यकिरणास्तेषां भवनं स्थानं अपगतधूमं अधूमश्यामलं अकृष्णमिति स्वच्छम् । पुनः कथंभूतं राजसदनम् । धर्मधाम इवाप्यदुरीहितव्यवहारम् धर्मस्य यमस्य धाम गृहं धर्मधाम । 'अनन्तमित्यधिकारे वा नपुंसकम्' इत्यनेन सूत्रेण अनन्तोऽयं निपातः । ननु यद्धर्मधाम यममन्दिरं तत् अदुरीहितव्यवहारं दुश्चेष्टिताचाररहितं कथं भवति । विरुद्धमेतत् । परिह्रियते—धर्मस्य दानादेर्धाम धर्मधाम अत एव दुरीहितव्यवहाररहितं पापव्यवहाररहितमिति स्वच्छम् । पुनः कथंभूतं राजसदनम् । पुण्यजनावासमिवाप्यराक्षसभावम् । ननु यत् पुण्यजनावासं पुण्यजनानां राक्षसानामावासो यत्र तत् पुण्यजनावासं तदराक्षसपदार्थैरहितं कथं भवति । विरुद्धमेतत् । परिह्रियते—पुण्यजनानां पुण्यपवित्रलोकानां आवासो यत्र तत्पुण्यजनावासं अत एवाराक्षसभावं अदुष्टपरिणामलोकसहितं इति स्वच्छम् । पुनः कथंभूतं राजसदनम् । प्रचेतःपस्त्यमिवाप्यजडाशयम् । ..........................

वातोदवसितमिवाप्यचपलनायकम्, धनदधिष्ण्यमिवाप्यस्थाणुपरिगतम्, शंभुशरणमिवाप्यव्यालावलीढम्, ब्रध्नसौधमिवाप्यनेकरथम्, चन्द्रमन्दिरमिवाप्यमृदुप्रतापम्, हरिगेहमिवाप्यहिरण्यकशिपुनाशम्, नागेशनिवासमिवाप्यद्विजिह्वपरिजनम्, वनदेवतानिवासमिवाप्यकुरङ्गम्,

---

..................................................................................................................

.............................................................................................................. ।

पुनः कथंभूतं राजसदनम्। वातोदवसितमिवाप्यचपलनायकम्। ननु यत् वातोदवसितं वायुमन्दिरं तदचपलनायकं स्थिरस्वामिकं कथं भवति। विरुद्धमेतत्। परिह्रियते—वातावराणां विशिष्टानां अतोदः अपीडनम्। शिष्टप्रतिपालनमित्यर्थः। तेन अव समन्तात् सितं बद्धसंयुक्तमातोदवसितम्। 'अवाप्योरल्लोपः' इति वचनात् अवशब्दस्य अकारलोपः। तथा चोक्तम्—'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हलन्तानां यथा वाचा निशा दिशा॥' वशब्देन विशिष्टं कथं लभ्यते—इति चेत्, तदुक्तं विश्वप्रकाशे—'वो दन्त्योष्ठ्योऽपि वरुणे वारुणे वरि······। शोषणे पचने सन्धे वासे वृन्दे च वारिधौ॥ वदने वदनेवादवदनाय च कीर्तितः॥'(?) अत एव अचपलनायकं अचपलनायकाः परधनकलत्रग्रहणरहिता नायकाः सामन्तादयो यत्र तदचपलनायकमिति स्वच्छम्। पुनः कथंभूतं राजसदनम्। धनदधिष्ण्यमिवाप्यस्थाणुपरिगतम्। ननु यत् धनदधिष्ण्यं कुबेरमन्दिरं तत् अस्थाणुपरिगतं रुद्ररहितं कथं भवति यस्य रुद्रस्य मित्रत्वात्। विरुद्धमेतत्। परिह्रियते—धनदानां दातॄणां वातानां धिष्ण्यं गृहं स्थाणूनां स्कन्धावशेषतरूणां कीलकानां अपरिगतं रहितमिति स्वच्छम्। पुनः कथंभूतं राजसदनम्। शंभुशरणमिवाप्यव्यालावलीढम्। ननु यत् शंभुशरणं रुद्रमन्दिरं तत् अव्यालावलीढं सर्पैरस्पृष्टं कथं भवति। इदं विरुद्धम्। परिह्रियते—शंभूनां सुखोत्पादकानां शरणं स्थानम्। 'शं भवत्यस्मात्' इति निरुक्ते। अव्यालावलीढं न व्यालैर्दुष्टपुरुषैरवलीढं स्पृष्टमव्यालावलीढमिति स्वच्छम्। पुनः कथंभूतं राजसदनम्। ब्रध्नसौधमिवाप्यनेकरथम्। ननु यत् ब्रध्नसौधं सूर्यमन्दिरं भवति तदनेकरथं कथं भवति सूर्यस्यैकरथत्वात्। विरुद्धमेतत्। परिह्रियते—ब्रध्नसौधस्य अत्युन्नतत्वात् समीपवर्तीनि सौधानि सुधोज्ज्वलानि गृहाणि यत्र तद्ब्रध्नसौधं अनेके बहवो रथा यत्र तदनेकरथमिति स्वच्छम्। पुनः कथंभूतं राजसदनम्। चन्द्रमन्दिरमिवाप्यमृदुप्रतापम्। ननु यत् चन्द्रमन्दिरं शशाङ्कगृहं तदमृदुप्रतापं तीव्रप्रतापं कथं भवति। इदमपि विरुद्धं परिह्रियते—चन्द्रमन्दिरं अतिसुगन्धत्वाच्च अमृदुप्रतापं अमृदूनां तीक्ष्णानां हिंसकानां प्रकृष्टतापः संतापः कदर्थनं यत्र तदमृदुप्रतापम्। उक्तं च—'अतीक्ष्णं कोमलं मृदु'। पुनः कथंभूतं राजसदनम्। हरिगेहमिवाप्यहिरण्यकशिपुनाशम्। ननु यत् हरिगेहं नारायणगृहं तद्धिरण्यकशिपुनामदैत्यस्य बलपितुर्नाशरहितं कथं भवति। इति विरुद्धं नामैतत्। परिह्रियते—हिर-

पताकितभ्रूः स्मितसौधकान्तिरालोलनेत्राम्बुरुहोपहारा ।
एषाङ्गनाविभ्रमदर्भिताङ्गी यागावनेः संवदतीव लक्ष्मीम् ॥ २४० ॥
इयं विलोलालकचामरश्रीर्नितम्बसिंहासनमण्डिता च ।
मम द्वितीयं कुचकुम्भशोभा सौभाग्यसाम्राज्यमिवादधाति ॥ २४१ ॥

---

व्यस्य सुवर्णस्य कशिपोर्वर्णस्य कशिपोर्वस्त्रभोजनद्वयस्य नाशरहितमिति स्पष्टम् । तथा चोक्तम्—'वस्त्रे च भोजने चैव तद्द्वयोः कशिपुर्मतः' इति वचनात् । पुनः कथंभूतं राजसदनम् । नागेशनिवासमिवाप्यद्विजिह्वपरिजनम् । ननु यन्नागेशनिवासं नागराजभवनं तत् अद्विजिह्वानां सर्पाणां परिजनरहितं कथं भवति । इति विरुद्धम् । परिह्रियते—नागेशानां गजेन्द्राणां निवासं द्विजिह्वानां दुर्जनानां निवासं लण्ठालुञ्चनलम्पटानां परिजनरहितमिति स्वच्छम् । पुनः कथंभूतं राजसदनम् । वनदेवतानिवासमिवाप्यकुरङ्गम् । ननु यत् वनदेवतानिवासं तदकुरङ्गं मृगरहितं कथं भवति । विरुद्धमेतत् । परिह्रियते—वनस्य अमृतस्य प्रियोदकदेवतानां स्वर्गिणां या लक्ष्मीस्तयोर्निवासमकुरङ्गं च अविद्यमानः कुत्सितो रङ्गः काचपच्यं यत्र तदकुरङ्गमिति स्पष्टम् । उपमालंकारो विरोधाभासालंकारश्च ॥

**पताकितभ्रूरित्यादि** । एषा पुरी यागावनेर्यागभूमेः लक्ष्मीं शोभां संवदतीव कथयतीव । एषा कथंभूता । पताकितभ्रूः पताका संजाता यस्याः सा पताकिता । पताकीकृताः स्त्रीणां भ्रुवो यस्याः सा पताकितभ्रूः । यथा यागभूमिः पताकिता भवति । पुनः कथंभूता एषा नगरी । स्मितसौधकान्तिः स्मितमीषद्धासः सौधकान्तिर्यागमण्डपशोभा यस्याः सा स्मितसौधकान्तिः । यथा यागमण्डपभूमिः चूर्णधवलिता भवति । पुनः कथंभूता । आलोलनेत्राम्बुरुहोपहारा आलोलानि चपलानि नेत्राणि स्त्रीणां लोचनानि तान्येव अम्बुरुहाणि कमलानि तेषां उपहारः पूजा यस्यां सा आलोलनेत्राम्बुरुहोपहारा । यथा यागभूमिः कमलसहिता भवति । पुनः कथंभूता एषा अङ्गनाविभ्रमदर्भिताङ्गी अङ्गनानां स्त्रीणां विभ्रमा भ्रूक्षेपास्तैर्दर्भितं संयुक्तमङ्गं शरीरं यस्या नगर्याः सा तथोक्ता यथा यागभूमिर्दर्भसंयुक्ता भवति । उपमालंकारः ॥

**इयमित्यादि** । इयं नगरी मम यशोधरमहाराजस्य द्वितीयमपरं सौभाग्यसाम्राज्यं आदधातीव धरतीव । कथंभूता इयम् । विलोलालकचामरश्रीः विलोलाश्चपला ये अलकाश्चूर्णकुन्तलास्त एव चामरश्रीर्यस्याः सा तथोक्ता साम्राज्येऽपि चपलबालचामरशोभा भवन्ति । पुनः कथंभूता इयम् । नितम्बसिंहासनमण्डिता स्त्रीणां नितम्बान्येव सिंहासनानि सिंहविष्टराणि तैर्मण्डिता शोभिता । साम्राज्यमपि सिंहासनमण्डितं भवति । पुनः कथंभूता इयम् । कुचकुम्भशोभा कुचकुम्भानां कुचकलशानां शोभा यस्या सा कुचकुम्भशोभा । साम्राज्यमपि पूर्णकुम्भशोभितं भवति । उपमालंकारः ॥

एवमपरासामपि मदालोकनोत्सुकमनसां निजविभ्रमापहसितवासवीयावासवासितविलासानामनङ्गाश्रमकामधेनूनामिव मत्तकामिनीनां स्मरशरनिशितफलिप्रकाशिभिः,

अपि च क्वचिदशेषनिशितशास्त्रशेमुषीश्वरविचारगोचरीक्रियमाणसकलजगद्व्यवहारं धर्मराजनगरमिव, क्वचिद्द्विजन्मजनोदाह्रियमाणनिगमार्थं

---

एवममुना प्रकारेण तत् जगत्प्रसिद्धं त्रिभुवनतिलकं नाम राजसदनं आसादयांबभूव अहं प्रापयांबभूव। प्राप्तवानित्यर्थः। अहं किं कुर्वन् सन् त्रिभुवनतिलकं नाम राजसदनं प्रापयांबभूव। अपरासामपि अन्यासां न केवलं नगरस्त्रीणां अपि तु अपरासामपि मत्तकामिनीनां रूपयौवनसंपन्ननारीणां अपाङ्गावलोकितैः कटाक्षवीक्षितैः पुनरुक्तेन द्विगुणीकृतेनेव लाजाञ्जलिवर्षेण आर्द्रतण्डुलाञ्जलिवर्षेण आत्मानं फलार्थिनो लोकस्य कुसुमितमिव कुर्वन् पुष्पितमिव विदधन्। कथंभूतानां मत्तकामिनीनाम्। मदालोकनोत्सुकमनसां समवीक्षणोत्तालहृदयानाम्। पुनः कथंभूतानां मत्तकामिनीनाम्। निजविभ्रमापहसितवासवीयावासवासितविलासानां निजैः स्वकीयैर्विभ्रमैः भ्रूक्षेपैरपहसिताः तिरस्कृताः वासवीयावासवासितानां स्वर्गस्त्रीणां विलासा लोचनशोभा याभिर्मत्तकामिनीभिस्तथोक्तास्तासाम्। वासवस्य इन्द्रस्य अयं वासवीयः स चासावावासः स्वर्गलोकस्तस्य संबन्धिन्यो या वासिताः स्त्रियो देवाङ्गनास्तासां विलासानां विग्रहः। पुनः कथंभूतानाम्। अनङ्गाश्रमकामधेनूनामिव कंदर्पगृहकामधेनूनामिव। कामदायकानामित्यर्थः। कथंभूतैरपाङ्गावलोकितैः स्मरशरनिशितफलिप्रकाशिभिः स्मरस्य कंदर्पस्य ये शरा बाणास्तेषां निशितानि तीक्ष्णानि फलीनि भल्लयस्तेषां प्रकाशी निर्मलत्वात् कर्पूरमिव वर्तते॥

पुनरपि कथंभूतं राजसदनम्। अपि च अस्ति कश्चिद्विशेषः। क्वचित्कस्मिंश्चित्स्थाने अशेषनिशितशास्त्रशेमुषीश्वरविचारगोचरीक्रियमाणसकलजगद्व्यवहारम् अशेषाणि समग्राणि निशितानि सूक्ष्मतत्त्वकथनानि तानि च शास्त्राणि तेषु शेमुषी 'शे मोहं मुष्णातीति शेमुषी बुद्धिस्तस्या ईश्वराः स्वामिनो विद्वांसस्तेषां विचारेषु गोचरीक्रियमाणो गम्यमानः सकलस्य समग्रस्य जगतः संसारस्य व्यवहार उपचारो यत्र राजमन्दिरे तत्तथोक्तम्। किमिव। धर्मराजनगरमिव यमपत्तनमिव। यथा धर्मराजनगरे निशितानां तीक्ष्णानां जीवग्राहकाणां शास्त्राणां शेमुषीश्वरा बुद्धिचतुरा यमनियमयोगिनस्तेषां विचारेषु गोचरीक्रियमाणसकलजगद्व्यवहारो भवति अयं मृतः, अयं मार्यमाणो वर्तते अयं मरिष्यति, इति विचारो यमनगरे वर्तते। पुनः कथंभूतं राजसदनम्। क्वचित्कस्मिंश्चित्स्थाने द्विजन्मजनोदाह्रियमाणनिगमार्थम् द्विजन्मजनैर्ब्राह्मणलोकैरुदाह्रियमाणो निगमानां नगराणां ग्रामादीनां अर्थ उद्गृहीतं धनं यत्र राजमन्दिरे

ब्रह्मालयमिव, क्वचिद्भरतसुताभिनीयमानेतिवृत्तं तण्डुभवनमिव, क्वचिद्बुधप्रधानविधीयमानतत्त्वोपदेशं समवसरणमिव, क्वचिद्दभ्यमानसागरगणमरुणकरस्यन्दनमिव, क्वचिद्विनीयमानसारङ्गसङ्घमङ्गराजनिकेतनमिव, क्वचिदासन्नास्मदीयदर्शनक्षुभितसर्वकर्मीणपरिवारमनङ्गमित्रोदयप्रमोदं रत्नाकरमिव, क्वचिच्च 'हले व्यलीकविलासव्यसनिनि वसन्तिके, कृतं कितवकिंवदन्तीभिः।

---

तत्तथोक्तम्। किमिव। ब्रह्मालयमिव विश्वसृग्मन्दिरमिव। यथा ब्रह्मालयो मन्दिरं ब्राह्मणैर्व्यावर्ण्यमानो निगमार्थो भवति। पुनः कथंभूतं राजसदनम्। क्वचित्कस्मिंश्चित्स्थाने भरतसुताभिनीयमानेतिवृत्तम् भरतसुतैर्नटाचार्यैः अभिनीयमानं उच्यमानं इतिवृत्तं भरतशास्त्रं यत्र तत्तथोक्तम्। किमिव। तण्डुभवनमिव तण्डुर्नाम शंकरस्य नृत्योपदेशं प्रति प्रथमशिष्यस्तस्य भवनमिव। यथा तण्डुभवनं भरतसुतैर्नर्तकाचार्यैरभिनीयमानं विजृम्भ्यमाणं निवृत्तं भवति। पुनः कथंभूतं राजसदनम्। क्वचित्कस्मिंश्चित्स्थाने बुधप्रधानविधीयमानतत्त्वोपदेशम् बुधानां विदुषां मध्ये ये प्रधाना मुख्यविद्वांसस्तैर्विधीयमानः क्रियमाणः तत्त्वस्य वाद्यभेदस्य उपदेशं स्वरूपं यत्र तत्तथोक्तम्। किमिव। समवसरणमिव। यथा समवसरणं तीर्थंकरसभास्थानं जीवादितत्त्वोपदेशसंयुक्तं भवति। पुनः कथंभूतं राजसदनम्। क्वचित्कस्मिंश्चित्स्थाने दभ्यमानसागरगणम् दभ्यमानः खेद्यमानः सागराणां चतुरङ्गमानां गणः समूहो यत्र तत्तथोक्तम्। किमिव। अरुणकरस्यन्दनमिव सूर्यरथमिव। पुनः कथंभूतं राजसदनम्। क्वचिद्विनीयमानसारङ्गसङ्घम् क्वचित्कस्मिंश्चित्स्थाने विनीयमानः शिक्ष्यमाणः सारङ्गाणां हस्तिनां सङ्घः समूहो यत्र तत्तथोक्तम्। किमिव। अङ्गराजनिकेतनमिव अङ्गराजस्य गजशास्त्राचार्यस्य निकेतनमिव। पुनः कथंभूतं राजसदनम्। क्वचिदासन्नास्मदीयदर्शनक्षुभितसर्वकर्मीणपरिवारम् क्वचित्कस्मिंश्चित्स्थाने आसन्नं समीपवर्ति यदस्मदीयदर्शनं अस्माकमीक्षणं तेन क्षुभितः संचलितः सर्वकर्मीणानां विश्वकर्मकराणां परिवारः परिच्छेदो यत्र तत्तथोक्तम्। कमिव। रत्नाकरमिव समुद्रमिव। कथंभूतं रत्नाकरम्। अनङ्गमित्रोदयप्रमोदम् अनङ्गस्य कंदर्पस्य मित्रं चन्द्रमास्तस्य उदयेन उद्गमनेन प्रमोदो हर्षो यत्र रत्नाकरे स तथा तम्। उत्कल्लोलसमुद्रमिवेत्यर्थः। पुनः कथंभूतं राजसदनम्। क्वचित्कस्मिंश्चित्स्थाने जरतीभिः वृद्धाभिः स्त्रीभिः इत्यमुना प्रकारेण व्याकुलितनिखिलपरिजनं व्याकुलितः विशेषेण आ समन्तात् आकुलितो विह्वलीकृतो निखिलः समग्रः परिजनः परिवारो यत्र तत्तथोक्तम्। कथंभूताभिर्जरतीभिः मातृव्यञ्जनाभिः सपञ्चाशत्काभिः स्त्रीभिः। पञ्चाशद्वर्षाणामुपरि वर्तमानाभिरित्यर्थः। इतीति किम्। हे हले हे सखि हे व्यलीकविलासव्यसनिनि निष्फलभ्रूङ्गारसिके वसन्तिके वसन्तिकानाम्नि,

अविलम्बं यतस्व बकुलमुकुलावलीविरचनेषु। अङ्गो[1] निरर्गलगते लवङ्गि, मा गाः सखीभिः सह सङ्गम्। अकालक्षेपं दक्षस्व रङ्गवल्लिप्रदानेषु। अपि प्रमादिनि मदने, किमद्यापि निद्रायसि। द्रुतमाद्रियस्वारतीयप्रगुणतायाम्। अयि कुरङ्गि, किमकाण्डमितस्ततो हिण्डसे। अचिराय त्वरस्व देवस्याङ्गरागसंपादनेषु। अयि वाचाललपने मालति, एष खलु समीपवर्ती देवः। तल्लघु लङ्घस्व भद्रासनप्रसाधनेषु। अये हसितदोहदहृदये कलहंसि, किं नाकर्णयसि सविधतरं तूरशब्दम्, यतो न तूर्णं सज्जसे ताम्बूलकपिलिकायाम्। अहे अल-

---

कितवकिंवदन्तीभिः कृतं द्यूतकारवार्ताभिः पूर्णम्। अविलम्बं शीघ्रं बकुलमुकुलावलीविरचनेषु मञ्जुलपुष्पकलिकाश्रेणिविरचनेषु मालाकरणेषु यतस्व यत्नं कुरुष्व। अङ्गो[1] निरर्गलगते लवङ्गि, मा गाः सखिभिः सह सङ्गम्। अकालक्षेपं दक्षस्व रङ्गवल्लिप्रदानेषु। अङ्गो इति ओकारान्तोऽव्ययः संबोधनार्थः। अङ्गो हे लवङ्गिनामिके अन्तःपुरसुन्दरि निरर्गलगते अनिषिद्धगमने स्वच्छन्दागमने सखीभिः सह आलीभिः सङ्गं मेलापकं मा गा मा त्वं गच्छ। अकालक्षेपं लघुतरं रङ्गवल्लिप्रदानेषु चतुष्कपूरणेषु दक्षस्व शीघ्रा भव। 'दक्ष शीघ्रार्थे च' इति धातोः प्रयोगात् लदावात्मनेपदित्वात्। अयि प्रमादिनि मदने, किमद्यापि निद्रायसि। द्रुतमाद्रियस्वारतीयप्रगुणतायाम्। अयि इति इकारान्तमव्ययं संबोधनार्थम्। हे प्रमादिनि अयि मदने हे मदननामिके अन्तःपुरसुन्दरि, अद्यापि इदानीमपि किं निद्रायसि किमिति अतिशयेन निद्रां करोषि। 'द्रा स्वप्ने' इति धातोः प्रयोगात्। आरतीयप्रगुणतायां आरार्तिकसज्जनक्रियायां द्रुतं शीघ्रमाद्रियस्व। 'दृङ् आदरे' तुदादेर्धातोः प्रयोगात्। अयि कुरङ्गि, किमकाण्डमितस्ततो हिण्डसे। अचिराय त्वरस्व देवस्याङ्गरागसंपादनेषु। अयि कुरङ्गि हे कुरङ्गिनामिके अकाण्डमप्रस्तावं इतस्ततो यत्र तत्र किं हिण्डसे किमर्थं पर्यटसि। 'हिडि गत्यनादरयोः' इति धातोः प्रयोगात्। देवस्य यशोधरमहाराजस्य अङ्गरागसंपादनेषु कर्पूरागुरुकस्तूरिकुङ्कुमकङ्कोलादिद्रवविलेपनकरणेषु अचिराय शीघ्रतरं त्वरस्व त्वरिता भव। 'ञित्वरा संभ्रमे' इति धातोः प्रयोगात्। अयि वाचाललपने मालति, एष खलु समीपवर्ती देवः। तल्लघु लङ्घस्व भद्रासनप्रसाधनेषु। अयि इति इकारान्तमव्ययं संबोधनार्थे वर्तते। हे वाचाललपने बहुजल्पवक्त्रे मालति मालतीनामिके अन्तःपुरसुन्दरि, एष प्रत्यक्षीभूतो देवः श्रीयशोधरमहाराजः। खल्विति वाक्यालंकारे। समीपवर्ती वर्तते। तत्तस्मात्कारणात् भद्रासनप्रसाधनेषु सिंहासनप्रतिकर्मसु लघु शीघ्रं लङ्घस्व समर्था भव। 'लघि सामर्थ्ये च' इति धातोः प्रयोगात्। अये हसितदोहदहृदये कलहंसि किं नाकर्णयसि सविधतरं तूर्यशब्दं यतो न तूर्णं सज्जसे ताम्बूलकपिलिकायां अये इति एकारान्तमव्ययं संबोधनार्थे

---

1. आहो-उताहो-शब्दवन्निपातसमुदायोऽयम्.

कवल्लरीभङ्गदुर्विदग्धे मधुकरि, किं मुधा विधमस्यात्मानम् । अद्धा प्रसाधय प्रकीर्णकानि । वर्षधर, अपरस प्रतूर्णमेकतः । किरात, निकेत निजनिवासे निभृतम् । कुब्ज, न्युब्ज शुभाशयविशिष्टासु चेष्टासु । वामन, आमन, सरभसरसक्रोडाः क्रीडाः । सौविदल्ल, सोल्लासमीहस्व निजनियोगेषु । शुकपाक[ल], सोत्कण्ठमुत्कण्ठस्व भोगावलीपाठेषु । सारिके, प्रमोदाधिकं कीर्तय मङ्गलानि । हंसि, कुतो न हंसि रसितुं निराबाधावकाशम् । सारस, कस

---

वर्तते । हे हसितदोहदहृदये हसितमनोरथमानसे कलहंसि राजहंसीति नामिके, सविधतरं निकटतरं तूर्यशब्दं वाद्यध्वनिं किं नाकर्णयसि किं त्वं न शृणोषि, यतो यस्मात् कारणात् ताम्बूलकपिलिकायां ताम्बूलस्थगिकायां तूर्णं शीघ्रं न सज्जसे प्रगुणा न भवसि । 'सज्ज प्रागुण्ये' इति धातोः प्रयोगात् । अहे अलकवल्लरीभङ्गदुर्विदग्धे मधुकरि, किं मुधा विधमस्यात्मानम् । अद्धा प्रसाधय प्रकीर्णकानि वर्षधरापसर प्रतूर्णमेकतः मधुकरिनामिके । कथंभूते । अलकवल्लरीभङ्गदुर्विदग्धे अलकानां केशानां वल्लरीणां मञ्जरीणां भङ्गे मार्गरचनायां दुर्विदग्धा तस्याः संबोधनम् अयि अलकवल्लरीभङ्गदुर्विदग्धे, किमर्थं मुधा निरर्थकं आत्मानं निजस्वरूपं विधमसि विडम्बयसि । अद्धा झटिति प्रकीर्णकानि चामराणि प्रसाधय सज्जीकुरु । वर्षधर, अपसर प्रतूर्णमेकतः । हे वर्षधर हे नपुंसक, प्रतूर्णं शीघ्रं एकत एकस्मिन् पार्श्वे अपसर दूरं गच्छ । देवस्यापशकुनं भविष्यतीति कारणात् । किरात, निकेत निजनिवासे निभृतम् । रे किरात रे भिल्ल, निजनिवासे आत्मगृहे निभृतं प्रश्रितः निकेत निवासं कुरु । 'कित निवासे रोगापनयने च' इति धातोः प्रयोगात् । तद्दर्शनेन देवस्यापशकुनं भविष्यतीति भावः । कुब्ज न्युब्ज शुभाशयविशिष्टासु चेष्टासु । अरे कुब्ज, त्वं शुभाशयविशिष्टासु शुभपरिणामशोभनासु चेष्टासु न्युब्ज ऋजू भव । 'उब्ज आर्जवे' इति धातोः प्रयोगात् । वामन, आमन सरभसरसक्रोडाः क्रीडाः । अरे वामन, सरभसरसक्रोडाः उत्सुकरसप्रधानाः क्रीडाः पलायनान्वितं आमन रचय । वामन, भवद्दर्शनेन देवस्यापशकुनं भविष्यतीति भावः । सौविदल्ल, सोल्लासमीहस्व निजनियोगेषु । सौविदल्ल हे स्थापत्य, सोल्लासं सोत्कण्ठं यथा भवत्येवं निजनियोगेषु स्वकीयाधिकारेषु अन्तःपुररक्षासु ईहस्व चेष्टस्व । अन्तःपुरमध्ये प्रविश्य तिष्ठ । देवस्य तव दर्शनं मा कारय । अपशकुनं भविष्यतीति भावः । शुकपाक[ल],सोत्कण्ठमुत्कण्ठस्व भोगावलीपाठेषु । हे शुकपाक[ल] कीरपुन् [पूः], भोगावलीपाठेषु सुरतक्रीडावचनपठनेषु सोत्कण्ठं सोल्लासं यथा भवत्येवं उत्कण्ठस्व उद्यतो भव । सारिके, प्रमोदाधिकं कीर्तय मङ्गलानि । हे सारिके पीतपादे, प्रमोदाधिकं यथा भवत्येवं मङ्गलानि स्तुतिवचनानि कीर्तय संजल्पय । हंसि, कुतो न हंसि रसितुं निराबाधावकाशम् । हे हंसि हे वारले हंसकामिनि, कुतः कस्मात् कारणात् रसितुं शब्दयितुं निराबाधावकाशं

तारस्वरः प्रदक्षिणप्रचारः। कुरङ्ग, रङ्गापसव्यं द्विपिनां स्थाने विजयकुञ्जर, उदाहर शुभोचितानीङ्गितानि। जयहय, सुघोषं ह्रेषस्व।' इति मातृव्यञ्जनाभिर्जरतीभिर्व्याकुलितनिखिलपरिजनं तत्रिभुवनतिलकं नाम समन्ततस्तुङ्गतमङ्गशृङ्गोत्सङ्गसंगताङ्गनापाङ्गप्रसरपुनरुक्तसितपताकावसनं राजसदनमासादयांबभूव कीर्तिसाहारनामा वैतालिकः—

लक्ष्मीं बिभ्रद्ध्वजौघैः क्वचिदनिलबलोल्लोलवीचेर्द्युनद्या-
श्छायां पुष्यत्सुमेरोः क्वचिदरुणतरैः स्वर्णकुम्भांशुजालैः।
कान्तिं कुर्वत्सुधाब्धेः क्वचिदतिसितिमद्योतिभिर्भित्तिभागैः
शोभां श्लिष्यद्धिमाद्रेः क्वचिदिव गगनाभोगभाग्भिश्च कूटैः ॥२४२॥

---

बाधारहितं देशं न हंसि न गच्छसि। सारस, कस तारस्वरः प्रदक्षिणप्रचारः। हे सारस हे विलीन दीर्घजङ्घ, तारस्वरः सन् उच्चैस्तरशब्दः सन् प्रदक्षिणप्रचारः सन् देवस्य दक्षिणकरपार्श्वे भूत्वा कस गच्छ। कुरङ्ग, रङ्गापसव्यं द्विपिनां स्थाने। हे कुरङ्ग हे मृग, अपसव्यं देवस्य वामपार्श्वे द्विपिनां स्थाने मृगयार्थमृगाणां स्थाने रङ्ग त्वं गच्छ। तथा चोक्तम्—'एकोपि यदि वा त्रीणि पञ्च सप्त नवापि वा। वामपार्श्वेषु गच्छन्तो मृगाः सर्वे शुभावहाः॥' विजयकुञ्जर, उदाहर शुभोचितानीङ्गितानि। हे विजयकुञ्जर हे गजयूथनाथ गज, शुभोचितानि शुभशकुनयोग्यानि इङ्गितानि चेष्टितानि उदाहर त्वं दर्शय। हे जयहय, सुघोषं ह्रेषस्व। हे जयहय जात्यश्व, सुघोषं सजलजलदसमुद्रध्वनिं यथा भवत्येवं ह्रेषस्व शब्दं कुरुष्व। पुनः कथंभूतं राजसदनम्। समन्ततः सर्वत्र तुङ्गतमङ्गशृङ्गोत्सङ्गसंगताङ्गनापाङ्गप्रसरपुनरुक्तसितपताकावसनम् तुङ्ग उच्चैस्तरो यस्तमङ्ग उपरितनभूमिका तस्य शृङ्गोत्सङ्गेषु संगता मिलिता या अङ्गनाः नवयौवनाः स्त्रियस्तासां अपाङ्गप्रसरैर्लोचनप्रान्तवितरणैः पुनरुक्तानि द्विगुणीकृतानि सितपताकानां उज्ज्वलध्वजानां वसनानि वस्त्राणि यस्मिन् राजसदने तत्तथोक्तम्। कीर्तिसाहारनामा वैतालिकः कीर्तिसाहारनामा वैतालिको बोधकरो भट्टः अत्रावसरे वृत्तत्रयं पपाठ।

तथाहि—लक्ष्मीं बिभ्रदित्यादि। हे अवनीपते हे राजन्, इदं प्रत्यक्षीभूतं भवद्भवनं भवतः प्रासादो विभाति विशेषेण शोभते। भवनं किं कुर्वत्। क्वचित् कस्मिंश्चित् स्थाने ध्वजौघैः कृत्वा द्युनद्याः गङ्गायाः लक्ष्मीं शोभां बिभ्रत् धरत्। कथंभूतायाः द्युनद्याः। अनिलबलोल्लोलवीचेः अनिलबलेन वातबलेन उल्लोला उच्छलन्त्यो वीचयो लहर्यो यस्याः सा अनिलबलोल्लोलवीचिस्तस्याः भवनम्। भवनं पुनः किं कुर्वत्। क्वचित्कस्मिंश्चित्स्थाने अरुणतरैरव्यक्तरागैः स्वर्णकुम्भांशुजालैः कनककलशकिरणसमूहैः सुमेरोः सुरालयस्य छायां शोभां पुष्यत् पुष्टिं नयत्। भवनं पुनः किं कुर्वत्। क्वचित्कस्मिंश्चित्स्थाने

श्रीलीलाकमलं तवावनिपते साम्राज्यचिह्नं मह-
त्कीर्त्युत्पत्तिनिकेतनं क्षितिवधूविश्रामधाम स्वयम् ।
लक्ष्मीविभ्रमदर्पणं कुलगृहं राज्याधिदेव्याः पुनः
क्रीडास्थानमिदं विभाति भवनं वाग्देवताया इव ॥ २४३ ॥

वशीकृतमहीपालः श्रीलीलाकमलाकरः ।
चिरमत्र स्थितः सौधे चतुरन्तामव क्षितिम् ॥ २४४ ॥

वित्तेश त्वरतां पुरः सुरतरूद्यानैः समं मातले
तूर्णं सज्जय सामजं कुरु गुरो यानोचितां वाहिनीम् ।
आसीदित्थमशेषकल्मषमुषि प्रादुर्भवत्केवले
यस्मिन्स्वर्गपतेर्महोत्सवविधिः सोऽव्यात्त्रिलोकीं जिनः ॥२४५॥

---

अतिसितिमद्योतिभिः अत्युज्ज्वलतेजोभिः भित्तिभागैः कुड्यप्रदेशैः कृत्वा सुधाब्धेः क्षीरसमुद्रस्य कान्तिं शोभां कुर्वत् रचयत् । भवनं पुनः किं कुर्वत् । क्वचित् कस्मिंश्चित् स्थाने गगनाभोगभाग्भिः आकाशविस्तारभजनशीलैः कूटैः शिखरैः कृत्वा हिमाद्रेः हिमाचलस्य शोभामुपमां श्लिष्यत् । उपमासमुच्चयालंकारः ॥

**श्रीलीलाकमलमित्यादि** । पुनः कथंभूतम् । श्रीलीलाकमलं लक्ष्मीक्रीडापङ्कजम् । पुनः कथंभूतम् । साम्राज्यचिह्नं सकलस्य राजस्याभिज्ञानम् । कथंभूतं साम्राज्यचिह्नम् । महत् गुरुतरम् । अपरं कथंभूतम् । कीर्त्युत्पत्तिनिकेतनं कीर्तेरुत्पत्तेः जन्मनो निकेतनं गृहम् । पुनः कथंभूतम् । क्षितिवधूविश्रामधाम क्षितिरेव वधूर्वनिता तस्या विश्रामधाम निवासगृहम् । कथम् । स्वयं स्वभावेन । पुनः कथंभूतं भवनम् । लक्ष्मीविभ्रमदर्पणम् लक्ष्म्याः विभ्रमदर्पणं लीलामुकुरम् । अपरं कथंभूतम् । राज्याधिदेव्याः । पुनः इवार्थे । राज्याधिष्ठातृदेवतायाः कुलगृहं कुलमन्दिरमिव । अपरं कथंभूतम् । वाग्देवतायाः सरस्वत्याः क्रीडास्थानमिव रमणनिवासमिव । रूपकोपमालंकारः ॥

**वशीकृतमहीपाल इत्यादि** । हे राजन्, अत्र अस्मिन् सौधे राजगृहे स्थितो निविष्टः सन् चिरं दीर्घकालं चतुरन्तां चतुःसमुद्रपर्यन्तां क्षितिं पृथ्वीं अव प्रतिपालय । कथंभूतस्त्वम् । वशीकृतमहीपालः वशीकृता आज्ञामानीता महीपालाः राजानो येन सः । पुनः कथंभूतस्त्वम् । श्रीलीलाकमलाकरः श्रियो लक्ष्म्याः लीलायाः क्रीडायाः कमलाकरः कमलवनसदृशः । रूपकातिशयालंकारः ॥

**वित्तेशेत्यादि** । अथेदानीं आश्वासान्ते मङ्गलं करोति—स जगत्प्रसिद्धो जिनः श्रीमद्भगवदर्हन् वीतरागः त्रिलोकीं त्रयाणां लोकानां समाहारः त्रिलोकी तां त्रिलोकीं अव्यात् रक्षतु विघ्नानां विनाशं करोतु श्रेयःसंप्राप्तिं च करोतु । स जिनः कः । यस्मिन् प्रादुर्भ-

कर्णाञ्जलिपुटैः पातुं चेतः सूक्तामृते यदि।
श्रूयतां सोमदेवस्य नव्याः काव्योक्तियुक्तयः॥ २४६॥

इति सकलतार्किकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योनवद्यगद्यपद्यविद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महाकाव्ये पट्टबन्धोत्सवो नाम द्वितीय आश्वासः समाप्तः।

---

त्केवले चतुर्थकल्याणावसरे स्वर्गपतेः सौधर्मेन्द्रस्य इत्थममुना प्रकारेण महोत्सवविधिः महाहर्षविधिरासीद्बभूव। यस्मिन् कथंभूते। अशेषकल्मषमुषि अशेषाणि समग्राणि कल्मषाणि पापानि ब्रह्महत्यादीनि त्रिषष्टिप्रकृतिलक्षणानि वा मुष्णाति निर्मूलकाषङ्कषतीति अशेषकल्मषमुट् तस्मिन्नशेषकल्मषमुषि। इत्थं कथमिति चेत् हे वित्तेश हे धनद, सुरतरूद्यानैः समं कल्पवृक्षवनैः सार्धं पुरोऽग्रतः त्वरतां संभ्रमेण त्वं गच्छ। हे मातले हे शक्रसारथे, तूर्णं शीघ्रं सामजमैरावणनाम गजं सज्जय प्रयाणयोग्यं कुरु। हे गुरो हे बृहस्पते मन्त्रिन्, वाहिनीं सुरसेनां यानोचितां गमनयोग्यां कुरु त्वं विधेहि। अतिशयालंकारः॥

कर्णाञ्जलिपुटैरित्यादि। हे विद्वन् यदि चेत् सूक्तामृते काव्यामृते कर्णाञ्जलिपुटैः पातुं श्रवणाञ्जलिपात्रैरास्वादितुं चेतो मनस्तव वर्तते तर्हि सोमदेवस्य सोमदेवाचार्यस्वामिनो नव्याः प्रत्यग्राः काव्योक्तियुक्तयः काव्यस्य यशस्तिलकनामेतिहासस्य उक्तीनां वचनानां युक्तयो रचनाः कर्मतापन्नाः श्रूयतां त्वया आकर्ण्यताम्। रूपकोपमालंकारः॥

इति सकलतार्किकलोकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योनवद्यगद्यपद्यविद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महाकाव्ये पट्टबन्धोत्सवो नाम द्वितीय आश्वासः॥ अस्य व्याख्यानं पूर्ववद्वेदितव्यम्॥

इति श्रीपद्मनन्दिदेवेन्द्रकीर्तिविद्यानन्दिमल्लिभूषणाभिप्रायेण भट्टारकश्रीमल्लिभूषणगुरुपरमाभीष्टगुरुभ्रात्रा गुर्जरदेशसिंहासनभट्टारकश्रीलक्ष्मीचन्द्राभिमतेन मालवदेशभट्टारकश्रीसिंहनन्दिप्रार्थनया यतिश्रीसिद्धान्तसागरव्याख्याकृतिनिमित्तं नवनवतिमहामहावादिस्याद्वादलब्धविजयेन तर्कव्याकरणाद्यनेकशास्त्ररचनाचञ्चुना सूरिश्रीश्रुतसागरेण विरचितायां यशस्तिलकचन्द्रिकाभिधानायां यशोधरमहाराजचरितमहाकाव्यटीकायां यशोधरमहाराजपट्टबन्धमहोत्सवविवरणं नाम द्वितीयाश्वासचन्द्रिका परिसमाप्ता इति शुभम्॥

---

## तृतीय आश्वासः ।

श्रीलीलाम्बुजगर्भसंभवतनुः स्वर्णाचलस्नानभू-
र्लक्ष्मीप्रार्थितसंगमोऽपि तपसः स्थानं परस्याभवत् ।
ध्यानावन्ध्यविधिः समस्तविषयं ज्योतिः परं प्राप्तवा-
न्यस्तद्धामधृतोदयश्च स जगत्पायादपायाज्जिनः ॥ १ ॥

---

अथेदानीं तृतीयस्याश्वासस्य राज्यलक्ष्मीविनोदनाम्नः प्रारम्भं कुर्वाणाः श्रीसोमदेवसूरयः आदिमङ्गलार्थं श्रीमदर्हत्परमेश्वरस्य पञ्चकल्याणगर्भितां स्तुतिं प्राहुः । शार्दूलविक्रीडितं छन्दः । **श्रीलीलेत्यादि** । स जगत्प्रसिद्धो जिनस्तीर्थंकरपरमदेवः जगत्त्रैलोक्यं अपायात् चतुर्गतिरक्षातः पायात् रक्षतु । स कः । तद्यदोर्नित्यसंवन्धत्वात् यो भगवान् जिनः श्रीलीलाम्बुजगर्भसंभवतनुः श्रियो लक्ष्म्याः लीलाम्बुजं क्रीडाकमलं तस्य गर्भे कर्णिकायां संभवा उत्पन्ना तनुः शरीरं यस्य स तथोक्तः । भगवान् किल स्वर्गावतरणकल्याणे मातुर्गर्भजां शक्तिमाधाय तत्र कमलं कृत्वा तस्य कर्णिकायां अवतरति, तत्र कमले वृद्धिं याति, पश्चान्मातुर्योनिमस्पृष्ट्वा मातुर्बाधामदत्त्वा जन्म गृह्णाति, तेन श्रीसोमदेवाचार्यः प्राह—श्रीलीलाम्बुजगर्भसंभवतनुः । यः पुनः कथंभूतः । स्वर्णाचलस्नानभूः स्वर्णाचलो मेरुपर्वतः स स्नानस्य जन्माभिषेकस्य भूर्भूमिः यस्य स स्वर्णाचलस्नानभूः । पुनः कथंभूतो यः । लक्ष्मीप्रार्थितसंगमः लक्ष्म्या साम्राज्यश्रिया प्रार्थितो याचितः संगमो मेलापको यस्य स तथोक्तः । अपिशव्दात् कोऽपि कुमारदीक्षितोऽपि भवति तत्सूचनार्थमपिशव्दो वर्तते । पुनः कथंभूतो भगवान् । परस्य उत्कृष्टस्य तपसो दीक्षायाः स्थानं निवासो अभूद्बभूव । यो भगवान् पुनः किं कृतवान् । परं ज्योतिः केवलज्ञानं प्राप्तवान् लब्धवान् । कथंभूतं परं ज्योतिः । समस्तविषयम् समस्तो लोकश्चालोकश्च विषयो गोचरो गम्यो यस्य परं ज्योतिषः तत्परं ज्योतिषः समस्तविषयम् । कथंभूतो भगवान् । ध्यानावन्ध्यविधिः ध्यानाभ्यां धर्मशुक्लध्यानाभ्यां अवन्ध्यः सकलो विधिः कर्तव्यं यस्य स ध्यानावन्ध्यविधिः । हरिहरहिरण्यगर्भादिभिर्ध्यानकृतं परं फलं न लब्धमिति भावः । पुनः कथंभूतो भगवान् । तद्धामधृतोदयः तस्मिन् जगत्प्रसिद्धे धाम्नि सर्वकर्मक्षयलक्षणे मोक्षे धृत आरोपित (उत्कृष्टो अयः) उदयः शुभावहो विधिर्येन स तद्धामधृतोदयः । चकार उक्तसमुच्चयार्थः । तेन अनन्तचतुष्टयादयो नवकेवललब्ध्यादय अनन्तगुणाः समुच्चीयन्ते । रूपकातिशयसमुच्चयालंकारः ॥

---

१. अस्पृश्येति नञ्समासघटितप्रयोगे 'अनञ्समासे' इति व्याकृतिसूत्रस्थपर्युदासत्वेन ल्यबादेशाप्राप्त्या तद्घटितप्रयोगोपादानं महच्चित्रकरम्.

लक्ष्मीपतिप्रभृतिभिः कृतपादसेवः
पायाज्जगन्ति स जयी जिनचन्द्रदेवः।
साम्यं त्रिविष्टपधृतिस्थितविक्रमस्य
दंष्ट्राधृतावनितलस्य हरेर्न यस्य ॥ २ ॥

पुनस्तदध्यास्य श्रीसरस्वतीविलासकमलाकरं राजमन्दिरमहो असमसाहसारम्भ, त्रिभुवनभवनस्तम्भ, कदाचित्समीपसमस्तलोकलोचनोन्मेषेषु

---

लक्ष्मीपतिप्रभृतिभिरित्यादि। स जगत्प्रसिद्धो जिनचन्द्रदेवः जगन्ति त्रीणि भुवनानि पायाद्रक्षतु। अनेकविषमभवगहनदुःखप्रापणहेतून् कर्मारातीन् जयन्तीति जिनाः गणधरदेवादयः। 'इणिक्कशिभ्यो णक्' इत्युणादिसूत्रेण णक्प्रत्ययेन जिनशब्दः सिद्धः। जिनानां गणधरदेवादीनां चन्द्र आह्लादको जिनचन्द्रः चासौ देवः परमाराध्यः जिनचन्द्रदेवः। कथंभूतो जिनचन्द्रदेवः। यथोक्तविशेषणविशिष्टः लक्ष्मीपतिप्रभृतिभिः कृतपादसेवः लक्ष्म्याः पतिर्लक्ष्मीपतिर्नारायणः स प्रभृतिर्मुख्यो येषां रुद्रब्रह्मादीनां ते लक्ष्मीपतिप्रभृतयस्तैर्लक्ष्मीपतिप्रभृतिभिः कृता परमधर्मानुरागेण रचिता पादयोश्चरणकमलयोः सेवा वन्दना भक्तिर्यस्य स लक्ष्मीपतिप्रभृतिभिः कृतपादसेवः। पुनः कथंभूतः। जयी जयनशीलः। स कः। यस्य जिनचन्द्रदेवस्य हरेर्नारायणस्य साम्यं तुल्यता न वर्तते। तद्धेतुगर्भितं विशेषणमाह—कथंभूतस्य यस्य। त्रिविष्टपधृतिस्थितविक्रमस्य त्रयाणां विष्टपानां लोकानां धृतौ उद्धरणे स्थित उद्धरितो विक्रमः सामर्थ्यं यस्य स तथा तस्य। कथंभूतस्य हरेः। दंष्ट्राधृतावनितलस्य दंष्ट्रया धृतं समुच्चलितमवनितलं पृथ्वीमण्डलं येन स तथा तस्य। वराहावतारेण यदा नारायणः संजातस्तदा प्रलयकालभयात् हस्ताभ्यां पृथ्वीमुद्धर्तुमसमर्थत्वात् दंष्ट्रयोद्धृतवान् इत्यर्थः। व्यतिरेकालंकारः॥ उक्तं च वाग्भट्टेन महाकविना—'केनचिद्यत्र धर्मेण द्वयोः संसिद्धसाम्ययोः। भवत्येकतराधिक्यं व्यतिरेकः स उच्यते॥'

पुनरित्यादि। अहो मारदत्त, अहो असमसाहसारम्भ असमं असदृशं अनन्यसंभवि यत् साहसं अद्भुतं कर्म तस्यारम्भः प्रारम्भो यस्य स तथा तस्य संबोधनं हे तथोक्त। अहो त्रिभुवनभवनस्तम्भ त्रिभुवनमेव भवनं गृहं तस्योद्धरणे स्तम्भः आधारकाष्ठं त्रिभुवनभवनस्तम्भस्तस्य संबोधनं हे तथोक्त। कदाचित् कस्मिंश्चिदवसरे तदा तस्मिन् काले निशीथिनीशेषेषु रात्रिशेषेषु। किलेति लोकोक्तौ शास्त्रोक्तौ वा। अहं यशोधरमहाराजः पल्यङ्कतलं शय्योत्सङ्गमुज्झांचकार तत्याज उज्झितवान्। कथंभूतेषु निशीथिनीशेषेषु। समीपसमस्तलोकलोचनोन्मेषेषु समीपा इदानीमेव भविष्यन्तः समस्तानां लोकानां लोचनोन्मेषाः नेत्राणामुद्घाटनानि येषु ते तथा तेषु। कथंभूतं

निशीथिनीशेषेषु 'हिमरुचिरस्तमेति निशि निगदितनिजविनियोगसंगरः । रविरपि नयनविषयमयमवति जगति निजाय कर्मणे । तत्कलहं विहाय संविशत पुनर्ननु दूरमन्तरम्' इति प्रातः कथयतीव मिथुनेषु रसत्कृकवाकुमण्डलम् ।

---

पर्यङ्कतलम् । मृगमदाङ्गरागबहुलपरिमलम् । मृगमदो नाम कस्तूरिका तेनोपलक्षितो योऽसावङ्गरागो विलेपनं तेन बहुलः प्रचुरतरः परिमलो विमर्दोत्थो गन्धो यत्र पर्यङ्कतले तत्तथोक्तम् । क इव पर्यङ्कतलमुज्झांचकार । मन्दाकिनीपुलिनं कलहंस इव । यथा कलहंसो राजहंसो मन्दाकिन्याः गङ्गायाः पुलिनं तोयोत्थितं द्वीपं त्यजति । कथंभूतं मन्दाकिनीपुलिनम् । नवोल्लासमांसलसरोजकाननम् नवोल्लासेन प्रत्यग्रविकसनेन मांसलं मनोहरस्थलं सरोजकाननं कमलवनं यत्र मन्दाकिनीपुलिने तत्तथोक्तम् । किं कृत्वा पूर्वं पर्यङ्कतलमुज्झांचकार । पुनः राज्यपट्टाभिषेकादनन्तरं तत्पूर्वोक्तं त्रिभुवनतिलकं नाम राजमन्दिरं राजभवनमध्यं स्थित्वा । कथंभूतं राजमन्दिरम् । श्रीसरस्वतीविलासकमलाकरम् श्रीश्च लक्ष्मीः सरस्वती च भारती तयोर्विलासकमलाकरं क्रीडाकमलवनम् । अहं किं कुर्वन् पर्यङ्कतलमुज्झांचकार । इति अमुना प्रकारेण व्यावर्ण्यमानविधानेन प्रबोधमङ्गलपाठकानां प्रबोधस्य जागरणस्य ये मङ्गलपाठका नग्नाचार्याः प्रबोधमङ्गलपाठकास्तेषां सूक्तीः सुभाषितानि आकर्णयन् शृण्वन् । कथंभूतानां प्रबोधमङ्गलपाठकानाम् । वैभातिकसूक्तपाठकठोरकण्ठकानाम् वैभातिकानि यानि सूक्तानि सुवचनसुभाषितानि तेषां पाठेनाध्ययनेन कठोरास्तीव्रतरा वाचालाः कण्ठका गलनालानि येषां ते तथा । कथंभूताः सूक्तीः । अवसरावेदनसुन्दरोक्तीः अवसरस्य प्रस्तावस्य आवेदनं विज्ञापनं तेन सुन्दरा अतिमनोहरा उक्तयो वचनानि यासु सूक्तिषु ता अवसरावेदनसुन्दरोक्तयस्तास्तथोक्ताः । इतीति किम् । [हिमरुचिरित्यादि]—रसत्कृकवाकुमण्डलं शब्दायमानताम्रचूडवृन्दं मिथुनेषु स्त्रीपुरुषद्वन्द्वेषु प्रातः प्रभाते कथयतीव सूचयतीव । कृकवाकुमण्डलं किं कथयति । अहो मिथुनानि, अयं प्रत्यक्षीभूतो हिमरुचिश्चन्द्रमाः अस्तमेति अस्तमयं गच्छति । कथंभूतो हिमरुचिः । निशि रात्रौ निगदितनिजविनियोगसंगरः निगदितः सूचितो निजः स्वकीयो विनियोगस्य संगरः प्रतिज्ञा येन स तथोक्तः । अयं प्रत्यक्षीभूतो रविरपि भास्करोऽपि जगति नयनविषयं लोचनगोचरं अां समन्तात् अवति गच्छति वा । 'अव रक्ष पालने' इत्यत्र अवधातोरेकोनविंशत्यर्थेषु वर्तमानत्वात् । तथा हि—'पालनगतिकान्तिप्रीतितृप्त्यवगमनप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभाववृद्धिषु' इति । रविः किमर्थं नयनविषयमागच्छति । निजाय कर्मणे निजयोग्याय । तत्तस्मात् कारणात् हे मिथुनानि, कलहं झकटकं विहाय परित्यज्य संविशत संभोगं कुरुत यूयम् । पुनः पश्चात् ननु अहो मिथुनानि दूरं अन्तरं वर्तते रजनी पुनरपि दूरे भविष्यतीति भावः । उत्प्रेक्षालंकारः ॥

निद्राशेषनिमीलितार्धनयनं किंचिद्विलम्बाक्षरं
पर्यस्तालकजालकं प्रविलसद्धर्माम्बुमुक्ताफलम् ।
भ्रूभङ्गालसमल्पजृम्भणवशादीषत्प्रकम्पाधरं
चुम्बालिङ्ग्य सखीमुखं ननु रवेरेषा प्रभा दृश्यते ॥
विकिरनिकिर एष व्याकुलः पादपानां
तिरयति शिखराणि प्रेङ्खितो द्वन्द्वशब्दः ।
इह च युवतिसार्थः सद्मकर्मप्रबन्धा-
त्तरलितकुचकुम्भः संचरत्यङ्गणेषु ॥ ४ ॥
गलति तम इवायं चक्रनाम्नां वियोगः
स्फुटति नलिनराजिः संध्यया सार्धमेषा ।

---

**निद्रेत्यादि** । हे राजन्, आलिङ्ग्य आलिङ्गनं दत्त्वा सखीमुखं तव प्रियकान्तावदनं चुम्ब वक्त्रेण संयोजय । एषा प्रत्यक्षीभूता रवेः श्रीभास्करस्य ननु हे राजन्, प्रभा दीप्तिर्दृश्यते श्रीसूर्य उदेष्यति । प्रभातं जातमित्यर्थः । कथंभूतं सखीमुखम् । निद्राशेषेण अल्पस्वापेन निमीलिते मुद्रिते अर्धनयने लोचने यस्मिन् सखीमुखे तत्तथोक्तम् । अपरं कथंभूतं सखीमुखम् । किंचिद्विलम्बाक्षरम् किंचिन्मनाक् विलम्बः कालक्षेपो येषां तानि किंचिद्विलम्बानि अक्षराणि वर्णा यस्मिन् सखीमुखे तत्तथोक्तम् । पुनः कथंभूतम् । पर्यस्तालकजालकम् पर्यस्तानि यत्र तत्र गतानि अलकानां कुन्तलानां जालकानि वल्लर्यो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । प्रविलसद्धर्माम्बुमुक्ताफलम् प्रविलसन्ति शोभमानानि घर्माम्बूनि आस्वादजलविन्दवो मुक्ताफलानि व्याकरणे यानि यस्मिन् सखीमुखे तत्तथोक्तम् । पुनः कथंभूतम् । भ्रूभङ्गालसम् भ्रूभङ्गेषु भ्रूक्षेपेषु नेत्रोपरिरोमराज्योल्लासनेषु अलसो मन्द उद्यमो यस्मिन् तत्तथोक्तम् । पुनः कथंभूतम् । अल्पजृम्भणवशात् स्तोकविनामकरणात् हावविधानात् ईषत्प्रकम्पाधरम् ईषत् मनाक् प्रकम्पः स्फुरणं अधरे दन्तच्छदे यस्मिन् तत्तथोक्तम् । रूपकमनुमानालंकारः ॥

**विकिरनिकर इत्यादि** । एष प्रत्यक्षीभूतः विकिरनिकरः पक्षिसमूहो व्याकुलो विस्तः सन् पादपानां वृक्षाणां शिखराणि उपरितनभागानि तिरयति झम्पति । द्वन्द्वशब्दो मिथुनध्वनिः वै प्रेङ्खितश्चञ्चलो वर्तते । प्रस्तावात् पक्षिणां द्वन्द्वमिति गृह्यते । इह च एष च अङ्गणेषु गृहाग्रभूमिषु युवतिसार्थः स्त्रीणां समूहः संचरति गतागतं करोति । कथंभूतो युवतिसार्थः । सद्मकर्मप्रबन्धात् गृहव्यापारप्रघट्टकात् तरलितकुचकुम्भः शिथिलितस्तनकलशः । जात्यलंकारः ॥

**गलति इत्यादि** । हे राजन्, अयं प्रत्यक्षीभूतः चक्रनाम्नां चक्रवाकानां वियोगो

अगणितपतिनर्मा कूणितभ्रूलतान्त-
स्त्यजति कुलवधूनां वासगेहानि सार्थः ॥ ५ ॥
अविरलपुलकालीपांशुलास्याम्बुजानां
नवनवनखरेखालेखलोलस्तनीनाम् ।
स्मरनरपतिदूतीविभ्रमः कामिनीना-
मिह विहरति यूथः प्रक्वणन्नूपुराणाम् ॥ ६ ॥
अलकवलयवृत्ताः किंचिदाकुञ्चितान्ताः
सरसकरजरेखाः कामिनीनां कपोले ।
प्रविदधति पलाशस्याग्रशाखाशिखाया-
मवनतमुकुलानां मञ्जरीणामभिख्याम् ॥ ७ ॥

---

विप्रलम्भो गलति विघटते । किमिव । तम इव अन्धकारं यथा । हे राजन्, एषा प्रत्यक्षीभूता नलिनराजिः कमलसमूहः स्फुटति विकसति । कथम् । सार्धं सह । कया । संध्यया प्रभातकालवत् । हे राजन्, कुलवधूनां कुलस्त्रीणां सार्थः समूहः वासगेहानि विलासमन्दिराणि त्यजति मुञ्चति । कथंभूतः कुलवधूनां सार्थः । अगणितपतिनर्मा न गणितं मनस्यानीतं पतीनां भर्तॄणां नर्म परिहासः अगणितपतिनर्मा । उक्तं च—'द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ।' पुनः कथंभूतः कुलवधूनां सार्थः । कूणितभ्रूलतान्तः कूणिताः कोपेन कुटिलितो भ्रूलतानामन्तः प्रान्तो येन स तथोक्तः । उपमासहोक्त्यलंकारः ॥

**अविरलपुलकालीत्यादि** । हे राजन्, इह अस्मिन् स्थाने कामिनीनां स्त्रीणां यूथः समूहो विहरति पर्यटति । कथंभूतानां कामिनीनाम् । अविरलपुलकालीपांशुलास्याम्बुजानाम् अविरला अविच्छिन्ना या पुलकाली पुलकश्रेणिस्तया पांशुलानि मिलितानि आस्याम्बुजानि मुखकमलानि यासां तास्तथा तासाम् । पुनः कथंभूतानां कामिनीनाम् । नवनवनखरेखालेखलोलस्तनीनाम् नवनवाः प्रत्यग्राः याः नखरेखाः पुनर्भवराजयः तासामालेखैर्विलेखनैर्लोलाश्चपलाः स्तनाः यासां तास्तथा तासाम् । पुनः कथंभूतानां कामिनीनाम् । प्रक्वणन्नूपुराणाम् प्रक्वणन्तः शब्दायमानाः नूपुरा हिञ्जीरा यासां तास्तथा तासाम् । कथंभूतः कामिनीनां यूथः । स्मरनरपतिदूतीविभ्रमः स्मरनरपतेः कामनरेन्द्रस्य दूतीनां संचारिकाणां विभ्रमः शोभा यस्य यूथस्य स तथोक्तः । रूपकोपमालंकारः ॥



**अलकवलयवृत्ता इत्यादि** । हे राजन्, कामिनीनां स्त्रीणां कपोले गण्डस्थले सरसकरजरेखाः सरसाः तत्कालदत्ताः करजानां नखानां रेखाः पदानि पलाशस्य

द्वीपान्तरेषु नलिनीवनवर्तिवृत्ते
भानौ क्रिया नृप न क्वापि यथेह भाति ।
एवं त्वयि प्रियतमाधरपानलोले
लोके कुतः फलति कर्मवतां प्रयासः ॥ ८ ॥

सरभरकलहकेलिलुलितालकविदलिततिलकमण्डनं
नवनखलिखितलेखगण्डस्थलमदयनिपीडिताधरम् ।
निद्रोद्भ्रमरनयनमबलामुखमुषसि समन्मनाक्षरं
सुरतविलासहंस तव कथयति निखिलनिशासु जागरम् ॥ ९ ॥

---

किंशुकतरोरग्रशाखाशिखायामुपरितनशाखायां उपरितनभागे अवनतमुकुलानां वक्रकलिकानां मञ्जरीणां अभिख्यां शोभां प्रविदधति प्रकुर्वन्ति । कथंभूताः सरसकरजरेखाः । अलकवलयवृत्ताः अलकानां कुन्तलानां वलयेषु विण्टिकासु वृत्ताः प्रवृत्ताः संजाताः । पुनः कथंभूताः । किंचिदाकुञ्चितान्ताः किंचिन्मनाक् आकुञ्चितः वर्ति अन्तः पर्यन्तो यासां करजरेखाणां तास्तथोक्ताः । उपमालंकारः ॥

द्वीपान्तरेष्वित्यादि । हे नृप हे राजन्, इह अस्मिन् लोके द्वीपान्तरेषु पूर्वापरविदेहेषु यथा येन प्रकारेण नलिनीवनवर्तिवृत्ते पद्मिनीखण्डवर्तनशीलाचारे भानौ श्रीसूर्ये सति क्वापि क्रिया काचित् चेष्टा न भवति न चमत्करोति न प्रवर्तते । एवममुना प्रकारेण त्वयि भवति प्रियतमाधरपानलोले सति वल्लभस्त्रीअधरास्वादनलम्पटे सति कर्मवतां क्रियावतां पुरुषाणां प्रयास उद्यमः कुतः कस्मात् फलति । न कुतोऽपि फलवान् भवति । दृष्टान्ताक्षेपालंकारः ॥

सरभरेत्यादि । हे सुरतविलासहंस सुरतस्य संभोगक्रीडायाः विलासहंसः क्रीडाकरणे राजहंसः सुरतविलासहंसस्तस्य संबोधनं हे तथोक्त, अबलामुखं वनितावदनं कर्तृभूतं उषसि प्रभाते तव भवतो निखिलनिशासु सर्वरात्रिषु पूर्वरात्रि-मध्यरात्रि-अपररात्रिषु जागरं जागरणं कर्मतापन्नं कथयति । कथंभूतं अबलामुखम् । सरभरकलहकेलिलुलितालकविदलिततिलकमण्डनम् सरभरेण कन्दर्पातिशयेन योऽसौ कलहो युद्धं तस्य केलिः क्रीडा तया लुलिता लुठिता ये अलकाः केशास्तैर्विदलितं चूर्णीकृतं लोपितं तिलकमण्डनं तिलकं च मण्डनं च कुङ्कुमकज्जलादिकं यस्य अबलामुखस्य तत्तथोक्तम् । पुनः कथंभूतं अबलामुखम् । नवनखलिखितलेखगण्डस्थलम् नवः

---

१. टीकोपलभ्यमानेषु सर्वरात्र्यादिशब्देषु 'अहःसर्वैकदेश–' (५।४।८७) इति पाणिनिसूत्रेण रात्रेरच्प्रत्ययमकृत्वैव व्याकरणविरुद्धमिकारान्तरात्रिशब्दोपादानं ग्रन्थकर्तुः प्रमादः (सर्वरात्रेषु पूर्वरात्रमध्यरात्रापररात्रेषु) इत्येते प्रयोगाः पाठ्याश्च.

विद्विष्टदर्पहर मध्यमलोकपालं
कस्त्वां प्रबोधयतु सर्वजगत्प्रबोधम् ।
लोकत्रयोद्धरणधामनिकेतनेषु
निद्रा कुतो भवति नाथ भवादृशेषु ॥ १० ॥

मन्त्र्येष राज्यरथसारथिरागतस्ते
नीरोगतावहितवाक्प्रवणो भिषक्च ।
पौरोगवोऽभिनवपाकपरः समास्ते
द्वारे तवोत्सवमतिश्च पुरोहितोऽपि ॥ ११ ॥

---

प्रत्यग्रो नखैः कामाङ्कुशैर्लिखितो विन्यासीकृतः योऽसौ लेखो लिपिविशेषस्तेनोपलक्षितं गण्डस्थलं कपोलमण्डलं यस्यावलामुखस्य तत्तथोक्तम् । पुनः कथंभूतं अवलामुखम् । अदयनिपीडिताधरम् अदयं दयारहितं यथा भवत्येवं निपीडितश्चुम्बितः अधरो दन्तवासो यस्य तत्तथोक्तम् । पुनः कथंभूतं अवलामुखम् । निद्रोड्डमरनयनम् निद्रया जागरेण उड्डमरे उत्कटे नयने लोचने यत्र तत्तथोक्तम् । पुनः कथंभूतं अबलामुखम् । समन्मनाक्षरम् सह मन्मनेन गद्गदशब्देन उपलक्षितानि अक्षराणि वर्णा यस्मिन् अवलामुखे तत्तथोक्तम् । अनुमानालंकारः ॥

**विद्विष्टेत्यादि** । हे विद्विष्टदर्पहर विद्विष्टानां शत्रूणां दर्पो मदस्तं हरतीति विद्विष्टदर्पहरस्तस्य संबोधनं हे तथोक्त हे राजन्, भवादृशेषु युष्मत्सदृशेषु निद्रा स्वापः कुतो भवति । न कुतोऽपि भवति इत्यर्थः । कः पुमान् त्वां भवन्तं प्रबोधयतु जागरयतु । अपि तु न कश्चित् प्रबोधयतु इत्यर्थः । कथंभूतं त्वाम् । मध्यमलोकपालं मध्यमलोकस्वामिनम् । पुनः कथंभूतम् । सर्वजगत्प्रबोधम् सर्वस्य निखिलस्य जगतः पृथ्वीमण्डलस्य प्रबोधं सावधानभवनं यस्मात् स तथा तम् । कथंभूतेषु भवादृशेषु । लोकत्रयोद्धरणधामनिकेतनेषु लोकानां त्रयं तस्योद्धरणे प्रकाशने धाम तेजस्तस्य निकेतनानि गृहाणि लोकत्रयोद्धरणधामनिकेतनानि तेषु । अतिशयाक्षेपालंकारः ॥

**मन्त्रीत्यादि** । हे राजन्, एष प्रत्यक्षीभूतस्ते तव मन्त्री आगत आयातो वर्तते । कथंभूतो मन्त्री । राज्यरथसारथिः राज्यमेव रथः तदुन्नतिहेतुत्वात्तस्य सारथिः । तत्प्रवर्तक इत्यर्थः । न केवलं मन्त्री आगतः भिषक् वैद्यविद्याविलासापरनामा सज्जनवैद्य आगतो वर्तते । कथंभूतो भिषक् । नीरोगतावहितवाक्प्रवणः नीरोगतायां आदाननिदानचिकित्साभिरारोग्यत्वकरणे अवहिताः सावधानाः याः वाचः आयुर्वेदवचनानि तत्र प्रवणो विचक्षणः । तथा पौरोगवो महानसाध्यक्षः समास्ते उपविष्टस्तिष्ठति । कथंभूतः पौरोगवः । अभिनवपाकपरः अभिनवः प्रत्यग्रो योऽसौ पाको रन्धनं त्रिषष्टिव्यञ्जन-

प्राभातिकानकरवश्रवणप्रबोधा-
दीर्घं रसन्ति गृहवापिषु राजहंसाः ।
उत्तिष्ठ देव भज संप्रति राजलक्ष्मी-
संपादितं विभवमेनमिति ब्रुवाणाः ॥ १२ ॥
सुप्तेषु येषु रविरेष बुधावलोक
यावत्तमो दलति तत्किल तेषु धत्ते ।
बोधं पुनर्दधति येऽस्य पुरो वितन्द्रा-
स्तेजांसि नाथ वितनोति निजानि तेषु ॥ १३ ॥

इति वैभातिकसूक्तपाठककठोरकण्ठकानां प्रबोधमङ्गलपाठकानामवसरावेदनसुन्दरोक्तीः सूक्तीराकर्णयन्नवोल्लासमांसलसरोजकाननं मन्दाकिनीपुलिनं कलहंस इव तदा किलाहं मृगमदाङ्गरागबहुलपरिमलं पल्यङ्कतलमुज्झांचकार । कदाचिदासन्नोदयद्युमणिमहसि प्रत्यूषानेहसि

---

निष्पादने परस्तत्परः । तथा हे राजन्, पुरोहितोऽपि तव भवतो द्वारे च तिष्ठति । कथंभूतः पुरोहितः । उत्सवमतिः उत्सवे शान्तिकर्ममहोत्सवे मतिर्बुद्धिर्यस्य स तथा । समुच्चयालंकारः ॥

प्राभातिकेत्यादि । हे देव हे राजाधिराज, गृहवापिषु राजमन्दिरसरोवरेषु राजहंसाः चञ्चुचरणलोचनेषु लोहिताः चक्राङ्गा राजहंसा उच्यन्ते ते रसन्ति शब्दं कुर्वन्ति । कथम् । दीर्घं तारतरं यथा भवत्येवम् । कस्मात् । प्राभातिकानकरवश्रवणप्रबोधात् प्रभाते भवाः प्राभातिकास्ते च ते आनकाः पटहास्तेषां रवः शब्दस्तस्य श्रवणेनाकर्णनेन योऽसौ प्रबोधो जागरः प्राभातिकानकरवश्रवणप्रबोधस्तस्मात् । राजहंसाः किं कुर्वाणाः रसन्ति । इति अमुना प्रकारेण ब्रुवाणाः सूचयन्तः । इतीति किम् । हे देव राजन्, त्वं उत्तिष्ठ उत्थो भव । संप्रति इदानीं राजलक्ष्मीसंपादितं एनं प्रत्यक्षीभूतं विभवं ऐश्वर्यं भज त्वं आश्रय । उत्प्रेक्षालंकारः ॥

सुप्तेष्वित्यादि । हे बुधावलोक, विद्वज्जनलोचन, येषु सुप्तेषु ऐश्वर्यं भज त्वं आश्रय । एष प्रत्यक्षीभूतो रविः यावन्मात्रं तमोऽन्धकारं दलति विध्वंसयति तत्तमः किल निश्चयेन तेषु पुरुषेषु धत्ते धरति । ये पुरुषाः वितन्द्राः निद्रारहिता निरालस्याः अस्य रवेः पुरः पूर्वमेव पुनर्बोधं दधति जागरणं कुर्वन्ति जाग्रति । हे नाथ, तेषु पुरुषेषु निजानि तेजांसि द्योतान् वितनोति विस्तारयति । जात्यलंकारः ॥

इतीत्यादि । हे राजन्, कदाचित्कस्मिंश्चिद्दिवसरे प्रत्यूषानेहसि प्रभातक आस्थान-

व्योमाम्बुधौ विद्रुमकाननश्रीर्वियद्वने किंशुकपुष्पकान्तिः ।
आभाति रागः प्रथमं प्रभाते सुरेभसिन्दूरितकुम्भशोभः ॥ १४ ॥
निशे विहायापि निशीथिनीशं रतिस्तवात्यन्तमिह प्रसिद्धा ।
इयं त्वहश्रीर्न विना दिनेशमास्ते निमेषार्धमपि स्वतन्त्रा ॥ १५ ॥
अतो निसर्गान्निशि पांशुलत्वं शुद्धस्थितित्वं दिवसश्रियश्च ।
मत्वैव संसर्गभयात्पुरैव संध्यां तयोः सीम्नि विधिः ससर्ज ॥ १६ ॥

---

मण्डपमास्थाय सभायामुपविश्य धर्मस्थैर्न्यायाधिकारिभिः पुरुषैः सह सर्वेषां आश्रमिणां ब्रह्मचारिगृहिवानप्रस्थभिक्षूणां इतरव्यवहारविश्रामिणां च ब्राह्मणक्षत्रियवणिक्शूद्राणां वर्णानां च कार्याणि अपश्यं अहं विचारयामास इति क्रियाकारकसंबन्धः । कथंभूते प्रत्यूषानेहसि । आसन्नोदयद्युमणिमहसि आसन्नं समीपवर्ति उदयाचलस्य द्युमणेः श्रीसूर्यस्य महस्तेजो यत्र प्रत्यूषानेहसि स आसन्नोदयद्युमणिमहास्तस्मिन् तथोक्ते । कथंभूतमास्थानमण्डपम् । बुधप्रकाण्डमण्डलीविधीयमानधर्मागमालापम् बुधानां विद्वज्जनानां मध्ये प्रकाण्डं प्रशस्तं बुधप्रकाण्डं तस्य मण्डली मेलापकस्तया विधीयमानाः क्रियमाणाः धर्मागमालापाः स्मृतिशास्त्रप्रवचनानि यस्मिन्नास्थानमण्डपे स तथा तम् । अहं किं कुर्वन् कार्याणि अपश्यम् । इति अमुना प्रकारेण सौखशायनिकानां सुखशयनं पृच्छन्तीति ये ते सौखशायनिकास्तेषां सूक्तगीतामृतरसं सुवचनकथितामृतद्रवं कर्णपूरतां नयन् । आकर्णयन्नित्यर्थः । इतीति किम्—

**व्योमाम्बुधावित्यादि** । हे राजन्, प्रभाते विभातसमये प्रथमं पूर्वं रागः श्रीसूर्यस्य तेजः आभाति शोभते । कथंभूतो रागः । व्योमाम्बुधौ आकाशसमुद्रे विद्रुमकाननश्रीः विद्रुमाणां प्रवालानां काननस्य श्रीः शोभा यस्य रागस्य स तथा । पुनः कथंभूतो रागः । वियद्वने आकाशकानने किंशुकपुष्पकान्तिः किंशुकानां पलाशवृक्षाणां पुष्पाणि कुसुमानि किंशुकपुष्पाणि तेषां कान्तिः शोभा यस्य स तथा । पुनः यथंभूतो रागः । सुरेभसिन्दूरितकुम्भशोभः सुरेभस्य ऐरावणगजस्य सिन्दूरितः सिन्दूरेणारुणीकृतोऽसौ कुम्भः शिरःपिण्डस्तस्य शोभा उपमा यस्य रागस्य स तथा । रूपकोपमालंकारः ॥

**निशे इत्यादि** । हे निशे हे रात्रे, निशीथिनीशं चन्द्रं विहायापि परित्यज्यापि इह अस्मिन् संसारे तव अत्यन्तं रतिः प्रसिद्धा विख्याता वर्तते । इयं अहश्रीर्दिनश्रीः दिनेशं विना श्रीभास्करमन्तरेण सूर्यादृते निमेषार्धमपि स्वतन्त्रा स्वच्छन्दचारिणी नास्ते न तिष्ठति । जात्यलंकारः ॥

**अत इत्यादि** । अतः एतस्मात् कारणात् निसर्गात्स्वभावेन निशि रात्रौ पांशुलत्वं अन्धकारेण सह व्यभिचारिणी नास्ते न त्वं दिवसश्रियश्च दिनलक्ष्म्याः शुद्धस्थितित्वं

पूर्वं सरसकरजरेखाकृतिरधररुचिस्ततो रवि-
स्तदनु च घुसृणपिण्डखण्डद्युतिरब्जचयच्छविस्ततः ।
पुनरयमरुणरत्नमुकुरश्रीरुदयति रागनिर्भरैः
कुर्वन्ककुभि ककुभि बन्धूकमयीमिव सृष्टिमंशुभिः ॥ १७ ॥

शतमखधामहेमकुम्भाकृतिरिन्द्रसमुद्रविद्रुम-
स्तम्बस्तिमितकान्तिरहरुत्सवसमयसुवर्णदर्पणः ।
उदयति रविरुदारहरिरोहणरुचिरुचिरोत्करैः करै-
र्दिग्दयितामुखानि पिञ्जरयन्नरुणितजलधिमण्डलः ॥ १८ ॥

---

अव्यभिचारिणीत्वं मत्वैव विज्ञायैव तयोर्निशादिनश्रियोः सीम्नि मध्ये विधिर्विधाता संध्यां पुरैव ससर्ज चक्रे । कस्मात् । संसर्गभयादिव व्यभिचारिण्या अव्यभिचारिण्याश्च संपर्कशङ्कनादिव । उत्प्रेक्षालंकारः ॥

पूर्वमित्यादि । अयं प्रत्यक्षीभूतो रविः उदयति उद्गच्छति । कथंभूतो रविः । पूर्वं प्रथमतः सरसकरजरेखाकृतिः सरसा तत्कालदत्ता या करजरेखा तस्या आकृतिर्यस्य स तथोक्तः । पुनः कथंभूतो रविः । ततस्तदनन्तरं अधररुचिः स्त्रीणां दन्तच्छदाकारः । तदनु तदनन्तरं घुसृणपिण्डखण्डद्यतिः कुङ्कुमपिण्डखण्डद्युतिः अर्धपिण्डसदृशः । ततस्तदनन्तरं अब्जचयच्छविः रक्तकमलसदृशः । पुनस्तदनन्तरं अरुणरत्नमुकुरश्रीः पद्मरागमणिदर्पणसमानशोभः । रविः किं कुर्वन् । रागनिर्भरैः रक्तिमबहुलैरंशुभिः कृत्वा ककुभि ककुभि दिशि दिशि बन्धूकमयीं सृष्टिं कुर्वन्निव विदधदिव । उपमालंकारः । दुवईछन्दः ॥

शतमखधामेत्यादि । रविः श्रीसूर्य उदयत्युद्गच्छति उदेति । कथंभूतः सन्नुदेति । शतमखधामहेमकुम्भाकृतिः पूर्वदिक्पालप्रासादसुवर्णकुम्भसदृशः । पुनः कथंभूतः । इन्द्रसमुद्रविद्रुमस्तम्बस्तिमितकान्तिः पूर्वसमुद्रप्रवालसमूहवन्निश्चलदीप्तिः । पुनः कथंभूतः । अहरुत्सवसमयसुवर्णदर्पणः अह्नो दिवसस्य उत्सवसमयो महोत्सवकालस्तस्य संबन्धी सुवर्णदर्पणः काञ्चनादर्शः । रविः किं कुर्वन् । करैः किरणैः कृत्वा दिग्दयितामुखानि दिग्वधूवदनानि पिञ्जरयन् रक्तपीतानि कुर्वन् । कथंभूतैः करैः । उदारहरिरोहणरुचिरुचिरोत्करैः उदारमतिमनोहरं यद्धरिरोहणं हरिचन्दनं तस्य रुचिर्दीप्तिस्तद्वत् रुचिरा मनोहरा उत्कराः समूहा येषां कराणां ते तथोक्तास्तैः । कथंभूतो रविः । अरुणितजलधिमण्डलः श्वेतरक्तीकृतसमुद्राभोगः । रूपकालंकारः ॥ दुवईछन्दः ॥

अर्धकाव्यकविः—

अरुणकिरणमध्ये विद्रुमस्तम्बविम्बः
क्षितिप किमिव शोभां भानुरुद्यद्बिभर्ति ।

राजा—

बुध युधि मम शत्रोः शोणितापूरितायां
प्रतरदुपरि कोपात्पाटलं यद्वदास्यम् ॥ १९ ॥

निशि मदनविनोदाद्वासरे च प्रजाना-
मुदयनयनियोगाद्गाढमुद्रिक्तनिद्रः ।
इति वपुषि नितान्तं बिभ्रदम्भोजलक्ष्मी-
मुदयति तपनस्ते देव सामान्यवृत्तिः ॥ २० ॥

अलकवलयमध्ये पद्मरागप्रसूतिं
नवकिसलयशोभां कर्णपालीप्रदेशे ।
कुचकलशतटानां कुङ्कुमस्येव रागं
दधति रविमयूखाः प्रातरेतेऽबलासु ॥ २१ ॥

---

अर्धकाव्यकविः समस्याकारकः कश्चिद्ब्रूते । किं ब्रूते—**अरुणकिरणेत्यादि** । हे क्षितिप हे राजन्, अरुणकिरणमध्ये अरुणानामव्यक्तरागाणां किरणानां मयूखानां मध्ये मध्यवर्ती विद्रुमस्तम्बविम्बः प्रवालसदृशमण्डलो भानुः श्रीसूर्य उद्यत् उद्गच्छति । किमिव कीदृशीं शोभां विभर्ति धत्ते । राजा ब्रूते—हे बुध हे विद्वन्, युधि संग्रामे शोणितापूरितायां रुधिराभृतायां उपरि प्रतरत् उन्मज्जत् मम शत्रोरास्यं मुखं कोपात् पाटलं श्वेतरक्तं यद्वद्यादृशं भवति तद्वत् भानुः शोभां विभर्ति । प्रश्नोत्तरोपमालंकारः ॥

**निशीत्यादि** । हे देव हे राजन्, तपनः श्रीसूर्यः ते तव सामान्यवृत्तिः सादृश्यप्रवृत्तिरुदयति । कथंभूतस्त्वम् । गाढमतिशयेन उद्रिक्तनिद्रः गतनिद्रः । कस्मात् । निशि रात्रौ मदनविनोदात् कामक्रीडनात् वासरे च दिवसे प्रजानां लोकानां उदयनयनियोगात् वृद्धिकरणाधिकारात् । उद्रिक्तनिद्र इत्येवं त्वं किं कुर्वन् । इति अमुना प्रकारेण वपुषि शरीरे नितान्तमतिशयेन अम्भोजलक्ष्मीं रक्तकमलशोभां विभ्रत् धरन् तेन कारणेन तपनः श्रीसूर्यः सामान्यतया उदयति । त्वत्सकाशादहीनतया उदयं करोति इत्यर्थः । व्यतिरेकतुल्ययोगितालंकारः ॥

**अलकेत्यादि** । एते प्रत्यक्षीभूताः रविमयूखाः सूर्यकिरणाः प्रातः प्रभातसमये अलकवलयमध्ये चूर्णकुन्तलमण्डलान्तरे पद्मरागप्रसूतिं रक्तमणीनामुत्पत्तिं दधति

काश्मीरकेसररुचः करजक्षताभाः
कान्ताधरद्युतिधृतः शुकवक्त्रकल्पाः ।
सिन्दूरिताङ्गणतलास्तव देव चित्तं
भानोः करा विविधचाटुतयाश्रयन्ते ॥ २२ ॥

इति सौखशायनिकानां सूक्तगीतामृतरसं कर्णपूरतां नयन्समाचरितगुरुदेवतोपासनविधिः प्रतापनिधिः सकलजगद्व्यवहाराग्रणीर्ग्रहग्रामणीरिव संभावयन्पुरोहितैरुपनीतानि स्वस्त्ययनमङ्गलानि भुजङ्गभोगभूषणाग्रतरङ्गरुचिभिरम्भोधिवीचिभिर्वेलाचल इव कामकोदण्डमण्डितदोर्दण्डिकामण्डलाभिरबलाभिः परिवृतः संपादितप्रभातवृत्तः पुरस्कृतमन्दरां वसतिमिव प्रदक्षिणीकृत्य सवत्सां धेनुं प्रथमतराविर्भूतदर्शनैः कल्पतरुरिव कतिभिश्चित्प्रसूनैरुत्तंसितशिखण्डदेशः शुचिपक्ष इव धवलाम्बरधरः

---

धरन्ति । अबलासु कर्णपालीप्रदेशे कर्णोपरितनभागे नवकिसलयशोभां प्रत्यग्रपल्लवप्रभां दधति । अबला कुचकलशतटानां स्तनकुम्भप्रदेशानां कुङ्कुमस्य काश्मीरजन्मकेसररागशोभामिव दधति धरन्ति । उपमालंकारः ॥

काश्मीरकेसररुच इत्यादि । हे देव, भानोः कराः तव भवतश्चित्तं विविधचाटुतया नानाप्रकारप्रेमस्तुतितया आश्रयन्ते प्रविशन्ति । भवतश्चित्ताय रोचन्त इत्यर्थः । कथंभूताः भानोः कराः । काश्मीरकेसररुचः जात्यकुङ्कुमकिंजल्कसदृशाः । पुनः कथंभूताः । करजक्षताभाः अबलासु नखोपशोभिताः । पुनः कथंभूताः । कान्ताधरद्युतिधृतः कान्तानां स्त्रीणां अधरद्युतिं शोभां धरन्तीति कान्ताधरद्युतिधृतः । पुनः कथंभूताः । शुकवक्त्रकल्पाः तव क्रीडाकीरतुण्डसदृशाः । पुनः कथंभूताः । सिन्दूरिताङ्गणतलाः सिन्दूरितं रक्तीकृतमङ्गणतलं गृहाग्रभूमिर्यैस्ते सिन्दूरिताङ्गणतलाः । उपमालंकारः ॥

अहं कथंभूतः सन् कार्याणि अपश्यम् । समाचरितगुरुदेवतोपासनविधिः समाचरितः सम्यग्विहितो गुरोरुपाध्यायस्य मात्रादेश्च देवतायाश्च उपासनविधिः सेवाविधानं येन । ..........................................................
..........................................................
..........................................................
..........................................................
..........................................................
..........................................................
..........................................................
..........................................................

समुद्र इव सरत्नोर्मिकाभरणः श्रीसरस्वतीरतिरहस्योपदेशदित्सया कर्णलग्नाभ्यामुशनोबृहस्पतिभ्यामिव चन्द्रकान्तकुण्डलाभ्यामलंकृतश्रवणः परेण चाभिजातजनोचितेनाकल्पेनाध्यासितस्वशरीरः समन्तादालानितानामपरोत्सर्गं दिग्गजसर्गमिव दर्शयतां दशनकोशारुणमणिमयूखोन्मुखरेखालेखपुनरुच्यमानकुम्भस्थलीसिन्दूरशोभानामनेकपानामनवरतकटकंदरद्रववद्दानसौ-

---

..........श्रीसरस्वतीरतिरहस्योपदेशदित्सया कर्णलग्नाभ्यामुशनोवृहस्पतिभ्यामिव चन्द्रकान्तकुण्डलाभ्यामलंकृतश्रवणः श्रीश्च लक्ष्मीः सरस्वती च वाग्वादिनी श्रीसरस्वत्यौ तयोः रत्योः संभोगक्रीडयोः संवन्धि यत् रहस्यं गोप्यतत्त्वं तस्योपदेशः शिक्षणं तस्य दित्सा दातुमिच्छा श्रीसरस्वतीरतिरहस्योपदेशदित्सा........................
...................................................................................

अत्र उशनाः शुक्रो लक्ष्मीभोगशिक्षां दातुं एकस्मिन् कर्णे लग्नः, सरस्वत्या रतिरहस्योपदेशदित्सया वृहस्पतिर्द्वितीये कर्णे लग्नः । यथासंख्यालंकारगर्भित उत्प्रेक्षालंकारः सूचितो भवति । पुनः कथंभूतः सन् कार्याण्यपश्यम् । परेण चाभिजातजनोचितेनाकल्पेनाध्यासितस्वशरीरः न केवलं एतैरेवाभरणैर्मण्डितशरीरोऽहं वर्ते किं तु परेण च कण्ठाभरणयज्ञोपवीतकटिसूत्रादिना च आकल्पेन वेषेण अध्यासितस्वशरीरः मण्डितनिजाङ्गः । कथंभूतेन आकल्पेन । अभिजातजनोचितेन अभिजाताः कुलीनाः ये जनाः लोकास्तेषामुचितेन योग्येन । समन्तादालानितानामपरोत्सर्गं दिग्गजसर्गमिव दर्शयतां दशनकोशारुणमणिमयूखोन्मुखरेखालेखपुनरुच्यमानकुम्भस्थलीसिन्दूरशोभानामनेकपानामनवरतकटकंदरद्रववद्दानसौरभाकृष्यमाणेन्दिन्दिरसुन्दरीकुलकुवलयितगगनापगाभागम् अनेकपानां गजेन्द्राणां संवन्धित्वेन अनवरतं निरन्तरं कटकंदरेभ्यो गण्डस्थलेभ्यो द्रवत् श्च्योतत् यद्दानं मदस्तस्य सौरभं सौगन्ध्यं तेन आकृष्यमाणा आतन्यमाना या इन्दिन्दिराणां सुन्दर्यो भ्रमर्यस्तासां कुलानि समूहास्तैः कुवलयितो नीलोत्पलितो गगनापगायाः आकाशगङ्गायाः भागः प्रदेशो येन मण्डपेन स तथा तम् । कथंभूतानां अनेकपानाम् । समन्तात् सर्वत्र आलानितानां वद्धानाम् । पुनः कथंभूतानां अनेकपानाम् । दशनानां दन्तमुसलानां ये कोशाः वेष्टनखोलकास्तेषां संवन्धिनो ये अरुणमणयो जटितपद्मरागरत्नानि तेषां मयूखाः किरणास्तेषां उन्मुखा ऊर्ध्वं गता या रेखा राजयस्तासामालेखैर्विन्यासैः पुनरुच्यमाना द्विगुणीक्रियमाणा कुम्भस्थलीनां मस्तकपिण्डतटीनां सिन्दूरशोभा गर्भनागाभिख्या येषां ते तथोक्तास्तेषाम् । किं कुर्वतां अनेकपानाम् । दिग्गजसर्गं दिग्मण्डलसृष्टिं अपरोत्सर्गं अपरदिग्गजसर्जनं दर्शयतामिव लोकानां विलोकनं कारयतामिव । पुनः कथंभूतमास्थानमण्डपम् । वाजिनामनिमिषहेषाघोषमुखरितसविधसौधोत्सङ्गम् वाजिनां अश्वानां अनिमेषमनवरतं योऽसौ हे-

रभाकृष्यमाणेन्दिन्दिरसुन्दरीकुलकुवलयितगगनापगाभागम्, इतस्ततः कृतासरलचलस्थानां नेत्रचीनचित्रपटीपटोलरल्लिकाद्यावृतदेहानां प्रतियवसघासचलचामरचुम्ब्यमानलोचनान्तानां मुहुर्मुहुर्विजयपरम्पराप्रतिपादनपरेणेव दक्षिणचरणेन महीतलमुल्लिखतामुत्तालजलधिकल्लोललीलानां वाजिनामनिमेषहेषाघोषमुखरितसविधसौधोत्सङ्गम्, अविरतदह्यमानकालागुरुधूपधूमोद्गमारभ्यमाणदिग्विलासिनीकुन्तलजालम्, उत्तरलतरपताकाप्रतानातन्यमानाम्बरसरोहंसमालम्, उत्तुङ्गतमङ्गश्रृङ्गसंगतानेकमाणिक्योत्कीर्णकलशरुचि-

---

षाघोषो हेषाध्वनिस्तेन मुखरितः वाचालितः सविधानां निकटवर्तिनां सौधानामुत्सङ्गः अङ्को येन स तथा तम्। कथंभूतानां वाजिनाम्। इतस्ततो यत्र तत्र कृता रचिता असरला अपर्यन्ता चलस्था पङ्क्तिर्येषां ते इतस्ततःकृतासरलचलस्थास्तेषाम्। पुनः कथंभूतानां वाजिनाम्। नेत्रचीनचित्रपटीपटोलरल्लिकाद्यावृतदेहानाम् नेत्राणां सूक्ष्मपट्टकूलवारलानां चीनानां चीनदेशोत्पन्नवस्त्राणां चित्रा नानाप्रकारा याः पट्यः सूक्ष्मवस्त्राणि ताश्च पटोलानि च पट्टकूलवस्त्राणि रल्लिकाश्च रक्तादिकम्बलविशेषास्ता आदिर्येषां तैरेवादिप्राणान्तैरावृता वेष्टिता देहाः शरीराणि येषां ते तथा तेषाम्। पुनः कथंभूतानां वाजिनाम्। प्रतियवसघासचलच्चामरचुम्ब्यमानलोचनान्तानाम् यवसस्य तृणस्य योऽसौ घासः कवलश्चर्वणः यवसघासः यवसघासं प्रति प्रतियवसघासं चलन्ति कम्पमानानि चामराणि मस्तकप्रकीर्णकानि तैश्चुम्ब्यमानानि आस्पृश्यमानानि लोचनानां अन्ताः प्रान्ता येषां वाजिनां ते तथा तेषाम्। वाजिनां किं कुर्वताम्। दक्षिणचरणेन अपसव्याग्रपादेन महीतलं भूमितलं उल्लिखतां उत्खनताम्। कथंभूतेन दक्षिणचरणेन। उत्प्रेक्ष्यते—मुहुर्मुहुर्वारंवारं विजयपरम्पराणां शत्रुपराजयनिश्रेणीनां प्रतिपादनपरेणेव सूचनतत्परेणेव। अपरं कथंभूतानां वाजिनाम्। उत्तालजलधिकल्लोललीलानाम् उत्ताला उत्सुकिता ये जलधिकल्लोलाः समुद्रमहातरङ्गास्तेषां लीला शोभा येषां ते तथोक्तास्तेषाम्। पुनः कथंभूतमास्थानमण्डपम्। अविरतदह्यमानकालागुरुधूपधूमोद्गमारभ्यमाणदिग्विलासिनीकुन्तलजालम् अविरतमनवरतं दह्यमानं भस्मीक्रियमाणं यत्कालागुरु कृष्णकाकतुण्डं तस्य धूपस्य योऽसौ धूमः तत्पर्यायान्तरं तस्योद्गमः प्रादुर्भावः तेन आरभ्यमाणानि रच्यमानानि दिग्विलासिनीनां दिग्वधूनां कुन्तलजालानि यत्र मण्डपे स तथा तम्। पुनः कथंभूतमास्थानमण्डपम्। उत्तरलतरपताकाप्रतानातन्यमानाम्बरसरोहंसमालम् उत्तरलतराश्चपलतराः याः पताकाः ध्वजास्तासां प्रतानः समूहस्तेन आतन्यमाना विस्तार्यमाणा अम्बरसरसि आकाशसरोवरे हंसमाला हंससमूहो यत्र येन वा स तथोक्तस्तम्। पुनः कथंभूतमास्थानमण्डपम्। उत्तुङ्गतमङ्गश्रृङ्गसंगतानेकमा-

रच्यमानखेचरीकुचविचित्रपत्रभङ्गम्, अभिनवोत्फुल्लफलितपल्लवान्तरालविलसत्कीरकामिनीपुनरुक्तवन्दनस्रक्प्रसङ्गम्, अन्तरान्तरावलम्बितोत्तरलतारहारमरीचिवीचिचयप्रचाराचर्यमाणसुरसरित्सलिलसेकम्, अतिबहलकालेयकर्दमोन्मृष्टस्फटिककुट्टिमतलप्रवेकम्, अनल्पकर्पूरपरागपरिकल्पितरङ्गावलिविधानम्, ईषदीषदुन्मिषत्कमलमालतीबकुलतिलकमल्लिकाशोकादिकुसुमोपहारामोदमन्दमधुलिहापाद्यमानापरमरकतमयवितर्दिकाप्रतानम्, अ-

---

णिक्योत्कीर्णकलशरुचिररच्यमानखेचरीकुचविचित्रपत्रभङ्गम् उत्तुङ्गः उन्नतो योऽसौ तमङ्गप्रासादस्तस्य शृङ्गाणि शिखराणि तेषु संगता आरोपिता अनेके बहवो ये माणिक्योत्कीर्णकलशा रत्नघटितघटास्तेषां रुचिभिर्दीप्तिभी रच्यमानः क्रियमाणः खेचरीणां देवविद्याधरीणां कुचेषु विचित्रो मनोहरः पत्रभङ्गः पत्रावली यस्मिन् आस्थानमण्डपे स तथा तम् । पुनः कथंभूतमास्थानमण्डपम् । अभिनवोत्फुल्लफलितपल्लवान्तरालविलसत्कीरकामिनीपुनरुक्तवन्दनस्रक्प्रसङ्गम् अभिनवाः प्रत्यग्रा उत्फुल्लाः पुष्पसहिताः फलसहिता ये पल्लवाः वृक्षशाखाग्राणि तेषामन्तरालेषु मध्येषु विलसन्त्यः क्रीडन्त्यो याः कीरकामिन्यः शुकभार्यास्ताभिः पुनरुक्तो द्विगुणीकृतः वन्दनस्रक्प्रसङ्गः वन्दनमालासंततिर्यत्र स तथा तम् । पुनः कथंभूतमास्थानमण्डपम् । अन्तरान्तरावलम्बितोत्तरलतारहारमरीचिवीचिचयप्रचाराचर्यमाणसुरसरित्सलिलसेकम् अन्तरान्तरा मध्ये मध्ये अवलम्बिता आरोपिता उत्तरलाश्चपला महामध्यमणिसहिता वा तारहारा अत्युज्ज्वला ये हारा मुक्ताफलमालास्तेषां मरीचिवीचिचयाः किरणलहरीसमूहास्तेषां प्रचारैः प्रसरैराचर्यमाणः क्रियमाणः सुरसरित्सलिलस्य गङ्गाजलस्य सेकः सेचनं यत्र स तथा तम् । पुनः कथंभूतमास्थानमण्डपम् । अतिबहलकालेयकर्दमोन्मृष्टस्फटिककुट्टिमतलप्रवेकम् अतिबहलः अतिशयेन प्रचुरो योऽसौ कालेयकर्दमः काश्मीरजन्मकेसरद्रवस्तेन उन्मृष्टं संमार्जितं छटकितं यत् स्फटिककुट्टिमतलं काश्मीरोपलबद्धभूमितलं तेन प्रवेकः प्रविभागो यस्य स तथा तम् । पुनः कथंभूतमास्थानमण्डपम् । अनल्पकर्पूरपरागपरिकल्पितरङ्गावलिविधानम् अनल्पेन प्रचुरेण कर्पूरपरागेण घनसारचूर्णेन परिकल्पितं समन्ताद्रचितं रङ्गावलिविधानं चतुष्कपूरणं यत्र स तथोक्तस्तम् । पुनः कथंभूतमास्थानमण्डपम् । ईषदीषदुन्मिषत्कमलमालतीबकुलतिलकमल्लिकाशोकादिकुसुमोपहारामोदमन्दमधुलिहापाद्यमानापरमरकतमयवितर्दिकाप्रतानम्.................................. कमलानि च पङ्केरुहाणि, मालत्यश्च जातीपुष्पाणि, बकुलानि च मदगन्धितरुपुष्पाणि, तिलकानि च पुरुषतरुपुष्पाणि, मल्लिकाश्च मुक्तबन्धनपुष्पाणि, अशोकानि च श्रीवृक्षपुष्पाणि, आदिर्येषां चम्पकादीनां तानि कमलमालतीबकुलतिलकमल्लिकाशोकादीनि तानि च तानि कुसुमानि तेषामुपहारः पूजनं तस्यामोदेन परिमलेन मन्दास्तल्लीना ये मधुलिहा भ्रमरास्तैरापाद्यमा-

वलगनागच्छदगण्यपण्याङ्गनास्तनतुङ्गिमोत्सार्यमाणमार्गपरिजनवलम्, उच्चैस्तरोच्चार्यमाणजयजीवितयशःप्रकाशनाशीर्वाद्विदग्धवन्दिवृन्दवदनोच्छलत्कलकोलाहलम्, उदीर्णमणिस्तम्भिकामध्यप्रसाधितसिंहासनम्, अमरतरुपरिकरं मेरुशिखरमिव, लक्ष्मीकटाक्षवलक्षोभयपक्षविक्षिप्यमाणचामरपरम्परम्, अमृतोदधिदेवतापाङ्गद्विगुणतरङ्गप्रसराकुलं कुलशैलमिव, उपरिविततसितदुकूलवितानम्, उदितेन्दुमण्डलमुदयाचलमिव, अध ऊर्ध्वं

---

नोऽपरो द्वितीयो मरकतमयः कीरपक्षनिभरत्नभूमयो वितर्दिकाप्रतानो वेदिकाविस्तारो यत्र स तथा तम्। उक्तं च—'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः। कालं च नीलं च मेचकम्' इति वचनात्। पुष्परागोद्धूलिता भ्रमरास्तादृशाः संजाताः। पुनः कथंभूतमास्थानमण्डपम्। अवलगनागच्छदगण्यपण्याङ्गनास्तनतुङ्गिमोत्सार्यमाणमार्गपरिजनवलम् अवलगने सेवायां आगच्छन्त्यः उपढौकमानाः याः अगण्यपण्याङ्गनाः गणनातीता वेश्यास्तासां स्तनतुङ्गिम्ना कुचोच्चत्वेनोत्सार्यमाणः प्रेर्यमाणः………………
……………उत्पद्यमाना ये जयजीवितयशःप्रकाशनाशीर्वादाः जयश्च अपराजयः, जीवितं च दीर्घायुष्कता, यशश्च पुण्यगुणानुकीर्तनं तेषां प्रकाशनाः प्रकटनपराः आशीर्वादा आशीर्वचनानि तेषु विदग्धाश्चतुरा वन्दिनः स्तुतिपाठकाः अब्राह्मणभट्टास्तेषां वृन्दानि समूहास्तेषां वदनानि मुखानि तेषु उच्छलन्तः कलाः मधुराः कर्णामृतप्रायाः कोलाहलाः कलकलशब्दा यत्र स तथोक्तः। पुनः कथंभूतमास्थानमण्डपम्। उदीर्णमणिस्तम्भिकामध्यप्रसाधितसिंहासनम् उदीर्णा उन्नता या मणिस्तम्भिका रत्नानामल्पस्तम्भास्तेषां मध्ये अन्तर्भागे प्रसाधितं शृङ्गारितं सिंहासनं हर्यक्षविष्टरं यस्मिन् स तथा तम्। पुनः कथंभूतमास्थानमण्डपम्। अमरतरुपरिकरं मेरुशिखरमिव कल्पवृक्षपरिवेष्टितं रत्नसानुमस्तकमिव। पुनः कथंभूतमास्थानमण्डपम्। लक्ष्मीकटाक्षवलक्षोभयपक्षविक्षिप्यमाणचामरपरम्परम् लक्ष्मीकटाक्षवत् लक्ष्म्यपाङ्गावलोकनवद्वलक्षा उज्ज्वला उभयपक्षयोः सव्यासव्यपार्श्वयोर्विक्षिप्यमाणा विविधवीज्यमाना चामरपरम्परा प्रकीर्णकश्रेणिर्यत्र मण्डपे स तथा तम्। पुनः कथंभूतमास्थानमण्डपम्। कुलशैलमिव कुलपर्वतमिव। कथंभूतं कुलशैलम्। अमृतोदधिदेवतापाङ्गद्विगुणतरङ्गप्रसराकुलम् अमृतोदधिः क्षीरोदसागरस्तस्य संबन्धिन्यो याः देवतास्तासामपाङ्गैर्लोचनप्रान्तैर्द्विगुणा द्विरुक्ता ये तरङ्गाः कल्लोलास्तेषां प्रसरा विस्तारास्तैराकुलो व्याप्तस्तम्। पुनः कथंभूतमास्थानमण्डपम्। उपरिविततसितदुकूलवितानम् उपरि राजमस्तकोपरितनभागे विततं विस्तारितं सितदुकूलवितानं शुक्लपट्टकूलचन्द्रोपकं यत्र स तथा तम्। पुनः कथंभूतमास्थानमण्डपम्। उदितेन्दुमण्डलम् उदितं उदयं प्राप्तमिन्दुमण्डलं चन्द्रबिम्बं यस्मिन् उदयाचले स उदितेन्दुमण्डलस्तं ईदृविधं उदयाचलमिव

भित्तीनां च रत्नफलकभागेषु प्रतिबिम्बितोपासनागतसमस्तसामन्तसमाजम्, असुरामरदिक्पालदत्तयात्राभाजमिव, विविधमणिविन्यासविहितबहुरूपाकृते रङ्गस्यावलोकनाद्भीतभूपालबालकाकुलितसौविदल्लम्, आखण्डलसभाप्रतिमल्लम्, 'मा भजत वैकृतमाकल्पम्, विजहीत धनयौवनमदोल्लासितानि टिरिटिल्लितानि, प्रविशतानधिकृतमनीषाः पुरुषाः, समाध्वमसंबाधमात्मभूमिकायाम्, मा कथयत मिथःप्रजल्पोत्पथाः कथाः, प्रमुञ्चत चापलं

---

उदयाचलसदृशमास्थानमण्डपम् । पुनः कथंभूतमास्थानमण्डपम् । अध ऊर्ध्वं अधस्तनभागे ऊर्ध्वभागे च भित्तीनां कुड्यानां रत्नफलकभागेषु माणिक्यपट्टकदेशेषु प्रतिबिम्बितोपासनागतसमस्तसामन्तसमाजम् प्रतिबिम्बितः प्रतिच्छायामागत उपासनागतानां सेवासमागतानां समस्तानां समग्राणां सामन्तानां देशपतीनां राज्ञां समाजः समूहो यत्र आस्थानमण्डपे स तथा तम् । पुनः कथंभूतमास्थानमण्डपम् । असुरामरदिक्पालदत्तयात्राभाजमिव ये अधः प्रतिबिम्बितास्ते दिक्पालस्थानीया ये देवास्तैर्दत्ता कृता यात्रा गमनं तां भजते श्रयतीति असुरामरदिक्पालदत्तयात्राभाक् तम् । पुनः कथंभूतमास्थानमण्डपम् । विविधमणिविन्यासविहितबहुरूपाकृते रङ्गस्यावलोकनाद्भीतभूपालबालकाकुलितसौविदल्लम् रङ्गस्यावलोकनात् अग्रभूमेरवलोकनाद्दर्शनात् भीता भयं प्राप्ता ये भूपालानां बालकाः सामन्तानां शिशवस्तैराकुलिताः खेदं प्रापिताः सौविदल्लाः स्थापत्या यस्मिन् मण्डपे तथा तम् । भूपालबालकाः कस्माद्भीताः तद्धेतुगर्भितं विशेषणमाह—कथंभूतस्य रङ्गस्य । विविधमणिविन्यासैर्नानारत्ननिर्मितैर्विहितानि कृतानि बहूनि रूपाणि सिंहव्याघ्रादीनां रूपाणि तेषामाकृतिराकारो यस्मिन् रङ्गे स तथा तस्य । पुनः कथंभूतमास्थानमण्डपम् । आखण्डलसभाप्रतिमल्लम् । सुधर्मपरिषत्समानमित्यर्थः । पुनः कथंभूतमास्थानमण्डपम् । इति अमुना प्रकारेण इतस्ततो यत्र तत्र टीकमानैः संचरद्भिः याष्टीकैः प्रतीहारैर्विनीयमानानुकसेवकम् विनीयमानाः शिक्ष्यमाणा अनुकसेवकाः प्रत्यासन्नसेवका यत्र स विनीयमानानुकसेवकस्तम् । इतीति किम् । मा भजत मा गृह्णीत वैकृतं सविकारमाकल्पं वेषम् । टिरिटिल्लितानि आत्मनः अनुचितव्यवहारान् विजहीत विशेषेण मुञ्चत यूयम् । कथंभूतानि टिरिटिल्लितानि । धनयौवनमदोल्लासितानि धनं च स्वापतेयम्, यौवनं च तारुण्यम्, तयोर्मदश्चित्तोल्लासो गर्वस्तेन उल्लासितानि प्रादुर्भावितानि धनयौवनमदोल्लासितानि । अनधिकृतमनीषाः अनियोगबुद्धयः पुरुषाः जनाः, मा प्रविशत प्रवेशं मा कुरुत यूयम् । असंबाधं सावकाशं यथा भवत्येवं आत्मभूमिकायां निजस्थानेषु समाध्वं तिष्ठतो यूयं विशत यूयम् । 'यस्य घे' इति पाणिनिसूत्रेण सकारलोपः, यदि कातन्त्रव्याकरणाभिप्रायेण लुप्यते 'न दधटां तृतीय—' इति सूत्रेण सस्य दो भवति तेन समाध्व(द्ध्व)मिति संयोगाक्षरं निष्पद्यते । कथा वार्ता मा कथयत यूयम् । कथंभूताः कथाः । मिथःप्रजल्पो-

मनोमर्कटस्य, मा कुरुत पारिप्लवप्लुतानिमानिन्द्रियहयान्, केवलं किं प्रक्ष्यति, किं प्रवक्ष्यति, किमादिक्ष्यति, किं वा स्रक्ष्यति विनियोगजातं देव इत्येकायनमनसो निरीक्षध्वं देवस्य वदनम्' इतीतस्ततष्टीकमानैर्याष्टीकैर्विनीयमानानुकसेवकम्, अतिविधीयमानागन्तुकम्, अखिललोकलोचनेन्दीवरानन्दचन्द्रमसं लक्ष्मीविलासतामरसं नाम बुधप्रकाण्डमण्डलीविधीयमानघर्मागमालापमास्थानमण्डपमास्थाय निःसङ्गीकृतद्वारदेशः स्वयमेव यथादेशरूपमनुत्पिञ्जलमनाः सकलविद्याव्यवहारवेदिभिर्विगतसर्वपथीनन्यायद्वापरैर्दृष्टश्रुतानेकाचारविचारिलोकैः सत्यवादिभिस्तमोपहालोकैरिव यथा-

---

त्पथाः मिथः परस्परं जल्पः प्रभाषणं उत्पथ उन्मार्गो यासु तास्तथोक्ताः। मनोमर्कटस्य चित्तशाखामृगस्य चापलं चपलत्वं प्रमुञ्चत प्रकर्षेण दूरीकुरुत यूयम्। इमान् प्रत्यक्षीभूतान् इन्द्रियहयान् स्पर्शनादितुरगान् वाक्पाणिपादादीन् वा पारिप्लवप्लुतान् चञ्चलत्वोत्फालान् मा कुरुत मा विदधीध्वं यूयम्। सेवका ब्रुवन्ति यद्येवं न कुर्मस्तर्हि किं कुर्म इति चेत् इति अमुना प्रकारेण केवलं देवस्य यशोधरमहाराजस्य वदनं मुखं एकायनमनसः एकाग्रचित्ताः सन्तो निरीक्षध्वं अवलोकयत। कथंभूताः कथाः निरीक्षध्वम्। देवः किं विनियोगजातमधिकारसमूहं प्रक्ष्यति किमनुयोक्ष्यति प्रश्नं करिष्यति। देवः किं प्रवक्ष्यति। देवः किमादिक्ष्यति किमादेशं दास्यति। वा अथवा किं स्रक्ष्यति कां सृष्टिं करिष्यति। पुनः कथंभूतमास्थानमण्डपम्। अतिविधीयमानाः अन्विष्यमाणाः अवलोक्यमाना आगन्तुकाः नवतरपुरुषाः यस्मिन् मण्डपे स तथा तम्। पुनः कथंभूतमास्थानमण्डपम्। अखिललोकलोचनेन्दीवरानन्दचन्द्रमसम्। अखिलानां लोकानां लोचनानि तान्येव इन्दीवराणि नीलोत्पलानि तेषामानन्दे हर्षोत्पादने विकासने चन्द्रमाः शशाङ्कस्तम्। कथंभूतः सन् कार्याणि अपश्यम्। निःसङ्गीकृतद्वारदेशः अनिषिद्धजनप्रवेशः। अहं कार्याणि कथं अपश्यम्। यथादेशरूपं यथान्यायं भवत्येवम्। कथंभूतोऽहम्। अनुत्पिञ्जलमनाः अनाकुलितचित्तः। कथंभूतैर्धर्मस्थैः। सकलविद्याव्यवहारवेदिभिः सकलाः समस्ता या विद्याश्चतुर्दशविद्यास्तासां व्यवहारः प्रवर्तनं विदन्ति जानन्तीत्येवंशीलास्ते तथा तैः। कास्ताः चतुर्दशविद्या इति केचित्—'षडङ्गानि चतुर्वेदा मीमांसा न्यायविस्तरः। धर्मशास्त्रं पुराणं च विद्याश्चैताश्चतुर्दश॥' शिक्षा कल्पो व्याकरणं ज्योतिषं छन्दो निरुक्तं चेति वेदानां अङ्गानि षट्। चत्वारो वेदाः प्रसिद्धाः। पुनः कथंभूतैर्धर्मस्थैः। विगतसर्वपथीनन्यायद्वापरैः सर्वपथीनाः सर्वमार्गानुसारास्तेषां न्यायो नीतिर्व्यवहारो विगतो विनष्टः सर्वपथीनन्यायस्य द्वापरः संदेहो येषां ते तथा तैः। उक्तं च—'विचिकित्सा तु संशयः। संदेहद्वापरौ च'। पुनः कथंभूतैर्धर्मस्थैः। दृष्टश्रुतानेकाचारविचारिलोकैः दृष्टा लोचनाभ्यां प्रत्यक्षीकृताः श्रुताः कर्णैराकर्णिताः अनेकेषामाचाराणां विचारिणो लोकाः

र्थदर्शनस्थैर्धर्मस्थैः सह सर्वेषामाश्रमिणामितरव्यवहारविश्रामिणां च कार्याण्यपश्यम्। दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यतेऽतिसंधीयते च द्विषद्भिः। न हि नियोगिनामसतीजनानामिव भर्तुर्व्यसनादपरः प्रायेणास्ति जीवनोपायः। स्वामिनो वा नियुक्तानां स्त्रीणामिवातिप्रसरणनिवारणात्। भवन्ति चात्र श्लोकाः—

नियुक्तहस्तार्पितराज्यभारास्तिष्ठन्ति ये स्वैरविहारसाराः।
बिडालवृन्दाहितदुग्धमुद्राः स्वपन्ति ते मूढधियः क्षितीन्द्राः॥ २३ ॥
ज्ञायेत मार्गः सलिले तिमीनां पतत्रिणां व्योम्नि कदाचिदेषः।
अध्यक्षसिद्धेऽपि कृतावलोपा न ज्ञायतेऽमात्यजनस्य वृत्तिः॥ २४ ॥

---

वृद्धविद्वांसो यैस्ते तथा तैः। पुनः कथंभूतैर्धर्मस्थैः। सत्यवादिभिः यथोक्तकथकैः। पुनः कथंभूतैर्धर्मस्थैः। तमोपहालोकैरिव तमोपहस्य सूर्यस्य आलोका उद्द्योताः तमोपहलोकाः तैः श्रीभास्करद्योतसदृशैः। कार्याणि स्वयं कस्मादपश्यं तत्कारणमाह—हि यस्मात् कारणात् राजा पृथिवीपतिर्दुर्दर्शः दुःखेन महता कष्टेन द्रष्टुमशक्यो दुर्दर्शः। 'ईषद्दुःसुषु' इति कृच्छ्रार्थे खल्। आसन्नैः पुरुषैः कार्याकार्यविपर्यासं कृत्यं वैपरीत्यं कार्यते निर्धार्यते द्विषद्भिः शत्रुभिश्च राजा अतिसंधीयते पराभूयते। हि यस्मात् कारणात् नियोगिनां मन्त्रिणां भर्तुर्नरेन्द्रस्य व्यसनात् दुःखात् अपरः कोऽपि जीवनोपायः जीवनहेतुः प्रायेण बाहुल्येन न नास्ति। किंतु स्वामिनो व्यसनमेव नियोगिनां जीवनोपायः। केषामिव जीवनोपायो नास्ति। असतीजनानामिव पुंश्चलीलोकवत्। यथा पुंश्चलीलोकानां कान्तस्य व्यसने सति स्वेच्छया पर्यटनं भवति। स्वामिनो वा राज्ञः नियुक्तानां नियोगिनां अतिप्रसरणनिवारणात् अतिव्याप्तिनिषेधनादन्यो अपरः कोऽपि प्रायेण जीवनोपायो नास्ति। कासामिव। स्त्रीणामिव यथा स्त्रीणां अतिप्रसरणनिवारणात् अपरः स्वामिनो जीवनोपायो नास्ति। भवन्ति चात्र श्लोकाः वृत्तानि भवन्ति॥

**नियुक्तेत्यादि**। ये क्षितीन्द्राः ये राजानो नियुक्तहस्तार्पितराज्यभाराः नियोगिनां मन्त्रिणां हस्ते अर्पितो दत्तो राज्यभारो यैस्ते तथोक्ताः तिष्ठन्ति आसते। कथंभूताः सन्तस्तिष्ठन्ति। स्वैरविहारसाराः स्वैरविहारः स्वेच्छाप्रवर्तनं सारो मनोनुरञ्जनो येषां ते तथोक्ताः। ते क्षितीन्द्राः मूढधियो निर्विवेकाः स्वपन्ति निद्रां कुर्वन्ति। कथंभूताः सन्तः स्वपन्ति। बिडालवृन्दाहितदुग्धमुद्राः बिडालानां मार्जाराणां वृन्देषु आहिता आरोपिता दुग्धरक्षणे मुद्रा साक्षरमङ्गुलिभूषणं यैस्ते तथोक्ताः। बिडालवृन्देषु दुग्धरक्षाधिकारं दत्त्वा स्वपन्ति निश्चिन्ताः सन्तो निद्रां कुर्वन्ति। दृष्टान्तालंकारः। आक्षेपो वा॥

**ज्ञायेतेत्यादि**। तिमीनां मत्स्यानां मार्गः सलिले ज्ञायेत विद्येत। पतत्रिणां प-

व्याधिवृद्धौ यथा वैद्यः श्रीमतामाहितोद्यमः।
व्यसनेषु तथा राज्ञः कृतयत्ना नियोगिनः ॥ २५ ॥
नियोगिभिर्विना नास्ति राज्यं भूपे हि केवले।
तस्मादमी विधातव्या रक्षितव्याश्च यत्नतः ॥ २६ ॥
कदाचित्सचिवसेवावसरानुकूलेषु मन्त्रकालेषु

---

क्षिणामेष मार्गो व्योम्न्याकाशे कदाचित् कस्मिंश्चित्काले ज्ञायेत बुध्येत। परं अमात्यजनस्य वृत्तिः मन्त्रिलोकस्य वृत्तिराचारो न ज्ञायते नावबुध्यते। कथंभूता अमात्यजनस्य वृत्तिः। अध्यक्षसिद्धेऽपि प्रत्यक्षनिष्पन्नेऽपि। कर्तव्ये इत्यध्याहारः। कृतावलोपा कृतो रचितः अवलोपः समन्ताददर्शनं यया सा तथोक्ता। स्वभावोक्तिजात्यलंकारः॥

**व्याधिवृद्धावित्यादि।** यथा येन प्रकारेण वैद्यो भिषक् श्रीमतां लक्ष्मीवत्पुरुषाणां व्याधिवृद्धौ रोगवर्धने आहितोद्यमः रचितोपायो भवति, तथा तेन प्रकारेण नियोगिनो मन्त्रिणो राज्ञो नृपस्य व्यसनेषु दुःखोपनिपातेषु कृतयत्ना भवन्ति रचितोपाया भवन्ति। दृष्टान्तालंकारः। उपमा वा॥

**नियोगिभिरित्यादि।** नियोगिभिर्विना सचिवैरन्तरेण केवले भूपे भूपाले राज्यं नास्ति न विद्यते। कथम्। हि स्फुटं निश्चयेन। तस्मात् कारणात् अमी नियोगिनो विधातव्याः कर्तव्याः यत्नतः सावधानतया रक्षितव्याश्च रक्षणीया भवन्ति। जात्यलंकारः॥

कदाचित्कस्मिंश्चिदवसरे मन्त्रकालेषु पञ्चविधमन्त्रावसरेषु यथाकालं अवसरस्यानतिक्रमणेन षडपि षट्संख्योपेतानपि गुणान् संधिविग्रहयानासनसंश्रयद्वैधीभावसंज्ञान् अन्वतिष्ठं अनुष्ठितवानहं चकार। कथंभूतेषु मन्त्रकालेषु। सचिवसेवावसरानुकूलेषु सचिवानां मन्त्रिणां सेवा आराधनं तस्या अवसरः कालस्तस्य अनुकूलिता ये मन्त्रकालास्ते तथोक्तास्तेषु। किं कृत्वा पूर्वं षड्गुणानन्वतिष्ठम्। इति अमुना प्रकारेण दैववादिनः पुण्यकर्मस्थापकस्य विद्यामहोदधेः विद्यामहोदधिनामकात् सचिवात् मन्त्रिणः सकाशात् इतिकर्तव्यताक्रियां कार्यनिर्धारकरणं हस्तेकृत्य गृहीत्वा। कथंभूतां इतिकर्तव्यताक्रियाम्। गाङ्गेयोर्मिकां लक्ष्मीमुद्राङ्काम्। लक्ष्मीमुद्राया अङ्कश्चिह्नं यस्यां सा लक्ष्मीमुद्राङ्का ताम्। कथंभूतः सन् षड्गुणानन्वतिष्ठम्। प्रतिपन्नधर्मविजयैकभावः। विजिगीषवस्तावत्त्रयो वर्तन्ते—धर्मविजयी लोभविजयी ······चेति। तत्र धर्मविजयी शत्रोः पादपतनमात्रेण तुष्यति, लोभविजयी शत्रोः सर्वं संगृहीत्वा तुष्यति,················। तेषु त्रिविधेष्वपि विजयिष्वहं कथंभूतः। प्रतिपन्नधर्मविजयैकभावः प्रतिपन्नोऽङ्गीकृतो धर्मविजयिनो नरेन्द्रस्य एको निष्केवलो भावः परिणामो येन स तथोक्तः। क इव। सत्यवागिव यतिरिव। यथा यतिः धर्मे विजयमेकमद्वितीयं भावं प्रतिपद्यते इति क्रियाकारकसंबन्धः। इतीति किम्। विद्यामहोदधिरेवं कथयति। एवं कथमिति चेत्—

विशोधय महीपाल मन्त्रशालामशेषतः ।
अयुक्तोऽर्हति न स्थातुमस्यां रतिरहस्यवत् ॥ २७ ॥

यतः—

एकं विषरसो हन्ति शस्त्रेणैकश्च हन्यते ।
सबन्धुराष्ट्रं राजानं हन्त्येको मन्त्रविप्लवः ॥ २८ ॥

तव तेजोनिधेर्देव सर्वलोकैकचक्षुषः ।
को नाम दर्शयेन्मन्त्रं प्रदीपं द्युमणेरिव ॥ २९ ॥

चन्द्रादिवाम्बु तत्कान्ते सूर्यात्तेजस्तदश्मनि ।
त्वत्तो गुणनिधेर्नाथ मतिर्मादृशि जायते ॥ ३० ॥

---

**विशोधयेत्यादि** । हे महीपाल पृथ्वीपते, मन्त्रशालां मन्त्रगृहं अशेषतः सर्वप्रकारेण विशोधय मन्त्रशालायामनधिकारिणं पुरुषं निष्काशय। अस्यां मन्त्रशालायामयुक्तः पुमान् मन्त्रभेदको जीवः स्थातुं स्थितिं कर्तुं नार्हति न योग्यो भवति। किंवत्। रतिरहस्यवत्। यथा रतिरहस्ये संभोगक्रीडायां अयुक्तो न स्थातुमर्हति । उपमैव ॥

यतो यस्मात् कारणात्। **एकमित्यादि** । विषरसो हालाहलद्रवः एकं पुरुषं हन्ति मारयति । शस्त्रेण च आयुधेन च एकः पुमान् हन्यते मार्यते । मन्त्रविप्लवो मन्त्रभेद एकोऽद्वितीयो राजानं नृपं हन्ति मारयति । कथंभूतं राजानम् । सबन्धुराष्ट्रम् बन्धवश्च कुटुम्बवर्गः राष्ट्रं च देशः बन्धुराष्ट्रैः सह वर्तते इति सबन्धुराष्ट्रस्तम्। व्यतिरेकालंकारः ॥

**तवेत्यादि** । विद्यामहोदधिः सचिवः प्राह—हे देव राजन्। नामेति संभावनायाम्। कः पुमान् तव मन्त्रं दर्शयेत् ज्ञापयेत्। अपि तु न कश्चिद्दर्शयेदित्यर्थः । कथंभूतस्य तव। तेजोनिधेः ज्ञाननिधानस्य । पुनः कथंभूतस्य तव। सर्वलोकैकचक्षुषः सर्वेषां लोकानामेकमद्वितीयं चक्षुर्लोचनं सर्वलोकैकचक्षुस्तस्य । कस्य कमिव । द्युमणेः श्रीसूर्यस्य प्रदीपमिव ज्योतिरिव । यथा द्युमणेः सर्वलोकलोचनप्रायस्य प्रदीपं कः पुमान् दर्शयति । अपि तु न कश्चित् । दृष्टान्तालंकारः ॥

**चन्द्रादित्यादि** । हे नाथ हे राजन्, त्वत्तो भवत्सकाशात् मादृशि मल्लक्षणे जने मतिर्बुद्धिः जायते उत्पद्यते । कथंभूतात्त्वत्तः । गुणनिधेर्ज्ञाननिधानात् । कस्मात् किमिव । चन्द्रात् तत्कान्ते चन्द्रकान्तमणौ अम्बु द्रवमिव जलमिव । यथा चन्द्रकान्ते मणौ चन्द्रादम्बु जायते तथा त्वत्तोऽस्मासु मतिरुत्पद्यते। पुनः कस्मात् किमिव । सूर्यात् तदश्मनि सूर्यकान्तमणौ तेज इव उद्द्योत इव । यथा सूर्यकान्तरत्ने सूर्यात् तेज उत्पद्यते । उपमालंकारः दृष्टान्तो वा ॥

स्वस्यैव बुद्धिशुद्ध्यर्थं किं तु किंचिन्निगद्यते ।
निकषाश्मोपकाराय न सुवर्णपरीक्षणम् ॥ ३१ ॥
स्वयं नयानभिज्ञस्य निसर्गात्सज्जनद्विषः ।
पुरः क्षितिपतेर्नाम मौनं मान्यैर्विधीयते ॥ ३२ ॥
समस्तशास्त्रसंदर्भप्रगल्भप्रतिभे त्वयि ।
सल्लोकलोचनानन्दे को हि वाचंयमक्रियः ॥ ३३ ॥

किं च—

उक्ते युक्तेऽपि यः स्वामी विपर्यस्येद्दुराग्रहात् ।
प्रत्यर्थिवेदिवेतण्डसमे तत्र क ईश्वरः ॥ ३४ ॥

---

स्वस्येत्यादि । हे राजन्, स्वयमात्मना किंतु किंचित् मनाक् निगद्यते विज्ञाप्यते । किमर्थम् । स्वस्यैव आत्मन एव बुद्धिशुद्ध्यर्थं बुद्धिविज्ञापनार्थम् । युक्तोऽयमर्थः । सुवर्णपरीक्षणं कनककर्षणं निकषाश्मोपकाराय कषपट्टिकापाषाणस्य उपकाराय न भवति । अर्थान्तरन्यासालंकारः ॥

स्वयमित्यादि । हे राजन्, स्वयमात्मना नयानभिज्ञस्य नयो हिताहितलाभपरिहारोपायः तं न अभिजानाति इति नयानभिज्ञस्तस्य नीतिशास्त्राविज्ञापकस्य निसर्गात् स्वभावेन सज्जनद्विषः सज्जनान् द्वेष्टीति सज्जनद्विट् तस्य सज्जनद्विषः एवं विशेषणद्वयविशिष्टस्य क्षितिपतेर्नरेन्द्रस्य पुरोऽग्रतः । नामेति संभावनायां संबोधने वा । मान्यैर्ज्ञानवद्भिः मनो ज्ञानं तत्र नियुक्ता मान्यास्तैर्मान्यैः मौनं मूकत्वं विधीयते । जात्यलंकारः ॥

समस्तेत्यादि । हे राजन्, त्वयि भवति वाचंयमक्रियः मौनवान् पुमान् को भवति । अपि तु न कश्चित् भवति । कथम् । हि स्फुटम् । कथंभूते त्वयि । समस्तशास्त्रसंदर्भप्रगल्भप्रतिभे समस्तानां समग्राणां शास्त्राणां धर्मार्थकाममोक्षग्रन्थानां संदर्भः समूहस्तस्मिन् प्रगल्भा प्रौढा कुशाग्रीया अन्तर्भेदिनी प्रतिभा बुद्धिर्यस्य स तथोक्तस्तस्मिन् । पुनः कथंभूते त्वयि । सन्तो विद्वांसस्ते लोकाः सल्लोकाः । विद्वज्जना इत्यर्थः । तेषां लोचनानि तेषामानन्दः सल्लोकलोचनानन्दस्तस्मिन् । आक्षेपालंकारः ॥

किं च—उक्ते इत्यादि । यः स्वामी यो राजा युक्तेऽप्युक्ते हिते दुराग्रहात् दुष्टाभिप्रायात् कारणात् विपर्यस्येत् विपरीतं मन्यते । तत्र तस्मिन् राजनि कः पुमान् संबोधयितुं समर्थः । यः संबोधयति स एव म्रियत इत्यर्थः । कथंभूते तत्र स्वामिनि । प्रत्यर्थिवेदिवेतण्डसमे प्रत्यर्थिनं शत्रुं वेत्त्येवंशीलः प्रत्यर्थिवेदी स चासौ वेतण्डो गजस्तेन समः सदृशः प्रत्यर्थिवेदिवेतण्डसमस्तस्मिन् । यथा प्रत्यर्थिवेदी गजो यः कश्चित् हितं शिक्षयति तमेव शत्रुं ज्ञात्वा मारयति । उपमाक्षेपालंकारः ॥

दैवमादौ ततोऽमीषां ग्रहाणामनुकूलताम् ।
स्वं च धर्मानुबन्धं च विचिन्त्योत्सहतां नृपः ॥ ३५ ॥
आगर्भाच्छ्रीरियं यावद्येन चिन्ता कृता पुरा ।
तद्दैवमुत्तरत्रापि जागरिष्यति देहिनाम् ॥ ३६ ॥
एवमेव परं लोकः क्लिश्नात्यात्मानमात्मना ।
यदत्र लिखितं भाले तत्स्थितस्यापि जायते ॥ ३७ ॥
मघोनस्त्रिदिवैश्वर्ये शेषस्योद्धरणे भुवः ।
को नाम पौरुषारम्भस्तदत्र शरणं विधिः ॥ ३८ ॥
तस्माद्यथासुखं देवः श्रियमानयतामिमाम् ।
रिक्तः सुखैर्गतः कालः पुनर्नायाति जन्तुषु ॥ ३९ ॥

---

**दैवमित्यादि** । नृपो राजा उत्साहतां करोतु । किं कृत्वा । पूर्वं आदौ प्रथमतः दैवं पूर्वभवपुण्यं विचिन्त्य पर्यालोच्य । ततस्तदनन्तरं अमीषां प्रत्यक्षीभूतानां ग्रहाणामादित्यादीनां अनुकूलतां उच्चादित्वं विचिन्त्य च । अन्यत् । स्वमात्मानं धनं वा विचिन्त्य । अन्यत् धर्मानुबन्धं धर्मस्य अनुबन्धं अविरोधकत्वं विचिन्त्य सम्यग् विचार्य । समुच्चयालंकारः ॥

**आगर्भादित्यादि** । आगर्भात् (स्व)गर्भमादिं कृत्वा इयं प्रत्यक्षीभूता यावत् श्रीः राज्यलक्ष्मीः येन पुरा दैवेन पूर्वपुण्येन चिन्ता लक्ष्मीरुपढौकिता तद्दैवं पूर्वोपार्जितं पुण्यं देहिनां जीवानां उत्तरत्रापि आगामिनि काले जागरिष्यति सावधानं भविष्यति । अनुमानालंकारः ॥

**एवमेवेत्यादि** । हे राजन्, लोको जनः एवमेव वृथैव परं केवलं आत्मानं निजजीवं क्लिश्नाति दुःखयति । अत्र अस्मिन् संसारे यद्भाले ललाटे लिखितं तत् स्थितस्यापि उद्यमरहितस्यापि जायते उत्पद्यते । अनुमानालंकारः ॥

**मघोन इत्यादि** । हे राजन्, मघोनः मघवतः शक्रस्य त्रिदिवैश्वर्ये स्वर्गराज्ये शेषस्य धरणेन्द्रस्य भुवः पृथिव्याः उद्धरणे उच्चलने । नामेति संभावनायाम् । कः पौरुषारम्भः । तत्तस्मात् कारणात् अत्र अस्मिन् संसारे विधिर्दैवमेव शरणं आर्तिमथनसमर्थः । आक्षेपालंकारः ॥

**तस्मादित्यादि** । हे राजन्, तस्मात् देवो राजा इमां प्रत्यक्षीभूतां श्रियं राज्यलक्ष्मीमानयतां भुङ्क्ताम् । कथम् । यथासुखं सुखस्यानतिक्रमणेन सुखैः रिक्तः कालः सौख्यैः रहितः कालो यदि गतस्तर्हि जन्तुषु जीवेषु पुनर्भूयोऽपि नायाति नागच्छति । अनुमानालंकारः ॥

वार्तयापि हि शत्रूणां प्रक्षुभ्यति मनोम्बुधिः।
कस्तान्दृष्टिपथे कुर्यान्नरः कुम्भीनसानिव ॥ ४० ॥
दुर्गं मन्दरकन्दराणि परिधिस्ते गोत्रधात्रीधराः
खेयं सप्तपयोधयः स्वविषयः स्वर्गः सुराः सैनिकाः।
मन्त्री चास्य गुरुस्तथाप्ययमगात्प्रायः परेषां वशं
दैवाद्देवपतिस्तदत्र नृप किं तन्त्रेण मन्त्रेण वा ॥ ४१ ॥
या नैव लभ्या त्रिदशानुवृत्त्या मनोरथैरप्यनवापनीया।
सा देव लक्ष्मीः स्वयमागतेयं निषेव्यतामत्र सुखेन सौधे ॥ ४२ ॥
यस्तत्प्रसादादधिगम्य लक्ष्मीं धर्मे पुनर्मन्दतरादरः स्यात्।
तस्मात्कृतघ्नः किमिहापरोऽस्ति रिक्तः पुरोजन्मनि वा मनुष्यः ॥ ४३ ॥

---

**वार्तयेत्यादि**। हे राजन्, शत्रूणां अनभिमतानां वार्तयापि न केवलं युद्धेन मनोम्बुधिश्चित्तसागरः प्रक्षुभ्यति चलति तान् शत्रून् को नरः पुरुषो दृष्टिपथे लोचनगोचरे कुर्याद्विदध्यात्। अपि तु न कश्चन कुर्यादित्यर्थः। कथंभूतान् तान् शत्रून्। कुम्भीनसानिव सर्पसदृशान्। आक्षेपोपमालंकारः ॥

**दुर्गमित्यादि**। हे नृप हे राजन्, अयं प्रत्यक्षीभूतो देवपतिर्देवेन्द्रः प्रायो बाहुल्येन तथापि तदपि दैवात् कर्मयोगात् परेषां शत्रूणां वशं पराधीनत्वं अगाज्जगाम। तथापि कथम्। यद्यपि अस्य देवपतेः मन्दरकन्दराणि मेरुविवराणि दुर्गं वर्तते। ते जगत्प्रसिद्धा गोत्रधात्रीधराः कुलपर्वताः परिधिः प्राकारो वर्तते। सप्तपयोधयः सप्तसमुद्राः खेयं खातिका वर्तते। स्वविषयो निजो देशः स्वर्गलोको वर्तते। सैनिकाः किंकराः सुराः देवाः वर्तन्ते। गुरुर्बृहस्पतिः मन्त्राय धीसचिवो वर्तते। ततस्तस्मात् कारणात् अत्र अस्मिन् संसारे तन्त्रेण सैन्येन मन्त्रेण वा पञ्चाङ्गमन्त्रेण किम्। न किमपि। दैवमेवात्र प्रधानमित्यर्थः। समुच्चयालंकारः ॥

**या नैवेत्यादि**। हे देव हे राजन्, सा जगत्प्रसिद्धा इयं प्रत्यक्षीभूता लक्ष्मी राज्यलक्ष्मीः स्वयमागता वर्तते। यदि स्वयमेवागता तर्हि अत्र अस्मिन् सौधे त्रिभुवनतिलकनाम्नि प्रासादे सुखेन निश्चिन्ततया निषेव्यतां अनुभूयतां भवता। सा लक्ष्मीः का। या लक्ष्मीः त्रिदशानुवृत्त्या देवतासेवया नैव लभ्या न लभ्या न प्राप्या वर्तते। तथा मनोरथैरपि दोहदैरपि आस्तां तावत् प्रत्यक्षेण मनसापि अनवापनीया अलभ्या। अतिशयालंकारः ॥

**यस्तत्प्रसादादित्यादि**। हे राजन्, यः पुमान् तत्प्रसादात् पुण्यप्रसादात् लक्ष्मीमधिगम्य प्राप्य पुनः पुनरपि धर्मे पुण्यकर्मणि मन्दतरादरः शिथिलः स्याद्भवेत्।

धनं धर्मविलोपेन परभोगाय भूपतेः ।
पापं त्वात्मनि जायेत हरेर्द्विपवधादिव ॥ ४४ ॥

इति दैववादिनो विद्यामहोदधेः सचिवात्,

चेष्टमानः क्रियाः सर्वाः प्राप्नोति न पुनः स्थितः ।
दृष्ट्वैवं पौरुषीं शक्तिं को ह्यदृष्टाग्रहे ग्रहः ॥ ४५ ॥
पुण्यपापे नृणां देव ते च स्वाभाविके न हि ।
किं तूभयं समीहातस्तद्दैवं कः सुधीर्भजेत् ॥ ४६ ॥
नरस्य बद्धहस्तस्य पुरो भक्ते कृतेऽपि यत् ।
अशक्तं मुखनिक्षेपे तद्दैवं कः समाश्रयेत् ॥ ४७ ॥

---

तस्मात् पुरुषात् इह अस्मिन् संसारे अपरोऽन्यः कः कृतघ्नो निर्गुणोऽस्ति । पुरोजन्मन्यागामिनि भवे तस्मात् परो मनुष्यः किं रिक्तो वर्तते । अपि तु स एव रिक्त इत्यर्थः । आक्षेपालंकारः ॥

**धनमित्यादि** । हे राजन्, धर्मविलोपेन धर्मोच्छेदनेन परभोगाय परभोगनिमित्तं भूपतेः नरेन्द्रस्य धनं भवति । पापं तु आत्मनि राजनि जायेत उत्पद्येत । कस्मादिव । हरेः सिंहस्य द्विपवधादिव हस्तिघातादिव । यथा सिंहो द्विपवधं करोति पापमुपार्जयति, द्विपमांसं शृगालादयः खादन्ति । उपमालंकारः ॥

हे मारदत्तमहाराज, इत्यमुना प्रकारेण पौरुषभाषिणः पौरुषवादिनः सकाशात् चार्वाकावलोकनात् नास्तिकमतवादिनो मन्त्रिणः सकाशात् इतिकर्तव्यतां हस्तेकृत्य षड्गुणानहमन्वतिष्ठम् । इतीति किम् । **चेष्टमान इत्यादि** । चार्वाकमतानुसचिव उवाच—हे राजन्, चेष्टमानः उद्यमं कुर्वाणः सर्वाः क्रियाः भोजनादिकार्याणि प्राप्नोति लभते, न पुनः स्थितो न पुनर्निश्चलः पुमान् कामपि क्रियां लभते । एवमीदृग्विधां पौरुषीं शक्तिं दृष्ट्वा उद्यमगुणं विलोक्य कः । न कोऽपि अदृष्टाग्रहे दैववादे ग्रहो दुष्टाभिप्रायः । अपि तु न कश्चित् । आक्षेपालंकारः ॥

**पुण्यपापे इत्यादि** । हे देव हे राजन्, नृणां मनुष्याणां पुण्यपापे द्वे वर्तेते । ते च द्वे पुण्यपापे दैवशब्दवाच्ये स्वाभाविके प्राकृतिके न वर्तेते । किं तु उभयं पुण्यपापद्वयं समीहातः पौरुषात् भवति । तत्तस्मात् कारणात् कः सुधीः को विद्वान् दैवं भजेत् । अपि तु न कश्चिद्भजेदित्यर्थः । पौरुषमेव करणीयमिति भावः । कथम् । हि स्फुटमिति शेषः । आक्षेपालंकारः ॥

**नरस्येत्यादि** । हे राजन्, नरस्य पुरुषस्य बद्धहस्तस्य संयमितहस्तद्वयस्य भक्ते ओदने पुरः अग्रतः कृतेऽपि परिवेषितेऽपि सति यत् दैवं मुखनिक्षेपे मुखानयने अश-

देवैकशरणे पुंसि वृथा कृष्यादयः क्रियाः ।
अकृत्वा कंचिदारम्भमाकाशकवलो भवेत् ॥ ४८ ॥
दैवावलम्बनवतः पुरुषस्य हस्ता-
दासादितान्यपि धनानि भवन्ति दूरे ।
आनीय रत्ननिचयं पथि जातनिद्रे
जागर्ति तत्र पथिके हि न जातु दैवम् ॥ ४९ ॥

किं च ।

विहाय पौरुषं यो हि दैवमेवावलम्बते ।
प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥ ५० ॥
तेजोहीने महीपाले स्वाः परे च विकुर्वते ।
निःशङ्कं हि न को धत्ते पदं भस्मन्यनूष्मणि ॥ ५१ ॥

---

क्षमसमर्थं वर्तते तदीदृशं दैवं कः पुमान् समाश्रयेत् अवलम्बेत । अपि तु न कश्चित् । आक्षेपालंकारः ॥

**देवैकशरण इत्यादि ।** हे राजन्, दैवैकशरणे कर्मैकगतिके पुंसि पुरुषे कृष्यादयः क्रियाः वृथा अन्तर्गडवो भवन्ति । कंचित्कमपि आरम्भं उद्यमं अकृत्वा अविधाय आकाशकवलो भवेत् गगनग्रासः स्यात् । उपमालंकारः ॥

**दैवावलम्बनेत्यादि ।** हे राजन्, दैवावलम्बनवतः दैवाश्रयिणः पुरुषस्य नरस्य आसादितान्यपि धनानि प्राप्तान्यपि स्वापतेयानि हस्तात् दूरे भवन्ति विप्रकृष्टे भवन्ति । अमुमेवार्थं दृष्टान्तद्वारेण द्रढयति—रत्ननिचयं रत्नसमूहं माणिक्यपुञ्जं आनीय आहृत्य पथिके जातनिद्रे उत्पन्नतन्द्रे अध्वगे सति तत्र तस्मिन् रत्ननिचये दैवं जातु कदाचित् न जागर्ति न रक्षकं भवति । कथम् । हि स्फुटमिति शेषः । दृष्टान्तालंकारः ॥

किं चास्ति कश्चिद्विशेषः । **विहायेत्यादि ।** हे राजन्, यः पुमान् पौरुषं विहाय उद्यमं परित्यज्य दैवमेकमेव अवलम्बते आश्रयति तस्य पुरुषस्य मूर्ध्नि मस्तके वायसाः काकाः तिष्ठन्ति सम्यगासते । किंवत् । प्रासादसिंहवत् यथा प्रासादसिंहस्य मूर्ध्नि मस्तके वायसाः तिष्ठन्ति । निरुद्यमः पुमान् शत्रुभिर्मार्यत इत्यर्थः । दृष्टान्तालंकारः ॥

**तेजोहीन इत्यादि ।** हे राजन्, तेजोहीने उद्यमरहिते पौरुषविवर्जिते महीपाले राजनि स्वाः कुटुम्बवर्गाः दायिनः परे च शत्रवश्च विकुर्वते । अमुमेवार्थं अर्थान्तरद्वारेण द्रढयति—अनूष्मणि उष्णत्वरहिते भस्मनि रक्षायां कः पुमान् निःशङ्कं निर्भयं यथाभवत्येवं पदं चरणं को न धत्ते को न धरति । अपि तु सर्वोऽपि धरति । कथम् । हि स्फुटमिति शेषः । दृष्टान्तालंकारः ॥

अहंकारविहीनस्य किं विवेकेन भूभुजः ।
नरे कातरचित्ते हि कः स्यादस्त्रपरिग्रहः ॥ ५२ ॥
हर्षोऽमर्षश्च नो यस्य धनाय निधनाय च ।
को विशेषो भवेद्राज्ञस्तस्य चित्रगतस्य च ॥ ५३ ॥
येषां बाहुबलं नास्ति येषां नास्ति मनोबलम् ।
तेषां चन्द्रबलं देव किं कुर्यादम्बरस्थितम् ॥ ५४ ॥
उदयास्तमयारम्भे ग्रहाणां कोऽपरो ग्रहः ।
कोऽन्यं स्रष्टा जगत्स्रष्टुः कपाले भैक्ष्यमश्नतः ॥ ५५ ॥
तद्विक्रमक्रमाक्रान्तसमस्तभुवनस्थितिः ।
विद्विष्टदानवोच्छेदाद्विजयी हरिवद्भव ॥ ५६ ॥

---

**अहंकारेत्यादि** । हे राजन्, अहंकारविहीनस्य पौरुषरहितस्य भूभुजो राज्ञो विवेकेन किंचित् ज्ञानेन किम् । न किमपि । कातरचित्ते नरे भीरुमनसि पुंसि अस्त्रपरिग्रह आयुधग्रहणं कः स्यात् । अपि तु न कश्चित्स्यादित्यर्थः । कथम् । हि स्फुटमिति शेषः । आक्षेपालंकारः ॥

**हर्ष इत्यादि** । हे राजन्, यस्य राज्ञो नरेन्द्रस्य हर्षो धनाय न भवति । अमर्षः क्रोधश्च निधनाय मृत्यवे नो भवेत् । तस्य राज्ञः चित्रगतस्य च चित्रलिखितस्य च राज्ञः को विशेषः । अपि तु न कश्चिद्विशेष इत्यर्थः । यथासंख्यालंकारः, आक्षेपश्च ॥

**येषामित्यादि** । हे देव, येषां बाहुबलं दोर्दण्डमण्डलपौरुषं नास्ति न विद्यते, तथा येषां मनोबलं चित्तोत्साहो नास्ति न जागर्ति न चकास्ति, तेषां पुरुषाणामम्बरे आकाशे स्थितं आसीनं चन्द्रबलं जन्मादिस्थितं किं कुर्यात् किं विदध्यात् । अपि तु न किमपि कुर्यादित्यर्थः । आक्षेपालंकारः ॥

**उदयास्तेत्यादि** । हे राजन्, उदयारम्भे अस्तमयारम्भे ग्रहाणां सूर्यादीनां कोऽपरो ग्रहो वर्तते । अपि तु न कश्चित् । जगत्स्रष्टुः श्रीमहादेवस्य कः अन्यः स्रष्टा वर्तते । जगत्स्रष्टुः किं कुर्वतः । कपाले मृतके करोट्यां भैक्ष्यं भिक्षासमूहं अश्नतो भुञ्जानस्य । पौरुषमेव प्रधानमित्यर्थः । आक्षेपालंकारः ॥

**तद्विक्रमेत्यादि** । हे देव मारदत्त, तत्तस्मात् कारणात् विद्विष्टदानवोच्छेदात् शत्रुदैत्यदर्पदलनात् विजयी भव जयवान् जायस्व । कथंभूतः सन् । विक्रमक्रमाक्रान्तसमस्तभुवनस्थितिः विक्रमक्रमेण पराक्रमपादेन आक्रान्ता स्वायत्तीकृता समस्तभुवनस्थितिः स्थानं येन स तथोक्तः । किंवद्विजयी भव । हरिवत् नारायणवत् । यथा हरिर्दानवोच्छेदादयः करोति । उपमालंकारः ॥

कामपि श्रियमासाद्य यस्तद्वृद्ध्यै न चेष्टते ।
तस्यायतिषु न श्रेयो बीजभोजिकुटुम्बिवत् ॥ ५७ ॥
सुखं श्रीभ्यः श्रियः शौर्याच्छौर्यं स्वायत्तजन्मकम् ।
तथाप्यत्रैतदाश्चर्यं यत्सीदन्ति नरेश्वराः ॥ ५८ ॥
लब्धाप्यनन्यसामान्यसाहसं नायकं विना ।
लक्ष्मीर्न निर्भराश्लेषा प्रमदेव जरत्पतौ ॥ ५९ ॥

इति पौरुषभाषिणः चार्वाकावलोकनात्,

दैवं च मानुषं कर्म लोकस्यास्य फलाप्तिषु ।
कुतोऽन्यथा विचित्राणि फलानि समचेष्टिषु ॥ ६० ॥
अप्रेक्षापूर्विका यत्र कार्यसिद्धिः प्रजायते ।
तत्र दैवं नृपान्यत्र प्रधानं पौरुषं भवेत् ॥ ६१ ॥

---

**कामपीत्यादि** । हे देव, कामपि श्रियमासाद्य कामपि लक्ष्मीं लब्ध्वा यः पुमान् तद्वृद्ध्यै तल्लक्ष्मीवृद्ध्यर्थं न चेष्टते न पौरुषं कुरुते, तस्य पुरुषस्य आयतिषु उत्तरकालेषु श्रेयः शुभं न भवति । किंवत् । बीजभोजिकुटुम्बिवत् बीजभक्षककर्षकस्येव । उपमालंकारः ॥

**सुखमित्यादि** । हे राजन्, सुखं आनन्दं श्रीभ्यो भवति, श्रियः शौर्यात् सौभव्यात् भवन्ति, शौर्यं सौभव्यं स्वायत्तजन्मकं आत्मायत्तं न तत्पराधीनम् । तथापि तदपि नरेश्वरा राजानो यत्सीदन्ति दारिद्र्यदुःखमनुभवन्ति एतत् अत्राश्चर्यं वर्तते । हेतुरलंकारः ॥

**लब्धेत्यादि** । हे राजन्, लक्ष्मीर्लब्धापि सती प्राप्तापि सती अनन्यसामान्यसाहसं नायकं विना अनुपमपौरुषं स्वामिनमन्तरेण निर्भराश्लेषा गाढालिङ्गना न भवति । केव । जरत्पतौ जराजीर्णे भर्तरि प्रमदेव स्त्रीव । उपमालंकारः ॥

पुनश्च किं कृत्वा शौर्यषड्गुणानन्वतिष्ठम् । इति अमुना प्रकारेण द्व्याश्रयिणः दैवपौरुषद्वयस्थापकात् कविकुलशेखरात् कविकुलशेखरनामकात् सचिवात् इतिकर्तव्यतां हस्तेकृत्य गृहीत्वा । इतीति किम् । कविकुलशेखरमाह—**दैवमिति** । हे राजन्, अस्य लोकस्य फलाप्तिषु फललाभेषु दैवं पूर्वोपार्जितं कर्म मानुषं कर्म च पौरुषद्वयं वर्तते । निष्केवलं दैवं निष्केवलं पौरुषं च लाभाय न भवति । अन्यथा समचेष्टिषु समानोद्यमेषु पुरुषेषु विचित्राणि नानाप्रकाराणि फलानि उच्चावचानि फलानि कुतः । न कुतोऽपि । आक्षेपालंकारः ॥

**अप्रेक्षेत्यादि** । हे नृप, यत्र कार्ये अप्रेक्षापूर्विका अबुद्धिपूर्विका कार्यसिद्धिः

सुप्तस्य सर्पसंपर्के दैवमायुषि कारणम् ।
दृष्ट्वानुवञ्चिते सर्पे पौरुषं तत्र कारणम् ॥ ६२ ॥

परस्परोपकारेण जीवितौषधयोरिव ।
दैवपौरुषयोर्वृत्तिः फलजन्मनि मन्यताम् ॥ ६३ ॥

तथापि पौरुषायत्ताः सत्त्वानां सकलाः क्रियाः ।
अतस्तच्चिन्त्यमन्यत्र का चिन्तातीन्द्रियात्मनि ॥ ६४ ॥

इति द्व्याश्रयिणः कविकुलशेखरात्,

मठस्थानमिदं नैव न वादसमयोऽपि वा ।
किं तु मन्त्रनिषद्येयं तत्प्रस्तुतमिहोच्यताम् ॥ ६५ ॥

---

प्रजायते उत्पद्यते, तत्र तस्यां कार्यसिद्धौ दैवं प्रधानम् । अन्यत्र प्रेक्षापूर्विका कार्यसिद्धिः प्रजायते, तत्र पौरुषं प्रधानं भवेत् । उक्तं च समन्तभद्रेण भगवता—'अबुद्धिपूर्वापेक्षायामिष्टानिष्टं स्वपौरुषात्' । जात्यलंकारः ॥

**सुप्तस्येत्यादि** । हे देव, सुप्तस्य निद्रां प्राप्तस्य पुरुषस्य सर्पसंपर्के सति सर्पस्पर्शे सति आयुषि जीवितव्यकारणं पौरुषं भवति । जात्यलंकारः ॥

**परस्परोपकारेणेत्यादि** । दैवपौरुषयोः कर्मोद्यमयोः फलजन्मनि फलोत्पत्तौ परस्परोपकारेण अन्योन्यगुणेन वृत्तिः प्रवृत्तिर्मन्यतां ज्ञायताम् । किमिव । जीवितौषधयोरिव । यथा जीवितं आयुः कर्म औषधस्य उपकारकं भवति, औषधं तु जीवितस्योपकारकं भवति, सति जीविते औषधं लगति, औषधे सति जीवितं स्थिरीभवति, एवं सति दैवे पौरुषं फलति सति पौरुषे दैवं फलति । उपमालंकारः ॥

**तथापीत्यादि** । हे देव, यद्यप्येवं तथापि तदपि सत्त्वानां प्राणिनां सकलाः समस्ताः क्रियाश्चेष्टाः पौरुषायत्ता भवन्ति । अतः कारणात् तच्चिन्त्यं प्रारभ्यं अन्यत्र दैवे का चिन्ता न काचित् चिन्ता । कथंभूते दैवे । अतीन्द्रियात्मनि चक्षुरादीन्द्रियाणामगोचरे । आक्षेपालंकारः ॥

पुनश्च किं कृत्वा पूर्वं षड्गुणानन्वतिष्ठम् । इत्यमुना प्रकारेण नवकात् नवीनात् उपायसर्वज्ञनाम्नः सचिवात् इति कर्तव्यताक्रियां हस्तेकृत्य गृहीत्वा । उपायसर्वज्ञो मन्त्री कथयति । किं कथयति—**मठस्थानमित्यादि** । हे राजन्, इदं मठस्थानं छात्रादीनां विद्याभ्यासनिवासो न वर्तते । वाथवा वादसमयोऽपि गुरुशिष्ययोर्वादाभ्यासनिमित्तं कालो न वर्तते । किं तु इयं मन्त्रनिषद्या मन्त्रशाला वर्तते । तत्तस्मात् कारणात् प्रस्तुतं प्रस्तावोचितं इह अस्यां मन्त्रशालायां उच्यतां व्याह्रियताम् । जात्यलंकारः ॥

विजिगीषुररिर्मित्रं पार्ष्णिग्राहोऽत्र मध्यमः ।
उदासीनोऽन्तरान्तर्द्धिरित्येषा विषयस्थितिः ॥ ६६ ॥
स एव विजयी तेषां शौर्यं यस्य नयानुगम् ।
किमसाध्यं ततो देव त्वया तद्द्वयसद्मना ॥ ६७ ॥
देशकालव्ययोपायसहायफलनिश्चयः ।
देव यत्र स मन्त्रोऽन्यत्तुण्डकण्डूविनोदनम् ॥ ६८ ॥
मन्त्रः कार्यानुगो येषां कार्यं स्वामिहितानुगम् ।
त एव मन्त्रिणो राज्ञां न तु ये गल्लफुल्लनाः ॥ ६९ ॥
नृपस्तदर्थमुद्यच्छेदकृत्वा दीर्घसूत्रिताम् ।
मन्त्रक्रियान्यथा तस्य निरर्था कृपणेष्विव ॥ ७० ॥

---

**विजिगीषुरित्यादि** । हे राजन्, इति अमुना प्रकारेण एषा प्रत्यक्षीभूता विषयस्थितिर्विषयस्य स्थितिर्मर्यादा धारणा वर्तते । इतीति किम् । एको विजिगीषुः राजा आत्मद्रव्यप्रकृतिसंपन्नो नयस्याधिष्ठानं विजिगीषू राजा, अङ्गैश्वर्ययोः प्रतिकूलवृत्तिररिः, चित्तवित्ताभ्यामनुकूलाचारं मित्रम्, पश्चात्प्रकोपकारी पार्ष्णिग्राहः, एतेभ्यो विकलो मध्यमः । तदधिकबलतर उदासीनः विजिगीषोररेर्मध्यो दुर्बलः अन्तर्द्धिरिष्यते । जात्यलंकारः ॥

**स एवेत्यादि** । हे राजन्, स एव राजा तेषां विजयिनां विजयी जेता वर्तते । स कः । यस्य शौर्यं भवति । कथंभूतं शौर्यम् । नयानुगम् । तत्तस्मात् कारणात् । हे देव, त्वया किं असाध्यम् । न किमप्यसाध्यम् । कथंभूतेन त्वया । तद्द्वयसद्मना शौर्यनयनिवासेन । आक्षेपालंकारः ॥

**देशकालेत्यादि** । हे देव हे राजन्, यत्र यस्मिन् मन्त्रे देशकालव्ययोपायसहायफलनिश्चयः देशश्च कालश्च व्ययोपायश्च सहायश्च फलं च देशकालव्ययोपायसहायफलानि तेषां निश्चयो निर्धारः यत्र मन्त्रे स तथोक्तः । स मन्त्रः अन्यत् इतरत् तुण्डकण्डूविनोदनं मुखखर्जनस्फोटनमेव न तु मन्त्रः । रूपकालंकारः ॥

**मन्त्र इत्यादि** । हे राजन्, येषां मन्त्रिणां मन्त्रः पर्यालोचलक्षणः कार्यानुगः कार्यकारकः कार्यं कर्तव्यं स्वामिहितानुगं भवति स्वामिनो हितकारकं भवति राज्ञां नृपाणां त एव मन्त्रिणः । न तु ये गल्लफुल्लना वाग्जालभाषिणः । जात्यलंकारः ॥

**नृप इत्यादि** । नृपो नरेन्द्रस्तदर्थं पूर्वोक्तमन्त्रार्थं च उद्यच्छेत् उत्साहं कुर्यात् । किं कृत्वा । पूर्वं दीर्घसूत्रितां कालक्षेपं अकृत्वा अविधाय । अन्यथा दीर्घसूत्रिताकरणे तस्य राज्ञो मन्त्रक्रिया मन्त्रपर्यालोचो निरर्था अनर्थोद्भवति । केष्विव । कृपणेष्विव

स्वदेशः परदेशो वा मन्त्री भवतु भूभुजाम् ।
प्रारब्धकार्यनिर्वाहसुखसिद्ध्या प्रयोजनम् ॥ ७१ ॥
दुःखाय देहजो व्याधिः सुखाय वनजौषधिः ।
गुणाः कार्यकृतः पुंसां भोजने स्वपरक्रियाः ॥ ७२ ॥
मन्त्रयुद्धाश्रितश्रीणां शस्त्रयुद्धेन किं फलम् ।
को नाम शैलमारोहेदर्के लब्धमधुः सुधीः ॥ ७३ ॥
अकृत्वा निजदेशस्य रक्षां यो विजिगीषते ।
स नृपः परिधानेन वृत्तमौलिः पुमानिव ॥ ७४ ॥
नरस्योपायमूढस्य मुधा भुजविजृम्भितम् ।
शराः किं व्यस्तसंधानाः साधयन्ति मनीषितम् ॥ ७५ ॥

---

अदातृष्विव । यथा कृपणा वयमेतद्दानं दास्याम इति पर्यालोचयन्ति परं न ददति । उपमालंकारः ॥

**स्वदेश इत्यादि** । हे राजन्, भूभुजां नरेन्द्राणां स्वः देशो यस्य स्वदेशः परो देशो यस्य स परदेशः वाथवा मन्त्री भवतु सचिवः संजायताम् । प्रारब्धकार्यनिर्वाहसुखसिद्ध्या प्रयोजनम् प्रारब्धं यत्कार्यं तस्य निर्वाहे यत्सुखं तस्य सिद्धिः प्राप्तिः प्रारब्धकार्यनिर्वाहसुखसिद्धिः तया प्रयोजनं अर्थो वर्तते । अर्थान्तरन्यासालंकारः ॥

**दुःखायेत्यादि** । हे राजन्, देहजो निजशरीरोत्पन्नोऽपि व्याधी रोगो दुःखाय भवति । वनजौषधिररण्योद्भवौषधिर्मूलादिकं सुखाय भवति दुःखं स्फेटयित्वा सुखं करोति । पुंसां पुरुषाणां गुणा उपकाराः कार्यकृतः कार्यकारिणो भवन्ति कार्यमायान्ति । स्वपरक्रियाः स्वकीयपरकीयविचारणाः भोजने भवन्ति भुक्तिपङ्क्तौ भवन्ति । दृष्टान्तालंकारः ॥

**मन्त्रयुद्धेत्यादि** । हे नृप, मन्त्रयुद्धाश्रितश्रीणां पुरुषाणां मन्त्रयुद्धेन आश्रिता श्रियो येषां ते मन्त्रयुद्धाश्रितश्रियस्तेषां नृपाणां शस्त्रयुद्धेन आयुधयुद्धेन किं फलम् । न किमपि फलम् । नामेति संभावनायाम् । कः सुधीः को विद्वान् शैलं आरोहेच्चढति । कथंभूतः । अर्के मन्दारवृक्षे लब्धमधुः प्राप्तक्षौद्रः । अपि तु न कश्चिच्छैलमारोहेत् । आक्षेपालंकारः, दृष्टान्तश्च ॥

**अकृत्वेत्यादि** । यो नृपो निजदेशस्य रक्षामकृत्वा विजिगीषते अपरं देशं गृहीतुमिच्छति स नृपः परिधानेन अन्तरीयवस्त्रेण वृत्तमौलिः वेष्टितमस्तकः पुमानिव पुरुषसदृशो भवति गुह्यस्थानमुद्धाटितं करोति मस्तकं संवृणोति तत्सदृशः । उपमालंकारः ॥

**नरस्येत्यादि** । उपायमूढस्य नरस्य सामदानभेददण्डलक्षणं चतुरुपायानभिज्ञस्य

अयं लघुर्महानेष न चिन्ता नयवेदिषु।
नद्याः पूरप्लवाद्यान्ति समं तीरतृणद्रुमाः॥ ७६॥

तदाह—

एकं हन्यान्न वा हन्यादिषुः क्षिप्तो धनुष्मता।
प्राज्ञेन तु मतिः क्षिप्ता हन्याद्गर्भगतानपि॥ ७७॥
लब्धा अपि श्रियो यान्ति पुंसां भोक्तुमजानताम्।
अवद्धाः कुञ्जरेन्द्राणां पुलाका इव हस्तगाः॥ ७८॥
निजवंशैकदीपस्य वैरं सापत्नजं न ते।
चतुरन्तमहीनाथे त्वयि तद्भूमिजं कुतः॥ ७९॥
न त्वयि स्त्रीजमप्येतत्परनारीसहोदरे।
नयविक्रमसंपन्ने वैरं नान्यदपि त्वयि॥ ८०॥

---

भुजविजृम्भितं मुधा बाहुचेष्टा वृथैव वर्तते। व्यस्तसंधानाश्चापं नारोपिताः शराः बाणाः मनीषितं किं साधयन्ति। अपि तु न साधयन्ति। आक्षेपालंकारः॥

**अयमित्यादि**। हे नृप, अयं पुमान् लघुरल्पीयानेष पुमान् महान् पुरुर्वर्तते। नयवेदिषु ईदृशी चिन्ता न भवति। नद्याः सरितः पूरप्लवात् प्रवाहागमनात् तीरतृणद्रुमाः समं सदैव यान्ति गच्छन्ति श्रमयित्वा पतन्ति। दृष्टान्तालंकारः॥

तदाह—**एकमित्यादि**। लघुगुर्वन्तरमाह—हे राजन्, इषुर्बाणः धनुष्मता धनुर्वेदिना क्षिप्तो मुक्त एकं पुरुषं हन्यात्। प्राज्ञेण नीतिवेदिना पुरुषेण मतिः क्षिप्ता प्रेरिता सती गर्भगतानपि हन्यात्। दीपकालंकारः॥

**लब्धा इत्यादि**। हे राजन्, भोक्तुमास्वादितुमजानतां अविदतां पुंसां पुरुषाणां लब्धा अपि प्राप्ता अपि श्रियो लक्ष्म्यो यान्ति नश्यन्ति। क इव। अवद्धा अपिण्डीकृताः तृणैरवेष्टिताः कुञ्जरेन्द्राणां हस्तगाः करप्राप्ताः पुलाका इव घुर्घुरिका इव। उपमालंकारः॥

**निजेत्यादि**। हे राजन्, सापत्नजं वैरं अपरमातृजपुत्रवैरं ते तव न वर्तते। तत्कारणगर्भितं विशेषणमाह—कथंभूतस्य ते। निजवंशैकदीपस्य निजस्य वंशस्यैको दीप उपद्योतकस्तस्य। यदि सापत्नजं वैरं नास्ति तर्हि तद्भूमिजं वैरं भविष्यति तदपि न चतुरन्तमहीनाथे त्वयि चतुःसमुद्रान्तपृथ्वीपतौ त्वयि भवति तद्भूमिजं वैरं कुतः। न कुतोऽपि। हेलाक्षेपालंकारः॥

**न त्वयीत्यादि**। हे राजन्, स्त्रीजमपि स्त्रीसंबन्ध्यपि एतद्वैरं त्वयि भवति न वर्तते। कस्मात्। तत्कारणगर्भितं विशेषणमाह—कथंभूते त्वयि। परनारीसहोदरे परस्त्रीभ्रातृसदृशे। अन्यदपि वैरं त्वयि न वर्तते, अन्यदपि परधनग्रहणादिकमपि वैरं त्वयि न

उदयः समता हानिस्त्रयः काला महीभुजाम् ।
तत्राद्य एव योद्धव्यं स्थातव्यमुभयोः पुनः ॥ ८१ ॥
पादयुद्धमिवेभेन भूयसा सह विग्रहः ।
तं संघातविघातेन साधयेद्वनहस्तिवत् ॥ ८२ ॥
आमभाजनवद्युद्धे समेनोभयतः क्षयः ।
एनं प्रबन्धयेदन्यैर्गजं प्रतिगजैरिव ॥ ८३ ॥
हीनोऽपि सुभटानीकस्तीक्ष्णैरन्यैः सहाहवे ।
नेतव्यः क्षीणतां नो चेन्नयैर्दासत्वमानयेत् ॥ ८४ ॥

---

वर्तते । तत्कारणगर्भितं विशेषणमाह—कथंभूते त्वयि । नयविक्रमसंपन्ने नीतिपराक्रमसंयुक्ते । रूपकहेत्वलंकारः ॥

**उदय इत्यादि** । हे राजन्, महीभुजां कालास्त्रयो वर्तन्ते । के ते । एकस्तावदुदय उदयकालः परस्मादात्मनः अतिवृत्तिरधिकवृद्धिरुदयः कथ्यते । द्वितीयः समताकालः आत्मपरयोरैश्वर्यसाम्ये समता । तृतीयो हानिरेतद्वैपरीत्यं हानिः । तत्र त्रिषु कालेषु मध्ये आद्ये एव उदयकाले एव योद्धव्यम् । उभयोः समताहानिकालयोः पुनः स्थातव्यम् । न योद्धव्यमित्यर्थः । जात्यलंकारः ॥

**पादयुद्धमित्यादि** । हे राजन्, भूयसा प्रचुरबलेन राज्ञा सह विग्रहो युद्धम् । कीदृशं वर्तते । इभेन हस्तिना सह पादयुद्धमिव । हस्तिना सह युध्यमानः पत्तिभिर्हस्तिना पात्यत एव । तमरिं संघातविघातेन समूहं कृत्वा हननेन साधयेत् । किंवत् । वनहस्तिवत् । यथा वनहस्ती एको बहुभिः पत्तिभिर्हस्तिभिर्वा साध्यते । उपमालंकारः ॥

**आमभाजनेत्यादि** । हे राजन्, समेन समानबलेन राज्ञा सह युद्धे सति उभयतः स्वस्मिन् परस्मिंश्च क्षयो विनाशो भवति । किंवत् । आमभाजनवत् । यथा अपक्वेन मृद्भाजनेनापक्वमृद्भाजनं ताड्यमानं उभये अपि भाजने भज्येते, तथा उभयतः क्षयो भवति । पक्वेन भाजनेन अपक्वं भाजनं यत्ताड्यते तदा अपक्वमेव भज्यते । तेन समानेन सह युद्धं न कर्तव्यं । एनं समं शत्रुं प्रबन्धयेत् बद्धं कुर्यात् । कैरन्यैः कृत्वा । अन्यैर्नृपैः कृत्वा प्रकर्षेण बन्धयेत् । कैः कमिव । गजं प्रतिगजैरिव हस्तिनमपरहस्तिभिरिव । उपमालंकारः ॥

**हीनोऽपीत्यादि** । हीनोऽपि । अपिशब्दात् अधिकोऽपि । सुभटानीकः सुभटसमूहः अन्यैस्तीक्ष्णैर्हिंसकैः सुभटैः सह आहवे संग्रामे सति क्षीणतां नेतव्यः क्षयं प्रापणीयः । नो चेत् यदि अन्यैस्तीक्ष्णैः क्षीणत्वं सुभटानीको न नीयते तर्हि नयैर्न्यायैः कृत्वा दासत्वं सेवकत्वमानयेत् प्रापयेत् । उपमालंकारः ॥

अहं महानयं स्वल्पश्चिन्तेयं नृप मुच्यताम् ।
सिंहशावात्करीन्द्राणां मृत्युरत्र निदर्शनम् ॥ ८५ ॥
पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः ।
तामवस्थां गतानां तु न विद्मः किं भविष्यति ॥ ८६ ॥
क्षत्रसारं भृतं शूरमस्त्रज्ञमनुरागि चेत् ।
अपि स्वल्पं श्रियै सैन्यं वृथेयं मुण्डमण्डली ॥ ८७ ॥
अन्योन्यशत्रुसंक्षोभान्निष्कण्टकमहीतलः ।
लक्ष्मीपतिस्तटस्थोऽपि भिन्नमुद्रवहित्रवत् ॥ ८८ ॥
तन्नयानायनिक्षेपात्कुरु हस्ते द्विषत्तिमीन् ।
दोर्भ्यां युद्धाम्बुधिक्षोभात्तद्ग्रहे कुशलं कुतः ॥ ८९ ॥

---

**अहमित्यादि** । हे नृप, अहं महान् अयं शत्रुः स्वल्पो वर्तते इयं ईदृशी चिन्ता मुच्यतां परिह्रियताम् । अत्र अस्मिन्नर्थे सिंहशावात् सिंहबालकात् करीन्द्राणां मृत्युर्निदर्शनं दृष्टान्तो वर्तते । प्रतिवस्तूपमालंकारः ॥

**पुष्पैरित्यादि** । हे नृप, पुष्पैरपि प्रसूनैरपि न योद्धव्यं न युद्धं कर्तव्यम् । निशितैः शरैः किं पुनरुच्यते । शरैर्विशेषेण न योधनीयमित्यर्थः । तां युद्धावस्थां गतानां प्राणिनां किं भविष्यतीति न विद्मः । न वयं जानीम इत्यर्थः । जात्यलंकारः ॥

**क्षत्रसारमित्यादि** । हे राजन्, स्वल्पमपि सैन्यं श्रियै लक्ष्मीनिमित्तं भवति । इयं प्रत्यक्षीभूता मुण्डमण्डली बहुसैन्यं वृथा निरर्थका वर्तते । कथंभूतं सैन्यम् । क्षत्रसारं क्षत्राः सुभटाः राजपुत्राः यस्मिन् सैन्ये तत्क्षत्रसारम् । पुनः कथंभूतं सैन्यम् । भृतं अन्नाज्यादिभिः पोषितम् । पुनः कथंभूतम् । शूरं युद्धे निर्भयम् । पुनः कथंभूतम् । अस्त्रज्ञं क्षुरिकादियुद्धचतुरम् । पुनः कथंभूतम् । चेत् यदि अनुरागि स्वामिन्यकृत्रिमस्नेहं भवति । समुच्चयालंकारः ॥

**अन्योन्येत्यादि** । हे राजन्, राजा तटस्थोऽपि दूरस्थोऽपि लक्ष्मीपतिर्भवति श्रीपतिर्भवति । तत्कारणगर्भितं विशेषणमाह—कथंभूतो राजा । अन्योन्यशत्रुसंक्षोभात् शत्रूणां परस्परं युद्धकारणात् निष्कण्टकमहीतलः निष्कण्टकं क्षुद्रशत्रुरहितं महीतलं यस्य स तथोक्तः । किंवल्लक्ष्मीपतिर्भवति । भिन्नमुद्रवहित्रवत् मुद्रासहितप्रवहणस्येव । यथा कश्चिद्बृहद्व्यवहारी प्रवहणो देशान्तरं गतोऽपि तस्य वहित्रस्य निजनामाङ्केन दूरस्थोऽपि पतिः स्वामी भवति, तथा राजापि परस्परशत्रुक्षयाल्लक्ष्म्याः स्वामी भवति । उपमालंकारः ॥

**तन्नयेत्यादि** । हे राजन्, तत्तस्मात् कारणात् नयानायनिक्षेपात् नयो नीतिः स एव आनायो जालं तस्य निक्षेपो मोचनं नयानायनिक्षेपस्तस्मात् । द्विषत्ति-

एकं वपुरुभौ हस्तौ शत्रवश्च पदे पदे ।
दुःखकृत्कण्टकोऽपि स्यात्कियत्खड्गेन साध्यते ॥ ९० ॥
साम्ना दानेन भेदेन यत्कार्यं नैव सिध्यति ।
तत्र दण्डः प्रयोक्तव्यो नृपेण श्रियमिच्छता ॥ ९१ ॥
सामसाध्येषु कार्येषु को हि शस्त्रं प्रयोजयेत् ।
मृतिहेतुर्गुडो यत्र कस्तत्र विषदायकः ॥ ९२ ॥
अकुर्वन्नात्मलक्ष्मीणां संविभागं नरेश्वरः ।
मधुच्छत्रमिवाप्नोति सर्वनाशं सहात्मना ॥ ९३ ॥

---

मीन् शत्रुमत्स्यान् हस्ते कुरु निजसेवकान् विधेहि । दोर्भ्यां बाहुभ्यां युद्धाम्बुधिक्षोभात् युद्धसागरतरणात् तद्गृहे योधगृहे कुशलं शुभं कुतः । न कुतोऽपीत्यर्थः । रूपकालंकारः, आक्षेपालंकारश्च ॥

**एकमित्यादि** । हे राजन्, वपुः शरीरं तावदेकं वर्तते । कण्टकोऽपि बदरीकण्टकसदृशः क्षुद्रशत्रुरपि दुःखकृत्स्यात् । उक्तं च—'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' । तेन कारणेन खड्गेन असिना कियत् किं परिमाणमस्येति कियत्साध्यते । अपि तु न कियदपि साध्यते । तेन सामदानभेदादिना शत्रुः साध्यत इत्यर्थः । आक्षेपालंकारः ॥

**साम्नेत्यादि** । हे राजन्, यत्कार्यं कर्तव्यं साम्ना दानेन भेदेन च नैव सिध्यति तत्र नृपेण दण्डः प्रयोक्तव्यः । कथंभूतेन नृपेण । श्रियमिच्छता तत्र साम पञ्चविधम्—संबन्धोपाख्यानम्, गुणसंकीर्तनम्, अन्योपकारदर्शनम्, आत्मोपरिधानम्, आयतिप्रदर्शनम्, चेति । भूमिहिरण्यकन्यादिवितरणं दानम् । शङ्काजननमतिभर्त्सनं च भेदः । वधः परिक्रोशः अर्थहरणं च दण्डः । जात्यलंकारः ॥

**सामसाध्येष्वित्यादि** । हे राजन्, सामसाध्येषु कार्येषु साम्ना पूर्वोक्तेन पञ्चविधेन साध्यानि सामसाध्यानि तेषु सामसाध्येषु कार्येषु कः पुमान् शस्त्रमायुधं प्रयोजयेत् प्रेरयेत् । अपि तु न कश्चित् । यत्र यस्मिन् मृतिहेतुर्मरणकारणं गुडो भवति, तत्र तस्मिन् पुरुषे विषदायको ब्रह्मपुत्रविश्राणकः को भवेत् । कथं हि स्फुटमिति शेषः । दृष्टान्तालंकारः, आक्षेपश्च ॥

**अकुर्वन्नित्यादि** । हे राजन्, नरेश्वरो राजा आत्मलक्ष्मीणां निजसंपदां संविभागं संविभजनं दायादीनामवण्टकरणं अकुर्वन् अविदधन् सर्वनाशं सर्वलक्ष्मीक्षयं आप्नोति । कथम् । सह सार्धम् । केन । आत्मना निजशरीरेण । किमिव । मधुच्छत्रमिव यथा मधुच्छत्रं मधुपुलकः मधूनि संचिनोत्येव, न कस्यापि किमपि ददाति, तथा कश्चित्समायाति स तं मधुपुलकं भङ्क्त्वा निश्च्योतत् मधु गृहीत्वा गच्छति । एवं राजापि लक्ष्मीविनाशं प्राप्नोति । दृष्टान्तसहोक्त्यलंकारः ॥

अभित्त्वा शत्रुसंघातं यः पराक्रमते नृपः ।
स तुङ्गस्तम्बसंलग्नवीरणाकर्षकायते ॥ ९४ ॥
शक्तिहीने मतिः कैव का शक्तिर्मतिवर्जिते ।
नृपस्य न्याय्यदृष्टान्तः पङ्गुरन्धश्च कथ्यताम् ॥ ९५ ॥
दूरस्थानपि भूपाल क्षेत्रेऽस्मिन्नरिपक्षिणः ।
बलोपलमहाघोषैः क्षिप क्षेपणिहस्तवत् ॥ ९६ ॥
निपाजीव इव स्वामिन्स्थिरीकृतनिजासनः ।
चक्रं भ्रमय दिक्पालपुरभाजनसिद्धये ॥ ९७ ॥

---

**अभित्त्वेत्यादि** । हे राजन्, यो नृपः शत्रुसंघातं अभित्त्वा भेदमकृत्वा रामवद् विभीषणस्य पराक्रमते उद्यमं करोति स राजा तुङ्गस्तम्बसंलग्नवीरणाकर्षकायते तुङ्गा उन्नता ये स्तम्बाः स्कन्धप्रदेशास्तैः संलग्नः परस्परं मिलितो योऽसौ वीरणो वंशवृक्षस्तस्य आकर्षक आतानकस्तुङ्गस्तम्बसंलग्नवीरणाकर्षकः स इवाचरति तुङ्गस्तम्बसंलग्नवीरणाकर्षकायते । उपमालंकारः ॥

**शक्तिहीन इत्यादि** । हे राजन्, शक्तिहीने नृपे मतिः कैव । अपि तु न काचिद्वर्तते । मतिवर्जिते राजनि नीतिशास्त्रस्य अविज्ञायके नृपे शक्तिः का । अपि तु न काचिच्छक्तिः । तस्य नृपस्य दृष्टान्तं उदाहरणं पङ्गुः पादविकलः अन्धश्चक्षुर्हीनश्च कथ्यताम् । तथा राजा ज्ञानवानपि शक्तिहीनः किं करोति, तथा मतिहीनो राजा शक्तिमानपि किं करोति । आक्षेपालंकारः, उपमा च ॥

**दूरस्थानपीत्यादि** । हे भूपाल हे राजन्, अरिपक्षिणः शत्रुशकुन्तान् दूरस्थानपि विप्रकृष्टानपि अस्मिन् क्षेत्रे उज्जयिन्यां पुरि स्थितः सन् त्वं बलोपलमहाघोषैः बलं सैन्यं उपलाः पाषाणश्च महाघोषाः महाशब्दाश्च तैः कृत्वा क्षिप प्रेरय । किंवत् । क्षेपणिहस्तवत् गोलागोफणिकरवत् । यथा गोलागोफणिसहितहस्तः पुमानरीन् दूरस्थानपि हन्तीति वाक्यार्थः । दृष्टान्तालंकारः ॥

**निपाजीवेति** । हे स्वामिन् प्रभो, त्वं स्थिरीकृतनिजासनः स्थिरीकृतं निश्चलीकृतं निजासनं स्वकीयमासनं येन स स्थिरीकृतनिजासनः चक्रं सैन्यं भ्रमय कटकं प्रेषय । किमर्थम् । दिक्पालपुरभाजनसिद्धये दिक्पालाश्चतुर्दिग्वलयनृपास्तेषां पुराणि तान्येव भाजनानि भोज्यपात्रादीनि सुखामृताधारत्वात् तेषां सिद्धिः प्राप्तिस्तस्यै दिक्पालपुरभाजनसिद्धये । क इव । निपाजीव इव कुम्भकारवत् । यथा निपाजीवः चक्रं भ्रमयन् घटादिभाजनप्राप्तिमान् भवति । उपमारूपकालंकारः ॥

नृणां परिच्छदः स्वस्य कार्यायाथ सुखाय च ।
तदर्थमात्मनः क्लेशे किं परिच्छदसंपदा ॥ ९८ ॥
स वाहं वेति संदेहो मतेर्यत्रोपजायते ।
तत्रादावेव को नाम रणे प्रेरयते नृपम् ॥ ९९ ॥
पाति क्षेत्रं यथा गोपः स्थित्वा तन्नाभिमञ्चुके ।
तथा त्वमपि राजेन्द्र चतुरन्तामव क्षितिम् ॥ १०० ॥
येऽनन्तरं स्थिता भूमेस्ते नृपास्तव भूपते ।
प्रतिहारसमं द्वारि तिष्ठन्त्याज्ञापरायणाः ॥ १०१ ॥
अन्येऽपि मण्डलाधीशाः कृतलोकैकशासनम् ।
वाञ्छितैस्त्वां निषेवन्ते सिद्धाः कल्पद्रुमा इव ॥ १०२ ॥

---

**नृणामित्यादि** । हे राजन्, नृणां मनुष्याणां परिच्छदः परिवारः स्वस्यात्मनः कार्याय कारणाय च अन्यत् सुखाय सुखोत्पादनाय च भवति । चकारः परस्परसमुच्चये वर्तते । तदर्थं कार्यकारणार्थं च आत्मनः स्वस्य क्लेशे सति उद्यमे सति परिच्छदसंपदा परिवारश्रिया किम् । किमपि न । आक्षेपालंकारः ॥

**स वाहमित्यादि** । हे राजन्, नृणां मनुष्याणां यत्र यस्मिन् दण्डलक्षणे युद्धे इति ईदृक् मतेर्बुद्धेः संदेहः संशयः उपजायते उत्पद्यते । इतीति किम् । स च शत्रुर्वा राजा भविष्यति अहं वा राजा भविष्यामि । तत्र आदावेव प्रथमत एव । नामेति संभावनायाम् । कः पुमान् नृपं राजानं रणे प्रेरयते प्रयोजयति । अपि तु न कश्चित् । आक्षेपालंकारः ॥

**पातीत्यादि** । हे राजेन्द्र, यथा येन प्रकारेण गोपः कर्षकः तन्नाभिमञ्चुके क्षेत्रमध्यमालके स्थित्वा क्षेत्रं पाति रक्षति । तथा तेन प्रकारेण त्वमपि भवानपि चतुरन्तां चतुःसमुद्रपर्यन्तां क्षितिं भूमिमव प्रतिपालय । दृष्टान्तालंकारः ॥

**येऽनन्तरमित्यादि** । हे भूपते राजन्, ये नृपास्ते तव भूमेर्देशस्य अनन्तरं स्थिताः निकटवर्तिनो वर्तन्ते ते नृपाः तव द्वारि तिष्ठन्ति वर्तन्ते । कथम् । प्रतिहारसमं द्वारपालसदृशं यथा भवत्येवम् । कथंभूतास्ते नृपाः । आज्ञापरायणाः विशिष्टतत्पराः । उपमालंकारः ॥

**अन्य इत्यादि** । हे राजन्, अन्येऽपि अपरेऽपि मण्डलाधीशाः तृतीयदेशस्थिताः देशपतयः ते राजानः त्वां भवन्तं वाञ्छितैः प्राभृतैः कृत्वा निषेवन्ते सेवां कुर्वते । कथंभूतास्ते राजानः । सिद्धाः कल्पद्रुमा इव हस्तप्राप्ताः कल्पवृक्षा इव । कथंभूतं त्वाम् ।

स्वानुवर्तिषु लोकेषु यस्तु क्षोभाय चेष्टते।
श्रेयांसि न चिरं तस्य सुप्तव्यालप्रबोधिवत्॥ १०३॥
व्यलीकैश्वर्यपर्याप्तव्यस्तमर्यादचेतसाम्।
विनयाय तथाप्येषां दिक्षु दण्डोऽतिदिश्यताम्॥ १०४॥

इति नवकादुपायसर्वज्ञात् 'साध्वाह देव, आर्यमिश्राणामग्रणीः प्रज्ञ उपायसर्वज्ञः।

द्विषतापि हिते प्रोक्ते सन्तस्तदनुलोमनाः।
विवदेतात्र को नाम समकार्यधुरोदिते॥ १०५॥

---

कृतलोकैकशासनम् कृतं विहितं लोके संसारे एकमद्वितीयं शासनमादेशो येन स तथोक्तस्तम्। उपमालंकारः॥

**स्वानुवर्तिष्वित्यादि**। हे राजन्, यस्तु राजा स्वानुवर्तिषु निजपृष्ठलग्नेषु अनुकूलेषु लोकेषु सेवकेषु क्षोभाय क्रोधायावदानाय चेष्टते प्रवर्तते। तस्य राज्ञश्चिरं दीर्घकालं श्रेयांसि शुभानि कल्याणानि न भवन्ति। किंवत्। सुप्तव्यालप्रबोधिवत् सुप्तो निद्रां प्राप्तो व्यालः कालसर्पस्तस्य प्रबोधिवत् जागरकस्येव। उपमालंकारः॥

**व्यलीकेत्यादि**। हे राजन्, यद्यप्येवं तथापि तदपि एषां नरेन्द्राणां विनयाय शिक्षार्थं दिक्षु दिङ्मण्डलेषु दण्डः सैन्यमतिदिश्यतां दीयतां प्रस्थापनीयम्। कथंभूतानामेषाम्। व्यलीकैश्वर्यपर्याप्तव्यस्तमर्यादचेतसाम् व्यलीकं असत्यं रिक्तं यदैश्वर्यं नार्पत्यं तेन पर्याप्ता परिपूर्णा व्यस्ता परित्यक्ता मर्यादा स्थितिः चेतो मनो येषां ते तथोक्तास्तेषाम्। जात्यलंकारः॥

**इतीत्यादि**। पुनश्च किं कृत्वा पूर्वं षड्गुणानन्वतिष्ठम्। इत्यमुना प्रकारेण नीतिवृहस्पतेर्नाम सचिवात् इतिकर्तव्यताक्रियां हस्तेकृत्य। कथंभूतान्नीतिवृहस्पतेः। समासादितसमस्तसचिवपुरःसरस्थितेः समासादिता प्राप्ता समस्तेषु सर्वेषु सचिवेषु मन्त्रिषु पुरःसरा मुख्या स्थितिर्मर्यादा धारणा येन स तथोक्तस्तस्माद्। इतीति किम्। नीतिवृहस्पतिमन्त्री कथयति—हे देव हे राजन्, उपायसर्वज्ञो नाम सचिवः साध्वाह युक्तं ब्रवीति। कथंभूत उपायसर्वज्ञः। आर्यमिश्राणां बुधप्रधानानां मध्ये अग्रणीः प्रज्ञः प्रधानबुद्धिः।

**द्विषतेति**। हे देव, द्विषतापि शत्रुणापि हिते परिणामपथ्ये प्रोक्ते कथिते सति सन्तो विद्वज्जनास्तदनुलोमनाः तस्य प्रोक्तस्य सानुकूला भवन्ति। अत्र अस्मिन् प्रोक्ते। नामेति संभावनायाम्। कः पुमान् विवदेत विवादं कुर्यात्। अपि तु न कश्चिद्विवदेत। कथंभूते अत्र प्रोक्ते। समकार्यधुरोदिते समकार्यस्य साधारणकार्यस्य धुरि मुख्यतया उदितं यत्र तत् तथा तस्मिन्। 'पंथि अपूपुनघुन्' (?) इति वचनात् अकारान्तो निपातः। आक्षेपालंकारः॥

केवलमिदमशेषार्थशास्त्रोपात्तसारसमुच्चयं सुभाषितत्रयं शारीरं कर्मेव प्रत्यहमवधातव्यम् ।

स्वस्मान्निजः परोऽन्यस्मात्स्वः परस्मात्परो निजात् ।
रक्ष्यः स्वस्मात्परस्माच्च नित्यमात्मा जिगीषुणा ॥ १०६ ॥

वृक्षान्कण्टकिनो बहिर्नियमयन्विश्लेषयन्संहिता-
नुत्खातान्प्रतिरोपयन्कुसुमितांश्चिन्वंल्लघून्वर्धयन् ।
उच्चान्संनमयन्पृथूंश्च कृशयन्नत्युच्छ्रितान्पातय-
न्मालाकार इव प्रयोगनिपुणो राजन्महीं पालय ॥ १०७ ॥

---

**केवलमित्यादि** । हे राजन्, केवलं निष्केवलमिदं वक्ष्यमाणं सुभाषितत्रयं प्रत्यहं निरन्तरमवधातव्यं अवधारणीयम् । कथंभूतं सुभाषितत्रयम् । अशेषार्थशास्त्रोपात्तसारसमुच्चयम् अशेषाणि समग्राणि यान्यर्थशास्त्राणि तेभ्यः उपात्तो गृहीतः सारसमुच्चयो यत्र सुभाषितत्रये तत्तथोक्तम् । किमिव अवधातव्यम् । शारीरं कर्मेव भोजनादिकमिव ॥

**स्वस्मादित्यादि** । हे राजन्, जिगीषुणा नरेन्द्रेण स्वस्मात् निजः स्वकीयः पुमान् रक्ष्यः रक्षणीयः । परोऽन्योऽन्यस्मात् रक्षणीयः । स्वः स्वकीयः परस्मात् रक्षणीयः । केनापि पीडितः सन् स्वभृतेन रक्षणीयः । परपीडितः सन् परेण रक्षणीयः । कदाचित् परस्मादपि स्वः रक्ष्यः । स्वस्मादपि परो रक्ष्यः । निजात्मा तु स्वस्मात् परस्मात् सर्वैः प्रकारैः रक्षणीय इत्यर्थः । कथम् । नित्यं सर्वकालम् । जात्यलंकारः ॥

**वृक्षानित्यादि** । हे राजन्, महीं पालय रक्षा क इव मालाकार इव पुष्पोपजीवीव । कथंभूतस्त्वम् । प्रयोगनिपुणः यथायोग्यव्यापारचतुरः । यथा मालाकारः निजवनं प्रतिपालयति । किं कुर्वन् । कण्टकिनः खदिरवदरीकिंदर्पादीन् वृक्षान् तरून् बहिर्बाह्ये वृतिस्थाने नियमयन् बध्नन् वनं पालयति । तथा राजापि क्षुद्रशत्रून् मण्डलाद्बहिः कुर्वन् महीं पालयति । मालाकारः पुनः किं कुर्वन् । संहितान् मिलितान् वृक्षान् विश्लेषयन् विरलान् कुर्वन् । तथा राजापि मिलितान् नृपान् पृथक्कुर्वन् महीं पालयति । मालाकारः पुनः किं कुर्वन् । उत्खातान् वातादिना उन्मूलितान् वृक्षान् प्रतिरोपयन् पुनर्वापयन् वनं पालयति । तथा राजापि उत्खातान् गृहीतदण्डान् प्रतिरोपयन् पुनर्मन्त्र्यादिपदं ददत् महीं पालयति । मालाकारः पुनः किं कुर्वन् । कुसुमितान् पुष्पितान् वृक्षान् चिन्वन् पुष्पाणि लुनन् अवचुण्टयन् । तथा राजापि वर्धितधनान् षष्ठांशं गृह्णन् महीं पालयति । मालाकारः पुनः किं कुर्वन् । लघून् बालतरून् वर्धयन् गुरून् कुर्वन् । तथा राजापि कृतकार्यमृतसेवकपुत्रान् वर्धयन् पितृसदृशान् कुर्वन् महीं पालयति । मालाकारः पुनः किं कुर्वन् । उच्चान् उन्नतान् वृक्षान् सम्यक्प्रकारेण नमयन्, तच्छायापातेन अन्ये वृक्षा न वर्धन्ते यतः, तथा राजापि उच्चान् गर्वितान् संनमयन् पादयोः

स्वल्पादपि रिपोर्बीजादश्वत्थस्येव शाखिनि ।
भयं जायेत कालेन तस्मात्कस्तमुपेक्षते' ॥ १०८ ॥

इति समासादितसमस्तसचिवपुरःसरस्थितेर्नीतिबृहस्पतेश्च लक्ष्मीमुद्राङ्कां गाङ्गेयोर्मिकामिव हस्तेकृत्येतिकर्तव्यताक्रियां सत्यवागिव प्रतिपन्नधर्मविजयैकभावो यथाकालं षडपि गुणानन्वतिष्ठम् ।

यथा मदगजारूढे यतयाताप्रयोगिणि ।
न चिरं श्रीस्तथामन्त्रे जाततन्त्रेऽपि राजनि ॥ १०९ ॥
शुचयः स्वामिनि स्निग्धा राजराद्धान्तवेदिनः ।
मन्त्राधिकारिणो राज्ञामभिजाताः स्वदेशजाः ॥ ११० ॥

कदाचित्सततसन्मानदानाह्लादितसमस्तमित्रतन्त्रः सचिवलोकमतिसमु-

---

पातयन् महीं पालयति । मालाकारः पुनः किं कुर्वन् । पृथून् विस्तीर्णांश्च कृशयन्प्रतनुकुर्वन् । तथा राजापि पृथून् प्रचुरसैन्यान् कृशयन् अल्पसैन्यान् कुर्वन् महीं पालयति । दृष्टान्तालंकारः ॥

स्वल्पादित्यादि । हे राजन्, स्वल्पादपि हीनादपि रिपोः शत्रोः बीजात् संतानात् उत्तरकाके भयं जायेत भीतिरुत्पद्येत । कस्मिन्निव । अश्वत्थस्य पिप्पलवृक्षस्य अल्पादपि बीजात् शाखिनि परवृक्षे भयं जायते । तमपरवृक्षं विदारयतीत्यर्थः । तस्मात् कारणात् अल्पशत्रुवीजं कः पुमान् उपेक्षते अनादरीकुर्यात् । तमुद्धरेदित्यर्थः । उपमाक्षेपालंकारः ॥

इदानीं मन्त्रप्रस्तावोचितं मन्त्रमन्त्रिणोः स्वरूपमाह—यथेत्यादि । यथा येन प्रकारेण मदगजारूढे पुरुषे यतयाताप्रयोगिणि यतयातस्य वाक्पादाङ्कुशप्रणिधीनामप्रयोगिणि अकारके पुरुषे चिरं दीर्घकालं श्रीः शोभा न भवति तेन हस्तिना सोऽप्रयोगी पातितः सन् अशोभां लभते । तथा तेन प्रकारेण अमन्त्रे मन्त्रविज्ञानरहिते राजनि नृपे जाततन्त्रेऽपि उत्पन्नबहुसैन्येऽपि श्रीः राज्यलक्ष्मीः चिरं दीर्घकालं न भवति । दृष्टान्तालंकारः॥

शुचय इत्यादि । राज्ञां नरेन्द्राणां मन्त्राधिकारिणो मन्त्रिणो धीसचिवा भवन्ति । कीदृशो भवन्ति । शुचयः परधनपरयोषित्पराङ्मुखाः । स्वामिनि स्निग्धाः । पुनः कथंभूताः । अभिजाताः कुलोद्गताः । पुनः कथंभूताः । स्वदेशजाः निजदेशोद्भवाः । जात्यलंकारः । इति मन्त्राधिकारः समाप्तः ॥

कदाचिदित्यादि । कदाचित् कस्मिंश्चिदवसरे तं जगत्प्रसिद्धं दूतं आक्षपटलिकेन व्यवहारवेदिना अक्षो व्यवहारस्तस्य पटलः समूहः अक्षपटलः अक्षपटले नियुक्तः आक्षपटलिकस्तेन आक्षपटलिकेन । उक्तं च—'रावणात्मज आत्मा च ज्ञानं सूचन इत्यपि ।

द्धृतमन्त्रः श्रीविलासिनीसूत्रितैश्वर्यवरेषु वसुमतीश्वरेषु खलु दूतपूर्वाः सर्वेऽपि संध्यादयो गुणा इत्यवधार्याकार्य च

दक्षः शूरः शुचिः प्राज्ञः प्रगल्भः प्रतिभानवान् ।
विद्वान्वाग्मी तितिक्षश्च द्विजन्मा स्थविरः प्रियः ॥ १११ ॥

इति गुणविशिष्टमशेषमनीषिपुरुषपरिषदिष्टमखिलप्रयाणसामग्रीसुविधेयं हिरण्यगर्भनामधेयं शास्त्रशस्त्राभ्यासनिर्जितामरगुरुपार्थं निसृष्टार्थं निजप्रज्ञातिशयावहेलितपुलहपुलोमपुलस्तिपालकाप्यकात्यायनमतिजातं दूतमाक्षपटलिकेन तमेव लेखार्थं श्रावयामास ।

---

कर्षे विनीतकश्चैव वासकासद्भिरीरितः ॥ व्यवहारो रथस्यात्रावयवाप्यक्ष उच्यते । सौवर्चलं हृषीकं च तुच्छमक्षं नपुंसके ॥' व्यवहारवेदिना लेखचतुरेण लेखार्थं लेखनार्थं अहं श्रावयामास आकर्णितवान् । किं कृत्वा । पूर्वं इति असुना प्रकारेण गुणविशिष्टं हिरण्यगर्भनामधेयं आकार्य आहूय । इतीति किम् ।

**दक्ष इत्यादि** । दक्षः कार्यघटनाकुशलः, शूरः शस्त्रशास्त्रप्रयोगनिपुणः, शुचिश्चतुरुपधाशुद्धः । धर्मार्थकामभयैर्यत्परीक्षणमुपधेत्युच्यते । वंशविद्याव्रतविधुरोपकारश्चेति उपधाः । प्राज्ञः स्वपरोक्तिसंपन्नसम्यगभ्यूहः, प्रगल्भः परचित्तप्रसादनकुशलः, प्रतिभानवान् परैरभियोगे सन्निषदनेकोपायः, विद्वान् आत्मेतरव्यवस्थितिविदग्धः, वाग्मी हृदये अभिनिविष्टस्यार्थस्य प्रतिपादनप्रवीणः, तितिक्षः परगर्जितेषु स्थिरप्रकृतिः, स्थविरः नीतिविद्यैश्वर्यादिभिरविकृताचारः, प्रियः नयनमनोह्लादनजननः । समुच्चयालंकारः ॥

**इतीत्यादि** । पुनश्च किं कृत्वा दूतमाकार्य । इत्यमुना प्रकारेण अवधार्य ज्ञात्वा । इतीति किम् । वसुमतीश्वरेषु नृपेषु खलु निश्चयेन दूतपूर्वाः सर्वेऽपि संध्यादयो गुणा भवन्ति । कथंभूतेषु वसुमतीश्वरेषु । श्रीविलासिनीसूत्रितैश्वर्यवरेषु श्रीरेव विलासिनी वेश्या तया सूत्रितं सूचितं यदैश्वर्यं तेन वरेषु । कथंभूतं दूतम् । अशेषमनीषिपुरुषपरिषदिष्टम् अशेषा ये मनीषिपुरुषा विद्वज्जनास्तेषां परिषत् सभा तत्र इष्टं वल्लभम् । पुनः कथंभूतं दूतम् । अखिलप्रयाणसामग्रीसुविधेयम् अखिलासु प्रयाणसामग्रीषु प्रस्थानवस्तुमेलनेषु सुविधेयं सुप्रश्रितम् । पुनः कथंभूतं दूतम् । शास्त्रशस्त्राभ्यासनिर्जितामरगुरुपार्थम् शास्त्राभ्यासेन निर्जितो अमरगुरुर्बृहस्पतिर्येन, शस्त्राभ्यासेन निर्जितः पार्थो अर्जुनो येन स तथा तम् । पुनः कथंभूतं दूतम् । निसृष्टार्थं सर्वकार्येषु प्रमाणीभूतव्यापारम् । तथा चोक्तम्—'निसृष्टार्थो मितार्थश्च तथा शासनहारकः । सामर्थ्योत्पादनो हीनो दूतस्तु त्रिविधः स्मृतः ॥' अमात्यसामर्थ्यात् गुणसंपत्तेः पादहीनो यथोत्पन्नकार्यकारी मितार्थः मितार्थात् पादतो हीन एकपादगुणः यथालिखितपाठकः शासनहर इति त्रयो दूताः ।

तथा हि—

गर्वं बर्बर मुञ्च मा चरत रे पञ्चालकाश्चापलं
केलिं केरल संहर प्रविश रे मद्रेश देशान्तरम्।
मिथ्यैश्वर्यबलावलेपरभसभ्रश्यद्विवेकात्मनां
मिथ्या वष्टिरिटिल्लितं न सहते देवः स दैवाश्रयः॥ ११२॥
शौण्डीर्यशालिनि जगत्त्रयलब्धवर्णे
देवे न यः प्रणतिभावमुपैति भूपः।
तस्याहवेषु वयसां शिरसि प्रबन्धो
यद्वाश्रमेषु परलोकधिया जटानाम्॥ ११३॥

---

पुनः कथंभूतं दूतम्। निजप्रज्ञातिशयावहेलितपुलहपुलोमपुलस्तिपालकाप्यकात्यायनमतिजातम् निजप्रज्ञातिशयेन आत्ममतिप्रकर्षेण अवहेलितं पुलहस्य ऋषिविशेषस्य तथा पुलोमस्य तथा पुलस्तेः तथा पालकाप्यस्य काव्यस्य वा। द्वयं भिन्नम्। कात्यायनस्य वररुचेर्मतीनां जातः समूहो येन स तथोक्तस्तम्।

तथा हि तमेवालेखार्थं आक्षपटलिको ब्रूते—**गर्वमित्यादि**। रे बर्बर सपादलक्षपर्वताधीश, त्वं गर्वं मुञ्च मदं परिहर मिथ्याभिमानं त्यज। रे पञ्चालकाः पञ्चालदेशोद्भवाः क्षत्रियाः, चापलं चपलत्वं मा नैव चरत कुरुत यूयम्। रे केरल मलयाचलनिकटवर्तिन्, त्वं केलिं क्रीडां संहर संकोचय। रे मद्रेश मद्रदेशाधीश, त्वं देशान्तरं अपरदेशं प्रविश प्रवेशं कुरु। स जगत्प्रसिद्धो देवो यशोधरमहाराजः इत्थममुना प्रकारेण वो युष्माकं टिरिटिल्लितं आत्मनोऽनुचितं व्यवहारं न सहते न मृष्यति न क्षमते। कथंभूतानां वः। मिथ्यैश्वर्यबलावलेपरभसभ्रश्यद्विवेकात्मनाम् मिथ्या निरर्थकं यदैश्वर्यं बलावलेपश्च सैन्यगर्वः तेन रभसेन वेगेन भ्रश्यन् विगलन् विवेको हेयोपादेयचातुर्यं आत्मनां येषां तथोक्तास्तेषाम्। कथंभूतो देवः। दैवाश्रयः। पुण्येनाधिकतर इत्यर्थः। समुच्चयालंकारः॥

**शौण्डीर्यशालिनीत्यादि**। यो भूपः देवे यशोधरमहाराजे प्रणतिभावं नम्रत्वं न उपैति न गच्छति तस्य भूपस्य आहवेषु संग्रामेषु शिरसि मस्तकोपरि वयसां काकगृध्रादीनां पक्षिणां प्रबन्धो मेलापको भवति। तस्य मस्तकं भिद्यत इत्यर्थः। यद्वा अथवा आश्रमेषु गङ्गादिनदीतटेषु परलोकधिया स्वर्गादिबुद्ध्या (जटानां लम्बकचानां) प्रबन्धो भवति। कथंभूते देवे। शौण्डीर्यशालिनि त्यागविक्रमाभ्यां विश्रुतः शौण्डीरस्तस्य भावः कर्म वा शौण्डीर्यं तेन शालते शोभते इत्येवंशीलः शौण्डीर्यशाली तस्मिन् शौण्डीर्यशालिनि। 'शल शोभायाम्' इति धातोः प्रयोगात्। पुनः कथंभूते देवे।

दूतस्य पुनः स्वामिनैवमुक्तस्यापीदमनुष्ठानम्—

संकीर्तयेत्साम रिपौ सदर्पे नयं सनीतौ बलिनि प्रभेदम् ।
मन्त्रेण तन्त्रेण च हीनवृत्तौ दण्डाश्रयोपायविधिं विधिज्ञः ॥ ११४ ॥

अन्यथा—

वागर्थरूक्षलुब्धानां दूतानां दुःप्रवृत्तिभिः ।
श्रीः स्वामिनः प्रवृद्धापि क्रियते संशयाश्रया ॥ ११५ ॥

कदाचित्कृतकार्धचन्द्रचुम्बितचन्द्रकापीडविडम्बितमुण्डमण्डलः, तूलिनी-

---

जगत्त्रयलब्धवर्णे जगत्त्रये त्रैलोक्ये लब्धः प्राप्तो वर्णो यशो येन स तथा तस्मिन् । दीपकालंकारः ॥

**दूतस्येत्यादि** । पुनः स्वामिनैवमुक्तस्यापीदमनुष्ठानं दूतस्य निसृष्टार्थादित्रिविधस्य लक्षणस्यापि पुनरुक्तादनन्तरं स्वामिना नृपेण एवं पूर्वोक्तलक्षणमर्थम् । 'गर्वे बर्बर मुञ्च–' इत्यादिकं उक्तस्यापि शिक्षितस्य इदं वक्ष्यमाणमनुष्ठानं कर्तव्यं भवति ॥

तत् किम् । **संकीर्तयेदित्यादि** । विधिज्ञो राजनीतिविज्ञायको दूत उपायचतुरः सदर्पे रिपौ समदे शत्रौ साम संकीर्तयेत् । तथाहि—संवन्धोपाख्यानं गुणसंकीर्तनं अन्योन्योपकारदर्शनं आत्मोपरिधानं आयतिप्रदर्शनं चेति सनीतौ न्यायवति शत्रौ नयं संकीर्तयेत् । मन्त्रेण पञ्चाङ्गेन तन्त्रेण च पञ्चाङ्गेन च हीनवृत्तौ हीने रिपौ दण्डाश्रयोपायविधिं संकीर्तयेत् दण्डस्य सैन्यस्य आश्रयाः वहुसैन्यदर्शनं साधनसमुद्रत्वं उपायविधिं उपायविधानम् । निरूपयेदिति शेषः । दीपकालंकारः ॥

अन्यथा दूतो यद्येवं न करोति तदा किं भवति—**वागर्थेत्यादि** । वागर्थरूक्षलुब्धानां कर्कशवचनकर्कशार्थसंयुक्तानां लोभिनां च दूतानां दुःप्रवृत्तिभिः दुराचारैः स्वामिनो नृपस्य श्रीर्लक्ष्मीः प्रवृद्धापि वृद्धिं गता अपि संशयाश्रया संदेहं प्राप्ता क्रियते विधीयते । जात्यलंकारः ॥

**कदेत्यादि** । कदाचित् कस्मिंश्चिदवसरे गूढपुरुषाधिष्ठायकात् पुरुषनियोगिनः सकाशात् वरिष्ठकनामधेयात् इति ईदृशं आकर्ण्य श्रुत्वा । किमाकर्ण्य । तत् कृत्याकृत्यलोकस्य भेदाभेदजनस्य जनश्रुतिं वार्तां आदाय गृहीत्वा शङ्खनकनामा शङ्खनक इत्यभिधानः प्रणिधिः स्पर्शहैरिकः चर आगतो वर्तते । तं च शङ्खनकं आहूय च निजसमीपे आकार्य इत्यमुना प्रकारेण तेन शङ्खनकेन सह नर्मालापं बर्बरभाषणं अकरवं अहं कृतवानिति क्रियाकारकसंवन्धः । कथंभूतः शङ्खनकः । कृतकार्धचन्द्रचुम्बितचन्द्रकापीडविडम्बितमुण्डमण्डलः कृतकेन कृत्रिमेन अर्धचन्द्रेण चुम्बितः स्पृष्टो योऽसौ चन्द्रकापीडः मयूरवर्हैकदेशमुकुटस्तेन विडम्बितं शोभितं मुण्डमण्डलं शिरःप्रदेशो यस्य स तथोक्तः । पुनः कथंभूतः शङ्खनकः । तूलिनीकुसुमकुड्मलाकृतिजातुषोत्क-

कुसुमकुड्मलाकृतिजातुषोत्कर्षितकर्णकुण्डलः, कार्मणानेकजटाजातिजटितकण्ठिकावगुण्ठनजठरकण्ठनालः, चिरचेलचीरीचर्चितविचित्राप्रपदीनप्राप्तलम्बजालः, कुवलीफलस्थूलत्रापुषमणिविनिर्मिताङ्गदसंपादितप्रकाण्डमण्डनः, कूर्परपर्यन्तप्रकोष्ठप्रकल्पितगवलवलयावरुण्डनः, काकनन्तिकाफलमालोपरचितवैकक्षकवक्षःस्थलः, कठोरकमठपृष्ठाष्ठीलस्थलपुटपाणितलः, पटच्चरपर्याणगोणीगुह्यापिहितमेहनः, पुराणतरमन्दीरमेखलालंकृतनितम्बनिवेशनः,

---

र्षितकर्णकुण्डलः तूलिनी शाल्मलिवृक्षस्तस्य कुसुमकुड्मले पुष्पकोरके तयोराकृतिः आकारो ययोस्ते तूलिनीकुसुमकुड्मलाकृतिनी ते च ते जातुषे लाक्षामये ईदृशे उत्कर्षिते निवेशिते कर्णयोः श्रवणयोः कुण्डले कर्णवेष्टने येन स तथोक्तः। पुनः कथंभूतः शङ्खनकः। कार्मणानेकजटाजातिजटितकण्ठिकावगुण्ठनजठरकण्ठनालः कार्मणा वशीकरणादिप्रयोगा अनेका(के) वद्धरोषा जटा मूलानि तासां जातयः प्रकारास्ताभिर्जटिता या कण्ठिका कण्ठाभरणं तस्या अवगुण्ठनेन समन्ताद्वन्धनेन रूक्षणेन जठरं कठिनं कण्ठनालं कण्ठकन्दली यस्य स तथोक्तः। पुनः कथंभूतः शङ्खनकः। चिरचेलचीरीचर्चितविचित्राप्रपदीनप्राप्तलम्बजालः चिरचेलानि पुराणवस्त्राणि तेषां चीरीभिश्चर्चितं रचितं विचित्रं अनेकवर्णं आप्रपदीनं गुप्ति(ल्फ)पर्यन्तं प्राप्तं लम्बजालं दीर्घहारो यस्य स तथोक्तः। पुनः कथंभूतः शङ्खनकः। कुवलीफलस्थूलत्रापुषमणिविनिर्मिताङ्गदसंपादितप्रकाण्डमण्डनः कुवलीफलानि वदरीफलानि तद्वत् स्थूला त्रापुषाः त्रपुमया ये मणयस्तैर्विनिर्मितानि अङ्गदानि बाहुभूषणानि तैः संपादितं कृतं प्रकाण्डमण्डनं प्रकोष्ठाभरणमणिवन्धस्थानाभरणं येन स तथोक्तः। पुनः कथंभूतः। कूर्परपर्यन्तप्रकोष्ठप्रकल्पितगवलवलयावरुण्डनः कूर्परपर्यन्तं मणिवन्धादारभ्य कफोणिपर्यन्तं प्रकोष्ठयोर्मणिवन्धनस्थानयोः प्रकल्पितं रचितं गवलवलयानां महिषशृङ्गकटकानां अवरुण्डनं आरुण्डनं येन स तथोक्तः। पुनः कथंभूतः। काकनन्तिकाफलमालोपरचितवैकक्षकवक्षःस्थलः काकनन्तिकाफलानां गुञ्जाफलानां ये माले द्वे ताभ्यामुपरचितं विनिर्मितं यद्वैकक्षकं वक्षसि तिर्यग्विक्षिप्तं तेनोपलक्षितं वक्षःस्थलं यस्य स तथोक्तः। उक्तं च—'तिर्यग्वक्षसि विक्षिप्तं वैकक्षकमुदाहृतम्'। वस्त्रादिकमिति शेषः। पुनः कथंभूतः। कठोरकमठपृष्ठाष्ठीलस्थपुटपाणितलः कठोरं कठिनं यत् कमठस्य कच्छपस्य पृष्ठं तस्य अष्ठीलं कर्पूरं तद्वत् स्थपुटं निम्नोन्नतं पाणितलं हस्ताग्रं यस्य स तथोक्तः। पुनः कथंभूतः। पटच्चरपर्याणगोणीगुह्यापिहितमेहनः पटच्चरस्य पुराणस्य पर्याणस्य पल्ययनस्य या गोणी चर्ममयमाच्छादनं तस्य गुह्या कच्छोटिका तया पिहितमाच्छादितं मेहनं लिङ्गं येन स तथोक्तः। पुनः कथंभूतः। पुराणतरमन्दीरमेखलालंकृतनितम्बनिवेशनः पुराणतरमतिजीर्णं यन्मन्दीरं मन्थानिकालम्बनरज्जुस्तस्य या मेखला कटिमे-

कंसहंसकरसितवाचालचरणचारचातुरीक्षोभितवीथीजनमनस्कारः कातरेक्षणविषाणक्काणविनिवेदितनिशाबलिप्रचारः, किरातवेषस्य भगवतो विश्वमूर्तेरपरमेव कमप्याकल्पं बिभ्राणः, पुत्रभाण्डं बन्दिवृन्दारकस्य कटकाधिपतेः, जामिर्भोगावलीपाठिनः सुभटसौहार्दस्य, दौहित्रः श्रोत्रियकितवनाम्नो नर्मसचिवस्य, समाश्रयस्थानमवकीर्णिलोकानाम्, अखिलपुनर्भूविवाहकृतकशिपुचेतनसंबन्धः, सकलगोकुलालिखिततूवरसुरभिसैरिभीदायनिबन्धः, प्रचुरप्रतिकर्मविकृतगात्रैः सन्निपुत्रैर्दाण्डाजिनकैश्च परिव्राजकैः 'एष खलु भगवान्

---

खला तया अलंकृतं शृङ्गारितं नितम्बनिवेशनं कटीभागो येन स तथोक्तः । पुनः कथंभूतः । कंसहंसकरसितवाचालचरणचारचातुरीक्षोभितवीथीजनमनस्कारः कंसस्य धातुविकृतिविशेषस्य ये हंसकाः नूपुरास्तेषां रसितैः शब्दितैः वाचालौ शब्दवन्तौ बहुशब्दौ यौ चरणौ पादौ तयोश्चारस्य गमनस्य चातुरी वैदग्धी तया क्षोभितः संचालितः वीथीजनानां मार्गलोकानां मनस्कारश्चित्ताभोगो येन स तथोक्तः । पुनः कथंभूतः । कातरेक्षणविषाणक्काणविनिवेदितनिशाबलिप्रचारः कातरेक्षणो महिषस्तस्य विषाणं शृङ्गं तस्य क्काणेन नादेन विनिवेदितः प्रकटीकृतो निशाया रात्रेः बलिप्रचारः पूजाप्रवर्तनं येन स तथोक्तः । शङ्खनकः किं कुर्वाणः । किरातवेषस्य भिल्लवेषस्य भगवतः सर्वज्ञस्य विश्वमूर्तेः श्रीमहादेवस्य अपरमेवानीदृशमेव कमपि अपूर्वं अनिर्वचनीयं आकल्पं वेषं बिभ्राणो धरन् । कथंभूतः शङ्खनकः । पुत्रभाण्डं वन्दिवृन्दारकस्य कटकाधिपतेः वन्दिनः स्तुतिपाठकाः अब्राह्मणभट्टास्तेषां मध्ये वृन्दारकः प्रधानस्तस्य वन्दिवृन्दारकस्य कटकाधिपतेः कटकाधिपतिनामकस्य पुत्रभाण्डं पुत्र एव । पुनः कथंभूतः । जामिर्भोगावलीपाठिनः सुभटसौहार्दस्य सुभटसौहार्दनामकस्य भोगावलीपाठिनः चारणभाटस्य जामिर्जामाता । पुनः कथंभूतः । नर्मसचिवस्य भण्डस्य श्रोत्रियकितवनाम्नो दौहित्रो नप्ता । पुनः कथंभूतः । अवकीर्णिलोकानां ब्रह्मचर्यभ्रष्टानां समाश्रयस्थानं विश्रामस्थानम् । पुनः कथंभूतः । अखिलपुनर्भूविवाहकृतकशिपुचेतनसंबन्धः अखिलानां समस्तानां पुनर्भूणां पुंश्चलीनां संग्रहस्त्रीविधवानां विवाहे कृतो विहितः कशिपुचेतनस्य भोजनाच्छादनदेयस्य संबन्धो निबन्धनं यस्य स तथोक्तः । पुनः कथंभूतः । सकलगोकुलालिखिततूवरसुरभिसैरिभीदायनिबन्धः सकलेषु गोकुलेषु गो(ष्ठे)षु आलिखितः राजपत्रविन्यस्तः तूवराणां शृङ्गरहितानां सुरभीणां गवां सैरिभीणां महिषीणां दायनिबन्धो यस्य स तथोक्तः । पुनः कथंभूतः । परिव्राजकैः शिखाधरद्भिः शैवलिङ्गिभिः इति अमुना प्रकारेण आवेद्यमानज्ञानमन्त्रतन्त्रप्रभावः आवेद्यमानो ज्ञायमानः ज्ञानस्य मन्त्रस्य तन्त्रस्य प्रभावो महिमा यस्य स तथोक्तः । कथंभूतैः परिव्राजकैः । प्रचुरप्रतिकर्मविकृतगात्रैः प्रचुरेण भूरिणा प्रतिकर्मणा नेपथ्यविधिना विकृतानि विकारं

संजातमहायोगिनीसंगतिरतीन्द्रियज्ञानोद्गतिः सिद्धः सामेधिकः संवननकर्मणा करिणा केसरिणमपि संगमयति विद्वेषभेषजेन जननीमप्यात्मजेषु वैरिणीं विदधाति इत्यावेद्यमानज्ञानमन्त्रतन्त्रप्रभावः स्वपुरविषयनिवासिनः कृत्याकृत्यलोकस्य जनश्रुतिमादायागतः शङ्खनकनामा प्रणिधिरिति गूढपुरुषाधिष्ठायकाद्वरिष्ठकादाकर्ण्याहूय च तम् 'हंहो शङ्खनक, कुतो न खलु संप्रति सा तव तुन्दवृद्धिः' इति तेन सह नर्मालापमकरवम्।

---

प्राप्तानि गात्राणि येषां परिव्राजकानां ते तथा तैः। पुनः कथंभूतैः। सन्निपुत्रैः सन्निनोऽपायायोगज्योतिर्भरतवैद्यकादिविद्याधारेण राज्ञो हिताहितजनपरिज्ञानकुशलाः तेषां पुत्राः सन्निपुत्रास्तैः। पुनः कथंभूतैः। दाण्डाजिनकैश्च दण्डं च यष्टिः अजिनं च चर्म दण्डाजिने तयोर्नियुक्ता दाण्डाजिनकास्तैः। दण्डचर्मधारिभिरित्यर्थः। इतीति किम्। हे देव हे लोकाः, एष खलु शङ्खनकनामा भगवान् योगीश्वरः संजातमहायोगिसंगतिः संजाता प्रत्यक्षीभूता महायोगिनीनां महाविद्यादेवतानां संगतिः प्रत्यक्षता यस्य स तथोक्तः। एष पुनः कथंभूतः। अतीन्द्रियज्ञानोद्गतिः अतीन्द्रियज्ञानस्य इन्द्रियरहितज्ञानस्य उद्गतिरुत्पत्तिर्यस्य स तथोक्तः। असौ सिद्धः एष संसारिजीवः असौ विपरीतः एष सामेधिकः अव्यभिचारिवचनः एष खलु भगवान् संवननकर्मणा वशीकरणेन केसरिणमपि सिंहमपि करिणा गजेन संगमयति विद्वेषभेषजेन वैरोत्पादकौषधेन जननीमपि आत्मजेषु वैरिणीं विदधाति करोति। असौ शङ्खनकनामा किं कृत्वा आगतः। गूढपुरुषाधिकारी वरिष्ठकः कथयति—स्वपुरविषयनिवासिनः स्वदेशपरदेशवास्तव्यस्य कृत्याकृत्यलोकस्य परोपजापसहाः कृत्याः परोपजापं न सहन्ते अकृत्याः कृत्याश्च अकृत्याश्च कृत्याकृत्या भेद्याभेद्या ये पुरुषास्तेषां लोकः समूहस्तस्य जनश्रुतिं वार्तां आदाय गृहीत्वा। शङ्खनकनामा प्रणिधिरागत इति संवन्धः। अहं तेन शङ्खनकनाम्ना सह इति नर्मालापं अकरवं कृतवान्। अहं किं कृत्वा। पूर्वं शङ्खनकनामानं आहूय आकार्य। इतीति किम्। हंहो अहो शङ्खनक, तव संवन्धिनी पूर्वं या मया दृष्टा सा तव तुन्दवृद्धिरुदरवृद्धिः संप्रति इदानीं खलु निश्चयेन वाक्यालंकारे वा कुतः कस्मात् कारणात् न वर्तत इति। सोऽपि शङ्खनकनामा प्रणिधिः इति अमुना प्रकारेण आललाप आलापं चकार। इतीति किम्। हे देव हे राजन्, भवादृशानामेव अयं युष्मत्सदृशानामेव अयं प्रत्यक्षीभूतः तुन्द उदर अमन्दिमानं अलघुत्वं वृद्धिमास्कन्दति प्राप्नोति। न केवलं भवादृशानामेव तुन्दोऽमन्दिमानमास्कन्दति, अपि तु स्वभावादेव निसर्गेणैव तुन्दपरिमृजस्य अलसस्य लोकस्य अयं तुन्दोऽमन्दिमानमास्कन्दति। कथंभूतानां भवादृशानाम्। पूर्वोक्तैर्भोजनैर्वारिपूरैश्च जलसमूहैराकण्ठं कण्ठपर्यन्तं आशिखाग्रं च मस्तकोपरि काकपक्षपर्यन्तं प्रतिदिवसं दिनं दिनं प्रति दशद्वादशवासरान् भुञ्जानानां

सोऽपि 'देव, कामिनीजनकटाक्षैरिवातिदीर्घविशदच्छविभिर्दीदिविभिः, विरहिणीहृदयैरिव सोष्मभिः काञ्चनच्छायापलापैः सूपैः, कान्ताननैरिव तत्प्राञ्जलिपेयपरिमलैः प्राज्यैराज्यैः, स्त्रीकैतवैरिव जनितस्वान्तप्रीतिभिर्बहुरसवशैरवदंशैः, लासिकाविलासैरिव मनोहरैः समानीतनेत्रनासारसनानन्द-

---

वत्सलवत्सलानां भोजनप्रियाणाम् । पुनः कथंभूतानां भवादृशानाम् । शोकापनुदसंपदाम् शोकापनुदा शोकदुःखविनाशिनी संपत् येषां ते तथोक्तास्तेषाम् । कथंभूतस्य तुन्दपरिमृजस्य लोकस्य । एवंविधस्य प्रतिदिवसं दशद्वादशवासरान् भुञ्जानस्य । पुनः कथंभूतस्य लोकस्य । उत्कोटश्रीशिखाप्रकाशप्रशान्तयथार्थदर्शनस्य उत्कोटो लम्बः तत्संबन्धिनी या श्रीः लक्ष्मीस्तस्याः शिखा अग्रं तस्याः प्रकाशेन द्योतेन प्रशान्तं नष्टं यथार्थदर्शनं यथोक्तनिरीक्षणं यस्य स तथा तस्य । लक्ष्मीमदेन कमपि रुचिरतया न पश्यतीत्यर्थः । कस्येव । तमिस्रायां रात्रौ गृहीतप्रदीपस्येव । यथा रात्रौ हस्तगृहीतप्रदीपः पुमान् यथोक्तं न पश्यति । अस्मादृशां तु अस्मत्सदृशभिक्षुकाणां तु । नामेति संभावनायाम् । अयं प्रत्यक्षीभूतः पिचण्डो जठरः कथं केन प्रकारेण स्फायतां वृद्धिं गच्छतु । अपि तु न कथमपि स्फायताम् । कथंभूतानां अस्मादृशाम् । देवप्रसादात् श्रीमहादेवकारुण्यात् युष्मत्प्रसादाद्वा उपमानोपमेयार्थरहितानां दरिद्रिणाम् । अस्मत्सदृशः कोऽपि दरिद्री न प्रवर्तते यस्योपमानं दीयते । अस्मात्सदृशा उपमेया वयमेव वर्तामहे । कैः कैर्भोजनैः । तृप्तानां दीदिविभिरोदनैः । कथंभूतैर्दीदिविभिः । अतिदीर्घविशदच्छविभिः कामिनीजनकटाक्षैरिव नवयौवनस्त्रीजनापाङ्गदर्शनैरिव । यथा कामिनीजनकटाक्षा अतिदीर्घविशदच्छवयो भवन्ति । पुनश्च कैः भोजनैः । तृप्तानां सूपैर्दालिभिः कृत्वा । कथंभूतैः सूपैः । काञ्चनच्छायापलापैः कनककान्तितिरस्कारकैः । पुनः कथंभूतैः । सोष्मभिः उष्णत्वसहितैः । कैरिव । विरहिणीहृदयैरिव विप्रलब्धस्त्रीजीवस्थानैरिव । यथा विरहिणीनां भर्तृवियोगिनीनां स्त्रीणां हृदयानि सोष्माणि भवन्ति सुवर्णवर्णानिच भवन्ति गौरवर्णत्वात् । पुनश्च कैः कृत्वा । वत्सलवत्सलानां प्राज्यैः प्रचुरैः आज्यैर्घृतैः । कथंभूतैराज्यैः । तत्प्राञ्जलिपेयपरिमलैः तत्प्राञ्जलिना नासिकाञ्जलिना पेयः आस्वादनीयः परिमलो येषां तानि तथोक्तानि तैः । कैरिव । कान्ताननैरिव । यथा कान्ताननानि वनितामुखानि नासिकाञ्जलिपेयपरिमलानि भवन्ति । पुनश्च कैः कृत्वा । वत्सलवत्सलानां तथा अवदंशैः शालनकैः भक्तिसिक्तसंयुक्तवनस्पतिव्यञ्जनैः । कथंभूतैरवदंशैः । जनितस्वान्तप्रीतिभिः उत्पादितहृदयानन्दैः । पुनः कथंभूतैरवदंशैः । बहुरसवशैः शुक्ततिन्तिडीकविकङ्कक्षीवभूतनाशनघनघनसारादिसंस्कृतैः । कैरिव । स्त्रीकैतवैरिव स्त्रीणां धूर्तत्वसदृशैः । यथा स्त्रीकैतवानि नारीजनकपटाः स्वान्तप्रीतिकराणि बहुरसानि च भवन्ति । पुनश्च कैः कृत्वा । वत्सलवत्सलानां खाण्डवैस्तीमनविशेषैरन्नव्यञ्जनैः । कथंभूतैः खाण्डवैः । मनोहरैः हृदयानन्दजनकैः । पुनः कथंभूतैः । समानीतनेत्र

भावैः खाण्डवैः, प्रियतमाधरैरिव खादमानैरविच्छिन्नखिन्नैः पक्वान्नैः, तरुणीपयोधरैरिव सुजाताभोगैः स्तब्धविधिभिर्दधिभिः, प्रणयिनीविलोकितैरिव मधुरकान्तिभिः स्निग्धैर्दुग्धैः, अभिनवाङ्गनासंगमैरिवातीव स्वादुभिः शर्करासंपर्कसमासन्नैः परमान्नैः, मेहनरसरहस्यैरिव सर्वाङ्गीणसंतापहारिभिर्घनसारपारीदन्तुरैर्वारिपूरैः, आकण्ठमानयनमाशिखमाशिखाग्रं च प्रतिदिवसं दशद्वादशवासरान्वत्सलवत्सलानामेवंविधस्य च तमिस्रायां गृहीतप्रदीपस्येवोत्कोटश्रीशिखाप्रकाशप्रशान्तयथार्थदर्शनस्य स्वभावादेव तुन्दपरिमृजस्य लोकस्य शोकापनुदसंपदां भवादृशानामेवायं तुन्दोऽमन्दिमानमास्कन्दति । अस्मादृशां तु देवप्रसादादुपमानोपमेयार्थरहितानां कथं नामायं पिचण्डः स्फायताम्' इत्याललाप ।

---

नासारसनानन्दभावैः समानीत उत्पादितो नेत्राणां नासानां घ्राणानां रसनानां जिह्वानामानन्दभावो यैः ते तथा तैः । कैरिव । लासिकाविलासैरिव नर्तकीनां लोचनचेष्टितैरिव । यथा लासिकाविलासा नेत्रादीनां मनोहरा भवन्ति । पुनः कैः कृत्वा । पक्वान्नैः स्वादमानैः रोचमानैः रुचिं कुर्वद्भिः । कथंभूतैः पक्वान्नैः । अविच्छिन्नखिन्नैः परिपूर्णपचनैः । कैरिव । प्रियतमाधरैरिव वल्लभस्त्रीदन्तच्छदैरिव । यथा प्रियतमाधराः स्वादमाना रोचिष्णवो भवन्ति । पुनः कैः कृत्वा । दधिभिः नवनीतहेतुभिः सुजाताभोगैः सुनिष्पन्नविस्तारैः । कथंभूतैः दधिभिः। स्तब्धविधिभिः काठिन्यविधानैः । कैरिव । तरुणीपयोधरैरिव नवयौवनस्त्रीस्तनैरिव । यथा तरुणीनां पयोधराः सुजाताभोगाः स्तब्धविधयश्च भवन्ति । पुनः कैः कृत्वा । दुग्धैरौधस्यैः । कथंभूतैर्दुग्धैः। मधुरकान्तिभिः प्रियतेजोभिः शुक्लवर्णैः । पीतादिवर्णरहितैरित्यर्थः । कैरिव । प्रणयिनीविलोकितैरिव स्नेहवतीवनिताकटाक्षावलोकितैरिव । यथा प्रणयिनीविलोकितानि स्वादूनि प्रियाणि च भवन्ति । पुनश्च कैः कृत्वा । परमान्नैः क्षीरान्नैः । पायसैरिति यावत् । कथंभूतैः परमान्नैः । अतीव स्वादुभिः अतिशयेन मिष्टैः । पुनः कथंभूतैः । शर्करासंपर्कसमासन्नैः शर्करायाः संपर्को मिश्रणं समासन्नः प्रत्यासन्नो येषां तानि शर्करासंपर्कसमासन्नानि तैः । कैरिव । अभिनवाङ्गनासंगमैरिव नूतनपरिणीतवनितासंयोगैरिव । यथा अभिनवाङ्गनासंगमा अतीव स्वादवो भवन्ति । पुनः कैः कृत्वा । वारिपूरैर्जलप्रवाहैः । कथंभूतैः वारिपूरैः । सर्वाङ्गीणसंतापहारिभिः सर्वशरीरपरितापस्फोटकैः । पुनः कथंभूतैः । घनसारपारीदन्तुरैः कर्पूरपालिकाचमत्कारिभिः । कैरिव । मेहनरसरहस्यैरिव सुरतरसगोप्यतत्त्वैरिव । यथा मेहनरसरहस्यानि सर्वाङ्गीणसंतापहारीणि भवन्ति । प्रायेणोपमालंकारः ॥

पुनः सपरिहासमेनमहमेवमवोचम्—'अयि हुलाधिपते, किमद्य क्वचनापि हस्तमुखसंयोगोऽभूत् ।' 'चतुःसमुद्रमुद्राङ्कितमेदिनीपरिवृढ, बाढम् ।' 'कथय कथय ।' 'देव, श्रूयताम् । त्रिपुरुषोल्लिखितकमण्डलुकम्बुकलावत्फलकनामावलीप्रशस्ते, अस्ति खल्वस्यामेव पुरि प्रकृतिपुरुषस्येश्वरवर्तेर्दिवाकीर्तेर्नप्ता, स्वस्रीयो बलाहकस्य संवाहकस्य, मैथुनिकः सवरकस्यास्तरकस्य, स्वकीयेन च यशसा देवादपि त्रिचतुरैरङ्गुलैरुपरिवर्तमानः, तथा हि—मितंपचानामग्रेसरः, किंपचानां प्रथमगण्यः, कीकटानामुदाहरणभूमिः, कद-

---

पुनः पुनरपि भूयोऽपि सपरिहासं सवर्कपनं (?) शङ्खनकं प्रति अहं यशोधरमहाराजः एवममुना प्रकारेण अवोचं उक्तवान् । एवं कथमिति चेत् । अयि अहो हुलाधिपते मेषाधिपते भारवाट्, किमद्य अद्य दिने क्वचनापि कस्मिंश्चिदपि स्थाने हस्तमुखसंयोगोऽभूत् करवक्त्रमेलापको बभूव । शङ्खनको ब्रूते—हे चतुःसमुद्रमुद्राङ्कितमेदिनीपरिवृढ हे आसमुद्रान्तपृथ्वीपते बाढमतिशयेनाभूत् । यशोधरो ब्रूते—क्व क्व हे शङ्खनक, भोजनमभूत् कथय कथय ब्रूहि ब्रूहि । शङ्खनको ब्रूते—हे देव हे राजन्, श्रूयतां त्वया आकर्ण्यताम् । हे त्रिपुरुषोल्लिखितकमण्डलुकम्बुकलावत्फलकनामावलीप्रशस्ते त्रिभिः पुरुषैः ब्रह्मविष्णुरुद्रैरुल्लिखिता उत्कीरिता यथासंख्यं ब्रह्मणा निजकमण्डलुफलके शौचोपकरणोपरि विष्णुना कम्बुफलके निजपाञ्चजन्यनामशङ्खोपरि रुद्रेण निजकलावत्फलके निजललाटस्थितार्धचन्द्रफलके पट्टिकायां नामावल्या अङ्कनसमूहस्य प्रशस्तिः प्रसिद्धिर्यस्य स तथा तस्य संबोधनं हे तथोक्त । खल्विति वाक्यालंकारे । अस्यामेव पुरि अस्मिन्नेवोज्जयनीपत्तने किलिञ्जकनामधेयो अस्ति वर्तते । स मां किमपि अपूर्वं अनिर्वचनीयं अवूभुजत् भोजयामास । कथंभूतः किलिञ्जकनामधेयः । प्रकृतिपुरुषस्य शिल्पिकस्य ईश्वरवर्तेः ईश्वरेषु वर्तेति ईश्वरवर्तिनामधेयस्य दिवाकीर्तिनापितस्य चाण्डालस्य वा नप्ता दुहितुः पुत्रः । दौहित्र इत्यर्थः । बलाहकस्य बलाहकनामधेयस्य संवाहकस्य अङ्गमर्दकस्य स्वस्रीयो भागिनेयः । पुनः कथंभूतः । सवरकस्य सवरकनामधेयस्य आस्तरकस्य शय्यापालकस्य मैथुनिकः श्यालः । स किं कुर्वाणः किलिञ्जकः । स्वकीयेन निजेन यशसा पुण्यगुणानुकीर्तनेन देवादपि श्रीयशोधरमहाराजादपि त्रिचतुरैः त्रिभिश्चतुर्भिर्वा अङ्गुलैरुपरिवर्तमानः । चकार उक्तसमुच्चयार्थः । तथा हि तदेव निरूपयति—असौ किलिञ्जकनामधेयः अग्रेसरः त्वमिव अग्रणीर्वर्तते । परं केषाम् । मितंपचानां कृपणानाम् । पुनः कथंभूतः । प्रथमगण्यः पूर्वंगणनीयः । परं केषाम् । किंपचानां किमपि पचन्तीति किंपचास्तेषाम् । पुनः कथंभूतः । उदाहरणभूमिः त्वमिव दृष्टान्तस्थानम् । परं केषाम् । कीकटानां निर्धनानाम् । पुनः कथंभूतः । धुरिवर्णनीयः त्वमिव मुख्यतया

र्याणां धुरिवर्णनीयः, शिखामणिर्लोलुभानाम्, भोजनावसानानन्तरमादेयनामा, संप्रति च परमरमारमणीकामिनः स्वामिनः प्रसादभूमिः, दाक्षिणात्यदेशजन्मनो जङ्घाचारिकनामकस्य विश्वावसोः प्रतिहस्तः किलिञ्जकनामधेयो देवेन कृतसंकेत इवापरकृष्णमुखमक्षिकामुण्डमण्डलीप्रतिमतुषपरुषपाषाणाकीर्णविवर्णविस्तीर्णजीर्णयावनालौदनादिप्रारम्भम्, अतिपूतिपर्युषितविरसालसान्द्रोत्तरारम्भम्, उन्दुरमूत्रमितकुथितातस्यतैलधारावपातप्रायम्, असमस्तसिद्धैर्वारुकोपदंशनिकायम्, अर्धरद्धालाबूफलफालिप्रकारम्, ईषत्खि-

---

वर्णनीयः। परं केषाम्। कदर्याणां मलिनवस्त्राणाम्। उक्तं च—'कदर्यहीनकीनाशकिंपचानमितंपचाः। कृपणः क्षुल्लकः क्षुद्रः क्लीवा एकार्थवाचकाः॥' अत्र प्रस्तावे अयं श्लोकः—'दृढतरनिवद्धमुष्टेः कोषनिषण्णस्य सहजमलिनस्य। कृपणस्य कृपाणस्य च प्रायेणाकारतो भेदः॥' शिखामणिः शिरोरत्नम्। परं केषाम्। लोलुभानां लुब्धानाम्। पुनः कथंभूतः किलिञ्जकनामधेयः। भोजनावसानानन्तरं भुक्तेरनन्तरं आदेयनामा ग्राह्याभिधानः। अस्य नाम भोजनात्पूर्वं न गृह्यते भोजनान्तरायो भवतीति भावः। संप्रति च इदानीं च स्वामिनः प्रसादभूमिः तव कारुण्यस्थानं वर्तते। कथंभूतस्य स्वामिनः। परमरमारमणीकामिनः परमरमा साम्राज्यलक्ष्मीः सैव रमणी वल्लभस्त्री। सर्वविषयसौख्यप्रदायिकात्वात्। तस्याः कामोऽभिलाषो विद्यते यस्य स तथोक्तस्तस्य। कथंभूतः किलिञ्जकनामधेयः। दाक्षिणात्यदेशजन्मनः कर्णाटदेशोद्भवस्य जङ्घाचारिकनामकस्य चारपुरुषप्रधानस्य विश्वावसोः विश्वावसुनामधेयस्य प्रतिहस्तः दर्वीसमानः। किमपि मां अबूभुजत् भोजयामास। किंवत् भोजयामास। देवेन भवता कृतसंकेत इव शिक्षित इव। कथंभूतं किमपि। अपरकृष्णमुखमक्षिकामुण्डमण्डलीप्रतिमतुषपरुषपाषाणाकीर्णविवर्णविशीर्णजीर्णयावनालौदनादिप्रारम्भम् अपरा अनीदृशा याः कृष्णमुखमक्षिकाः कालवक्त्रपुत्तलिकास्तासां मुण्डमण्डल्यः शिरोवयवाः तत्प्रतिमं तत्सदृशं तुषैर्धान्यत्वग्भिः परुषं कर्कशं पाषाणाकीर्णं दन्तभञ्जनकर्करव्याप्तं विवर्णं मलिनं विशीर्णं शतखण्डीभूतं जीर्णं चिरकालोषितं यत् यावनालौदनं षड्धान्यभक्तं आदौ प्रथमतः प्रारम्भो यस्य भोजनस्य तत्तथोक्तम्। पुनः कथंभूतम्। अतिपूतिपर्युषितविरसालसान्द्रोत्तरारम्भम् अतिपूतयो अतिदुर्गन्धाः पर्युषिता ह्यस्तनदिने रद्धा ये विरसाला राजमाषाः तेषां सान्द्रो बहुलः उत्तरारम्भ उपरि परिवेषणं यस्य भोजनस्य तत्। पुनः कथंभूतम्। उन्दुरमूत्रमितकुथितातस्य तैलधारावपातप्रायम् उन्दुरस्य मूषिकस्य यन्मूत्रे प्रस्रावे लघुनिमित्तं तेन मितं प्रमितं कुथितं दुर्गन्धं अतस्या इदं आतस्यं यत्तैलं चोपटः तस्य धाराया अवपात ईषत्पातः प्रायेण भोजने यस्मिन् तत् तथोक्तम्। पुनः कथंभूतम्। असमस्तसिद्धैर्वारुकोपदंशनिकायम् असमस्तसिद्धानि ईषत्पक्वानि मनाक् चटितानि प्रायेण कट्ठकानि यानि ऐर्वारुकाणि

न्नकर्कारुकर्कशच्छेदसारम्, अवालमालूरमूलकचक्रकोपक्रमम्, अमृष्टचिर्भटिकाभक्षणभग्नभावक्रमोपक्रमम्, अपक्वार्काग्निदमनरिङ्गिणीफलाविरलविरचनम्, अगस्तिचूताम्रातकपिचुमन्दकन्दलसदनम्, अनेकदिवसवासार्थिताम्लखलकविस्तारम्, अतीवपाकोपहतबृहतीवार्ताकफलसोभाजनकन्दसालनकावतारम्, एरण्डफलपलाण्डुमुण्डिकाडम्बरम्, उच्छूनोद्वेल्लितवल्ल-

---

कर्कटीखण्डानि तेषां उपदंशनिकायो व्यञ्जनसमूहो यस्मिन् भोजने तत्तथोक्तम् । पुनः कथंभूतम् । अर्धरद्धालाबूफलफालिप्रकारम् अर्धरद्धानि करटानि यानि अलाबूफलानि तुवङ्कफलानि तेषां फालयः खण्डानि तेषां प्रकाराः अनेकभेदा यस्मिन् भोजने तत्तथोक्तम् । पुनः कथंभूतम् । ईषत्खिन्नकर्कारुकर्कशच्छेदसारम् ईषन्मनाक् खिन्ना अर्धरद्धा ये कर्कारूणां कलिङ्गफलानां कर्कशाः कठिना ये छेदाः खण्डानि तैः सारं मनोहरम् । पुनः कथंभूतम् । अवालमालूरमूलकचक्रकोपक्रमम् अवालानि वृहन्ति यानि मालूराणि विल्वफलानि मूलकानि च चक्रकानि च खटालपत्रशाकविशेषः तेषामुपक्रमः ज्ञात्वारम्भो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । अमृष्टचिर्भटिकाभक्षणभग्नभावक्रमोपक्रमम् अमृष्टानि ईषत् साक्षादग्निपक्वानि यानि चिर्भटिकानि किंचरिकास्तेषां भक्षणेन चर्वणेन भग्नो नष्टो भावक्रमोऽरुचिक्रमोपक्रमं यस्मिन् तत्तथोक्तम् । पुनः कथंभूतम् । अपक्वार्काग्निदमनरिङ्गिणीफलाविरलविरचनम् अपक्वानि अनग्निसिद्धानि अर्काणि अर्कफलानि अग्निदमनानि क्षुद्विनाशकानि रिङ्गिणीफलानि कण्टकारिकाफलानि तेषां अविरलं प्रचुरतरवितरणं तस्य विरचना यस्मिन् भोजने तत्तथोक्तम् । पुनः कथंभूतम् । अगस्तिचूताम्रातकपिचुमन्दकन्दलसदनम् अगस्तिश्च अगस्तिवृक्षः चूतश्च आम्रवृक्षः आम्रातकश्च कपिप्रियवृक्षः । उक्तं च धन्वन्तरिनिघण्टौ—'आम्रातकः पीतनकः कपिचूतोऽम्लचाटकः । शृङ्गी कपिरसोऽन्यश्च तनुक्षीरः कपिप्रियः ॥' पिचुमन्दश्च निम्बतरुस्तेषां कन्दलानां खण्डानां सदनं स्थानम् । पुनः कथंभूतम् । अनेकदिवसवासार्थिताम्लखलकविस्तारम् । अनेकदिवसवासं बहुदिवसोषितं बहुदिवसस्थितं अर्थितं याचयित्वा नीतं यत् आम्लखलकं दन्तशठरब्धाविशेषस्तस्य विस्तारः प्राचुर्यं यत्र तत्तथोक्तम् । पुनः कथंभूतम् । अतीवपाकोपहतबृहतीवार्ताकफलसोभाजनकन्दसालनकावतारम् अतीव अतिशयेन पाकोपहता पक्वा या वृहती क्षुद्रवार्ताकी वार्ताकं च वृन्ताकं तेषां फलानि । उक्तं च—'वृन्ताकं कोमलं पथ्यं कोहलं कोमलं विषम् ।' सोभाजनश्च शिग्रुवृक्षः कन्दश्च उञ्जलिका तेषां सालनकानां अवतारः परिवेषणं यस्मिन् भोजने तत्तथोक्तम् । पुनः कथंभूतम् । एरण्डफलपलाण्डुमुण्डिकाडम्बरम् । पुनः कथंभूतम् । उच्छूनोद्वेल्लितवल्लकरालककोकुन्दोड्डमरम् उच्छूनोद्वेल्लिताः स्थूलभूताः स्वपथुप्राप्ताः उद्वेल्लिता उत्कम्पिता ये वल्लका निष्पावकास्तादृशा ये रालकाः कङ्गवः कोकुन्दानि च अण्डराणि

करालककोकुन्दोड्डमरम्, अनल्पराजिकावर्जितावन्तिसोमावसानम्, समासलिलसमक्षारपानीयपानम्। न किमपि नाम बूभुज न चाशनाया उपशान्तिर्मनागप्यवापम् । केवलं तस्य वञ्चितदृष्टिपातया स्ववासिन्या परिविष्टो मूलाटीवराटोत्कटकट्वलकालशेयविशिष्टः सर्वपात्रीणः श्यामाकभक्तः प्राणत्राणमकार्षीदिति च क्षणमात्रं द्रवालापानन्दितचेतस्तमखण्डक्षीणे शरणे किमप्युदन्तजातमापप्रच्छे ।

सर्वचेतोगतानर्थान्द्रष्टुं येषां कुतूहलम् ।
ते भवन्तु परं चारैश्चक्षुष्मन्तः क्षितीश्वराः ॥ ११६ ॥
चारसंचारतो येषां नाध्यक्षा स्वपरस्थितिः ।
नियुक्तारातिसंपाताचेषां नार्थो न चासवः ॥ ११७ ॥

---

तैरुड्डमरं उत्कटम् । पुनः कथंभूतम् । अनल्पराजिकावर्जितावन्तिसोमावसानम् अनल्पा प्रचुरा या राजिका आसुः तया आवर्जितं मिश्रितं यत् अवन्तिसोमं काञ्जिकं तत् अवसाने अन्ते यत्र तत्तथोक्तम् । पुनः कथंभूतम् । समासलिलसमक्षारपानीयपानम् समा लवणाकरस्तस्याः सलिलसमं उदकसदृशं यत् क्षारं पानीयं तस्य पानं यत्र तत्तथोक्तम् । हे राजन्, न च नैव अशनाया बुभुक्षाया उपशान्तिर्विनाशो मनागपि स्तोकमपि अवापं न प्राप्तवानहम् । केवलं लवणजीरकादिसंयोगरहितं तस्य किलिञ्जकनामधेयस्य वञ्चितदृष्टिपातया दृष्टिपातं वञ्चयित्वा स्ववासिन्या वधूत्पाया परिविष्टः परिवेषितो भुक्तः श्यामाकभक्तः मम प्राणत्राणं प्राणरक्षणं षड्धान्यकूरः अकार्षीत् चकार । कथंभूतः श्यामाकभक्तः । मूलाटीवराटोत्कटकद्बलकालशेयविशिष्टः मूलाटी दधिमूलं वराटोत्कटं कन्दर्पसदृशं कद्बलं (?) आम्लाधिकं कालशेयं तक्रं तेन विशिष्टः संयुक्तः । पुनः कथंभूतः । सर्वपात्रीणः कौलादियोग्यः । इति च अनेन प्रकारेण क्षणमात्रं मुहूर्तं द्रवालापानन्दितचेतः द्रवालापैर्नर्मवचनैरानन्दितचेताः हृष्टमनाः तं शङ्खनकं अखण्डक्षीणे जनद्वयाधारे एकान्ते शरणे गृहे किमपि विवक्षितं उदन्तजातं वार्तासमूहं आपप्रच्छे आपृष्टवानहम् ।

**सर्वचेत इत्यादि** । येषां नृपाणां सर्वचेतोगतान् सर्वेषां हृदयस्थितान् अर्थान् कार्याणि द्रष्टुं अवलोकितुं कुतूहलं कौतुकं वर्तते । क्षितीश्वरास्ते राजानः परं निश्चयेन चारैश्चरैश्चक्षुष्मन्तो लोचनवन्तो भवन्तु संजायन्तु । जात्यलंकारः ॥

**चारसंचारत इत्यादि** । येषां नृपाणां चारसंचारतो हैरिकपुरुषप्रयोगतः स्वपरस्थितिः अध्यक्षा प्रत्यक्षा न भवति तेषां राज्ञां नियुक्तारातिसंपातात् नियुक्तानां नियोगिनां दण्डाधिपतीनां अरातीनां शत्रूणां च संपातात् आगमनात् न अर्थो

कदाचित्करतलीकृतसकलसचिवचेतःकूटकपट कापटिक, यः खलु मया तत्रान्वयागतप्रजाप्रणये जनपदविषये सर्वर्द्धिसमृद्धोऽपि व्रतप्रश्रिताशयतया त्रिविधास्वपि स्त्रीषु महर्षिरिवासंजातस्मरशरशरव्यहृदयः, संसारतिमिरावसरावेशोऽपि न मनागपि प्रभालेपीमणिरिव संपन्नमलिनाभिनिवेशः, पयःपातोच्छ्वसितस्य महीतलस्य गर्भिणीजठरसमत्वादतिकारुणिकतयाङ्गुष्ठमात्रीमपि धरित्रीं न कर्षयति, महाकृपालुतया सत्त्वसंमर्दभयेन

---

लक्ष्मीर्न भवति । न च असवः न च प्राणा भवन्ति । निर्धनाः सन्तो म्रियन्त इत्यर्थः । जात्यलंकारः ॥

कदाचित् कस्मिंश्चिदवसरे अस्मात् कापटिकात् शङ्खनकात् इदं वक्ष्यमाणलक्षणं अश्रौषं अशुश्रुवम् । कथंभूतात् कापटिकात् । इत्यमुना प्रकारेण सादरमापृष्टात् आदरसहितं यथा भवत्येवं अनुयुक्तात् । इतीति किम् । हे करतलीकृतसकलसचिवचेतःकूटकपट, करतलीकृतः करतलामलकावधिज्ञातः सकलं समग्रं सचिवस्य मन्त्रिणः चेतसो मनसः कूटो असत्यः कपटः पाखण्डो येन स तथोक्तः । हे कापटिक हे शङ्खनक, यः सचिवो मन्त्री । खलु निश्चयेन वाक्यालंकारे वा । मया यशोधरेण तत्र जनपदविषये देशमध्ये नियुक्तोऽलंकृतो अधिकारी कृतः स सचिवः संप्रति इदानीं कीदृशस्थितिः कीदृशाचारो वर्तते । कथंभूते जनपदविषये । अन्वयागतप्रजाप्रणये अन्वयागतः कुलक्रमेणागतः प्रजासु लोकेषु प्रणयो मम स्नेहो यस्मिन् जनपदविषये स तथोक्तस्तस्मिन् । यः सचिवो मन्त्री कथंभूतः । सर्वर्द्धिसमृद्धोऽपि परिपूर्णलक्ष्मीसंयुक्तोऽपि व्रतप्रश्रिताशयतया व्रतविनीतविचित्रतया त्रिविधास्वपि स्त्रीषु बालयुवतिमध्यमवयःसु त्रिप्रकारासु स्त्रीषु महर्षिरिव दिगम्बर इव असंजातस्मरशरशरव्यहृदयः न संजातं स्मरशराणां कामबाणानां शरव्यं वेध्यं हृदयं यस्य स असंजातस्मरशरशरव्यहृदयः । यथा महर्षिः सर्वर्द्धिरणिमादिऋद्धिसहितोऽपि सन् व्रताधीनतया स्त्रीषु मनो न करोति । पुनः कथंभूतः सचिवः । संसारतिमिरावसरावेशोऽपि न मनागपि प्रभालेपीमणिरिव संपन्नमलिनाभिनिवेशः संसारस्य संबन्धी यत्तिमिरं अन्धकारं दैन्यं तस्य अवसरस्य प्रस्तावस्य आवेशः प्रवेशो यस्य स संसारतिमिरावसरावेशः संसारकृष्णावसरान्धकारोऽपि सन् प्रथमयौवनत्वात् मनागपि स्तोकमपि संपन्नमलिनाभिनिवेशो न वर्तते संप्राप्तमलिनाभिप्रायो न वर्तते । क इव । प्रभालेपीमणिरिव बृहज्ज्योतिरत्नमिव । यः सचिवः अङ्गुष्ठमात्रीमपि एकाङ्गुलप्रमाणामपि धरित्रीं भूमिं न कर्षयति न खेटयति । कया । अतिकारुणिकतया यतोऽयं अतिदयालुर्वर्तते । कस्माद्धरित्रीं न कर्षयति । पयःपातोच्छ्वसितस्य जलवर्षणोल्लासितस्य महीतलस्य गर्भिणीजठरसमत्वात् यथा गर्भिणीजठरं बीजपातेन उच्छ्वसितं भवति । यः सचिवः महाकृपालुतया सरसकारुणिकतया

पदात्पदमपि भ्रमन्भविल इव नादत्ते दारवं पादपरित्राणम्, एकान्ततः परमपदस्पृहयालुतया स्वैरकथास्वपि कर्मन्दीव न तृप्यति विषविषमोल्लेखेषु विषयसुखेषु, सदैव शुचिरिव ब्रह्मचारी तथापि लोकव्यवहारप्रतिपालनार्थं देवोपासनायामपि समाप्लुत्य वैखानस इव जपति जलजन्तूद्वेजनजनितकल्मषप्रघर्षणायाघमर्षणतन्त्रान्मन्त्रान्। आस्तां तावदशुभस्य दर्शनं स्पर्शनं च, किंतु मनसाप्यस्य परामर्षे शंसितव्रत इव प्रत्यादिशत्याशम्। असहप्रवृत्तसङ्गेषु ह्यङ्गेषु को नाम नराणां लालनायाग्रह इत्याकलय्य पर्वरसेष्वपि दिवसेषु

---

सत्त्वसंमर्दभयेन प्राणिनां चम्पनभयात्पदात् पदमपि भ्रमन् एकपदमात्रमपि भूम्युपरि भ्रमन् दारवं काष्ठमयं पादपरित्राणं पादुकां नादत्ते न गृह्णाति। क इव। भविल इव महामुनिरिव। यथा दयालुर्मुनिः काष्ठपादत्राणं न गृह्णाति। यः सचिवः एकान्ततः सर्वथा प्रकारेण परमपदस्पृहयालुतया मोक्षाभिलाषुकतया स्वैरकथास्वपि स्वेच्छावार्तास्वपि विषयसुखेषु न तृप्यति नाभिलषति। कथंभूतेषु विषयसुखेषु। विषविषमोल्लेखेषु विषवद्धालाहलवत् विषमः क्रूरतरः प्राणापहारकः उल्लेखो अग्रं येषां तानि तेषु। क इव न तृप्यति। कर्मन्दीव तपस्वीव। यथा कर्मन्दी विषयसुखेषु न तृप्यति। यः सचिवः सदैव सर्वकालं शुचिरिव अग्निरिव ब्रह्मचारी वर्तते यद्यप्येवं ब्रह्मचारी सदा शुचिः तथापि लोकव्यवहारप्रतिपालनार्थं लोकानां व्यवहारः अस्नातो देवान् न प्रपूजयेदिति वर्तते तस्य प्रतिपालनार्थं देवोपासनायामपि देवपूजनार्थमपि समाप्लुत्य सदुष्णजलेन स्नानं कृत्वा जलजन्तूद्वेजनजनितकल्मषप्रघर्षणाय जलस्य संबन्धिनो ये जन्तवः पूतरादयः प्राणिनस्तेषामुद्वेजनेन बाधाकरणेन जनितमुत्पादितं यत् कल्मषं पापं तस्य प्रघर्षणाय शान्त्यर्थं अघमर्षणतन्त्रान् पापोपशमसंप्रदायान् मन्त्रान् गुप्तभाषणान् जपति परावर्तयति। क इव। वैखानस इव। यथा वैखानसः दण्डयक्ष्मान् वा मन्त्रान् जपति। यः सचिवः किं करोति। आस्तां तावत् तत्तावत्तिष्ठतु यत् अशुभस्य मद्यमांसचर्मचाण्डालादेर्दर्शनमवलोकनं स्पर्शनं च आभेटनम्, किंतु मनसापि चित्तेनापि अस्य अशुभस्य परामर्षे संकल्पेऽपि आशं भोजनं प्रत्यादिशति निराकरोति अन्तरायं विधत्ते। क इव। शंसितव्रत इव दिगम्बर इव। यथा महाव्रतदिगम्बरः दर्शनस्पर्शनसंकल्पान्तरायान् करोति। उक्तं च—'मांसरक्तार्द्रचर्मास्थिपूयदर्शनतस्त्यजेत्। मृताङ्गिवीक्षणादन्नं प्रत्याख्यातान्न सेवनात्॥ मातङ्गश्वपचादीनां दर्शने तद्वचःश्रुतौ। भोजनं परिहर्तव्यं मलमूत्रादिदर्शने॥' पुनश्च यः सचिवः किं करोति। असहप्रवृत्तसङ्गेषु मरणे सति सार्धं अनागमनशीलेषु हि निश्चितं अङ्गेषु शरीरेषु को नाम कश्चित् नराणां लालनाय पोषणाय आग्रह आक्षेप इतीदृशमाकलय्य सम्यग्विचार्य पर्वरसे (दिवसे)पि दीपोत्सवादिदिवसेषु शाकमुष्टेः शाकमात्रकवलात् यवमुष्टेर्वा यवो-

मुमुक्षुरिव न शाकमुष्टेर्यवमुष्टेर्वापरमाहरत्याहारम् । ईषदप्यशुभमन्यत्रोत्पादितमात्मन्युप्तबीजमिव जन्मान्तरे शतशः फलतीति दयालुभावाद्दुरितभीरुभावाच्च[1] न दलं फलं वा योगीव स्वयमवचिनोति वनस्पतीन् । परोपरोधादनुभवंश्च तन्न पतङ्गपावकस्पर्शपूतमनुभवति । न केवलं मयि चिरपरिचयोदन्वदसीमस्नेहनिघ्नत्वात्सुहृदिव वृत्तविघ्नाकारमपि राज्यभारमूरीकृतवान् । नालम्पटमनस्कारोऽस्तीह कश्चिद्द्विपश्चिदप्यधिगताधिकारो नर इति व्यभिचारयितुमिव कुशलाशयतया च घटशतेनापि स्नाति बिन्दुनापि न स्पृश्यत इति मत्वा धर्ममूलत्वान्महाकुलप्रसूतेर्महाभागपदप्रादुर्भूतेश्च धर्मसं-

---

दनकवलात् वा अपरं अन्यं आहारं मोदकादिकं न आहरति न भुङ्क्ते । क इव । मुमुक्षुरिव मोक्तुमिच्छुर्मुनिरिव । यथा मुमुक्षुः शाकमात्रान्नात् अपरं स्निग्धमाहारं नाहरति । पुनश्च यः सचिवः किं करोति । दलं फलं वा स्वयमात्मना वनस्पतीन् न अवचिनोति गृह्णाति वनस्पतीनां दलं फलं स्वयमेव न चुण्टति । 'यात्स्नार्घो दुहिच्छित्तिप्रच्छिरुधिस्नूसारिजनीवहज्वदण्डग्रहकूष्मानधिमुष पञ्चाद्याद्यवो द्विटार' (?) इति वचनात् चिञ्धातोः प्रयोगे द्विकर्मकत्वात् वनस्पतीनिति षष्ठीवाधिका द्वितीया । कस्मात् स्वयं दलं फलं वा न चिनोति । इत्यमुना प्रकारेण दयालुभावात् कारुणिकत्वात् । न केवलं दयालुभावात् । दुरितभीरुभावाच्च । इतीति किम् । ईषदपि स्तोकमपि अशुभं दुःखं अन्यत्र अपरजीवे उत्पादितं जनितं जन्मान्तरे अन्यभवे आत्मनि स्वस्मिन् शतशः शतवारान् सहस्रवारान् लक्षधा कोटिधा दुःखं फलति । किमिव । उप्तबीजमिव वपितकण इव । क इव चिनोति । योगीव ध्यानवान्मुनिरिव । पुनश्च किं करोति सचिवः । परोपरोधात् कुटुम्बाद्याग्रहात् तद्दलं फलं वा अनुभवंश्चास्वादयन् पतङ्गपावकस्पर्शपूतं सूर्याग्निवैश्वानरस्पर्शनपूतं पवित्रं विना नानुभवति नास्वादयति । पुनश्च किं कृतवान् । न केवलं निष्केवलं मयि विषये चिरपरिचयोदन्वदसीमस्नेहनघ्नत्वात् चिरपरिचयेन बालादारभ्य संगतितया उदन्वन् उत्पद्यमानो योऽसौ असीमस्नेह अपर्यन्तप्रीतिस्तस्मिन्निघ्नत्वात् तत्परत्वात् पराधीनत्वात् सुहृदिव कुटुम्बवर्गे इव वृत्तविघ्नाकारमपि चारित्रान्तरायमूर्तिमपि राज्यभारं ऊरीकृतवान् स्वीचकार । उक्तं च—'परतन्त्रः पराधीनः परवान्नाथवानपि । अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ ॥' मया किं कृत्वा जनपदविषयसचिवो नियुक्तः । इति मत्वा ईदृशं ज्ञात्वा धर्मसंवर्धनं विधित्सुना महाकुलप्रसूतेः उत्तमकुलप्रादुर्भावस्य धर्ममूलत्वात् धर्मं विना उत्तमकुले प्रसूतिर्न भवति इति मत्वा । तथा च किं मत्वा । महाभागपदप्रादुर्भूतेः स्व-

---

1. 'त्वाच्च' सटीकपुस्तकपाठः.

वर्धनं विधित्सुना, प्रजामूलत्वात्कोशवृद्धेस्तन्त्रवृद्धेश्च प्रजापालनं चिकीर्षुणा, प्रकृतिमूलत्वादसाध्यसाधनस्य परावाधावरोधनस्य च प्रकृतिप्रसत्तिमुत्पिपादयिषुणा, सत्पुरुषमूलत्वादशेषशास्त्रव्युत्पत्तेर्विशिष्टाचारप्रवृत्तेश्च सत्पुरुषान्संजिघृक्षुणा, प्रतिपक्षापायमूलत्वादाज्ञोत्कर्षस्य प्रतापप्रकर्षस्य च प्रतिपक्षापायं समीचिक्षुणा, राज्यलक्ष्मीमूलत्वाद्विषयसुखोपसर्पणस्यार्थिजनसं-

---

र्गमोक्षपदोत्पादस्य धर्ममूलत्वात् धर्मं विना महाभागपदप्रसूतिर्न भवति इति मत्वा। असौ सचिवः जनपदविषये किमर्थं नियुक्तः। इति ईदृशं कार्यं व्यभिचारयितुमिव असत्यं कारयितुमिव। इतीति किम्। इह अस्मिन् संसारे अलम्पटमनस्कारः निर्लोभचित्तः कश्चिद्विपश्चिदपि कोऽपि विद्वानपि अधिगताधिकारः प्राप्तनियोगो नरः पुमान् नास्ति न वर्तते। किं कृत्वा। सर्वमिति मत्वा। इतीति किम्। कुशलाशयतया यत्नपरिचिततया घटशतेनापि कुम्भसहस्रेणापि स्नाति स्नानं करोति विन्दुनापि विन्दुप्रमुखेनापि न स्पृश्यते। विन्दुमात्रजलस्यापि पापं न भवतीत्यर्थः। पुनश्च किं कर्तुमिच्छुना मया सचिवो नियुक्तः। प्रजापालनं चिकीर्षुणा प्रजानां लोकानां पालनं रक्षणं चिकीर्षुणा कर्तुमिच्छता। कस्मात् प्रजापालनं कर्तुमिच्छता कोशवृद्धेर्धनवर्धनस्य प्रजामूलत्वात् प्रजां विना कोशवृद्धिर्न भवति इति मत्वा। पुनश्च कस्मात् नियुक्तः। तन्त्रवृद्धेश्च सेनावृद्धेश्च प्रजापालनं विना सैन्यवृद्धिर्न भवति इति मत्वा। पुनश्च किं कर्तुमिच्छता मया सचिवो नियुक्तः। प्रकृतिप्रसत्तिं उत्पिपादयिषुणा प्रकृतीनां पूर्वोक्ताष्टादशशतीनां प्रसत्तिं प्रसन्नतां उत्पिपादयिषुणा उत्पादयितुमिच्छता। कस्मात् प्रकृतीनां प्रसन्नतोत्पाद्यते। असाध्यसाधनस्य असाध्यस्य विषमस्य दुर्गादेः साधनस्य करे करणस्य प्रकृतिमूलत्वात् प्रकृतिं विना असाध्यं न साध्यते इति मत्वा। न केवलं असाध्यसाधनस्य किं तु परावाधावरोधनस्य परेषां शत्रूणां आवाधा उपद्रवस्तस्य अवरोधनस्य निषेधनस्य प्रकृतिमूलत्वात्। शत्रुवाधानिरोधः प्रकृतिं विना न भवतीति भावः। पुनश्च किं कर्तुमिच्छता मया सचिवो नियुक्तः। सत्पुरुषान् संजिघृक्षुणा संग्रहीतुमिच्छता। सत्पुरुषसंग्रहणेच्छापि कस्मात्। अशेषशास्त्रव्युत्पत्तेः सकलशास्त्रपरिज्ञानार्थस्य विशिष्टाचारप्रवृत्तेश्च सदाचारप्रवर्तनस्य च सत्पुरुषमूलत्वात् सकलशास्त्रव्युत्पत्तिर्विशिष्टाचारप्रवृत्तिश्च सत्पुरुषान् विना न भवतीति कारणात्। पुनश्च किं कर्तुमिच्छता मया सचिवो नियुक्तः। प्रतिपक्षापायं शत्रुविनाशं समीचिक्षुणा समीक्षितुमिच्छता। प्रतिपक्षापायसमीक्षणेच्छापि कस्मात्। आज्ञोत्कर्षस्य प्रतापप्रकृष्टतायाश्च प्रतिपक्षापायमूलत्वाच्च शत्रूणां विनाशं विना आज्ञाविशिष्टः प्रतापप्रकर्षश्च न भवति। पुनश्च किं कर्तुमिच्छता मया सचिवो नियुक्तः। राज्यलक्ष्मीं उल्लिलासयिषुणा राज्यलक्ष्मीं उल्लासयितुमिच्छता। राज्यलक्ष्म्युल्लासेच्छापि कस्मात्। विषयसुखोपसर्पणस्य विषयसौख्यप्रवर्तनस्य अर्थिजनसंतर्पणस्य च

तर्पणस्य च राज्यलक्ष्मीसुल्लिलासयिषुणा च, आत्मोचितानुचरचमूयुक्तो नियुक्तः प्रज्ञाप्रभावतिरस्कृतबार्हस्पत्यः पामरोदाराभिधानोऽमात्यः स कीदृशस्थितिः संप्रतीति सादरमापृष्टादस्मादिदमश्रौषम् । तथा हि—कापटिकः प्राह—'देव, यथायथं कथयामि । किं तु तद्वार्तावातूलीव्यतिकराद्देवस्याप्युपरि किंचिद्दुरपवादरजः प्रसरिष्यति । यतः—

पूज्यमब्जं श्रियः सङ्गाज्ज्येष्ठायाश्च न कैरवम् ।
प्रायो जनेऽन्यसंसर्गाद्गुणिता दोषितापि च ॥ ११८ ॥

देव,

स भर्तुरेव दोषोऽयं स्वच्छन्दं यद्विकुर्वते ।
आत्मातिरिक्तभावेन दारा इव नियोगिनः ॥ ११९ ॥

---

याचकजनप्रीणनस्य च राज्यलक्ष्मीमूलत्वात् विषयसुखं अर्थिजनतर्पणं च राज्यलक्ष्मीं विना न भवति। कथंभूतो नियुक्तः । आत्मोचितानुचरचमूयुक्तः एतद्योग्यकिंकरसेनासमेतः । अपरं कथंभूतः । प्रज्ञाप्रभावतिरस्कृतवार्हस्पत्यः प्रज्ञाप्रभावेण मत्यतिशयेन तिरस्कृतो निर्भर्त्सितो वार्हस्पत्यः वृहस्पतीनां गुरूणां समूहो येन स तथोक्तः । यावन्तः सुरपतयो वर्तन्ते तेषां प्रत्येकं वृहस्पतिनामा सचिवो वर्तते एव । पुनः कथंभूतः । पामरोदाराभिधानः पामराणां हालिकानां उदारो हृदयेष्टस्तेषां पीडाया आकारकत्वात् पामरोदार इति अभिधानं नाम यस्य स तथोक्तः । तथाहि तदेव निरूपयति—किमशेषं कापटिकः शङ्खनकः प्राह ब्रूते। किं ब्रूते। देव, यथायथं यथोक्तं कथयामि प्रवन्धं रचयामि। किंतु किं तर्हि तद्वार्तावातूलीव्यतिकरात् तस्य मन्त्रिणो वार्ता समाचारः सैव वातूली वातमण्डली तस्या व्यतिकरः प्रघट्टकस्तस्मात् तद्वार्तावातूलीव्यतिकरात् देवस्यापि भवत उपरि मस्तके किंचित् मनाग् दुरपवादरजः अपकीर्तिधूली प्रसरिष्यति व्याप्स्यति । कस्मात् म(त)दुपरि दुरपवादरजः प्रसरिष्यतीति चेत्—यतः यस्मात् कारणात् ।

**पूज्यमित्यादि** । श्रियो लक्ष्म्याः सङ्गात् संसर्गात् अब्जं कमलं पूज्यं भवति । ज्येष्ठायाः देवताविशेषस्य सङ्गात् संसर्गात् कैरवं कुमुदं श्वेतोत्पलं पूज्यं न भवति । युक्तोऽयमर्थः—जने लोके प्रायो बाहुल्येन अन्यसंसर्गात् संगतिविशेषात् गुणिनां गुणित्वं दोषिणां दोषित्वं च भवति । दृष्टान्तालंकारः ॥

**स भर्तुरित्यादि** । हे देव हे राजन्, सोऽयं दोषः भर्तुरेव राज्ञ एव वर्तते । स कः । यत् नियोगिनः स्वच्छन्दं विकुर्वते विक्रियां भजन्ति । केन कृत्वा विकुर्वते । आत्मातिरिक्तभावेन आत्मनः अधिकत्वेन । अभिमानेनेत्यर्थः । क इव । दारा इव कलत्रमिव ।

स्वयं विषमरूपोऽपि संघातः कार्यकृद्भवेत् ।
अधिष्ठातुः प्रयत्नेन यथा हस्तोऽसमाङ्गुलिः ॥ १२० ॥

देव, देवस्य स्वभावत एव कल्याणाचारत्वादमायव्यवहारत्वाच्चात्मनीव दुरात्मन्यपि जने निरञ्जनसंभावनं मनः । यतः—

आत्मनीव परत्रापि प्रायः संभावना जने ।
यदस्तेनादपि स्तेनः स्वदोषात्परिशङ्कते ॥ १२१ ॥

ततो देव, तं हतकचरितं निर्विचारचेतःप्रभावं देवं च प्रति तैस्तैर्विसृष्टविसृष्टज्ये(पे)ष्टचेष्टितरविभिः कविभिः प्रायेण देवस्य पूर्वपक्षपातीति कृतानि प्रहतवृत्तानि साधु समाकर्ण्यताम् । तत्र तावत्तरुणीलीलाविलासस्य—

---

यत् दाराः कलत्रं विकुर्वते विकृतिं भजन्ति सोऽयं भर्तुरेव दोषः पत्युरेव दोषः यदसौ पतिर्दारेषु अभिमानं ददाति । उपमालंकारः ॥

स्वयमित्यादि । हे राजन्, संघातः समूहः स्वयं आत्मना विषमरूपोऽपि उच्चावचरूपोऽपि कार्यकृद्भवेत् कार्यकारी स्यात् । केन । अधिष्ठातुः प्रयत्नेन स्वामिनः सावधानतया । कथम् । यथा हस्त इव । कथंभूतो हस्तः । असमाङ्गुलिः असमाना अङ्गुलयो यस्य स तथोक्तः । दृष्टान्तालंकारः ॥

देवेत्यादि । हे देव हे राजन्, देवस्य तव स्वभावत एव निसर्गेणैव कल्याणाचारत्वात् शुभाचारत्वात् अमायव्यवहारत्वाच्च मायारहिताचारत्वाच्च आत्मनीव स्वस्मिन्निव दुरात्मन्यपि जने दुराचारेऽपि लोके मनश्चित्तं निरञ्जनसंभावनं वर्तते निर्दोषघटनं वर्तते । यतः यस्मात् कारणात् ।

आत्मनीत्यादि । आत्मनीव स्वस्मिन्निव परत्रापि परस्मिन्नपि प्रायो बाहुल्येन जने लोके संभावना वर्तना । यत् यस्मात् कारणात् स्तेनश्चौरैः स्वदोषात् अस्तेनादपि अमलिष्णुत्वादपि परिशङ्कते शङ्कां करोति बिभेति । दृष्टान्तालंकारः ॥

तत इत्यादि । ततस्तस्मात् कारणात् हे देव हे राजन्, तं पामरोदारसचिवं प्रति देवं च त्वां प्रति तैस्तैर्जगत्प्रसिद्धैः कविभिः प्रायेण बहुलतया देवस्य तव पूर्वपक्षपातीनि भवस्थापनोच्छेदकानि प्रहतवृत्तानि नेष्टचरितानि (देवतानि) साधु रुचिरं यथा भवत्येवं सावधानतया समाकर्ण्यतां श्रूयताम् । कथंभूतं सचिवम् । हतकचरितं नष्टाचारम् । कथंभूतं देवम् । निर्विचारचेतःप्रभावं विचाररहितमनोमाहात्म्यम् । कथंभूतैः कविभिः । विसृष्टविसृष्टपेष्टचेष्टितरविभिः विसृष्टः तिरस्कृतः विसृष्टपेष्टस्य भवनस्य चेष्टिते आकाशप्रकाशे रविः श्रीसूर्यो यैः कविभिस्ते तथोक्तास्तैः । भुवनप्रकाशनसूर्यैरित्यर्थः । तत्र तेषु कविषु मध्ये तावदनुक्रमेण तरुणीलीलाविलासस्य तरुणीलीलाविलासनाम्नो महाकवेः

नमो दुर्मन्त्रिणे तस्मै नृपाङ्घ्रिपमहाहये ।
यद्वशान्नार्थिसंप्रार्थ्यस्तच्छायाश्रमविश्रमः ॥ १२२ ॥

अष्टपदा नान्दी ।

यस्य शिष्टघटोच्छेदि मन्त्रसूत्रं विजृम्भते ।
सत्पात्रपाचिने तस्मै नमो दुर्मन्त्रिचक्रिणे ॥ १२३ ॥

इयं च ।

और्वायापूर्वरूपाय तस्मै दुर्मन्त्रिणे नमः ।
अजडा अपि शोष्यन्ते येन पत्युः श्रियः परा ॥ १२४ ॥

इयं च द्वादशपदा ।

---

कृतं मन्त्रिणः प्रहतवृत्तं तावत्समाकर्ण्यताम् । इयं अष्टपदा नान्दी दुर्मन्त्रिपुराणप्रारम्भे, इयं अष्टपदा नान्दी मङ्गलसूत्रम् ॥

**मन इत्यादि** । तस्मै दुर्मन्त्रिणे पामरोदारनाम्ने सचिवाय नमः नमस्कारोऽस्तु । अयं नमस्कारो हास्येन वर्तते, नतु परमार्थतया । कथंभूताय तस्मै । नृपाङ्घ्रिपमहाहये नृप एव अङ्घ्रिपो वृक्षः लक्ष्मीफलदायकत्वात् तस्मिन्महान्गुरुतरो अहिः सर्पः नृपाङ्घ्रिमहाहिस्तस्मै नृपाङ्घ्रिपमहाहये । यद्वशात् यत्प्रभावात् तच्छायाश्रमविश्रमः नृपवृक्षच्छाया आश्रमविश्रमः स्थानविश्रामः अर्थिसंप्रार्थ्यो न भवति याचकजनानां सुलभो न भवति । रूपकालंकारः । अष्टपदा नान्दी ॥

**यस्येत्यादि** । तस्मै दुर्मन्त्रिचक्रिणे नमः नमोऽस्तु । तस्मै कस्मै । यस्य दुर्मन्त्रिचक्रिणः मन्त्रसूत्रं मन्त्रसूचनं शास्त्रं विजृम्भते प्रसरति । कथंभूतं मन्त्रसूत्रम् । शिष्टघटोच्छेदि शिष्टानां साधुलोकानां घटा श्रेणिः तामुच्छिनत्तीत्येवंशीलं शिष्टघटोच्छेदि । पक्षे यथा चक्रिणः कुम्भकारस्य सूत्रं दवरकः शिष्टा निष्पादिता ये घटाः कुम्भास्तच्छेदकं भवति । कथंभूताय तस्मै । सत्पात्रपाचिने सत्पात्राणि सत्पुरुषान् पचति संतापयतीत्येवंशीलः सत्पात्रपाची तस्मै । यथा कुम्भकारः समीचीनानि पात्राणि कुम्भादीनि पचति अग्निमध्ये मुक्त्वा पावकमध्ये क्षिप्त्वा पक्वानि करोति । रूपकालंकारः । इयं च अष्टपदा नान्दी वर्तते ॥

**और्वायेत्यादि** । तस्मै दुर्मन्त्रिणे नमः । तस्मै कथंभूताय । अपूर्वरूपाय अभिनवमूर्तये और्वाय वडवानलाय । तस्मै कस्मै । येन दुर्मन्त्रिणा पत्युर्नरेन्द्रस्य परा उत्कृष्टाः श्रियो लक्ष्म्यः अजडा अपि शोष्यन्ते पीयन्ते । वडवानलेन सजडः[1] समुद्रः शोष्यते, अनेनापि उभये शोष्यते । रूपकव्यतिरेकालंकारः ॥ इयं च द्वादशपदा नान्दी वर्तते ॥

---

१. डलयोरैक्यात्सजलः समुद्रः इत्यर्थः.

ततश्च—

चञ्चापञ्चजनाकृतिः क्षितिपतिर्यत्राभवन्नायकः
पौरो भाग्यपुराणपालितमतिर्मन्त्री धवित्रीसुतः।
स प्रौढोक्तिबृहस्पतिश्च तरुणीलीलाविलासः कवि-
स्तद्दुर्मन्त्रिदुरीहितं विजयते सूक्तोत्कटं नाटकम् ॥ १२५ ॥

मृल्लोष्ठचेष्टः क्षितिपः स्वभावात्सुदुष्टचेष्टः सचिवश्च यत्र।
शुभाशयस्यापि सुमेधसोऽपि क्षेमः कुतस्तत्र भवेज्जनस्य ॥ १२६ ॥

शिष्टावासः कुतस्तत्र दुर्मन्त्री यत्र भूपतौ।
श्येनैश्वर्यं तरौ यत्र कुतस्तत्रापरे द्विजाः ॥ १२७ ॥

---

ततस्तस्मात् कारणात्। **चञ्चापञ्चजनाकृतिरित्यादि**। तज्जगत्प्रसिद्धं दुर्मन्त्रिदुरीहितं दुष्टमन्त्रिदुश्चेष्टितं सूक्तोत्कटं सूक्तैः सुवचनैरुत्कटमुल्वणं नाटकं प्रेक्षणकं विजयते सर्वोत्कर्षेण प्रवर्तते। नाटकं किम्। यत्र नाटके क्षितिपती राजा नायकोऽभवत् नाटकमुख्यो बभूव। कथंभूतः क्षितिपतिः। चञ्चापञ्चजनाकृतिः चञ्चा तृणनिर्मितः पञ्चजनः पुरुषः चञ्चापञ्चजनाः। तृणनिर्मित इत्यर्थः। तस्य आकृतिराकारो यस्य क्षितिपतेः स चञ्चापञ्चजनाकृतिः। पौरो नगरलोकः। कथंभूतः। भाग्यपुराणपालितमतिः भाग्यपुराणेन सर्वकार्योपार्जितपुराणेन पालिता प्रतिप(र)क्षिता मतिर्यस्य स तथोक्तः। मन्त्री कथंभूतः। धवित्रीसुतः लोहकारीपुत्रः। तस्मिन्नाटके स तरुणीलीलाविलासनामा कविर्वर्तते। कथंभूतः कविः। प्रौढोक्तिबृहस्पतिः प्रौढा बलवत्तरा या उक्तिः वचनरचना तस्यां बृहस्पतिः चार्वाकगुरुः। समुच्चयालंकारः॥

**मृल्लोष्ठचेष्ट इत्यादि**। तत्र तस्मिन् राज्ये जनस्य लोकस्य क्षेमः श्रेयः कुतो भवेत्, न कुतोऽपि कल्याणं स्यात्। कथंभूतस्य जनस्य। शुभाशयस्यापि पुण्यपरिणामस्यापि आस्तां तावत्पातकिनो लोकस्य। सुमेधसोऽपि सद्बुद्धेरपि आस्तां तावद्दुर्बुद्धेर्लोकस्य तत्र। यत्र यस्मिन् राज्ये क्षितिपो नरेन्द्रो मृल्लोष्ठचेष्टः मृत्पिण्डसमानक्रियः। कस्मात्। स्वभावात् प्रकृत्यैव। यत्र यस्मिन् राज्ये सचिवश्च मन्त्री। कथंभूतः। सुदुष्टचेष्टः अतीव दुष्टक्रियः। जातिरूपकालंकारः॥

**शिष्टा इत्यादि**। यत्र यस्मिन् भूपतौ दुर्मन्त्री वर्तते तत्र राजनि शिष्टावासः साधुलोकानां स्थितिः कुतः, न कुतोऽपि। यत्र यस्मिन् वृक्षे श्येनैश्वर्यं शशादननार्पत्यं तत्र तरौ अपरे द्विजाः काकचटकादयः कुतः। न कुतोऽपीत्यर्थः। आक्षेपालंकारः॥

जानन्नपि जनो मोहादायासाय समीहते ।
यस्य कार्यं न येनास्ति तस्मात्तस्य फलं कुतः ॥ १२८ ॥
पातकानां समस्तानां द्वे परे पातके स्मृते ।
एकं दुःसचिवो राजा द्वितीयं च तदाश्रयः ॥ १२९ ॥
दुर्मन्त्रिणो नृपसुतात्सुमहान्स लाभः
प्राणैः समं भवति यन्न वियोगभावः ।
सूनाकृतो गृहमुपेत्य ससारमेयं
जीवन्मृगो यदि निरेति तदस्य पुण्यम् ॥ १३० ॥

कविकौमुदीचन्द्रस्य—
अहिवलयितमूलः पादपः केन सेव्यः
श्रयति क इह शिष्टः शल्यसङ्गं तडागम् ।

---

**जानन्नित्यादि** । जनो लोकः जानन्नपि वेदयमानोऽपि मोहादज्ञानात् आयासाय वृथादुःखाय समीहते चेष्टते । यस्य पुरुषस्य येन पुरुषेण कार्यं नास्ति प्रयोजनं न वर्तते तस्मात् पुरुषात् तस्य पुरुषस्य अर्थिनः पुरुषस्य फलं लाभः कुतः । न कुतोऽपीत्यर्थः । आक्षेपालंकारः ॥

**पातकानामित्यादि** । समस्तानां सर्वेषां पातकानां पापानां द्वे पातके परे उत्कृष्टे स्मृते कथिते । ते के । एकं पातकं दुःसचिवो दुर्मन्त्री प्रवर्तते, द्वितीयं पातकं तदाश्रयो दुर्मन्त्रीसहितो राजा । रूपकालंकारः ॥

**दुर्मन्त्रिण इत्यादि** । दुर्मन्त्रिणो दुष्टमन्त्रिसंयुक्तात् नृपसुतात् राजपुत्रात् सुमहान् अतिशयेन गुरुः स जगत्प्रसिद्धो लाभो वर्तते । स कः । यत् प्राणैः समं वियोगभावो न भवति न म्रियते । अमुमेवार्थं दृष्टान्तेन द्रढयति—सूनाकृतः खाटकिनः गृहं उपेत्य गत्वा यदि चेत् मृगो हरिणः निरेति निर्गच्छति तत् जगत्प्रसिद्धं अस्य मृगस्य पुण्यं शुभं कर्म वर्तते । कथंभूतं सूनाकृतो गृहम् । ससारमेयं श्वानसंयुक्तम् । दृष्टान्तालंकारः ॥

कविकौमुदीचन्द्रस्य कविकौमुदीचन्द्रनाम्नः कवेः वृत्तरचना वर्तते । राजन्, तत् समाकर्ण्यताम्—**अहिवलयितमूल इत्यादि** । हे राजन्, अहिवलयितमूलः सर्पवेष्टितस्कन्धः पादपो वृक्षः केन पुरुषेण सेव्यः आश्रयणीयः । अपि तु न केनापि इत्यर्थः । इह अस्मिन् संसारे शल्यसङ्गं उद्भीकृतहड्डं तडागं सरोवरं कः पुरुषः शिष्ट उत्तमकुलः पुमान् श्रयति । अपि तु न कश्चित् श्रयतीत्यर्थः । चाण्डालादितडागे शल्यं एकं अस्थि उद्भीक्रियते, तेन संकेतेन तत्तडागं चाण्डालानां ज्ञायते तज्जलं कोऽप्युत्तमो न पिबति ।

विषकलुषितमन्धः कस्य भोज्याय जातं
कुसचिवहतभूतिर्भूपतिः कैरुपास्यः ॥ १३१ ॥
अविवेकमतिर्नृपतिर्मन्त्री गुणवत्सु वक्रितग्रीवः।
यत्र खलाश्च प्रबलास्तत्र कथं सज्जनावसरः ॥ १३२ ॥

विदग्धमुग्धस्य—

पङ्केजवने लक्ष्मीर्विपिने विजयो हुताशने तेजः।
तपने च परं मण्डलमवनिपतेर्भवति दुःसचिवात् ॥ १३३ ॥
खड्गेषु परं कोशः शेषायां तन्दुलाः करे पर्व।
चतुरङ्गेषु च तन्त्रं दुर्मन्त्रिणि भवति भूपस्य ॥ १३४ ॥

---

विषकलुषितं हालाहलदूषितं अन्धो भोजनं कस्य पुरुषस्य भोज्याय जायते समुत्पन्नम्। अपि तु न कस्यापि इत्यर्थः। तथा न्यायेन कुसचिवहतभूतिः कुमन्त्रिदूषितैश्वर्यः भूपतिः राजा कैः पुरुषैरुपास्यः। अपि तु न कैरपि पुरुषैः सेवनीय इत्यर्थः। आक्षेपालंकारः॥

**अविवेकमतिरित्यादि**। यत्र यस्मिन् राज्ये नृपतिः राजा अविवेकमतिर्विचाररहितबुद्धिः। यत्र राज्ये मन्त्री सचिवो गुणवत्सु विदुषेषु[1] वक्रितग्रीवः पराङ्मुखो भवति। यत्र राज्ये खलाः सूचकाः प्रवला वलवत्तरा वर्तन्ते। तत्र तस्मिन् राज्ये सज्जनावसरः साधुलोकप्रस्तावः कथं केन प्रकारेण भवति। अपि तु न कथमपि भवतीत्यर्थः। आक्षेपालंकारः॥

विदग्धमुग्धस्य विदग्धमुग्धनाम्नः कवेर्वृत्तरचना श्रूयताम्—**पङ्केजवन इत्यादि**। अवनिपतेर्नरेन्द्रस्य दुःसचिवात् दुर्मन्त्रिणः सकाशात् भवति संजायते। का। लक्ष्मीः। कस्मिन् पङ्केजवने कमलवने। राज्यलक्ष्मीर्न भवतीत्यर्थः। विपिने वने विजयो भवति। शत्रुपराजयो राजनि न भवति, वीनां पक्षी(क्षि)णां जयो वने भवतीत्यर्थः। हुताशने तेजः अग्नौ प्रतापो भवति। राजनि प्रतापो न भवतीत्यर्थः। तपने श्रीसूर्ये परमुत्कृष्टं मण्डलं विम्बं भवति। राजनि मण्डलं देशो न भवतीत्यर्थः। समुच्चयदीपकालंकारः॥

**खड्गेष्वित्यादि**। भूपस्य राज्ञो दुर्मन्त्रिणि सति किं किं भवति। खड्गेषु निस्त्रिंशेषु परं केवलं कोशः असिपत्रं भवति, न तु राज्ञो भाण्डागारो भवति। शेषायां आशीर्वादे तण्डुला अक्षताः भवन्ति, न तु राज्ञो धान्यानि संज्ञायन्ते। करे हस्ते पर्व अङ्गुलिरेखा भवति, न तु राज्ञः पर्व दीपोत्सवादिषु उत्सवो भवति। चतुरङ्गेषु द्यूतेषु तन्त्रं अर्थसाधनं भवति, न तु राज्ञस्तन्त्रं सैन्यं भवति। परिसंख्यालंकारः॥

---

१. 'विद्वत्सु' इति भवेत्.

नीतिनेत्रस्य—

राज्यवृद्धिस्ततोऽमात्याद्यो न कुक्षिंभरिः स्वयम् ।
अत्ति स्थाल्येव चेद्भक्तं भोक्तुर्भुक्तिर्भवेत्कुतः ॥ १३५ ॥
यः स्याद्भुजगवद्भूपो बहिरीक्षितमोहितः ।
तं खादन्ति न किं नाम लञ्जिका इव सेवकाः ॥ १३६ ॥
परैरबाधनं स्वस्य परेषां बाधनं स्वयम् ।
प्रजाप्रकृतिकोशानां श्रीश्च मन्त्रात्फलं विदुः ॥ १३७ ॥
कोशोद्वासी प्रजाध्वंसी तन्त्रक्षोभविधायकः ।
यो विद्वेष्टा विशिष्टानां शत्रुर्मन्त्रिमिषादसौ ॥ १३८ ॥

मानधनंजयस्य—

श्रीमानर्थिजनार्थी पृथ्वीशः पुरुषरत्नयत्नार्थी ।
सचिवश्च परहितार्थी यदि भवति ततः कुतस्तु कलिकालः॥१३९॥

---

नीतिनेत्रस्य नीतिनेत्रनाम्नः कवेर्वृत्तरचना श्रूयताम्—**राज्यवृद्धिरित्यादि** । ततस्तस्मादमात्यात् सचिवात् राज्यवृद्धिर्भवेत् । ततः कस्मात् । यो अमात्यः स्वयमात्मना कुक्षिंभरिः स्वोदरपूरको न भवेत्, चेत् यदि स्थाल्येव (उखैव) पाकभाण्डं भक्तं कूरं अत्ति भक्षयति तर्हि भोक्तुः पुरुषस्य भुक्तिर्भोजनं कुतः कस्मात् भवेत् संजायेत । न कुतोऽपीत्यर्थः । दृष्टान्तालंकारः ॥

**य इत्यादि** । यो भूपः बहिरीक्षितमोहितः बहिःक्रियावन्दितः । किंवत् । भुजगवत् कामुक इव स्याद्भवेत् तं भूपम् । नामेति संभावनायाम् । सेवका मन्त्र्यादयः किं न खादन्ति । अपि तु भक्षयन्त्येवेत्यर्थः । का इव । लञ्जिका इव । यथा लञ्जिका वेश्या बाह्यचेष्टामोहितं पुरुषं खादन्ति निर्धनं कुर्वन्ति । उपमालंकारः, आक्षेपश्च ॥

**परैरित्यादि** । परैः शत्रुभिः स्वस्य आत्मनः अबाधनं अपीडनं परेषां शत्रूणां स्वयमात्मनः बाधनं पीडनं प्रजाप्रकृतिकोशानां श्रीः प्रजानां प्रकृतीनां कोशानां श्रीश्च यद्भवति तत् मन्त्रात् फलं विदुर्ब्रुवन्ति । जात्यलंकारः ॥

**कोशोद्वासीत्यादि** । यो मन्त्री कोशोद्वासी भाण्डागाररेचकः, प्रजाध्वंसी प्रजाध्वंसकः, तन्त्रक्षोभविधायकः सैन्यसंचलनकारकः, विशिष्टानां साधुलोकानां विद्वेष्टा विद्वेषकारकः, असौ मन्त्री मन्त्रिमिषात् सचिवच्छलात् शत्रुर्ज्ञातव्यः । रूपकालंकारः ॥

मानधनंजयस्य कवेर्वृत्तरचना श्रूयताम्—**श्रीमानित्यादि** । श्रीमान् लक्ष्मीवान् पुमान् यदि अर्थिजनार्थी भवति, पृथ्वीशो राजा पुरुषरत्नयत्नार्थी पुरुषा एव रत्नानि

---

१. 'भावनियतमन्त्रा' इति सटीकपुस्तकस्थः पाठः.

नृपतिसुतः खलनिरतः सचिवजनो दुर्जनोऽधनः सुजनः।
महतां मस्तकशूलं जातैश्वर्यः कदर्यश्च ॥ १४० ॥

कविकोविदस्य—

कपटपटुभिर्वाचाटास्यैः पुरःस्फुटचाटुभि-
र्बहिरुपहितप्रायोमायैर्मुधा व्रतिकाशयैः।
वचसि फलवत्तन्त्रावापप्रयोगनयानुगै-
र्नरपतिसुतः कृत्योऽमात्यैर्वशोऽर्थकृशोऽपि च ॥ १४१ ॥

यदीच्छसि वशीकर्तुं महीशं गुणय द्वयम्।
बहुमायामयं वृत्तं चित्तं चाकरुणामयम् ॥ १४२ ॥

---

तेषां यत्नः संग्रहः सार्थो विद्यते यस्य स तथोक्तः, सचिवश्च मन्त्री यदि परहितार्थी भवति, परेषां हितप्रयोजनः स्यात्, तर्हि कलिकालः कुतः। न कुतोऽपीत्यर्थः। रूपकाक्षेपालंकारः॥

नृपतिसुत इत्यादि। नृपतिसुतो राजपुत्रः खलनिरतः सूचकतत्परः, सचिवजनो मन्त्रिलोको दुर्जनः नापितादिपुत्रः, सुजनः सत्पुरुषः अधनो निर्धनो भवति, कदर्यो अदाता जातैश्वर्यः विभूतिमान् भवति, एतत् सर्वं महतां विद्वज्जनानां मस्तकशूलम्। असहनीयमित्यर्थः। समुच्चयालंकारः॥

कविकोविदनाम्नः कवेर्वृत्तरचना श्रूयताम्—कपटपटुभिरित्यादि। नरपतिसुतो राजपुत्रः अमात्यैर्मन्त्रिभिः वशः पराधीनः अर्थकृशोऽपि च दरिद्रोऽपि कृत्यः कर्तव्यः। कथंभूतैरमात्यैः। कपटपटुभिः वञ्चनाचतुरैः। पुनः कथंभूतैः। वाचाटास्यैः बहुगर्ह्यवाग्वदनैः। पुनःकथंभूतैः। पुरःस्फुटचाटुभिः पुरः अग्रतः प्रव्यक्तमिथ्यास्तुतिभिः। पुनः कथंभूतैः। बहिरुपहितप्रायोमायैः बहिर्बाह्ये उपहिता कृता प्रायो बाहुल्येन माया परवञ्चनं यैस्ते तथा तैः। पुनः कथंभूतैः। मुधा व्रतिकाशयैः अन्तर्गडुव्रतप्रतिपालनाभिप्रायैः। पुनः कथंभूतैः। वचसि केवलं जिह्वाग्रे फलवत्तन्त्रावापप्रयोगनयानुगैः फलं विद्यते यस्मिन् तत् फलवत् एवंविधं यत्तन्त्रं सैन्यं तस्य अवापः प्राप्तिस्तस्य प्रयोगनयः कर्तव्यनीतिस्तमनुगच्छन्तीति राजाग्रे प्रब्रुवन्तीति फलवत्तन्त्रावापप्रयोगनयानुगास्तैः। समुच्चयालंकारः॥

यदीत्यादि। हे विद्वन्, यदि चेत् महीशं राजानं वशीकर्तुमिच्छसि तर्हि द्वयं गुणय एतद्द्वयमभ्यस। एतत् किम्। बहुमायामयं वृत्तं प्रचुरपरवञ्चनमयं चारित्रम्, अकरुणामयं निर्दयं चित्तं मनः। समुच्चयालंकारः॥

बहिरलघुरसप्रभवैरन्तःशून्यार्थपाटवैः सचिवैः ।
मुग्धमृगाः प्रतिदिवसं वञ्च्यन्ते मरुमरीचिकाशङ्कैः ॥ १४३ ॥
कार्ये स्वस्याभिमते सचिवः सिद्धिं करोति हठवृत्त्या ।
नृपतिरयं बहुसचिवः के वयमत्रेति भाषतेऽन्यस्य ॥ १४४ ॥
काशा तत्र नरेशे समस्तपरिवारजीविताहारः ।
संचरति यस्य निकटे सचिवजनो दुर्जनाचारः ॥ १४५ ॥

अभिमानमहीधरस्य—

अनवाप्तधनोऽपि जनः सकिंचने भवति चाटुतापात्रम् ।
मातर्लक्ष्मि तवायं महिमा किमिवोच्यतामत्र ॥ १४६ ॥
आत्मायत्तं वृत्तं वृत्तायत्तानि जगति पुण्यानि ।
पुण्यायत्ता लक्ष्मीर्यदि विद्वान्दैन्यवान्किमिति ॥ १४७ ॥

---

**बहिरित्यादि ।** सचिवैर्मुग्धमृगाः अपरिज्ञानतत्त्वपुरुषहरिणाः प्रतिदिवसं वञ्च्यन्ते प्रतार्यन्ते । कथंभूतैः सचिवैः । बहिरलघुरसप्रभवैः बहिर्बाह्ये गुरुतरानुरागोत्पादकैः । पुनः कथंभूतैः । अन्तःशून्यार्थपाटवैः अन्तर्मध्ये शून्यार्थे फल्गुकार्ये पाटवं पटुत्वं येषां ते तथोक्तास्तैः । अपरं कथंभूतैः । मरुमरीचिकाशङ्कैः मृगतृष्णासमानैः । यथा मृगतृष्णा बाह्ये प्रचुरतरजलाभ्याशं दर्शयति, मध्ये तु जलबिन्दुरपि न वर्तते । उपमालंकारः ॥

**कार्ये इत्यादि ।** सचिवो मन्त्री स्वस्य आत्मनः अभिमते कार्ये अभिप्रयोजने हठवृत्त्या बलात्कारेण सिद्धिं करोति निष्पत्तिं विदधाति अन्यस्य कार्ये इति ईदृशं वचनं भाषते ब्रूते । इतीति किम् । अयं एष नृपती राजा बहुसचिवो वर्तते । अत्र अस्मिन् राजनि वयं के । अस्माभिर्न किमपि कार्यं सिध्यति इत्यर्थः । आक्षेपालंकारः ॥

**काशा इत्यादि ।** तत्र तस्मिन् नरेशे का आशा । अपि तु न कापि वाञ्छा । तत्र कुत्र । यस्य नरेशस्य निकटे दुर्जनाचारः सचिवजनः संचरति प्रविशति । कथंभूतः सचिवजनः । समस्तपरिवारजीविताहारः सर्वपरिच्छदजीविकाभक्षः । आक्षेपालंकारः ॥

अभिमानमहीधरस्य अभिमानमहीधरनाम्नः कवेर्वृत्तरचना श्रूयताम्—**अनवाप्तधन इत्यादि ।** जनो लोकः अनवाप्तधनोऽपि अलक्ष्मीकोऽपि सकिंचने सधने पुंसि चाटुतापात्रं भवति मिथ्यास्तुतिकारकः संजायते । हे मातः लक्ष्मि हे अम्ब रमे, अयं प्रत्यक्षीभूतस्तव महिमा प्रभावः । अत्र अस्मिन् संसारे किमिवोच्यताम् । किं कथ्यते इत्यर्थः । आक्षेपालंकारः ॥

**आत्मायत्तमित्यादि ।** वृत्तमाचरणं तावदात्मायत्तं स्वाधीनं वर्तते । जगति सं-

यद्यपि विधे न सुविधिः काम्येऽर्थे याच्यसे तथापीदम्।
कुरु मरणं माकार्षीः सुजनानां दुर्जनैः सङ्गम्॥ १४८॥

मन्त्रावसरे समरे विधुरे दारेषु वस्तुसारेषु।
यो न व्यभिचरति नृपे स कथं तु न वल्लभस्तस्य॥ १४९॥

अव्याधिदुर्बलस्य—

क्षाराब्धौ सलिलस्य दुर्जनजने विद्याविनोदस्य च
क्षुद्रे संभ्रमभाषितस्य कृपणे लक्ष्मीविलासस्य च।
भूपे दुःसचिवागमस्य सुजने दारिद्र्यसङ्गस्य च
ध्वंसः स्यादचिरेण यत्र दिवसे तं चिन्तयन्दुर्बलः॥ १५०॥

---

सारे पुण्यानि शुभकर्माणि वृत्तायत्तानि आचरणाधीनानि वर्तन्ते। लक्ष्मीर्धनं पुण्यायत्ता पुण्यकर्माधीना। हे विद्वन्, यदि त्वं विद्वान् विचक्षणो वर्तसे, तर्हि दैन्यवान् याचकत्ववान् किमिति किमर्थं वर्तसे। जात्यलंकारः॥

**यद्यपीत्यादि**। हे विधे हे कर्मन्, यद्यपि त्वं काम्येऽर्थे सुविधिः सानुकूलो न वर्तसे, तथापीदं तदपि इदं एकं वस्तु त्वं याच्यसे। इदं किम्। मरणं कुरु प्राणान् गृहाण। सुजनानां सत्पुरुषाणां दुर्जनैः खललोकैः सह सङ्गं मेलापकं माकार्षीर्मा कुरु। प्रतिवस्तूपमालंकारः॥

**मन्त्रावसरे इत्यादि**। यः सचिवो नृपे न व्यभिचरति न स्खलति स मन्त्री तु पुनस्तस्य वल्लभोऽभीष्टः कथं न भवति। अपि तु भवत्येव। कुत्र कुत्र न व्यभिचरति। मन्त्रावसरे मन्त्रप्रस्तावे, समरे संग्रामे, विधुरे व्यसनवेलायाम्, दारेषु स्त्रीषु, वस्तुसारेषु धनरत्नादिषु। आक्षेपालंकारः॥

अव्याधिदुर्बलस्य अव्याधिदुर्बलनाम्नः कवेर्वृत्तरचना श्रूयताम्—**क्षाराब्धावित्यादि**। हे राजन्, यत्र यस्मिन् दिवसे दिने अचिरेण स्तोककालेन ध्वंसो विनाशः स्याद्भवेत् तं दिवसं चिन्तयन् प्रतीक्षमाणः प्रतिपालयन्। कस्य ध्वंसः स्यात्। क्षाराब्धौ लवणोदसमुद्रे सलिलस्य ध्वंसः स्यात्, दुर्जनजने खललोके विद्याविनोदस्य ध्वंसः स्यात्, क्षुद्रे असहिष्णुपुरुषे संभ्रमभाषितस्य महारवचनस्य ध्वंसः स्यात्, कृपणे बद्धमुष्टौ लक्ष्मीविलासस्य लक्ष्मीविस्तारस्य ध्वंसः स्यात्, भूपे राजनि दुःसचिवागमस्य दुष्टमन्त्र्यागमस्य च ध्वंसः स्यात्, सुजने सुष्ठुजने दारिद्र्यसङ्गस्य दरिद्रस्य भावो दारिद्र्यं तस्य सङ्गः संगमस्तस्य ध्वंसः स्यात्। समुच्चयालंकारः। वर्तमानसमीपे वर्तमानकालः स्यात्॥

यदतिथिविषयेऽस्मिन्विष्टपे सृष्टिरेषा
सुरभितरुमणीनामर्थितार्थप्रदानाम् ।
इदमणकमिहैकं मे कृशाङ्गत्वहेतुः
कुसचिववशवृत्तिर्भूपतिश्च द्वितीयम् ॥ १५१ ॥

कविकुसुमायुधस्य—
यदि तव हृदयं सनयं विद्वन्स्वप्नेऽपि मा स्म सेविष्ठाः ।
सचिवजितं युवतिजितं खड्गिजितं खलजितं च राजानम् ॥१५२॥

उपलः सलिलेषु तरेज्जलधिर्गाधेत मन्दरः प्रचरेत् ।
इति संभवति कदाचिन्नाखलभावः पुनः सचिवः ॥ १५३ ॥

विषमकरः शिशिरः स्यादनिलोऽचपलः खरांशुरमृतांशुः ।
सर्पश्चाविषदर्पो न तु मैत्रीस्थो नियोगस्थः ॥ १५४ ॥

---

**यदतिथीत्यादि** । इह अस्मिन् संसारे इदं प्रत्यक्षीभूतं एकं अणकं दुःखं मे मम कृशाङ्गत्वहेतुः कारणं वर्तते । यत् यस्मात् कारणात् अतिथिविषये याचनापराङ्मुखे अस्मिन् विष्टपे संसारे एषा प्रत्यक्षीभूता सुरभितरुमणीनां सृष्टिर्वर्तते । कथंभूतानां सुरभितरुमणीनाम् । अर्थितार्थप्रदानां वाञ्छितवस्तुप्रदायकानाम् । द्वितीयं मे कृशाङ्गत्वहेतुर्वर्तते । भूपतिः कुसचिववशवृत्तिर्दुष्टमन्त्रिवशेन पराधीनत्वेन वृत्तिर्यस्य स तथा । हेत्वलंकारः ॥

कविकुसुमायुधस्य वृत्तरचना श्रूयतां राजन्—**यदि तवेत्यादि** । हे विद्वन्, यदि चेत् तव हृदयं मनः सनयं न्याययुक्तं वर्तते, तर्हि स्वप्नेऽपि, आस्तां तावज्जाग्रदवस्थायाम्, स्वप्नेऽपि निद्रायामपि राजानं मा स्म त्वं सेविष्ठाः मा सेवस्व । कथंभूतं राजानम् । सचिवजितं मन्त्रिजनवशवर्तिनम्, युवतिजितं स्त्रीवशवर्तिनम्, खड्गिजितं शस्त्रिजितं (विटजितम्), खलजितं पिशुनजितम् । समुच्चयालंकारः ॥

**उपल इत्यादि** । उपलः पाषाणः सलिलेषु जलेषु तरेत् उन्मज्जेत्, जलधिः समुद्रः गाधेत प्रतिष्ठां लभेत तरितुं शक्यते, मन्दरो मेरुः प्रचरेत् चपलो भवेत्, इति चेत् वस्तुत्रयं कदाचित् संभवति घटते, सचिवो मन्त्री पुनः भूयोऽपि अखलभावः अदुर्जनस्वभावो न संभवति । दीपकालंकारः ॥

**विषमकर इत्यादि** । विषमकरः अग्निः शिशिरः शीतलः स्याद्भवेत्, अनिलो वायुरचपलः स्थिरः स्यात्, खरांशुः श्रीसूर्यः अमृतांशुः स्यात्, सर्पश्चक्षुःश्रवाः अविषदर्पः स्यात् विषदर्परहितो भवेत्, न तु नियोगस्थो मन्त्री मैत्रीस्थो मित्रत्वसहितः स्यात् । समुच्चयालंकारः ॥

बुद्धाण्ड इवाभाण्डे पाण्डित्यक्रीडितस्य नरनाथे ।
किं विदधातु सुधीरिह बहिरीहावहलदेहेऽपि ॥ १५५ ॥

सुजनजीवितस्य—

विश्वस्तं महिमास्तं सुजनं विजनं कुलीनमसुहीनम् ।
गुणिनं च दुःखकणिनं कुर्यादिति सचिवसिद्धान्तः ॥ १५६ ॥
कुमुदाकर इव दिनकृति विरमति नृपतिर्नरे सरागे हि ।
स लघु विरक्ते रज्यति रजनिरसश्चूर्णरजसीव ॥ १५७ ॥

मुग्धाङ्गनाकेलिकुतूहलस्य—

ज्वरार्त इव खिद्येत मन्त्री सत्सु धनव्यये ।
कृतार्थ इव मोदेत विटवाग्जीवनादिषु ॥ १५८ ॥

---

बुद्धाण्ड इत्यादि । इह अस्मिन् संसारे सुधीर्विद्वान् नरनाथे राजनि किं विदधातु किं करोतु । कथंभूते नरनाथे । पाण्डित्यक्रीडितस्य अभाण्डे विद्वज्जनविद्याविनोदस्य अनमत्रे अभाजने । पुनः कथंभूते नरनाथे । बहिरीहावहलदेहे बाह्यक्रियाप्रचुरशरीरेऽपि । कस्मिन्निव अभाण्डे बुद्धाण्डे इव । यथा बुद्धाण्डः निष्कासितवृषणः पुमान् पाण्डित्येनोपलक्षितं क्रि(क्री)डितं कामशास्त्रे प्रोक्तं स्त्रीणामनुभवनं तस्य पाण्डित्यक्रीडितस्य अभाण्डं अपात्रं भवति । बहिरीहावहलदेहस्य भवति हस्तपादमुखादिचेष्टादिसहितोऽपि सन् स्त्रीभोगं न जानाति स्त्रियं भोक्तुं समर्थो न भवति । आक्षेपालंकारः ॥

सुजनजीवितस्य कवेर्वृत्तरचना श्रूयताम्—विश्वस्तमित्यादि । इति ईदृशः सचिवसिद्धान्तः सचिवसिद्धान्तवादः विश्वस्तं विश्वासं प्राप्तं पुरुषं महिमास्तं महत्वरहितं कुर्यात् विदध्यात् । सुजनं सत्पुरुषं विजनं परिवाररहितं कुर्यात् । कुलीनं सत्कुलसंभवं पुरुषं असुहीनं जीवितरहितं कुर्यात् । गुणिनं विद्वांसं दुःखकणिनं दुःखैः संक्रन्दनसहितं कुर्यात् । दीपकालंकारः ॥

कुमुदाकर इत्यादि । नृपतिः नरेन्द्रः सरागे सानुरागे हितकारकपुरुषे विरमति विरक्तो भवति अनानन्दो भवति । कथम् । हि निश्चयेन । कस्मिन् क इव । दिनकृति श्रीभास्करे कुमुदाकर इव । यथा कुमुदाकरः श्वेतोत्पलकमलवनं सूर्ये विरमति स राजा विरक्ते पुरुषे लघु शीघ्रं रज्यति रागं प्राप्नोति । कस्मिन् क इव । चूर्णरजसि अग्निपक्वपाषाणधूल्यां रजनिरस इव हरिद्रा इव । दृष्टान्तालंकारः ॥

मुग्धाङ्गनाकेलिकुतूहलस्य कवेर्वृत्तरचना श्रूयताम्—ज्वरार्त इत्यादि । मन्त्री सचिवः सत्सु विद्वज्जनेषु धनव्यये वित्तवितरणे सति खिद्येत दुःखी भवति । क इव । ज्वरार्त इव ज्वरपीडित इव । मन्त्री विटवाग्जीवनादिषु विटाः परस्त्रीलम्पटाः वाग्जीवना

भस्मनि हुतमिव महते यद्दत्तं देव तदफलं सकलम् ।
उपयोगिने तु देयं नटाय विटपेटकायापि ॥ १५९ ॥
पिण्डीशूराः केवलममी हि सर्वस्वभक्षणे दक्षाः ।
नहि यामार्थं सन्तः स्वामिन्भटपेटिकार्थं वा ॥ १६० ॥

विलासिनीलोचनकज्जलस्य—

येषां धर्मार्थकामेषु दुष्टलुण्टाकचेटकाः ।
तेषामनन्तरायाः स्युः श्रेयःश्रीयोषितः कुतः ॥ १६१ ॥
यदल्पं दर्श्यतेऽमात्यैः फलमाकाशजं क्वचित् ।
तत्सर्वस्वापहाराय मुग्धेषु पुरधूर्तवत् ॥ १६२ ॥

---

मद्यपायिनो भट्टाः ते आदिर्येषां ब्रह्मघातकगुरुनिन्दकादीनां ते विटवाग्जीवनादयस्तेषु धनव्यये सति मोदेत हर्षं प्राप्नुयात् प्रमोदं गच्छेत् । क इव । कृतार्थ इव । यथा कृतार्थः पुमान् अद्य मम जीवितं सफलं जातमिति मोदते । उपमालंकारः ॥

**भस्मनीत्यादि** । हे देव हे राजन्, महते साधवे सद्गुरवे यत् धनं दत्तं तत् सकलं समस्तं अफलं फलरहितं भवति । किमिव अफलं भवति । भस्मनि हुतमिव अग्निरहितरक्षायां वषट्कृतमिव । उपयोगिने नियोगिने निजमन्त्रिणे तु पुनः देयं दातव्यं तत् सफलं च भवतीत्यर्थः । कथंभूताय उपयोगिने । नटाय नर्तकायापि । पुनः कथंभूताय । विटपेटकाय विटानां पेटको धाटी यस्य उपयोगिनः स तथोक्तस्तस्मै । उपमालंकारः ॥

**पिण्डीशूरा इत्यादि** । हे स्वामिन्, अमी प्रत्यक्षीभूताः सन्तः साधवः केवलं पिण्डीशूराः भोजनभटाः । पुनः कथंभूताः सन्तः । सर्वस्वभक्षणे दक्षाः सर्वधनखादने चतुराः । कथम् । हि निश्चयेन नहि यामार्थं सन्तो वर्तन्ते प्रहरकं न ददति रात्रौ न जाग्रति । वा अथवा भटपेटिकार्थं सुभटग्रासनिमित्तं न वर्तन्ते । जात्यलंकारः ॥

विलासिनीलोचनकज्जलस्य कवेर्वृत्तरचना श्रूयताम्—**येषामित्यादि** । हे राजन्, येषां राज्ञां धर्मार्थकामेषु धर्मनिमित्तं अर्थनिमित्तं कामनिमित्तं दुष्टलुण्टाकचेटकाः दुष्टेषु मन्त्रिषु सत्सु धर्मो न भवति, लुण्टाकेषु चौरेषु मन्त्रिषु अर्थो न भवति, चेटकेषु परस्त्रीलम्पटेषु कामो न भवति, ईदृग्विधा मन्त्रिणो येषां राज्ञां वर्तन्ते तेषां राज्ञां श्रेयःश्रीयोषितः धर्मार्थकामा अनन्तराया निर्विघ्नाः कुतः स्युः कस्माद्भवेयुः । यथासंख्यालंकारः ॥

**यदल्पमित्यादि** । अमात्यैर्मन्त्रिभिर्यत् क्वचित् अल्पं फलं स्तोकं द्रव्यं दर्श्यते राज्ञे कथ्यते 'देव, यत्र विंशतिसहस्राणि उत्पद्यन्ते तत्र त्रिंशत्सहस्राणि उत्पादयामि'

संभावयत्यमात्योऽयं यत्स्वमेव महीभुजि ।
तदन्यस्माद्विवेकोऽस्य मा भून्मयि धनाशिनि ॥ १६३ ॥

अन्यथा—

किं कुर्वन्ति खलाः पुंसां विशुद्धेऽध्वनि धावताम् ।
इति मत्वा प्रमोदन्ते महान्तो बह्वधिष्ठिताः ॥ १६४ ॥

सारस्तनीकैतवकौतुकस्य—

और्वोऽखर्वः सुधाम्भोधौ भूपाले प्रबलाः खलाः ।
सदर्पाश्चन्दने सर्पा न रत्नमनुपद्रवम् ॥ १६५ ॥

ग्रहो ग्रहाणामसुरोऽसुराणां यमो यमस्यापि नृपस्य मन्त्री ।
एवं न चेदेष कथं नु जीवेदकारणं कोविदकामकालः ॥ १६६ ॥

---

ईदृशं यत्फलं दर्शने आकाशजं आकाशफलसमानं आकाशपुष्पसदृशं तत् किमर्थं दर्शयति । सर्वस्वापहाराय सर्वभक्षणार्थं किंचित् मुग्धेषु भद्रकेषु राजसु पुरधूर्तवत् शृगालवत् । यथा करटकदमनकादयः शृगालाः सिंहस्य स्तोकं मांसं प्रदर्श्य स्वयमेव सर्वं भक्षयन्ति । उपमालंकारः ॥

**संभावयतीत्यादि** । यत् अयं अमात्यो महीभुजि राजनि स्वमेव श्रीमुखेन संभावयति आत्मसंभावनां करोति, तत् किमर्थम् । मयि मन्त्रिणि धनाशिनि धनभक्षके सति अस्य राज्ञः अन्यस्मात् अपरस्मात् पुरुषात् विवेको वैदग्धी मा भूत् यथा न भवति एतदर्थम् । जात्यलंकारः ॥

**अन्यथा—किमित्यादि** । अन्यथा यद्येते धनभक्षका मन्त्रिणो न भवन्ति तदा इति मत्वा ईदृशं ज्ञात्वा महान्तः चतुर्वर्णचतुराश्रमगुरवो राजानो धनवन्तो वा पुरुषाः बह्वधिष्ठिता बहुमन्त्रिसंयुक्ता प्रमोदन्ते आह्लादन्ते । इतीति किम् । खला दुर्जनाः पुंसां किं कुर्वन्ति न किमपि कुर्वन्ति । किं कुर्वतां पुंसाम् । विशुद्धेऽध्वनि धावतां निर्दोषमार्गे शीघ्रं गच्छताम् । आक्षेपालंकारः ॥

सारस्तनीकैतवकौतुकस्य कवेर्वृत्तरचना श्रूयताम्—**और्व इत्यादि** । सुधाम्भोधौ क्षीरसागरे और्वो वडवानलः अखर्वो महान् वर्तते । भूपाले खला दुष्टमन्त्रिणः प्रबला वर्तन्ते । चन्दने श्रीखण्डवृक्षे सदर्पा अत्युत्कटाः सर्पाः वर्तन्ते । युक्तोऽयमर्थः—रत्नं उत्तमं वस्तु अनुपद्रवं अनुत्पातं न वर्तते नास्ति । अर्थान्तरन्यासालंकारः ॥

**ग्रह इत्यादि** । नृपस्य राज्ञो मन्त्री सचिवः । कथंभूतो वर्तते । ग्रहाणां शनिमङ्गलराहुकेत्वादीनां दुष्टग्रहाणां ग्रहो दुष्टग्रहो वर्तते । असुराणां पूर्वदेवानां असुरः पूर्वदेवः । यमस्य कालस्य यमः कालो वर्तते । चेदेवं न वर्तते तर्हि एष मन्त्री । नु इति वितर्के । कथं

अपि च ।

द्विजिह्वो जन्तूनां मृगपतिरिभानामिव कुले
तडिद्दण्डोऽद्रीणामयमसमरोचिः क्षितिरुहाम् ।
हिमातानोऽब्जानां तपतपनकालश्च सरसा-
मभूत्क्रूरः कोऽपि प्रकृतिखलभावेन महताम् ॥ १६७ ॥

तदुक्तं कैश्चिद्विपश्चिद्भिरेतदेव हृदयस्थमपि जिह्वास्थं कर्तुमतरद्भिः समासोक्तिमिषेण—

प्रतीक्षे जातास्थः सुकृतसुलभं तद्दिनमहं
यतो यातारोऽमी प्रलयमहयश्चन्दनतरोः ।
अमीषां पापानामिह हि वसतामेष महिमा
कदाप्येतच्छायामभिलषति यन्नाध्वगजनः ॥ १६८ ॥

---

केन प्रकारेण जीवेत् प्राणिति । एनं पापिष्ठं ग्रहा असुरा यमश्च न मारयन्तीत्यर्थः । कथंभूतोऽयं मन्त्री । अकारणं निष्कारणं कोविदकामकालः कोविदानां विद्वज्जनानां कामस्य वाञ्छितस्य कालो विध्वंसकः । रूपकानुमानालंकारः ॥

**अपि च । द्विजिह्व इत्यादि** । हे राजन्, अपि च महतां कुलेऽयं तव मन्त्री कोऽप्यपूर्वः क्रूरोऽभूत् । केन कृत्वा । प्रकृतिखलभावेन स्वभावेन । केषां क इव । जन्तूनां कुले द्विजिह्व इव सर्प इव । इभानां कुले मृगपतिरिव । अद्रीणां कुले तडिद्दण्ड इव । क्षितिरुहां कुले असमरोचिरिव अग्निरिव । अब्जानां कुले हिमातान इव प्रालेयपटल इव । सरसां तडागानां कुले तपतपनकाल इव ग्रीष्मकाल इव । समुच्चयदीपकोपमालंकारः ॥

**तदुक्तमित्यादि** । तदुक्तं तद्वचनं एतदेव इदमेव वचनं कैश्चिद्विपश्चिद्भिः पण्डितैः हृदयस्थमपि मनसि स्थितमपि जिह्वास्थं कर्तुं जिह्वाग्रमानेतुं अतरद्भिरसमर्थैः अशक्नुवद्भिः सद्भिः समासोक्तिमिषेण समासोक्त्यलंकारच्छलेन एवं प्रतिपादितम् । कासौ समासोक्तिरिति चेत् उच्यते—'उच्यते वक्तुमिष्टस्य प्रतीतिजननक्षमम् । सधर्मे यत्र वस्त्वन्यत्समासोक्तिरियं यतः ॥' इति ॥

**प्रतीक्षे इत्यादि** । अहं तद्दिनं प्रतीक्षे प्रतिपालयामि । कथंभूतोऽहम् । जातास्थः उत्पन्नापेक्षः । कथंभूतं तद्दिनम् । सुकृतसुलभं सुकृतेन सुलभं सुप्राप्यं तत् । किं दिनम् । यतो यस्मिन् दिने अमी प्रत्यक्षीभूताः चन्दनतरोश्चन्दनवृक्षस्य अहयः प्रलयं यातारो यास्यन्ति । अमीषामहीनां पापानां पापमूर्तीनां इह चन्दनतरौ वसतां तिष्ठतां एष महिमा वर्तते । कथम् । हि निश्चयेन । कोसौ महिमा । यत् यस्मात् कारणात् एतच्छायां

प्रौढप्रियापाङ्गनवोत्पलस्य—

तत्र कथं ननु सन्तो यत्रास्ते तच्चतुष्टयं युगपत्।
कलिकालः खलकालो नृपकालः सचिवकालश्च ॥ १६९ ॥

यतः।

गुणरागधृति क्षितिभृति सचिवजने सुजनजातिभजने च।
लक्ष्मीरिव प्रसीदति सरस्वती पटुषु पात्रेषु ॥ १७० ॥
शूरः समरविदूरः क्षुद्रो रुद्रः परासरोसारः।
भामसमोऽपि च मामः स्वार्थपरस्तदहमेव तव देव ॥ १७१ ॥

---

चन्दनवृक्षच्छायामनातपं कदापि अध्वगजनः पथिकसमूहो नाभिलषति न वाञ्छति। समासोक्त्यलंकारः ॥

प्रौढप्रियापाङ्गनवोत्पलस्य कवेर्वृत्तरचनां श्रूयताम्—तत्रेत्यादि। तत्र तस्मिन् स्थाने ननु अहो सन्तः सत्पुरुषाः विद्वांसश्च कथं केन प्रकारेण। तिष्ठन्तीति क्रियाध्याहारः। तत्र कुत्र। यत्र यस्मिन् स्थाने तज्जगत्प्रसिद्धं चतुष्टयं चत्वारः पदार्थाः युगपत् समकालं आस्ते तिष्ठति। किं तच्चतुष्टयम्। एकस्तावत् कलिकालः दुःसमाकालः, द्वितीयः खलकालः पिशुनसूचककालः, तृतीयो नृपकालः अविचारको राजा, चतुर्थः सचिवकालः मन्त्रिकृतान्तः। समुच्चयालंकारः ॥

यत इत्यादि। यस्मात् कारणात् पटुषु पात्रेषु वृत्तेषु दक्षेषु विद्वत्सु सरस्वती भारती प्रसीदति प्रसन्ना भवति वर्धत इत्यर्थः। केव। लक्ष्मीरिव। यथा लक्ष्मीः प्रसीदति तथा सरस्वत्यपि प्रसीदतीत्यर्थः। कस्मिन् सति। क्षितिभृति राजनि गुणरागधृति सति। गुणेष्वनुरागवतीत्यर्थः। सचिवजने मन्त्रिलोके सुजनजातिभजने च सुजनानां सत्पुरुषाणां जातिः सुजनजातिः, सुजनकुलं भजते सेवते मानयति सुजनजातिभजनस्तस्मिन्। 'कृत्ययुटोऽन्यत्रापि' इति वचनात् कर्तरि युट्। उपमैव। यथासंख्यालंकारः ॥

शूर इत्यादि। हे देव, इत्यमुना प्रकारेण आत्मसंभावनाजिह्मब्राह्मीकम् आत्मनः संभावना उद्भावना गुणस्तुतिरूपा अजिह्मा प्रगुणा ब्राह्मीका वाणी यस्य सः आत्मसंभावनाजिह्मब्राह्मीकस्तं सचिवं मन्त्रिणं उपह्वरे एकान्ते ह्वयता आकारयता त्वया प्रकृतयः प्रजाः ज्ञातयश्च स्वकीयमपि कुटुम्बं कथंकारं केन प्रकारेण न नैव साधु रुचिरतया प्रसादिताः प्रसन्नीकृताः। हिंसिता इति भावः। 'अन्यथैवं कथमित्थंसुसिद्धा प्रयोगश्चेत्' इत्यनेन कृञः खमुञ् प्रत्ययः। 'षद्लृ विशरणगत्यवसादनेषु' इति धातोरर्थत्रयेषु विशरणं मुख्यतया सूचितं कापटिकेन। इतीति किम्। शूरः समरविदूरः देवशूरः किमिति संगृह्यते। यतः यस्मात् कारणात् शूरः समरविदूरः समरकाले दूरः। समरकाले दूरवर्ती

इत्यात्मसंभावनाजिह्मब्राह्मीकमुपह्वरे ह्वयता प्रकृतयो ज्ञातयश्च कथंकारं न साधु प्रसादिताः ।

प्रजाप्रतिपालनं च तस्य किमिव वर्ण्यते । यस्य

वापसमयेषु विष्टिः सिद्धायः क्षीरिकणिशकालेषु ।
लवनावसरेषु पुनः स्वच्छन्दः सैनिकाबाधः ॥ १७२ ॥'

राजा कर्णौ पिधाय शान्तं ब्रूते—'आः पापाचार कापटिक, महाभागे समागतगुरुगुणानुरागे च तस्मिन्मैवं पापं भाषीष्ठाः ।' कापटिकः प्राह—'देव, लोचनागोचरायाते कार्यजाते चारसंचारो विचारश्च नरेश्वराणां

---

वर्तते, अथ वा समराय भवता सह युद्धाय विदूरो निकटवर्ती । तथा रुद्रः तीक्ष्णः पुमान् क्षुद्रः असहिष्णुरेव तव लक्ष्मीं न सहते । परासरः परिकाङ्क्षीयति । असारोऽसारभूतः । मामो मातुलः श्वशुरः भामसमोऽपि च ज्येष्ठभगिनीपतिः । तर्हि यद्येते अपात्रं तर्हि पात्रं के । हे देव, तत्तस्मात् कारणात् तव स्वार्थपरः कार्यसाधकः अहमेव अहं सचिव एव स्वार्थः । समुच्चयः ॥

तस्य पामरोदरनाम्नो मन्त्रिणः प्रजाप्रतिपालनं किमिव वर्ण्यते—**यस्य वापसमयेत्यादि** । यस्य मन्त्रिणः वापसमयेषु वीजवापनावसरेषु विष्टिर्भवति यथा कर्मदानं भवति । यस्य मन्त्रिणः क्षीरिकणिशकालेषु क्षीरं विद्यते येषां ते क्षीरिणो दुग्धमागता ये कणिशाः कणमञ्जर्यस्तेषां कालेषु अवसरेषु सिद्धायो भागदेयो गृह्यते । यस्य मन्त्रिणः लवनावसरेषु सस्यच्छेदनप्रस्तावेषु पुनः द्वितीयवारं स्वच्छन्दो निरवग्रहः निरर्गलः । कः । सैनिकाबाधः सेनारक्षाणां संचारेण आबाध उपद्रवो भवति ॥

**राजेत्यादि** । राजा यशोधरः कर्णौ पिधाय कर्णौ कराभ्यां पिधाय मुद्रयित्वा शान्तं यथा भवत्येवं ब्रूते। आः इति क्रोधे पीडायां च। रे पापाचार पापकर्मन् रे कापटिक, तस्मिन् मन्त्रिणि पामरोदरे महाभागे पुण्यवति समागतगुरुगुणानुरागे च समागतः सम्यगायातो गुरुगुणेषु महागुणवत्सु पुरुषेषु अनुरागः अकृत्रिमस्नेहो यस्य स तथा तस्मिन् मा एवं त्वं पापं भाषीष्ठाः मा त्वमेवं ब्रूहि । मे मम पापं लगिष्यत इति भावः । उक्तं च कविकालिदासेन महाकविना—'निवार्यतामालि किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः । न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् ॥' कापटिकः शङ्खनकः प्राह ब्रूते—हे देव हे राजन्, लोचनागोचरायाते लोचनयोरगोचरं अगम्यतां आयाते आगते एवंविधे कार्यजाते कार्यसमूहे चारसंचारः चारप्रवेशः वि-

---

१ 'तां विभाषते' सटीकपुस्तकस्थः पाठः.

प्रायेणेक्षणद्वयम् । तच्च देवस्य दिव्यचक्षुष इव नास्ति । केवलं मिथ्याभिनिवेशानुरोधान्मनोमोहनौषधानुबन्धाद्वा विपर्यासवसतिर्मतिः । तथा चोक्तं शास्त्रान्तरे—

चारो यस्य विचारश्च राज्ञो नास्तीक्षणद्वयम् ।
तस्यान्धदुग्धवद्राज्यं मन्त्रिमार्जारगोचरम् ॥ १७३ ॥

देव, मांसरसरतस्य पुंसः किमिव मांसव्रतम् । कपाले भुञ्जानस्य हि नरस्य क इव केशदर्शनादाशप्रत्यादेशः । पुरे प्रमोषदक्षस्य हि पुरुषस्य केव कान्तारेऽपेक्षा । निरम्बरनितम्बायामात्माम्बायां दाहोद्योगस्य हि जनस्य क इव पराम्बायामम्बरपरित्यागः । यतः ।

स्थितासुं ग्रसमानस्य गतासौ कीदृशी दया ।
परबाले कृपा कैव स्वबालेन बलिक्रिये ॥ १७४ ॥

---

चारश्च पर्यालोचनं नरेश्वराणां प्रायेण ईक्षणद्वयं लोचनद्वयं वर्तते । तच्च चारविचारेक्षणद्वयं देवस्य भवतो नास्ति न विद्यते । कस्य । दिव्यचक्षुषः अन्धस्येव । यथा दिव्यचक्षुषः पुरुषस्य लोचनद्वयं न भवति तथा देवस्य ईक्षणद्वयं नास्ति । केवलं निष्केवलं मिथ्याभिनिवेशानुरोधात् असत्याभिप्रायप्रभावात् मनोमोहनौषधानुबन्धाद्वा मनसो मोहने अज्ञानोत्पादने यदौषधं मूलादिकं तस्यानुबन्धात् आस्रवात् मतिर्बुद्धिर्विपर्यासवसतिः विपरीतास्पदं भवति । तथा उक्तं च शास्त्रान्तरे—'चारो यस्य विचारश्च राज्ञो नास्तीक्षणद्वयम् । तस्यान्धदुग्धवद्राज्यं मन्त्रिमार्जारगोचरम् ॥' यस्य राज्ञश्चारो हैरिको विचारश्च पर्यालोचनं एवंगुणविशिष्टमीक्षणद्वयं नास्ति न वर्तते, तस्य राज्ञो राज्यमन्धदुग्धवत् अन्धस्य क्षीरं यथा मन्त्रिमार्जारगोचरं भवति मन्त्री एव मार्जारो बिडालः प्रजामूषिकभक्षकत्वात् तस्य गोचरं गम्यं भवति । रूपकालंकारः । उपमा च ॥

देवेत्यादि । देव, मांसरसरतस्य मांसवेसवारनिर्यासे रतस्य पुंसः पुरुषस्य किमिव किं मांसव्रतम् । अपि तु न किमपि मांसव्रतम् । देव, कपाले भुञ्जानस्य हि नरस्य मनुष्यशिरःकरोटिकायां भोजनं कुर्वाणस्य नरस्य केशदर्शनात् केशावलोकनात् क इव आशप्रत्यादेशः को भोजनान्तरायः । देव, पुरे प्रमोषदक्षस्य चौरिकासमर्थस्य हि निश्चयेन एवंगुणविशिष्टस्य पुरुषस्य केव कान्तारे अपेक्षा कान्तारे वने का अपेक्षा का इच्छा । अपि तु न कापि । देव, निरम्बरनितम्बायां नग्नायां आत्माम्बायां निजमातरि दाहोद्योगस्य कामज्वरिताङ्गस्य जनस्य हि निश्चयेन पराम्बायां लोकमातरि अम्बरपरित्यागः क इव को वर्तते । यो निजमातरं न मुञ्चति स परमातरं कथं त्यजतीत्यर्थः ॥

यत इत्यादि । यतो यस्मात्कारणात् । स्थितासुमिति । हे देव, स्थितासुं ग्रस-

देव, स्वभावजा हि दुस्त्यजा खलु प्रकृतिः । न खलु पोषितोऽप्यहिपोतो जहाति हिंसाध्यवसायम्, न खलु व्रतशीलोऽपि बिडालस्त्यजति क्रौर्यम्, न खलु प्रायोपवेशनवासिन्यपि कुट्टनी मुञ्चति परवञ्चनोचितां चिन्ताम्, न खलु कालकवलनिकटोऽपि किराटो रहति शाठ्यस्थितिम् । यतः ।

यः स्वभावो भवेद्यस्य स तेन खलु दुस्त्यजः ।
न हि शिक्षाशतेनापि कपिर्मुञ्चति चापलम् ॥ १७५ ॥

देव, वंशविद्यावृत्तविधुरोपकारा हि सेवकेषु स्वामिनमनुरञ्जयन्त्याश्चर्यशौर्यविजृम्भाः प्रारम्भा वा । तत्र वंशस्तावत्पिण्डीभाण्डशालिनां पितृप्रियपिण्डीनामस्य । यतः ।

---

मानस्य जीवन्तं भक्षतः पुरुषस्य गतासौ गतजीवे जीवे दया कारुण्यं कीदृशी वर्तते । न कीदृश्यपि वर्तते । परबाले लोकपुत्रे कृपा कैव का वर्तते । अपि तु न कापि । कथंभूते पुरुषे । स्वबालेन निजशिशुना बलिक्रिये बलिकारके पुरुषे । आक्षेपालंकारः ॥

**देवेत्यादि** । हे देव, स्वभावजा स्वभावोत्पन्ना प्रकृतिः खलु दुस्त्यजा दुष्परिहारा । कथम् । हि निश्चये । खलु वाक्यालंकारे । न खलु पोषितोऽपि पुष्टिं नीतोऽपि अहिपोतः सर्पबालकः हिंसाध्यवसायं हिंसोद्यमं जहाति परिहरति । न खलु व्रतशीलोऽपि बिडालः । खलु वाक्यालंकारे । व्रतशीलोऽपि दीक्षां प्राप्तोऽपि बिडालो मार्जारः क्रौर्यं न त्यजति । न खलु प्रायोपवेशनवासिन्यपि संन्यासं प्राप्तापि कुट्टनी दूती परवञ्चनोचितां चिन्तां न मुञ्चति लोकवञ्चनयोग्यां चिन्तां न त्यजति न खलु कालकवलनिकटोऽपि किराटः कीनाशग्राससमीपोऽपि किराटो धणिक्कृच्छाठ्यस्थितिं रहति कैतवाचारं न मुञ्चति ॥

**यत इत्यादि** । यतः यस्मात् कारणात् । **य इति** । यस्य पुरुषस्य यः स्वभावो भवेत् स स्वभावस्तेन पुरुषेण खलु निश्चयेन दुस्त्यजः दुःखेन महता कष्टेन त्यक्तुमशक्यः । कपिर्वानरः शिक्षाशतेनापि शिक्षासहस्रेणापि चापलं चपलत्वं न मुञ्चति न त्यजति । कथम् । हि स्फुटमिति शेषः । दृष्टान्तः ॥

**देवेत्यादि** । हे देव हे राजन्, वंशविद्यावृत्तविधुरोपकाराः वंशश्च कुलम्, विद्या च शास्त्रम्, वृत्तं च ब्रह्मचर्यादिकम्, विधुरोपकाराश्च व्यसनोपनिपातादुद्धरणम्, ते वंशविद्यावृत्तविधुरोपकाराः । चत्वारः पदार्थाः उपधाशब्देन गृह्यन्ते । ते चतुरुपधापरीक्षितेषु सेवकेषु स्वामिनं अनुरञ्जयन्ति स्नेहमुत्पादयन्ति आश्चर्यशौर्यविजृम्भाः प्रारम्भाः वा आश्चर्यभूतं चेतश्चमत्कारोत्पादकं यच्छौर्यं सुभटत्वं तस्य विजृम्भः प्रसरो येषु प्रारम्भेषु ते आश्चर्यशौर्यविजृम्भा एवंगुणविशिष्टाः प्रारम्भाः संग्रामाः स्वामिनमनुरञ्जयन्ति । चतुरुपधाभिरपरीक्षिता अपि यदि संग्रामशूरा भवन्ति ते नैवं स्वामिनमनुरञ्जयन्ति । तत्र

ध्वजकुलजातस्तातः पामरपुत्री च यस्य जनयित्री ।
पञ्चपुरुषा च योषा कुलस्थितिः स हि कथं तु कुलजन्मा ॥१७६॥

देव, तथाविधान्वयपात्रे चात्र येयमहं महीक्षिदित्यहंकृतिः, उभयकुलविशुद्धिपात्रैर्निहीनचारित्रैः क्षतपुत्रैः फेलाभ्यवहारेण स्थितिः, देवेन च स्वयमभ्युत्थानविहितिः, बान्धवजनप्रणतिः सामन्तोपनतिर्महापुरुषापचितिश्च, सा ह्यन्तःकृतातङ्का शल्यशलाकेव कमहंकारोत्सेकं सविवेकं च लोकं खरं न खेदयति । ततश्च ।

असल्लोकानुरोधेन सल्लोकोपेक्षणेन च ।
व्यालशैलान्तरालाङ्गी कुरङ्गीवाक्षमा रमा ॥ १७७ ॥

---

तेषु चतुर्षु मध्ये वंशस्तावद्व्यावर्ण्यते—अस्य मन्त्रिणः पितृप्रियपिण्डीनामस्य पिण्डी खलस्य भाण्डं संग्रहस्तेन शालन्ते शोभन्ते इत्येवंशीलाः पिण्डीभाण्डशालिनस्तेषाम् । अथ वा पिण्डीभाण्डाः शाला विद्यन्ते येषां ते तथा तेषाम् ॥

यतः । ध्वजकुलेत्यादि । ध्वजकुलजातस्तातः तिलंतुदकुलोत्पन्नो वला(पिता), यस्य पामरोदरानाम्नो मन्त्रिणः जनयित्री माता पामरपुत्री नीचसुता वर्तते । उक्तं च—'विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः । निहीनोऽपसदो जाल्मः क्षुल्लकाश्चतुरश्चरुः ॥ वर्बरोऽप्यन्यथा. जातोऽपि' इति क्षीरस्वामिवचनम् ॥ यस्य योषा स्त्री पञ्चपुरुषा पञ्चभर्तृका । यस्य मन्त्रिण ईदृशी कुलस्थितिः कुलाचारः स मन्त्री तु पुनः कुलजन्मादिनिश्चयेन कथं केन प्रकारेण वर्तते । समुच्चयालंकारः ॥

देवेत्यादि । देव, तथाविधान्वयपात्रे तादृशकुलवति च पुनः अत्र मन्त्रिणि या प्रसिद्धा इयं प्रत्यक्षीभूता अहं महीक्षित् अहं राजा इति ईदृशी अहंकृतिरहंकारो वर्तते । उभयकुलविशुद्धिपात्रैः जातिकुलनिर्मलताभाजनैः निहीनचारित्रैः निकृष्टाचारैः क्षत्रपुत्रैः राजपुत्रैः फेलाया अभ्यवहारेण स्थितिर्वर्तते ऊर्जितभोजनास्वादनाचारो यद्वर्तते । यस्य मन्त्रिणः उच्छिष्टभोजनं उत्तमं कुर्वन्ति न केवलं उच्छिष्टभोजनविधानं देवेन च त्वया स्वयमात्मना अभ्युत्थानविहितिः आसनादुत्थीभवनविधानं वर्तते । बान्धवजनप्रणतिः कुटुम्बवर्गस्यास्य प्रणामकरणं सामन्तोपनतिर्देशपतिभिः संमुखागमनं च महापुरुषापचितिश्च महापुरुषाणां महानुभावानां अपचितिश्च पूजा यद्वर्तते । सा पूजा तां आदृतिर्निश्चयेन अन्तःकृतातङ्का मनस्युत्पादितसंतापा शल्यशलाकेव हृदयक्षुब्धासिखण्डमिव कं सविवेकं लोकं खरं अतिशयेन न खेदयति दुःखयत्येव । कथंभूतं लोकम् । अहंकारोत्सेकं वयं महान्त इति गर्वम् ॥

ततश्च तस्मात् कारणाच्च । असल्लोकेत्यादि । असल्लोकानुरोधेन नीचलोकानुवर्ति-

देव, श्रूयन्ते ह्यसतां सतां च प्रग्रहावग्रहाभ्यां च नृपेषु व्यापदः । तथा हि—कलिङ्गेष्वनङ्गो नाम नृपतिर्दिवाकीर्तिसेनाधिपत्येन सामन्तसंतानं संतापयन् संभूय प्रकुपिताभ्यः प्रकृतिभ्यः किलैकलोष्ठानुरोधं वधमवाप । केरलेषु करालः कितवस्य पौरोहित्येन, वङ्गालेषु मङ्गलो वृषलस्य साचिव्येन, क्रथकैशिकेषु कामोऽवरुद्धवधूस्तनंधयस्य यौवराज्येन, तथा वङ्गेषु स्फुलिङ्गः कुलक्रमागतस्य चतुरुपधाशुद्धस्यापि सचिवस्यावमानेन, मगधेषु मकरध्वजः साधुसमीहितस्यापि पुरोहितस्यावहेलेन, कौङ्गेषु कुरङ्गो देशकोशोचितप्रतापस्यापि सेनापतेरधिक्षेपेण, चेदिषु नदीशो

---

नेन च सल्लोकोपेक्षणेन च उत्तमलोकानामनादरेण च उदासीनत्वेन च रमा लक्ष्मीरक्षमा असमर्था भवति । केव । कुरङ्गीव मृगीव । कथंभूता कुरङ्गी । व्यालशैलान्तरालाङ्गी एकस्मिन् पार्श्वे व्यालो दुष्टगजः द्वितीयस्मिन् पार्श्वे शैलः पर्वतो वर्तते तयोरन्तराले मध्ये अङ्गः शरीरं यस्याः कुरङ्ग्याः सा व्यालशैलान्तरालाङ्गी । उपमालंकारः ॥

देवेत्यादि । हे देव, असतां दुर्जनानां सतां च साधूनां प्रग्रहावग्रहाभ्यां स्वीकारास्वीकाराभ्यां नृपेषु राजसु व्यापदो विपत्तयः श्रूयन्ते आकर्ण्यन्ते । कथम् । हि निश्चयेन । तथा हि तदेव निरूपयति—कलिङ्गेषु कलिङ्गदेशेषु अनङ्गो नाम नृपती राजा दिवाकीर्तेर्नापितस्य सेनापतित्वेन सामन्तसंतानं सेवकनृपसमूहं संतापयन् दुःखं दापयन् संभूय मिलित्वा एकत्रीभूय प्रकुपिताभ्यः प्रकृतिभ्यः प्रजाभ्यः । किलेति लोकोक्तौ । एकलोष्ठानुरोधं एकैकमृत्पिण्डानुवर्तनं वधं घातं अवाप प्राप्तवान् । उक्तं च—'अमात्याद्याश्च पौराश्च सद्भिः प्रकृतयः स्मृताः । स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥' केरलेषु दक्षिणाश्रितदेशेषु करालो नाम राजा कितवस्य विजातेः पौरोहित्येन पुरोहितत्वेन वधं अवाप । वङ्गालेषु मङ्गलो नाम राजा वृषलस्य ब्राह्मण्यां शूद्रेणोत्पादितस्य साचिव्येन साचिव्यत्वेन वधं अवाप । क्रथकैशिकेषु क्रथकैशिकनामदेशेषु कामो नाम राजा अवरुद्धवधूस्तनंधयस्य वाराङ्गनापुत्रस्य यौवराज्येन युवराजत्वेन वधं अवापेति संबन्धः । तथा च वङ्गेषु वङ्गदेशेषु स्फुलिङ्गो नाम राजा कुलक्रमागतस्य चतुरुपधाशुद्धस्यापि सचिवस्य मन्त्रिणः अवमानेन वधं अवाप । उपधीयते समीपे ढौक्यते परीक्षार्थं उपधा धर्मकामार्थभीभूयोपन्यासेन आशयान्वेषणं चित्तपरीक्षणं उपधोच्यते । यत्कौटिल्यः कविः प्राह—निशौचशौचपरिज्ञानं मनोज्ञानं उपधा । मगधे(मागधीये)षु मगध(धीय)देशेषु मकरध्वजो नाम राजा साधुसमीहितस्यापि शोभनचेष्टितस्यापि सदाचारस्यापि पुरोहितस्य अवहेलेन अनादरेण वधं अवाप । कौङ्गेषु कौङ्गदेशेषु कुरङ्गो नाम नृपतिः देशकोशोचितप्रतापस्यापि देशकोशेन उचितः प्रतापो यस्य स देशकोशोचितप्रतापस्तस्य अधिक्षेपेण तिरस्कारेण वधं अवाप । चेदिषु

निरपवादस्यापि महतः सुतस्य यौवराज्यप्रच्यवेन। देव, यद्यपि देवस्य तेजोबलं प्रबलम्, तथापि—

तेजस्तेजस्विनां स्थाने धृतं धृतिकरं भवेत्।
कराः सूर्याश्मवद्भानोः किं स्फुरन्ति हताश्मनि॥ १४८॥

देव, सकललोकाधिकैश्वर्यवन्द्यानां हि विद्यानां साधूपचरितं स्फुरितमवस्थानस्थितमपि स्त्रीरत्नमिवातीवात्मन्यादरं कारयत्येव जने। एतच्चास्य कृत्रिमरत्नमणेरिव बहिरेव। देव, प्रसादनादनात्मभाविन्योऽपि विभूतयः पतिंवरा इव खात्पतितस्यापि जनस्य भवन्ति, न पुनरायुःस्थितय इवानुपासितगुरुकुलस्य यत्नवत्योऽपि सरस्वत्यः। यतः।

---

चेदिदेशेषु नदीशो नाम नृपतिर्निरपवादस्यापि लोकश्लाघितस्यापि महतः सुतस्य महतः पुत्रस्य ज्येष्ठपुत्रस्य यौवराज्यप्रच्यवेन युवराज्यत्वोच्चालनेन वधं अवाप। देव, यद्यपि यदपि देवस्य तव तेजोबलं तेजसः प्राणात्ययेऽपि असहनलक्षणं बलं सामर्थ्यं तेजोबलं प्रबलं प्रचण्डं वर्तते, तथापि तदपि।

तेज इत्यादि। तेजस्विनां पुरुषाणां तेजः स्थाने धृतं योग्यप्रदेशस्थापितं धृतिकरं संतोषोत्पादकं भवेत् संजायते। भानोः कराः सूर्याश्मवत् सूर्यकान्तमणौ लग्ना यथा स्फुरन्ति चमत्कुर्वन्ति तथा हताश्मनि नष्टपाषाणे धृता विस्फुरन्ति चमत्कुर्वन्ति किम्। अपि तु न स्फुरन्तीत्यर्थः। दृष्टान्ताक्षेपः॥

देवेत्यादि। हे देव, सकललोकाधिकैश्वर्यवन्द्यानां सकलानां लोकानां अधिकैश्वर्यतया वन्द्यानां नमस्करणीयानां हि निश्चयेन विद्यानां शास्त्राणां साधूपचरितं रुचिरतया व्यवहृतं स्फुरितं चमत्कृतमवस्थानस्थितमपि निजस्थाने स्थितमपि स्त्रीरत्नमिव स्त्रीषु श्रेष्ठस्त्रीव अतीवातिशयेन आत्मनि स्वस्मिन् जने लोके आदरं कारयत्येव। एतच्च स्फुरितं अस्य पामरोदरस्य मन्त्रिणः कृत्रिमरत्नमणेरिव स्फटिकमणिकृतहारकस्येव बहिरेव वर्तते, नाभ्यन्तरे। हे देव, प्रसादनात् प्रसन्नीकरणात् अनात्मभाविन्योऽपि आत्मनः अभविष्यन्त्योऽपि विभूतयो लक्ष्म्यः पतिंवरा इव कन्या इव खात्पतितस्यापि जनस्य अकस्मादागतस्यापि लोकस्य भवन्ति संजायन्ते। वसुदेवस्य गन्धर्वदत्तावत् प्रसाधिताः सत्यो न भूतयो भवन्ति। पुनः सरस्वत्यो भवन्ति। कस्य। अनुपासितगुरुकुलस्य असेवितगुर्वाम्नायस्य। सरस्वत्यः कथंभूताः। यत्नवत्योऽपि अहर्निशमनुशीलिता अभ्यस्ता अपि। का इव। आयुःस्थितय इव। विभूतयो भवन्ति भूपप्रसादात् न पुनरायुःस्थितयो भवन्ति। यतः कारणात्॥

नृपकरुणायाः कामं द्रविणकणाः संचरन्ति शरणेषु ।
न त्वाभिजात्यमेतत्पाण्डित्यं वा नृणां भवति ॥ १७९ ॥

देव, तच्छून्येऽपि यत्कचित्पुंसि नभसि विद्युत इव विद्याविलसितम्, तद्धनस्य घनस्येव माहात्म्यान्नात्मनः । यतः ।

विद्यारसविहीनापि धीस्थली विभवातपात् ।
व्यलीकोक्त्तोत्तरङ्गेयं भवेन्मुग्धमृगप्रिया ॥ १८० ॥

यदपि कचित्कचित्कलासु पयसि पतितस्य तैलबिन्दोरिवान्तर्व्याप्तिशून्यस्याप्यस्योपन्याससाहसम्, तदपि लक्ष्मीलवलाभाशापाशस्खलितमतिमृगीप्रचारस्य दुर्भरजठरकुठारविनिर्भिन्नमानसारस्य हताहंकारस्य सरस्वतीपण्यपातकावसरस्य जनस्याजर्यान्न पुनर्बोधौदार्यात् ।

---

**नृपकरुणाया इत्यादि** । नृपकरुणायाः राजकारुण्यात् काममतिशयेन द्रविणकणाः धनलवा धनधान्यानि वा शरणेषु गृहेषु संचरन्ति । एतत् प्रत्यक्षीभूतं आभिजात्यं कुलीनत्वं पाण्डित्यं वा वैदुष्यं वा नृणां मनुष्याणां न भवति । जात्यलंकारः ॥

**देवेत्यादि** । हे देव, तच्छून्येऽपि अभिजातपाण्डित्यरहितेऽपि तव मन्त्रिणि यत्कचित् पुंसि भवत्सचिवसदृशे पुरुषे विद्याविलसितं विद्याविलासो वर्तते, तत् धनस्य माहात्म्यात् न आत्मनः न स्वस्य प्रभावात् । कस्मिन् कस्याः क इव । नभसि आकाशे विद्युत इव । यथा नभसि विद्युतस्तडितः विलसितं भवति तत् घनस्य माहात्म्यात् विद्युतो विलसितं भवति, तथा अस्मिन् सचिवे धनस्य माहात्म्यात् विद्याविलसितं भवति । न तु आकाशे विद्युतो विलसितं स्वयमेव भवति ॥ यतः कारणात् ॥

**विद्यारसेत्यादि** । विद्यारसविहीनापि विद्यारसेन रहिता अपि इयं धीस्थली विभवातपात् धनधर्मात् व्यलीकोक्त्तोत्तरङ्गा भवेत् व्यलीकोक्तैरसत्यवचनैरुत्तरङ्गा उत्कल्लोला भवेत् । कथंभूता धीस्थली । मुग्धमृगप्रिया मुग्धा अविद्वांसस्त एव मृगा हरिणास्तेषां प्रिया । यथा रसहीनापि जलरहितापि स्थली असत्यजलकल्लोला सती मृगाणां प्रिया भवति वल्लभा भवति, तथा अस्य धीस्थली मुग्धानां प्रिया भवति वल्लभा भवति । रूपकालंकारः ॥

**यदपीत्यादि** । हे देव, यदपि यत् कचित् कचित् कासु कासु कलासु वक्तृत्वकवित्वादिषु अस्य सचिवस्य उपन्याससाहसं भवति वचनरचनायाश्चातुर्यं भवति । कथंभूतस्य । अन्तर्व्याप्तिशून्यस्यापि अभ्यन्तरे कलानुभवनरहितस्यापि पयसि जले पतितस्य तैलबिन्दोरिव, तदपि तथापि जनस्य वाग्मिलोकस्य अजर्यात् संगमात् न पुनर्बोधौदार्यात् प्रज्ञोत्कर्षात् । कथंभूतस्य जनस्य । लक्ष्मीलवलाभाशापाशस्खलितमतिमृगीप्र-

यतो देव, घटदासीनां हि वदनसौरभं स्वामिताम्बूलोद्गालान्न सौभाग्यबलात्, पवनस्य हि परिमलपेशलता प्रसूनवनसंसर्गान्न निसर्गात्, दारुणो हि दाहदारुणता बृहद्भानुभावान्न स्वभावात्, मण्डलस्य हि मण्डनकण्डूलताधिपतिसंनिधानवशान्न शौर्यावेशात्, उपलशकलस्य हि नमस्यता देवाकारानुभावान्न प्रकृतिभावात् । अपि च ।

अबुधेऽपि बुधोद्गारे प्राज्ञानुज्ञा विजृम्भते ।
संस्कर्तुः कौशलादेति यतः काचोऽपि रत्नताम् ॥ १८१ ॥

---

चारस्य लक्ष्म्याः लवो लेशस्तस्य लाभस्य आशा वाञ्छा सैव पाशः कण्ठबन्धनरचना तत्र स्खलितो बन्धमायातो मतिमृग्याः बुद्धिहरिण्याः प्रचारः प्रवर्तनं यस्य विद्यादायकजनस्य स तथोक्तस्तस्य । पुनः कथंभूतस्य वाग्मि(ग्मि)लोकस्य । दुर्भरजठरकुठारविनिर्भिन्नमानसारस्य दुःखेन महता कष्टेन भ्रियते दुर्भरः स चासौ जठरः कुक्षिः स एव कुठारः परशुर्वा तेन विनिर्भिन्नो विदारितो मानसारो अभिमानतरुमध्यो यस्य स तथोक्तस्तस्य । पुनः कथंभूतस्य विद्यादायकजनस्य । हृताहंकारस्य हतो विध्वंसितः अहंकारो मदो यस्य स तथा तस्य । पुनः कथंभूतस्य विद्यादातुर्जनस्य । सरस्वतीपण्यपातकावसरस्य सरस्वतीविक्रयपापसमयस्य ॥

यत इत्यादि । हे देव, यतो यस्मात्कारणात् घटदासीनां कुटहारिकाणां हि निश्चयेन वदनसौरभं मुखसौगन्ध्यं तत्स्वामिताम्बूलोद्गालात् स्वामिना चर्वितनागवल्लीपर्णोच्छिष्टभक्षणात्, न सौभाग्यबलात् । यतो हे देव, पवनस्य हि निश्चयेन परिमलपेशलता सुगन्धमनोहरत्वं तत् प्रसूनवनसंसर्गात्पुष्पवाटीसंगमात्, न हि निसर्गात्स्वभावेन । हे देव, दारुणः काष्ठस्य दाहदारुणता भस्मीकरणरौद्रता तत् बृहद्भानुभावात् अग्निसंयोगात्, न स्वभावात् । यतो हे देव, मण्डलस्य कुर्कुरस्य हि निश्चयेन मण्डनकण्डूलता [अधिपतिसंनिधानवशात्, न शौर्यावेशात्] । हे देव, उपलशकलस्य पाषाणखण्डस्य हि निश्चयेन नमस्यता नमस्कर्तव्यता नमस्करणीयता देवाकारानुभावात् देवताप्रतिच्छायाप्रभावात्, न प्रकृतिभावात् न स्वभावास्थितायाः ॥

अपि च । अबुधेऽपीत्यादि । हे राजन्, अबुधे मूर्खेऽपि बुधोद्गारे बुधकथनात् बुधवचनात् प्राज्ञानुज्ञा प्राज्ञानां अनुज्ञा अनुमतं विजृम्भते प्रसरति । मूर्खमपि यदि विद्वांसो विद्वांसं कथयन्ति तदा प्राज्ञाः कथयन्त्येतदयं विद्वानेवेत्यनुमन्यन्ते । यतो यस्मात् कारणात् संस्कर्तुः कौशलात् वैकटिकस्य विज्ञानात् काचोऽपि रत्नतां एति । दृष्टान्तालंकारः ॥

यत्पुनः सेवकलोकदौरात्म्यं प्रचिख्यापयिषुः किमप्यणकपदवन्धेन भगवतीं सरस्वतीं विधमति, तत्र यो हि स्वयमेवं निकायति स कथं नाम दुरात्मा स्यादिति परप्रतारणार्थम् । किं च ।

आत्मनि विवेकविकलः प्रसिद्धिमात्रेण रज्यते सकलः ।
कैरव इव कमलेऽपि हि न श्रीः पूज्यं तथाप्यब्जम् ॥ १८२ ॥

वृत्तं पुनरस्य पिण्याकपण्याङ्गनाजनस्येवालोकान्तोत्सर्गैरनेकशोऽनेकपाखण्डिलिङ्गिसंसर्गविसर्गैरेव राजपथीकृतम् । यतः ।

---

यत्पुनः इत्यादि । हे राजन्, यत् पुनः सेवकलोकदौरात्म्यं किंकरजनदुष्टत्वं प्रचिख्यापयिषुः प्रख्यापयितुमिच्छुः कथयितुमनाः किमपि ईषत् अणकपदवन्धेन श्लोकादिना भगवतीं परमेश्वरीं सरस्वतीं वाणीं विधमति संतापयति, तत्र कारणान्तरं वर्तते । तत् किं कारणम् । यः सचिवः हि निश्चयेन स्वयं आत्मना एवं अमुना प्रकारेण निकायति वदति स कथं केन प्रकारेण । नामेति संभावनायाम् । दुरात्मा दुष्टः स्यात् । अपि तु न स्यात् । इति अमुना प्रकारेण परप्रतारणार्थम् । परेषां वञ्चनार्थमित्यर्थः । उक्तं च—'भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ।' भज्यते सेव्यते मथ्यते च भगं खलं भगं फलं वेति वक्तव्यादयः कामोऽत्र योनिः सूर्यविशेषो भगः पुंसि मित्रवत् धर्मो मोक्षश्च भगः । यथाहुः—'ऐश्वर्यस्य समग्रस्य धर्मश्च यशसः श्रियः । वैराग्यस्य च मोक्षस्य वर्णो भग इति स्मृतः ॥'

किं च अस्ति कश्चिद्विशेषः । आत्मनीत्यादि । हे राजन्, आत्मनि स्वस्मिन् विवेकविकलः सकलः पुमान् प्रसिद्धिमात्रेण रज्यते रागं करोति । कैरवे श्वेतोत्पले इव । यथा कैरवे श्रीर्न विद्यते तथा कमलेऽपि हि श्रीर्नास्ति । तथापि अब्जं कमलं पूज्यं न कैरवं पूज्यम् । दृष्टान्तालंकारः ॥

अथेदानीं सचिवस्य वंशं विद्यां च वर्णयित्वा वृत्तमाचरणं वर्णयति । विधुरोपकारं पश्चाद्वक्ष्यति—हे राजन्, अस्य सचिवस्य वृत्तमाचरणं पुनः अनेकशः अनेकवारान् अनेकपाखण्डिलिङ्गिसंसर्गविसर्गैः अनेकपाखण्डिलिङ्गाः चार्वाकादयस्तेषां संसर्गविसर्गैः संगतिवद्भिः पुरुषैः राजपथीकृतं प्रकटीकृतम् । कथंभूतैः अनेकपाखण्डिलिङ्गिसंसर्गविसर्गैः । आलोकान्तोत्सर्गैः आर्यानार्यदेशपर्यटनशीलैः । अस्य वृत्तं कस्येव । पिण्याकपण्याङ्गनाजनस्येव पिण्याकेन खलखण्डेन पण्याङ्गनाजनः वेश्याजनस्तस्य पिण्याकपण्याङ्गनाजनस्य । खलखण्डं गृहीत्वा शतं ददाति यः पण्याङ्गनाजनस्तस्येव अस्य शीलं वर्तते । यतः कारणात् ॥

त्रैदण्डिकाहितुण्डिककापालिककौशिकव्रतकैः ।
कीर्तिर्जगति प्रसृता खरपटदीक्षाधिकैरस्य ॥ १८३ ॥

यस्तु स्वास्थ्यावसरेष्वपि समृद्धदेशो हि महीशः कीनाश इवावश्यं करोति कामपि विकृतिमिति धूमकेतुरिवानपराधमपि जनपदं पीडयति, प्रभूतपक्षबलो हि भूपालः शैल इव कस्य भवति वश इत्यनुरक्तमतीरपि प्रकृतीरसमञ्जसयति, कृशकोशको हि धरेशः क्षपितपक्षः पक्षीव भवेत्सुखसाध्य इति धनं निधनयति, व्यसनव्याकुलितो हि राजसुतो व्याधित इव न जातु विकुरुते पुरुश्चारिष्विति द्विषतः प्रोत्कर्षयति, एकारक्षो हि क्षितिपतिः करिपतिरिव न स्यात्परेषां विषय इति न कमप्यभिजातं स-

---

त्रैदण्डिकेत्यादि । हे राजन्, अस्य सचिवस्य कीर्तिः जगति प्रसृता व्याप्ता । कैः कृत्वा कीर्तिः प्रसृता । त्रैदण्डिकाहितुण्डिककापालिककौशिकव्रतकैः त्रीणि दण्डानि समाहृतानि त्रिदण्डं त्रिदण्डेन चरन्ति त्रैदण्डिकाः शैवलिङ्गिनस्त्रिकमतानुसारिणः, अहितुण्डेषु नियुक्ताः आहितुण्डिकाः सर्पधारकाः गारुडिकाः वा, कपालेषु नियुक्ताः कापालिकाः, कौशिकेषु नियुक्ताः कौशिकाः इन्द्रजालपतयस्तेषां कुत्सितानि व्रतकानि येषां ते तथोक्तास्ते न केवलमेतैः । कीर्तिः प्रसृता । खरपटादीक्षाधिकैश्च खरपटानां भावकानां दीक्षा तया अधिकाः खरपटादीक्षाधिकास्तैः । अपकृष्टसमुच्चयालंकारः ॥

हे राजन्, यस्तु सचिवः स्वास्थ्यावसरेष्वपि लोकानां सौम्यसमयेष्वपि समृद्धदेशो हि महीशः स्वस्थदेशो राजा कीनाश इव यम इव अवश्यं निश्चयेन कामपि कांचिदपि विकृतिं विकारं करोति विदधाति इति ईदृशं विचिन्त्य धूमकेतुरिव अग्न्युत्पात इव अनपराधमपि निर्दोषमपि जनपदं देशं पीडयति संतापयति । हे राजन्, प्रभूतपक्षबलः प्रचुरपक्षसामर्थ्यः हि निश्चयेन भूपालो राजा शैल इव पर्वत इव कस्य पुरुषस्य वशो भवति । अपि तु न कस्यापि । इति विचार्य अनुरक्तमतीरपि अनुरक्तबुद्धीरपि प्रकृतीरमात्यपौरादिका असमञ्जसयति अन्यायवतीः करोति । हे राजन्, कृशकोशः अल्पभाण्डागारो धनहीनो धरेशो राजा क्षपितपक्षः लुञ्चितपत्रः पक्षीव शकुन्त इव सुखसाध्यो भवेत् अनायासेन हस्तमायाति इति विचार्य धनं नृपस्वापतेयं निधनयति विनाशयति । हे राजन्, व्यसनव्याकुलितः अवस्थया विह्वलीभूतो हि निश्चयेन राजसुतो राजपुत्रः व्याधित इव रोगीव पुरश्चारिषु लोकेषु सचिवादिषु जातु कदाचित् न विकुरुते न विक्रियां करोति इति कारणात् द्विषतः शत्रून् प्रोत्कर्षयति सबलान् करोति । हे राजन्, एकारक्षः एकाव्याप्तः हि निश्चयेन क्षितिपतिः करिपतिरिव परेषां श्रेष्ठिसामन्तादीनां विषयो गम्यो न स्यात् नो भवेदिति विचार्य कमपि कंचिदपि अभि-

हते, स किल प्राणप्रतीकारेषु स्वापतेयोपकारेषु वा विधुरेषु भवितोपकर्तेति को नाम श्रद्दधीत । यतः ।

स्वस्थावस्थायामपि योऽनर्थपरम्परार्थमीहेत ।
स कथं विधुरेषु पुनः स्वामिहिते चेष्टतेऽमात्यः ॥ १८४ ॥

तस्मादेव, कर्णकटुकमपीदमेवमवधार्यताम् ।

अपि त्वामतिवाह्यैष यथातीतान्महीपतीन् ।
तूरीवान्याश्रयस्थायी लञ्चा(म्बा)लुञ्चानिशाचरः ॥ १८५ ॥

अन्यथा ।

तत्तन्नृपतिसंगीर्णविनिर्वाहपरा नराः ।
कथं पत्यन्तरं यान्ति कान्ता इव कुलोद्गताः ॥ १८६ ॥

---

जातं अलीनं न सहते न क्षमते । हे राजन्, स मन्त्री । किलेत्यहेतौ । प्राणप्रतीकारेषु प्राणरक्षणेषु स्वापतेयोपकारेषु वा धनं दत्त्वा उपकारकरणेषु वा विधुरेषु व्यसनेषु उपकर्ता उपकारको भविता भविष्यति ईदृशमर्थं कः पुमान् । नामेति संभावनायाम् । श्रद्दधीत संभावयति । अपि तु न कश्चिदेतां वार्तां मन्यते ॥

यतः । स्वस्थावस्थायामित्यादि । हे राजन्, स्वस्थावस्थायामपि सुखावसरेऽपि यो मन्त्री अनर्थपरम्परार्थं दुःखश्रेणिनिमित्तं ईहेत चेष्टेत । स पुनरमात्यो विधुरेषु स्वामिहिते स्वामिहितनिमित्तं कथं चेष्टते कथं व्याप्रियते । अपि तु न कथमपि । आक्षेपालंकारः ॥

तस्मात् कारणात् हे देव, कर्णकटुकमपि कर्णशूलप्रायमपि इदं वचनं एवममुना प्रकारेण अवधार्यतां विज्ञायताम् । त्वयेति संबन्धः ॥

अपि त्वामित्यादि । एष मन्त्री त्वामपि भवन्तमपि अतिवाह्य वञ्चयित्वा यथा अतीतानयशोर्धादीन् नृपान् वञ्चयित्वा तूरीव तूरवादक इव अन्याश्रयस्थायी अन्यनृपमन्दिरे स्थास्यति । कथंभूतोऽयं मन्त्री । लम्बालुञ्चानिशाचरः उत्कोटत्रोटने राक्षसः । रूपकानुमानालंकारः ॥

अन्यथेत्यादि । अन्यथा यद्येवं न भवति तर्हि नराः किंकराः पत्यन्तरं अपरराजानं कथं केन प्रकारेण यान्ति गच्छन्ति । कथंभूताः नराः । तत्तन्नृपतिसंगीर्णविनिर्वाहपराः तैस्तैर्जगत्प्रसिद्धैः नृपतिभिः राजभिः संगीर्णः प्रतिज्ञातो विनिर्वाहः सेवाफलं तस्मिन् परास्तत्पराः । पुनः कथंभूताः नराः । कुलोद्गताः कुलोद्भूताः कान्ता इव । उपमालंकारः ॥

देव, नितान्तं संवृतचित्तस्यापि दुर्वृत्तस्य प्रमादेन प्रमोदमदाभ्यां निद्रोद्रेकेण वातिरहस्योदयमपि हृदये भवत्यवश्यं प्रकटाशयम् । अतश्च यः खलु दृढदुष्टवासनाभ्यासप्रकर्षादुषायामेवमुत्खनति स कथं नाम दैवदोषेण दुर्विलसितोन्मेषेण वा प्रकल्पितसैन्येषु सहचारी संभाव्येत । तथा हि ।

यौ स्वास्थ्याय समीहेते व्याधितस्य नृपस्य च ।
स्वार्थसिद्धिनिरोद्धारौ धिग्धिक्तौ वैद्यमन्त्रिणौ ॥ १८७ ॥
व्याधिर्व्यसनवृद्धिश्च गोपे भूपे च नास्ति चेत् ।
न धेनुः कामधेनुश्च वैद्यस्य सचिवस्य च ॥ १८८ ॥

तथा ।

अशुभस्य कालहरणं नृपतेर्व्यसनं नियोगिनां कलहम् ।
तन्त्रस्य वृत्तिविनिमयमारभमाणः सुखी सचिवः ॥ १८९ ॥

---

देवेत्यादि । हे देव हे राजन्, नितान्तमतिशयेन संवृतचित्तस्यापि दुर्वृत्तस्य दुराचारस्य पुरुषस्य प्रमादेन असावधानतया प्रमोदमदाभ्यां हर्षाहंकाराभ्यां कृत्वा निद्रोद्रेकेण निद्राधिकतया वा अतिरहस्योदयमपि अतिगुप्तपापमपि हृदये मनसि अवश्यं निश्चयेन प्रकटाशयं प्रकटाभिप्रायं भवति । अतश्च कारणात् यस्तव मन्त्री । खलु वाक्यालंकारे । दृढदुष्टवासनाभ्यासप्रकर्षात् दृढा बलवत्तरा दुष्टा पापिष्ठा यासौ वासना तस्या अभ्यासस्य पुनःपुनरनुशीलनस्य प्रकर्षात् अतिशयात् उषायां रात्रौ एवममुना प्रकारेण उत्खनति जल्पति स मन्त्री कथं केन प्रकारेण । नामेति संभावनायाम् । दैवदोषेण देवतादोषेण देवताकृतग्रथिलत्वेन दुर्विलसितोन्मेषेण वा दुराचारप्रादुर्भावेन प्रकल्पितसैन्येषु रचितगजघटादिसैन्येषु ईदृग्विधेषु कष्टेषु सहचारी सहायः संभाव्येत । अपि तु न संभाव्यत इत्यर्थः ॥

तथाहि रात्रौ स्वप्नावस्थायां किमेष जल्पतीत्याह—याविस्यादि । यौ स्वास्थ्याय स्वस्थतानिमित्तं समीहेते चेष्टेते व्याधितस्य नृपस्य च रोगिणो राज्ञश्च तौ वैद्यमन्त्रिणौ धिक् । निन्दिताविमावित्यर्थः । कथंभूतौ तौ । स्वार्थसिद्धिनिरोद्धारौ स्वार्थस्य निजप्रयोजनस्य सिद्धेः प्राप्तेर्निरोद्धारौ निषेधकौ । यथासंख्यालंकारः ॥

व्याधिर्व्यसनवृद्धिरित्यादि । ..........................................................................................................................................................................................

तथा । अशुभस्येत्यादि । सचिवः एतत् आरभमाणः कुर्वाणः । किमारभमाणः । अशुभस्य कालहरणं यदा राज्ञो अशुभं भवति तदा सचिवः कालहरणं कालयापनं

शौर्यं चास्य निगदेन व्याख्यातम् । यतः ।

वणिजि च भिषजि च शूरः शौण्डीरो दुर्बले च विकले च ।
कपिरिव निभृतस्तिष्ठति रणशौण्डे चण्डदण्डे च ॥ १९० ॥

देव, सरलस्वभावस्य देवस्यामात्यदैत्यानामाकल्पोदञ्चः प्रतिक्रियाप्रपञ्चश्च साधुतायोगेऽनुरागे च कारणम् । तत्र चामीषामेतत्तात्पर्यम् । तथा हि—सत्पुरुषपृषतवधाय व्याधस्याखिलाङ्गसंवरणं यत्रावरणमिवामात्यजनस्य लम्बाञ्चलकं चोलकम्, मुग्धमीनबन्धनानायमिव महाकायः कूर्चकेशनिकायः, कपटबकोटपेटकघटनाय सर इवोदारमुदरम्, परव्यसनान्वेषणाय मृगधूर्तस्येव मन्दमन्दाचारः पादप्रचारः, कथमेत्ते खलु पातालस्थाः करस्था मम

---

करोति वृहत्कालं यथा अशुभं तिष्ठति तथा करोति । नृपतेर्व्यसनमारभमाणः सुखी भवति । नियोगिनां कलहमारभमाणः सुखी भवति । दीपकालंकारः ॥

देव, अस्य सचिवस्य शौर्यं सौभव्यं निगदेन लोकप्रसिद्ध्या व्याख्यातं सूचितमेव । यतो यस्मात् कारणात् । **वणिजि इत्यादि** । वणिजि च क्रयविक्रयकारिणि, भिषिजि च वैद्ये च, अयं शूरः शौण्डीरस्त्यागविक्रमाभ्यां विश्रुतः । दुर्बले बलसामर्थ्यरहिते विकले च पङ्ग्वादौ शौण्डीरः, अयं मन्त्री रणशौण्डे चण्डदण्डे च पुरुषे निभृतस्तिष्ठति विनीतो मौनवान् सन्नास्ते । क इव । कपिरिव यथा कपिर्मौनवान् तिष्ठति विनीतश्च भवति । यथा योगी शिक्षयति कपिस्तथैव करोति । उपमालंकारः ॥

हे देव हे राजन्, सरलस्वभावस्य अकुटिलप्रकृतेर्देवस्य तव अमात्यदैत्यानां मन्त्रिराक्षसानां आकल्पोदञ्चः कषायवस्त्रादिवेषोद्गमः प्रतिक्रियाप्रपञ्चश्च प्रतीकारविस्तारश्च साधुतायोगे साधुत्वप्राप्त्यर्थं अनुरागे च राजानुरागविधायने च कारणं हेतुर्वर्तते । तत्र च तेषु आकल्पोदञ्चनादिषु अमीषां सचिवानामेतत्तात्पर्यमेतद्रहस्यम् । तथा हि तदेव निरूपयति—सत्पुरुषपृषतवधाय सत्पुरुषमृगहननार्थं व्याधस्येव लुब्धकस्येव अखिलाङ्गसंवरणं सर्वशरीरप्रावरणं यत्रावरणं च अमात्यजनस्य लम्बाञ्चलकं दीर्घप्रान्तं चोलकं परिधानधौतवस्त्रम् । हे राजन्, अमात्यजनस्य कूर्चकेशनिकायः महाकायो बृहत् । कथंभूतः । मुग्धमीनबन्धनानायमिव उदारभद्रजनमत्स्यबन्धननिमित्तं आनायमिव जालमिव । हे देव, अमात्यजनस्य उदारमुदरं बृहद्वर्तते । कथंभूतमुदरम् । कपटबकोटपेटकघटनाय सर इव कपटाः मायावनाचारास्त एव बकोटा बकास्तेषां पेटकः समूहः तस्य घटनाय चेष्टनाय सर इवां तडाग इव । हे देव, सचिवजनस्य पादप्रचारः । कथंभूतः । मन्दमन्दाचारः शनैः शनैः संचरणमस्य

भविष्यन्ति शेषशिखामणय इति लुण्टाकतयेव मुहुर्मुहुर्जलेषु निमज्जनम्, कदा ह्यमी गगनचराः कदनकन्दुकविनोदकरा मम भविष्यन्ति रविरथतुरङ्गा इत्यपजिहीर्षयेवादितिसुतोपासनम्, अरे हताश हुताश, मयि सत्याश्रयाशे सर्वाशे च कथं नाम तन्नामवान्भवानितीर्ष्ययेवाहुतिमिषेण विषमरोचिताडनम्, सुप्रयुक्तस्य दम्भस्य ब्रह्माप्यन्तं न गच्छतीति मनीषया साधुजनशकुनिहननाय द्वीपिद्विजोद्दीपनमिव देवतार्चनम्, कियन्तो मया महान्तः प्रतारिताः कियन्तो नाद्यापीति संभालनायेव जपव्यवसायः, कुशलशकुलाशनाय बकस्येव ध्यानपरता, चतुरवञ्चनाय बकस्येव धर्मागमपाठः, परलोकगतिभङ्गाय निगलजालस्येव गुरुचरणोपचारः, शाकिनीजनस्येव सेवकेषु

---

कस्येव। मृगधूर्तस्येव। किमर्थम्। परव्यसनान्वेषणाय परेषां राजलोकादीनां व्यसनस्य अवस्थायाः अन्वेषणाय विलोकनार्थम्। हे देव, अमात्यजनस्य मुहुर्मुहुर्वारंवारं जलेषु निमज्जनं कायप्रवेशनं इति एतस्मात् कारणात् लुण्टाकतयेव चौरस्येव भूषणनिमित्तमिव। इतीति किम्। एते शेषशिखामणयः शेषनागशिरोरत्नानि। खलु वाक्यालंकारे। पातालस्था मम करस्थाः कथं भविष्यन्ति। हे राजन्, अमात्यजनस्य अदितिसुतोपासनं श्रीभास्करसेवनं इति एतस्मात् कारणात् वर्तते। कदा कस्मिन् काले। हि निश्चयेन असी गगनचराः कदनकन्दुकविनोदकराः संग्रामदष्टकक्रीडाकारिणः रविरथतुरङ्गाः मम भविष्यन्ति तेषामपजिहीर्षया इव अपहर्तुमिच्छया इव। हे देव, अमात्यजनस्य इति ईर्ष्यया अक्षमया इव आहुतिमिषेण होतव्यद्रव्यदान(व)तुलेन विषमरोचेस्ताडनं अग्नेः कुट्टनम्। इतीति किम्। अरे हताश निर्भाग्य हुताश अग्ने, मयि मन्त्रिणि आश्रयाशे आश्रयभक्षके सर्वाशे च सर्वभक्षके च सति विद्यमाने। नामेति संभावनायाम्। तन्नामवान् आश्रयाशसर्वाशनामवान् भवांस्त्वं कथं वर्तसे। हे देव, अमात्यजनस्य सुप्रयुक्तस्य युक्ततया कृतस्य दम्भस्य अन्तं पारं ब्रह्मापि न गच्छति इति मनीषया च देवतार्चनं वर्तते। देवतार्चनं किमिव। साधुजनशकुनिहननाय साधुजनाः साधुलोकास्त एव शकुनयश्चटकादिपक्षिणस्तेषां हननाय मारणाय द्वीपिद्विजोद्दीपनमिव द्वीपिद्विजो मृगयाविनोदपक्षी। श्येन इत्यर्थः। तस्य उद्दीपनमिव पोषणमिव। हे राजन्, सचिवजनस्य जपव्यवसायः जपव्यापारः किमर्थम्। कियन्तः कियत्प्रमाणाः महान्तः सत्पुरुषाः मया प्रतारिताः वञ्चिताः कियन्तो महान्तोऽद्यापि न प्रतारिता वर्तन्ते इति संभालनाय इव स्मरणाय इव। हे राजन्, अस्य अमात्यजनस्य कुशलशकुलाशनाय कुशला विद्वांसस्त एव शकुला मत्स्यास्तेषां अशनाय भक्षणाय बकस्येव ध्यानपरता ध्यानैकाग्रता। चतुरवञ्चनाय चतुराणां विदुषां वञ्चनाय प्रतारणाय बकस्येव खरपटस्येव धर्मागमपाठः धर्मशास्त्रपठनम्। स्मृतिपठनमित्यर्थः। परलोकगतिभङ्गाय परलोकः स्वर्गादिकस्तस्य गतिभङ्गो गम-

जीवितविनाशाय प्रियंवदता, अविज्ञातान्तस्तत्त्वस्य शुष्कसरःसेतोरिव क्लेशाय प्रियालोकता । अपि च ।

बहिरविकृतवेषैर्मन्दमन्दप्रचारै-
र्निभृतनयनपातैः साधुताकारसारैः ।
निकृतिनयविनीतैश्चान्तरेतैरमात्यै-
स्तिमय इव बकोटैर्वञ्चिताः के न लोकाः ॥ १९१ ॥

देव, अप्सरसामिवामरेषु नरेष्वपि किल खलानां चतुर्दश कुलानि पुरा प्रादुर्बभूवुः । तत्र तावत्प्रथमं प्रमथनाथकण्ठालंकारनिकटात्कालकूटात्प्रादुरासीत्, द्वितीयं द्विजिह्वेभ्यः, तृतीयं तृक्षात्मजतुण्डचण्डतायाः, चतुर्थं चतु-

---

नविनाशस्तस्मै परलोकगतिभङ्गाय निगलजालस्येव शृङ्खलासमूहस्येव गुरुचरणोपचारः गुरुपादपूजनम् । शाकिनीजनस्येव डाकिनीलोकस्येव सेवकेषु जीवितविनाशाय प्रासलोपनाय प्रियंवदता प्रियवचनता । अविज्ञातान्तस्तत्त्वस्य अपरीक्षिताभ्यन्तरमर्मणः शुष्कसरःसेतोरिव शुष्कतडागपालिबन्धस्येव क्लेशाय कष्टाय प्रियालोकता मधुरालोकनम् ॥

अपि च । बहिरविकृतवेषैरित्यादि । हे राजन्, एतैः प्रत्यक्षीभूतैरमात्यैर्मन्त्रिभिः के लोका न वञ्चिताः । अपि तु सर्वे लोका वञ्चिता इत्यर्थः । कथंभूतैरमात्यैः । बहिर्बाह्ये अविकृतवेषैः शुक्लवेषैः । पुनः कथंभूतैः । मन्दमन्दप्रचारैः शनैःशनैः गमनैः । पुनः कथंभूतैः । निभृतनयनपातैः निश्चललोचनावलोकनैः । पुनः कथंभूतैः । साधुताकारसारैः साधुतायाः साधुत्वस्य योऽसावाकारः आभासस्तेन सारैर्बलवत्तरैः । पुनः कथंभूतैः । अन्तः मध्ये निकृतिनयविनीतैर्निकृतिनये मायान्याये विनीतैः शिक्षितैः । अमात्यैर्लोकाः कैरिव वञ्चिताः । बकोटैरिव । यथा बकोटैस्तिमयो वञ्च्यन्ते । बकोटा अपि बाह्ये उज्ज्वला भवन्ति, अभ्यन्तरे पापिनो भवन्ति, मन्दमन्दगमनाः, निश्चललोचनाः, बाह्ये साध्वाकारा अभ्यन्तरे मायाविनो भवन्ति । उपमाक्षेपालंकारः ॥

देवेत्यादि । हे देव हे राजन्, अमरेषु देवेषु अप्सरसां देवाङ्गनानां यथा चतुर्दश कुलानि भवन्ति तथा नरेष्वपि । किलेत्यरुचौ । खलानां दुर्जनानां चतुर्दश कुलानि पुरा पूर्वं प्रादुर्बभूवुः प्रकटीबभूवुः । तत्र तावत् अनुक्रमेण चतुर्दश कुलानि कथयति—प्रथमं तावत् खलकुलं दुर्जनकुलं कालकूटात् हालाहलविषात् प्रादुरासीत् प्रादुर्बभूव । कथंभूतात् कालकूटात् । प्रमथनाथकण्ठालंकारनिकटात् प्रमथानां पिशाचानां नाथः स्वामी प्रमथनाथो रुद्रः तस्य कण्ठालंकारे निकटस्तस्मात् । द्वितीयं खलकुलं द्विजिह्वेभ्यः सर्पेभ्यः प्रादुरासीत् । तृतीयं खलकुलं तृक्षात्मजतुण्डचण्डतायाः तृक्षस्य गरुडस्यात्मजोऽपत्यं

र्थीचन्द्रात्, पञ्चमं पञ्चतानुचरेभ्यः, षष्ठं षट्प्रज्ञपादरागात्, सप्तमं सप्तांशोः, अष्टममनिष्टविष्टपात्, नवमं नरकारिमायायाः, दशमं दशलोचनदंष्ट्राङ्कुरात्, एकादशमेकान्ताकृत्येभ्यः, द्वादशं द्वापराभिप्रायपातकात्, त्रयोदशं त्रपोत्तप्तेः, चतुर्दशं च चक्रिकाचक्रेभ्यः। अन्यत्पुनस्तमसः, यतः समभून्नभसि कुम्भिनां केसरीवाकारणवैरी ग्रहाणां राहुः। परं खण्डपरश्वधायुधस्य साधनसमृद्धिसमये द्रुहिणदामोदरकन्दलात्, यस्मादजायत विद्वेषभेषजवज्जगद्विप्रीतिरतिदोहदो नारदः। परं वज्रविद्युन्निर्मन्थनात्, यतोऽभवदम्भोधिषु सलिलसत्त्वसंहारप्रबलो वडवानलः। तथैकं दितेः, यतः समुदपादि निखिलेष्वपि भुवनेषु स्वयंभुवो वरप्रदानात्सद्धर्मकर्मोत्सेकानां लोकानां प्रतारकस्तारको नामा-

---

तार्क्ष्यः तस्य तुण्डस्य चण्डतायाः प्रादुरासीत्। चतुर्थं खलकुलं चतुर्थीचन्द्रात्। चतुर्थीचन्द्रः कलहप्रियो भवति। पञ्चमं खलकुलं पञ्चतानुचरेभ्यो यमकिंकरेभ्यः प्रादुरासीत्। षष्ठं खलकुलं षट्प्रज्ञपादपरागात् षट्प्रज्ञो विटस्तस्य पादौ तयोः परागश्चरणरेणुस्तस्मात् षट्प्रज्ञपादपरागात्। सप्तमं खलकुलं सप्तांशोर्वैश्वानरात् प्रादुरासीत्। अष्टमं खलकुलं अनिष्टविष्टपात् नरकात् प्रादुरासीत्। नवमं खलकुलं नरकारिमायायाः श्रीनारायणमायायाः प्रादुरासीत्। दशमं खलकुलं दशलोचनदंष्ट्राङ्कुरात् यमदाढाभिनवोद्भिदः। एकादशं खलकुलं एकान्ताकृत्येभ्यः एकान्तमतपातकेभ्यः। द्वादशं खलकुलं द्वापराभिप्रायपातकात् संशयमिथ्यात्वपातकात्। त्रयोदशं खलकुलं त्रपोत्तप्तेः लज्जाप्रज्वलनात्। चतुर्दशं खलकुलं चक्रिकाचक्रेभ्यः परवञ्चनोपायसमूहेभ्यः। अन्यत् पुनः तमसोऽन्धकारात् राहोः पञ्चदशं कुलं संजातम्, यतो यस्मात् कारणात् नभसि आकाशे अन्धकारोत्पन्नदुर्जनकुलात् राहुः समभूत् प्रादुरासीत्। कथंभूतो राहुः। ग्रहाणां सूर्यचन्द्रमसादीनां अकारणवैरी निष्कारणशत्रुः। केषां क इव। कुम्भिनां गजानां केसरीव। परमन्यत्कुलं षोडशं खण्डपरश्वधायुधस्य साधनसमृद्धिसमये खण्डपरशोर्वशीकरणावसरे द्रुहिणदामोदरकन्दलात् ब्रह्मविष्णुयुद्धात् खलकुलं प्रादुरासीत्, यस्मात् षोडशात् कुलात् अजायत संजातः। कोऽसौ। नारदः। कथंभूतो नारदः। जगद्विप्रीतिरतिदोहदः जगतः पृथ्वीमण्डलस्य या विप्रीतिर्द्वेषः संग्रामस्तत्र रतिदोहदो अनुरागमनोरथो यस्य सः। किंवत्। विद्वेषभेषजवत् विद्वेषोत्पादने यद्भेषजं मूलादिकं तत्सदृशो नारदः। परं अपरं कुलं सप्तदशं वज्रविद्युन्निर्मथनात् अशनिपातविद्युत्पाततटभेटकात्, यतः यस्माद्वज्रविद्युन्निर्मथनात् अम्भोधिषु समुद्रेषु वडवानल और्वानलोऽभवद्बभूव। कथंभूतो वडवानलः। सलिलसत्त्वसंहारप्रबलः जलचरजीवप्रलयकालसामर्थ्यः। तथा तेनैव प्रकारेण एकं दुर्जनकुलं दितेः राक्षसीविशेषात् प्रादुरासीत्, यतो यस्मात् कुलात् तारको नाम असुरो दैत्यः समुदपादि संजातः। कथंभूतस्तारकः। लोकानां प्रतारको वञ्चकः। कस्माद्वञ्चकः

सुरः। संप्रति तु भवादृशैर्महामहीशैः कलिकालस्यातीवतुच्छीकृतत्वादनुत्तमसत्त्वतयायमेक एवामीषामष्टादशानामपि खलकुलानां भारमाचारं च बिभर्ति । ततः कथं नाम स्वप्नेऽप्यस्य साधुता संभाव्येत । अपि च ।

असुरमयस्तिमिरमयः स्तेनाकारोऽपि कौणपाकारः ।
देव दिवापि प्रभवति सचिवजनो यत्तदाश्चर्यम् ॥ १९२ ॥

दूराद्दीर्घमवेक्षणं सरभसः प्रीतिक्रमः संभ्रमः
प्रत्यासन्नमथासनं प्रियकथाचारे महानादरः ।
बाह्योऽयं सचिवेषु चेष्टितविधिः कामं न कं मोदये-
च्चित्तेहा तु न जातु मार्दवमयी मन्ये जनन्यामपि ॥ १९३ ॥

हे त्रैलोक्यनिकेतवास भुवनोदन्ते त्वमेवादृत-
स्तत्सत्यं कथयेदमेष भवतः पादप्रणामः कृतः ।

---

निखिलेष्वपि भुवनेषु स्वयंभुवो ब्रह्मणो वरप्रदानात् वरदानात् । कथंभूतानां लोकानाम् । सद्धर्मकर्मोत्सेकानां समीचीनधर्मकार्योद्यतानाम् । संप्रति इदानीं तु भवादृशैर्युष्मत्सदृशैर्महामहीशैर्महद्भिः राजभिः कलिकालस्य अतीव अतिशयेन तुच्छीकृतत्वात् अनुत्तमसत्त्वतया अनुत्कृष्टबलवत्त्वेन अयं पामरोदारनामा मन्त्री एक एवासहाय एव अमीषां पूर्वोक्तानां अष्टादशानामपि द्विर्नवानामपि खलकुलानां भारं आचारं च बिभर्ति धरति । ततः कथं केन प्रकारेण । नामेति संभावनायाम् । स्वप्नेऽपि । अपिशब्दात् जाग्रदवस्थायामपि । साधुता परोपकारिता संभाव्येत घटेत । अपि तु न कथमपि साधुता घटते ।

**अपि च । असुरमय इत्यादि ।** हे देव, सचिवजनो भवन्मन्त्रिलोको असुरमयः दैत्यमयः, तिमिरमयोऽन्धकारमयः, स्तेनाकारोऽपि चौरमूर्तिः, कौणपाकारो राक्षसमूर्तिः, एवंविधोऽपि यत् दिवापि प्रभवति दिवसेऽपि छलयति तत् आश्चर्यमद्भुतमिदम् । असुरस्तिमिरः स्तेनः कौणपश्च रात्रौ प्रभवति, अयं तु दिवापि प्रभवति । व्यतिरेकोपमालंकारः ॥

**दूरादित्यादि ।** हे राजन्, दूरात् दीर्घं अवेक्षणं विलोकनम्, सरभसः वेगवत्तरः प्रीतिक्रमः रागानुक्रमः, संभ्रमो अत्यादरः, अथानन्तरं प्रत्यासन्नं निकटतरं आसनदानम्, प्रियकथाचारे प्रियवार्ताकरणे महान् गुरुतरः आदरः प्रतिपत्तिः, अयं प्रत्यक्षीभूतः सचिवेषु मन्त्रिषु बाह्याकारश्चेष्टितविधिः क्रियाविधानैः कामं यथेष्टं कं पुरुषं न मोदयेत् न प्रमोदमुत्पादयेत् । अपि तु सर्वमपि मोदयेत् । चित्तेहा तु हृदयचेष्टा तु मन्ये जानामि जनन्यामपि मन्त्रिणो मातर्यपि जातु कदाचित् मार्दवमयी न वर्तते । आक्षेपालंकारः समुच्चयश्च ॥

शङ्खनको वासुदेवं पृच्छति—**हे त्रैलोक्येत्यादि ।** त्रैलोक्यस्य निकेतः

कैः काठिन्यकणैर्विधिः प्रविदधे दुश्चारिणो मन्त्रिणो
येनैतन्मृदुताकृतौ विधिवहं प्रह्लाद्य तानाश्रये ॥ १९४ ॥
चातुर्यं वञ्चनोदञ्चे लुञ्चालुञ्चे च मन्त्रिणाम् ।
राज्ञोऽन्य एव ते भृत्याः समरे विधुरे च ये ॥ १९५ ॥
सचिवचरितं तत्रैवैतत्प्रशाम्यति भूपतौ
भवति य इह न्यायान्यायप्रतर्कणकर्कशः ।
सदयहृदये मन्दोद्योगे तदात्वसुखोन्मुखे
स्त्रिय इव नृपे दृप्ता भृत्याः कथं न विकुर्वते ॥ १९६ ॥

तथा च ।

प्रकृतिविकृतिः कोशोत्क्रान्तिः प्रजाप्रलयागतिः
स्वजनविरतिर्मित्राप्रीतिः कुलीनजनास्थितिः ।

---

स्थानमाधारः स चासौ वासः स तस्य संबोधनं हे त्रैलोक्यनिकेतवास हे जगदाधार, भुवनोदन्ते त्रैलोक्यवार्तायां त्वमेव भवानेव आदृतः आदरपरो वर्तसे । तत्तस्मात् कारणात् इदं एकं वचनं सत्यं कथय सत्यं ब्रूहि । भवतस्तव एष प्रत्यक्षीभूतः पादप्रणामः कृतो मया विहितः । किं सत्यं वदामि एतन्मया तु पृच्छ्यते । कैः । काठिन्यकणैः निर्दयपरमाणुभिः दुश्चारिणो दुराचारान् मन्त्रिणः सचिवान् विधिर्विधाता प्रविदधे सृष्टवान् येन कारणेन एतन्मृदुताकृतौ मन्त्रिणां कोमलताकरणे अहं विधिं सृष्टिकर्तारं प्रह्लाद्य आनन्दमुत्पाद्य तान् मन्त्रिणः अहं आश्रये यजामि । प्रश्नोत्तरालंकारः ॥

**चातुर्यमित्यादि** । वञ्चनोदञ्चे प्रतारणोत्कर्षे लुञ्चालुञ्चे च यष्टिमांसभक्षणे च मन्त्रिणां चातुर्यं वर्तते । राज्ञो नृपस्य ते जगत्प्रसिद्धा अन्ये एव अपरे एव भृत्या वर्तन्ते । ते के । ये समरे संग्रामे विधुरे च कष्टोपनिपाते वर्तन्ते । जात्यलंकारः ॥

**सचिवचरितमित्यादि** । एतत् सचिवचरितं मन्त्रिणामाचारः तत्रैव तस्मिन्नेव भूपतौ प्रशाम्यति संशाम्यति शान्तिं याति । तत्र कस्मिन् । यः राजा इह एषु मन्त्रिषु न्यायान्यायप्रतर्कणकर्कशो भवति न्यायश्चान्यायश्च न्यायान्यायौ तयोः प्रतर्कणं विचारस्तत्र कर्कशः कठोरः । सदयहृदये तथा मन्दोद्योगे अलसे तदात्वसुखोन्मुखे तत्कालसुखसत्कण्ठे नृपे दृप्ता गर्विताः भृत्याः । मन्त्रिण इत्यर्थः । कथं केन प्रकारेण न विकुर्वते न विक्रियां गच्छन्ति । अपि तु विकुर्वते एव । का इव । स्त्रिय इव । यथा दयावति अलसे तत्काल इव लम्पटे च नृपे ताः स्त्रियो विकुर्वते । उपमालंकारः ॥

**तथा च । प्रकृतिविकृतिरित्यादि** । कुसचिवरते राजनि ध्रुवं निश्चयेन (तत् च हे) एतत् ननु जायते उत्पद्यते । एतत् किमुत्पद्यते । प्रकृतिविकृतिः 'अमात्याद्याश्च पौराश्च

कुसचिवरते राजन्येतद्ध्रुवं ननु जायते
तदनु स परैर्दायादैर्वा बलादवलुप्यते ॥ १९७ ॥

देव, संजातराजसुतसमागमापीयं लक्ष्मीर्व्याप्ताश्रयपादपा लतेव न जातु तदन्तराविहितस्पृहावतिष्ठते । केवलं प्रभुशक्तिपेशलत्वं महत्त्वमेव महीपतेः सत्पुरुषसंपदः कारणम् । यतः ।

अधनस्यापि महीशो महीयसो भवति भृत्यसंपत्तिः ।
शुष्कस्यापि हि सरसः पालितले पादपविभूतिः ॥ १९८ ॥
शास्त्रशस्त्रोचितोत्सेकाः सन्ति येषां न सेवकाः ।
राज्यश्रीर्विजयश्रीश्च कुतस्तेषां महीभुजाम् ॥ १९९ ॥

देव, विग्रहावग्रहाभ्यां हीनानां दीनानां च प्रजानामवदानप्रदानाभ्यां रक्षणमवेक्षणं चान्तर्बहिरवान्तराटोपैः कोपैर्दुःस्थितावस्थितीनां प्रकृतीनां

---

सद्भिः प्रकृतयः स्मृताः' तासां विकृतिर्विकारो जायते उत्पद्यते । तथा कोशोत्क्रान्तिर्भाण्डागारमुद्रीयते । तथा प्रजाप्रलयगतिः लोको म्रियते । तथा स्वजनविरतिः कुटुम्बं विरक्तं भवति । तथा मित्राप्रीतिर्मित्राणि शत्रवो भवन्ति । तथा कुलीनजनास्थितिः कुलीनजनाः देशान्तरं गच्छन्ति । तदनु तत्पश्चात् स राजा परैः शत्रुभिर्दायादैर्वा बलात् प्रसह्य अवलुप्यते विध्वंस्यते दायं रिक्थमाददते दायादाः 'दायादौ सुतबान्धवौ' इति वचनात् । बान्धवः सपिण्ड इत्यर्थः । समुच्चयालंकारो दीपकं च ॥

हे देव, संजातराजसुतसमागमापि समुत्पन्नराजपुत्रालिङ्गनापि इयं लक्ष्मीर्व्याप्ताश्रयपादपा समाश्रितनिकटवर्तिवृक्षा लतेव वल्लीव जातु कदाचित् तदन्तराविहितस्पृहा राजान्तरे अकृतवाञ्छा नावतिष्ठते न तिष्ठति । केवलं प्रभुशक्तिपेशलत्वम् । 'चारौ दत्ते च पेशलः' इति वचनात् । महत्त्वमेव गुरुत्वमेव महीपतेर्नृपस्य सत्पुरुषसंपदः सत्पुरुषलक्ष्म्याः कारणं हेतुर्वर्तते । यतः कारणात् ।

**अधनस्येत्यादि** । अधनस्यापि महीशस्य नृपस्य महीयसः गुरुतरस्य भृत्यसंपत्तिर्भवति । शुष्कस्यापि सरसः जलरहितस्यापि सरोवरस्य पालितले सेतुबन्धाधस्तनभागे पादपविभूतिर्भवति । कथम् । हि स्फुटमिति शेषः । दृष्टान्तालंकारः ॥

**शास्त्रशस्त्रेत्यादि** । हे राजन्, येषां महीभुजां शास्त्रशस्त्रोचितो योग्यः उत्सेक उत्कृष्टता येषां ते शास्त्रशस्त्रोचितोत्सेकाः सेवका न सन्ति तेषां महीभुजां राज्यश्रीर्विजयश्रीश्च कुतः । न कुतोऽपीत्यर्थः । आक्षेपालंकारः ॥

हे देव, प्रजानां रक्षणं अवेक्षणं अनादरणं च, प्रकृतीनां अमात्यपौराणां एकमुखीकरणं च संक्षेपेण समासेन मन्त्रिणः कर्म तावद्भवति । कथंभूतानां प्रजानाम् ।

विरागकारणपरिहारेणैकमुखीकरणं च संक्षेपेण मन्त्रिणः कर्म । तच्च देवेनानवधार्यान्यदेव किंचित्तं सचिवापसदं प्रति गुणोच्चारचापलमाचरितम् । यतः ।

तन्त्रमित्रार्पितप्रीतिदेशकोशोचितस्थितिः ।
यश्चात्मनि भवेद्भक्तः सोऽमात्यः पृथिवीपतेः ॥ २०० ॥
कार्यार्थिनो हि लोकस्य किमन्याचारचिन्तया ।
दुग्धार्थी कः पुमान्नाम गवाचारं विचारयेत् ॥ २०१ ॥
व्रतं भवतु वा मा वा भवेद्भक्तिः परात्मनि ।
तथापि चेद्व्रते प्रीतिर्यतीन्कुरु नियोगिनः ॥ २०२ ॥

अपि च देव, महाजङ्घाघ्रातचित्तस्य महालक्ष्मीराक्षसीविलासोल्लासित-

---

विग्रहावग्रहाभ्यां हीनानां कार्यविग्रहेण युद्धेन हीनानां रक्षणं क्रियते,अवग्रहेण स्वव्रतेन हीनानां अवेक्षणं अनादरणम् । दीनानां च न्यक्कृतानां प्रजानां अवदानप्रदानाभ्यां अवदानात् साहसात् खण्डनात् रक्षणम् ,प्रदानात् धनविश्राणनात् अवेक्षणम् , विरागकारणपरिहारेण यथा प्रकृतीनां विरागो नोत्पद्यते । कथंभूतानां प्रजानां प्रकृतीनां च । मन्त्रिणः कोपैः कृत्वा कोपैर्दुःस्थितावस्थितीनां दुष्टावस्थितानाम् । कथंभूतैः कोपैः । अन्तर्बहिरवान्तराटोपैः अन्तःकोपैर्बहिरलीकाटोपैः । तच्च कर्म देवेन त्वया अनवधार्य अज्ञात्वा अन्यदेव किंचित् कर्म पत्रादि । अत्रोटनकर्म जलप्रासुकादिकं च । तं सचिवापसदं मन्त्रिणां मध्ये निकृष्टं प्रति गुणोच्चारणचापलं आचरितं गुणवर्णनचपलत्वं कृतम् । यतः ।

**तन्त्रमित्रेत्यादि** । पृथिवीपतेः सोऽमात्यो भवेत् । स कः यस्तन्त्रमित्रार्पितप्रीतिः तन्त्रस्य मित्रं उत्पादितप्रीतिर्भवति । च अन्यत् देशकोशोचितस्थितिः देशे च कोशे च योग्याचारो भवति । आत्मनि राजनि च भक्तो भवति । जात्यलंकारः ॥

**कार्यार्थिन इत्यादि** । कार्यार्थिनो लोकस्य अन्याचारचिन्तया किम् । न किमपि । दुग्धार्थी पुमान् । नामेति संभावनायाम् । गवाचारं को विचारयेत् । अपि तु न कश्चिद्विचारयेदित्यर्थः । कथम् । हि स्फुटम् । आक्षेपालंकारः ॥

**व्रतमित्यादि** । हे राजन्, व्रतं भवतु वा मा भवतु । चेद्यदि आत्मनि स्वामिनि परा उत्कृष्टा भक्तिर्भवेत्, तथापि तदपि चेत् व्रते प्रीतिर्वर्तते तर्हि यतीन् वनवासिनो भिक्षुकान् नियोगिनो अधिकारिणः कुरु त्वं विधेहि । आक्षेपालंकारः ॥

अपि च तथा च हे देव, महाजङ्घाघ्रातचित्तस्य स्त्रीभोगमहातृष्णावासितहृदयस्य अस्य पामरोदारस्य । कथंभूतस्य । महालक्ष्मीराक्षसीविलासोल्लासितवृत्तस्य च महालक्ष्मीरेव राक्षसी । लोकानां भक्षकत्वात् । तस्या विलासो भोगस्तेन उल्लासितं प्रादुर्भूतं वृत्तं

वृत्तस्य च ब्रह्मचर्याचरणमाचूलमवस्करे निमग्नस्योर्ध्ववाहुतया हस्ताशुचिस्पर्शरक्षणमिव । यतः ।

चञ्चावेषा योषा परिवारः शत्रुदर्शनाकारः ।
मृतमण्डनमिव च धनं स्मरशरदूरे नरे नियतम् ॥ २०३ ॥

तदस्य वाह्यप्रसिद्धिदुर्ललिते ब्रह्मचर्यव्रते खल्विदमैदंपर्यमवधार्यम् । मनसिजरसरहस्यास्वादकोविदस्य हि लोकस्य कलत्रपरिग्रहः पुनःपुनःपरिमलितविलासिनीसंग्रहश्च वन्दीग्रहणमिव चर्वितचर्वणमिव च न चेतः साधु प्रह्लादयितुमलम् । यतः ।

सुरतरहस्यं पुंसां यदि भवति स्वासु देव योषासु ।
किमिति श्रीरतिमन्दो गोविन्दो बल्लवीलोलः ॥ २०४ ॥

---

दुराचाराचरणं यस्य स तथा तस्य ब्रह्मचर्याचरणम् । तस्य कीदृशं वर्तते । आचूलं आमस्तकं अवस्करे गूथे निमग्नस्य छुपितस्य पुरुषस्य ऊर्ध्ववाहुतया ऊर्ध्वीकृतभुजद्वयतया हस्ताशुचिस्पर्शरक्षणमिव मम हस्तयोर्विष्ठा मा लगिता इति न्यत्रेदृशं (?) वर्तते । यतः ।

**चञ्चावेषेत्यादि** । स्मरशरदूरे नरे यस्य कामवाणानलो लगति तस्य पुरुषस्य नियतं निश्चितं योषा स्त्री चञ्चावेषा तृणकामिनीव । परिवारः कुटुम्बवर्गः शत्रुदर्शनाकारः । कुटुम्बवर्गे मोहो न भवतीत्यर्थः । धनं च मृतमण्डनमिव शवशृङ्गार इव । धनं न रोचते इत्यर्थः । उपमालंकारः ॥

तत्तस्मात् कारणात् अस्य सचिवस्य वाह्यप्रसिद्धिदुर्ललिते वहिःप्रशस्तिदुश्चरिते ब्रह्मचर्यव्रते परस्त्रीपरिहारनियमे खलु निश्चयेन इदमेतत् ऐदंपर्यं तात्पर्यं अवधार्यं त्वया ज्ञातव्यं ज्ञानीयम् । मनसिजरसरहस्यास्वादकोविदस्य मनसिजस्य रसो रागस्तस्य रहस्यं गोप्यतत्त्वं तस्यास्वादे कोविदस्य हि निश्चयेन लोकस्य कलत्रपरिग्रहो विवाहः पुनःपुनःपरिमलितविलासिनीसंग्रहः पुनःपुनर्वारंवारं परिमलिता कामुकलोकैर्मर्दिता या विलासिनी वेश्या तस्याः संग्रहश्च अवधारणं निजगृहे रक्षणे वन्दीग्रहणमिव कारागारे पतनमिव चर्वितचर्वणमिव च चेतः प्रह्लादयितुमानन्दयितुं साध्वलं न भवति । यतः ।

**सुरतरहस्यमित्यादि** । अयं मन्त्री एवं कथयति जानाति च—सुरतरहस्यं सुरतं संभोगगोप्यतत्त्वं पुंसां यदि चेत् देव राजन्, स्वासु निजासु योषासु भवति, तर्हि गोविन्दः श्रीनारायणः श्रीरतिमन्दः लक्ष्मीभोगे निरादरः सन् बल्लवीलोलः गोपकन्यालम्पटः किमिति किमर्थं वर्तते । आक्षेपालंकारः ॥

ततश्च ।

पौता युवतिर्जरती तस्य सुता सोदरी सवित्रीति ।
युक्तमिदं यन्नार्यः सारकुचाःश्लथकुचाश्च रोचन्ते ॥ २०५ ॥

अत एवायमित्थमाकथितोऽश्वत्थेन कविना—

परमहिलाः कुलमहिलाः परिजनवनिता विनोदवनिताश्च ।
रतिरसभाण्डं रण्डास्तापस्यश्चास्य गृहदास्यः ॥ २०६ ॥
यस्य न तरुणी माता सुता स्वसा वा कुलाङ्गनारास्ति ।
तस्य कथं ननु लक्ष्मीर्भवति मुहुस्तव नृपामात्यात् ॥ २०७ ॥

भरतबालकविनाप्यत्र किंचित्प्रकाशितम्—

परवित्तरतः परदाररतः परवञ्चनवृत्तिचरित्ररतः ।
अधमध्वजवंशभवः सचिवः समभूत्तव देव तमःप्रभवः ॥२०८ ॥

---

ततश्च । पौतेत्यादि । तस्य मन्त्रिणः पौता लघ्वी सुता वर्तते, युवतिर्यौवनवती सोदरी भगिनी वर्तते, जरती वृद्धा स्त्री सवित्री माता वर्तते, इति ईदृशं इदं वचनं युक्तमेव संगतमेव । यत् यस्मात् कारणात् सारकुचाः पीवरोन्नतस्तन्यो नार्यः श्लथकुचाश्च शिथिलकुचास्तस्य स्त्रियो रोचन्ते रुचिमायान्ति । सुतादिसंवन्धं विना रुचिः कथमिति । वक्रोक्त्यलंकारः ॥

अत एव कारणात् अयं तव सचिवः इत्थममुना प्रकारेण आकथितः आश्लाघितः हास्येन स्तुतः अश्वत्थेन अश्वत्थनाम्ना कविना कवीश्वरेण—परमहिला इत्यादि । परमहिलाः अस्य कुलमहिलाः परिणीताः स्त्रियः, परिजनवनिताः भ्रातृजायापुत्रादिवध्वादयः अस्य मन्त्रिणो विनोदवनिताश्च क्रीडास्त्रियः, रण्डा विश्वस्ताः रतिरसभाण्डं संभोगरसभाजनम्, तापस्यो मासोपवासिन्यः अस्य गृहदास्यः । यथा गृहदास्यो भुज्यन्ते कोऽपि किमपि कथयति तथास्य लिङ्गिन्यः तपस्विन्यः । रूपकालंकारः ॥

यस्येत्यादि । हे नृप, यस्य पामरोदरस्य तरुणी माता न आरास्ति न समीपवर्तिनी भवति । ब्रह्मचर्यभङ्गभयादित्यर्थः । तथा सुता पुत्री आरा न भवति, तथा तरुणी स्वसा आरा न भवति, तथा कुलाङ्गना तरुणी लोकभार्या आरा न भवति, तस्य पामरोदरस्य तव लक्ष्मीर्नन्वहो राजन्, मुहुर्वारंवारं आरा कथं भवति । तव लक्ष्मीः कथं न भुक्ता इत्यर्थः । कस्मात् । अमात्यात् अमात्यः स्वलक्ष्मीं भुङ्क्ते एव राज्यस्वामित्वात् । आक्षेपालंकारः ॥

भरतबालकविनापि भट्टेनापि अत्रास्मिंस्तवामात्येऽपि किंचिदल्पं प्रकाशितम्—परवित्तरत इत्यादि । हे देव, तव सचिवः समभूत् संजातः । कथंभूतः । परवित्तरतः, पर-

देव,

दौर्जन्यहलैर्महतां पारुष्यहलैश्च हृदयमनुगानाम् ।
कृषति नितान्तं मन्त्री भुवं तु नाङ्गुष्ठपरिमाणाम् ॥ २०९ ॥

करितुरगरथनरोत्करविहारसंहारिताखिलप्राणी ।
संचरति राष्ट्रमध्ये नादत्ते पादुकायुगलम् ॥ २१० ॥

दलफुल्लफलानि तरोर्नोञ्छति किल तत्र जीवपीडेति ।
यम इव सकलांश्च पुनर्देवद्विजतापसान्ग्रसते ॥ २११ ॥

वाडव इव जलधिजलैस्तव विभवैर्देव संततं पुष्टः ।
स यदि परत्रापेक्षां कुर्याज्जीवेन्न कोऽपीह ॥ २१२ ॥

---

दाररतः । परवञ्चनवृत्तिचरित्ररतः परवञ्चनवृत्तिराजीविका यस्य चरित्रस्य आचारस्य तत् परवञ्चनवृत्ति तच्चरित्रं च परवञ्चनवृत्तिचरित्रं तस्मिन् रतः । अधमध्वजवंशभवः अधमो निकृष्टो योऽसौ ध्वजवंशः तिलंतुदकुलं तत्र भव उत्पत्तिर्यस्य स तथोक्तः । तमःप्रभवस्तमसः पापस्य प्रभव उत्पत्तिर्यस्मात् स तमःप्रभवः । दोधकछन्दः । जात्यलंकारः ॥

**दौर्जन्यहलैरित्यादि** । हे देव हे राजन्, दौर्जन्यहलैः पिशुनत्वलाङ्गलैः महतां गुरूणां नितान्तं हृदयं कृषति कालखण्डं पारवर्यंते (?) । पारुष्यहलैर्निर्दयलाङ्गलैः अनुगानां भृत्यानाम् । 'अनुकानाम्' इति पाठे दीनानाम् । हृदयं कृषति विदारयति । भुवं पृथ्वीं अङ्गुष्ठपरिमाणामपि न कृषति । रूपकालंकारः ॥

**करीत्यादि** । हे राजन्, करितुरगरथनरोत्करविहारसंहारिताखिलप्राणी करिणश्च तुरगाश्च रथाश्च नराश्च करितुरगरथनराः तेषामुत्कराः समूहास्तेषां विहारेण पर्यटनेन संहारिताः प्रलयं प्रापिताः अखिलाः समग्राः प्राणिनः पञ्चेन्द्रियजीवाः येन स तथोक्तः । एवंगुणविशिष्टः सन् राष्ट्रमध्ये देशमध्ये संचरति स्वचक्रोपसर्गं करोति । सत्यं हे देव, पादुकायुगलं दारवं पादत्राणयुग्मं नादत्ते न गृह्णाति । वक्रोक्त्यलंकारः ॥

**दलफुल्लेत्यादि** । हे राजन्, दलानि च फुल्लानि च फलानि च सस्यानि दलफुल्लफलानि तरोर्वृक्षस्य नोञ्छति न चुण्टयति । किमिति नोञ्छति । किलेत्यरुचौ । तत्र तेषु दलादिषु जीवपीडा वर्तते इति कारणात् । पुनः पश्चात् देवद्विजतापसान् सकलांश्च ग्रसते कवलयति । क इव । यम इव । उपमालंकारः ॥

**वाडव इत्यादि** । हे देव, विभवैः संततं पुष्टः पुष्टिं गतः । क इव । वाडव इव । यथा वडवानलो जलधिजलैः पुष्टो भवति । स तव मन्त्री यदि चेत् परत्र शाकपुष्टौ यवतुष्टौ च अपेक्षां इच्छां कुर्यात् करोति तर्हि पुनः इह अस्मिन् संसारे कोऽपि न जीवेत् न प्राणिति । उपमालंकारः ॥

व्रतग्लपितकायश्चेद्दुष्करं पुष्करो भवेत् ।
पीनश्चेन्न दिवा भुङ्क्ते नक्तं भुक्तिर्विभाव्यताम् ॥ २१३ ॥
प्रत्यादिश्य प्रकटं रहसि च सर्वंकषोचितस्थितिषु ।
जारेष्विव मातृजने मायाविषु पातकद्वितयम् ॥ २१४ ॥
यदपरमपि बहुरूपं बहिरीहितमस्य सुन्दराकारम् ।
स्वाकर्तव्यकपाटं पटुचेष्टैस्तदपि विज्ञेयम् ॥ २१५ ॥

अत एव देव, देवस्यैव पुरस्तात्पुरुहूतेनैवायमुपश्लोकितः—

मानवति मानदलनो गुणवति गुणगोपनः स्वतः परतः ।
कुलशीलशौर्यशालिषु विशेषतो नृषु च कीनाशः ॥ २१६ ॥
चाटुपटुकामधेनुर्नीचैश्वरकल्पपादपः साक्षात् ।
अणकेहितचिन्तामणिरधमनिधिस्तव नृपामात्यः ॥ २१७ ॥

---

**व्रतग्लपितेत्यादि** । हे देव, चेत् व्रतग्लपितकायः उपवासादिभिर्नियमैः यदि चेत् कृशशरीरस्तर्हि पुष्करः स्थूलो भवेत् इत्यर्थो दुष्करं दुर्घटम् । असौ पुमान् पीनश्चेत् दिवा दिवसे न भुङ्क्ते तर्हि नक्तं भुक्तिर्विभाव्यतां ज्ञायताम् । अनुमानालंकारः ॥

**प्रत्यादिश्येत्यादि** । प्रत्यादिश्य निराकृत्य । किं तत् । प्रकटं लोकप्रत्यक्षं रहसि सर्वंकषोचितस्थितिषु यमसमानोचिताचारेषु पुरुषेषु मायाविषु वञ्चकेषु पातकद्वितयं भवति भक्षणपातकं मायापातकं चेति । केष्विव । मातृजने जारेष्विव यथा मातृगमनकारिणां पातकद्वितयं भवति मातृगमनं परस्त्रीगमनं च भवति । उपमालंकारः ॥

**यदपरमित्यादि** । यत् अपरमपि अस्य बहुरूपं अनेकभेदं बहिरीहितं वर्तते । कथंभूतम् । सुन्दराकारं लोकरञ्जकम् । तदपि च पटुचेष्टैः विचक्षणलोकैर्विज्ञेयं ज्ञातव्यम् । कीदृशं विज्ञेयम् । स्वाकर्तव्यकपाटं स्वकीयदुराचारस्य आच्छादने कपाटं कपाटसदृशं ज्ञातव्यम् । रूपकालंकारः ॥

अत एव कारणात् हे देव, देवस्यैव पुरस्तात् तवैवाग्रतः पुरुहूतेन इन्द्रेण महाकविना एवेति निश्चयेन अयं तव मन्त्री उपश्लोकितः श्लोकैरुपस्तुतः ॥

**मानवतीत्यादि** । मानवति पुरुषे मानदलनः मानमर्दकः, गुणवति पुरुषे स्वतः स्वयमेव परतः परेण वा गुणगोपनः गुणच्छादनः, कुलशीलशौर्यशालिषु कुलेन शोभितेषु पुरुषेषु शीलेन शोभितेषु नरेषु शौर्येण शालिषु नृषु विशेषतः अधिकतया कीनाशो यमो वर्तते । रूपकालंकारः ॥

**चाट्वित्यादि** । हे नृप, तव अमात्यः । कथंभूतः । चाटुपटुकामधेनुः चाटुपटुषु मिथ्यास्तुतिकारकेषु कामधेनुर्वाञ्छितप्रदायकः । पुनः कथंभूतः । नीचैश्वरकल्पपादपः नी-

क्षारोदधिरिव सुधियां चण्डालजलाशयोपमः कृतिनाम् ।
मरुमालकूपकल्पः सतां च तव देव सांप्रतं सचिवः ॥ २१८ ॥

नरोत्तम रमा रामाः संग्रामे च जयागमः ।
पामरोदारनामायं यावत्तावत्कुतस्तव ॥ २१९ ॥

नटा विटाः किराटाश्च पटुवाचाटतोत्कटाः ।
सचिवे तव चेष्टन्तां कटके प्रकटश्रियः ॥ २२० ॥

यत्रैष नृपतिपुत्रो मन्त्री यत्रैष यत्र कविरेषः ।
यत्रैषोऽपि च विद्वांस्तत्र कथं सुकृतिनां वासः ॥ २२१ ॥

पण्डितवैतण्डिकेन च—

---

चैश्वरेषु निकृष्टाचारेषु पुरुषेषु कल्पपादपः । कथम् । साक्षात् प्रत्यक्षं निश्चयेन वा । पुनः कथंभूतः । अणकेहितचिन्तामणिः अणकेहितेषु कुत्सिताचारेषु चिन्तामणिः चिन्तारत्नम् । पुनः कथंभूतः अधमनिधिः अधमानां नीचानां पापिष्ठानां निधिरक्षयनिधानम् । रूपकालंकारः ॥

**क्षारोदधिरित्यादि** । हे देव, तव सचिवः सांप्रतमिदानीं सुधियां क्षारोदधिरिव वर्तते लवणोदसागर इव वर्तते । कृतिनां पुण्यवतां चण्डालजलाशयोपमः चाण्डालतडागसदृशः । सतां च मरुमालकूपकल्पः मरौ मरुस्थलदेशे मालकूपकल्पः चाण्डालीकूपादीषदपरिसमाप्तः । उपमालंकारः ॥

**नरोत्तम इत्यादि** । हे राजन्, यावत्कालमयं प्रत्यक्षीभूतः पामरोदारनामा मन्त्री वर्तते, तावत्कालं तव हे नरोत्तम, रमा लक्ष्मीः, रामाः स्त्रियः, संग्रामे च जयागमः जयप्राप्तिः कुतः । न कुतोऽपि इत्यर्थः । आक्षेपालंकारः ॥

**नटा इत्यादि** । नटा नर्तकाः, विटाः कामुकाः, किराटाश्च चतुष्पथचौराः, पटुवाचाटतोत्कटाः वाग्मिनः वाचाटतया बहुगर्ह्यवाक्तया ये उत्कटाः प्रव्यक्ताः ते सर्वेऽपि तव सचिवे सति तव कटके स्कन्धावारे चेष्टन्तां प्रवर्तन्ताम् । कथंभूता नटविटादयः । प्रकटश्रियः प्रव्यक्तलक्ष्मीकाः । समुच्चयालंकारः ॥

**यत्रेत्यादि** । हे राजन्, यत्र यस्मिन् तव राज्ये एष पामरोदारनामा नृपतिपुत्रो वर्तते, यत्र तव राज्ये एष मन्त्री वर्तते, यत्र तव राज्ये एष कविर्वर्तते, यत्र तव राज्ये एष विद्वान् वर्तते, हे राजन्, तत्र तव राज्ये सुकृतिनां विद्वज्जनानां वासः कथं वर्तते । न कथमपीति । आक्षेपालंकारः ॥

**पण्डितवैतण्डिकेनेति** । पण्डितवैतण्डिकेन चोपश्लोकितः श्लोकैरुपस्तुतः ।

धर्मतरुधूमकेतुर्विद्वज्जनहंसनीरदारावः।
स्वामिश्रीनलिनीन्दुर्मित्रोदयराहुरेष तव मन्त्री॥ २२२॥
तमसो मनुष्यरूपं पापस्य नराकृतिः कलेर्नृत्वम्।
पुंस्त्वमिव पातकस्य च भवनेऽभूत्तव नृपामात्यः॥ २२३॥
हे वत्स दौर्जन्य किमम्ब माये कः सांप्रतं नावुचितो निवासः।
वदामि मातः शृणु सोऽस्ति नूनं यः पामरोदारगिराधराङ्कः॥ २२४॥
सरस्वतीतुडगेनाप्यत्र मृतमारणमाचरितम्—
स्वयं कर्ता स्वयं हर्ता स्वयं वक्ता स्वयं कविः।
स्वयं नटः स्वयं भण्डो मन्त्री विश्वाकृतिस्तव॥ २२५॥
आस्तिकहास्तिकसिंहो नास्तिकसौवस्तिकस्तमः स्तूपः।
दैष्टिकसृष्टिकृतान्तो नरदैत्यस्तव नृपामात्यः॥ २२६॥

---

**धर्मतर्वित्यादि**। हे राजन्, एष तव मन्त्री धर्मतरुधूमकेतुः धर्मवृक्षभस्मीकरणे वैश्वानरः, विद्वज्जनहंसनीरदारावः पण्डितजनराजहंसमेघध्वनिः, स्वामिश्रीनलिनीन्दुः तव लक्ष्मीपद्मिनीचन्द्रः, मित्रोदयराहुः सुहृत्सूर्यस्वर्भानुः। रूपकालंकारः॥

**तमस इत्यादि**। हे नृप, तव भवने अमात्योऽभूत्। कथंभूतः अमात्यः। तमसः अन्धकारस्याज्ञानस्य वा मनुष्यरूपं मनुष्याकारः। पुनः कथंभूतः। पापस्य हिंसादेर्नराकृतिः मनुष्याकारः। पुनः कथंभूतः। कलेर्नृत्वं कलिकालस्य मनुष्यरूपम्। पुनः कथंभूतः। पातकस्य ब्रह्महत्यादेः ऋषिहत्यादेश्च पुंस्त्वं पुरुषरूपम्। रूपकालंकारः॥

**हे वत्सेत्यादि**। हे दौर्जन्य खलत्व, वत्स पुत्र, अम्ब मातः, माये परवञ्चनालक्षणे किं कथयसि। सांप्रतं नौ आवयोः उचितो निवासो योग्यमास्पदं को वर्तते। कथम्। निश्चितम्। कः सः। यः कश्चित् पामरोदारगिरा पामरोदारनाम्ना अधराङ्कः नीचचिह्नो वर्तते। प्रश्नोत्तरालंकारः॥

सरस्वतीतुडगेनापि महाकविना अत्र अस्मिन् तव मन्त्रिणि मृतमारणं मृतस्यापि विशेषेण मारणं आचरितं कृतम्॥

**स्वयमित्यादि**। हे राजन्, तव मन्त्री विश्वाकृतिः विश्वं जगत् आकृतिराकारो यस्य स विश्वाकृतिः विश्वकुर्कुरस्तस्य आकृतिराकारो यस्य स तथा। कस्मात् विश्वाकृतिः। स्वयं कर्ता स्वयमेव अकृत्यं करोति। स्वयं हर्ता धर्मकर्मसंहारकः। स्वयं वक्ता स्वयं तार्किकः। स्वयं कविः। स्वयं नटः नानाविधनाट्यकारकः। स्वयं भण्डो नर्मसचिवः। काकुवक्रोक्त्यलंकारः॥

**आस्तिकेत्यादि**। हे नृप, तव अमात्यः। कथंभूतः। आस्तिकहास्तिकसिंहः पुण्य-

देवद्रविणादाता देवद्रोहाच्च देवनिर्माता ।
अहह खरः खलु संप्रति धर्मपरः पामरोदारः ॥ २२७ ॥

देव, सहायप्राज्यं हि राज्यं शमयति मुहुर्मुहुर्वहुमुखप्रवृत्तीरपि विपत्तीः, न खल्वेकं चक्रं साधु परिक्रामति । तदाह 'नैकस्य कार्यसिद्धिरस्ति' इति विशालाक्षः । किं च ।

असहायः समर्थोऽपि न जातु हितसिद्धये ।
वह्निर्वातविहीनो हि बुसस्यापि न दीपकः ॥ २२८ ॥

ततोऽसौ यदि देवस्य परमार्थतो न कुप्यति, सत्पुरुषपरिषदिव मनसि

---

-मस्ति पापमस्ति देवोऽस्ति गुरुरस्ति परलोकोऽस्ति एवमस्त्युक्तिं वदन्ति ये ते आस्तिकाः धर्मिष्ठास्त एव ह्यास्तिकं हस्तिसमूहस्तस्य विध्वंसने सिंहः । पुनः कथंभूतः । नास्तिकसौ-वस्तिकः पुण्यं नास्ति पापं नास्ति देवो नास्ति गुरुर्नास्ति परलोको नास्ति एवं नास्ति-वदन्तीति नास्तिकाः । 'तेन दीव्यति–' इत्यादि सूत्रेण शैषिक इण् । नास्तिकानां सौव-स्तिक आशीर्वाददायकः । पुरोहित इत्यर्थः । पुनः तमस्तूपः अज्ञानस्य उच्चयः । पुनः दैष्टिकसृष्टिकृतान्तः दैष्टिकानां दिव्यज्ञानिनां या सृष्टिस्तस्या विनाशे कृतान्तो यमः । पुनः नरदैत्यः मनुष्यजन्मना दैत्यो असुरः । पूर्वदेव इत्यर्थः । रूपकालंकारः ॥

**देवेत्यादि** । हे राजन्, पामरोदारः संप्रति धर्मपरः अहह अद्भुतमिदं खेदेन वा कथयति । कथंभूतः पामरोदारः । देवद्रविणादाता देवपूजनार्थं केनापि धनं दत्तं तद्धनं नटविटेभ्यो ददाति ईदृशस्तावद्दाता । कथंभूतः । देवद्रोहात् देवं भङ्क्त्वा गालयित्वा वा देवनिर्माता लघुप्रतिमाकारिता । कथंभूतः । खरः सत्यवादी यम इति ध्वनिः । काकुवक्रोक्तिः ॥

हे देव हे राजन्, सहायप्राज्यं हि राज्यं सहायवहुलं राज्यं हि निश्चयेन विपत्ती-रापदः शमयति विनाशयति । कथंभूता विपत्तीः । मुहुर्मुहुः वहुमुखप्रवृत्तीः । अनेकद्वारै-रायाता इत्यर्थः । खलु निश्चयेन एकं चक्रं शकटाङ्गं साधु न परिक्रामति रुचिरतया न वहति । तदाह तद्ब्रवीति । कोऽसौ । विशालाक्षोनाम कविः । किमाह । नैकस्य कार्यसिद्धिरस्ति इति एकस्य कार्यसिद्धिर्न भवतीति । किं च किंचिन्मात्रं अपरमपि ब्रवीमि ।

**असहायेत्यादि** । असहायः पुमान् समर्थोऽपि जातु हितसिद्धये न भवति कार्य-सिद्धये न भवतीति । वातविहीनो वह्निः बुसस्यापि कडंगरस्यापि दीपकः प्रज्वालको न भवति । कथम् । हि स्फुटम् । दृष्टान्तालंकारः ॥

**तत इत्यादि** । ततस्तस्मात् कारणात् हे देव, यदि चेत् असौ तव मन्त्री देवस्य तव भवतः परमार्थतो निश्चयात् न कुप्यति न रोषं करोति, तथा सत्पुरुषपरिषदिव

मनागपि नाभ्यसूयति, तत्किमिति मनीषापौरुषाभ्यामशेषशिष्टशौण्डीरशिखामणीयमानमतिसमीक्षं पुण्डरीकाक्षम्, सिन्धुरप्रधानो हि विजयो विशामीशानामिति तत्किमिति समस्तसामजैतिह्यगृह्यमनःप्रभावं बन्धुजीवम्; महाकविसंग्रहान्महीपतीनामाचन्द्रार्कावकाशं यश इति तत्किमिति स भवत्कीर्तिलताललनालापामृतसेवकसारं हारम्, 'यासु सन्तो न तिष्ठन्ति ता वृथैव विभूतयः' इति, तत्किमिति स्वभावादेव देवस्य प्रसेदुषोऽपरानपि

---

साधुलोकसमूह इव मनसि चित्ते मनागपि ईषदपि नाभ्यसूयति गुणेष्वपि दोषारोपं न करोति। तदित्यादि। तत्तर्हि पुण्डरीकाक्षं नाम मन्त्रिणं निर्वास्य किमिति किमर्थं स्वयमेव एकैश्वर्ये अद्वितीयप्रभुत्वे वर्तते। कथंभूतं पुण्डरीकाक्षम्। मनीषापौरुषाभ्यां मनीषा बुद्धिः पौरुषं च सुभटत्वं मनीषापौरुषे ताभ्यां कृत्वा अशेषशिष्टशौण्डीरशिखामणीयमानमतिसमीक्षं अशेषाः समस्ता ये शिष्टा विद्वांसः शौण्डीराश्च त्यागविक्रमाभ्यां विश्रुता अशेषशिष्टशौण्डीरास्तेषु तेषां शिखामणीयमानौ शिरोरत्ने इवाचरन्त्यौ मतिर्बुद्धिः समीक्षा च सौभव्यं यस्य पुण्डरीकाक्षस्य स तथोक्तस्तम्। हे राजन्, विशामीशानां नरेन्द्राणां विजयो जयः सिन्धुरप्रधानो भवति गजैरेव शत्रवो जीयन्ते इति चेत् वर्तते तर्हि बन्धुजीवं नाम गजशास्त्रज्ञं निर्वास्य देशान्निःसार्य किमिति किमर्थं स्वयं स्वयमेवैकैश्वर्ये अद्वितीयप्रभुत्वे वर्तते। कथंभूतं बन्धुजीवम्। यथोक्तविशिष्टम्। समस्तसामजैतिह्यगृह्यमनःप्रभावं समस्तानि समग्राणि च तानि सामजैतिह्यानि गजशास्त्राणि तानि गृह्याणि गृहीतव्यानि मनसः प्रभावे चित्तमाहात्म्ये यस्य स तथोक्तस्तम्। हे राजन्, महाकविसंग्रहात् गुरुतरकवीश्वरस्वीकारात् महीपतीनां नृपाणां किल आचन्द्रार्कावकाशं आचन्द्रार्कं यावत् यशो भवति इति चेत् वर्तते तत्तर्हि हारं नाम महाकविं निर्वास्य देशान्निःसार्य स्वयमेव किमिति किमर्थं एकैश्वर्ये वर्तते। कथंभूतं हारम्। भवत्कीर्तिलताललनालापामृतसेवकसारं भवतस्तव या कीर्तिः पुण्यगुणानुकीर्तनं सैव लता वल्ली स्वर्गफलदायिकत्वात् तस्या ये ललनालापाः कोमलकविलानि तान्येव अमृतं मरणनिवारकत्वात् तस्य सेवकः सेवनं तेन सारः सामर्थ्यवान् बलवत्तरस्तम्। यासु विभूतिषु सन्तो न तिष्ठन्तीति ता विभूतयः वृथैव निरर्थका एव इति चेद्वर्तते तर्हि अपरान् विदुषः पण्डितान् पुरुषान् निर्वास्य किमिति स्वयमेवैकैश्वर्ये वर्तते। कथंभूतान् विदुषः। स्वभावादेव निसर्गेणैव देवस्य तव प्रसेदुषः प्रसन्नचित्तान्। सेवकानित्यर्थः। अयं मन्त्री किं कुर्वन्। अमिषन् असहमानः। क इव एकैश्वर्ये वर्तते। अगारान्तरापतितः कपोत इव अगारस्य गृहस्य अन्तर्मध्ये आपतितः आगतः कपोत इव अरण्यपारापत इव। यस्मिन् गृहे अरण्यकपोतः आगतः तद्गृहं उद्वसं भवति।

विदुषः पुरुषानमिषन्नगारान्तरापतितः कपोत इव निर्वास्य स्वयमेकैश्वर्ये वर्तते । तथा इति विचिन्त्य निवसतां च सतामरुंतुदवाक्प्रसरस्त्वचिसारहीर इव न ददाति सुखेनासितुम् ।

अन्या स्थली न हरिताङ्कुरचारसारा
दृष्टेरुपैति विषयं विषमाध्वरुद्धः ।
यूथच्युतोऽपि खरकर्करकर्कशान्ता-
न्येणः श्रयत्यवश एव मरुस्थलानि ॥ २२९ ॥

ततश्च ।

एकामात्ये महीपाले नालं लक्ष्मीर्विजृम्भते ।
लतायास्तत्र का वृद्धिः शाखैका यत्र शाखिनि ॥ २३० ॥

---

**तथेत्यादि** । तथा तेनैव प्रकारेण इति विचिन्त्य इति पर्यालोच्य निवसतां तव राज्ये तिष्ठतां सतां सत्पुरुषाणां सुखेन आसितुं स्थानं न ददाति । कथंभूतः अरुंतुदवाक्प्रसरः धर्मव्यर्थकवचनप्रवृत्तिः । क इव सुखेन आसितुं न ददाति । त्वचिसारहीर इव यथा त्वचिसारहीरः वंशशलाकानखादौ क्षुव्धा सती सुखेनासितुं न ददाति । इतीति किम् ।

**अन्येत्यादि** । एणो मृगः अवश एव मरुस्थलानि मरुदेशसिकतासमुच्चयान् श्रयत्याश्रयति । एणो मृगः किमिति मरुस्थलान्याश्रयतीत्याह—हरिताङ्कुरचारसाराः दूर्वाभिनवोद्भिदाचारसारा अन्या स्थली अपरा भूमिः दृष्टेर्लोचनस्य विषयं गोचरं न उपैति नागच्छति । कथंभूत एणः । विषमाध्वरुद्धः विषमो नीचोच्चो योऽसौ अध्वा मार्गः विषमाध्वः तेन रुद्धः अनवाप्तावकाशः । पुनः कथंभूतः । यूथच्युतोऽपि निजवृन्दात् पतितोऽपि । कथंभूतानि मरुस्थलानि । खरकर्करकर्कशान्तानि खराः कठिना ये कर्करा शर्करोपलास्तैः कर्कशाः स्वस्य वा अन्ताः पर्यन्ताः स्वभावा वा येषां मरुस्थलानां तानि तथोक्तानि । समासोक्त्यलंकारः ॥

ततश्च कारणात् । **एकामात्येत्यादि** । महीपाले राजनि एकामात्ये एकमन्त्रिके लक्ष्मीरलमतिशयेन विजृम्भते लतायाः वल्ल्यास्तत्र तस्मिन् शाखिनि वृक्षे का वृद्धिः का स्फीतिरपि । न कदाचित् अपीत्यर्थः । तत्र कुत्र । यत्र शाखिनि एकासहाया शाखा लता वर्तते । दृष्टान्तालंकारः ॥

देव, लक्ष्मीलतावलयितगलश्छगल इव भवति प्रायेण सर्वोऽपि जनः। यतो य एवात्मनो गलं पादिकया लम्बितुमिच्छति तस्यैव मुखमवलोकते। किं च।

किं नास्ति पलं सलिले येन तिमिः सादरो गलाहारे।
प्रायेण हि देहभृतां तत्रासक्तिर्यतो मृत्युः ॥ २३१ ॥

देव, देवोऽस्य निस्त्रिंशतां नास्तिकतां च चेतन्नपि न चेतति। यतो जानन्नप्येष दुरात्मा मुधा भृत्यभावेन पाकोदकादिपरिचारकतया चिरकालं श्वपचपञ्चकं क्लेशयन्नेतज्ज्ञातिपूत्कारादुच्छलति दुरपवादे पुनर्दुःप्रसिद्धिभयात्तन्निजनीडक्रोड एव निशि निविडप्रमीडं स्वयमेवावधीत्। विशिष्टैश्च प्रायश्चेतनचिन्तायामिदमवोचत्—

---

देवेत्यादि। हे देव, प्रायेण वाहुल्येन सर्वोऽपि जनः लक्ष्मीलतावलयितगलो भवति लक्ष्मीवद्धकण्ठो भवति। क इव। छगल इव छाग इव। यतः कारणात् य एव पुमान् आत्मनो निजस्य गलं कण्ठं पादिकया पादेन चम्पयित्वा लम्बितुं इच्छति तस्यैव जनस्य मुखं अवलोकते तस्यैव संमुखं तिष्ठति॥

किं चास्ति विशेषः। किं नास्तीत्यादि। हे राजन्, सलिले किं पलं नास्ति येन कारणेन तिमिर्मत्स्यः गलाहारे वक्रकण्टकमांसभक्षणे सादरो भवति। युक्तोऽयमर्थः— देहभृतां जीवानां प्रायेण तत्र तस्मिन् पदार्थे आसक्तिरनुवन्धो भवति। तत्र कुत्र। यतो पदार्थात् मृत्युर्मरणं भवति। कथम्। हि स्फुटमिति शेषः। दृष्टान्तालंकारः॥

देवेत्यादि। हे देव हे राजन्, अस्य मन्त्रिणः निस्त्रिंशतां निर्दयतां नास्तिकतां निभ्रान्तितां च देवो भवान् चेतन्नपि जानन्नपि न चेतति न जानाति। यतो यस्मात् कारणात् एष तव मन्त्री दुरात्मा पापिष्ठो जानन्नपि मुधा वृथैव भृत्यभावेन किंकरतया पाकोदकादिपरिचारकतया चिरकालं दीर्घकालं श्वपचपञ्चकं चाण्डालपञ्चकं क्लेशयन् विष्टिकारयन् एतज्ज्ञातिपूत्कारात् एतेषां पञ्चानां चाण्डलानां ज्ञातिपूत्कारात् वुम्वारवात् दुरपवादे उच्छलति दुरपवादे निन्दायां प्रादुर्भवति सति पुनः पश्चात् दुःप्रसिद्धिभयात् दुरपवादभयात् तच्चाण्डालपञ्चकं निजनीडक्रोडे एव निजग्रहस्याग्रे एव निशि रात्रौ निविडप्रमीडं अतिसुप्तं स्वयमेव आत्मनैव अवधीत् जघान। विशिष्टैश्च पुरुषैः धर्मिष्ठलोकैः प्रायश्चेतनचिन्तायां प्रायश्चित्तकरणचिन्तायां इदमवोचत् एतदुक्तवान्। एतत् किम्।

रविरश्मिरत्नपावकमाहेयीवायवोऽन्त्यजैः स्पृष्टाः ।
न हि दुष्टास्तद्वदहं प्रकृतिशुचिर्भालमध्येऽपि ॥ २३२ ॥
आत्मा स्वभावशुद्धः कायः पुनरशुचिरेष च निसर्गात् ।
प्रायश्चित्तविधानं कस्येति विचिन्त्यतां जगति ॥ २३३ ॥
वर्णाश्रमजातिकुलस्थितिरेषा देव संवृतेर्नान्या ।
परमार्थतश्च नृपते को विप्रः कश्च चाण्डालः ॥ २३४ ॥

नास्तिकता चास्य किमिवोच्यते । यः खलु

विक्रीय देवं विदधाति यात्रां तद्गालनादेष परांश्च देवान् ।
प्रमुष्य लोकं ठकवृत्तिभावैर्ददाति दानं द्विजपुंगवेभ्यः ॥ २३५ ॥

---

**रवीत्यादि** । रविरश्मयश्च सूर्यकिरणाः, रत्नानि च माणिक्यानि, पावकश्च वैश्वानरः, माहेयी च गौः, वायुश्च मारुतः, रविरश्मिरत्नपावकमाहेयीवायवः अन्त्यजैश्चाण्डालैः स्पृष्टाश्छुम्पिता दुष्टा न भवन्ति । कथम् । हि निश्चयेन । तद्वत्तथा अहं पामरोदारनामा मन्त्री प्रकृतिशुचिः स्वभावेन निर्मलः भालमध्येऽपि चाण्डालमध्येऽपि दोषाय न भवामि । समुच्चयालंकारः ॥

**आत्मेत्यादि** । आत्मा जीवतत्त्वं स्वभावशुद्धः स्वभावेन प्रकृत्या शुद्धः कर्ममलकलङ्करहितः । एष प्रत्यक्षीभूतः कायः शरीरं निसर्गात् स्वभावेन पुनरपि भूयोऽप्यशुचिः अपवित्रः । तेन कारणेन प्रायश्चित्तविधानं पापशोधनं जगति संसारे कस्य । न कस्यापीत्यर्थः । इति ईदृशोऽर्थो विचिन्त्यतां भवद्भिर्विचार्यताम् । जात्याक्षेपालंकारः ॥

**वर्णाश्रमेत्यादि** । हे देव, एषा वर्णाश्रमजातिकुलस्थितिः वर्णाश्च विप्रक्षत्रियविट्शूद्राश्चत्वारः, आश्रमाश्च ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चेति चत्वारः, जातिश्च मातृपक्षः, कुलं च पितृपक्षः, वर्णाश्रमजातिकुलानि तेषां स्थितिर्मर्यादा वारणा संवृतेर्व्यवहाराद्भवति । न अन्या निश्चयभूता । हे नृपते, परमार्थतश्च निश्चयात् को विप्रः कश्च चाण्डालश्च । अपि तु न कोऽपि ब्राह्मणः, न कोऽपि चाण्डाल इत्यर्थः । आक्षेपालंकारः॥

नास्तिकता चास्य किमिवोच्यते नास्तिकता निर्भ्रान्तितता अस्य तव मन्त्रिणः किं कथ्यते । यः खलु तव मन्त्री **विक्रीयेत्यादि** । हे देव, देवं विक्रीय यात्रां विदधाति करोति । एष मन्त्री तद्गालनात् देवप्रतिमारसकरणात् परांश्च देवान् अपरान् क्षुद्रदेवान् विदधाति । इत्येवं ठकवृत्तिभावैरौषधप्रयोगेण लोकं प्रमुष्य मानवानां गलमोटनं कृत्वा धनं गृहीत्वा द्विजपुंगवेभ्यो दानं ददाति । परिवार्तालंकारः ॥

अग्रहारग्रहः साक्षाद्देव भोगभुजंगमः ।
शिष्टविष्टपसंहारप्रलयानलमानसः ॥ २३६ ॥
कृतान्त इव चेष्टेत यो देवेषु निरङ्कुशः ।
कापेक्षा भक्षणे तस्य तापसेषु द्विजेषु च ॥ २३७ ॥

देव,

यावद्भवान्न जातोऽत्र तावदन्ये कुलोद्गताः ।
जाते त्वयि महीपाल नृपाः सर्वेऽपि निष्कुलाः ॥ २३८ ॥

इति देव, देवमुपश्लोकयता कथंकारमद्वैतत्वमात्मनो न द्योतितम् । यतो देव, देवोत्पादागतां वंशविशुद्धतां वदतानेन साधु देवान्वयस्याविशुद्धता प्रकाशिता । न खलु पुत्रात्पित्रोः कुलीनता, किं तु पितृभ्यां पुत्रस्य । तदेवं देव, देवस्यायमेव नितरां पक्षपाती । देव, देवस्यायमेव राज्य-

---

अग्रहारग्रह इत्यादि । हे देव, साक्षात् प्रत्यक्षेण अग्रहारग्रहः मुक्तग्राह्यग्राहकः । हे देव, भोगभुजंगमः देवपूजार्थे यत् क्षेत्रादिकं राजदत्तं वर्तते तस्य भुजंगमो भक्षकः । पुनः शिष्टविष्टपसंहारप्रलयानलमानसः शिष्टानां यद्विष्टपं जगत् तस्य संहाराय विनाशाय प्रलयानलमानसः कल्पान्तकालपावकमनाः । रूपकालंकारः ॥

कृतान्त इत्यादि । हे देव, यस्तव मन्त्री देवेषु निरङ्कुशो निरर्गलः सन् कृतान्त इव चेष्टेत प्रवर्तेत तस्य तव मन्त्रिणः तापसेषु मुनिषु द्विजेषु च भक्षणे का अपेक्षा का वाञ्छा । अपि तु न काचिदपेक्षा इत्यर्थः । उपमाक्षेपालंकारः ॥

देव, यावद्भवानित्यादि । हे देव, इति अमुना प्रकारेण देवं भवन्तमुपश्लोकयता श्लोकैरुपस्तुवता कथंकारं केन प्रकारेण आत्मनः स्वस्य अद्वैतत्वं एकान्तत्वं न द्योतितं न प्रकाशितम् । अपि तु प्रकाशितमेव । इतीति किम् । हे देव, यावत्कालं भवांस्त्वमत्र न जातो नोत्पन्नस्तावत्कालं अन्ये यशोवन्धुरयशोर्घादयस्तव पूर्वजाः कुलोद्गताः कुलीना वर्तन्ते । हे महीपाल हे राजन्, त्वयि जाते सति सर्वेऽपि नृपाः भवद्वंशोद्भवा राजानः निष्कुलाः कुलरहिताः संगताः ।

यत इत्यादि । यतो हे देव, देवोत्पादागतां वंशविशुद्धतां तव जन्मसंजातां कुलविशुद्धतां अनेन मन्त्रिणा वदता कथयता साधु यथा भवत्येवं देवान्वयस्य तव कुलस्य अविशुद्धताऽनिर्मलता प्रकाशिता प्रकटीकृता । न खलु पुत्राद् पित्रोः मातृपित्रोः जननीजनकयोः कुलीनता भवति, किं तु पितृभ्यां पुत्रस्य कुलीनता भवति । तत्तस्मात् कारणात् एवं सति हे देव, देवस्य तव अयमेव नान्यः कोऽपि नितरामतिशयेन पक्षपाती पक्षच्छेदकः, न तु पक्षावलम्बी विपरीतार्थ-

लक्ष्मीवल्लीवर्धनः । देव, देवस्यायमेव मङ्गलपरम्परासंपादनः । देव, देवस्यायमेव प्रतापप्रदीपनन्दनः। देव,देवस्यायमेव समरेषु जयविभूतिकारणम् ।देव, देवस्यायमेव बान्धवेषु हारावरुद्धकण्ठताहेतुः । देव, देवस्यायमेव मित्रेषु श्रीफलोपलालनायतनम् । देव, देवस्यायमेवाश्रितेषु चिन्तामणिनिदानम् । अत एव

वृत्तिच्छेदस्त्रिदशविदुषः कोहलस्यार्थहानि-
र्मानग्लानिर्गणपतिकवेः शंकरस्याशु नाशः ।
धर्मध्वंसः कुमुदकृतिनः केकटेश्च प्रवासः
पापादस्मादिति समभवद्देव देशे प्रसिद्धिः ॥ २३९ ॥

---

आह्यः । हे देव हे राजन्, देवस्य तव अयमेव मन्त्री राज्यलक्ष्मीवल्लीवर्धनः राज्यस्य लक्ष्मीः संपत् सैव वल्ली वल्लरी तस्याः वर्धनः छेदनः खण्डनः, न तु वर्धनो वृद्धिकारको भवतीत्यर्थः । हे देव हे राजन्, देवस्य तव अयमेव मन्त्री मङ्गलपरम्परासंपादनः मङ्गलानां कर्पराणां कुम्भभेदनानां परम्परायाः श्रेण्याः संपादनः कारकः, न तु शुभकल्याणकारकः । हे देव देवस्य तव अयमेव मन्त्री प्रतापप्रदीपनन्दनः प्रतापप्रदीपस्य नन्दनो विधायकः, न तु प्रबोधकः । हे देव, देवस्य तव अयमेव मन्त्री समरेषु जयविभूतिकारणं भस्मकारणम्, न तु ऐश्वर्यकारणम् । हे देव, देवस्य तव अयमेव मन्त्री बान्धवेषु कुटुम्बेषु हारावरुद्धकण्ठताहेतुः । 'इष्टिकानिचयो हारो हारो मुक्तागणः स्मृतः । हारो मापविशेषः स्याद्धारो रजतमुच्यते ॥' तदत्रावसरवशाद्धारशब्देन इष्टिकाग्रहावरुद्धाक्रन्दनः । हा इति स्थिते हा इति रावेण शब्देन रुद्धकण्ठताहेतुः कारणम्, न तु हाराणां मुक्ताफलमालानां कण्ठाभरणहेतुः । हे देव, देवस्य तव अयमेव मन्त्री मित्रेषु अभीष्टेषु श्रीफलोपलालनायतनं श्रीफलानां शिरोविल्वबन्धनानां उपलानां पाषाणानां आलनायतनं ताडनमन्दिरम्, न तु लक्ष्मीफलाभोगायतनम् । हे देव, देवस्य तव अयमेव मन्त्री आश्रितेषु सेवकेषु चिन्तामणिनिदानं चिन्तायां अन्तर्ध्यानस्य कथनकारणम्, न तु शोणरत्नकारणम् ।

अत एव कारणात् । **वृत्तिच्छेद इत्यादि** । हे देव, अस्मात् पापात् पापिष्ठात् इति ईदृशी देशे देशमध्ये प्रसिद्धिः प्रघोषः समभवत् । इतीति किम् । त्रिदशविदुषः त्रिदशनाम्नः कवेः वृत्तिच्छेदः श्रीहिकोद्दालनं संजातम् । कोहलस्य कोहलकवेरर्थहानिर्निर्धनत्वं संजातम् । गणपतिनाम्नः कवेर्मानग्लानिर्मानभङ्गः संजातः । शंकरस्य शंकरनामविदुषः आशु सत्वरं नाशः संजातः । कुमुदकृतिनामविदुषः धर्मध्वंसः धर्मविनाशो बभूव । केकटेश्च केकटिनाम्नः कवीश्वरस्य प्रवासः परदेशगमनं बभूव । समुच्चयालंकारः ॥

मूर्खं बृहस्पतिमयं वृषलं कुलीनं
व्रात्यं महान्तमधमं पुनरुत्तमं च ।
तुष्टः करोति कुपितश्च विपर्ययेण
मन्त्रीति देव विषये सुमहान्प्रवादः ॥ २४० ॥

अलमतिविस्तरेण । देव, समस्तस्याप्यस्य भाषितस्येदं कैपर्यम्—

यः कार्यार्थिनि भूपतावसमधीः कार्याय धत्ते धुरं
यश्चार्थार्थिनि संनयोचितमतिश्चिन्तामणिर्जायते ।
भक्तौ भर्तरि मन्त्रिणामिदमहो दिव्यं द्वयं कीर्तितं
नं क्षोणीश महीयसां निरसनं राज्यस्य वा ध्वंसनम् ॥ २४१ ॥

तथा च श्रुतिः—

दुर्योधनः समर्थोऽपि दुर्मन्त्री प्रलयं गतः ।
राज्यमेकशरोऽप्याप सन्मन्त्री चन्द्रगुप्तकः ॥ २४२ ॥

---

मूर्खमित्यादि । हे देव, विषये अवन्तिमण्डले इति ईदृशः सुमहान् अतिगुरुः प्रवादः प्रघोषः वर्तते । इतीति किम् । अयं मन्त्री तुष्टः सन् मूर्खमज्ञानिनं बृहस्पतिं करोति सुराचार्यं विदधाति, वृषलं चाण्डालात् ब्राह्मण्यां जातं पुत्रं कुलीनं करोति, व्रात्यं व्रतभ्रष्टं पुरुषं नष्टव्रतं महान्तं गुरुं करोति, पुनः अधमं नीचं उत्तमं करोति । कुपितः सन् विपर्ययेण विपरीतत्वेन करोति, बृहस्पतिं मूर्खं करोति, कुलीनं वृषलं करोति, महान्तं व्रात्यं करोति, उत्तमं अधमं करोति । दीपकालंकारः ॥

अलमतिविस्तरेण पूर्णम् । हे देव राजन्, समस्तस्यापि अस्य पूर्वोक्तस्य भाषितस्य वचनस्य इदमेतत् कैपर्यं तात्पर्यं वर्तते—यः कार्यार्थिनीत्यादि । इदं किम् । अहो क्षोणीश हे पृथ्वीश, मन्त्रिणां भर्तरि राजनि भक्तौ सेवायां इदमेतत् द्वयं दिव्यं कीर्तितं कथितम् । इदं किम् । यो मन्त्री भूपतौ राजनि कार्यार्थिनि सति असमधीः अद्वितीयबुद्धिः सन् कार्याय कार्यकरणे धुरं धत्ते भारमुच्चलति । यश्च मन्त्री अर्थार्थिनि धनार्थिनि नृपतौ चिन्तामणिर्जायते वाञ्छितं ददाति । कथंभूतः सन् । संनयोचितमतिः अन्यायेन लक्ष्मीं न ददाति किं तु न्यायेन । एकं इदं दिव्यं महीयसां विद्वज्जनानां निरसनं निषेधनम्, राज्यस्य ध्वंसनं वा न भवतीति द्वितीयं दिव्यम् । रूपकालंकारः ॥

तथा तेनैव प्रकारेण श्रुतिश्च शास्त्रान्तरम्—दुर्योधन इत्यादि । हे राजन्, दुर्योधनो राजा समर्थो दुःशासनदुर्धर्षणादिभ्रातृशतसंयुक्तोऽपि दुर्मन्त्री दुष्टशकुनिमन्त्रिसंयुक्तः सन् प्रलयं गतः भ्रातृशतसंयुक्तोऽपि एकेन भीमसेनेन मारितः । चन्द्रगुप्तको नाम राजा सन्मन्त्री सन् चाणक्यमण्डितः एकशरोऽपि एकबाणोऽपि राज्यमाप प्राप्तवान् । जात्यलंकारः ॥

पुण्योदयः क्षितिपतेर्नियतं तदैव
कामं महोत्सवसमागमनं सुहृत्सु।
मोदागमश्च परमो ननु सेवकानां
जायेत दुष्टसचिवापचितिर्यदैव ॥ २४२ ॥

कदाचिद्दिशादण्डमादिदिक्षुराकारितसमस्तसामन्तलोकः सकलसैन्यसमालोकनोत्तुङ्गतमङ्गसंगतिकरेषु बलदर्शनावसरेषु निटिलतटपट्टिकाप्रतानघटितोद्भटजूटम्, उत्कोशकिंशुकप्रसूनमञ्जरीजालजटिलविषाणविकटमेकशृङ्गमृगमण्डलमिव, कर्तरीमुखचुम्बितामूलश्मश्रुबालम्, उद्भिद्यमानमदतिल-

---

**पुण्योदय इत्यादि**। क्षितिपतेर्नरेन्द्रस्य नियतं निश्चितं तदैव तस्मिन्नेव काले पुण्योदयो भवति। कथम्। काममतिशयेन क्षितिपतेः सुहृत्सु कुटुम्बवर्गेषु तदैव तस्मिन्नेव काले महोत्सवसमागमनं उद्धर्षागमनं भवति। अपरं च सेवकानां ननु परमो मोदागमो भवति। तदा कदा। यदैव यस्मिन्नेव काले दुष्टसचिवापचितिर्दुर्मन्त्रिविनाशो जायेत उत्पद्येत। दीपकम्॥ इति मन्त्र्यधिकारः संपूर्णः॥

कदाचित् कस्मिंश्चिद्दिवसरे बलाधिकृतीनां सेनापतीनां इति ईदृशीर्विज्ञप्तीः विज्ञापनानि अशृणवं श्रुतवानहम्। कथंभूतोऽहम्। दिशादण्डं आदिदिक्षुः दिग्मण्डलानां संबन्धित्वेन दण्डधनमादिदिक्षुरादातुमिच्छुः। ग्रहीतुमिच्छुरित्यर्थः। पुनः कथंभूतोऽहम्। आकारितसमस्तसामन्तलोकः आकारिता आहूताः समस्ताः सर्वेऽपि सामन्तलोकाः सेवकनृपसमूहाः येन स तथोक्तः। बलाधिकृतीनां विज्ञप्तीरशृणवम्। कदाहं श्रुतवान्। बलदर्शनावसरेषु सैन्यावलोकनप्रस्तावेषु। कथंभूतेषु बलदर्शनावसरेषु। सकलसैन्यसमालोकनोत्तुङ्गतमङ्गसंगतिकरेषु सकलानां समस्तानां सैन्यानां चमूनां समालोकनाय अवलोकननिमित्तं उत्तुङ्गतमङ्गस्य उन्नतप्रासादस्य संगतिः समारोहणं कुर्वन्तीति सकलसैन्यसमालोकनोत्तुङ्गतमङ्गसंगतिकरास्तेषु। बलाधिकृतीनां इति विज्ञप्तीरशृणवम्। इतीति किम्। हे देव, इदं प्रत्यक्षीभूतं दाक्षिणात्यं बलं दक्षिणस्या दिशः आगतं दाक्षिणात्यम्। 'दक्षिणापश्चात्पुरसस्त्यक्' इत्यनेन त्यक्प्रत्ययः। बलं सैन्यं त्वं पश्येति क्रियाकारकसंबन्धः। कथंभूतं दाक्षिणात्यं बलम्। निटिलतटपट्टिकाप्रतानघटितोद्भटजूटम् निटिलतटे ललाटोपरितनभागे पट्टिकाप्रतानेन वस्त्रपट्टिकासमूहेन घटितः कृतो बद्धः उद्भटः उत्कटः जूटः केशशिखण्डकलापो येन तत्तथोक्तम्। त्वं तत्पश्य। पुनः कथंभूतं बलम्। एकशृङ्गमृगमण्डलमिव गण्डकसमूहमिव। कथंभूतं एकशृङ्गमृगमण्डलम्। उत्कोशकिंशुकप्रसूनमञ्जरीजालजटिलविषाणविकटम् उत्कोशानि विकसितानि यानि किंशुकप्रसूनानि पलाशपुष्पाणि तेषां मञ्जरीजालेन वल्लरीसमूहेन जटिलं वेष्टितं यद्विषाणं शृङ्गाणि चतुर्विशेषस्तेन विकटं विषमं प्रकटं वा तत्। पुनः कथंभूतं बलम्।

कितकपोलं पीलुकुलमिव, किर्मीरमणिविनिर्मितत्रिशरकण्ठिकम्, महामण्डलावगुण्ठितगलनालमान्यमीशानसैन्यमिव, आकुफणिकृतकालायसवलयकरालकराभोगम्, बालबिलेशयवेष्टितविटपभागं भद्रश्रियानोकहगहनमिव, आनाभिदेशोत्तम्भितासिधेनुकम्, अहीश्वरानुबद्धमध्यमेखलं मन्थानकाचलमिव, आवङ्क्षणोत्क्षिप्तनिबिडनिवसनं सकौपीनं वैखानसवृन्दमिव, अनेकाङ्कनामसंभावनोद्ग्रीवाननम्, आत्मस्तवाडम्बरोड्डमरमागधोत्कर्णितवद-

---

कर्तरीमुखचुम्बितामूलश्मश्रुवालम् कर्तरीमुखेन नापितोपकरणवक्त्रेण चुम्बिताः आ ईषत् मूलसंबन्धिनो निर्मूलं वा यथा भवत्येवं श्मश्रु तस्य अधरोपरिरोमरेखयोर्वालाः केशा यस्य तत्तथोक्तम्। पुनः कथंभूतं बलम्। पीलुकुलमिव गजवृन्दमिव। कथंभूतं पीलुकुलम्। उद्भिद्यमानमदतिलकितकपोलम् उद्भिद्यमान उत्पद्यमानो योऽसौ मदो दानं तेन तिलकितौ तिलकसंयुक्तौ कपोलौ गण्डस्थलौ यस्य तत्तथोक्तम्। पुनः कथंभूतं बलम्। किर्मीरमणिविनिर्मितत्रिशरकण्ठिकम् किर्मीरा विचित्रा ये मणयस्तैर्विनिर्मिता रचिता बद्धा त्रिशरा त्रिगुणा कण्ठिका कण्ठाभरणं यस्य तत्तथोक्तम्। पुनः कथंभूतं बलम्। ईशानसैन्यमिव श्रीमहादेवकटकमिव। कथंभूतं ईशानसैन्यम्। महामण्डलावगुण्ठितगलनालमान्यम् महामण्डलैः सर्पविशेषैरवगुण्ठितं यद्गलनालं कण्ठकन्दली तेन मान्यं माननीयम्। पुनः कथंभूतं बलम्। आकुफणिकृतकालायसवलयकरालकराभोगम् आकुफणिकूर्परस्पर्शवर्जितानि कृतानि चेष्टितानि यानि कालायसवलयानि लोहकटकानि तैः करालः उन्नतः कराभोगो बाहुविस्तारो यस्य तत्तथोक्तम्। पुनः कथंभूतं बलम्। भद्रश्रियानोकहगहनमिव। 'भद्रश्रियं चन्दनम्' इति पञ्जिकाभारो जिनदेवः। चन्दनतरुवनमिव। कथंभूतं भद्रश्रियानोकहगहनम्। बालबिलेशयवेष्टितविटपभागम् बालबिलेशयाः शिशुसर्पाः सर्पशिशवस्तैर्वेष्टितोऽवगुण्ठितो विटपभागः कटप्रभागो यस्य तत्तथोक्तम्। उक्तं च—'विस्तारो विटपोऽस्त्रियाम्।' तथा च—'स्कन्धादूर्ध्वं तरोः शाखाकटप्रो विटपो मतः।' शाखानां कटप्रः शाखाकटप्रः। पुनः कथंभूतं बलम्। आनाभिदेशोत्तम्भितासिधेनुकम् आनाभिदेशं नाभिदेशपर्यन्तं उत्तम्भिता वेष्टिता अवष्टब्धा असिधेनुका छुरिका येन यस्य वा तत्तथोक्तम्। पुनः कथंभूतं बलम्। मन्थानकाचलमिव मेरुपर्वतमिव। कथंभूतं मन्थानकाचलम्। अहीश्वरानुबद्धमध्यमेखलम् अहीश्वरेण शेषनागेन अनुबद्धा संयता मध्यमेखला कटिनी यस्य तत्तथोक्तम्। पुनः कथंभूतं बलम्। आवङ्क्षणोत्क्षिप्तनिबिडनिवसनम् आवङ्क्षणं उरुसंधिपर्यन्तं उत्क्षिप्तं मुक्तं निबिडं दृढं निवसनं वस्त्रं येन यस्य वा तत्तथोक्तम्। किमिव। वैखानसवृन्दमिव। कथंभूतं वैखानसवृन्दम्। सकौपीनं कक्षापटसहितम्। पुनः कथंभूतं बलम्। अनेकाङ्कनामसंभावनोद्ग्रीवाननम् अनेकेषां नानाविधानां अङ्कनाम्नां बिरुदावल्यविधेयानां संभावने आकर्णने उद्ग्रीवं उन्नतशिरोधरं आननं मुखं

नम्, ऊर्ध्वनखरेखालिखितदेहप्रासादं देव, इदं विहितविविधायुधवर्तनौचित्यं दाक्षिणात्यं बलम्

चण्डांशुरश्मिसंपर्कज्वलत्कुन्ताग्रमण्डलम् ।
त्वत्प्रतापानलव्याप्तं विदधानमिवाम्बरम् ॥ २४४ ॥

इतश्च पर्यन्तखर्वितकुन्तलतयार्धमुष्टिमितमस्तकमध्यकेशम्, अतिप्रलम्बश्रवणदेशदोलायमानस्फारसुवर्णकर्णिकाकिरणकोटिकमनीयमुखमण्डलतया कपोलस्थलीपरिकल्पितप्रफुल्लकर्णिकारकाननमिव, समुत्कर्षितसृक्कचिवुकजङ्घाग्रभागरोमलोमशम्, अहरहःप्रमार्जितदशनप्रकाशपेशलवदनतया प्रद-

---

यस्य तत्तथोक्तम् । पुनः कथंभूतं बलम् । आत्मस्तवाडम्बरोड्डमरमागधोत्कर्णितवदनम् आत्मनः स्तवाडम्बरः स्तवनाटोपस्तेन उड्डमरा उत्कटा मागधाः स्तुतिपाठकास्तेषु उत्कर्णितमूर्ध्वीकृतं वदनं येन यस्य वा तत्तथोक्तम् । पुनः कथंभूतं बलम् । ऊर्ध्वनखरेखालिखितनिखिलदेहप्रासादम् ऊर्ध्वाभिरुन्नताभिर्नखरेखाभिरालिखितश्चित्रितो निखिलो देहप्रासादः शरीरमन्दिरं यस्य तत्तथोक्तम् । हे देव, इदं प्रत्यक्षीभूतं दाक्षिणात्यं बलम् । पुनः कथंभूतं बलम् । विहितविविधायुधवर्तनौचित्यम् विहितं विविधेषु नानाप्रकारेषु आयुधेषु शस्त्रेषु वर्तनौचित्यं असहाययोग्यता येन तत्तथोक्तम् ।

चण्डेत्यादि । दाक्षिणात्यबलं कथंभूतम् । चण्डांशुरश्मिसंपर्कज्वलत्कुन्ताग्रमण्डलम् चण्डांशोः श्रीसूर्यस्य ये रश्मयः किरणास्तेषां संपर्केण स्पर्शेन ज्वलत् जाज्वल्यमानं कुन्ताग्रमण्डलं प्राप्तपर्यन्तवलयं यस्य तत्तथोक्तम् । बलं किं कुर्वाणम् । अम्बरमाकाशं त्वत्प्रतापानलव्याप्तं विदधानमिव । उत्प्रेक्षालंकारः ॥

इतश्च देव, इदं द्रामिलं बलं पश्य । कथंभूतं द्रामिलं बलम् । पर्यन्तखर्वितकुन्तलतयार्धमुष्टिमितमस्तकमध्यकेशम् पर्यन्ते शिरोधःपार्श्वे खर्विताः कर्तरिता ये कुन्तलाः पर्यन्तखर्वितकुन्तलास्तेषां भावस्तत्ता तया अर्धमुष्टिना मिता मापिता मस्तकस्य मध्यकेशा यस्य तत्तथोक्तम् । पुनः कथंभूतं बलम् । अतिप्रलम्बश्रवणदेशदोलायमानस्फारसुवर्णकर्णिकाकिरणकोटिकमनीयमुखमण्डलतया कपोलस्थलीपरिकल्पितप्रफुल्लकर्णिकारकाननमिव अतिप्रलम्बः अतिदीर्घः योऽसौ श्रवणदेशः तत्र दोलायमाना प्रङ्खन्ती स्फारा प्रचुरा या सुवर्णकर्णिका कनकवर्णभूषणं तस्याः किरणकोटिभी रश्म्यग्रैः कमनीयं यन्मुखमण्डलं तस्य भावः तत्ता तया कपोलस्थलीषु परिकल्पितं रचितं प्रफुल्लकर्णिकाराणां परिव्याधतरूणां काननमिव । पुनः कथंभूतं बलम् । समुत्कर्षितसृक्कचिवुकजङ्घाग्रभागरोमलोमशम् । समुत्कर्षितानि वृद्धिं प्राप्तानि सृक्काणां ओष्ठपर्यन्तानां चिवुकानां अधराधरभागानां जङ्घानां जान्वधोभागानां अग्रभागेषु रोमाणि तैर्लोमशं रोमव्याप्तम् । आकुलमित्यर्थः । पुनः कथंभूतं बलम् । अहरहःप्रमार्जितदशनप्रकाशपेशलवदन-

र्शितस्वकीययशःप्रसूतिक्षेत्रमिव, अनङ्गग्रहपरिवेषवर्तुलदन्तक्षतक्षपितभुजशिखरम्, अनवरतक्षरत्क्षपारसरागरक्तशितिशरीरतया कजकिंजल्ककलुषकालिन्दीकल्लोलकुलमिव, मायूरबर्हातपत्रप्रभाश्यामिकासंपादितगगनगारुडोपलकुट्टिमच्छायम्, दरदद्रवापाटलफलकान्तिकुटिलकटितटोल्लासलालसकरम्, संध्याभ्रगर्भविभ्रान्ताभ्रियसंदर्भनिर्भरं नभ इव, देव, इदमनेकदोलिकाविलं द्रामिलं बलम्।

इतश्चोत्तप्तकाञ्चनकान्तकायपरिकरम्, करोत्तम्भितकर्तरीकणयकृपाण-

---

तया प्रदर्शितस्वकीययशःप्रसूतिक्षेत्रमिव अहरहर्दिनं दिनं प्रति प्रमार्जिता वर्जिता घर्षणमापिता ये दशना दन्तास्तेषां प्रकाश उद्द्योतस्तेन पेशलं यद्वदनं तस्य भावस्तत्ता तया प्रदर्शितं प्रकटीकृतं स्वकीयस्य यशसः प्रसूतिक्षेत्रमिव उत्पत्तिसस्याधिकरणमिव। पुनः कथंभूतं बलम्। अनङ्गग्रहपरिवेषवर्तुलदन्तक्षतक्षपितभुजशिखरम् अनङ्गः स एव ग्रहस्तस्य परिवेषो मण्डलं तद्वत् वर्तुलानि यानि दन्तक्षतानि दन्तवर्तितपदानि तैः क्षपितानि भुक्तानि शोभितानि भुजशिखराणि यस्य तत्तथोक्तम्। पुनः कथंभूतं बलम्। अनवरतक्षरत्क्षपारसरागरक्तशितिशरीरतया कजकिंजल्ककलुषकालिन्दीकल्लोलकुलमिव अनवरतं निरन्तरं क्षरन् प्रोद्गरन् योऽसौ क्षपारसो हरिद्राद्रवस्तस्य रागेण रक्तं शिति कालवर्णं यच्छरीरं तस्य भावस्तत्ता तया कजानां पद्मपुष्पाणां योऽसौ किंजल्कस्तेन कलुषं मिश्रितं कालिन्द्या यमुनायाः कल्लोलानां कुलमिव वृन्दमिव। पुनः कथंभूतं बलम्। मायूरबर्हातपत्रप्रभाश्यामिकासंपादितगगनगारुडोपलकुट्टिमच्छायम् मायूरबर्हाणां यानि आतपत्राणि श्रीछत्रकर्यस्तेषां प्रभाणां या श्यामिका श्यामलत्वं तया संपादिता गगने गारुडोपलानां गारुडोद्गाररत्नानां कुट्टिमस्य बद्धभूमेश्छाया शोभा येन तत्तथोक्तम्। पुनः कथंभूतं बलम्। दरदद्रवापाटलफलकान्तिकुटिलकटितटोल्लासलालसकरम् दरदद्रवेण हिङ्गुलकरसेन आपाटलं रक्तं यत्फलं फलकं खेटकस्तस्य कान्त्या तेजसोपलक्षितं कुटिलं वक्रीकृतं यत् कटितटं श्रोणिप्रदेशस्तस्योल्लासे उच्छ्वासने लालसः साकाङ्क्षः करो हस्तो यस्य तत्तथोक्तम्। पुनः कथंभूतं बलम्। संध्याभ्रगर्भविभ्रान्ताभ्रियसंदर्भनिर्भरं नभ इव संध्याभ्राणां गर्भे विभ्रान्ता भ्रमन्तो ये अभ्रिया वज्राग्नयस्तेषां संदर्भैः समूहैर्निर्भरं संयुक्तं नभ इव आकाशमिव। पुनः कथंभूतं बलम्। अनेकदोलिकाविलं नानाझम्पानसंयुक्तम्॥

हे देव, इतश्च एकस्मिन् पार्श्वे औत्तरपथं उत्तरपथादागतं बलं त्वं पश्य। कथंभूतमौत्तरपथं बलम्। उत्तप्तकाञ्चनकान्तकायपरिकरम् उत्तप्तमुत्कालितं यत् काञ्चनं काञ्चनवत् कान्तो योऽसौ कायस्तस्य परिकरः प्रारम्भो यस्य तत्तथोक्तम्। उक्तं च— 'परिकरः पर्यङ्कपरिवारयोः प्रगाढं गात्रिकाबन्धे च'। पुनः कथंभूतं बलम्। करोत्तम्भित-

प्रासपट्टिशबाणासनम्, आसनविशेषवशातिविद्रुतमितद्रवखुरक्षोभितकुम्भिनीभागम्, भागभागार्पितानेकवर्णवसनवेष्टितोष्णीषम्, अनवधिप्रकारप्रसवस्तबकचुम्बितशिखम्, विजयश्रीनिवासवनमिवेदं देव, तुरगवेगवर्णनोदीर्णं यथायथकथमौत्तरपथं बलम् ।

इतश्च जयलक्ष्मीवक्षोजमुखमण्डलश्यामशरीरप्रभापटलकुवलयितनभःसरोभिर्द्रवद्दानासवासारसौरभागमगण्डूषिताशेषदिग्विलासिनीवदनैः कद-

---

कर्तरीकणयकृपाणप्रासपट्टिशबाणासनम् करेषु उत्तम्भितानि ऊर्ध्वीकृतानि उद्भ्रामितानि वा कर्तरी च छेदनिकरः, कणयश्च लोहबाणविशेषः, कृपाणश्च खड्गः, प्रासश्च कुन्तः, पट्टिशश्च यदूसः, बाणासनं च धनुः, कर्तरीकणयकृपाणप्रासपट्टिशबाणासनानि करेषूत्तम्भितानि कर्तरीकणयकृपाणप्रासपट्टिशबाणासनानि येन तत्तथोक्तम् । पुनः कथंभूतं बलम् । आसनविशेषवशातिविद्रुतमितद्रवखुरक्षोभितकुम्भिनीभागम् आसनविशेषस्य उभयोरुपीडनविशेषस्य वशा अतिविद्रुता अतिधाविता ये मितद्रवा अश्वास्तेषां खुरैः शफैः क्षोभितः संचालितः कुम्भिनीभागो येन तत्तथोक्तम् । पुनः कथंभूतं बलम् । भागभागार्पितानेकवर्णवसनवेष्टितोष्णीषम् भागभागेषु मध्यमध्येषु अर्पितानि वेष्टितानि यानि अनेकवर्णानि श्वेतपीतहरितारुणकृष्णानि वसनानि वस्त्राणि वेष्टितो बद्धः उष्णीषः केशपाशो येन तत्तथोक्तम् । पुनः कथंभूतं बलम् । अनवधिप्रकारप्रसवस्तबकचुम्बितशिखम् अनवधिप्रकारप्रसवस्तबकाः पुष्पगुलुञ्छास्तैश्चुम्बिता स्पृष्टा शिखा शिरोग्रभागो यस्य तत्तथोक्तम् । पुनः कथंभूतं बलम् । विजयश्रीनिवासमिव विजयलक्ष्मीनिवासस्य काननमिव । यथा वनं अनेकपुष्पस्तबकसंयुक्तं भवति । पुनः कथंभूतं बलम् । तुरगवेगवर्णनोदीर्णं तुरगाणां वेगस्य वर्णने प्रशंसने उदीर्णमुद्रिक्तं उत्कटम् । यथायथकथं सत्यवचनकथनशीलम् ॥

इतश्चेत्यादि । हे देव, इतश्चैकस्मिन् पार्श्वे इदं प्रत्यक्षीभूतं तैरभुक्तं यमुनातटबलं यमुनपुरसैन्यं त्वं पश्य । कथंभूतं तैरभुक्तं बलम् । करिवरैस्तमालिताखिलाशावलयम् तमालितं तमालवृक्षवत् श्यामलितं अखिलं समस्तं आशावलयं येन तत्तथोक्तम् । कथंभूतैः करिवरैः । जयलक्ष्मीवक्षोजमुखमण्डलश्यामशरीरप्रभापटलकुवलयितनभःसरोभिः जयलक्ष्म्याः यौ वक्षोजौ तयोः मुखमण्डलं चूचुकप्रदेशस्तद्वत् श्यामं कृष्णं यच्छरीरं तस्य प्रभापटलैः कृष्णतेजःसमूहैः कुवलयितं उत्पलविशेषसहितं कृतं नभःसरो यैः करिवरैस्ते तथोक्तास्तैः । उक्तं च—'स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च । इन्दीवरं च नीलेऽस्मिन्सिते कुमुदकैरवे ॥' इति वचनात् अत्र कुवलयशब्देन नीलोत्पलं ग्राह्यम् । पुनः कथंभूतैः करिवरैः । द्रवद्दानासवासारसौरभागमगण्डूषितादिशेषदिग्विलासिनीवदनैः द्रवत् निर्गलत् यद्दानं मदस्तदेवासवो मद्यं तस्य आसारो वेगवद्वर्षस्तस्य सौरभागमेन सौगन्ध्यागमनेन गण्डूषितानि अशेषाणां दिग्विलासिनीनां वदनानि यैस्ते

लिकाग्रलग्नभुजगाशनबर्हवित्रासितसावित्रस्यन्दनोरगरज्जुभिः पवमानबलचलत्पताकाञ्चलाचरितविरोचनचामरोपचारैः करिवरैस्तमालिताखिलाशावलयम्, अनवरतचिपिटचर्वणदीर्णदशनाग्रदेशैर्गुवाकफलकषायितवदनवृत्तिभिः स्वभावादेवातिकोपनहृदयैराप्रपदीनचोलकस्खलितगतिवैलक्ष्योत्क्षिप्तपर्यन्तजनदुर्वाग्विधिभिः प्रकामायामलोमचूडैर्गौडैराकुलितसकलसैनिकम्, विचित्रसूत्रगुम्फितस्फारफरत्कोत्करकर्बुरितसर्वदाक्षायणीदेशम्, उत्खातखड्गव-

---

तथोक्तास्तैः। पुनः कथंभूतैः करिवरैः। कदलिकाग्रलग्नभुजगाशनबर्हवित्रासितसावित्रस्यन्दनोरगरज्जुभिः कदलिका ध्वजास्तासामग्रेषु लग्ना लिखिता ये भुजगाशनबर्हा मयूरपिच्छास्तैर्वित्रासिता भयं प्रापिताः सावित्रस्यन्दनस्य श्रीसूर्यरथस्य उरगरज्जवः सर्पबन्धनानि यैस्ते तथोक्तास्तैः। पुनः कथंभूतैः करिवरैः। पवमानबलचलत्पताकाञ्चलाचरितविरोचनचामरोपचारैः पवमानस्य मारुतस्य बलेन सामर्थ्येन चलन्ति उत्पतन्ति यानि पताकाञ्चलानि ध्वजप्रान्तास्तैराचरितः कृतो विरोचनस्य श्रीसूर्यस्य चामरोपचारः प्रकीर्णकपूजनं यैस्ते तथोक्तास्तैः। पुनः कथंभूतैस्तैरभुक्तं बलम्। गौडैः गौडदेशसैनिकैः आकुलितसकलसैनिकम् आकुलिताः किंकर्तव्यतामूढीकृताः सकलाः समस्ता सैनिकाः सेनायां समवेता सेनानां संबन्धिनः पुरुषा यस्य तत्तथोक्तम्। उक्तं च—'सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते।' कथंभूतैर्गौडैः। अनवरतचिपिटचर्वणदीर्णदशनाग्रदेशैः अनवरतं चिपिटानां पृथुकानां चर्वणेन खादनेन दीर्णा विदारिता क्षरिता दशनाग्रदेशा दन्तप्रान्तप्रदेशा येषां गौडानां ते तथोक्तास्तैः। उक्तं च—'पृथुकः स्याच्चिपिटको धान्यभ्रष्टयवे स्त्रियः'। पुनः कथंभूतैः गौडैः। गुवाकफलकषायितवदनवृत्तिभिः गुवाकफलैः पूगीफलैः कषायिता रञ्जिता वदनवृत्तिर्येषां ते तथा तैः। पुनः कथंभूतैः गौडैः। स्वभावादेवातिकोपनहृदयैः स्वभावादेव प्रकृत्यैव अतिकोपनहृदयैरतिशयेन कोपनमनोभिः। पुनः कथंभूतैः गौडैः। आप्रपदीनचोलकस्खलितगतिवैलक्ष्योत्क्षिप्तपर्यन्तजनदुर्वाग्विधिभिः आप्रपदीनः पादाग्रं प्राप्तो योऽसौ चोलकः कूर्पासकः (एव सनाथिका इति देशात्) तेन स्खलिता भग्ना या गतिर्गमनं तया जातं यद्वैलक्ष्यं विप्रतीपस्तेन उत्क्षिप्ता दत्ता पर्यन्तजनेभ्यः पुरस्ताल्लोकेभ्यो दुर्वाग्विधयो दुर्वचनानि यैस्ते तथा तैः। पुनः कथंभूतैर्गौडैः। प्रकामायामलोमचूडैः प्रकाममतिशयेन आयामो दैर्घ्यं लोमचूडानां शिखानां केशपाशानां येषां ते तथा तैः। पुनः कथंभूतैः तैरभुक्तं बलम्। विचित्रसूत्रगुम्फितस्फारफरत्कोत्करकर्बुरितसर्वदाक्षायणीदेशम् विचित्राणि पञ्चवर्णानि यानि सूत्राणि तैर्गुम्फिताः ग्रन्थिताः स्फाराः प्रचुरा ये फरत्कोत्कराः खेटकसमूहास्तैः कर्बुरितो विचित्रवर्णीकृतः सर्वः समस्तो दाक्षायणीदेशो गगनमण्डलं येन तत्तथोक्तम्। उक्तं च—'दाक्षायिण्यश्चन्द्रदारास्तारास्त्युस्तारकास्तु याः। विधुश्च दाक्षायणीरमणः' इति हलायु-

लानविसारिधाराकरनिकरतरङ्गितगगनभागम्, आहवैकानुरागं देव, इदं जलयुद्धबद्धक्रियाविशेषासक्तं तैरभुक्तं बलम् ।

इतश्चाजानुलम्बमाननिवसनम्, माहिषविषाणघटितमुष्टिकटारकोत्कट-कटीभागम्, निरन्तरघनदीर्घदेहलोमकलापकल्पितसर्वाङ्गीणकङ्कटम्, अधस्तिर्यक्प्रबन्धप्रवृद्धकूर्चकेशतया क्रियानुमेयनाभिनासानयनश्रवणदेशम्, उभयांसोत्तम्भितभूरिभस्त्रतया त्रिशिरोनिशाचरानीकमिव, लघुदृढदुष्कर-दूरलक्ष्यादिपातादिपाटवापहसितकृपकृपधर्मकर्णार्जुनद्रोणद्रुपदभर्गभार्गवम्, घृताधिज्याजकावं देव, इदं गौर्जरं बलम् ।

---

धः । पुनः कथंभूतैस्तैरभुक्तं बलम् । उत्खातखड्गवलानविसारिधाराकरनिकरतरङ्गितगगन-भागम् उत्खाता उपरि प्रहारा ये खड्गा निस्त्रिंशास्तेषां वलानविसारिणी उच्छलनप्र-सरणशीला या धारा अग्रभागस्तस्या ये कराः किरणास्तेषां निकरैः समूहैस्तरङ्गित उ-त्कल्लोलीकृतो गगनभाग आकाशप्रदेशो येन तत्तथोक्तम् । पुनः कथंभूतं तैरभुक्तबलम् । आहवैकानुरागं संग्रामैकप्रीतिकम् । पुनः कथंभूतम् । जलयुद्धबद्धक्रियाविशेषासक्तम् जलयुद्धे बद्धो योऽसौ क्रियाविशेषस्तत्र आसक्तं रक्तम् ॥

इतश्चेत्यादि । हे देव, इतश्च एकस्मिन् पार्श्वे इदं प्रत्यक्षीभूतं गौर्जरं बलं त्वं पश्य । कथंभूतं गौर्जरं बलम् । आजानुलम्बमाननिवसनम् आजानु जङ्घोरुसंधिपर्यन्तं लम्बमानं दीर्घं निवसनं चेलनकं वस्त्रं यस्य तत्तथोक्तम् । पुनः कथंभूतम् । माहिषविषाणघटितमुष्टि-कटारकोत्कटकटीभागम् महिषस्येदं माहिषं तच्च विषाणं शृङ्गं तेन घटितो निर्मितो योऽसौ मुष्टिः संग्राहः खाहवस्थानं स चासौ कटारकश्छुरिकाविशेषस्तेन उत्कट उद्रिक्तः कटीभागः श्रोणीप्रदेशो यस्य तत्तथोक्तम् । पुनः कथंभूतम् । निरन्तरघनदीर्घदेहलोमकलापकल्पित-सर्वाङ्गीणकङ्कटम् निरन्तराणि अविच्छिन्नानि घनानि निविडानि दीर्घाणि अह्रस्वानि यानि देहलोमानि शरीररोमाणि तेषां कलापः संघातः तेन कल्पितो रचितः सर्वाङ्गीणः सर्वशरीरे कङ्कटः कवचो यस्य तत्तथोक्तम् । पुनः कथंभूतम् । अधस्तिर्यक्प्रबन्धप्रवृद्धकूर्चकेशतया क्रियानुमेयनाभिनासानयनश्रवणदेशम् अधोऽधस्तनभागे तिर्यक् वामदक्षिणपार्श्वयोः प्रब-न्धेन निविडतया प्रवृद्धा वृद्धिं गता ये कूर्चकेशा मुखरोमाणि तेषां भावस्तत्ता तया कृत्वा क्रियानुमेया क्रियोपमाना नाभिनासनयनश्रवणदेशा यस्य तत्तथोक्तम् । अधस्तात् कूर्चं नाभिदेशं गतः तिर्यक् नासानयनयोः श्रवणयोश्च देशं प्राप्त इत्यर्थः । दीर्घविचारपूर्वक-मित्यर्थः । पुनः कथंभूतम् । उभयांसोत्तम्भितभूरिभस्त्रतया त्रिशिरोनिशाचरानीकमिव उभयोरंसयोर्भुजशिखरयोरुत्तम्भिते बद्धे भूरि वृहद्भस्त्रा बाणधी तयोः भावस्तत्ता तया कृत्वा त्रिमस्तकराक्षसवृन्दमिव । पुनः कथंभूतम् । लघुदृढदुष्करदूरलक्ष्यादिपातादिपाट-वापहसितकृपकृपधर्मकर्णार्जुनद्रोणद्रुपदभर्गभार्गवम् लघु लघुसंधानं दृढं प्रहारादि दुष्करो

एवमेतान्यपराण्यपि हिमालयमलयमगधमध्यदेशमाहिष्मतीपतिप्रभृतीनामवनीपतीनां बलानि देवस्य विजययात्रोद्योगमाकर्ण्यागतानि पश्येति बलाधिकृतीनां विज्ञप्तीरश्रृणवम् ।

शूरोऽर्थशास्त्रनिपुणः कृतशस्त्रकर्मा
संग्रामकेलिचतुरश्चतुरङ्गयुक्तः ।
भर्तुर्निदेशवशगोऽभिमतः स्वतन्त्रे
सेनापतिर्नरपतेर्विजयागमाय ॥ २४५ ॥

कदाचित्पुराणपुरुषस्तवनवादिबन्दिवागुद्या(द्ध)वेषु सर्वसेवाप्रस्तावेषु

---

दुःसाध्यो दूरलक्ष्यादिपातादि उड्डीयगमनं इत्यादौ यत्पाटवं पटुत्वं तेन अपहसितः तिरस्कृतः कृपश्च कृपाचार्यः, कृपधर्मश्च कृपधर्माचार्यः, कर्णश्च पूर्वकौन्तेयः, अर्जुनश्च तृतीयपाण्डवः, द्रोणश्च कौरवपाण्डवगुरुः, द्रुपदश्च पाञ्चालीपिता, भर्गश्च भर्गनामा सुभटः शुक्रो वा, भार्गवश्च शुद्धो येन तत्तथोक्तम् । पुनः कथंभूतम् । धृताधिज्याजकावम् धृतं हस्ते कृतं अधिज्यमारोपितप्रत्यञ्चं आजकावं धनुर्येन तत्तथोक्तम् ॥

हे देव, एवं अमुना प्रकारेण एतानि प्रत्यक्षीभूतानि उक्तप्रकाराणि बलानि अपराण्यपि अन्यान्यपि बलानि त्वं पश्य । केषां बलानि । हिमालयमलयमगधमध्यदेशमाहिष्मतीपतिप्रभृतीनां अवनिपतीनां राज्ञां बलानि पश्य । पतिशब्दः प्रत्येकमभिसंबध्यते । हिमालयपतिश्च हिमालयनृपः, मलयपतिः चन्दनाचलस्वामी, मगधपतिश्च मगधदेशस्य राजा, मध्यदेशपतिश्च अयोध्याधिपतिः, माहिष्मतीपतिश्च माहिष्मतीदेशनगरस्य राजा, ते प्रभृतिरादिर्येषां जालंधरादीनां तेषां तथोक्तानाम् । कथंभूतानि बलानि । देवस्य भवतः विजययात्रोद्योगं दिग्विजयगमनोद्यमं आकर्ण्य श्रुत्वा आगतानि । दीपकप्रायालंकारः ॥

अत्र सेनापत्यवसरे सेनापतेर्वर्णनवृत्तम्—शूर इत्यादि । नरपतेर्नरेन्द्रस्य ईदृग्विधः सेनापतिर्विजयागमाय भवति । कथंभूतः सेनापतिः। शूरः सुभटः, अर्थशास्त्रनिपुणः नीतिशास्त्रकुशलः, कृतशस्त्रकर्मा अभ्यस्तसर्वायुधविधिः, संग्रामकेलिचतुरः रणक्रीडाकोविदः, चतुरङ्गयुक्तः हस्त्यश्वरथपदातिसंपन्नः, भर्तुः स्वामिनो निदेशवशगः आदेशवशः, स्वतन्त्रे निजसैन्ये अभिमतो अभीष्टः । जात्यलंकारः ॥

कदाचित् कस्मिंश्चिदवसरे सर्वसेवाप्रस्तावेषु अनिषिद्धद्वारावसरेषु संधिविग्रहिणां महादूतानां इति ईदृशी गीतिर्वचनानि आकर्णयामास आकर्णितवानहम् । कथंभूतेषु सर्वसेवाप्रस्तावेषु । पुराणपुरुषस्तवनवादिबन्दिवागुद्या(द्ध)वेषु पुराणपुरुषाणां यशोधीदीनां स्तवनवादिनां स्तुत्युद्भावकानां वन्दिनां स्तुतिपाठकानां वागुद्या(द्ध)वो वाचामुत्सवो येषु सर्वसेवाप्रस्तावेषु ते तथोक्तास्तेषु ।

त्वद्दण्डचण्डवेतण्डशुण्डाखण्डितमण्डलाः ।
कण्ठोत्कण्ठकुठारास्ते देवैता द्विषतां घटाः ॥ २४६ ॥

दूताः केरलचोलसिंहलशकश्रीमालपञ्चालकै-
रन्यैश्चाङ्गकलिङ्गवङ्गपतिभिः प्रस्थापिताः प्राङ्गणे ।
तिष्ठन्त्यात्मकुलागताखिलमहीसारं गृहीत्वा करे
देवस्यापि जगत्पतेरवसरः किं विद्यते वा न वा ॥ २४७ ॥

अवलगति कलिङ्गाधीश्वरस्त्वां करीन्द्रै-
स्तुरगनिवह एष प्रेषितः सैन्धवैस्ते ।
अयमपि च समास्ते पाण्ड्यदेशाधिनाथ-
स्तरलगुलिकहारप्राभृतव्यग्रहस्तः ॥ २४८ ॥

---

इतीति किम् । **त्वद्दण्डेत्यादि** । हे देव, ते तव द्विषतां शत्रूणां एताः प्रत्यक्षीभूताः घटाः श्रेणयः वर्तन्ते । कथंभूता द्विषतां घटाः । त्वद्दण्डचण्डवेतण्डशुण्डाखण्डितमण्डलाः त्वद्दण्डस्य भवत्सैन्यस्य चण्डाः प्रचण्डा ये वेतण्डा गजाः तेषां शुण्डाभिः करैः खण्डितानि विध्वंसितानि मण्डलानि भूमिभागाः यासां तास्तथोक्ताः । उक्तं च— 'आवर्तुलवृन्दभूभागेषु मण्डलाः ।' पुनः कथंभूताः । कण्ठोत्कण्ठकुठाराः कण्ठेषु ग्रीवासु उत्कण्ठा बद्धाः कुठाराः परशवो यासां याभिर्वा तास्तथोक्ताः । अतिशयालंकारः ॥

**दूता इत्यादि** । हे देवेति संबोधनपदं पूर्वोक्तमेव ग्राह्यम् । हे देव, दूताः देवस्य प्राङ्गणे तव चत्वरे तिष्ठन्ति आत्मकुलागताखिलमहीसारं करे हस्ते गृहीत्वा आत्मकुलेषु निजान्वयेषु आगता आयाता या अखिलाः समग्रा मह्यः पृथिव्यस्तासां सारं धनं प्राभृतं गृहीत्वा । कथंभूताः दूताः । केरलचोलसिंहलशकश्रीमालपञ्चालकैः प्रस्थापिताः प्रेषिताः केरलश्च दक्षिणदेशस्वामी, चोलश्च मञ्जिष्ठादेशभूपः, सिंहलश्च लङ्काद्वीपभूपतिः, शकश्च खुराशानदेशनरेन्द्रः, श्रीमालश्च श्रीमालवणिगुत्पत्तिदेशराजा, पञ्चालकश्च द्रुपदनृपदेशाधिपस्ते तथोक्तास्तैः । न केवलमेतैः प्रस्थापिताः । अन्यैश्च गौडगुर्जरास्तैरभुक्तादिभिर्नृपैश्चान्यैः अङ्गकलिङ्गवङ्गपतिभिः प्रस्थापिता अङ्गश्च चम्पापुराधीशः, कलिङ्गश्च कोटिशिलादेशदन्तपुरस्वामी, वङ्गश्च पूर्वसमुद्रतटदेशस्वामी, ते तथा तैः । देवस्यापि भवतः अवसरः प्रस्तावः किं वा विद्यते अस्ति, न वा विद्यते नास्ति । कथंभूतस्य देवस्य । जगत्पतेः पृथ्वीपतेः समुच्चयालंकारः ॥

**अवलगतीत्यादि** । हे राजन्, अवलगति कलिङ्गाधीश्वरः सेवते । कोसौ कलिङ्गाधीश्वरः दन्तपुरपत्तनपतिः अवलगति । त्वां भवन्तम् । कैः कृत्वा अवलगति । करीन्द्रैः शुण्डालाधीश्वरैः । हे राजन्, सैन्धवैः सिन्धुनदीतटदेशराजभिः ते तव प्रेषित एष प्रत्यक्षीभूतः तुरगनिवहो जात्यश्वसमूहः । हे राजन्, अयमपि चं एषोऽपि च पाण्ड्य-

काश्मीरैः कीरनाथः क्षितिप मृगमदैरेष नेपालपालः
कौशेयैः कौशलेन्द्रः शिशिरगिरिपतिर्ग्रन्थिपर्णैरुदीर्णैः।
श्रीचन्द्रश्चन्द्रकान्तैर्विविधकुलधनैर्मागधः प्राभृतैस्त्वां
द्रष्टुं द्वारे समास्ते यदिह समुचितं देव तन्मां प्रशाधि ॥ २४९॥

इति संधिविग्रहिणां गीतीराकर्णयामास।

वाचयति लिखति कवते गमयति सर्वा लिपीश्च भाषाश्च।
आत्मपरस्थितिकुशलः सप्रतिभः संधिविग्रही कार्यः॥ २५०॥

---

देशाधिनाथः समास्ते द्वारे तिष्ठति। कथंभूतः। पाण्ड्यदेशाधिनाथः। तरलगुलिकहारप्राभृतव्यग्रहस्तः। उक्तं च—'हारमध्ये स्थितं रत्नं नायकं तरलं विदुः।' तरलानां स्थूलानां गुलिकानां मुक्ताफलानां ये हाराः मुक्तामालास्तेषां प्राभृतेन उपायनेन व्यग्रौ व्यासक्तौ वा हस्तौ यस्य स तथोक्तः। समुच्चयालंकारः॥

**काश्मीरैरित्यादि**। हे देव, कीरनाथः शुकदेशस्वामी काश्मीरदेशाधिपः काश्मीरैः जात्यकुङ्कुमैः प्राभृतैः त्वां भवन्तं द्रष्टुमवलोकितुं द्वारे सिंहद्वारे समास्ते तिष्ठति। हे क्षितिप हे राजन्, एष प्रत्यक्षीभूतो नेपालपालः नेपालदेशस्वामी मृगमदैः कस्तूरिकाभिः प्राभृतैः कृत्वा तिष्ठति। कौशलेन्द्रः विनीतापुरपतिः कौशेयैः पटीरवस्त्रैः त्वां द्रष्टुं द्वारे समास्ते। शिशिरगिरिपतिः हिमाचलपतिः उदीर्णैरुत्कटैः ग्रन्थिपर्णैर्नगरवस्तुभिः त्वां द्रष्टुं द्वारे समास्ते। उक्तं च—'ग्रन्थिपर्णं शुकं बर्हं पुष्पं स्थौणेयकुक्कुरे। शुकपर्णं चित्रचूडं शुकपुच्छं शुकन्दगू (?)॥' शीर्णलोमकं विकवाख्यं च गन्धद्रव्यविशेषः। श्रीचन्द्रः कैलासगिरिपतिः चन्द्रकान्तैश्चन्द्रकान्तमणिभिः त्वां द्रष्टुं द्वारे समास्ते। हे देव, मागधः मगधदेशपतिः विविधकुलधनैः नानाप्रकारान्वयागतस्वापतेयैः प्राभृतैस्त्वां भवन्तं द्रष्टुं द्वारे समास्ते। यत् किमिपि इह अस्मिन्नर्थे समुचितं योग्यं तत् मां प्रशाधि आदिश। दीपकालंकारः॥

**वाचयति लिखतीत्यादि**। यो वाचयति परिभाषते वाचनविधौ इति विद्यानन्दः। लिखति वर्णविन्यासं करोति लेखने लिखतीति विद्यानन्दः। कवते वर्णयति। 'कव्रृ वर्णे' 'कुङ् शब्दे' वा इति भीमसेनः। गमयति स्वहृदयस्थमर्थमपरहृदये आरोपयति। सर्वाः समस्ताः लिपीरष्टादशलिपीर्भाषाश्च गौडगौर्जरलाटकर्णाटाधिपांश्च गमयति ज्ञापयति। आत्मपरस्थितिकुशलः स मे स्वामी एतावच्छक्तिमान् परः शत्रुरेतावच्छक्तिमान् इति स्वपरमर्यादापरिज्ञाने कुशलः सप्रतिभः धर्मार्थकामादिशास्त्रेषु चमत्कुर्वद्बुद्धिः संधिविग्रही संधिविग्रहयोः प्रमाणभूतः। संधिविग्रही तु रामस्य हनुमानिव। कार्यः कर्तव्यः त्वया। समुच्चयालंकारः॥

कदाचित्

येऽभ्यर्णा दूरास्ते ये दूरास्ते भवन्ति चाभ्यर्णाः ।
पथिकजनेषु निसर्गात्तरुवद्भृत्याः क्षितीशेषु ॥ २५१ ॥

इति न्यायादवसरमलभमानस्य चिरसेवकसमाजस्य विज्ञप्तय इव नर्मसचिवोक्तयः प्रतिपन्नकामचारव्यवहारेषु स्वैरविहारेषु मम गुरुशुक्रविशालाक्षपरीक्षित्पराशरभीमभीष्मभारद्वाजादिप्रणीतनीतिशास्त्रश्रवणसनाथं श्रुतिपथमभजन्त ।

तथा हि ।

नृपलक्ष्मीः खलभोग्या न जातु गुणशालिभिर्महापुरुषैः ।
भिक्षोर्न हि नखवृद्धेः फलमपरं पुन्दकण्डूतेः ॥ २५२ ॥

---

कदाचित् कस्मिंश्चिदवसरे नर्मसचिवोक्तयः भण्डवचनानि मम मे स्वैरविहारेषु स्वेच्छया पर्यटनेषु श्रुतिपथं कर्णमार्गं अभजन्त आकर्णितवानहमित्यर्थः । कथंभूतेषु स्वैरविहारेषु । प्रतिपन्नकामचारव्यवहारेषु स्वेच्छाचारस्य व्यवहारः प्रवृत्तिर्येषु ते तथा तेषु । नर्मसचिवोक्तयः कथंभूताः । चिरसेवकसमाजस्य विज्ञप्तय इव दीर्घकालकिंकरसमूहस्य विज्ञापनावसरे नर्मसचिववचनानामाकर्णने कोऽल्पादरो नास्तीत्यर्थः । कथंभूतस्य चिरसेवकसमाजस्य । इति न्यायात् इति दृष्टान्तेन अवसरं अलभमानस्य ।

इतीति किम् । **येऽभ्यर्णा इत्यादि** । क्षितीशेषु राजसु निसर्गात् स्वभावेन पथिकजनेषु अध्वलोकेषु तरुवद्वृक्षवत् ये भृत्याः अभ्यर्णाः समीपतरा भवन्ति ते दूरा विप्रकृष्टा भवन्ति । ये दूरास्तेऽभ्यर्णा निकटवर्तिनो भवन्ति । दृष्टान्तः ॥

कथंभूतं श्रुतिपथम् । गुरुशुक्रविशालाक्षपरीक्षित्पराशरभीमभीष्मभारद्वाजादिप्रणीतनीतिशास्त्रश्रवणसनाथम् गुरुश्च देवगुरुः, शुक्रश्च दैत्यगुरुः विशालाक्षः नीतिशास्त्रकर्तृविशेषः, परीक्षित् एकस्तम्भप्रासादोपरि स्थितो यो बदरफलमध्यस्थितसर्पेण दष्टः, पराशरश्च मत्स्यगन्धावल्लभ ऋषिः, भीमश्च भीमसेनकविर्मध्यमपाण्डवो वा, भीष्मश्च शान्तनुनृपतनूजः, भारद्वाजश्च ब्राह्मणविशेषः, ते आदिर्येषां बल्लभदेवव्यासनारदादीनां तैः प्रणीतानि नीतिशास्त्राणि तेषां श्रवणेन आकर्णनेन सनाथः सहितो यः श्रुतिपथः स तथोक्तस्तम् ॥

तथा हि । ता एव नर्मसचिवोक्तयः उच्यन्ते । **नृपलक्ष्मीरित्यादि** । नृपलक्ष्मी राज्यश्रीः खलभोग्या खलानां दुर्जनानां भोग्या भवति । महापुरुषैः सत्पुरुषैः जातु कदाचित् भोग्या न भवति । कथंभूतैर्महापुरुषैः । गुणशालिभिर्गुणशीलैः । युक्तोऽयमर्थः— भिक्षोर्यतिवरस्य भिक्षुशब्देन श्वेताम्बरस्य वा नखवृद्धेः पुन्दकण्डूतेरासन्नकण्डूपतानात् अपरमन्यत्फलं लाभो न वर्तते । कथम् । हि स्फुटमिति शेषः । अर्थान्तरन्यासालंकारः॥

ये क्लिश्यन्ते नृपतिषु तेषु न जायेत जातुचिल्लक्ष्मीः।
दृष्टिः पुरोऽभिधावति फलमुपभुङ्क्ते नितम्बस्तु॥ २५३॥
समरभरः सुभटानां फलानि कर्णेजपैस्तु भोग्यानि।
करिदशना इव नृपतेर्बाह्याः क्लेशाय खादनेऽन्तस्थाः॥ २५४॥
स्रक्पुष्पमिव निसर्गाद्गुणेषु नृपतिः पराङ्मुखः प्रायः।
कोश इवात्मविदारिणि निस्त्रिंशे संमुखो भवति॥ २५५॥
स महत्त्वस्य हि दोषो यत्त्वं नृप भजसि विरसतां पश्चात्।
पत्युः सरितामारात्सरसत्वं वारिणो न तद्भावे॥ २५६॥
कृतक्लेशेषु भृत्येषु नोपकुर्वन्ति ये नृपाः।
जन्मान्तरेऽधिकश्रीणां तेषां ते गृहकिंकराः॥ २५७॥

---

ये इत्यादि। ये पुरुषा नृपतिषु राजसु क्लिश्यन्ते क्लेशं सहन्ते तेषु पुरुषेषु जातुचित् कदाचित् क्वचिल्लक्ष्मीर्न जायेत नोत्पद्यते। दृष्टिश्चक्षुः पुरोऽग्रतोऽभिधावति शीघ्रगमनं करोति। तस्य अभिधावनस्य तत्फलं लाभं नितम्बः उपभुङ्क्ते। दृष्टान्तालंकारः॥

समरेत्यादि। समरभरः संग्रामातिशयः सुभटानां शूराणां भवति। समरभरफलानि तु कर्णेजपैः पिशुनैर्भोग्यानि आस्वादनीयानि भवन्ति। नृपतेर्नरेन्द्रस्य बाह्याः सुभटाः क्लेशाय भवन्ति। खादने आस्वादने अन्तस्थाः पिशुनाः भवन्ति। क इव। करिदशना इव हस्तिनां दन्ता इव। यथा बाह्या हस्तिनां दन्ताः क्लेशाय भवन्ति खादनं तु आभ्यन्तरदन्ताः कुर्वन्ति। दृष्टान्तालंकारः॥

स्रक्पुष्पमित्यादि। नृपतिः प्रायो बाहुल्येन गुणेषु शत्रुवधकारिषु राज्यस्थिरत्वकारकेषु च निसर्गात् स्वभावेन पराङ्मुखो भवति गुणवत्सु पृष्ठं ददाति। किमिव। स्रक्पुष्पमिव मालाप्रसव इव। यथा स्रक् माला गुणस्य तन्तोः पराङ्मुखी भवति। राजा निस्त्रिंशे निर्दये पुरुषे संमुखो भवति। कथंभूते निस्त्रिंशे। आत्मविदारिणि निजविच्छेदकारिणि। क इव। कोश इव। दृष्टान्तालंकारः॥

स महत्त्वस्येत्यादि। हे नृप हे राजन्, यत् त्वं भवान् पश्चात् विरसतां भजसि प्राप्नोषि स महत्त्वस्यैव दोषः। कथम्। हि निश्चयेन सरितां पत्युः समुद्रस्य आरात् समीपतः वारिणो जलस्य सरसत्वं भवति न तद्भावे समुद्रस्य एकत्वे सरसत्वं भवति। दृष्टान्तालंकारः॥

कृतक्लेशेष्वित्यादि। ये नृपाः कृतक्लेशेषु विहितश्रमेषु भृत्येषु सेवकेषु नोपकुर्वन्ति उपकारं न कुर्वन्ति ते नृपाः तेषां भृत्यानां जन्मान्तरे अधिकश्रीणां अधिकलक्ष्मीणां गृहकिंकराः सेवका भवन्ति। जात्युपमालंकारः॥

कदाचिदर्थशास्त्रविचारपल्लवकलोकप्रकाशितोपनिषत्सु परिषत्सु

नेमिमेकान्तरान्राज्ञः कृत्वा चानन्तरान्नरान् ।
नाभिमात्मानमायच्छेन्नेता प्रकृतिमण्डले ॥ २५८ ॥

इत्यत्र विषयविन्यासचिन्तनप्रस्तावागतम्

अष्टशाखं चतुर्मूलं षष्टिपत्रं द्वयेस्थितम् ।
षट्पुष्पं त्रिफलं वृक्षं यो जानाति स नीतिवित् ॥ २५९ ॥

इममखिलावापभागप्रवृत्तिहेतुकं श्लोकं व्यचीचरम् ।

---

कदाचित् कस्मिंश्चिदवसरे परिषत्सु सभासु इमं प्रत्यक्षीभूतं श्लोकं अनुष्टुभं व्यचीचरं विचारितवानहम् । कथंभूतासु परिषत्सु । अर्थशास्त्रविचारपल्लवकलोकप्रकाशितोपनिषत्सु अर्थशास्त्राणां विचारे ये पल्लवकलोकाः पण्डितलोकाः तैः प्रकाशिता प्रकटीकृता उपनिषत् रहस्यं यासु परिषत्सु तास्तथोक्तास्तासु । कथंभूतं श्लोकम् । इत्यत्रास्मिन् लोके विषयविन्यासचिन्तनप्रस्तावागतम् विषयस्य मण्डलस्य योऽसौ विन्यासो रचना तस्य चिन्तनं विचारणं तस्य प्रस्तावे अवसरे आगतं आयातं विषयविन्यासचिन्तनप्रस्तावागतम् । इत्यत्र कुत्र ।

**नेमिमित्यादि** । नेता जेता । वियोगिषु राज्ञेत्यर्थः । प्रकृतिमण्डले अरिमित्रादौ एकान्तरान् राज्ञः तृतीयदेशस्थितान् अनन्तरान् नरांश्च निजमण्डलसमीपवर्तिनः शत्रुभूतान् राज्ञश्च नेमिं चक्रधारां कृत्वा आत्मानं स्वं नाभिं प्रायच्छेत् कुर्यात् । रूपकालंकारः ॥

इमं श्लोकं कथंभूतम् । अखिलावापभागप्रवृत्तिहेतुकम् अखिलो योऽसौ आवापः परमण्डलचिन्ता तया भागप्रवृत्तेः भागकरणस्य हेतुकं हेतुभूतम् ।

**अष्टशाखमित्यादि** । यः पुमान् वृक्षं जानाति स पुमान् नीतिवित् नीतिशास्त्रज्ञो भवति । कथंभूतं वृक्षम् । अष्टशाखम् अरिविजिगीषुमध्यमोदासीनानां प्रत्येकं अरिमित्राभ्यां संबन्धात् अष्टशाखम् । पुनः कथंभूतं वृक्षम् । चतुर्मूलम् चत्वारि सामदानभेददण्डलक्षणानि मूलानि यस्य स चतुर्मूलस्तम् । पुनः कथंभूतं वृक्षम् । षष्टिपत्रम् षष्टिस्त्रिंशो विंशतयः पत्राणि पर्णानि यस्य स षष्टिपत्रस्तम् । अरिः १ विजिगीषुः २ स्वमित्रमित्रेण सह ३ अरिमित्रम् ४ स्वमित्रेण सह ५ अरिमित्रं ६ आक्रन्दकेन सह ७ पार्ष्णिग्राहासारेण सह ९ आक्रन्दनानां सारं १० द्वौ मध्यस्थौ इति द्वादश ११ अमात्य १ राज्य २ दुर्ग ३ कोश ४ बल ५ एतैः पञ्चभिर्गुणिता द्वादश इति षष्टिः पत्रं भवति ६० । पुनः कथंभूतं वृक्षम् । द्वये स्थितं दैवपौरुषयोः स्थितम् । पुनः कथंभूतं वृक्षम् । षट्पुष्पं संधि-विग्रह-यान-आसन-संश्रय-द्वैधीभाव इति षट्पुष्पम् । त्रिफलं स्थानं क्षयो वृद्धिरिति त्रिफलम् । रूपकालंकारः ॥

विना जीवितमस्वस्थे यथौषधविधिर्वृथा।
तथा नीतिविहीनस्य वृथा विक्रमवृत्तयः॥ २६०॥

कदाचित्कामिनीजनचरणालक्तकरसरागरञ्जितरङ्गतलासु नाट्यशालासु

भालं लोचनचारु मूर्ध्नि विकटं यस्या जटामण्डलं
बालेन्दुः श्रवणावतंसविषयः क्रीडाः सरःसंभवाः।
कायः केतकपुष्पगर्भसुभगः स्थानं सिते चाम्बुजे
सा वः पातु सरस्वती सितमुखव्याकीर्णवर्णावलिः॥ २६१॥

---

**विना जीवितमित्यादि।** अस्वस्थे रोगग्रस्ते पुरुषे जीवितं विना आयुर्बलं विना औषधविधिश्चिकित्साविधिर्यथा न भवति तथा तेन प्रकारेण नीतिविहीनस्य नीतिरहितस्य पुरुषस्य विक्रमवृत्तयो वृथा। दृष्टान्तालंकारः॥

कदाचित् कस्मिंश्चिदवसरे नाट्यशालासु नृत्यगेहेषु नृत्तं भरतपुत्रैः सत्रा नर्तकाचार्यैः समं अहं अवलोकयामास अहं विलोकितवान्। कथंभूतासु नाट्यशालासु। कामिनीजनचरणालक्तकरसरागरञ्जितरङ्गतलासु कामिनीजनानां वेश्यानां चरणानां योऽसावलक्तकरसो लाक्षारसः। यावक इति यावत्। तस्य रागेण रञ्जितं रक्तीकृतं रङ्गस्य भूमिविशेषस्य तलं पृष्ठं यासां नाट्यशालानां तास्तथोक्तास्तासु। उक्तं च—'अधःस्वरूपयोरस्त्री तलं पृष्ठं च। पेटे वितस्तौ तलस्तालश्च।' कथं भूतैर्भरतपुत्रैः। नाट्यविद्याधरताण्डवचण्डीशप्रमुखनर्तकशिरोमणिभिः नाट्यविद्याधरश्च ताण्डवचण्डीशश्च तौ प्रमुखौ मुख्यौ येषां ते नाट्यविद्याधरताण्डवचण्डीशप्रमुखाः ते च ते नर्तकाचार्याः तेषां शिरोमणयः शिरोरत्नानि तैः। पुनः कथंभूतैः। अन्तर्वाणिभिः शास्त्रविद्भिः। 'अन्तर्वाणिस्तु शास्त्रवित्' इति। पुनः कथंभूतैः। प्रयोगभङ्गीविचित्राभिनयतन्त्रैः प्रयोगाः नृत्यप्रयुक्तयस्तेषां भङ्गी रचना तस्या विचित्रा नानाप्रकारा ये अभिनयाः वाचिकाङ्गिकाहार्यसात्त्विकाख्यभावसूत्रकाः तेषां तन्त्रं शास्त्रं येषु भरतपुत्रेषु ते तथा तैः। कथंभूतं नृत्तम्। इति अमुना प्रकारेण पूर्वरङ्गपूजाप्रक्रमप्रवृत्तं पूर्वरङ्गपूजायाः नाट्यप्रारम्भपूजायाः प्रक्रमे प्रारम्भे प्रवृत्तं संजातम्। पुनः कथंभूतम्। सरस्वतीस्तुतिवृत्तम्।

इतीति किम्। **भालमित्यादि।** सा सरस्वती वः युष्मान् पातु रक्षतु। सा का। यस्याः सरस्वत्याः भालं ललाटपट्टः लोचनचारु नेत्रतृतीयेन मनोहरम्। यस्याः सरस्वत्याः मूर्ध्नि मस्तके जटामण्डलं वर्तते लम्बकचसंघातोऽस्ति। कथंभूतं जटामण्डलम्। विकटमुन्नतम्। यस्याः सरस्वत्याः बालेन्दुः द्वितीयाचन्द्रः प्रतिपच्चन्द्रो वा श्रवणावतंसविषयः कर्णपूरगोचरः। यस्याः सरस्वत्याः क्रीडाः क्रीडनानि जलमज्जनानि सरःसंभवाः सरोवरसमुत्पन्नाः। यस्याः कायः शरीरं केतकपुष्पगर्भसुभगः केतक्याः इदं केतकं तच्च तत्पुष्पं तस्य गर्भो मध्यभागः तद्वत्सुभगो मनोहरः। यस्याः स्थानं निवासः सिते उज्ज्वले

एकं ध्यानपरिग्रहप्रणयिनं हस्तं द्वितीयं पुन-
र्लीलाङ्गुष्ठनिवेशिताक्षवलयं पुस्तप्रशस्तं परम् ।
बिभ्राणा वरदं तुरीयमुचिता देवी त्रिलोकस्तुतेः
पुष्याद्वः कवितालतावलयितं संकल्पकल्पद्रुमम् ॥ २६२ ॥
धृतधवलदुकूला चन्दनस्यन्दशीला
सितसरसिजलोला हारभूषासराला ।
नमदमरनिरीटाप्ररत्नप्रसर्प-
त्किरणकुसुमकीर्णा वर्णिनी वोऽस्तु भूत्यै ॥ २६३ ॥

---

अम्बुजे कमले वर्तेते । कथंभूता सरस्वती । स्मितमुखव्याकीर्णवर्णावलिः स्मितमीषद्विक-सितं यन्मुखं वदनं तत्र व्याकीर्णा विक्षिप्ता वर्णावलिरक्षरपङ्क्तिर्यस्याः सा तथोक्ता । समुच्चयालंकारः ॥

**एकमित्यादि** । देवी प्रस्तावात् सरस्वती परमेश्वरी वो युष्माकं संकल्पकल्पद्रुमं वाञ्छितं कल्पवृक्षं कवितालतावलयितं कवितावल्लीवेष्टितं पुष्यात् पुष्टिं नयतु । वाञ्छितं पूरयत्वित्यर्थः । देवी किं कुर्वाणा । एकं हस्तं उपरितनं वामहस्तं ध्यानपरिग्रहप्रणयिनं ध्यानस्वीकारस्नेहिनम् । अङ्गुष्ठतर्जनीसंयोगेन बद्धस्फटिकं बिभ्राणा धरन्ती । पुनश्च किं कुर्वाणा । द्वितीयं हस्तं पुनरुपरितनं दक्षिणकरं लीलाङ्गुष्ठनिवेशिताक्षवलयम् लीलया अङ्गुष्ठे निवेशितं आरोपितं अक्षवलयं अर्ककान्तमणिजपमाला यस्मिन् हस्ते स तथा तं बिभ्राणा धरं कुर्वाणा । परं हस्तं अधस्तनं द्वितीयं वामं हस्तं पुस्तप्रशस्तं प्रशंसनीयं हस्तं बिभ्राणा । देवी पुनः किं कुर्वाणा । तुरीयं चतुर्थं हस्तं अधस्तनं द्वितीयं दक्षिणकरं वरदं वरदानसमुद्रं बिभ्राणा । कथंभूता देवी । त्रिलोकस्तुतेः त्रैलोक्यस्थितभक्तजनेन्द्रादिदेवतास्तवनस्य उचिता योग्या । दीपकालंकारः ॥

**धृतधवलदुकूलेत्यादि** । वर्णा अक्षराणि विद्यन्ते यस्याः सा वर्णिनी देवी सरस्वती वो युष्माकं भूत्यै ऐश्वर्याय अस्तु भवतु । कथंभूता वर्णिनी । धृतधवलदुकूला धृतं स्वीकृतं धवलमुज्ज्वलं दुकूलं पट्टवस्त्रं यया सा धृतधवलदुकूला । स्वीकृतप्रावारराजोज्ज्वलवस्त्रेत्यर्थः । पुनः कथंभूता वर्णिनी । चन्दनस्यन्दशीला चन्दनस्य हरिचन्दनस्य । परमोत्तमचन्दनस्य द्रवः चन्दनमुच्यते । तस्य स्यन्दः क्षरणं प्रच्यवनं तस्मिन् शीलं स्वभावो यस्याः सा चन्दनस्यन्दशीला । पुनः कथंभूता । सितसरसिजलोला सितसरसिजेषु उज्ज्वलकमलेषु लोला देवार्चनक्रीडाकरणार्थं साकाङ्क्षा । पुनः कथंभूता । हारभूषासराला हारभूषाभिर्मुक्तामालाभिस्ततस्तस्याः सराला अपर्यन्ता । पुनः कथंभूता । नमदमरनिरीटाप्ररत्नप्रसर्पत्किरणकुसुमकीर्णा नमन्तः प्रह्वीभवन्तो ये अमरा इन्द्रादयो

स्वर्गैसदां वदनपद्मनिवासहंसी
विद्याधरश्रवणमण्डनरत्नरेखा।
भूवासमानसविभूषणहारयष्टि-
र्वाग्देवता नृप तवातनुतां हितानि ॥ २६४ ॥
संध्यासु प्रतिवासरं श्रुतिधृतिर्बद्ध्वा प्रमाणाञ्जलिं
योगस्वापमुपेत्य दुग्धजलधौ शेषाश्रितः श्रीपतिः।
शंभुर्ध्यायति चाक्षसूत्रवलयं कृत्वा करेऽनन्यधी-
र्देवि त्वत्पदपङ्कजद्वयमिदं सर्वार्थकामप्रदम् ॥ २६५ ॥
भावेन द्रुहिणै रसेन हरिभिर्नृत्येन कामारिभि-
र्वर्ण्या सिद्धजनैर्नभश्चरगणैर्वृत्त्या प्रवृत्त्या सुरैः।

---

देवास्तेषां निरीटानि त्रिशिखमुक्तानि प्रत्नानि यानि रत्नानि अप्रत्नानि तेभ्यः प्रसर्पन्तः प्रसरन्तो ये किरणा रश्मयस्त एव कुसुमानि पुष्पाणि तैः कीर्णा व्याप्ता। अतिशयालंकारः॥

**स्वर्गैसदामित्यादि**। हे नृप हे राजन्, वाग्देवता सरस्वती तव भवतः हितानि वाञ्छितानि आतनुतां विदधातु। कथंभूता वाग्देवता। स्वर्गैसदां वदनपद्मनिवासहंसी स्वर्गैसदां देवानां वदनपद्मानां मुखकमलानां निवासे वसतिकरणे हंसी राजहंसी वर्तते। पुनः कथंभूता वाग्देवता। विद्याधरश्रवणमण्डनरत्नरेखा विद्याधराणां वियद्गामिनां श्रवणानां श्रुतीनां मण्डने भूषणार्थं रत्नरेखा माणिक्यपङ्क्तिः। पुनः कथंभूता। भूवासमानसविभूषणहारयष्टिः भूवासानां भूमिगोचराणां मानसविभूषणे हृदयमण्डने हारयष्टिः मुक्तामाला वर्तते। रूपकालंकारः॥

**संध्यास्वित्यादि**। इदं प्रत्यक्षीभूतं त्वत्पदपङ्कजद्वयं त्वच्चरणकमलयुगलं प्रतिवासरं दिनं दिनं प्रति संध्यासु पूर्वासु पूर्वाह्णमध्याह्नसंध्याकालेषु श्रुतिधृतिः ब्रह्मा प्रमाणाञ्जलिं बद्ध्वा करपोटनं कृत्वा योगस्वापं उपेत्य ध्याननिद्रां प्राप्य ध्यायति त्वाम्। श्रीपतिर्नारायणः दुग्धजलधौ क्षीरसागरे शेषाश्रितः शेषनागाश्रितो नागशय्यामारूढः ध्यायति। शंभुर्महादेवश्च अक्षसूत्रवलयं करे कृत्वा जपमालां हस्ते धृत्वा ध्यायति। कथंभूतः श्रुतिधृतिः श्रीपतिः शंभुश्च। अनन्यधीः एकाग्रचित्तः। कथंभूतं त्वत्पदपङ्कजद्वयम्। सर्वार्थकामप्रदम् सर्वे च ते अर्था धनानि कामाश्च स्त्रीभोगाः तान् प्रददाति प्रयच्छतीति सर्वार्थकामप्रदम्। समुच्चयदीपकरूपकातिशयालंकारः॥

**भावेनेत्यादि**। हे देवि हे सरस्वति, त्वं भवती वर्ण्या वर्णनीया असि द्रुहिणैर्ब्रह्मकविशेषैश्च भावेन एकोनपञ्चाशद्भावसमूहेन। वर्ण्यभाव इत्यत्र जात्यपेक्षया एकवचनं

सिद्ध्या चारणमण्डलैर्मुनिकुलैस्त्वं देवि सप्तस्वरै-
रातोद्येन च नन्दिभिः कृतनुतिर्गानेन गन्धर्विभिः ॥ २६६ ॥

नासावर्थो न तच्चित्तं न ताश्चेष्टाः शरीरिणाम् ।
पदद्वयाङ्कितं देव्या यन्नेह भुवनत्रये ॥ २६७ ॥

मानससरोविनिर्गतसितसरसिरुहस्थितेः सरस्वत्याः ।
वरवर्णकीर्णकान्तिः पुष्पाञ्जलिरस्तु रङ्गपूजायै ॥ २६८ ॥

इति पूर्वरङ्गपूजाप्रक्रमप्रवृत्तं सरस्वतीस्तुतिवृत्तं नृत्तं नाट्यविद्याधरताण्डवचण्डीशप्रमुखनर्तकशिरोमणिभिरन्तर्वाणिभिः प्रयोगभङ्गीविचित्राभिनयतन्त्रैर्भरतपुत्रैः सत्रमवलोकयामास ।

---

ज्ञातव्यम् । हरिभिर्नारायणैः कविविशेषैस्त्वं वर्ण्या । केन । रसेन शृङ्गारादिना रसेन, कामारिभिः रुद्रैः कविविशेषैश्च नृत्येन शिरोभ्रूलोचनग्रीवादिसर्वाङ्गनृत्यविशेषेण वर्ण्या वर्णनीया । नभश्चरगणैः सिद्धजनैः देवविशेषसमूहैः सिद्धनामकविसमूहैश्च त्वं वर्ण्या । कया । वृत्त्या प्रवर्तनेन । तथा सुरैर्देवैः सुरनामकविविशेषैश्च । प्रवर्तनेन त्वं वर्ण्या प्रवृत्त्या चारणमण्डलैः आकाशगामिभिश्चारणसमूहैः सिद्ध्या मनोवाग्देवसिद्धिसमूहेन त्वं वर्ण्या । मुनिकुलैः ज्ञानिसमूहैः मुनिकुलनामभिः कविविशेषैश्च सप्तस्वरैः 'निषादर्षभगान्धारषड्जधैवतमध्यमाः । पञ्चमश्चेति सप्तैते तन्त्रीकण्ठोत्थिताः स्वराः ॥'इति श्लोककथितैः सप्तभिः स्वरैस्त्वं वर्ण्या । सारिगमपधनि इति सप्तभिः स्वरैर्वा त्वं वर्ण्या वर्णनीया । नन्दिभिरष्टाभिः रुद्रगणैः कविविशेषैश्च आतोद्येन ततविततघनसुषिरनामकेन चतुर्विधवादित्रेण त्वं वर्ण्या । गन्धर्विभिः नारदतुम्बरुप्रभृतिभिः कविविशेषैश्च गानेन गीतेन कृतनुतिर्विहितस्तुतिर्वर्तते । दीपकालंकारः । समुच्चयश्च ॥

नासावित्यादि । असौ प्रत्यक्षीभूतः अर्थः पदार्थः जीवादिकं वस्तु न वर्तते । तज्जगत्प्रसिद्धं चित्तं मनश्च न वर्तते । ता जगत्प्रसिद्धाश्चेष्टाः शरीरिणां क्रियाः न वर्तन्ते । तत् किम् । यत् इह अस्मिन् भुवनत्रये भूर्भुवःस्वस्त्रये देव्याः सरस्वत्याः पदद्वयाङ्कितं स्थेत्यादिलक्ष(?)चरणद्वयचिह्नितं न वर्तते । अतिशयालंकारः ॥

मानससरोविनिर्गतेत्यादि । सरस्वत्याः भारतीदेव्याः रङ्गपूजायै नर्तनस्थानपूजननिमित्तं पुष्पाञ्जलिरस्तु भवतु । कथंभूतायाः सरस्वत्याः । मानससरोविनिर्गतं सितसरसिरुहं शुक्लकमलं तस्मिन् स्थितिः स्थानं यस्याः सा तथोक्ता तस्याः । कथंभूता पुष्पाञ्जलिः । वरवर्णकीर्णकान्तिः वरा मनोहरा वर्णाः श्वेतपीतहरितरक्तादयस्तैः कीर्णा व्याप्ता कान्तिः यस्य स तथोक्तः । रूपकालंकारः ॥

आसाद्य लक्ष्मीं श्रुतिदृष्टिभाजो न सन्ति येषां भरतप्रयोगाः ।
तेषामियं श्रीर्मृतकाङ्गशोभासमानवृत्तिश्च निरर्थिका च ॥ २६९ ॥

कदाचिदुद्घाटितसरस्वतीरहस्यमुद्राकरण्डेषु महाकविकाव्यकथाकाण्डेषु

ब्रह्माण्डमण्डपमहोत्सवपौरुषस्य
लक्ष्मीः स्वयंवरविधौ विहितादरा यत् ।
चित्रं न तत्कृतजगत्त्रयरक्षणस्य
कीर्तिप्रिया भ्रमति यत्तव तन्नु चित्रम् ॥ २७० ॥

---

आसाद्येत्यादि । येषां पुरुषाणां राज्ञां भरतप्रयोगाः गीतनृत्यवादित्रोदाहरणानि श्रुतिदृष्टिभाजः कर्णेन्द्रियलोचनेन्द्रियगोचराः सन्ति न भवन्ति । किं कृत्वा । पूर्वं लक्ष्मीमासाद्य श्रियं प्राप्य । तेषां राज्ञां धनवतां पुरुषाणां च इयं प्रत्यक्षीभूता श्रीर्लक्ष्मीर्मृतकाङ्गशोभासमानवृत्तिर्भवति मृतकस्य जीवरहितकलेवरस्याङ्गं शरीरं तस्य शोभा पुष्पचन्दनाभरणादिरचना तस्याः समानवृत्तिर्भवति । न केवलं मृतकाङ्गशोभासमानवृत्तिः श्रीर्भवति, किंतु निरर्थका निष्फला च भवति । उपमालंकारः ॥

कदाचित् कस्मिंश्चिद्वसरे महाकविकाव्यकथाकाण्डेषु महाकवीनां काव्यकथाकाण्डेषु काव्यानां कथाप्रस्तावेषु पण्डितवैतण्डिकस्य कवेः पण्डितवैतण्डिकनामविदुषः अखर्वगर्वपर्वतभारं अखर्वो महान् योऽसौ गर्वोऽहंकारः स एव पर्वतः काठिन्यप्रकृतित्वात् तस्य भारो भरस्तं अखर्वगर्वपर्वतभारं अवारुरुहं अवरोहितवान् । अहं उत्तारितवानित्यर्थः । पण्डितवैतण्डिकगर्वं भञ्जितवानहमित्यर्थः । कथंभूतेषु महाकविकाव्यकथाकाण्डेषु । उद्घाटितसरस्वतीरहस्यमुद्राकरण्डेषु उद्घाटित उन्मुद्रितः सरस्वत्याः संबन्धी रहस्यमुद्रोपलक्षितः गोप्यतत्त्वचिह्नसहितः करण्डः पेटिका येषु ते तथा तेषु । किं कुर्वतः पण्डितवैतण्डिकस्य । प्रस्तावमविज्ञाय अवसरमज्ञात्वा इति ईदृशानि काव्यानि पठतः उच्चारयतः कृतावहेलस्य विहितानादरस्य ।

इतीति किम् ब्रह्माण्डेत्यादि । हे राजन्, यत्तव भवतो लक्ष्मीः श्रीः स्वयंवरविधौ स्वयंवरविधाने स्वयमेवागत्य वरणे विहितादरा कृतादरा वर्तते तच्चित्रं आश्चर्यं न वर्तते । कथंभूतस्य तव । ब्रह्माण्डमण्डपमहोत्सवपौरुषस्य ब्रह्माण्डमण्डपं परिणयनशाला । जनोऽर्थ इति यावत् । तस्य महोत्सवे महद्धर्षे पौरुषं वरत्वं यस्य स तथा तस्य । तच्चित्रं न भवति, तर्हि किं चित्रम् । यत् तव कीर्तिप्रिया भ्रमति पर्यटति । नु इति वितर्के । तच्चित्रं तदाश्चर्यं वर्तते । कथंभूतस्य तव । कृतजगत्त्रयरक्षणस्य कृतं विहितं जगत्त्रयस्य त्रैलोक्यस्य रक्षणं प्रतिपालनं येन स तथा तस्य । हेत्वलंकारः ॥

हरगिरयन्ति महीध्राः क्षीरोदधयन्ति वार्धयः सर्वे ।
तव देव यशसि विसरति सौधन्ति जगन्ति च त्रीणि ॥ २७१ ॥
गिरिषु धृता भूमिभृतः पृथ्वीभारश्च निजभुजे निहितः ।
को नाम बलेन नृप त्वया समः सांप्रतं भुवने ॥ २७२ ॥

इति प्रस्तावमविज्ञाय पठतः कृतावहेलस्य पण्डितवैतण्डिकस्य कवेः

सकलकविलोकचक्रप्रमर्दनः ख्यात एव भुवनेऽस्मिन् ।
कथमिह संप्रति भवता समागतो नावबुध्येऽहम् ॥ २७३ ॥

इति कथंचित्कद्वदं वदतः

त्रिमूलकं द्विधोत्थानं पञ्चशाखं चतुश्छदम् ।
योऽगं वेत्ति नवच्छायं दशभूमिं स (च) काव्यकृत् ॥२७४॥

---

**हरगिरयन्तीत्यादि** । हे राजन्, तव यशसि विसरति प्रसरति महीध्राः पर्वताः हरगिरयन्ति कृष्णा अपि पर्वता कैलासगिरिवदाचरन्ति उज्ज्वला भवन्ति । सर्वेऽपि वार्धयः लवणोदकादयः समुद्राः क्षीरोदधयन्ति क्षीरोदधिरिव आचरन्ति । कृष्णा अपि शुक्ला जायन्त इत्यर्थः । त्रीणि जगन्ति च त्रीणि भुवनानि च सौधन्ति सुधावलितानिवाचरन्ति । क्रियोपमालंकारः ॥

**गिरिष्वित्यादि** । हे नृप हे राजन्, भुवने जगति सांप्रतमिदानीं बलेन त्वया समः को नाम वर्तते । अपि तु न कोऽपि । येन त्वया भूमिभृतः पर्वताः पक्षे राजानः गिरिषु पर्वतेषु धृता आरोपिताः, पृथ्वीभारश्च भूमिभारो निजभुजे स्वकीयदक्षिणकरे निहित आरोपितः श्लेषाक्षेपालंकारः ॥

पण्डितवैतण्डिकस्य किं कुर्वतः । इति ईदृशं कथंचिन्महता कष्टेन कद्वदं कटुवचनं वदतो व्यक्तं जल्पतः ।

इतीति किम् । **सकलेत्यादि** । हे राजन्, इह अस्यां सभायां संप्रतीदानीं समागतः संप्राप्तः भवता त्वया अहं कथं केन प्रकारेण नावबुध्ये कथं न जानीयां । कथंभूतोऽहम् । अस्मिन् भुवने पृथ्वीमण्डले ख्यात एव । पुनः कथंभूतोऽहम् । सकलकविलोकचक्रप्रमर्दनः सकलाश्च ते कविलोकाः कविसमूहास्तेषां चक्रं समूहस्तत्प्रमर्दयामि चूर्णीकरोमि इति सकलकविलोकचक्रप्रमर्दनः । उपमारूपकमिदम् ॥

केन कृत्वा अखर्वगर्वपर्वतभारमवारुरुहम् अखर्वगर्वपर्वतभारमवारितवान् । इति ईदृशस्य अस्य प्रत्यक्षीभूतस्य लोकस्य अर्थकथनानुनाथनाशयशयेन अर्थस्य वाच्यस्य कथनं व्याघृतिर्व्याख्यानं तस्य आनुनाथनं याचनम् । प्रश्न इत्यर्थः । तस्याशयोऽभिप्रायः स एव शयो हस्तः अर्थकथनानुनाथनाशयशयस्तेन ।

इतीति किम् । **त्रिमूलकमित्यादि** । यः पुमान् अगं वृक्षं वेत्ति जानाति स पुमान्

इत्यस्यार्थकथनानुनाथनाशयशयेनाखर्वगर्वपर्वतभारमवारुरुहम्।

राजन्नशेषविषयातिशयप्रसूतौ
येषां महाकविकृतौ न मनीषितानि।
तेषां श्रुती च रसनां च मनश्च मन्ये
वाग्देवताविहितशापमिवेश्वराणाम्॥ २७५॥

कदाचिन्नियतवृत्तिवर्णपदप्रयोगानुबद्धशुद्धमिश्रिताशेषभाषाप्रकाशितप्रतिभेषु पण्डितप्रकाण्डमण्डलीमण्डनाडम्बरगीर्गुम्फसंरम्भेषु जिनजैमिनिक-

---

काव्यकृत् कविरुच्यते। कथंभूतमगम्। त्रिमूलकम्। पुनः कथंभूतमगम्। द्विधोत्थानं शब्दार्थलक्षणद्विधोत्थानम्। प्रचुरा-प्रौढा-परुषा-ललिता-भद्राभिर्वृत्तिभिः पञ्चशाखम् चतुश्छदं चत्वारश्छदाः पर्णानि यस्य स चतुश्छदस्तम्। तथा हि—'द्वित्रिपदा पाञ्चाली लाटीया पञ्च सप्त वा यावत्। शब्दाः समासवन्तो भवन्ति।'यथाशक्तिगौडीया असमस्तपदा वैदर्भीरिति चतुश्छदम्। पुनः कथंभूतमगम्। नवच्छायम्। 'शृङ्गारवीरकरुणहास्याद्भुतभयानकाः। रौद्रबीभत्सशान्ताश्च नवैते निश्चिता बुधैः॥' पुनः कथंभूतमगम्। दशभूमिम्। 'औदार्यसमताकान्तिरर्थव्यक्तिः प्रसन्नता। समाधिः श्लेष ओजश्च माधुर्यसुकुमारता॥' इति श्लोककथितैः दशभिर्गुणैः दशभूमिम्। समुच्चयालंकारः॥

राजन्नित्यादि। हे राजन्, येषां नरेन्द्राणां महाकविकृतौ महाकविकाव्ये मनीषितानि मनोरथा न भवन्ति तेषां ईश्वराणां नरेन्द्राणां श्रुती द्वौ कर्णौ रसनां च जिह्वां मनश्च चित्तं वाग्देवताविहितशापम्। कथंभूतायां महाकविकृतौ। अशेषविषयातिशयप्रसूतौ अशेषाश्च ते विषयाः शब्दा रसा अस्फुटसुखादिलक्षणास्तेषां अतिशयो भरस्तस्य प्रसूतिरुत्पत्तिर्यस्यां महाकविकृतौ सा तथोक्ता तस्याम्। उत्प्रेक्षालंकारः॥

कदाचित् कस्मिंश्चिदवसरे पण्डितप्रकाण्डमण्डलीमण्डनाडम्बरगीर्गुम्फसंरम्भेषु प्रशस्ताः पण्डिताः पण्डितप्रकाण्डाः तेषां मण्डली समूहस्तस्यां मण्डनं आभरणप्रायः आडम्बरेण शब्दानामाटोपेन योऽसौ गीर्गुम्फ उपन्यासस्तस्य संरम्भेषु प्रारम्भेषु परस्परमसहनतया विवादेषु विदुष्विणो विद्वांसो विद्यन्ते यासां परिषदां ता विदुष्विण्यस्तासां विदुष्विणीनां[1] परिषदां सभानां तार्किकसमूहानां चित्तभित्तिषु मनोवेदिकासु आत्मयशःप्रशस्तीः निजयशःप्रसिद्धीः उल्लिलेख उत्कीर्णितवानहम्। कथंभूतेषु पण्डितप्रकाण्डमण्डलीमण्डनाडम्बरगीर्गुम्फसंरम्भेषु। नियतवृत्तिवर्णपदप्रयोगानुबद्धशुद्धमिश्रिताशेषभाषाप्रकाशितप्रतिभेषु वृत्तिश्च समासः, वर्णाश्च अक्षराणि, पदानि च सुप्तिङन्तादीनि प्रातिपदिकानि, नियतानि मर्यादीभूतानि यानि वृत्तिवर्णपदानि तेषां प्रयोगाः उच्चार-

---

१. 'विदुष्विणीनां' इति मूलप्रतीकं भवेत्.

पिलकणचरचार्वाकशाक्यप्रणीतप्रमाणसंवीणतया विदुष्विणीनां परिषदां चित्तभित्तिष्वात्मयशःप्रशस्तीरुल्लिलेख ।

यथास्त्ररहिते पुंसि वृथा शौर्यपरिग्रहः ।
तथोपन्यासहीनस्य वृथा शास्त्रपरिग्रहः ॥ २७६ ॥
स्फुरन्त्यपि मनःसिन्धौ शास्त्ररत्नान्यनेकशः ।
वचोगुणविहीनानि भूषयन्ति न सन्मनः ॥ २७७ ॥
विद्यानां स्फुरितं प्रीत्यै स्त्रीणां लावण्यवद्बहिः ।
अन्तर्भवतु वामा वा किं विचारैरतीन्द्रियैः ॥ २७८ ॥

---

णानि तेषु अनुबद्धा गुम्फिता याः शुद्धाः केवला मिश्रिताः परस्परमिलिता अशेषाः समस्ता भाषाः संस्कृत-प्राकृत-सूरसेनी-मागधी-पैशाची-चूलिकापैशाची अपभ्रंशलक्षणास्ताभिः प्रकाशिता प्रकटीकृता प्रतिभा बुद्धिर्येषु गीर्गुम्फसंरम्भेषु ते तथोक्तास्तेषु । कया कृत्वा आत्मयशःप्रशस्तीरुल्लिलेख । जिनजैमिनिकपिलकणचरचार्वाकशाक्यप्रणीतप्रमाणसंवीणतया जिनश्च अर्हन्, जैमिनिश्च भटः, कपिलश्च सांख्यः, कणचरः अक्षपादः शिवमतानुचारी, चार्वाकश्च नृवाकूशिष्यनास्तिकः कौलिकः । कुलाचार्य इति यावत् । शाक्यश्च बुद्धः, तैः प्रणीतानि उपकथितानि यानि प्रमाणानि वस्तुसकलादेशास्तेषु संवीणः प्रवीणः । निपुण इति यावत् । जिनजैमिनिकपिलकणचरचार्वाकशाक्यप्रणीतप्रमाणसंवीणस्तस्य भावस्तत्ता तया । एतेषां प्रमाणेषु निपुणत्वं श्रीयशोधरमहाराजस्य वर्तते । कानि तानि जिनादीनां प्रमाणानि इत्याह—जिनदर्शने प्रत्यक्षं परोक्षं चेति, प्रमाणद्वयं, जैमिनिदर्शने प्रत्यक्षमनुमानमुपमानमागमोऽर्थापत्तिरभावश्चेति षट् प्रमाणानि, कपिलदर्शने प्रत्यक्षानुमानशब्दा इति त्रीणि प्रमाणानि, कणचरदर्शने वैशेषिकदर्शने च प्रत्यक्षमनुमानमागमश्चेति त्रीणि प्रमाणानि, चार्वाकदर्शने प्रत्यक्षमेकमेव प्रमाणम्, शाक्यदर्शने प्रत्यक्षमनुमानं चेति द्वे प्रमाणे । तद्विस्तरस्तु न्यायकुमुदचन्द्रोदये ज्ञातव्यः ॥

**यथेत्यादि** । यथा येन प्रकारेण अस्त्ररहिते खड्गाद्यायुधवर्जिते पुंसि सुभटपुरुषे शौर्यपरिग्रहः शूरत्वं वृथा निरर्थको भवति । तथा तेनैव प्रकारेण उपन्यासहीनस्य वाग्विन्यासविरहितस्य विदुषः शास्त्रपरिग्रहः अनेकशास्त्रेषु प्रवीणत्वं वृथा निरर्थको भवति । दृष्टान्तालंकारः ॥

**स्फुरन्तीत्यादि** । मनःसिन्धौ मनःसमुद्रे अनेकशः अनेकानि शास्त्राणि एव रत्नानि स्फुरन्त्यपि चमत्कुर्वन्त्यपि वचोगुणविहीनानि उपन्यासगुणरहितानि सन्मनः सतां हृदयं न भूषयन्ति । रूपकालंकारः ॥

**विद्यानामित्यादि** । स्त्रीणां बहिर्लावण्यवत् बाह्यकान्तिवत् यथा स्त्रीणां लावण्यं कामिनां प्रीतये भवति तथा विद्यानां बहिःस्फुरितं विदुषां प्रीतये भवति । अन्तर्मध्ये

श्रीमान्विधेः प्रसादेन यः सत्सु न कृतादरः।
अरण्यकुसुमानीव नीरर्थास्तस्य संपदः॥ २७९॥
आसंसारं यशः कर्तुं चतुर्वर्गं तु वेदितुम्।
येषु वाञ्छास्ति ते भूपाः कुर्वन्ति कविसंग्रहम्॥ २८०॥
कदाचिदनायासप्रवृत्तरथचरणनेमिषु करिविनयभूमिषु
समं गात्रैस्तिष्ठ प्रतिहर करं छिद्ररहितं
शिरः पुत्रोन्नम्य स्ववहितमनाः स्वर्पय मुखम्।
ततः कल्याणाङ्ग श्रवणयुगलं हर्षय गज
ब्रुवे यावन्मात्राशतमिदमहं वर्णविषये॥ २८१॥

---

विद्यानां स्फुरितं स्त्रीणां लावण्यं च भवतु वा मा वा भवतु। अतीन्द्रियैश्चक्षुरादीनामगोचरैर्विचारैः किम्। न किमपि। उपमाक्षेपालंकारः॥

**श्रीमानित्यादि**। विधेः प्रसादेन पुण्यस्योदयेन यः श्रीमान् लक्ष्मीवान् पुमान् सत्सु कृतादरो न भवति तस्य पुरुषस्य ताः संपदो लक्ष्म्यो निरर्था निष्फला भवन्ति। किंवत्। अरण्यकुसुमानीव अरण्यपुष्पाणीव। उपमालंकारः॥

**आसंसारमित्यादि**। येषु भूपेषु आसंसारं संसारपर्यन्तं यशः कर्तुं कीर्तिं विधातुं वाञ्छा आकाङ्क्षा अस्ति विद्यते, न केवलं यशः कर्तुं वाञ्छास्ति, किं तु पुनः चतुर्वर्गं धर्मार्थकाममोक्षलक्षणं वेदितुं ज्ञातुं वाञ्छास्ति, ते भूपास्ते राजानः कविसंग्रहं महाकविस्वीकारं कुर्वन्ति विदधति। जात्यलंकारः॥

कदाचित् कस्मिंश्चिदवसरे इतिपाठपरायणः ईदृशपाठतत्परः सन्नहं स्वयमेव आत्मनैव गृहीतवेणुः गृहीतवंशयष्टिः वारणान् अहं विनिन्ये शिक्षितवानहम्। कासु (विषये)। करिविनयभूमिषु गजशिक्षाभूमिषु। कथंभूतासु करिविनयभूमिषु। अनायासप्रवृत्तरथचरणनेमिषु अनायासेन सुखेन प्रवृत्ताः संचलिता रथचरणानां स्यन्दनचक्राणां नेमयो धारा यासु तास्तथोक्तास्तासु।

इतीति किम्। कीदृशपाठपरायणोऽहम्। **समं गात्रैरित्यादि**। हे पुत्र। पुत्रेति कोमलालापे। हे गज हे गजेन्द्र, समं साधु यथा भवत्येवं गात्रैः तिष्ठ। उक्तं च—द्वौ समं पश्चात् जङ्घादिदेशो गात्राचारक्रमात्, तथा च—'गात्रमङ्गशरीरयोः'। गजस्य अग्रदेशो गात्रमुच्यते। हे पुत्र, त्वं करं शुण्डादण्डं प्रतिहर संकोचय वेष्टय। कथंभूतं करम्। छिद्ररहितं निश्छिद्रम्। हे पुत्र, शिरो मस्तकं उन्नम्य उन्नतं कृत्वा स्ववहितमनाः मुखं स्वर्पय सुष्ठु शोभनं यथा भवत्येवं अर्पय शुण्डादण्डं प्रवेशय। ततस्तदनन्तरं शुण्डादण्डस्य मुखप्रवेशादनन्तरं हे कल्याणाङ्ग मङ्गलसुलक्षणशरीर हे गज हे गजनाथ, श्रवणयुगलं कर्णद्वयं हर्षय उत्तालय। ईदृशया अवस्थया त्वं कियत्कालं तिष्ठ यावत्कालं

एवमशेषक्रियासौष्ठव, प्रतिष्ठाधिष्ठानायां शुभस्थापनायाम्। स्थिरस्थितसमस्ताङ्गसंगर्भ, शिक्षावेक्षणाक्षुण्णान्तःकरणगर्भ, मरीचिमतङ्गमृगशर्मादिमहामुनिसमानीतदर्शितावलोकितगृहीतध्यातनिश्चिताण्डकपालाददितिसुतप्रसूतिपूतान्तरालादुपासितुमायातगणपतिविलोकनप्रहितनयनेन तद्वदनानुरूपवपुःसंपादनसमाहितहृदयेन सप्तसामान्यभिगायता पितामहेन विहित-

---

इदं प्रत्यक्षीभूतं मात्राशतमिति शब्दं ब्रुवे तावत्त्वं तिष्ठ। किमर्थं ब्रुवे। वर्णविधये तव स्तुतिविधानाय। जात्यलंकारः॥

कस्मात्त्वं तिष्ठ। शुभस्थापनायां शुभविशेषणम्। कथंभूतायां शुभस्थापनायाम्। एवममुना प्रकारेण हे अशेषक्रियासौष्ठव अशेषासु सकलासु क्रियासु चेष्टासु सौष्ठव एव समीचीनत्वं यस्य स तस्य संबोधनं हे तथोक्त, प्रतिष्ठाधिष्ठानायां प्रतिष्ठायाः स्थितेः अधिष्ठानं अध्यासनं यस्यां शुभस्थापनायां सा प्रतिष्ठाधिष्ठाना तस्याम्। हे स्थिरस्थितसमस्ताङ्गसंगर्भ स्थिरो निश्चलः स्थितः समस्तानां अङ्गानां अवयवानां संगर्भो मध्यो यस्य स तथा तस्य संबोधनं हे तथोक्त। हे शिक्षावेक्षणाक्षुण्णान्तःकरणगर्भ शिक्षाया विनयस्य यदवेक्षणं अवलोकनं तेन अक्षुण्णः संपूर्णः अन्तःकरणगर्भः मनोमध्यो यस्य स तथा तस्य संबोधनं हे तथोक्त। हे गज, पितामहेन विहितसकलसत्त्वातिशायिदेह पितामहेन ब्रह्मणा विहितो निर्मितः सकलसत्त्वेभ्यः अतिशायी अतिशयवान् देहः शरीरं यस्य स तथा तस्य संबोधनं हे तथोक्त। पितामहेन कस्माद्विहितशरीरः। मरीचिमतङ्गमृगशर्मादिमहामुनिसमानीतदर्शितावलोकितगृहीतध्यातनिश्चिताण्डकपालात् मरीचिश्च ऋषिविशेषः, मतङ्गश्च ऋषिविशेषः, मृगशर्मा च ऋषिविशेषः, मरीचिमतङ्गमृगशर्माणः आदिर्येषां अत्र्यादीनां ते मरीचिमतङ्गमृगशर्मादयः, ते च ते महामुनयः बृहदृषयः तैः समानीतं ब्रह्मणः संमुखमानीतम्, तच्च दर्शितं ब्रह्मचक्षुर्गोचरीकृतम्, तच्च अवलोकितं पितामहेन दृष्टम्, तच्च गृहीतं ब्रह्मणा स्वीकृतम्, तच्च ध्यातं ब्रह्मणा चिन्तितम्, तच्च निश्चितं ब्रह्मणा निर्णीतम्। 'एवं षड्विशेषणविशिष्टं यत् अण्डकपालं ब्रह्माण्डस्य कपालं अर्धं तस्मात्। कथंभूतात् अण्डकपालात्। अदितिसुतप्रसूतिपूतान्तरालात् अदितिसुतः श्रीभास्करः तस्य प्रसूतिरुत्पत्तिः तया पूतं पवित्रं अन्तरालं मध्यं यस्य ब्रह्माण्डार्धस्य तत्तथोक्तं तस्मात्। कथंभूतेन पितामहेन। उपासितुं सेवितुं आयातगणपतिविलोकनप्रहितनयनेन आयातः आगतो योऽसौ गणपतिर्विनायकः तस्य विलोकने दर्शने प्रहिते प्रेरिते नयने लोचने येन पितामहेन। पुनः कथंभूतेन पितामहेन। तद्वदनानुरूपवपुःसंपादनसमाहितहृदयेन तस्य गणपतेर्वदनं तद्वदनं तद्वदनस्य अनुरूपं गणपतिवदनानुसारं वपुः शरीरं तस्य संपादने निष्पादने समाहितं सावधानीकृतं हृदयं येन स तथा तेन। पितामहेन किं कुर्वता। सप्तसामानि सप्तसामवेदवाक्यानि अभिगायता मन्दतया गानं कुर्वता। हे

सकलसत्त्वातिशायिदेह, त्रिलोचनाच्युतविरञ्चिविरोचनचन्द्रचित्रभानुप्रभृतिभिर्देवताभिः सबहुविस्मयमुदीरितपरस्परस्वागताभिरधिष्ठितोदारशरीरगेह-निखिलापरप्राणिगणावार्यवीर्य, दिविजकुजकुञ्जवज्रापातशौर्य, द्विजदेवगन्धर्वयक्षमहीक्षितामन्यतमसत्त्वपद, क्षोणीशमहामात्रकुलकल्याणपरम्पराफलवरद, द्विरद, हे हल, दिव्यसमाज, मात्राशतं तिष्ठ तिष्ठ ।

गात्रैस्तिष्ठ समैः पुरोनखसमं हस्तं निधेहि क्षितौ
दृष्टिं देहि कराग्रतः स्थिरमनाः कर्णौ गजाश्लेषय ।

---

देवताभिरधिष्ठितोदारशरीरगेह देवताभिर्देवविशेषैः अधिष्ठितं निवासीकृतं उदारमतिशयेन मनोहरमत्युन्नतं वा शरीरगेहं कायमन्दिरं यस्य स तथा तस्य संबोधनं हे तथोक्त । कथंभूताभिर्देवताभिः । त्रिलोचनाच्युतविरञ्चिविरोचनचन्द्रचित्रभानुप्रभृतिभिः त्रिलोचनश्च श्रीमहादेवः, अच्युतश्च श्रीनारायणः, विरञ्चिश्च विधिः, विरोचनश्च भास्करः, चन्द्रश्च रोहिणीकान्तः, चित्रभानुश्च स्वाहावल्लभः, ते प्रभृतयो यासां यमराक्षसपवनादीनां तास्तथोक्तास्ताभिः । पुनः कथंभूताभिर्देवताभिः । सबहुविस्मयं बह्वाश्चर्यं यथा भवत्येवं उदीरितपरस्परस्वागताभिः उदीरितं उक्तं परस्परं अन्योन्यं स्वागतं बहुमानो याभिस्तास्तथोक्तास्ताभिः । हे निखिलापरप्राणिगणावार्यवीर्य निखिलैः समस्तैः अपरप्राणिगणैः सहस्रभटलक्षभटकोटिभटादिभिः तुरगमहिषादिभिश्च अवार्यं अनिवारणीयं वीर्यं शक्तिर्यस्य स तथा तस्य संबोधनं हे तथोक्त । हे दिविजकुजकुञ्जवज्रपातशौर्य दिविजकुजाः कल्पवृक्षास्तेषां कुञ्जानि लतादिपिहितोदरास्तेषां वज्रपातः अशनिपातः तस्य सदृशं शौर्यं सौभव्यं यस्य स तथा तस्य संबोधनं हे तथोक्त । हे द्विजदेवगन्धर्वयक्षमहीक्षितामन्यतमसत्त्वपद, द्विजाश्च परशुरामादयः, देवाश्च इन्द्रादयः, गन्धर्वाश्च हाहाहूहूप्रभृतयः, यक्षाश्च धनदादयः, महीक्षितश्च भीमभीष्मादयस्ते द्विजदेवगन्धर्वयक्षमहीक्षितस्तेषां द्विजदेवगन्धर्वयक्षमहीक्षितां संबन्धित्वेन अन्यतमं कस्यचित् संबन्धि यच्च सत्त्वं साहसं तस्य पदं स्थानं अन्यतमसत्त्वपदं तस्य संबोधनं हे तथोक्त । हे क्षोणीशमहामात्रकुलकल्याणपरम्पराफलवरद क्षोणीशानां महानरेन्द्राणां ये महामात्रा हस्तिपालास्तेषां कुलस्य अन्वयस्य कल्याणपरम्पराणां शुभश्रेणीनां फलवरं ददातीति तथोक्तः तस्य संबोधनम् । हे द्विरद हे हस्तिन्, हे हे अहो अहो हे हल हे मित्र, हे दिव्यसमाज अमानुषगजेन्द्र मात्राशतं बहुमात्रा यावत् तावत्त्वं तिष्ठ तिष्ठ रह रह ॥

गात्रैरित्यादि । हे गज, त्वं समैरनिम्नोन्नतैर्गात्रैः शरीरप्रतीकैः तिष्ठ । पुरोनखसमं अग्रनखसमानं हस्तं शुण्डादण्डं निधेहि स्थापय । कस्याम् । क्षितौ भूमौ । कराग्रतः शुण्डादण्डाग्रतः अङ्गुल्यां दृष्टिं देहि । हे गज, स्थिरमनाः सन् कर्णौ त्वं आश्लेषय निश्चलीकुरु । हे

वालं धारय वत्स यावदचिरान्मौन्यामहं कल्पये
मात्राणां शतमास्व तावदचलस्त्वं योगिकल्पाकृतिः ॥ २८२ ॥

एवं स्थापनायां यथास्थानं गात्रापरकरनयनश्रवणवालदेशनिवेशेषु कुशल, समसमाहितनिःस्पन्दसर्वदेशपेशल, समुन्मिषत्पूर्वजन्माभ्यस्तक्रियाकलापनैपुण्य, दमकलोकोपदिश्यमानविनयग्रहणप्रवण, निष्पन्नयोगीवावगणितोपान्ताहितकान्तवस्तुजात, महामुनिरिव रुचिरेतराहाराभ्यवहरणसुप्रसन्नस्वान्त, प्रातिशीन इवावधीरितोभयबन्धसंबन्ध, दिव्यचक्षुरिवावितर्कितवि-

---

वत्स हे पुत्र, वालं पुच्छं धारय मा चालय । निश्चलं कुर्वित्यर्थः, कियत्कालं एवं तिष्ठ । यावत् अहं यशोधरमहाराजः अचिरात् स्तोककालेन मौन्यां स्थापनं कल्पये पठामि । मात्राणां शतं कालविशेषाणां सहस्रम् । बहुतरकालमित्यर्थः । तावत् त्वं आस्व तिष्ठ । कथंभूतः सन् आस्व । अचलो निश्चलः । पुनः कथंभूतः सन् । योगिकल्पाकृतिः ध्यानस्थमुनिसदृशाकारः । जात्यलंकारः, उपमालंकारो वा ॥

**एवं स्थापनायामित्यादि** । एवं स्थापनायां मौन्यायां यथा स्थानानामनतिक्रमेण हे गात्रापरकरनयनवालदेश[निवेशेषु] ………………………………………तेषां निवेशेषु स्थानेषु कुशलः प्रवीणः स तथा तस्य संबोधनं हे तथोक्त । हे समसमाहितनिःस्पन्दसर्वदेशपेशल समा अवक्राः, समाहिता आरोपिताः, निःस्पन्दा निश्चला ये सर्वदेशाः शरीरावयवास्तैः पेशलो मनोहरः स तथा तस्य संबोधनं हे तथोक्त । हे समुन्मिषत्पूर्वजन्माभ्यस्तक्रियाकलापनैपुण्य समुन्मिषन् प्रादुर्भवन् पूर्वजन्माभ्यस्तः अतीतभवानुशीलितो योऽसौ क्रियाकलापः क्रियासमूहस्तत्र नैपुण्यं यस्य स तथा तस्य संबोधनम् । हे दमकलोकोपदिश्यमानविनयग्रहणप्रवण दमकलोकेन शिक्षादायकलोकेन उपदिश्यमानः शिक्ष्यमाणो योऽसौ विनयः शिक्षा तस्य ग्रहणेऽङ्गीकारे प्रवणः प्रवीणस्तस्य संबोधनम् । निष्पन्नयोगीव पूर्णध्यानवानिव हे अवगणितोपान्ताहितकान्तवस्तुजात अवगणितानि अवाहतानि उपान्तेषु समीपेषु आहितानि धृतानि कान्तानामतिमनोहराणां वस्तुजातानि इष्टवनितादिवृन्दानि येन स तथा तस्य संबोधनम् । महामुनिरिव दिगम्बराचार्य इव हे रुचिरेतराहाराभ्यवहरणसुप्रसन्नस्वान्त रुचिरो मनोज्ञ इतरोऽमनोज्ञो योऽसावाहारस्तस्याभ्यवहरणे आस्वादने सुप्रसन्नं निर्मलं स्वान्तं मनो यस्य स तथा तस्य संबोधनम् । प्रातिशीन इव कफवानिव हे अवधीरितोभयगन्धसंबन्ध अवधीरितोऽवगणितः उभयोः सुरभ्यसुरभयोर्गन्धः परिमलस्तस्य संबन्धः संयोगो येन स तथा तस्य संबोधनम् । दिव्यचक्षुरिव अन्ध इव हे अवितर्कितविकृतप्राकृतसामाजिकसांग्रामिकालंकारकलितसम-

---

१. 'अर्शोद्यजन्तत्वेन पुच्छार्थकलम्'.

कृतप्राकृतसामाजिकसांग्रामिकालंकारकलितसमस्तसत्त्वप्रबन्ध, सन्नश्रोत इव मृदङ्गानकशङ्खक्ष्वेलितकाहलादिकोलाहलाविप्रलब्धबोध, तिमिरिवोपामर्शनावक्षोदनतोदनादिबाधासंबाधक्षान्तशरीरसौध, अतिनिभृतसमस्ताङ्गतया महामहीधर इव शैलाटनितटीटङ्कघटित, चेष्टितावसर इव, लेपविनिर्मितावतार इव, मेदिनीमध्यान्निरूढ इव च प्ररूढजनमनोविकल्प, द्विप हे हे हल, दिव्यसामज, मात्राशतं तिष्ठ तिष्ठ।

समं स्थित्वा गात्रैरचलितवपुः सूच्छ्रितशिरा
मुखं स्वर्याङ्ग त्वं श्रुतियुगमिदं हर्षय गज।

---

स्तसत्त्वप्रबन्ध। 'विकृतः संस्कृतो रोगी बीभत्सश्च प्रकीर्तितः'। प्राकृता नीचलोकाश्च, जनादयः सामाजिकाश्च (भृत्योचिताः), सांग्रामिकाश्च आयुधोचिताः, अलंकारकलिताश्च शृङ्गारितास्ते च ते समस्ताः सत्त्वाः प्राणिनस्तेषां प्रबन्धः संबन्धः। न वितर्कितो नावगणितो विकृतप्राकृतसामाजिकसांग्रामिकालंकारकलितसमस्तसत्त्वप्रबन्धो येन स तथा तस्य संबोधनं हे तथोक्त। सन्नश्रोत्र इव बधिर इव हे मृदङ्गानकशङ्खक्ष्वेलितकाहलादिकोलाहलाविप्रलब्धबोध मृदङ्गाश्च मर्दलाः, आनकाश्च पटहाः, शङ्खाश्च कम्बुकाः, क्ष्वेडितानि मुखहस्तसंयोगजा ध्वनयः, काहलाश्च धत्तूरपुष्पसदृशमुखा भेर्यः, आदिशब्दाद्विविधतालादयः, तेषां कोलाहलैः कलकलशब्दैरविप्रलब्धोऽवञ्चितोऽस्खलितो बोधो ज्ञानं यस्य स तथोक्तस्तस्य संबोधनम्। तिमिरिव महामत्स्य इव हे उपामर्शनावक्षोदनतोदनादिबाधासंबाधक्षान्तशरीरसौध उपामर्शनं च संस्पर्शः, अवक्षोदनं चारा-..........ङ्कुशादिपीडनमित्यादयः, आदिशब्दात्प्रासादिघातः तेषां बाधा दुःखम्। 'बाधा दुःखनिषेधयोः' इति वचनात्। तस्याः संबाधः पीडा तस्मिन् क्षान्तः सहनशीलः शरीरसौधो देहप्रासादो यस्य स तथा तस्य संबोधनम्। अतिनिभृतसमस्ताङ्गतया अतिनिश्चलशरीरत्वेन महामहीधर इव मेरुरिव। शैलाटनितटीटङ्कघटितचेष्टितावसर इव शैलस्य पर्वतस्याटनिरग्रं तस्य तटी प्रस्थं तस्य टङ्केन लोहटङ्केन घटितं टङ्कच्छिन्नं यच्चेष्टितमवस्था तस्या अवसरो यस्य स तथा। लेपविनिर्मितावतार इव लेपेन पुस्तेन विनिर्मितः कृतोऽवतारो यस्य स तथा। मेदिनीमध्यान्निरूढ इव पृथ्वीमध्यात्स्वयंभूरुद्गत इव। हे प्ररूढजनमनोविकल्प प्ररूढा उत्पन्ना जनानां लोकानां विकल्पा मनोभिप्राया यत्र द्विपे स तथा तस्य संबोधनम्। हे द्विप हे गजेन्द्र। हे हे भो हल सखे, दिव्यसामज अमानुषगजेन्द्र मात्राशतं तिष्ठ तिष्ठेति॥

**सममित्यादि**। अङ्ग अहो गजेन्द्र हस्तिन्, समं निम्नोन्नतत्वरहितं यथा भव-

---

१. कोशेषु तु सख्याह्वाने हलाशब्दः समुपलभ्यते.

उरस्तो निर्गत्य स्थितमिव करं धारय पुरः
कुरूल्लोलं वालं विहितसमवस्थापनविधिः ॥ २८३ ॥

एवमुरोविनिर्गतः पुरःप्रोत्कूणिताग्रहस्ततया प्रहृष्टकर्णतया च वाराहीमाकृतिमानीतनिजदेहवृत्त, गजैतिह्यकुशलोपदिश्यमानदम्यादिकर्मावहितचित्त, प्राजापत्यैन्द्ररौद्रकौबेरवारुणकौमारयाम्यसौम्यवायव्याग्नेयवैष्णवाश्विभगसूर्यदेवतेषु करिषु अन्यतमसंबन्धिलक्षणोपेत, पृथिव्यप्तेजसामेकतमच्छा-

---

त्येवं स्थित्वा स्थानं कृत्वा उत्थितो भूत्वा । कैः कृत्वा स्थित्वा । गात्रैः शरीरप्रतीकैः । अचलितवपुर्निश्चलशरीरः सन् सूच्छ्रितशिरा उन्नतमस्तकः सन् करं शुण्डादण्डं मुखं स्वयं अर्धं करं मुखसंलग्नं कृत्वा मुखे प्रवेश्य इदं प्रत्यक्षीभूतं श्रुतियुगं कर्णयुगलं त्वं हर्षय चालय स्फुरितं कुरु । पुरः अग्रतः करं शुण्डादण्डं धारय धर । किमिव । उरस्तो हृदयात् निर्गत्य स्थितमिव । वालं पुच्छमुल्लोलमूर्ध्वचलनं कुरु विधेहि । कथंभूतस्त्वम् । विहितसमवस्थापनविधिः विहितः कृतः समवस्थापनस्य वराहाकारेण स्थापनविधिर्यस्य स तथोक्तः । उपमालंकारः ॥

**एवमित्यादि** । एवममुना प्रकारेण उरोविनिर्गतपुरःप्रोत्कूणिताग्रहस्ततया उरोविनिर्गतो वक्षःस्थलान्निर्गतः पुरोऽग्रतः प्रोत्कूणितो वक्रितः स चासौ अग्रहस्तः उरोविनिर्गतपुरःप्रोत्कूणिताग्रहस्तस्तस्य भावस्तत्ता तया तथोक्तया, प्रहृष्टकर्णतया च स्फुरितकर्णयुगलतया च । हे वाराहीमाकृतिमानीतनिजदेहवृत्त वराहस्यारण्यशूकरस्येयं वाराही शिक्षाविशेषस्तां वाराहीमाकृतिमाकारमानीतं निजदेहवृत्तं स्वकीयशरीरप्रवर्तनं येन स आनीतनिजदेहवृत्तस्तस्य संबोधनं क्रियते हे तथोक्त । हे गजैतिह्यकुशलोपदिश्यमानदम्यादिकर्मावहितचित्त गजानामैतिह्यं गजशास्त्रं तत्र कुशला विचक्षणा ये पुरुषास्ते गजैतिह्यकुशलास्तैरुपदिश्यमानं शिक्ष्यमाणं यद्दम्यादिकर्म दम्यमादिर्यस्य, सान्नाह्योपवाह्यस्य च कर्मणस्तद्दम्यादि कर्म तत्रावहितं सावधानं चित्तं मनो यस्य स तथा तस्य संबोधनं हे तथोक्त । हे प्राजापत्यैन्द्ररौद्रकौबेरवारुणकौमारयाम्यसौम्यवायव्याग्नेयवैष्णवाश्विभगसूर्यदेवतेषु करिषु अन्यतमसंबन्धिलक्षणोपेत प्रजापतिर्देवता यस्य स प्राजापत्यः, इन्द्रो देवता यस्य स ऐन्द्रः, रुद्रो देवता यस्य स रौद्रः, कुबेरो देवता यस्य स कौबेरः, वरुणो देवता यस्य स वारुणः, कुमारो देवता यस्य स कौमारः, यमो देवता यस्य स याम्यः, सोमो देवता यस्य स सौम्यः, वायुर्देवता यस्य स वायव्यः, अग्निर्देवता यस्य स आग्नेयः, विष्णुर्देवता यस्य स वैष्णवः, अश्विनौ च भगश्च सूर्यश्च अश्विभगसूर्यास्ते देवता येषां करिणां तेऽश्विभगसूर्यदेवताः, प्राजापत्यश्च ऐन्द्रश्च रौद्रश्च कौबेरश्च वारुणश्च कौमारश्च याम्यश्च सौम्यश्च वायव्यश्च आग्नेयश्च वैष्णवश्च अश्विभगसूर्यदेवताश्च ते तथोक्तास्तेषु ईदृग्विधेषु करिषु हस्तिषु अन्यतमस्य

यासमेत, अष्टादशक्रियाधार, तत्कर्मनिष्णाततया विदित, चतुरस्त्रीकृतक्षान्तदान्तयोधविनीतसर्वज्ञादिनामप्रकार, महाबलप्रचण्ड, सकलसपत्नोरःपुरकपाटस्फोटनाशनिदण्ड, परचक्रप्रमर्दनकर, गजबन्धुधराधीशविधुरबान्धवधुर, सिन्धुर, हे हे हल, दिव्यसामज, मात्राशतं तिष्ठ तिष्ठ।

गात्राणां समतां कुरु प्रतिहर त्वं हस्तमुच्चैःशिराः
स्वर्प्यास्यं श्रुतिवालहर्षणपरः पश्चान्निषीदार्धतः।

---

कस्यचिद्गजस्य संबन्धीनि यानि लक्षणानि तैरुपेतो मण्डितो हे तथोक्त। हे पृथिव्यप्तेजसामेकतमच्छायासमेत पृथिवी च आपश्च तेजश्च पृथिव्यप्तेजांसि तेषां मध्ये एकतमस्य छाया दीप्तिस्तया समेतः संयुक्तः हे तथोक्त। हे अष्टादशक्रियाधार अष्टभिरधिका दश अष्टादश। शाकपार्थिवादिदर्शनात् मध्यमपदलोपी समासः। अष्टादशानां, क्रियाणामाधारः स तथा तस्य संबोधनं हे तथोक्त। उक्तं च—'दाम्यं त्रिविधमिच्छन्ति सांनह्यं सप्तधा स्मृतम्। स्यादष्टधोपवाह्यं चेत्येवमष्टादश क्रियाः॥' हे तत्कर्मनिष्णाततया विदित तज्जगत्प्रसिद्धं यत्कर्म तत्र निष्णाततया प्रवीणतया विदितो विख्यातः। हे चतुरस्त्रीकृतक्षान्तदान्तयोधविनीतसर्वज्ञादिनामप्रकार चतुरस्त्रीकृतश्च पण्डितः, क्षान्तश्च क्षमावान्, दान्तश्च जितेन्द्रियः, योधश्च सहस्रभटलक्षभटकोटीभटविध्वंसकः, विनीतश्च शिक्षाग्राहकः, सर्वज्ञश्च संज्ञाज्ञातस्त आदिर्येषां तेषां प्रकारा भेदा यस्य स चतुरस्त्रीकृतक्षान्तदान्तयोधविनीतसर्वज्ञादिनामप्रकारस्तस्य संबोधनम्। हे महाबलप्रचण्ड महाबलेन अतिबलेन प्रचण्डः महाबलप्रचण्डः। वृहद्बलेनात्यन्तकोपन इत्यर्थः। तस्य संबोधनम्। हे सकलसपत्नोरःपुरकपाटस्फोटनाशनिदण्ड सकलाश्च ते सपत्नाः शत्रवस्तेषामुरांसि हृदयानि पुरकपाटानि च नगरगोपुरअरराणि तेषां स्फोटने चूर्णीकरणे अशनिदण्डो वज्रपातः स तथा तस्य संबोधनम्। हे परचक्रप्रमर्दनकर परेषां शत्रूणां चक्राणि सैन्यानि तेषां प्रमर्दनं चूर्णीकरणं करोतीति परचक्रप्रमर्दनकरस्तस्य संबोधनम्। हे गजबन्धुधराधीशविधुरबान्धवधुर गजा हस्तिनो बन्धवो दायादा येषां ते गजबान्धवाः ते च ते धराधीशा राजानस्तेषां विधुरे संकटवेलायां बान्धवस्योपकारिणो धूर्यस्य स गजबन्धुधराधीशविधुरबान्धवधुरी[1] तस्य संबोधनम्। हे सिन्धुर हे गजेन्द्र। हे हे हल भो सखे, हे दिव्यसामज अमानुषगज मात्राशतं बहुमात्रापर्यन्तं तिष्ठ तिष्ठ॥

गात्राणामित्यादि। हे करिन्, त्वं भवान् गात्राणां शरीरावयवानां समतां समत्वं अनिम्नोन्नतत्वं कुरु निधेहि। हस्तं प्रतिहर संकोचय। किं कृत्वा। पूर्वं आस्ये

---

१. 'स्वर्प्यास्ये' इति पाठो भवेत्.

---

१. 'धुरस्तस्य' इति पाठो भवेत्.

वंशं निम्नय निर्भुजोरसि ततः प्रोत्फुल्लनेत्रद्वयः
सिंहस्थापनया युतो भव करिन्नुत्पित्सुसिंहोपमः ॥ २८४ ॥

एवमुपस्थापनायामुपात्तवपुश्चण्डिमाडम्बरतया हठाद्गृहीतकरिकुलाकारणवैरिकण्ठीरवाकार, उत्पतिष्णुमहामहीधरप्रतिमतया संपादितोपकण्ठसत्त्वसाध्वसावतार, समस्तसपत्नग्रसनकामतयेव विस्फारितमहाभयानकव्यवसायकाय, सकलभूताभिभाविना चराचरतैजसांशजातजनितेन ज्वलज्ज्वाल-

---

हस्तं स्वशुण्डादण्डं मुखमध्ये प्रवेश्य। कथंभूतस्त्वम्। उच्चैःशिरा उन्नतमस्तकः। पुनः कथंभूतस्त्वम्। श्रुतिवालहर्षणपरः कर्णपुच्छस्फुरणतत्परः। हे करिन्, पश्चाद्भागे अर्धतो निषीद सांशमुपविश। हे करिन्, त्वं वंशं पृष्ठमध्यं निम्नय निम्नं कुरु। हे करिन्, ततस्तदनन्तरं उरसि हृदये निर्भुज निर्गच्छ। उरोऽग्रतः कुर्वित्यर्थः। कथंभूतस्त्वम्। प्रोत्फुल्लनेत्रद्वयः विकसितलोचनयुगलः। हे करिन्, त्वं सिंहस्थापनया युतो युक्तो भव सिंहरूपेण तिष्ठ। कथंभूतस्त्वम्। उत्पित्सुसिंहोपमः वद्धक्रमसिंहसदृशो भव। उपमालंकारः॥

**एवमित्यादि**। एवममुना प्रकारेण उपस्थापनायां सिंहाकारेण प्रतिष्ठापनायां हे उपात्तवपुश्चण्डिमाडम्बरतया हठाद्गृहीतकरिकुलाकारणवैरिकण्ठीरवाकार उपात्तो गृहीतो वपुषः शरीरस्य यश्चण्डिमा प्रचण्डत्वं तस्याडम्बर आटोपस्तस्य भाव उपात्तवपुश्चण्डिमाडम्बरता तया हठात्कृत्वा हठात्प्रसह्य गृहीतः स्वीकृतः करिणां कुलानां समूहानां अकारणवैरी निष्कारणशत्रुः स चासौ कण्ठीरवः सिंहस्तस्याकारो येन स गृहीतकरिकुलाकारणवैरिकण्ठीरवाकारः तस्य संबोधनं हे तथोक्त। हे उत्पतिष्णुमहामहीधरप्रतिमतया संपादितोपकण्ठसत्त्वसाध्वसावतार उत्पतिष्णुरुत्पतनशीलो योऽसौ महामहीधरो महापर्वतस्तस्य प्रतिमतया तुल्यतया संपादितः उपकण्ठसत्त्वानां समीपवर्तिप्राणिवर्गाणां साध्वसावतारो येन स तस्य संबोधनं हे तथोक्त। हे समस्तसपत्नग्रसनकामतयेव विस्फारितमहाभयानकव्यवसायकाय समस्तानां सर्वेषां सपत्नानां शत्रूणाम्। प्रतिहस्तिनामित्यर्थः। ग्रसनकामतया इव भक्षणेच्छया इव विस्फारितः प्रचुरीकृतो वृहत्कृतो महाभयानकोऽतिभीष्मो व्यवसाय उद्यमो यस्य स विस्फारितमहाभयानकव्यवसायः ईदृग्विधः कायः शरीरं यस्य स तथोक्तस्तस्य संबोधनं हे तथोक्त। हे मदपुरुषेणाधिष्ठिततया द्विगुणीभूतभीमसाहसनिकाय मदपुरुषेण राक्षसेन अधिष्ठिततया संक्रान्ततया द्विगुणीभूतो द्विरुक्तो भीमो भयानकः साहसनिकायः अद्भुतकर्मसमूहो यस्य स द्विगुणीभूतभीमसाहसनिकायस्तस्य संबोधनम्। कथंभूतेन मदपुरुषेण। सकलभूताभिभाविना सकलान् समस्तान् भूतान् प्राणिवर्गान् व्यन्तरविशेषान् वा अभिभवति पराभवति स सकलभूताभिभावी तेन। पुनः कथंभूतेन मदपुरुषेण। चराचरतैजसांशजातजनितेन चराचरस्य जगतो ये तैजसांशास्तेजोमयभागास्तेषां जातं समूहस्तेन जनित

वज्रवैश्वानरकरालमूर्तिना मदपुरुषेणाधिष्ठिततया द्विगुणीभूतभीमसाहसनिकाय, अनेकशः कदनमेदिनीषु नखरदविदारितारातिकरितुरगरथतरीचरनरनिकरकीलालकेलिकृतमहायोगिनीबलिविधान, अव्याजाश्चर्यशौर्यप्रीतया वीरश्रिया स्वयमेव विहिताहितलोहितपञ्चाङ्गुलप्रपञ्चाधान, निरन्तरमविचारितमाचरितमृगायितैः शत्रुभिश्चिरं खिलीभूतामरपुरमार्गतया ज्वलदनङ्गाङ्गारचुम्बनच्युतचित्तप्रसत्तीनामप्सरसां दैवादाहवेष्वभीतायातहतपरेतसंगतरमितसुभटप्रसूतसुरतसुखसुधासारवर्षप्रावृषेण्यपर्जन्य, दुर्जयजन्य, निजनि-

---

उत्पादितः चराचरतैजसांशजातजनितस्तेन। पुनः कथंभूतेन मदपुरुषेण। ज्वलज्ज्वालवज्रवैश्वानरकरालमूर्तिना ज्वलन्त्यो जाज्वल्यमाना ज्वाला यस्य स ज्वलज्ज्वालः स चासौ वज्रवैश्वानरो वज्राग्निस्तद्वत्कराला रौद्रा मूर्तिर्यस्य मदपुरुषस्य स तथा तेन। उक्तं च मदपुरुषलक्षणम्—'मयूरग्रीवाभं चपलरसनं रक्तनयनं चतुर्दंष्ट्राहिंस्रं पृथुकरशिरोमेढ्रजठरम्। चलन्मुक्तं शङ्खश्रवणमदमयं षोडशभुजं ज्वलत्केशं वन्दे मदपुरुषमत्युग्रवदनम्॥' अनेकशोऽनेकवारान् कदनमेदिनीषु संग्रामभूमिषु हे नखरदविदारितारातिकरितुरगरथतरीचरनरनिकरकीलालकेलिकृतमहायोगिनीबलिविधान नखाश्च रदौ च नखरदास्तैर्विदारिताश्चूर्णीकृता ये अरातीनां शत्रूणां करिणो हस्तिनः तुरगाश्च हयाः रथाश्च स्यन्दनाः तरीचरनराश्च नौकास्थितसुभटास्तेषां निकराः समूहास्तेषां कीलालकेलयो रुधिरक्रीडास्ताभिः कृतं महायोगिनीनां विद्यादेवतानां बलिविधानं पूजाविधिर्येन स तथोक्तस्तस्य संबोधनं हे तथोक्त। अव्याजं निष्कपटं यत् आश्चर्यं शौर्यं अद्भुतशूरत्वं तेन प्रीतया प्रीतिं प्राप्तया वीरश्रिया स्वयमेवोपदेशेन विहितं अहितानां शत्रूणां लोहितेन रुधिरेण पञ्चाङ्गुलं प्रपञ्चाधानं स्थासकविस्तारकरणं यस्य स तथा तस्य संबोधनं स्वयमेव विहिताहितलोहितपञ्चाङ्गुलप्रपञ्चाधान। निरन्तरमविच्छिन्नं अविचारितं अपर्यालोचितं यथा भवत्येवं आचरितमृगायितैः कृतपलायनैः शत्रुभिर्वैरिभिः कृत्वा चिरं दीर्घकालं खिलीभूत उद्वसो जातो योऽसौ अमरपुरमार्गः तस्य भावः खिलीभूतामरपुरमार्गता तया हेतुभूतया ज्वलन् जाज्वल्यमानो योऽसौ अनङ्गः स एवाङ्गारो अग्निखण्डस्तस्य चुम्बनेन च्युता नष्टा चित्तप्रसत्तिश्चित्तनिर्मलता यासां ता ज्वलदनङ्गाङ्गारचुम्बनच्युतचित्तप्रसत्तयः तासां मलिनीभूतानां चित्तप्रसत्तीनां ईदृग्विधानां अप्सरसां देवाङ्गनानां दैवात् भाग्यात् आहवेषु संग्रामेषु। हे अभीतायातहतपरेतसंगतरमितसुभटप्रसूतसुरतसुखसुधासारवर्षप्रावृषेण्यपर्जन्य अभीता न भयं प्राप्ताः सर्वे पश्चादायाताः संग्रामे मिलितास्ते च ते हता विध्वंसितास्ते च ते परेता मृतास्तैः सह संगता मिलिताः पश्चान्मिलितास्तदनन्तरं रमिता मैथुने भुक्तास्ते च ते सुभटास्तेभ्यः प्रसूतमुत्पन्नं यत् सुरतसुखं संभोगसौख्यं तदेव सुधासारोऽमृतवृष्टिस्तस्य वर्षे वेगव-

वासदुर्जनक्षयकाल, निजावनीधरधरणिरक्षणक्षमप्रतापासराल, निजविजिगीषुविजयवरप्रदानोदितोदित, निजपराक्रमगर्वखर्वितदुर्वारपरदर्पपर्वत, निजनाथवरूथिनीरक्षणपरिचलत्प्राकार, कुञ्जरकुलसार, हे हे हल, दिव्यसामज, मात्राशतं तिष्ठ तिष्ठ इति पाठपरायणः स्वयमेव गृहीतवेणुर्वारणान्विनिन्ये ।

न विनीता गजा येषां तेषां ते नृप केवलम् ।
क्लेशायार्थविनाशाय रणे चात्मवधाय च ॥ २८५ ॥

---

दूर्षणे प्रावृषेण्यपर्जन्यो वर्षर्तुमेघस्तस्य संबोधनं हे तथोक्त । हे दुर्जयजन्य दुःखेन महता कष्टेन जीयते तद्दुर्जयं दुर्जयं जन्यं संग्रामो यस्य स दुर्जयजन्यस्तस्य संबोधनं हे तथोक्त । हे निजनिवासदुर्जनक्षयकाल निजनिवासस्य निजनगरस्य निजराजधान्या ये दुर्जनाः शत्रवस्तेषां क्षयकालः प्रलयकालस्तस्य संबोधनं हे तथोक्त । हे निजावनीधरधरणिरक्षणक्षमप्रतापासराल निजः स्वकीयो योऽसाववनीधरो राजा तस्य धरणिः भूमिस्तस्या रक्षणे प्रतिपालने क्षमः समर्थो योऽसौ प्रतापस्तेन असरालो अपर्यन्तस्तस्य संबोधनं हे तथोक्त । हे निजविजिगीषुविजयवरप्रदानोदितोदित.................................... । हे निजपराक्रमगर्वखर्वितदुर्वारपरदर्पपर्वत निजपराक्रमस्य निजशक्तेः योऽसौ गर्वोऽहंकारस्तेन खर्वितो ह्रस्वीकृतः शतखण्डीकृतो दुर्वाराणां दुर्जयानां परेषां शत्रूणां हस्तिनां दर्पपर्वतो मदगिरिर्येन स तथा तस्य संबोधनं हे तथोक्त। हे निजनाथवरूथिनीरक्षणपरिचलत्प्राकार निजनाथः स्वकीयस्वामी तस्य वरूथिनी सेना तस्या रक्षणे परिचलत्प्राकारो जङ्गमशालस्तस्य संबोधनम् । हे कुञ्जरकुलसार हे गजान्वयोत्तम । हे हे हल भो भो सखे, हे दिव्यसामज अमानुषगजेन्द्र मात्राशतं बहुमात्रापर्यन्तं तिष्ठ तिष्ठ सिंहरूपेण रह रह ॥

**न विनीता इत्यादि** । हे नृप, येषां नरेन्द्राणां विनीताः शिक्षिता गजा न भवन्ति तेषां अविनीता गजाः केवलं क्लेशाय भवन्ति । न केवलं क्लेशाय, किं तु अर्थविनाशाय भवन्ति । तद्गजत्राणे यद्धनं दत्तं तद्विनष्टमिति भावार्थः । रणे च आत्मवधाय नृपवधाय भवन्ति । उक्तं च—'यद्वच्चर्ममयो हस्ती यद्वत्काष्ठमयो मृगः । तद्वद्दन्ति मातङ्गमविनीतं तथोत्तमाः ॥' समुच्चयः ॥

कदाचित्कस्मिंश्चिदवसरे प्रभिन्नकरिकेलीरदर्शं प्रभिन्ना मत्ता ये करिणो हस्तिनस्तेषां केलयः क्रीडाः प्रभिन्नकरिकेलयस्ताः प्रभिन्नकरिकेलीः अहमदर्शं ददृशे । दृष्टवानित्यर्थः । उक्तं च—'प्रभिन्नो गर्जितो मत्तः' इति क्रियाकारकसंबन्धः । कथंभूतोऽहम् । गजोपजीविलोकेनानन्दितचेताः आह्लादितमनाः । किं कुर्वता गजोपजीविलोकेन । इतीदृशं पाठं पठता । किं कृत्वा । पूर्वं इति श्लोकमनुस्मृत्य चिन्तयित्वा । इतीति किम् ।

यस्य जीवधनं यावत्स तावत्स्वयमीक्षताम् ।
अन्यथान्नादिवैगुण्यात्तद्दुःखे पापभाग्भवेत् ॥ २८६ ॥

इत्यनुस्मृत्य कदाचित्कृतकरेणूरोहणः

व्यूढोरस्कः प्रभूतान्तरमणिरतनुः सुप्रतिष्ठाङ्गबन्धः
स्वाचारोऽन्वर्थवेदी सुरभिमुखमरुद्दीर्घहस्तः सुकोशः ।
आताम्रोष्ठः सुजातः प्रतिरवमुदितश्चारुशीर्षोद्गमश्रीः
क्षान्तस्तत्कान्तलक्ष्मीः शमितवलिपदः शोभते भूप भद्रः ॥ २८७ ॥

---

यस्येत्यादि । यस्य पुरुषस्य नृपस्य वा यावत्परिमाणं जीवधनं गोमहिष्यादिकं वर्तते स पुमान् तावत्परिमाणं जीवधनं स्वयं ईक्षतां स्वयमेव संभालनं करोति । अन्यथा यदा रक्षणं न कुरुते तदा अन्नादिवैगुण्यात् अन्नघासादीनां हीनत्वात् तद्दुःखे सति स पुमान् पापभाग्भवेत् पापी स्यात् । जात्यलंकारोऽयम् ॥

कथंभूतोऽहम् । कृतकरेणूरोहणः.................................. । [पुनः कथंभूतोऽहम् ।] वेतण्डमण्डलीमवलोकमानः गजमण्डलीं विलोकमानः यावदहमासे तिष्ठामि । कथंभूतां वेतण्डमण्डलीम् । महामात्रसमूहाम्नायमानवर्णाम्...... .............................. । [पुनः कथंभूताम् ।] भद्रमन्दमृगसंकीर्णविस्तीर्णाम् भद्रा भद्रजातिगजाः, मन्दा मन्दजातिगजाः, मृगा मृगजातिगजाः, संकीर्णास्तन्मिश्रजातिगजाः, तैर्विस्तीर्णा प्रचुरभूताम् । इतीति किम् ।

व्यूढोरस्क इत्यादि । हे भूप, भद्रो भद्रजातीयो हस्ती शोभते । कथंभूतः । व्यूढोरस्कः व्यूढं घनं उरो हृदयं यस्य स व्यूढोरस्कः । उक्तं च—'व्यूढा न्यस्तोरुसंहताः' । विस्तीर्णहृदय इत्यर्थः । पुनः कथंभूतः । प्रभूतान्तरमणिः प्रभूताः प्रचुराः अन्तरा विशिष्टा मणयो रत्नानि यस्य मस्तके मुक्ताफलानि यस्य स तथा । पुनः कथंभूतः । अतनुः अदुर्बलः अकृशः स्थूल इत्यर्थः । पुनः कथंभूतः । सुप्रतिष्ठाङ्गबन्धः सुप्रतिष्ठो निश्चलो वा शोभितो अङ्गबन्धः शरीरबन्धो यस्य स तथा । पुनः कथंभूतः । स्वाचारः शोभनाचारः । पुनः कथंभूतः । अन्वर्थवेदी सत्यार्थज्ञापकः । पुनः कथंभूतः । सुरभिमुखमरुत् सुरभिः सुगन्धः मुखस्य मरुत् श्वासवायुर्यस्य स तथा । पुनः कथंभूतः । दीर्घहस्तः आयतशुण्डादण्डः । भूमिस्पृक्कर इत्यर्थः । पुनः कथंभूतः । सुकोशः शोभन आम्रपल्लवसकाशः कोशो मे...न्द्रि...यस्य स तथा । पुनः कथंभूतः । आताम्रोष्ठः रक्ताधरः । पुनः कथंभूतः । सुजातः सुनिष्पन्नः रथेषाकृतिर्मेदलः कुलीनश्च । पुनः कथंभूतः । प्रतिरवमुदितः निजगर्जितस्य प्रमुदिति शब्देन हर्षवान् । पुनः कथंभूतः । चारुशीर्षोद्गमश्रीः चारु मनोहरा शीर्षस्य मस्तकस्य उद्गमश्रीः उन्नतिशोभा यस्य स तथा । पुनः कथंभूतः । क्षान्तः क्षमावान् समर्थो वा । पुनः कथंभूतः । तत्कान्तलक्ष्मीः सा

योऽच्छिद्रस्त्वयि वीतभीरवनतः पश्चात्प्रसादात्पुनः
किंचित्ते पुरतः समुच्छ्रितशिराः कार्येषु भारक्षमः ।
सोऽत्यल्पश्रम एव मण्डलयुतो गम्भीरवेदी पृथु-
र्मन्देभानुकृतिर्वलीरितवपुः स्यात्सान्द्रपर्वा नृपः ॥ २८८ ॥
ये वीर त्वयि बह्वलीकमनसः सेवासु दुर्मेधसो
ह्रस्वोरोमणयः करेषु तनवः स्थूलेक्षणाः शत्रवः ।

---

जगत्प्रसिद्धा कान्ता मनोहरा लक्ष्मीः शोभा यस्य स तथा । पुनः कथंभूतः । शमितवलिपदः शमिता नष्टा वलयस्त्वक्संकोचास्त्वक्तरङ्गाः पादेषु चरणेषु यस्य वलिनश्च येन स तथा । जात्यलंकारः ॥

**योऽच्छिद्र इत्यादि** । स नृपः स राजा सान्द्रपर्वा बहुमहोत्सवः स्यात् भवेत् । स कः । यो नृपः त्वयि विषये अच्छिद्रमनन्वेषणः[1] । स नृपः कथंभूतः । वीतभीः सर्वनिर्भयः युष्मत्तो भयं न करोति । पश्चात् ते तव प्रसादात् अवनतो नम्रीभूतः किंचिन्मनाक् । पुनरिवार्थे पादपूरणार्थे । पुनः कथंभूतः । पुरतः अग्रतः समुच्छ्रितशिराः उन्नतमस्तकः । पुनः कथंभूतः । कार्येषु भारक्षमः तव कार्यवेलायां कार्यकारकः । पुनः कथंभूतः । अत्यल्पश्रमेणैव अल्पकष्टेनैव राज्यभोक्ता । पुनः कथंभूतः । मण्डलयुतः राष्ट्रसंयुक्तः । पुनः कथंभूतः । गम्भीरवेदी तव गाम्भीर्यज्ञापकः । पुनः कथंभूतः । पृथुर्विस्तीर्णराज्यः । पुनः कथंभूतः । वलीरितवपुः वलवद्भिः प्रेरितशरीरः । पुनः कथंभूतः । मन्देभानुकृतिः मन्दजातीयहस्तिसदृशः । कथंभूतो मन्दजातीयो गजः । अच्छिद्रो निविडवन्धः । पुनः कथंभूतः । त्वयि विषये वीतभीः शत्रुभयरहितः । पुनः कथंभूतः । पश्चात् अवरगात्रे अवनतः नम्रीभूतः । ते प्रसादात् प्रसन्नतया । पुनः कथंभूतः । पुनरपि किंचिन्मनाक् पुरतोऽग्रतः समुच्छ्रितशिराः उन्नतमस्तकः । पुनः कथंभूतः । कार्येषु संग्रामादिवेलायां भारक्षमः भारोच्चलनसमर्थः । पुनः कथंभूतः । अत्यल्पश्रम एव भारं वहमानोऽपि अत्यल्पश्रमः । पुनः कथंभूतः । मण्डलयुतः हस्तिसमूहान्वितः । पुनः कथंभूतः । गम्भीरवेदी त्वग्भेदादाशोणितस्रवणादामांसं मथनादपि यः संज्ञां न लभते स गम्भीरवेदी कथ्यते । पुनः कथंभूतः । पृथुर्विस्तीर्णपृष्ठदेशः । पुनः कथंभूतः । वलीरितवपुः वलिभिः त्वक्तरङ्गैः ईरितं अनुगतं वपुः शरीरं यस्य स तथा । पुनः कथंभूतः । सान्द्रपर्वा सान्द्राणि पर्वाणि संधिप्रदेशा यस्य स सान्द्रपर्वा । श्लेषोपमालंकारः ॥

**ये वीरेत्यादि** । हे वीर विक्रान्त, हे नाथ पृथ्वीपते, ये शत्रवो अमत्रयः[2] त्वयि विषये वहु अलीकमनसो वर्तन्ते । कुटिलहृदया वर्तन्त इत्यर्थः । पुनः कथंभूता वर्तन्ते ।

---

१. छिद्रान्वेषणरहितः पूर्णविश्वासी इत्यर्थः. २. 'अमित्राः' इति भवेत्.

तैर्नाथाल्पतनुच्छविप्रभृतिभिः शोकालुभिर्दुर्भरैः
संक्षिप्तैरणुवंशकैर्मृगसमं प्रायः समाचर्यते ॥ २८९ ॥
द्वारि तव देव बद्धाः संकीर्णाश्चेतसा च वपुषा च।
शत्रव इव राजन्ते बहुभेदाः कुञ्जराश्चैते ॥ २९० ॥

इति महामात्रसमूहाम्नाययानवर्णी भद्रमन्दमृगसंकीर्णविस्तीर्णा वेतण्ड-

---

सेवासु दुर्मेधसः रुचिरतया सेवां न कुर्वन्ति। पुनः कथंभूताः शत्रवः। ह्रस्वोरोमणयः ह्रस्वा अस्थूला उरोमणयः मुक्ताफलादिहारमणयो येषां ते ह्रस्वोरोमणयः। ये पुनः कथंभूताः। करेषु देयेषु तनवः तुच्छाः। पुनः कथंभूताः। स्थूलेक्षणाः असूक्ष्मबुद्धयः। तैः शत्रुभिः प्रायो बाहुल्येन मृगजातिहस्तिसदृशः यथा भवत्येवं समाचर्यते व्याप्रियते। कथंभूतास्ते मृगजातयः। बह्लीकमनसः हीनहृदयाः पुनः सेवासु दुर्मेधसः यथोक्तशिक्षां न गृह्णन्ति। पुनः ह्रस्वोरोमणयः अल्पहृदयाः करेषु शुण्डादण्डेषु तनवः अभूमिलग्नदुर्बलशुण्डादण्डाः। पुनः स्थूलेक्षणाः स्थूलं वस्तु पश्यन्ति सूक्ष्मं न पश्यन्ति। तैर्मृगजातिभिर्गतिः मृगसमं हरिणसदृशं यथा भवत्येवं प्रायो बाहुल्येन सम्यक्प्रकारेण आचर्यते व्याप्रियते। कथंभूतैस्तैर्मृगजातिगजैः। अल्पतनुच्छविप्रभृतिभिः अल्पा तनुच्छविप्रभृतयो येषां ते अल्पतनुच्छविप्रभृतयः। शत्रुभिः कथंभूतैः। अल्पप्रतापैः। गजैः कथंभूतैः। शोकालुभिः विन्ध्यवनादिस्मरणशीलैः। शत्रुभिः कथंभूतैः। शोकालुभिः पश्चात्तापकारिभिः। गजैः कथंभूतैः। दुर्भरैः भारोद्वहने असमर्थैः। शत्रुभिः कथंभूतैः। दुर्भरैः हीनातिशयैः। गजैः कथंभूतैः। संक्षिप्तैः सर्वशरीरावयवेषु अल्पैः। शत्रुभिः कथंभूतैः। संक्षिप्तैः अल्पधनैः अल्पसैन्यैः। गजैः कथंभूतैः। अणुवंशकैः अविस्तीर्णपृष्ठप्रदेशैः। शत्रुभिः कथंभूतैः। अणुवंशकैः जातिकुलहीनैः। श्लेषोपमालंकारः॥

**द्वारीत्यादि**। हे देव हे राजन्, तव द्वारि भवतः सिंहद्वारे एते कुञ्जरा हस्तिनो बहुभेदा मिश्रजातयो बद्धाः सन्तो राजन्ते शोभन्ते। कथंभूताः कुञ्जराः। चेतसा मनसा वपुषा शरीरेण च संकीर्णाः। अशुद्ध्या मिश्रिता इत्यर्थः। 'संकीर्णौ निचिताशुद्धौ' इति वचनात्। कुञ्जराः कथंभूताः। शत्रव इव शत्रुसदृशाः। यथा तव शत्रवः संकीर्णा अल्पायतयो भवन्ति। केन चेतसा वपुषा च। बहुभेदा नानाप्रकाराश्च भवन्ति ते शत्रवः तव द्वारे बद्धाः शोभन्ते। श्लेषोपमासमुच्चयः॥

किं कृत्वा। प्रधावधरणिषु गजविनयभूमिषु करिविनोदविलोकनदोहदं नाम प्रासादं अध्यास्य आरुह्य। कथम्। समं सह। कया सह सोत्तालबृंहणसंचयव्यास्तारमुखवर्धनकटवर्धनकटशोधनप्रतिभेदनप्रवर्धनवर्णकरगन्धकरोद्दीपनह्रासनविनिवर्तनप्रभेदमदोपचारोपदेशविशारदाशयशङ्काङ्कुशगुणाङ्कुशप्रमुखाचार्यपरिषदा सोत्तालं बृंहणं च वर्धनम्, संचयं करणम्, व्यास्तारश्च विस्तारकरणम्, मुखवर्धनं च मुखवृद्धिः, कटवर्धनं

मण्डलीमवलोकमानः यावदहमासे तावद्देव, वसुमतीतिलकः संजाततिलकायाम्, पट्टवर्धन आर्द्रकपोलिकायाम्, अधोनिवन्धिन्यामुद्धताङ्कुशः, परचक्रप्रमर्दनो गन्धचारिण्याम्, अहितकुलकालानलः क्रोधिन्याम्, अतिवर्तिन्यां चर्चरीवतंसः, संभिन्नमदमर्यादायां च विजयशेखर इत्यनीकस्थेन विनिवेदितद्विरदमदावस्थः सोत्तालबृंहणसंचयव्यास्तारमुखवर्धनकटवर्धनकटशोधनप्रतिभेदनप्रवर्धनवर्णकरगन्धकरोद्दीपनह्रासनविनिवर्तनप्रभेदमदोपचारोपदेशविशारदाशयशङ्खाङ्कुशगुणाङ्कुशप्रमुखाचार्यपरिषदा समं प्रधावधरणिषु करिविनोदविलोकनदोहदं प्रासादमध्यास्य

---

च गण्डवर्धनम्, कटशोधनं कटयोर्मध्यप्रदेशप्रक्षालनम्, प्रतिभेदनं च विदारणम्, प्रवर्धनं कटकप्रदर्शनम्, वर्णकरश्च विलेपनम्, गन्धकरश्च चन्दनादिदानम्, उद्दीपनं च दीप्तिकरणम्, ह्रासनं··········, विनिवर्तनं च पश्चात्करणम्, प्रभेदकरणं ते च ते मदोपचारा मदनिवर्तनचिकित्सा तेषामुपदेशो गुरुगम्यः तत्र विशारदो विचक्षणः आशयश्चित्तं तेषां च शङ्खाङ्कुशगुणाङ्कुशप्रमुखाचार्यास्तेषां परिषत् समूहः तया तथोक्तया समं प्रासादमारुह्य । कथंभूतोऽहम् । इत्यमुना प्रकारेण अनीकस्थेन सेनापतिना विनिवेदितद्विरदमदावस्थः विनिवेदिता विज्ञापिता द्विरदानां हस्तिनां मदावस्था यस्य स तथोक्तः । इतीति किम् । हे देव, वसुमतीतिलकः वसुमतीतिलकनामा गजेन्द्रः संजाततिलकायां मदावस्थायां वर्तते । पट्टवर्धनो नाम हस्ती आर्द्रकपोलिकायां मदावस्थायां वर्तते । उद्धताङ्कुशो नाम हस्ती अधोनिवन्धिन्यां अधोनिवन्धिनीनाममदावस्थायां वर्तते । परचक्रप्रमर्दनो नाम हस्ती गन्धचारिण्यां क्रोधिनीनाममदावस्थायां वर्तते । अहितकुलकालानलो नाम हस्ती क्रोधिन्यां क्रोधिनीनाममदावस्थायां वर्तते । चर्चरीवतंसः ·························अतिवर्तिन्यां························· । विजयशेखरो नाम हस्ती संभिन्नमदमर्यादायां संभिन्नमदमर्यादानाममदावस्थायां वर्तते । उक्तं च—'संजाततिलका पूर्वा द्वितीयार्द्रकपोलिका । तृतीयाधोनिवद्धा तु चतुर्थी गन्धचारिणी ॥ पञ्चमी क्रोधिनी ज्ञेया षष्ठी चैव प्रवर्तिका । स्यात्संभिन्नकपोला च सप्तमी सर्वकालिका । प्राहुः सप्त मदावस्था मदविज्ञानकोविदाः ॥' इति । तथा च मदगुणा अष्ट भवन्ति—'प्रहर्षः शीघ्रता गन्धो रतिर्देहस्य क्रान्तता । क्रोधो वीर्यं गुणीचन्द्रे(?)-अष्टौ मदगुणाः स्मृताः ॥' तथा मदस्य षड्दोषा भवन्ति—'निद्राविघातो मृक्का(?)-ग्रासद्वेषो वलक्षयः । मूढता चाभिवर्तित्वं षड्दोषाः कीर्तिता मदे ॥' इत्यस्य यथासंभवमर्थमाह—ननु मदो गण्डस्थलाश्रयतया न वाच्यः । यतः—'एतत्तालुकरणाक्षिकोशेभ्यः चिबुकाभ्यां करात्तथा । रोमकूपकटिभ्यश्च प्रभिन्नस्त्वष्टधा गजः ॥' तत्र—'कटात्स्रुतो भवेद्दानं सिन्धुर्नेत्रस्रुतो मदः । मदः कोशस्रुतो ज्ञेयः सीकरं च कटस्रुतम् ॥'

मदमृगमदलेखोल्लासिगण्डस्थलश्री-
मुंहुरनिभृतजृम्भारम्भशुम्भद्विलासः ।
करिपतिरयमन्यामेव देवाद्य कांचि-
च्छ्रियमवति रणान्ते त्वं यथा जैत्रचापः ॥ २९१ ॥

करिणा वमथुर्मुक्तः पुरः पुरः स्थूलबिन्दुसंतानः ।
रचयति दिगङ्गनानां मुक्ताफलभूषणानीव ॥ २९२ ॥

उत्तम्भीकृतकर्णतालयुगलः प्रत्यस्तपांसुक्रियः
प्रत्यादिष्टकरेणुकेलिरमणः प्रत्यर्पिताम्भोघटः ।

---

इति विशेषवचनात् । एकमेवेति तत् । किं तु कविसमये दानमदैरविशेषेण प्रयोगा-द्दोषः । कथंभूतः सन् प्रभिन्नकरिकेलीरदर्शम् । इति पठता गजोपजीविलोकेन आन-न्दितचेताः । इतीति किम् ।

**मदमृगमदलेखेत्यादि** । हे देव, अयं करिपतिः गजेन्द्रः अद्य इदानीं अन्यामेव अपूर्वामेव कांचित् अनिर्वचनीयां श्रियं शोभां अवति धारयति । क इव । त्वमिव यथा त्वं रणान्ते संग्रामान्ते अपूर्वां श्रियमवसि । कथंभूतस्त्वम् । जैत्रचापः जयनशीलधनुर्धरः । कथंभूतोऽयं करिपतिः । मदमृगमदलेखोल्लासिगण्डस्थलश्रीः मद एव मृगमदः कस्तूरी तस्य लेखा राजयः ताभिरुल्लासिनी उल्लसनशीला गण्डस्थलश्रीः कपोलस्थलशोभा यस्य स तथोक्तः । कथंभूतस्त्वम् । मदसदृशकस्तूरिकारेखोल्लसनशीलकपोलस्थलशोभः । कथं-भूतोऽयं करिपतिः । मुहुर्वारंवारं अनिभृतजृम्भारम्भशुम्भद्विलासः अनिभृतमनिश्चलं यथा भवत्येवं जृम्भारम्भेण मुखविकारकरणेन शुम्भन्तः शोभमाना विलासा लोचन-चलनानि यस्य स तथा । त्वं कथंभूतः । स एवार्थः । उपमालंकारः ॥

**करिणेत्यादि** । करिणा गजेन वमथुः करशीकरः मुक्तः सन् पुरोऽग्रे स्थूलबिन्दु-संतानः पीवरबिन्दुसमूहः दिगङ्गनानां मुक्ताफलभूषणानीव रचयति । क्रियोपमालंकारः॥

**उत्तम्भीकृतेत्यादि** । हे राजन्, अयं करिपतिरिति पूर्वोक्तमेव ग्राह्यम् । अयं करिपतिस्तिष्ठति ऊर्ध्व एव चरति । किं कृत्वा । पूर्वं पातुर्मिंवलस्य प्रार्थनया विधृतान् इ-क्षून् करे शुण्डादण्डे गृहीत्वा । कथंभूतानिक्षून् । चिराय दीर्घकालं विधृतान् । कथंभू-तोऽयं करिपतिः । उत्तम्भीकृतकर्णतालयुगलः निश्चलीकृतकर्णतालयुगलः । पुनः कथंभूतः । प्रत्यस्तपांसुक्रियः प्रत्यस्ता निराकृता पांसुक्रिया धूलनं येन स प्रत्यस्तपांसुक्रियः । पुनः

---

१. 'कुम्भिपालस्य' इति भवेत्.

पातुः प्रार्थनया चिराय विधृतानिक्षून्गृहीत्वा करे
तिष्ठत्यन्यकरीन्द्रसंचरमनाः कोपव्यथाकीलितः ॥ २९३ ॥

मम मदमदिरायाः सौरभेणैव सैन्यं
व्युपरतमदलेखालक्ष्मि जातं गजानाम् ।
इति मनसि विचिन्त्येवैष हस्ती तनोति
त्वमिव सुरतचाटून्नाथ धेनुप्रियाणाम् ॥ २९४ ॥

रणकेलिसुखविलोपस्तव मम च समः परेभमदशमनात् ।
इति भावयतीव गजस्त्याजनमिषतो जगन्नाथ ॥ २९५ ॥

धत्तेऽन्यस्य गजस्य गण्डमलतामेव प्रभेदोद्गमः
शोभां त्वस्य गजस्य दानविभवः पुष्णात्यवाग्गोचराम् ।

---

कथंभूतः । प्रत्यादिष्टकरेणुकेलिरमणः प्रत्यादिष्टं निराकृतं करेणोर्हस्तिन्याः केलिरमणं क्रियाविनोदो येन स तथा । पुनः कथंभूतः । प्रत्यर्पिताम्भोघटः प्रत्यर्पितः पश्चाद्दत्तः अम्भोघटो येन स तथा । अपरं कथंभूतः । अन्यकरीन्द्रसंचरमनाः अपरगजेन्द्रप्रवेशचित्तः । पुनः कथंभूतः । कोपव्यथाकीलितः क्रोधपीडाकीलित इव । उत्प्रेक्षालंकारः ॥

**मम मदमदिराया इत्यादि** । हे नाथ राजन्, एष हस्ती अयं गजपतिः इतीदृशं मनसि चित्ते विचिन्त्य विचार्य धेनुप्रियाणां हस्तिनीनां सुरतचाटून् संभोगमिथ्यास्तवान् तनोति विस्तारयति इव । इतीति किम् । मम मे मदमदिरायाः दानमद्यस्य सौरभेणैव गजानां हस्तिनां सैन्यं गजघटा जातं संजातम् । कीदृशं जातम् । व्युपरतमदलेखालक्ष्मि व्युपरता नष्टा मदलेखानां दानराजीनां लक्ष्मीः शोभा यस्य सैन्यस्य तत्तथोक्तम् । क इव । त्वमिव भवानिव । यथा भवान् प्रियाणां वल्लभानां सुरतचाटून् मिथ्यास्तुतीः तनोति । उक्तं च—'अन्नं चाटुचटुः श्लाघा प्रेम्णा मिथ्याविकत्थनम्' । उपमालंकारः ॥

**रणकेलीत्यादि** । हे जगन्नाथ पृथिवीपते, गजः अयं करिपतिः (त्याजनमिषेण शिरस ऊर्ध्वाधोनच्छानात् ?) इतीदृशं भावयतीव कथयतीव । इतीति किम् । हे राजन्, रणकेलिसुखविलोपः संग्रामक्रीडासौख्यविनाशः तव भवतो मम च समः सदृश एव वर्तते । कस्मात् । परेभमदशमनात् परेभानां प्रतिगजानां शत्रुगजानां च मदविनाशात् । उत्प्रेक्षालंकारः ॥

**धत्ते इत्यादि** । हे राजन्, अन्यस्य गजस्य अपरस्य हस्तिनः प्रभेदोद्गमः मदप्रादुर्भावः गण्डमलतामेव कटयोर्मलिनत्वमेव धत्ते धरति । अस्य तु गजस्य तव हस्तिनः दानविभवो मदलक्ष्मीः शोभां पुष्णाति पुष्टिं नयति । कथंभूतां शोभाम् । अवाग्गोचरां

किं चारब्धमदेऽपि यत्र करिणां सैन्यानि संतन्वते
घण्टाटंकृतिवर्जितानि विमदान्यस्तप्रचाराणि च ॥ २९६ ॥
आनय मदवशमधुकरविरावपुनरुक्तडिण्डिमान्करिणः।
पश्य मम समरकेलीरिति मतिरिव बृंहति द्विरदः ॥ २९७ ॥
आघ्राय मत्तकरिणोऽस्य मदप्रवाह-
सौरभ्यमन्थरमुखानि दिगन्तराणि।
नूनं दिशारदनिनोऽपि दिगन्तशैला-
नध्यासते द्विरदनेष्वपरेषु कास्था ॥ २९८ ॥
मदगन्धावरणविधेः प्रतिवारणसमरसंगमो भवतु।
इति जातमतिः पङ्कैरिव लिम्पति सिन्धुरः कायम् ॥ २९९ ॥

---

वक्तुमशक्याम्। किं च अस्ति कश्चिद्विशेषः। यत्र यस्मिन् तव हस्तिनि आरब्धमदेऽपि मदस्य प्रथमारम्भेऽपि करिणां शत्रुगजानां सैन्यानि संतन्वते संभवन्ति। कीदृशानि भवन्ति। घण्टाटंकृतिवर्जितानि घण्टानां नादिनीनां टंकृतयष्टंकारास्ताभिर्वर्जितानि भवन्ति। पुनः कथंभूतानि सैन्यानि भवन्ति। विमदानि मदविरहितानि। पुनः कथंभूतानि भवन्ति। अस्तप्रचाराणि च परित्यक्तसंग्रामप्रवेशानि इति। अतिशयसमुच्चयालंकारः॥

अत एव **आनय मदवशेत्यादि**। हे राजन्, द्विरदस्तव हस्ती इति मतिरिव ईदृशं बृंहति गर्जति। इतीति किम्। करिणो शत्रुगजान् हे नृप, त्वं आनय मम संमुखं उपढौकय। कथंभूतान् करिणः। मदवशमधुकरविरावपुनरुक्तडिण्डिमान् मदवशेन मदाधीनतया ये ये मधुकराणां भ्रमराणां विरावा विविधशब्दास्तैः पुनरुक्ता द्विगुणीकृता डिण्डिमा वादित्रविशेषा येषां करिणां ते तथा तान्। हे राजन्, मम समरकेलीः संग्रामक्रीडितानि त्वं पश्य विलोकय। उत्प्रेक्षालंकारः॥

**आघ्रायेत्यादि**। हे राजन्, अस्य तव मत्तकरिणः मदप्रवाहसौरभ्यमन्थरमुखानि दिगन्तराणि आघ्राय मदस्य योऽसौ प्रवाहस्तस्य सौरभ्येण सुगन्धतया मन्थराणि मन्दगमनानि मुखानि वक्त्राणि येषां तानि तथोक्तानि ईदृग्विधानि दिगन्तराणि दिङ्मण्डलानि आघ्राय गन्धमुपादाय नूनं निश्चयेन दिशारदनिनोऽपि ऐरावणादयोऽपि दिग्गजा अपि दिगन्तशैलान् अष्टदिक्प्रान्तपर्वतान् अध्यासते सेवन्ते। अपरेषु सामान्येषु द्विरदनेषु शत्रुगजेषु अस्य पुरतः स्थातुं का आस्था स्थितिं कर्तुमिति। अपि तु न कदाचिदित्यर्थः। अतिशयालंकारः॥

**मदगन्धावरणविधेरित्यादि**। हे राजन्, सिन्धुरस्तव गजः इत्यमुना प्रकारेण जातमतिः उत्पन्नबुद्धिः कायं शरीरं पङ्कैः कर्दमैः लिम्पति उपदेह्यति। इतीति किम्।

धेनुत्वं व्रजताशु दिक्करटिनः क्षोणि स्थिरं स्थीयतां
वायो संहर चापलं शिखरिणः खर्वत्वमागच्छत ।
नो चेदद्य मदश्रिया विलसति स्वच्छन्दमस्मिन्निभे
क्वेभेन्द्राः क्व धरा क्व गन्धवहनः क्वैते च यूयं नगाः ॥३००॥

उच्छ्वसितु धरणिदेवी शिथिलितभूगोलकः फणीन्द्रश्च ।
इति धरणिनाथ करटी विटपिस्कन्धं समाश्रयति ॥ ३०१ ॥

स्तम्भे यत्र गजैर्बद्धैर्देव निष्यन्दमासिनम् ।
कटकण्डूयनेऽप्यस्य स धत्ते नलदण्डताम् ॥ ३०२ ॥

---

मदगन्धावरणविधेः मम दानपरिमलविलोपनविधानस्य प्रतिवारणसमरसंगमः शत्रुगजैः सह भटभेटको भवतु संजायताम् । उत्प्रेक्षालंकारः ॥

**धेनुत्वमित्यादि** । हे दिक्करटिनः, आशु शीघ्रं धेनुत्वं हस्तिनीत्वं यूयं प्रापत । हे क्षोणि हे पृथिवि, स्थिरं निश्चलत्वं यथा भवत्येवं त्वया स्थीयतां स्थितिः क्रियताम् । हे वायो हे चरणो(?), चापलं संहर । हे शिखरिणः, खर्वत्वं ह्रस्वत्वं आगच्छत आप्नुत । उन्नतिमागच्छत इत्यर्थः । नो चेत् यदि दिक्करटिनो व्रजिष्यन्ति, क्षोणी स्थिरा न भविष्यति, वायुश्चपलत्वं न संहरिष्यति न त्यक्ष्यन्ति, पर्वताः खर्वत्वं नागमिष्यन्ति, तर्हि अद्य इदानीं अस्मिन्निभे अस्मिन् तव गजे मदश्रिया मदलक्ष्म्या सह स्वच्छन्दं यथेष्टं विलसति क्रीडति सति इभेन्द्रा ऐरावतादयः क्व वर्तन्ते । न क्वापि वर्तन्त इत्यर्थः । धरा पृथिवी न क्वापि वर्तते, गन्धवहनो वायुः न क्वापि वर्तते, एते च प्रत्यक्षीभूता यूयं भवन्तः नगाः पर्वताः न क्वापि वर्तन्ते इत्यर्थः । सर्वान् चूर्णीकरिष्यतीति भावः । समुच्चयातिशयालंकारः ॥

**उच्छ्वसितु इत्यादि** । हे धरणिनाथ पृथ्वीपते, करटी तव गजः इति एतस्मात् कारणात् विटपिस्कन्धं तरुप्रकाण्डं समाश्रयति सम्यक् सेवते । इतीति किम् । धरणिदेवी भूमिदेवता उच्छ्वसितु उच्छ्वासं गृह्णातु । आश्रयतामित्यर्थः । फणीन्द्रश्च शेषनागः शिथिलितभूगोलकः शिथिलितभूमिपिण्डकः सन् उच्छ्वसितु उच्छ्वासं गृह्णातु । दीपकसमुच्चयोत्प्रेक्षालंकारः ॥

**स्तम्भे इत्यादि** । हे देव हे राजन्, यत्र स्तम्भे यस्मिन् आलाने गजैर्हस्तिभिः बद्धैः सद्भिः निष्यन्दं निश्चलं यथा भवत्येवं (असितेनस्थो(?)स स्तम्भ ) स्तम्भे अस्य तव गजस्य कटकण्डूयनेऽपि गण्डस्थलखर्जनमात्रेऽपि । आस्तां तावद्बलकरणं इत्यपरोऽर्थः । स स्तम्भो नलदण्डतां पोटगलतृणविशेषयष्टित्वं धत्ते धरति । उपमालंकारः ॥

यत्र निसर्गमहत्त्वं दानगुणः स कथमित्थमिदमास्ते ।
इति मत्वेव गजोऽयं रज्जुं बिसतन्तुतां नयति ॥ ३०३ ॥

तडत्तडिति बन्धनं त्रुटति कन्धरोल्लासने
खणत्खणिति वल्लिका गलति विक्रमारम्भिणि ।
मडन्मडिति भज्यते तरुगणः कृताघट्टने
खडत्खडिति वारणः पतति चात्र युद्धैषिणि ॥ ३०४ ॥

कथमपि पुरोऽस्य करिभिर्यतयन्त्रितकन्धरैः स्थितं स्थाम्नोः ।
अभिगच्छति पुनरस्मिन्नगणितवीतैर्यथायथं त्वरितम् ॥ ३०५ ॥

मदनकृतो भवति सृणिर्भजन्ति तडिकार्गला मृणालत्वम् ।
सीदति करेणुवर्गः प्रतिगजमभिहन्तुमत्र संवृत्ते ॥ ३०६ ॥

---

यत्रेत्यादि । हे राजन्, अयं प्रत्यक्षीभूतस्तव गजः इति मत्वेव रज्जुं बन्धनविशेषं विसतन्तुतां पद्मिनीकन्दसूत्रत्वं नयति प्रापयति । इतीति किम् । यत्र यस्मिन् पुरुषे निसर्गमहत्त्वं स्वभावेन गुरुत्वं भवति । अनु च दानगुणो मदगुणो दातृत्वं च भवति । स पुमान् इत्थममुना प्रकारेण रज्जुबन्धप्रकारेण कथं आस्ते । अपि न कथमपि तिष्ठतीत्यर्थः । उत्प्रेक्षालंकारः ॥

तडत्तडितीत्यादि । हे राजन्, अत्र अस्मिन्, तव गजे कन्धरोल्लासने ग्रीवोन्नमने सति बन्धनं रज्जुप्रभृतिकं त्रुटति शतखण्डीभवति । कथम् । तडत्तडिति तडतडायमानम् । अत्र अस्मिन् गजे विक्रमारम्भिणि सति वल्लिका खलाबन्धनं गलति शतखण्डीभवति । कथम् । खणत्खणिति खणखणायमाना । अत्र अस्मिन् गजे कृताघट्टने कपोलकण्डूविनोदनाय विहितघर्षणे सति तरुगणो भज्यते द्विखण्डीभवति । कथम् । मडन्मडिति मडमडायमानम् । अत्र गजे युद्धैषिणि योद्धुमनसि सति वारणः प्रतिगजः पतति उपविशति । कथम् । खडत्खडिति खडखडायमानः । अतिशयालंकारः ॥

कथमपीत्यादि । हे राजन्, अस्य तव गजस्य स्थाम्नोः स्थितिशीलस्य पुरोऽग्रतः करिभिः यतयन्त्रितकन्धरैः आरोहकबद्धग्रीवैः कथमपि महता कष्टेन स्थितं उज्झितम् । पुनः पश्चात् अस्मिंस्तव गजे अभिगच्छति संमुखमागच्छति सति यथायथं यथालब्धावकाशं त्वरितं पलायितम् । कथंभूतैः करिभिः । अगणितवीतैः न गणितं वीतं अङ्कुशकर्म यैस्ते तथा तैः । अतिशयालंकारः ॥

मदनकृत इत्यादि । अत्र अस्मिन् तव गजे प्रतिगजं शत्रुगजं अभिहन्तुं मारयितुं संवृत्ते प्रवृत्ते सति सृणिरङ्कुशः मदनकृतः कन्दर्पविहितो भवति संजायते ।

उपरि करविकीर्णाः पांसवोऽस्य प्रकामं
नभसि विततमार्गाः कर्णतालानिलेन ।
प्रतिगजपतिजैत्रानन्तरं वीरलक्ष्मी-
धृतविजयपताकाडम्बरं बिभ्रतीव ॥ ३०७ ॥

वंशोऽतीव महानयं विरचितश्चाराः पुनर्लोचन-
व्यापारादपि दूरतो विनिहिताः कोऽयं प्रधावक्रमः ।
इत्थं यावदमी जनाः कृतधियस्तावत्करी भूपते
वीरं वीरमनेकतामवगतो गृह्णन्परं दृश्यते ॥ ३०८ ॥

वीथीशीर्षत एव पञ्चमजवोत्थानस्य सातत्यतः
स्वामिन्नस्य जवः कथं करिपतेः कथ्येत चित्रं यतः ।

---

तडिकार्गलां अगडकाष्ठानि मृणालत्वं पद्मिनीकन्दत्वं भजन्ति प्राप्नुवन्ति । करेणुवर्गः हस्तिहस्तिनीवर्गः सीदति दुःखीभवति । उपमालंकारः ॥

**उपरीत्यादि** । हे राजन्, अस्य तव गजस्य उपरि करविकीर्णाः शुण्डादण्डेन विक्षिप्ताः पांसवो धूलयः कर्णतालानिलेन कर्णतालवायुना प्रकाममतिशयेन नभसि आकाशे विततमार्गाः प्रतिगजपतिजैत्रानन्तरं शत्रुगजविजयानन्तरं वीरलक्ष्मीधृतविजयपताकाडम्बरं बिभ्रतीव वीरलक्ष्म्या वीरश्रिया धृता मस्तकोपर्यारोपिता या विजयपताका जयध्वजा तस्या आडम्बर आटोपस्तं वीरलक्ष्मीधृतविजयपताकाडम्बरं बिभ्रतीव धरतीव । उत्प्रेक्षालंकारः ॥

**वंशोऽतीवेत्यादि** । हे भूपते, यावत्कालं अमी जना लोका इत्थममुना प्रकारेण कृतधियः पर्यालोचयन्ति । इत्थं कथमिति चेत् अयं वंशः प्रधावभूमिः अतीव महान् गुरुतरो विरचितः कृतश्चाराः कुन्तादिकराः पुरुषा लोचनव्यापारादपि दृष्टेरगोचराद् अपि पुनर्दूरतो विनिहिता विप्रकृष्टं स्थापिताः । कोऽयं प्रधावक्रमो वर्तते । न कश्चित् प्रधावक्रम इत्यर्थः । तावत्कालं करी तव गजेन्द्रः वीरं सुभटं परं केवलं गृह्णन् दृश्यते स्वीकुर्वन् विलोक्यते । कथंभूतः करी । अनेकतामवगतः । एकोऽपि सन् अनेकत्वं प्राप्त इत्यर्थः । उपमालंकारः ॥

**वीथीशीर्षत इत्यादि** । हे स्वामिन्, अस्य प्रत्यक्षीभूतस्य करिपतेस्तव गजेन्द्रस्य जवो वेगः कथं केन प्रकारेण कथ्यते उच्येत । यतो यस्मात् कारणात् चित्रमाश्चर्यं वर्तते । कथंभूतस्यास्य करिपतेः । वीथीशीर्षत एव मार्गस्य मस्तके एव प्रारम्भे पञ्चमजवोत्थानस्य पञ्चमं जवस्य उत्थानं उत्था यस्य स पञ्चमजवोत्थानस्तस्य । भूतवेगोत्थितस्येत्यर्थः । उक्तं च—'आस्कन्दितं धौरितिकं रेचितं वल्गितं प्लुतम्' इति अश्वानां पञ्च

पाश्चात्यैर्जवनैरपि व्यवसितं स्थातुं न पार्श्वे हयैः
पार्श्वस्थैर्न पुरः पुरश्च चलितैर्नैतस्ततोधावितुम् ॥ ३०९ ॥
यस्याघातेन गजा व्रजन्ति यमपिशितकवलतां कदने ।
रथमनुजवाजिनिवहः कतरोऽस्य गजस्य राजेन्द्र ॥ ३१० ॥
राजन्नूर्जितशौर्यशालिनि जने वीरश्रुतिर्विश्रुता
तामेषोऽद्य पलायितेऽपि कृतधीर्धत्ते न तच्चोचितम् ।
हस्तीतीव निहन्ति विद्रुतमपि त्रासाच्चराणां गणं
नैवं चेत्कथमत्र विक्रमभरस्तुङ्गस्य शूरस्य च ॥ ३११ ॥

---

गतयः । प्लुतमुड्डीयगमनमित्यर्थः । पञ्जिकाकारस्तु—'नीचैर्गतस्थूलोच्चयमध्यमोपजवापेक्षया पञ्चमजवोत्थानस्य' इत्युक्तवान् । कथम् । सातत्यतः मध्येऽपि प्रान्तेऽपि पाश्चात्यैः अस्य गजस्य पश्चात्स्थितैर्हयैरश्वैर्जवनैर्वेगवद्भिरपि पार्श्वे वामदक्षिणपार्श्वे स्थातुं स्थितिं कर्तुं न व्यवसितं न चेष्टितम् । पार्श्वस्थैः वामदक्षिणपार्श्वस्थैर्हयैः जवनैरपि पुरोऽग्रतः स्थातुं न व्यवसितम् । पुनश्च चलितैरग्रतो धावितैरितस्ततो धावितुं शीघ्रं गन्तुं न व्यवसितम् । दीपकातिशयालंकारः ॥

**यस्याघातेनेत्यादि** । हे राजेन्द्र, यस्य तव गजेन्द्रस्य कदने संग्रामे आघातेन निष्ठुरप्रहारेण गजाः शत्रुकरिणो यमपिशितकवलतां व्रजन्ति यमस्य मांसग्रासत्वं प्राप्नुवन्ति, तर्हि रथमनुजवाजिनिवहः अस्य तव गजस्य कतरः कियन्मात्रो वर्तते । रथाश्च मनुजाश्च वाजिनश्च तुरङ्गास्तेषां निवहः समूहः कतरः । न कियन्मात्र इत्यर्थः । उपमाक्षेपालंकारः ॥

**राजन्नित्यादि** । हे राजन् हे यशोधरमहाराज, ऊर्जितशौर्यशालिनि जने ऊर्जितम् अप्रतिहतव्यापारं यत् शौर्यं ऊर्जितशौर्यं तेन शालते शोभते इत्येवंशील ऊर्जितशौर्यशाली । 'शालश्च शोभायाम्' इति धातोः प्रयोगात् पदमिदम् । ईदृग्विधे जने मनुष्ये वीरश्रुतिर्वीरः इति नाम विश्रुता विख्याततता वर्तते । तां वीरश्रुतिं एष (नागः) हस्ती अयं(नागः) हस्ती अद्य इदानीं पलायितेऽपि कृतधीर्विचक्षणः न धत्ते न धरति तच्च उचितं योग्यम् । अनुचितमप्युचितमित्यर्थः । उक्तं च—'भीरुः पलायमानोऽपि नान्वेष्टव्यो बलीयसा । कदाचिच्छूरतामेति रमणे कृतनिश्चयः ॥' अयं (नागः) हस्ती अतीव अतिशयेन त्रासात् भयात् विद्रुतमपि पलायितमपि चराणां गणं प्रतिचारकाणां समूहं निहन्ति विध्वंसयति । चेद्यदि एवं न वर्तते तर्हि अत्र अस्मिन् गजे कथं केन प्रकारेण विक्रमभरः

---

१. अत्रातिशब्दस्याकारस्य लोपं विचार्य 'हस्तीतीव' इति पदोपादानं ग्रन्थकर्तुः प्रमादः 'नागोतीव' इति वाच्यश्च.

अस्मिन्महीपाल गजे सदाने जगत्यभूत्कस्य न दानभावः ।
क्षितिः सदानार्थिजनः सदानस्तवारिवर्गश्च यतः सदानः ॥ ३१२ ॥

शतमख दहन काल गुह वरुण समीरण धनद चन्द्रमः
प्रथितैकैककुम्भिविभवास्तदिभानवत प्रयत्नतः ।
इत्युपदेष्टुकाम इव हस्तमुदञ्चति वियति वारणो
नो चेदिभविहीनरचना भवतां भविता पताकिनी ॥ ३१३ ॥

दूराद्दृष्टिपथं गते विगलिता हंसावलीकाञ्चिका
स्पर्शात्पङ्कजिनीदलांशुकमगादस्याः सरस्याः पुनः ।

---

शक्तिसंपदः । विज्ञायत इति शेषः । कथंभूतस्य । तुङ्गस्य उन्नतस्य शूरस्य सुभटस्य च न कथमपि विज्ञायत इत्यर्थः । व्यतिरेकाक्षेपालंकारः ॥

**अस्मिन्नित्यादि** । हे महीपाल, अस्मिन् प्रत्यक्षीभूते गजे तव हस्तिनि सदाने मदवति सति जगति संसारे कस्य पुरुषस्य दानभावः दानत्वं नाभूत् । अपि तु सर्वस्यापि दानभावो बभूव । कुत्र दानभावो बभूव । क्षितिः सदाना अभूत् सक्षरणा बभूव । 'देङ् त्रैङ् पालने' इति धातोः प्रयोगात् । अर्थिजनो याचकलोकः सदानः सधनो बभूव । यतः तव भवतो अरिवर्गः सदानः सखण्डनो अभूद्बभूव । समुच्चयश्लेषालंकारः ॥

**शतमखेत्यादि** । हे राजन्, वारणस्तव गजो वियति आकाशे हस्तं शुण्डादण्डं उदञ्चति उत्क्षिपति । कथंभूतो वारणः । इत्यमुना प्रकारेण उपदेष्टुकाम इव उपदेशयितुमना इव । इतीति किम् । हे शतमख हे इन्द्र, हे दहन हे अग्ने, हे काल हे यम, हे गुह हे कार्तिकेय, हे वरुण हे पाशिन्, हे समीरण हे वायो, हे धनद हे मनुष्यधर्मन्, हे चन्द्रमः हे रोहिणीपते, यूयं सर्वेऽपि प्रथितैकैककुम्भिविभवाः प्रथितो विख्यात एकैकः एक एक एव कुम्भिभिः गजैः विभवो धनं येषां ते प्रथितैकैककुम्भिविभवा यूयं वर्तन्ते । तत्तस्मात् कारणात् इभान् निजनिजगजान् प्रयत्नतः सावधानतया अवत रक्षत । यूयं नो चेत् यदि न रक्षयिष्यथो यूयं तर्हि भवतां युष्माकं पताकिनी सेना इभविहीनरचना गजरहितप्रयत्ना भविता भविष्यति । उत्प्रेक्षालंकारः ॥

**दूरादित्यादि** । हे सुभग श्रवणाद्दर्शनाद्वा सर्वेषां सुखोत्पादक, गजपतौ तव गजेन्द्रे अस्याः सरस्याः महासरोवरस्य दूरात् विप्रकर्षात् दृष्टिपथं लोचनमार्गं गते प्राप्ते सति हंसावलीकाञ्चिका हंसश्रेणीरसना विगलिता अधः पतिता । स्पर्शात् शुण्डादण्डेन छुपिक्रियायां पङ्कजिनीदलांशुकं पद्मिनीपत्रवस्त्रं अगात् गलितम् । पुनः पश्चात् गजपतौ

नाभिं प्राप्तवति त्वयीव सुभग प्रौढाङ्गनाविभ्रमं
सोत्कम्पा न करोति कं गजपतौ सा लोलवीचीभुजा ॥३१४॥
विनिकीर्णकमलमाल्या पर्यस्ततरङ्गकुन्तला सरसी।
राजति गजपतिभुक्ता त्वदचिरभुक्ता पुरन्ध्रीव ॥ ३१५ ॥
यदहमुपलोभ्य पूर्वं बद्धस्तेनैव नाथ पर्याप्तम्।
इति सर्वत्राशङ्की गुल्मानपि दूरतस्त्यजति ॥ ३१६ ॥
प्रत्युज्जीवितयेव देव धरणीदेव्या विनिश्वस्यते
भोगीन्द्रः श्लथभूः श्रमं विनयते कृच्छ्रादिवापेतवान्।

---

नाभिं प्राप्तवति मध्यप्रदेशं गतवति सति सोत्कम्पा सरसी कं प्रौढाङ्गनाविभ्रमं न करोति। अपि तु सर्वं नवयौवनस्त्रीशोभाविलासं करोतीत्यर्थः। कथंभूता रससी। लोलवीचीभुजा चलल्लहरीबाहुलतिका। गजपतौ कथंभूते। त्वयीव भवतीव। यथा त्वयि प्रौढाङ्गनाया दूरात् दृष्टिपथं गते सति काञ्चिका विगलति, स्पर्शात् अधोवस्त्रं गच्छति। नाभिं प्राप्तवति सोत्कम्पा सति कं विभ्रमं न करोति। अपि तु विभ्रमति भ्रूक्षेपं करोत्येव। कथंभूता सा। लोलवीचीभुजा चपलबाहुका। रूपकोपमाक्षेपालंकारः। संकर इत्यर्थः॥

**विनिकीर्णकमलमाल्येत्यादि**। हे राजन्, सरसी महत्सरः गजपतिभुक्ता राजति शोभते। कथंभूता सरसी। विनिकीर्णकमलमाल्या विनिकीर्णानि विक्षिप्तानि कमलमाल्यानि कमलपुष्पाणि यस्याः सा तथोक्ता। पुनः कथभूंता। पर्यस्ततरङ्गकुन्तला पर्यस्ता मुक्ताः तरङ्गाः कल्लोलास्त एव कुन्तलाः केशा यस्याः सा तथोक्ता। पुनः कथंभूता। पुरन्ध्रीव। कथंभूता पुरन्ध्री। त्वदचिरभुक्ता त्वया भवता अचिरभुक्ता तत्कालभुक्ता। यथा त्वदचिरभुक्ता पुरन्ध्री विनिकीर्णमाल्या भवति। पर्यस्तकुन्तला विक्षिप्तकेशा च भवति। उपमालंकारः॥

**यदहमित्यादि**। हे नाथ, इत्यमुना प्रकारेण ईदृशाभिप्रायेण सर्वत्राशङ्की सर्वत्र संदेहवान् अयं हस्ती गुल्मानपि वृक्षानपि दूरतो विप्रकृष्टतः त्यजति मुञ्चति। इतीति किम्। हे नाथ, यत् अहं उपलोभ्य हस्तिनीलोभं दर्शयित्वा पूर्वं द्वारप्रवेशकाले बद्धो नियन्त्रितः तेनैव पर्याप्तं तेनैव बन्धनेन पर्याप्तं परिपूर्णम्। हेत्वलंकारः॥

**प्रत्युज्जीवितयेत्यादि**। हे राजन्, यदा यस्मिन् काले ते तव स्तम्बेरमो गजः अपास्तसंगरभरः परित्यक्तसंग्रामभारः सन् स्तम्भं आलानस्तम्भं प्राप्तः आगतः। हे देव, तदा काले धरणीदेव्या भूमिदेवतया विनिश्वस्यते निश्वासो गृह्यते। कथंभूतया धरणीदेव्या। प्रत्युज्जीवितया इव पुनरपि जीवितया इव। हे देव, भोगीन्द्रः शेषनागः श्लथभूः शिथिलभूमिः सन् श्रमं खेदं विनयते विनाशयति। 'पूज्योत्क्षेपनामयनज्ञानभृतिविगणनव्ययेषु णीञ्' इत्यधिकारे 'कर्तृस्थाव्यूर्तकर्मकश्च' इत्यनेन सूत्रेण उभ-

वायुर्बन्धनतो विमुक्त इव च स्वैरं दिशः सर्पति
प्राप्तस्तम्भमपास्तसंगरभरः स्तम्बेरमस्ते यदा ॥ ३१७ ॥
इयमत्राद्भुतकारिणि मदपुरुषे नैव वर्णना वितथा ।
वितथस्तु परं नियमो बुधोक्तजववलपरीक्षायाः ॥ ३१८ ॥

इति पठता गजोपजीविलोकेनानन्दितचेताः प्रभिन्नकरिकेलीरदर्शम् ।

कदाचित्सैन्ययोगात्पूर्वमेव गुप्तिशोभां च वक्रस्य प्रहारसौष्ठवं च या करोति कुञ्जरेन्द्राणां कल्पना सा प्रशस्यते इति विहितकल्पनाविधिः ।

आरूढे त्वयि देव मां गजपतिं शौण्डीरचूडामणे
का सा कुञ्जरमण्डली मम पुरो या संमुखीना भवेत् ।

---

यपद्यपि 'णीत्र' धातुवादित्वात् । कथंभूतो भोगीन्द्रः । कृच्छ्रात् कष्टात् अपेतवानिव त्यक्त इव । हे राजन्, वायुः मारुतः स्वैरं यथेष्टं दिशो हरितः सर्पति प्रसरति । कथंभूतो वायुः । बन्धनतो विमुक्त इव बन्धनात् परित्यक्त इव । उत्प्रेक्षालंकारः ॥

**इयमित्यादि** । हे राजन्, अत्र अस्मिन् मदपुरुषे पूर्वोक्तलक्षणप्राये गजे इयं वर्णना वितथा असत्या नैव वर्तते । कथंभूते गजे मदपुरुषे । अद्भुतकारिणि आश्चर्योत्पादके । यदि इयं वर्णना वितथा न वर्तते तर्हि किं वितथं किमपि अपरं सत्यं वर्तते, परं निश्चयेन बुधोक्तजववलपरीक्षायाः बुधैर्विद्वद्भिरुक्ता गत्यागमे प्रतिपादिता या जववलयोः वेगशक्त्योः परीक्षा विचारणा बुधोक्तजववलपरीक्षा तस्या नियमो निर्णयः निश्चयः निर्धारः स तु वितथः । सत्य इत्यर्थः । अतिशयालंकारः ॥

कदाचित् कस्मिंश्चिद्वसरे सैन्ययोगात् पूर्वमेव सेनायाः दिग्विजयकरणे योगात् प्रथममेव करिणां कोशारोपणं कल्पानां लोहादीनां दन्तवेष्टनादिकं अकरवं अहं चकार । कथंभूतोऽहम् । इत्यमुना प्रकारेण विहितकल्पनाविधिः विहितः कृतो गजानां कल्पनाविधिः दन्तजटनादिविधानं येन स विहितकल्पनाविधिः । इतीति किम् । सा कल्पना प्रशस्यते श्लाध्यते । सा का । या कुञ्जरेन्द्राणां गुप्तिशोभां करोति । कस्य गुप्तिशोभाम् । वक्रस्य दन्तरक्षादिशोभाम् । न केवलं गुप्तिशोभाम्, प्रहारेण दन्तपातेन दुर्गादिपातनपरीक्षां सौष्ठवं दृढप्रहारादिकं च या कल्पना करोति सा कल्पना प्रशस्यते । पुनः कथंभूतोऽहम् । तेन गजोपजीविना गृहीता स्वीकृता प्रसादपरम्परा हर्षदानश्रेणीर्यस्मात् स गृहीतप्रसादपरम्परः । कथंभूतेन तेन । इति च अधीयानेन ईदृशं पठता । इतीति किम् ॥

**आरूढेत्यादि** । हे देव, हे शौण्डीरचूडामणे हे सुभटशिरोरत्न, करी तव गजेन्द्रः इति ईदृशं चिन्तनपरः विचारतत्पर इव वारंवारं पुनः पुनः नेत्रे द्वे लोचने पिधत्ते झम्पति । इतीति किम् । हे शौण्डीरचूडामणे, त्वयि भवति मातङ्गं गजपतिमारूढे सति

तत्पर्याप्तमनेन कोशविधिना भारक्कमं कुर्वता
वारंवारमितीव चिन्तनपरो नेत्रे पिधत्ते करी ॥ ३१९ ॥

इति चाधीयानेन गृहीतप्रसादपरम्परः करिणां कोशारोपणमकरवम्।

येषां गजोत्तमाङ्गानि बलानि न महीभुजाम्।
उत्तमाङ्गविहीनानि तानि तेषां रणाङ्गणे ॥ ३२० ॥

कदाचित्

---

आरोहणं कृतवति सति सा जगत्प्रसिद्धा कुञ्जरमण्डली गजघटा का कियन्मात्रा। न कापीत्यर्थः। सा का। या कुञ्जरमण्डली मम पुरः ममाग्रतः संमुखीना समुखीभवेत् संजायेत्। ततस्तस्मात् कारणात् अनेन प्रत्यक्षीभूतेन कोशविधिना दन्तजटनादिविधानेन पर्याप्तं परिपूर्णम्। कथंभूतेन कोशविधिना। भारक्कमं भारखेदं कुर्वता। आक्षेपालंकारः ॥

येषामित्यादि। येषां महीभुजां महीपालानां बलानि सैन्यानि वर्तन्ते। कथंभूतानि बलानि। गजोत्तमाङ्गानि गजा एव उत्तमाङ्गमुत्कृष्टमङ्गं चतुरङ्गसैन्यं मध्ये येषां तानि। तेषां महीभुजां रणाङ्गणे तानि बलानि उत्तमाङ्गविहीनानि भवन्ति मस्तकरहितानि भवन्ति। श्लेषालंकारः ॥

कदाचित् कस्मिंश्चिद्दवसरे प्रत्यवसानं समाचरत भोजनं अहं आचरितवान्। कथंभूतं प्रत्यवसानम्। इत्यमुना प्रकारेण सज्जनभिषजः सज्जननामवैद्यात् प्रसूतसूक्तामृतपुनरुक्तोपदंशदशनं प्रसूतानि उत्पन्नानि यानि सूक्तामृतानि सुभाषितपीयूषाणि तैः पुनरुक्तं द्विगुणीकृतं उपदंशानां चर्वणानां दशनं भक्षणं यत्र प्रत्यवसाने तत्तथोक्तम्। उक्तं च—'अवदंशस्तु भक्षणं खरविद (?) समभ्यवहार्यं चर्वणमुपदंशश्च।' कथंभूतात् सज्जनभिषजः। वैद्यविद्याविलासापरनामभाजः वैद्यविद्याविलास इति ईदृशं अपरं द्वितीयं नाम अभिधानं भजते सेवते स तथा तस्मात्। पुनः कथंभूतात्। रसानां मधुराम्लकटुतिक्तकषायलवणानां षड्रसानां शुद्धसंसर्गभेदेन। भेदशब्दः प्रत्येकमभिसंबध्यते। तेनायमर्थः—शुद्धभेदेन संसर्गभेदेन च त्रिषष्टिव्यञ्जनोपदेशभाजः त्रिषष्टि व्यञ्जनानि येषां तेषामुपदेशं भजते। तथाहि—मधुराम्लेन, कटुना तिक्तेन, कटुकेन च, कषायेण पृथक् सह तिक्तस्तु कटुना सार्धं कषायेण पृथक्। तथा 'कटुकस्तु कषायेण सिद्धयोगा इति स्मृताः'। अस्यायमर्थः—मधुराम्लम्, मधुरलवणम्, मधुरतिक्तम्, मधुरकटुकम्, मधुरकषायम्, आम्ललवणम्, आम्लतिक्तम्, आम्लकटुकम्, आम्लकषायम्, लवणतिक्तम्, लवणकटुकम्, लवणकषायम्, तिक्तकटुकम्, तिक्तकषायम्, कटुककषायम्, एवं पञ्चदश। मधुराम्ललवणम्, मधुराम्लतिक्तम्, मधुराम्लकटुकम्, मधुराम्लकषायम्, मधुरलवणतिक्तम्, मधुरलवणकटुकम्, मधुरलवणकषायम्, मधुरतिक्तकटु-

अधिगतसुखनिद्रः सुप्रसन्नेन्द्रियात्मा
सुलघुजठरवृत्तिर्भुक्तपक्तिं दधानः ।
श्रमभरपरिखिन्नः स्नेहसंमर्दिताङ्गः
सवनगृहमुपेयाद्भूपतिर्मज्जनाय ॥ ३२१ ॥

स्थाल्यां यथानावरणाननायामघट्टितायां च न साधुपाकः ।
अनाप्तनिद्रस्य तथा नरेन्द्र व्यायामहीनस्य च नान्नपाकः ॥ ३२२ ॥

---

-कम्, मधुरतिक्तकषायम्, मधुरकटुककषायम्, एवं दश । आम्ललवणतिक्तम्, आम्ल-लवणकटुकम्, आम्ललवणकषायम्, आम्लतिक्तकटुकम्, आम्लतिक्तकषायम्, आम्लक-टुककषायम्, एवं षट् । लवणतिक्तकटुकम्, लवणतिक्तकषायम्, लवणकटुककषायम्, एवं त्रयः । तिक्तलवणकषायम्, एकः । मधुराम्ललवणतिक्तम्, मधुराम्ललवणकटुकम्, मधुराम्ललवणकषायम्, मधुरलवणतिक्तकषायम्, मधुरलवणकटुककषायम्, मधुरतिक्त-कटुककषायम्, मधुराम्लतिक्तकटुकम्, मधुराम्लतिक्तकषायम्, मधुराम्ललवणकटुक-कषायम्, मधुरलवणतिक्तकटुकम्, एवं दश । आम्ललवणतिक्तकटुकम्, आम्ललवण-तिक्तकषायम्, आम्ललवणकटुककषायम्, आम्लतिक्तकटुककषायम्, लवणतिक्तकटु-ककषायम्, एवं पञ्च । आम्ललवणतिक्तकटुककषायम्, मधुरतिक्तलवणकषायम्, मधुराम्लतिक्तकटुकषायम्, मधुराम्लतिक्तकटुककषायम्, मधुराम्ललवणतिक्तकषायम्, एवं पञ्च । मधुराम्ललवणतिक्तकटुकम्, एवं एकः । मधुराम्ललवणतिक्तकटुककषायम्, एवं षट् । एवं त्रिषष्टिव्यञ्जनभेदः । इतीति किम् ।

**अधिगतसुखनिद्र इत्यादि** । भूपती राजा सवनगृहं स्नानमन्दिरं मज्जनाय उपेयाद्गच्छेत् । भूपतिः कथंभूतः । अधिगतसुखनिद्रः अधिगता प्राप्ता सुखनिद्रा येन स तथोक्तः । पुनः कथंभूतः । सुप्रसन्नेन्द्रियात्मा सुप्रसन्नानि अकलुषितानि इन्द्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि आत्मा च मनो यस्य स तथोक्तः । पुनः कथंभूतः । सुल-घुजठरवृत्तिः सुष्ठु अतिशयेन लघ्वी अगुर्वी जठरस्योदरस्य वृत्तिर्भोजनं यस्य स त-थोक्तः । भूपतिः किं कुर्वाणः । भुक्तपक्तिं दधानः भुक्तस्य भोजनस्य पक्तिं पचनतां दधानः कुर्वाणः । अपरं कथंभूतः । श्रमभरपरिखिन्नः श्रमभरेण धनुर्विद्याश्ववाहनादिना परि समन्तात् खिन्नः श्रान्तः । पुनः कथंभूतः । स्नेहसंमर्दिताङ्गः स्नेहेन जातीचम्पकमु-क्तवन्धनादिपुष्पावासितेन तैलेन घृतेन वा सम्यक्प्रकारेण संमर्दिताङ्गः अभ्यक्तशरीरः ॥ जात्यलंकारः ।

**स्थाल्यामित्यादि** । हे नरेन्द्र, यथा येन प्रकारेण अनावरणाननायां अपिधान-रहितमुखायां अघट्टितायां च दर्व्या अचालितान्नायां च स्थाल्यां उखायां साधुपाको न भवति, तथा तेन प्रकारेण अनाप्तनिद्रस्य अप्राप्तस्वापस्य व्यायामहीनस्य च श्रम-हीनस्य च अन्नपाको न भवति । दृष्टान्तालंकारः ॥

अभ्यङ्गः श्रमवातहा बलकरः कायस्य दार्ढ्यावहः
स्यादुद्वर्तनमङ्गकान्तिकरणं मेदःकफालस्यजित् ।
आयुष्यं हृदयप्रासदि वपुषः कण्डूक्लमच्छेदि च
स्नानं देव यथर्तुसेवितमिदं शीतैरशीतैर्जलैः ॥ ३२३ ॥

श्रमघर्मार्तदेहानामाकुलेन्द्रियचेतसाम् ।
तव देव द्विषां सन्तु स्नानपानादनक्रियाः ॥ ३२४ ॥

स्वयं विरतघर्माम्बुर्निद्राविद्राणितश्रमः ।
शीतोपचारतृट्छेदाद्भवेत्पत्सलवत्सलः ॥ ३२५ ॥

---

अभ्यङ्ग इत्यादि । हे राजन्, अभ्यङ्गस्तैलमर्दनं श्रमवातहा श्रमं खेदं वातं हन्ति निराकरोति श्रमवातहा । पुनः कथंभूतः । कायस्य बलकरः । पुनः कथंभूतः । कायस्य दैर्घ्या(दार्ढ्या)वहः शिथिलत्वनिवारकः । हे देव, उद्वर्तनं स्नानीयचूर्णेन विलेपनं अङ्गकान्तिकरणं स्यात् । कथंभूतं उद्वर्तनम् । मेदःकफालस्यजित् मेदश्च वपा वसाशुद्धं मांसं स्नेह इति पाठतः, कफश्च श्लेष्मा, आलस्यं च अनुद्यमः, मेदःकफालस्यानि तानि जयति निराकरोति इति मेदःकफालस्यजित् । हे देव, स्नानं आयुष्यं आयुषे हितं आयुष्यम् । पुनः कथंभूतम् । हृदयप्रसादि मनसः प्रसन्नताजनकं कलुषितनिवारणम् । पुनः कथंभूतम् । वपुषः शरीरस्य कण्डूक्लमच्छेदि कण्डूश्च खर्जूः, क्लमश्च ग्लानिः, तौ छेदयतीति कण्डूक्लमच्छेदि । पुनः कथंभूतम् । शीतैरशीतैर्जलैर्यथर्तुसेवितं उष्णकाले शीतैर्जलैः स्नानं सेव्यते, शीतकाले वर्षासु च उष्णैर्जलैः सेव्यते । समुच्चयालंकारः ॥

श्रमघर्मेत्यादि । हे देव, तव द्विषां भवतः शत्रूणां स्नानपानादनक्रियाः सन्तु । क्रियाशब्दः प्रत्येकमभिसंबध्यते । स्नानक्रिया च पानक्रिया च अदनक्रिया च स्नानपानादनक्रियाः भवन्तु । कथंभूतानां तव द्विषाम् । श्रमघर्मार्तदेहानां श्रमेण खेदेन घर्मणा उष्णेन आर्तः पीडितो देहः शरीरं येषां ते श्रमघर्मार्तदेहास्तेषाम् । पुनः कथंभूतानाम् । आकुलेन्द्रियचेतसाम् आकुलानि विह्वलीभूतानि इन्द्रियाणि चेतश्च मनो येषां ते आकुलेन्द्रियचेतसस्तेषाम् । हेत्वलंकारः ॥

स्वयमित्यादि । भवेत् संजायेत । कोऽसौ । पत्सलवत्सलः भोजनस्नेहलः । कथंभूतः । स्वयंविरतघर्माम्बुर्व्यजनादिना आस्फेटितप्रस्वेदजलः । पुनः कथंभूतः । निद्राविद्राणितश्रमः निद्रया प्रलीलया विद्राणितो विनाशितः श्रमः खेदो येन स तथा । स कस्मात् पत्सलवत्सलो भवेत् । शीतोपचारतृट्छेदात् । द्राक्षाहरीतकी आमलपानकादिना विनाशिततृष्णाच्छेदात् । न तु पानीयपानादित्यर्थः । जात्यलंकारः ॥

दृङ्मान्द्यभागातपितोऽम्बुसेवी श्रान्तः कृताशो वमनज्वरार्हः ।
भगन्दरी स्यन्दविबन्धकाले गुल्मी जिहत्सुर्विहिताशनश्च ॥ ३२६ ॥

स्नानं विधाय विधिवत्कृतदेवकार्यः
संतर्पितातिथिजनः सुमनाः सुवेषः ।
आप्तैर्वृतो रहसि भोजनकृत्तथा स्या-
त्सायं यथा भवति भुक्तिकरोऽभिलाषः ॥ ३२७ ॥

चारायणो निशि तिमिः पुनरस्तकाले
मध्ये दिनस्य धिषणश्चरकः प्रभाते ।
भुक्तिं जगाद नृपते मम चैष सर्ग-
स्तस्याः स एव समयः क्षुधितो यदैव ॥ ३२८ ॥

योऽक्षुध्यल्लोलभावेन कुर्यादाकण्ठभोजनम् ।
सुप्तान्व्यालानिव व्याधीन्सोऽनर्थाय प्रबोधयेत् ॥ ३२९ ॥

---

**दृङ्मान्द्यभागित्यादि** । आतपितो घर्मपीडित आगतस्तथा सति यद्यम्बु सेवते जलं पिबति तर्हि दृङ्मान्द्यभाक् मन्ददृष्टिर्भवति । श्रान्तः मार्गश्रान्तः आगतः सन् कृताशो यदि भोजनं करोति तदा वमनज्वरार्हः तस्य भोजनानन्तरं वमनं भवति ज्वरश्चोत्पद्यते । स्यन्दविबन्धकाले प्रस्रावबाधासहितो यदि भोजनं करोति तदा भगन्दरी भगन्दररोगस्तस्य भवति । यः पुमान् जिहत्सुः हदनबाधासहितः सन् विहिताशनो भोजनं करोति स गुल्मी तस्य गुल्मानि उत्पद्यन्ते । जात्यलंकारः ॥

**स्नानमित्यादि** । स्नानं विधाय विधिवत् शास्त्रोक्तप्रकारेण कृतदेवकार्यः स्नापनार्चादिविधिं कृत्वा संतर्पितातिथिजनः संप्रीणितयात्रलोकः, सुमनाः अकलुषितचित्तः, सुवेषः रुचिराकल्पसंयुक्तः, आप्तैर्वृतः हितजनैर्गुर्वादिभिः संवेष्टितो रहसि एकान्ते भोजनकृत् पुमान् भोजनं करोति स पुमान् तथा स्यात् तादृशो भवति । तादृशः कीदृशो भवति । सायं संध्यायां सूर्यास्तमनवेलायां भुक्तिकरोऽभिलाषो भोजनेच्छा यथा भवति । जात्यलंकारः ॥

**चारायण इत्यादि** । हे नृपते, चारायणो नाम वैद्यः निशि रात्रौ भुक्तिं भोजनं जगाद उक्तवान् । तिमिर्नाम वैद्यः पुनः अस्तकाले संध्यासमये भुक्तिं जगाद । धिषणो बृहस्पतिर्नाम वैद्यः दिनस्य मध्ये मध्याह्ने भुक्तिं जगाद । चरको नाम वैद्यः प्रभाते भुक्तिं जगाद । मम एष सर्गो वर्तते । एष कः । तस्या भुक्तेः स एव समयः स एवावसरः । स कः । यदैव यस्मिन्नेव काले क्षुधितो भवति तदैव भोजनं कुर्यादित्यर्थः । दीपकालंकारः ॥

**योऽक्षुध्यन्नित्यादि** । यः पुमान् अक्षुध्यन् बुभुक्षारहितः सन् लोलभावेन भो-

अन्ये त्वेवमाहुः—

य: कोकवद्दिवाकामः स नक्तं भोक्तुमर्हति।
स भोक्ता वासरे यश्च रात्रौ रन्ता चकोरवत् ॥ ३३० ॥

परे त्वेवमाहुः—

हृन्नाभिपद्मसंकोचश्चण्डरोचेरपायतः।
अतो नक्तं न भोक्तव्यं वैद्यविद्याविदां वरैः ॥ ३३१ ॥
देवार्चां भोजनं निद्रामाकाशे न प्रकल्पयेत्।
नान्धकारे न संध्यायां नाविताने निकेतने ॥ ३३२ ॥
सहभोजिषु लोकेषु पुरैव परिवेषयेत्।
भुञ्जानस्यान्यथा पूर्वं तद्दृष्टिविषसंक्रमः ॥ ३३३ ॥

---

जनलम्पटत्वेन आकण्ठं भोजनं कुर्यात् परिपूर्णं भुङ्क्ते स पुमान् व्याधीन् रोगान् अनर्थाय दुःखनिमित्तं प्रबोधयेत् जागरयति। कथंभूतान् व्याधीन्। सुप्तान् व्यालानिव निद्रां प्राप्तान् सर्पानिव। उपमालंकारः॥

अन्ये त्वेवमाहुः। अन्ये वैद्यास्तु एवमाहुर्ब्रुवन्ति। एवं कथमिति चेत्—**य इत्यादि**। यः पुमान् कोकवत् चक्रवाकवत् दिवाकामः दिने मैथुनं करोति स पुमान् नक्तं रात्रौ भोक्तुमर्हति भोजनं कर्तुं योग्यो भवति। स पुमान् वासरे दिवसे भोक्ता भोजनं करोति। स कः। यः पुमान् रात्रौ रन्ता मैथुनकारकः। किंवत्। चकोरवत् जीवंजीवपक्षिवत्। उपमालंकारः॥

परे त्वेवमाहुः। एवं कथमिति चेत्—**हृन्नाभीत्यादि**। हृत्पद्मं च नाभिपद्मं च हृन्नाभिपद्मे तयोः संकोचो भवति मुकुलत्वं स्यात्। कस्मात्। चण्डरोचेरपायतः चण्डरोचिषः श्रीसूर्यस्य अपायतोऽस्तमनात्। अत एतस्मात् कारणात् नक्तं रात्रौ न भोक्तव्यं न भोजनीयम्। कैः वैद्यविद्याविदां वरैः। उत्तमवैद्यैरित्यर्थः। रूपकालंकारः॥

**देवार्चामित्यादि**। देवार्चां देवपूजनं भोजनं भुक्तिं निद्रां स्वापं एतानि त्रीणि कर्माणि आकाशे अभ्रावकाशे न प्रकल्पयेत्। तथा अन्धकारे न प्रकल्पयेत्। तथा संध्यायां न प्रकल्पयेत्। तथा अविताने चन्द्रोपकरहिते निकेतने गृहे न प्रकल्पयेत्। दीपकालंकारः॥

**सहभोजिष्वित्यादि**। सहभोजिषु लोकेषु ये सहैव भोजनं कुर्वन्ति तेभ्यः पुरैव पूर्वमेव परिवेषयेत् भोजनं मोचयेत्। अन्यथा पूर्वं भुञ्जानस्य दृष्टिविषसंक्रमः तेषां दृष्टिविषं संक्रामति। रूपकालंकारः॥

भुक्तौ स्वापे मलोत्सर्गे यः संबाधसमाकुलः ।
निःशङ्कस्यात्ययात्तस्य के के न स्युर्महामयाः ॥ ३३४ ॥
फेलाभुक्प्रतिकूलः क्रूरमनाः सामयः क्षुधाक्रान्तः ।
न स्यात्समीपवर्ती भोजनकाले विनिन्द्यश्च ॥ ३३५ ॥
विवर्णास्विन्नविक्लिन्नविगन्धिविरसस्थितिः ।
अतिजीर्णमसात्म्यं च नाद्यादन्नं न चाविलम् ॥ ३३६ ॥
हितं परिमितं पक्कं नेत्रनासारसाप्रियम् ।
परीक्षितं च भुञ्जीत न द्रुतं न विलम्बितम् ॥ ३३७ ॥
ध्वाङ्क्षः स्वरान्विकुरुतेऽत्र पिकात्मजश्च
बभ्रुः शिखण्डितनयश्च भवेत्प्रहृष्टः ।

---

**भुक्ताविल्यादि** । यः पुमान् भुक्तौ भोजने स्वापे निद्रायां मलोत्सर्गे विड्विसर्जने संबाधसमाकुलो भवति बाधावान् भवति तस्य पुरुषस्य के के महामयाः रोगानस्युर्न भवति । अपि तु सर्वे महामयाः स्फुरन्तीत्यर्थः । कस्मात् । निःशङ्कस्यात्ययात् निःशङ्कत्वाभावात् । आक्षेपालंकारः ॥

**फेलाभुगित्यादि** । भोजनकाले फेलाभुक् उच्छिष्टभोजी पुमान् समीपवर्ती निकटवर्ती न स्यात् । तथा प्रतिकूलः शत्रुः समीपवर्ती न स्यात् । तथा क्रूरमना हिंसकः पुमान् भोजनकाले समीपवर्ती न स्यात् । तथा सामयो रुग्णः पुरुषः न स्यात् । तथा क्षुधाक्रान्तः बुभुक्षापीडितो न स्यात् । तथा विनिन्द्यश्च निन्दनीयः पुमान् न स्यात् । दीपकालंकारः ॥

**विवर्णेत्यादि** । अन्नं न अद्यात् न भुञ्जीत । कथंभूतमन्नम् । विवर्णास्विन्नविक्लिन्नविगन्धिविरसस्थितिः विवर्णं च मलिनम्, अस्विन्नं च अनिष्पन्नम्, विक्लिन्नं च, विगन्धि च विरूपकगन्धसहितम्, विरसं च स्वादरहितम्, ईदृशानां दोषाणां स्थितिः स्थानं यस्मिन्नन्ने तत्तथोक्तम् । पुनः कथंभूतम् । अतिजीर्णं भूमिनिष्कासितं विद्धं वा असात्म्यं च अहितं आविलमशुद्धम् । क्रियाक्षेपालंकारः ॥

**हितमित्यादि** । अन्नमिति पूर्वोक्तमेव ग्राह्यम्, अन्नं भुञ्जीत अश्नीयात् । कीदृशं अश्नीयात् । हितं परिणामपथ्यम्, परिमितमनाकहीनम्, पक्कं अग्निपक्कम्, नेत्रनासारसाप्रियं नेत्रे च लोचने नासा च घ्राणेन्द्रियं रसा जिह्वा तासां प्रियं वल्लभम्, परीक्षितं च विषरहितं तथा न भुञ्जीत नाश्नीयात् द्रुतं शीघ्रम् । तत्कालोत्कीर्णमित्यर्थः । विलम्बितं अतिशीतं भोजनमध्ये कालक्षेपं कृत्वा न भुञ्जीत । भुञ्जान एव पूर्णं कुर्यादित्यर्थः । क्रियादीपकालंकारः ॥

परीक्षितमित्यस्य पदस्य अर्थं विस्तारयति—**ध्वाङ्क्ष इत्यादि** । विषदर्शनात् विषावलोकनात् ध्वाङ्क्षः काकः स्वरान् शब्दान् विकुरुते विकृतान् शब्दान् करोति । 'यः श-

क्रौञ्चः प्रमाद्यति विरौति च ताम्रचूड-
श्छर्दिं शुकः प्रतनुते हदते कपिश्च ॥ ३३८ ॥
विरज्येते चकोरस्य लोचने विषदर्शनात्।
गतौ स्खलति हंसोऽपि लीयन्तेऽन्ने न मक्षिकाः ॥ ३३९ ॥
यथा लवणसंपर्कात्स्फुटं स्फुटति पावकः।
विषदूष्यान्नसंपर्कात्तथा वसुमतीपते ॥ ३४० ॥
पुनरुष्णीकृतं त्याज्यं सर्वं धान्यं विरूढकम्।
दशरात्रोषिते नाद्यात्कंसे च निहितं घृतम् ॥ ३४१ ॥
दधितक्राभ्यां कदलं क्षीरं लवणेन च शकुलिः कलिना।
गुडपिप्पलिमधुमरिचैः सार्धं सेव्या न काकमाची च ॥ ३४२ ॥
भुञ्जीत माषसूपं मूलकसहितं न जातु हितकामः।
दधिवत्सक्तून्नाद्यान्निशि निखिलं तिलविकारं च ॥ ३४३ ॥

---

वद्कर्मशकः' इत्यनेन सूत्रेण उभयकर्मकोऽपि कृञ्धातुस्वादित्वादात्मनेपदम्। अत्र अस्मिन् विषान्ने दृष्टे सति पिकात्मजः कोकिलः स्वरान् विकुरुते। बभ्रुर्नकुलः शिखण्डितनयश्च मयूरः प्रहृष्टो भवेत् आनन्दितः स्यात्। क्रौञ्चः कुड्डपक्षः प्रमाद्यति दृष्ट्वा स्वपिति। ताम्रचूडः कुक्कुटः विरौति विरूपकं शब्दं करोति। शुकः कीरः छर्दिं वमनं प्रतनुते करोति। कपिर्हदते पुरीषोत्सर्गं करोति। चकोरस्य जीवंजीवस्य लोचने नेत्रे विरज्येते विरागं प्राप्नुतः। हंसो गतौ गमने स्खलति रुचिरगमनं न करोति। अन्ने मक्षिका न लीयन्ते नोपविशन्ति। युग्मम्। समुच्चयालंकारः॥

**यथेत्यादि**। हे वसुमतीपते, यथा येन प्रकारेण लवणसंपर्कात् अक्षीवसंसर्गात् स्फुटं व्यक्तं पावको वैश्वानरः स्खटति तटतटायते तथा तेन प्रकारेण विषदूष्यान्नसंपर्कात् पावकः स्फुटति। उपमालंकारः॥

**पुनरुष्णीकृतमित्यादि**। नाद्यात् न भुञ्जीत। किं तत्। सर्वमन्नं सर्वभक्तं सूपपूपादिकं वा पुनरुष्णीकृतम्, तथा विरूढकं अङ्कुरितं धान्यम्, तथा कंसे च निहितं दशरात्रोषितं दशदिवसस्थितं घृतं नाद्यात्। प्रदीपकालंकारः॥

**दधितक्राभ्यामित्यादि**। दधितक्राभ्यां द्वाभ्यां तृतीयं कदलं एकेन वा कदलीफलं न सेव्यम्। लवणेन सह क्षीरं न सेव्यम्। कलिना काञ्जिकेन सह शकुलिः तिलमिश्रभक्ष्यविशेषः न सेव्यः। काकमाची वायसाध्वी क्षमामन्नशाकविशेषः गुडपिप्पलिमधुमरिचैश्चतुर्भिः सार्धं न सेव्या न भोक्तव्या। दीपकालंकारः॥

**भुञ्जीतेत्यादि**। माषसूपं शमीधान्यविशेषदाल्यन्नं वटकानामुपादानकारणं माषः

ऋते घृताम्बुभक्ष्येभ्यः सर्वं पर्युषितं त्यजेत् ।
केशकीटकसंसृष्टं पुनराद्धं च वर्जयेत् ॥ ३४४ ॥
अत्यशनं लघ्वशनं समशनमध्यशनमत्र संत्याज्यम् ।
कुर्याद्यथोक्तमशनं बलजीवितपेशलं क्रमशः ॥ ३४५ ॥
आदौ स्वादु स्निग्धं गुरु मध्ये लवणमम्लमुपसेव्यम् ।
रूक्षं द्रवं च पश्चान्न च भुक्त्वा भक्षयेत्किंचित् ॥ ३४६ ॥
मन्दस्तीक्ष्णो विषमः समश्च वह्निश्चतुर्विधः पुंसाम् ।
लघु मन्दे गुरु तीक्ष्णे स्निग्धं विषमे समं समे चाद्यात् ॥ ३४७॥

---

तस्याः सूपं मूलकसहितं जातु कदाचित् हितकामः पुमान् न भुञ्जीत नाश्नीयात् । दधिवत् बद्धपिण्डान् सक्तून् न भुञ्जीत । शिथिलान् सक्तून्नाद्यादित्यर्थः । निशि रात्रौ निखिलं तिलविकारं नाद्यात् । समुच्चयालंकारः ॥

**ऋतेइत्यादि** । घृताम्बुभक्ष्येभ्यः ऋते घृताम्बुभक्ष्यान्विना सर्वं पर्युषितं रात्रावुषितं त्यजेत् परिहरेत् । पर्युषिते घृते अम्बुनि पक्वान्ने च दोषो नास्तीत्यर्थः । केशकीटकसंसृष्टं यस्मिन्नन्ने केशो निर्गतः कीटकश्च निर्गतः तदन्नं वर्जयेत् । तथा पुनराद्धं पुनरुष्णीकृतं वर्जयेत् । समुच्चयालंकारः ॥

**अत्यशनमित्यादि** । अत्यशनं प्रायेण केवलं वस्तु संत्याज्यम् । लघ्वशनं ओदनादिकं न भुञ्जीत । समशनं पथ्यापथ्यं त्याज्यम् । अध्यशनं भुक्तस्योपरि भोजनमध्यशनमुच्यते । तदुक्तम्—'विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम्' इति । अत्र भोजने यथोक्तमशनं कुर्यात् अग्निकालवयोनुरूपं यथोक्तम् । कथंभूतं यथोक्तमशनम् । बलजीवितपेशलं बलकारकं जीवितकारकं च क्रमशोऽनुक्रमेण । तद्युक्तस्यान्नस्यायुक्तं अग्रेतन्यामार्यायां कथयिष्ये । समुच्चयालंकारः ॥

**आदावित्यादि** । आदौ प्रथमतः स्वादु गुडादिमिश्रं तथा स्निग्धं घृतादिकं उपसेव्यं भोजनीयम् । गुरु मध्ये गुरूपसेव्यं भक्तदाल्यादिकं लवणं क्षारं अम्लं मध्ये उपसेव्यम् । रूक्षं केवलं भक्तं द्रवं तक्रादिकं क्षीरान्नं पश्चात् उपसेव्यम् । भुक्त्वा भोजनं कृत्वा किंचित् नारिकेरखर्जूरभृष्टचणकधान्यादिकं न भक्षयेत् । समुच्चयालंकारः ॥

**मन्द इत्यादि** । पुंसां पुरुषाणां वह्निर्बुभुक्षा क्षुधाख्यः चतुर्विधः चत्वारो विधाः प्रकारा यस्य स चतुर्विधः । के ते चत्वारो विधाः । एकस्तावन्मन्दः मन्दो वह्निरल्पबुभुक्षा कफाधिकत्वात्, द्वितीयस्तीक्ष्णः पित्ताधिकत्वात्, तृतीयो विषमो वाताधिकत्वात्, चतुर्थः समः कफपित्तानिलसाम्यात् । उदराग्निश्चतुर्विधो भवति । उक्तं च—'मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः । कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरो-

शिशिरसुरभिघर्मेष्वातपाम्भःशरत्सु
क्षितिप जलशरद्धेमन्तकालेषु चैते ।
कफपवनहुताशाः संचयं च प्रकोपं
प्रशममिह भजन्ते जन्मभाजां क्रमेण ॥ ३४८ ॥

तदिह शरदि सेव्यं स्वादु तिक्तं कषायं
मधुरलवणमम्लं नीरनीहारकाले ।
नृपवर मधुमासे तीक्ष्णतिक्ते कषायं
प्रशमरसमथान्नं ग्रीष्मकालागमे च ॥ ३४९ ॥

नवमशनमिहाद्यात्क्षीरमाषेक्षुभक्ष्या-
न्दधि च घृतविकारांस्तैलमप्यत्र पथ्यम् ।

---

ऽनलः ॥ विषमो वातजान्रोगांस्तीक्ष्णः पित्तसमुद्भवान् । करोत्यग्निस्तथा मन्दो विकारान्कफसंभवान् ॥' तत्र चतुर्विधेष्वपि वह्निषु अदनमाह—लघु मन्दे लघुभोजनं मन्देऽग्नौ अद्यात् भक्षयेत् भुञ्जीत । तीक्ष्णाग्नौ गुर्वन्नमद्यात् । विषमेऽग्नौ स्निग्धान्नमद्यात् । समेऽग्नौ सममन्नमद्यात् । दीपकालंकारः ॥

**शिशिरसुरभिघर्मेष्वित्यादि** । हे क्षितिप हे राजन्, कफपवनहुताशाः श्लेष्मवायुपित्तानि संचयं प्रकोपं च प्रशमं उपशमनं इह अस्मिन् संसारे जन्मभाजां प्राणिनां क्रमेण यथासंख्येन भजन्ते । केषु । शिशिरसुरभिघर्मेषु । अस्यायमर्थः—शिशिरे माघफाल्गुनद्वये कफः श्लेष्मा संचयं भजते, सुरभौ वसन्ते चैत्रवैशाखे कफः प्रकोपं भजते, घर्मे ज्येष्ठाषाढे ग्रीष्मकाले कफः प्रशमं भजते, आतपे ग्रीष्मकाले पवनो वायुः संचयं भजते, अम्भसि श्रावणभाद्रपदमासद्वये पवनः प्रकोपं भजते, शरदि आश्विनकार्तिकमासद्वये पवनः प्रशमं भजते, शरदि पित्तः संचयं भजते, मार्गशीर्षपौषमासद्वये पित्तः प्रकोपं भजते, माघफाल्गुनमासद्वये पित्तः प्रशमं च भजते इति तात्पर्यार्थः । यथासंख्यालंकारः ।

**तदिहेत्यादि** । हे नृपवर राजाधिराज, तत्तस्मात् कारणात् इह अस्यां शरदि स्वाद्वन्नं मिष्टान्नं सेव्यम्, तिक्तं कषायं च सेव्यम्, नीरनीहारकाले मधुरं लवणं अम्लं च सेव्यम्, मधुमासे च वसन्तसमये तीक्ष्णतिक्ते कषायं च सेव्यम्, अथानन्तरं ग्रीष्मकालागमे च प्रशमरसं अन्नं मिष्टान्नं सेव्यम् । समुच्चयालंकारः ॥

**नवमशनमित्यादि** । इह अस्मिन् शिशिरकाले नवमशनं अद्यात् भुञ्जीत । पुनश्च किं अद्यात् । क्षीरमाषेक्षुभक्ष्यान् क्षीरं च माषाश्च वृष्याः इक्षुश्च इक्ष्वादिकाः पौण्ड्रके भक्ष्याश्च मोदकादयः क्षीरमाषेक्षुभक्ष्यास्तान् । च अन्यत् शिशिरकाले दधि अद्यात् यथा

निशि च शिशिरकाले पीनवक्षोजभाजो
विपुलबहलकायाः सेवनीयाः पुरंध्र्यः ॥ ३५० ॥

यवगोधूमप्रायं रूक्षप्रायं च भोजनं कुर्यात् ।
मदनविजृम्भणकाले गुरु शीतं स्वादु च त्याज्यम् ॥ ३५१ ॥

कलमसदकभक्तं मुद्गसूपः ससर्पि-
र्बिससलकियकन्दाः सक्तवः पानकानि ।
क्षितिरमण रसाला नालिकेरीफलाम्भ-
स्तपदिवसनिषेव्यं शर्कराढ्यं पयश्च ॥ ३५२ ॥

परिशुष्कं लघु स्निग्धमुष्णं प्रावृषि भोजनम् ।
पुराणशालिगोधूमयवप्रायं समाचरेत् ॥ ३५३ ॥

---

घृतविकारान् च अद्यात् तथा घनीभूतं घृतमद्यात् । अत्र अस्मिन् शिशिरकाले तैलमपि पथ्यं हितं वर्तते । निशि च रात्रौ पुरंध्र्यः सेवनीयाः । कथंभूताः । पीनवक्षोजभाजः पीवरस्तन्यः । पुनः कथंभूताः पुरंध्र्यः । विपुलबहलकायाः स्थूलशरीराः । समुच्चयालंकारः ॥

**यवगोधूमप्रायमित्यादि** । मदनविजृम्भणकाले वसन्ततौं यवगोधूमप्रायं रूक्षप्रायं अल्पघृतप्रायं च भोजनं कुर्यात् कुर्वन् गुरु माषादिकं शीतं शर्करादिकं स्वादु च मधुरमन्नं त्याज्यम् । समुच्चयालंकारः ॥

**कलमेत्यादि** । हे क्षितिरमण, तपदिवसे निषेव्यं ग्रीष्मकालदिनेषु सेव्यं सेवनीयम् । किम् । कलमसदकभक्तं सुगन्धशालितण्डुलकटो निषेव्यः । मुद्गसूपो मुद्गदालिर्निषेव्यः । कथंभूतः । ससर्पिर्घृतप्रायम् । बिसकिसलयकन्दाः बिसं च पद्मिनीकन्दः, किसलयानि च मधुरपल्लवाः, कन्दाः पिण्डकन्दाः, सक्तवः भ्रष्टपञ्चचूर्णविकाराः, पानकानि शर्करागुडक्कुवरसादिकं पानकमुच्यते, रसाला मज्जिका इति देवपञ्जिकायां शिखरणीति शर्करादिकम्, नालिकेरीफलाम्भः लाङ्गलिनीफलजलं च, अन्यत् शर्कराढ्यं शर्करासहितं यथोक्तं पयः दुग्धं जलं वा । समुच्चयालंकारः ॥

**परिशुष्कमित्यादि** । प्रावृषि भोजनं समाचरेत् कुर्यात् । कीदृशम् । परिशुष्कं अङ्गारमण्डूकस्वाधकरं फेनिकादिकम्, लघु षाष्टिकं तण्डुलभक्तादिकम्, स्निग्धं घृतादिकम्, उष्णं........, पुराणशालिगोधूमयवप्रायं पक्वान्नसुगन्धशालिभक्तं गोधूमानामभ्यूषादिकं यवप्रायं यवौदनं समाचरेत् । समुच्चयालंकारः ॥

घृतं मुद्गाः शालिः समिधविकृतिः क्षीरविधयः
पटोलं मृद्वीकाः फलमिह च धात्र्याः समुचितम्।
सिता शीतच्छाया मधुरसवशं कन्दकुपलं
शरत्काले सेव्यं रजनिवदने चन्द्रकिरणाः॥ ३५४॥
न्यूनाधिकविभागेन रसानृतुषु योजयेत्।
षड्रसाभ्यवहारस्तु सदा नृणां सुखावहः॥ ३५५॥
वालं वृन्ताकं कोहलं कारवेलं चिल्ली जीवन्ती वास्तुलस्तण्डुलीयः।
सद्यःसंभृष्टाः पर्पटाश्चिर्भटान्ताः किं स्वर्लोकैश्चेत्फालयश्चार्द्रकस्य॥ ३५६॥
तुर्येणांशेन भोज्यस्य सर्वशाकं समाचरेत्।
दध्ना परिप्लुतं नाद्याद्विशुष्कं पयसा न च॥ ३५७॥

---

**घृतमित्यादि।** शरत्काले आश्विनकार्तिकमासे घृतं सेव्यम्, मुद्गाश्च सेव्याः, शालिः सुगन्धशाल्योदनम्, समिधविकृतिर्गोधूमचूर्णलपनश्रीः सेव्या, क्षीरविधयः परमान्नं सेव्यम्, पटोलं सव्यव्यञ्जनम्, मृद्वीका द्राक्षाः सेव्याः। इह अस्मिन् काले चकाराद्ग्रीष्मान्तराले च धात्र्याः फलं आमलकीफलं समुचितं योग्यम्। सिता शर्करा सेव्या, शीतच्छायाः आम्रवटचम्पकद्राक्षामण्डपादिषु छाया सेव्या, मधुरसवशं मिष्टरसाधीनं कन्दकुपलं पिण्डालूकन्दमधुरपल्लवं च सेव्यं भवति। रजनिवदने पूर्वरात्रे चन्द्रकिरणाः सेव्या भवन्ति। समुच्चयालंकारः॥

**न्यूनाधिकेत्यादि।** न्यूनाधिकविभागेन ऋतुषु रसान् योजयेत्। उष्णकाले उष्णरसं स्तोकं शीतरसं प्रचुरम्, शीतकाले शीतरसं स्तोकं उष्णरसं प्रचुरम्, एवं न्यूनाधिकविभागेन रसान् सेवेत। विरुद्धं सर्वथा त्याज्यमित्यर्थः। षड्रसाभ्यवहारस्तु षड्रसभोजनं तु नृणां सदा सुखावहः सुखकरो भवति। जात्यलंकारः॥

**वालं वार्ताकमित्यादि।** वालं निष्पावकसालनं परहसितमेव(?) न तु शुष्कम्। वृन्ताकं कोमलं वृन्ताकव्यञ्जनम्, कोहलं पक्वकर्कारुव्यञ्जनम्। उक्तं च—'वृन्ताकं कोमलं पथ्यं कूष्माण्डं कोमलं विषम्।' कारवेल्लं कठिल्लकव्यञ्जनम्। सुखवीसानमित्यर्थः। चिल्लि पोई पत्रभञ्जिका, जीवन्ती राजडोडिका, वास्तूलं वास्तूलशाकम्। 'वास्तूलं शाकनायकम्' इत्यर्थः। तण्डुलीयः अल्पमारिषशाकम्, सद्यः संभृष्टाः पर्पटास्तत्कालमग्नौ संतापिताः पर्पटा माषपर्पटाः, चिर्भटान्ताः पुष्पपार्श्वकर्कटीभेदाः स्वर्लोकैः स्वर्गलोकैः किं न किमपि चेद्यदि आर्द्रकस्य फालयः खण्डानि भवन्ति। आक्षेपसमुच्चयालंकारः॥

**तुर्येणेत्यादि।** तुर्येण चतुर्थेन अंशेन भागेन भोज्यस्य भोजनस्य सर्वशाकं समाचरेत् भुञ्जीत। दध्ना परिप्लुतं दधिमध्ये त्रुडितं व्यञ्जनं नाद्यात् न भुञ्जीत। पयसा विशुष्कं निर्जलं व्यञ्जनं तलिकोत्तीर्णप्रायं नाद्यादित्यर्थः। जात्यलंकारः॥

अक्कथितं दशघटिका कथितं द्विगुणाश्च ताः पयः पथ्यम्।
रूपामोदरसाढ्यं यावत्तावद्दधि प्राश्यम् ॥ ३५८ ॥
तावद्वर्गोऽत्र भक्ष्याणां स्वदते श्लाघ्यतेऽपि च।
उष्णोष्णाः सर्पिषि स्नाता यावन्नाङ्गारपाचिताः ॥ ३५९ ॥
यद्वेदागमवेदिभिर्निगदितं साक्षादिहायुर्नृणां
यद्वैद्येषु रसायनाय पठितं सद्यो जरानाशनात्।
यत्सारस्वतकल्पकान्तमतिभिः प्रोक्तं धियः सिद्धये
तत्ते काञ्चनकेतकद्रुतिरसच्छायं मुदे स्ताद्घृतम् ॥ ३६० ॥
स्थौल्यं करोति हरतेऽनिलमेतदेकं
यन्नोष्णतामुपगतं दधि तत्कदाचित्।

---

**अक्कथितमित्यादि**। अक्कथितमनुत्कालितं दुग्धं दश घटिका यावत् तावत् पथ्यं अधिककाले अपथ्यम्। क्कथितमुत्कालितं यद्दुग्धं ता घटिका द्विगुणाश्च विंशतिघटिकापर्यन्तं पथ्यं पश्चादपथ्यमित्यर्थः। रूपामोदरसाढ्यं यावत् उज्ज्वलत्वं सुगन्धत्वं अनम्लगुणसहितं यावत्तावत्कालं दधि प्राश्यमास्वादनीयम्। जात्यलंकारः ॥

**तावदित्यादि**। अत्र अस्मिन् संसारे भक्ष्याणां पक्वानां वर्गः समूहस्तावत्कालं स्वदते श्लाघ्यतेऽपि च प्रशस्यते च। तावत्कियत्। यावत्कालं अङ्गारपाचिताः स्थूलाभ्यूर्णाः उष्णोष्णा अशीतलाः सर्पिषि स्नाता घृतप्लुता यावन्नायान्ति यावन्न भक्ष्यन्ते इत्यर्थः। अतिशयालंकारः ॥

**यदित्यादि**। हे राजन्, तद्घृतं ते तव मुदे हर्षाय स्ताद्भवतु। यत्किम्। यद्घृतं वेदागमवेदिभिः वेदशास्त्रज्ञापकैः इह अस्मिन् संसारे साक्षात् प्रत्यक्षेण नृणां मनुष्याणां आयुः जीवितं निगदितं प्रतिपादितम्। 'आयुर्वै घृतम्' इति वचनात्। यद्घृतं वैद्येषु आयुर्वेदविज्ञापकेषु आयुर्वेदप्रतिपादकेषु शास्त्रेषु वा रसायनाय पठितं मृगाङ्कादिरसायननिमित्तं कथितम्। कस्मात्। सद्यस्तत्कालं जरानाशनात् घृतपानात्। 'वृद्धोऽपि तरुणायते' इति वचनात्। यद्घृतं सारस्वतकल्पकान्तमतिभिः सारस्वतो नाम सरस्वतीमन्त्रस्तन्महिमप्रकाशाङ्कं शास्त्रं सारस्वतकल्प उच्यते तेन कान्ता अतिमनोहरा मतिर्येषां मन्त्रवादिनां ते तथा तैः धियो बुद्ध्याः सिद्धये प्राप्त्यर्थं प्रोक्तं प्रतिपादितम्। कथंभूतं घृतम्। काञ्चनकेतकद्रुतिरसच्छायं काञ्चनं च केतकं च सुवर्णकेतकीपुष्पं तयोर्द्रुतिरसो द्रवस्तस्य छाया वर्णो यस्य घृतस्य तत्तथोक्तम्। उपमालंकारः ॥

**स्थौल्यमित्यादि**। तद्दधि सेव्यं आस्वादनीयम्। तत्किम्। यत् दधि। किं करोति। स्थौल्यं पीवरत्वं करोति। अनिलं वातं हरते। एतदेकमेव अन्यानि औषधानां सहस्रा-

सर्पिःसितामलकमुद्गकषाययुक्तं
सेव्यं वसन्तशरदातपकालवर्जम् ॥ ३६१ ॥
नवनवनीतोद्धारं मथितं कथयन्ति समगुणं सुधियः ।
चिरमथितं पुनरुत्पत्तिकरं च न कस्य दोषस्य ॥ ३६२ ॥
क्षीरं साक्षाज्जीवनं जन्मसात्म्यात्तद्धारोष्णं गव्यमायुष्यमुक्तम् ।
प्रातः सायं साम्यधर्मावसाने भुक्तेः पश्चादात्मसाम्येन सेव्यम् ॥ ३६३ ॥
अतिमधुरनिषेवात्संततं वह्निसादः
समधिकलवणान्नप्राशनाद्दृष्टिमान्द्यम् ।

---

ण्यपि यं वातं न हरन्ति तं वातं इदमेकमपि हरति । ..........................
कथंभूतं दधि सेव्यम् । सर्पिः सितामलकं च शिवाफलं मुद्गकषायश्च मुद्गजलं तैर्युक्तम् । पुनः कथंभूतं दधि सेव्यम् । वसन्तशरदातपकालवर्जं वसन्तश्च चैत्रवैशाखमासद्वयम्, शरद् आश्विनकार्तिकमासयुगलम्, आतपश्च ज्येष्ठाषाढमासद्वन्द्वम्, ते च ते कालाः तान् वर्जयति इति वसन्तशरदातपकालवर्जम् । एतावता किमुक्तं भवति । मार्गशीर्षपौषमाघफाल्गुनश्रावणभाद्रपदेषु षट्सु मासेषु न्यूनाधिकविभागेन सेव्यमित्यर्थः । समुच्चयालंकारः ॥

**नवनवनीतोद्धारमित्यादि** । मथितं तक्रं सुधियो विद्वांसः समगुणं वातपित्तश्लेष्महरमिति कथयन्ति प्रतिपादयन्ति । कथं मथितम् । नवनवनीतोद्धारं तत्कालगृहीतनवनीतमित्यर्थः । चिरमथितं ह्यस्तनदिवसादितक्रं पुनः कस्य दोषस्य वातपित्तश्लेष्मादेरुत्पत्तिकरं न भवति । अपि तु सर्वस्य दोषस्योत्पत्तिकरं भवतीत्यर्थः । तथा चोक्तम्—'न तक्रदग्धाः प्रभवन्ति व्याधयः' इत्यत्र 'ईषत्स्पृष्टमन्तस्थानाम्' इति वचनात् न छन्दोभङ्गः शङ्कनीयः । आक्षेपालंकारः ॥

**क्षीरमित्यादि** । क्षीरं दुग्धं सेव्यं सेवनीयम् । कथंभूतं क्षीरम् । साक्षात् निश्चयेन जीवनं आयुःस्थिरीकरणम् । कस्मात् । जन्मसात्म्यात् । यतो जातमात्रोऽपि बालकः क्षीरं पीत्वा जीवति अत आजन्महितत्वात् । तत्क्षीरं धारोष्णं गव्यं गवि भवं आयुष्यं आयुषे हितं उक्तं च प्रतिपादितम् । अत्यनुष्णमतिशीतं न सेव्यमित्यर्थः । कदा सेव्यम् । प्रातः प्रभातकाले यदि शरीरे पित्तं भवति । सायं संध्यायां सेव्यं यदि शरीरे वातो भवति । साम्यधर्मावसाने मैथुनकर्मानन्तरं भुक्तेः पश्चाद्यतीनामपि योग्यं आत्मसात्म्येन यावन्मात्रं आत्मने पदं भवति । अति बहु न सेव्यमित्यर्थः । पानीयसाम्योक्तत्वात् । रूपकसमुच्चयालंकारः ॥

**अतिमधुरेत्यादि** । संततं अतिमधुरनिषेवणात् गुरुशर्कराद्यास्वादनात् वह्निसादः बुभुक्षानाशो भवति । समधिकलवणान्नप्राशनात् अधिकक्षारसंयुक्तभोजनात् खादनाद्

जरयति वपुरेषात्यम्लतीक्ष्णोपयुक्ति-
बलविलयमसात्म्यं भुक्तमात्रं करोति ॥ ३६४ ॥
उषणो देहदाहाय कषायोऽनिलकोपनः ।
निषेव्यमाणः सातत्यादतिमात्रतया रसः ॥ ३६५ ॥ (युग्मम्)
यवसमिथविदाहिष्वम्बु शीतं निषेव्यं
क्वथितमिदमुपास्यं दुर्जरेऽन्ने च पिष्टे ।
भवति विदलकालेऽवन्तिसोमस्य पानं
घृतविकृतिषु पेयं कालशेयं सदैव ॥ ३६६ ॥
आदौ जलं वह्निविनाशकार्श्ये कुर्यात्तदन्ते कफबृंहणं च ।
मध्ये तु पीतं समतां सुखं च नास्यातियोगोऽभिमतः सकृच्च ॥३६७॥
अमृतं विषमिति चैतत्सलिलं निगदन्ति विदिततत्त्वार्थाः ।
युक्त्या सेवितममृतं विषमेतदयुक्तितः पीतम् ॥ ३६८ ॥

---

दृष्टिमान्द्यं चक्षुस्तेजोहीनं भवति । कुडवमध्ये टङ्कद्वयं लवणं युक्तमधिकं न युक्तमिति भावः । एषा प्रत्यक्षीभूता अत्यम्लतीक्ष्णोपयुक्तिः अतिखाटमरिचादेः उपयोगः वपुः जरयति शरीरं जीर्णं करोति । तद्भुक्तमात्रं असात्म्यमपथ्यं बलविलयं नाशं करोति । उषणो देहदाहाय उषणः शुण्ठीमरिचपिप्पलिप्रभृतिरसः शरीरपरितापाय भवति । कषायो हरीतक्यामलकविभीतकपूगफलादिको रसः अनिलकोपनो वातकरो भवति । कोऽसौ ।॰सातत्यात् निरन्तरास्वादनात् अतिमात्रतया निषेव्यमाणः सन् । जात्यलंकारः ॥

**यवसमिथेत्यादि** । यवसमिथविदाहिषु यवानां शितशूकानां समिथश्चूर्णं तस्य विदाहिषु अजीर्णेषु शीतं अम्बु निषेव्यं अजीर्णं याति । अन्ने भोजने पिष्टे गोधूमसमिथे-दुर्जरे सति इदं अम्बु क्वथितमुत्कालितं जलं उपास्यं पानीये पेयम् । विदलकाले दाल्य-जीर्णकाले अवन्तिसोमस्य काञ्जिकस्य पानमास्वादनं भवति । घृतविकृतिषु सर्पिर-जीर्णेषु कालशेयं तक्रं पेयम् । तक्रं तु सदैव हितमिति भावः । 'न तक्रदग्धाः प्रभवन्ति रोगाः' इत्यभिधानात् । समुच्चयालंकारः ॥

**आदावित्यादि** । आदौ भोजनस्य पूर्वमेव पीतं जलं वह्निविनाशकार्श्ये कुर्यात् । तदन्ते कफबृंहणं च श्लेष्मवृद्धिं कुर्यात् । मध्ये तु पीतं जलं समतां सुखं च कुर्यात् । अस्य जलस्य सकृत् एकवारमेव अतियोगः अतिपानं नाभिमतो नाभीष्टः । 'पुनः पुनर्वारि पिबेदभूरि' इति वचनात् । समुच्चयालंकारः ॥

**अमृतमित्यादि** । एतत् सलिलं अमृतं विषमिति च द्वे नामनी विदिततत्वार्थाः विज्ञातायुर्वेदशास्त्रा निगदन्ति प्रतिपादयन्ति । 'प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं विषं

कौपं प्रास्रवणं वसन्तसमये ग्रीष्मे तदेवोचितं
कालें चानभिवृष्टिदेशमथवा चौण्ढ्यं घनानां पुनः ।
नीहारे सरसीतडागविषयं सर्वं शरत्संगमे
सेव्यं सूर्यसितांशुरश्मिपवनव्याधूतदोषं पयः ॥ ३६९ ॥
अव्यक्तरसगन्धं यत्स्वच्छं वातातपाहृतम् ।
प्रकृत्यैवाम्बु तत्पथ्यमन्यत्र क्वथितं पिबेत् ॥ ३७० ॥
वारि सूर्येन्दुसंसिद्धमहोरात्रात्परं त्यजेत् ।
दिवासिद्धं निशि त्याज्यं निशिसिद्धं दिवा त्यजेत् ॥ ३७१ ॥

---

च' इति हलायुधवचनात् । तत्रायं भावः—युक्त्या सेवितं जलममृतं जीवनीयम्, विषं चेति एतज्जलमयुक्तितः पीतं सत् विषं भवति । रूपकमिदम् ॥

कौपमित्यादि । कौपं पयः कूपोदकं प्रास्रवणं पयः निर्झरजलं वसन्तसमये चैत्रवैशाखे सेव्यम् । ग्रीष्मे ज्येष्ठाषाढे तदेव कूपनिर्झरजलं उचितं योग्यं भवति । पुनः पुनरपि घनानां काले वर्षाकाले अनभिवृष्टिदेशं झम्पिति(?)कूपस्य जलं सेव्यम् । अथवा चौण्ढ्यं चुरीसंभूतं त्रुटितं जलम् । उद्भितमिति यावत् । नीहारे शीतकाले सरसीतडागविषयं पयः महासरोवरक्षुद्रसरोवरजलं सेव्यम् । शरत्संगमे आश्विनकार्तिकमासे सर्वं पयः कूपप्रस्रवणसरसीतडागादिकं सेव्यम् । कथंभूतं पयः । सूर्यसितांशुरश्मिपवनव्याधूतदोषं सूर्यश्च रविः सितांशुश्चन्द्रस्तयोः रश्मयः किरणाः पवनश्च वायुः तैर्व्याधूतः स्फेटितो दोषो यस्य पयसः तत्तथोक्तम् । दीपकालंकारः ॥

अव्यक्तेत्यादि । यदम्बु जलं अव्यक्तरसगन्धम् । रसोऽपि ज्ञातुं न शक्यते, गन्धोऽपि ज्ञातुं न शक्यते । स्वच्छं मूलादिजलैरमिश्रितम्, वातातपाहृतं वातघर्मताडितम्, तदम्बु प्रकृत्या स्वभावेनैव पथ्यमदोषकरम् । अन्यत्रैतद्गुणरहितं क्वथितमुत्कालितं पिबेदास्वादयेत् । जात्यलंकारः ॥

वारीत्यादि । वारि जलं सूर्येन्दुसंसिद्धम् । जलभृतं घटं प्रातरेव घर्मे ध्रियते चतुरः प्रहरात् रात्रावपि अभ्रावकाशे तिष्ठति तद्वारि सूर्येन्दुसंसिद्धमुच्यते । अन्यस्मिन् तज्जलं पीयते रात्रावपि पीयते तदनन्तरं नास्वाद्यते । तेन कारणेन च अहोरात्रात्परं न तत् पिबेदित्यर्थः । दिवासिद्धं दिवसे उत्कालितं दिवस एव पिबेत्, तस्य दिवसस्य निशि रात्रौ न पिबेदित्यर्थः । निशिसिद्धं रात्रावुत्कालितं रात्रौ एव पिबेत्, न तु दिवा दिवसे पिबेत् । अन्यथा दोष उत्पद्यत इत्यर्थः । जात्यलंकारः ॥

---

१. 'क्षुद्रकूपे तु चूरी चूण्ढी तु चूतकः' इति हैमनाममाला. कोशान्तरे तु ह्रस्वोऽपि चुरीशब्दो दृश्यते.

वीरश्रीप्रणयगुरुः कल्पद्रुमपल्लवोऽर्थिनां साक्षात् ।
ताम्बूलाय प्रसरतु करस्तव स्त्रीकपोलचित्रकरः ॥ ३७२ ॥
कामकोपातपायासयानवाहनवह्नयः ।
भोजनानन्तरं सेव्या न जातु हितमिच्छता ॥ ३७३ ॥
आनन्दसुन्दरविनोदविदां वचोभिः
शृङ्गारसारसुभगैर्वनिताविनोदैः ।
आलापकेलिकरणैः शुकसारिकाणां
भुक्त्वातिवाहय महीश दिनस्य मध्यम् ॥ ३७४ ॥

इति वैद्या विद्याविलासापरनामभाजो रसानां शुद्धसंसर्गभेदेन त्रिषष्टिव्यञ्जनोपदेशभाजः सज्जनभिषजः प्रसूतसूक्तामृतपुनरुक्तोपदंशदशनं प्रत्यवसानं समाचरत ।

---

**वीरश्रीत्यादि** । हे राजन्, तव करः ताम्बूलाय प्रसरतु व्याप्रियताम् । कथंभूतः करः । वीरश्रीप्रणयगुरुः वीरश्रियो वीरलक्ष्म्याः प्रणयस्य स्नेहोत्पादनशिक्षायाः गुरुराचार्यः । पुनः कथंभूतः । अर्थिनां याचकानां साक्षात् प्रत्यक्षेण कल्पद्रुमपल्लवः कल्पवृक्षप्रवालः । पुनः कथंभूतः । स्त्रीकपोलचित्रकरः स्त्रीणां कपोलेषु पत्रावलीलेखने चित्रकरः रङ्गाजीवकः । रूपकालंकारः ॥

**कामकोपेत्यादि** । कामश्च स्त्रीसेवा, कोपश्च क्रोधभावः, आतपश्च घर्मः, आयासश्च श्रमः, यानं च गमनम्, वाहनं च अश्वाद्यारोहणम्, वह्निश्चाग्निः, ते कामकोपातपायासयानवाहनवह्नयः एते पदार्था भोजनानन्तरं जातु कदाचित् न सेव्याः । किं कुर्वता । हितमिच्छता कायस्य गुणं वाञ्छता । समुच्चयालंकारः ॥

**आनन्दसुन्दरेत्यादि** । हे महीश हे राजन्, भुक्त्वा भोजनं कृत्वा दिनस्य मध्यं मध्याह्नवेलां अतिवाहय निर्गमय । कैः कृत्वा अतिवाहय । आनन्दसुन्दरविनोदविदां वचोभिः आनन्देन सुन्दराः मनोहराः ये विनोदाः क्रीडनानि तान् विदन्ति जानन्ति आनन्दसुन्दरविनोदविदस्तेषां वचोभिर्वचनैः । सुभाषितगोष्ठीभिरित्यर्थः । पुनश्च कैः कृत्वा मध्याह्नमतिवाहय । वनिताविलासैः वनितानां अत्यर्थंरागोत्पादिकानां स्त्रीणां विलासैर्लोचनावलोकनैः । कथंभूतैः । शृङ्गारसारसुभगैः । सारशृङ्गारेण मनोहरैरित्यर्थः । पुनश्च कैः कृत्वा मध्याह्नमतिवाहय । शुकसारिकाणां पीतपादकीरादिकानां आलापकेलिकरणैः आभाषणक्रीडाविधानैः । समुच्चयालंकारः ॥

---

१. 'लासैः' इति सटीकपुस्तकस्थपाठः.

कदाचिदनवरतजलजडजलार्द्रान्दोलनस्यन्दिमन्दानिलविनोददोहदिनि सान्द्रनिद्रोद्रेकदुर्ललितमध्यंदिनसमये घनघर्मजलोद्वेल्लनविगलन्मलयजरसप्रसरानुसारितसुन्दरीपयोधरवपुषि तीव्रातपातङ्कपावकसंपर्कस्फुटन्मौक्तिकविरहिणीहृदयहारे स्थलकमलालवालायमानमहासरसि सरज्वरावेगसंगताङ्गनाङ्गसङ्गसंजातक्वाथक्वथ्यमानजलकेलिदीर्घिकापङ्कजकानने मलयाचलमेखला-

---

कदाचित् कस्मिंश्चिदवसरे निदाघानेहसि ग्रीष्मकाले मदनमदविनोदं नाम उद्यानं वनं प्रियतमाजनमिव अनुभूय पुनस्तत्र यन्त्रधारागृहे कृत्रिमवर्षाकरे प्रियतमाभिः सह संक्रीडमानः रममाणः इत्यमुना प्रकारेण वैतालिकालापोल्लास्यमानमानसः घर्मदिनेषु मध्याह्नसमयान् अतिवाहयामास अहं निर्गमितवान् इति क्रियाकारकसंबन्धः । कथंभूते निदाघानेहसि । अनवरतजलजडजलार्द्रान्दोलनस्यन्दिमन्दानिलविनोददोहदिनि अनवरतं जलेन जडा या जलार्द्रा जलार्द्रवस्त्रं तस्य आन्दोलनेन चालनेन स्यन्दते ईषत् च्योतति इत्येवंशीलो योऽसौ मन्दानिलः तस्य विनोददोहदः क्रीडाविनोदो विद्यते यस्मिन् निदाघानेहसि स तथोक्तस्तस्मिन् । पुनः कथंभूते । सान्द्रनिद्रोद्रेकदुर्ललितमध्यंदिनसमये सान्द्रः प्रचुरतरो योऽसौ निद्रोद्रेकः प्रमीलाधिक्यं तेन दुर्ललितो दुर्निवार्यः मध्यंदिनसमयो मध्याह्नवेला यस्मिन् स तथा तस्मिन् । पुनः कथंभूते । घनघर्मजलोद्वेल्लनविगलन्मलयजरसप्रसरानुसारितसुन्दरीपयोधरवपुषि घनं प्रचुरं यद्धर्मजलं प्रस्वेदजलं तस्य उद्वेल्लनेन प्रसरेण विगलन् विविधं निर्गलन् योऽसौ मलयजरसः चन्दनद्रवः तस्य प्रसरेण अनुसारितं सुन्दरीणां नवयौवनस्त्रीणां पयोधराणां वपुः शरीरं येन निदाघानेहसा स तथा तस्मिन् । पुनः कथंभूते । तीव्रातपातङ्कपावकसंपर्कस्फुटन्मौक्तिकविरहिणीहृदयहारे तीव्रोऽमन्दो योऽसौ आतपो घर्मः स एवातङ्कः सद्यःप्राणहरव्याधिः स एव पावकः तस्य संपर्केण स्पर्शेन स्फुटन्ति द्विधा भवन्ति यानि मौक्तिकानि तैरुपलक्षितः विरहिणीनां विप्रलब्धकामिनीनां हृदयहारो यत्र स तथा तस्मिन् । पुनः कथंभूते । स्थलकमलालवालायमानमहासरसि स्थलानां कमलानां आलवालायमानानि सेचनस्थानकसदृशानि महासरांसि अखातसरोवराणि यस्मिन् स तथा तस्मिन् । पुनः कथंभूते । सरज्वरावेगसंगताङ्गनाङ्गसङ्गसंजातक्वाथक्वथ्यमानजलकेलिदीर्घिकापङ्कजकानने स्मरः कन्दर्पस्तस्य संबन्धी योऽसौ ज्वरो व्याधिविशेषस्तस्यावेगेन समन्ताज्जवेन संगतं सहितं यत् अङ्गनाया अङ्गं तस्य सङ्गेन मेलापकेन संजातो योऽसौ क्वाथः अत्युष्णं जलं तेन क्वथ्यमानानि रन्ध्यमानानि जलकेलिदीर्घिकाणां पङ्कजकाननानि कमलवनानि यस्मिन् स तथा तस्मिन् । पुनः कथंभूते । मलयाचलमेखलास्खलज्जलधिवे-

---

१–२. 'पङ्कजात' इति सटीकपुस्तकपाठः. ३. 'वदनानि' इति सटीकपुस्तकपाठः.

स्खलज्जलधिवेलानिलनीहारसीकरस्यन्दसार्द्रचन्दनद्रुमाश्लेषलालसलेलिहानकामिनीमनसि शिशिरगिरिगुहागृहोत्सङ्गासीनसीमन्तिनीकुचामृतकुम्भपरिरम्भनिर्भरनभश्चरनिकरे नगनिम्नावनीवनविहारहरिणीविषाणकोणकण्डूयनसुखस्वापोन्मुखकुरङ्गपरिषदि तीरप्ररूढप्रौढपादपतलतरङ्गिणीसरोरुहकुहरविहरत्कलहंसनिवहे महावराहावगाहविग्राह्यमाणवाहिनीकह्रदासादियादसि निःशल्यतल्लचिरवल्ललोलल्लुलायलोके अविच्छिन्नच्छायावनीध्ररन्ध्रा-

---

लानिलनीहारसीकरस्यन्दसार्द्रचन्दनद्रुमाश्लेषलालसलेलिहानकामिनीमनसि मलयाचलस्य चन्दनगिरेर्या मेखला कटिनी तत्र स्खलन्ती आस्फालनं प्राप्नुवन्ती या जलधिवेला समुद्रतीरविकृतिस्तस्याः संबन्धिनः अनिलनीहारसीकराः शीतलजलकणास्तेषां स्यन्देन क्षरणेन सार्द्रा जलक्लिन्ना ये चन्दनद्रुमाः श्रीखण्डवृक्षास्तेषां आश्लेषे आलिङ्गने लालसमत्याकाङ्क्षं लेलिहानकामिनीनां कालसर्पिणीनां मनश्चित्तं यस्मिन् निदाघानेहसि स तथा तस्मिन्। पुनः कथंभूते । शिशिरगिरिगुहागृहोत्सङ्गासीनसीमन्तिनीकुचामृतकुम्भपरिरम्भनिर्भरनभश्चरनिकरे शिशिरगिरिर्हिमाचलपर्वतस्तस्य गुहाः कन्दराणि तान्येव गृहाणि उपवासितानि तेषां उत्सङ्गेषु अङ्केषु आसीना उपविष्टा याः सीमन्तिन्यः कमनीयकामिन्यस्तासां कुचास्त एव अमृतकुम्भाः पीयूषकलशास्तेषां परिरम्भेषु आलिङ्गनेषु निर्भरा गाढतरा नभश्चरनिकरा विद्याधरसमूहाः यस्मिन् स तथा तस्मिन्। पुनः कथंभूते। नगनिम्नावनीवनविहारहरिणीविषाणकोणकण्डूयनसुखस्वापोन्मुखकुरङ्गपरिषदि नगानां निम्नावन्यो नीचैस्तरभूमयस्तासां वनानि तेषां विहारेण पर्यटनेन उपलक्षिता या हरिण्यो मृगवनितास्तासां विषाणकोणानां शृङ्गाग्राणां कण्डूयनेन खर्जनेन संजातो योऽसौ सुखस्वापः सुखनिद्रा तस्मिन् उन्मुखा बद्धोत्कण्ठा या कुरङ्गपरिषत् मृगसमूहो यस्मिन् स तथा तस्मिन्। पुनः कथंभूते । तीरप्ररूढप्रौढपादपतलतरङ्गिणीसरोरुहकुहरविहरत्कलहंसनिवहे तीरयोस्तटयोः प्ररूढाः संजाता ये प्रौढपादपाः महावृक्षास्तेषां तले अधोभागे या तरङ्गिणी नदी तस्याः यानि सरोरुहाणि तेषां कुहरेषु विलेषु विहरन्तः कलहंसानां निवहाः यस्मिन् स तथोक्तस्तस्मिन्। पुनः कथंभूते । महावराहावगाहविग्राह्यमाणवाहिनीकह्रदासादियादसि महावराहाः वृहदरण्यशूकरास्तेषामवगाहेन समन्ताद्विलोडनेन विग्राह्यमाणाः स्वीक्रियमाणाः ये वाहिनीका ह्रदा नदीनां धिरेयास्तानासादयन्ति प्राप्नुवन्तीत्येवंशीलानि यादांसि जलजन्तवो यस्मिन् स तथा तस्मिन्। पुनः कथंभूते। निःशल्यतल्लचिरवल्ललोलल्लुलायलोके निःशल्या निर्गतिपक्षाः तल्लचिरवल्लेषु तडागकर्दमेषु लोलन्तो लुठन्तो ये लुलाया महिषास्तेषां लोकः समूहो यस्मिन् स तथा तस्मिन्। पुनः कथंभूते । अविच्छिन्नच्छायावनीध्ररन्ध्रा-

राधनोद्धुरसिन्धुरद्विषि करपुष्करावशेषनदनिमग्नसामजसूत्कारसमीरसेव्यमानसलिलदेवतादेहे रोमन्थमन्थरमुखमाहेयीनिवहनिरुद्धबुध्नाश्वत्थशाखिनि खरातपतपनताम्यन्मयमुक्तस्फीतफेनफुल्लोपहारितपल्वलपालिपीलुपर्यन्ते नितान्तोत्तप्तायसचूर्णसमानमार्गरजसि निदाघानेहसि, भवतः प्रतापेष्विव च प्रचण्डीभवत्सु मार्तण्डमण्डलेषु यशःप्रसरेष्विवातिदीर्घेषु दिवसेषु शत्रुसंततिष्विव लघीयसीषु रात्रिषु वैरिमनोरथेष्विव शोषमभिलषत्सु

---

राधनोद्धुरसिन्धुरद्विषि अविच्छिन्ना निरन्तरा छाया येषु तानि अविच्छिन्नच्छायानि यानि अवनीध्ररन्ध्राणि पर्वतविवराणि तेषामाराधने उद्धुरो निवार्यः सिन्धुरद्विट् सिंहो यत्र निदाघानेहसि स तथा तस्मिन्। पुनः कथंभूते। करपुष्करावशेषनदनिमग्नसामजसूत्कारसमीरसेव्यमानसलिलदेवतादेहे करस्य शुण्डादण्डस्य पुष्करं शुण्डाग्रं अवशेषं उद्धरितं यथा भवत्येवं नदेषु निमग्ना ये सामजास्तेषां सूत्कारसमीरैरुच्छ्वासवातैः सेव्यमानाः सलिलदेवतानां जलदेवतानां देहा यस्मिन् स तथा तस्मिन्। पुनः कथंभूते। रोमन्थमन्थरमुखमाहेयीनिवहनिरुद्धबुध्नाश्वत्थशाखिनि रोमन्थश्चर्वितचर्वणं तस्मिन् मन्थराणि मन्दक्रियाणि मुखानि यासां माहेयीनां गवां निवहैः निरुद्धबुध्ना आवृत्तमूलाश्च अश्वत्थशाखिनः पिप्पलवृक्षा यस्मिन् स तथा तस्मिन्। पुनः कथंभूते। खरातपतपनताम्यन्मयमुक्तस्फीतफेनफुल्लोपहारितपल्वलपालिपीलुपर्यन्ते खरस्तीव्रतरो योऽसावातपस्तेनोपलक्षितो योऽसौ तपनः श्रीसूर्यस्तेन ताम्यन्तो दुःखीभवन्तो मया उष्ट्रास्तैर्मुक्ताः स्फीताः प्रचुरा ये फेना अब्धिकफाः सागरमलनामानः। उक्तं च—'डिण्डीरोऽब्धिकफः फेनः।' तेषु फुल्लानि पुष्पाणि तैरुपहारितः पूजितः पल्वलस्य तल्लजस्य पालिपीलूनां पालितरुविशेषाणां पर्यन्तः प्रान्तो यस्मिन् स तथा तस्मिन्। पुनः कथंभूते। नितान्तोत्तप्तायसचूर्णसमानमार्गरजसि नितान्तमुत्तप्तं यत् आयसचूर्णं तेन समानं मार्गरजो पथधूली[1] यत्र निदाघानेहसि स तथा तस्मिन्। केषु सत्सु। घर्मदिनेषु मध्याह्नसमयानतिक्रमेण वाहयामासेति संबन्धः। मार्तण्डमण्डलेषु प्रचण्डीभवत्सु तीव्रतरेषु संजायमानेषु सत्सु। कथंभूतेषु दिवसेषु। भवतः प्रतापेष्विव यथा भवतः प्रतापाः शत्रुषु प्रचण्डा भवन्ति। पुनः केषु सत्सु दिवसेषु। अतिदीर्घेषु सत्सु। कथंभूतेषु दिवसेषु। भवतो यशःप्रसरेष्विव यथा भवतः यशःप्रसरा अतिदीर्घा भवन्ति। पुनः कासु सतीषु। रात्रीषु लघीयसीषु ह्रस्वासु सतीषु। कास्विव। भवतः शत्रुसंततिष्विव यथा भवतः शत्रुसंततयो लघीयस्यो भवन्ति। पुनश्च केषु सत्सु।

---

१. 'वाटः पथश्च माथश्च' इति त्रिकाण्डशेषादकारान्तोऽपि पथशब्दः साधुः. 'पृथ्वीधूली' इति सटीकपुस्तकपाठः.

जलाशयेषु सपत्नपक्षेष्विव क्षीयमाणकोशदण्डेषु पुण्डरीकिणीखण्डेषु, कुरुलालिकुलावलिह्यमानभ्रूलतान्तहृदयंगमम् अनङ्गरसोत्तरङ्गापाङ्गावलोकसारणिसिच्यमानसहचरानोकहम् अरविन्दमकरन्दामोदसंवादिमन्दस्यन्दमानाश्वासानिलासरालम् अधरदलगर्भाविर्भूतसितप्रसूनोपहारितनिखिलदिग्देशम् उन्मदपिकपाकपेशलोल्लापकृतकर्णामृतवर्षम् अभिनवोद्भिद्यमानकुचकुड्मलोल्वणभुजलतामध्यम् उल्लसल्लावण्यजलवलिवाहिनीविहितखातवलयम् उदीर्णतरनाभिसंपादितजलकेलिवापिकम् अनन्यभूविशिखपुङ्खाग्रभाग-

---

जलाशयेषु शोषं अभिलषत्सु सत्सु । केष्विव जलाशयेषु । भवतो वैरिमनोरथेष्विव यथा भवतो वैरिणो मनोरथाः शोषमभिलषन्ति । पुनश्च केषु सत्सु । पुण्डरीकिणीखण्डेषु पद्मिनीदलेषु क्षीयमाणकोशदण्डेषु क्षयं गच्छत्सु कमलमध्येषु कमलनालेषु । कथंभूतेष्विव । सपत्नपक्षेष्विव शत्रुपरिवारेष्विव यथा सपत्नपक्षाः क्षीयमाणभाण्डागारसैन्याश्च भवन्ति । कथंभूतं मदनमदविनोदं नामोद्यानम् । प्रियतमाजनमिव । कथंभूतमुद्यानं प्रियतमाजनं च । कुरुलालिकुलावलिह्यमानभ्रूलतान्तहृदयंगमम् कुरुला अलकास्त एव अलिकुलानि तैरवलिह्यमाना ये भ्रूलतान्ता भ्रूप्रान्तास्तैर्हृदयंगमं मनोहरम् । उद्यानमपि..................................भवति । पुनः कथंभूतम् । अनङ्गरसोत्तरङ्गापाङ्गावलोकसारणिसिच्यमानसहचरानोकहम् अनङ्गरसेन कामरागेण उत्तरङ्गा उत्कण्ठा ये अपाङ्गाः कटाक्षावलोकनानि तेषामवलोकः स एव सारणिः कृत्रिमनदी तया सिच्यमाना............नोकहम् । उद्यानमपि...... ..........................भवति । पुनः कथंभूतम् । अरविन्दमकरन्दामोदसंवादिमन्दस्यन्दमानश्वासानिलासरालम् अरविन्दानां योऽसौ मकरन्दः पुष्परसस्तस्यामोदे संवादी सदृशपरः अनुकारक उपमोत्पादको मन्दः शनैः शनैः स्यन्दमानश्चलन् योऽसौ श्वासानिलः स्त्रीमुखमारुतस्तेन असरालः अपर्यन्तस्तम् । उद्यानमपि............... .............भवति । पुनः कथंभूतम् । अधरदलगर्भाविर्भूतसितप्रसूनोपहारितनिखिलदिग्देशम्.................................................... । उद्यानमपि..................................भवति । पुनः कथंभूतम् । उन्मदपिकपाकपेशलोल्लापकृतकर्णामृतवर्षम् उन्मदो योऽसौ पिकपाकः पुंस्कोकिलस्तद्वत् पेशला ये उल्लापा उद्वचनानि तैः कृतः कर्णानां अमृतवर्षो येन प्रियतमाजनेन स तथा तम् । उद्यानमपि कोकिलालापकर्णामृतवर्षं भवति । पुनः कथंभूतम् । अभिनवोद्भिद्यमानकुचकुड्मलोल्वणभुजलतामध्यम् अभिनवानि प्रत्यग्राणि उद्भिद्यमानानि उत्पाद्यमानानि यानि कुचकुड्मलानि स्तनमुकुलानि तैरुल्वण उद्रिक्तो भुजलतामध्यो बाहुवल्लीमध्यप्रदेशो यस्य प्रियतमाजनस्य स तथा तम् । उद्यानमपि कुड्मलसंयुक्तलतामध्यं भवति । पुनः कथंभूतम् । उल्लसल्लावण्यजलवलिवाहिनीविहितखातवलयम् उल्लसत् उत्क्रीडत् यत्

सुभगरोमराजिहरिताङ्कुरितकुल्योपकण्ठम् अगमाभ्यर्णप्रसाधितमकरध्वजाराधनजघनवेदिकम् उच्छलदनवरतरतिकुसुमपरिमलोपलिप्यमानवनदेवताभवनम् उपारूढोरुकदलीकाण्डकाननरमणीयम् अलक्तकरक्तपादपल्लवनखपुष्पनिष्पादितविहारधराशोभम् अप्रतिमनिजदेहच्छायापनीताखिलातपसंतापम् उड्डमरपुरुषरतश्रमसंजातस्वेदजलमञ्जरीजालजनितयन्त्रधारागृहं

---

लावण्यजलं तेनोपलक्षिता या वलिस्त्रिवलीभङ्गः सैव वाहिनी नदी तया विहितं रचितं खातवलयं खातकामण्डलं येन स तथा तम्। उद्यानमपि जलभृतखातवलयं भवति। पुनः कथंभूतम्। उदीर्णतरनाभिसंपादितजलकेलिवापिकम् उदीर्णतरा अतिगम्भीरा या नाभिरुदरमध्यप्रदेशस्तस्याः संपादिता उत्पादिता जलकेलिवापिका येन तथा तम्। उद्यानमपि जलकेलिवापिकासहितं भवति। पुनः कथंभूतम्। अनन्यभूविशिखपुङ्खाग्रभागसुभगरोमराजिहरिताङ्कुरितकुल्योपकण्ठम् अनन्यभूः कन्दर्पस्तस्य विशिखा बाणास्तेषां पुङ्खाः पत्राणि तेषामग्रभागास्तद्वत्सुभगा आनन्दकारिणी या रोमराजिः सा एव हरिता दूर्वा तयाङ्कुरितमभिनवोद्भेदसहितं कुल्योपकण्ठं स्मरमन्दिरसमीपं येन तथा तम्। उद्यानमपि हरिताङ्कुरैरुपलक्षितकुल्योपकण्ठं कृत्रिमनदीसमीपं भवति। पुनः कथंभूतम्। अगमाभ्यर्णप्रसाधितमकरध्वजाराधनजघनवेदिकम् अगमस्य अभ्यर्णे प्रसाधिता शृङ्गारिता मकरध्वजाराधनाय जघनवेदिका स्त्रीकट्यग्रभागो येन स तथा तम्। उद्यानमपि वृक्षसमीपकृतकामाराधनवेदिकं भवति। पुनः कथंभूतम्। उच्छलदनवरतरतिकुसुमपरिमलोपलिप्यमानवनदेवताभवनम् उच्छलन्ति अनवरतं यानि रतिकुसुमानि प्रेमपुष्पाणि तेषां परिमलेन उपलिप्यमानं संवास्यमानं वनदेवताभवनं येन स तथा तम्। उद्यानमपि पुष्पपरिमलवासितदेवताभवनं भवति। पुनः कथंभूतम्। उपारूढोरुकदलीकाण्डकाननरमणीयम् उपारूढं समीपे स्फुटीभूतं यत् ऊरव एव कदलीकाण्डकाननं मोचास्कन्धवनं तेन रमणीयः तम्। उद्यानमपि ऊरुकदलीकाण्डकाननमनोहरं भवति। पुनः कथंभूतम्। अलक्तकरक्तपादपल्लवनखपुष्पनिष्पादितविहारधराशोभम् अलक्तको लाक्षारसः। उक्तं च—'राक्षा लाक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः।' तेन रक्ता ये पादपल्लवाः तैरुपलक्षितानि यानि नखपुष्पाणि कामाङ्कुशकुसुमानि तैर्निष्पादिता विहारधरायाः क्रीडाभूमेः शोभा अभिख्या येन स तथा तम्। उद्यानमपि प्रवालपुष्पैर्निष्पादितविहारधराशोभं भवति। पुनः कथंभूतम्। अप्रतिमनिजदेहच्छायापनीताखिलातपसंतापम् अप्रतिमा अनुपमा या निजदेहच्छाया स्त्रीजनशरीरकान्तिस्तया अपनीतो दूरीकृतः अखिल आतपसंतापो घर्मपरितापो येन स तथा तम्। उद्यानमपि वृक्षच्छायानिवारितातपसंतापं भवति। पुनः कथंभूतम्। उड्डमरपुरुषरतश्रमसंजातस्वेदजलमञ्जरीजालजनितयन्त्रधारागृहम् उड्डमरं महाटोपं यत् पुरुषरतं अधःपुरुषरतं तस्य श्रमेण खेदेन संजातं यत् स्वेदजलमञ्जरीजालं तेन जनितं

प्रियतमाजनमिव, चरणकिसलयप्रहारक्रीडाभिः ऊरुरम्भास्तम्भपरिरम्भकेलिभिः मेखलादेशदलजशय्यारोहणविनोदैः तनूरुहराजितापिच्छमञ्जरीभिः नाभिमण्डलालवालपरिसर्पणैः वलिवल्लीवलयरतिभिः कुचकुसुमस्तबकविकल्पैः भुजलतालिङ्गनविधिभिः बाहुतरुमूलदर्शनकुतूहलैः बिम्बाधरफलास्वादनप्रीतिभि' अपाङ्गप्रसवखेलितैः भ्रूभङ्गपल्लवप्रसाधनलीलाभिः अलकवल्लरीपरिमलमनोरथैः कपोलपुलकप्रसाधनप्रसूनावचितिभिः यौवनारण्यवनदेवताराधनवरप्रसादैरिवान्यैश्च तैस्तैर्विलासैः मदनमदविनोदमुद्यानमतिचिरम-

---

यन्त्रधारागृहं उड्डमरकृत्रिममेघमन्दिरं येन प्रियतमाजनेन स तथोक्तस्तम् । उद्यानमपि यन्त्रधारागृहसंयुक्तं भवति । कैः कैः कृत्वा उद्यानमनुभूय मध्याह्नसमयानतिवाहयामास । चरणकिसलयप्रहारक्रीडाभिः चरणान्येव किसलयानि तेषां प्रहारक्रीडाभिः । पुनश्च काभिः । ऊरुरम्भास्तम्भपरिरम्भकेलिभिः································ स्तम्भौ तयोः परिरम्भकेलिभिरालिङ्गनक्रीडाभिः । पुनश्च कैः कृत्वा । मेखलादेशदलजशय्यारोहणविनोदैः मेखलादेशः स्मरमन्दिरप्रदेशः स एव दलजशय्या पल्लवशयनीयं तस्या आरोहणविनोदैः । पुनः काभिः कृत्वा । तनूरुहराजितापिच्छमञ्जरीभिः तनूरुहराजयस्ता एव तापिच्छमञ्जर्यः कृष्णकाहलीकतरुवल्ल्यस्ताभिः । पुनः कैः कृत्वा । नाभिमण्डलालवालपरिसर्पणैः नाभिमण्डलमेव आलवालं तस्य परिसर्पणैः आरुह्य समुल्लसनैः । पुनश्च काभिः । वलिवल्लीवलयरतिभिः वलय उदररेखास्ता एव वल्ल्यः प्रतानिन्यस्तासां वलयरतिभिः मण्डलक्रीडाभिः । पुनश्च कैः कृत्वा । कुचकुसुमस्तबकविकल्पैः कुचा एव कुसुमस्तबकाः पुष्पसंघाताः तेषां विकल्पैर्भेदैः । पुनः कैः कृत्वा । भुजलतालिङ्गनविधिभिः भुजा एव लतास्तासामालिङ्गनविधिभिः । पुनः कैः कृत्वा । बाहुतरुमूलदर्शनकुतूहलैः बाहव एव तरवः तेषां मूलदर्शनकुतूहलैः । पुनश्च काभिः कृत्वा । बिम्बाधरफलास्वादनप्रीतिभिः बिम्बाधरा एव फलानि तेषामास्वादनप्रीतिभिः । पुनश्च कैः कृत्वा । अपाङ्गप्रसवखेलितैः अपाङ्गा एव प्रसवाः पुष्पाणि तेषां खेलितैः । पुनश्च काभिः । भ्रूभङ्गपल्लवप्रसाधनलीलाभिः भ्रूभङ्गा भ्रुकुटयस्त एव पल्लवास्तेषां प्रसाधनलीलाभिः परिकर्मक्रीडाभिः । पुनश्च कैः कृत्वा । अलकवल्लरीपरिमलमनोरथैः अलकानां वल्ल्यस्तासां परिमलमनोरथैः परिमर्दनदोहदैः । पुनश्च काभिः । कपोलपुलकप्रसाधनप्रसूनावचितिभिः कपोलेषु यानि पुलकप्रसाधनानि पत्रनखप्रदानानि त एव प्रसूनानि तेषां अवचितिभिः चुम्बनैः । न केवलमेतैः कृत्वा उद्यानमनुभूय मध्याह्नसमयानतिवाहयामास । अन्यैश्चापरैस्तैस्तैः कामुकजनप्रसिद्धैर्विलासैः क्रीडनैः । कथंभूतैरन्यैर्विलासैः । यौवनारण्यवनदेवताराधनवरप्रसादैः यौवनमेवारण्यं वनं वेडवनं तस्य

नुभूय, पुनर्यत्समन्तादुत्तरलतरसरत्सारणीसलिलसेकसुकुमारोशीरसारकटगर्भाविर्भवद्दूर्वादलश्यामलितदिग्वलयं नवाम्रनागवल्लीपल्लवोल्लासभराभुग्नपूगनगाभोगभर्त्सितभानुप्रभाप्रसरं हरितमणिप्रकाशपलाशपेशलप्रतानचितमोचमेचकरुचिरचिताम्बरापगापरकालिन्दीसंगमं बालबकुलकुरबकतिलकचम्पकाशोकसहकारकिसलयकुलखेलद्वाचालशुकसारिकं विकचविचकिलाति-

---

संबन्धिन्यो या देवता वनितावनयस्तासामाराधनस्य वरप्रदानैरिव । कथंभूतोऽहम् । तत्र यन्त्रधारागृहे प्रियतमाभिः सह संक्रीडमानः अनुपरिचिक्रीड । 'समोऽकूजने' इति सूत्रेण रुचादित्वात्क्रीडधातोरात्मनेपदम् । कूजने तु आत्मनेपदं न भवति । यथा संक्रीडन्ति शकटानि शब्दं कुर्वन्तीत्यर्थः । तत्र यन्त्रधारागृहे प्रियतमाभिः सह संक्रीडमानो रममाणः घर्मदिवसेषु मध्याह्नसमयानतिवाहयामासेति संबन्धः । तत्र कुत्र पुनरिति उद्यानानुभवनादनन्तरम् । यत् यन्त्रधारागृहं कथंभूतम् । समन्तात् सर्वत्र उत्तरलतरसरत्सारणीसलिलसेकसुकुमारोशीरसारकटगर्भाविर्भवद्दूर्वादलश्यामलितदिग्वलयम् उत्कर्षेण तरलतरा वेगवत्तरा सरन्ती गच्छन्ती या सारणी जलनी(?)कस्तस्याः सलिलं तस्य सेकेन सेचनेन सुकुमारोऽतिकोमलो योऽसौ उशीरसारकटः वीरणमूलः अतिमनोहरः कटो भित्तिस्तस्य गर्भे आविर्भवन्ति यानि दूर्वादलानि शतपर्वापल्लवानि तैः श्यामलितं दिग्वलयं यत्र यन्त्रधारागृहे तत्तथोक्तम् । यत् यन्त्रधारागृहं पुनः कथंभूतम् । नवाम्रनागवल्लीपल्लवोल्लासभराभुग्नपूगनगाभोगभर्त्सितभानुप्रभाप्रसरम् नवाम्राः प्रत्यग्रा या नागवल्ल्यस्तासां पल्लवास्तेषां उल्लासः प्रादुर्भावस्तस्य भरेण भारेण अभुग्ना मोटिता वक्रीकृता ये पूगनगाः क्रमुकवृक्षास्तेषामाभोगेन आटोपेन परिपूर्णतया वा भर्त्सितो निराकृतो भानुप्रभाप्रकारो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । हरितमणिप्रकाशपलाशपेशलप्रतानचितमोचमेचकरुचिरचिताम्बरापगापरकालिन्दीसंगमम् हरितमणिरश्मगर्भरत्नम् । उक्तं च—'गारुडात्मजं मरकतमश्मगर्भं हरिन्मणिः । शोणरत्नं लोहितकं पद्मरागोऽथ मौक्तिकम् ॥' मुक्ताहरितमणिर्मरकतमणिरित्यर्थस्तस्य प्रकाश उद्योतस्तत्सदृशानि यानि पलाशानि पत्राणि कदलीदलानि तैः पेशलोऽतिमनोहरो योऽसौ प्रतानो विस्तारस्तेन चिता जटिता या मोचाः कदल्यः । 'आ······कारौ स्त्रीकृतौ ह्रस्वौ क्वचित्' इति वचनात् मोचाशब्दस्य ह्रस्वत्वम् । तासां मेचकरुचयो नीलदीप्तयस्ताभी रचितः अम्बरापगायाः अपरकालिन्दीसंगमो द्वितीययमुनामेलापको तत्र तत्तथोक्तम् । पुनः कथंभूतम् । बालबकुलकुरबकतिलकचम्पकाशोकसहकारकिसलयकुलखेलद्वाचालशुकसारिकम् अभिनवाश्च ते बकुलाः केशरतरवः, कुरबकाश्च रक्ताम्लानवृक्षाः । उक्तं च—'अम्लानस्तु महासहः । तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः ॥' तिलकाश्च क्षुरकवृक्षा । उक्तं च—'तिलकः क्षुरकः श्रीमान् पुरुषश्छन्नपुष्पकः ।' तिलपुष्प इत्यर्थः । चम्पकाश्च हेमपुष्पकाः, अशोकाश्च

मुक्तकमल्लिकारामकुसुमस्तबकतारकितलतामण्डपं निरन्तरनिष्पन्ददुर्दिनजलकलशतलवालुकालवालविरूढयवप्ररोहपाण्डुरितभित्तिभागं स्फुटकुड्मलपाटलीप्रसूनोपहारसौरभास्वादलुब्धमधुकरारब्धवल्लकीवाद्यं मदोत्कलकोककुक्कुभकुररबककलहंसाद्यनेकपयःपतङ्गपक्षचापलोच्छलत्सरोजरजःपुञ्जपिञ्जरजलकेलिदीर्घिकान्तरालपुलिनप्रसाधितप्रासादवेदिमध्यसंबद्धसलिलतूलिकं शयनाभ्यर्णावतीर्णसुवर्णमणिरजतभाजनविन्यस्यमानमलयजागुरुमृग-

---

वञ्जुलवृक्षाः, सहकाराश्च अतिसुगन्धाम्रवृक्षाः, तेषां किसलयानि तेषां कुलानि तेषु खेलन्तो वाचाला बहुवाचः शुकाश्च सारिकाश्च यत्र तत्तथोक्तम् । पुनः कथंभूतम् । विकचविचकिलातिमुक्तकमल्लिकारामकुसुमस्तबकतारकितलतामण्डपम् विकचानि विकसितानि यानि विचकिलानि मल्लिकापुष्पाणि मोगरककुसुमानि । उक्तं च—'मल्लिका । द्विपदासौ विचकिलसेवाणौ यवनोद्भवा ॥' अतिमुक्तकानि सुरपर्णीपुष्पाणि । उक्तं च—'अतिमुक्तः पुण्ड्रकः स्यात् वासन्ती माधवी लता । मण्डको निघुदुश्चैव...वसन्तधराश्रयः । कामुकः भ्रमरोत्सवः ।' मल्लिका च अतीवपुष्पा तासामारामो वनं तस्य कुसुमस्तबकास्तैस्तारकिता लतामण्डपा वल्लीगृहाणि यत्र तत्तथोक्तम् । पुनः कथंभूतम् । निरन्तरनिष्पन्ददुर्दिनजलकलशतलवालुकालवालविरूढयवप्ररोहपाण्डुरितभित्तिभागम् निरन्तरनिष्पन्देन निर्विच्छिन्नजलस्रावेण दुर्दिना जलबहुला ये जलकलशास्तेषां तलेषु यद्वालुकालवालानि धूलीस्थानकानि तेषु विरूढाः प्रादुर्भवन्तो ये यवप्ररोहाः शि(सि)तशूकाङ्कुरास्तैः पाण्डुरिता भित्तीनां भागाः प्रदेशा यस्मिन् तत्तथोक्तम् । पुनः कथंभूतम् । स्फुटकुड्मलपाटलीप्रसूनोपहारसौरभास्वादलुब्धमधुकरारब्धवल्लकीवाद्यम् स्फुटन्ति विकसन्ति यानि कुड्मलपाटलीनां वसन्तदूतीनां प्रसूनानि तेषामुपहारः प्रकरस्तस्य सौरभं तस्यास्वादे आघ्राणे लुब्धा लोभं गता ये मधुकरास्तैरारब्धं वल्लकीवाद्यं यत्र तत्तथोक्तम् । पुनः कथंभूतम् । मदोत्कलकोककुक्कुभकुररबककलहंसाद्यनेकपयःपतङ्गपक्षचापलोच्छलत्सरोजरजःपुञ्जपिञ्जरजलकेलिदीर्घिकान्तरालपुलिनप्रसाधितप्रासादवेदिमध्यसंबद्धसलिलतूलिकम् मदोत्कला मदेनोत्कटाः कोकाश्च कुक्कुभाश्च । तिसिरा लावा इति यावत् । कुररा‌श्च बकाश्च कलहंसाश्च कादम्बास्ते आदिर्येषां हारीतकारण्डवचकोरटिट्टिभकपिञ्जलादीनां ते च ते अनेके बहवः पयःपतङ्गा जलपक्षिणस्तेषां पक्षाणां चापलेन चपलत्वेन उच्छलन्ति यानि सरोजरजांसि तेषां पुञ्जै राशिभिः पिञ्जरा गोरोचनवर्णा या जलकेलिदीर्घिका जलक्रीडावापिका तासामन्तरालेषु यानि पुलिनानि जलोत्थितद्वीपास्तेषु प्रसाधिताः कृता ये प्रासादास्तेषां मध्येषु या वेदयो वेदिकास्तासां मध्येषु अन्तर्भागेषु संबद्धाः सम्यग्रचिताः सलिलतूलिकाः पानीयशय्या यत्र तत्तथोक्तम् । उक्तं च—'आलेख्यलेखिनीतूलशय्या प्रोक्ता च तूलिका ।' इति । पुनः कथंभूतम् । शयनाभ्यर्णावतीर्णसुवर्णमणिरजतभाजनविन्यस्यमानमलयजागुरुमृगनाभिकर्पूरपरिमलोद्दा-

नाभिकर्पूरपरिमलोद्वाहिवारिपूरं पर्यन्तयन्त्रजलधरवर्षाभिषिच्यमानस्थलकमलिनीकेदारं विविधव्यालवदनविनिर्गलज्जलधाराध्वनितलयलास्यमानभवनाङ्गणबर्हिणं चन्द्रकान्तमयमृणालबिलस्रवत्स्रोतःसंतर्प्यमाणविनोदवारलं करटिकरविकीर्यमाणसीकरासारसूत्रिताङ्गनालकमुक्ताफलाभरणं मकरमुखमुक्तनिर्झरनीहारोल्लास्यमानकामिनीकुचकुम्भचन्दनस्थासकं विलासवल्लरीवनवानराननोद्गीर्णपानीयापनीयमानमानिनीकपोलतलतिलकपत्त्रं जलदेव-

---

हिवारिपूरम्। शयनस्य शय्याया अभ्यर्णानि अवतीर्णानि मण्डितानि सुवर्णभाजनानि मणिभाजनानि रजतभाजनानि तेषु विन्यस्यमाना ध्रियमाणा ये मलयजानामगुरूणां मृगनाभीनां कर्पूराणां च परिमला विमर्दोत्थगन्धाः तान् वहन्तीत्येवंशीला वारिपूराः यत्र तत्तथोक्तम्। पुनः कथंभूतम्। पर्यन्तयन्त्रजलधरवर्षाभिषिच्यमानस्थलकमलिनीकेदारम् पर्यन्तेषु प्रान्तेषु यन्त्रजलधरा यन्त्रकृतकमेघास्तेषां वर्षेण अभिषिच्यमानाः स्थलकमलिनीकेदाराः स्थलकमलिनीनां केदारा जलभृतक्षेत्राणि यत्र तत्तथोक्तम्। पुनः कथंभूतम्। विविधव्यालवदनविनिर्गलज्जलधाराध्वनितलयलास्यमानभवनाङ्गणबर्हिणम् विविधा नानाप्रकारा ये व्यालाः कृत्रिमगजसर्पसिंहव्याघ्रचित्रकादयस्तेषां वदनेभ्यो विनिर्गलन्त्यो या जलधारा अपूछटाः तासां ध्वनिः तस्य लयेन साम्यतया लास्यमाना भवनाङ्गणस्य बर्हिणः मयूरा यत्र तत्तथोक्तम्। पुनः कथंभूतम्। चन्द्रकान्तमयमृणालबिलस्रवत्स्रोतःसंतर्प्यमाणविनोदवारलम् चन्द्रकान्ताश्चन्द्रकान्तमणयस्तैर्निर्वृताश्चन्द्रकान्तमया ये मृणालाः पद्मनालानि तेषां बिलेभ्यश्छिद्रेभ्यः स्रवन्ति क्षरन्ति यानि स्रोतांसि स्रोतोऽम्बुसरणानि तैः संतर्प्यमाणाः प्रीयमाणाः विनोदवारलाः क्रीडाहंसवनिता यत्र तत्तथोक्तम्। पुनः कथंभूतम्। करटिकरविकीर्यमाणसीकरासारसूत्रिताङ्गनालकमुक्ताफलाभरणम् करटिनः कृत्रिमगजास्तेषां करैः शुण्डादण्डैः विकीर्यमाणा विक्षिप्यमाना ये सीकरास्तेषामासारेण वेगवद्वर्षेण सूत्रितानि रचितानि अङ्गनानां अलकेषु चूर्णकुन्तलेषु मुक्ताफलानां आभरणानि यत्र यन्त्रधारागृहे तत्तथोक्तम्। पुनः कथंभूतम्। मकरमुखमुक्तनिर्झरनीहारोल्लास्यमानकामिनीकुचकुम्भचन्दनस्थासकम्..............................................................................................................................................................................................................................................................................................।

पुनः कथंभूतम्। विलासवल्लरीवनवानराननोद्गीर्णपानीयापनीयमानमानिनीकपोलतलतिलकपत्त्रम् विलासवल्लरीवनेषु कृत्रिमक्रीडावल्लीवनेषु ये वानराः कृत्रिममर्कटास्तेषामाननैरुद्गीर्णानि उद्वान्तानि यानि पानीयानि तैरपनीयमानानि प्रक्षाल्यमानानि मानिनीनां कपोलतलानां तिलकपत्त्राणि पत्त्रवल्ल्यो यत्र यन्त्रधारागृहे तत्तथोक्तम्। पुनः कथंभूतम्।

तातुमुलजलकेलिकलहावलोकनोन्मदनारदोत्तालताण्डवाडम्बरितशिखण्डिमण्डलीनिष्ठ्यूतनिबिडनीरप्रवाहविडम्ब्यमानविलासिनीजघनं कृतकनाकानोकहस्कन्धासीनसुरसुन्दरीहस्तोदस्तोदकापाद्यमानवल्लभावतंसकिसलयाश्वासं पवनकन्यकोड्डमरचामरानिलविनोद्यमानसुरतश्रान्तसीमन्तिनीमानसम् इतस्ततः पयोधरपुरंध्रिकास्तनकलशविधीयमानमज्जनावसरं शैशिर्यनिर्जितनीहारमहीधरम्

अपि च ।

हस्ते स्पृष्टा नखान्तैः कुचकलशतटे चूचुकप्रक्रमेण
वक्त्रे नेत्रान्तराभ्यां शिरसि कुवलयेनावतंसार्पितेन ।

जलदेवतातुमुलजलकेलिकलहावलोकनोन्मदनारदोत्तालताण्डवाडम्बरितशिखण्डिमण्डलीनिष्ठ्यूतनिबिडनीरप्रवाहविडम्ब्यमानविलासिनीजघनम् जलदेवतानां तुमुलो रौद्रो योऽसौ जलकेलिकलहस्तस्यावलोकनेन उन्मदः सहर्षः योऽसौ नारदस्तस्योत्तालमुत्कं यत्ताण्डवं नृत्यं तेन आडम्बरिता अवलोकनमागता या शिखण्डिमण्डली मरीच्यादिसप्तर्षिसमूहस्तया निष्ठ्यूत उद्गीर्णः योऽसौ निबिडनीरप्रवाहः पाटलजलप्रवाहः तेन विडम्ब्यमानानि खलीक्रियमाणानि विलासिनीनां जघनानि कट्यग्रभागा यत्र तत्तथोक्तम् । पुनः कथंभूतम् । कृतकनाकानोकहस्कन्धासीनसुरसुन्दरीहस्तोदस्तोदकापाद्यमानवल्लभावतंसकिसलयाश्वासम् कृतकाः ये नाकानोकहाः कल्पवृक्षास्तेषां स्कन्धेषु शाखामूलेषु आसीना याः सुरसुन्दर्यस्तासां हस्तैरुदस्तानि उत्क्षिप्तानि यान्युदकानि तैरापाद्यमान उत्पाद्यमानो वल्लभानां प्रियतमस्त्रीणामवतंसानां कर्णपूराणां किसलयानां आश्वासं जीवनं यत्र तत्तथोक्तम् । पुनः कथंभूतम् । पवनकन्यकोड्डमरचामरानिलविनोद्यमानसुरतश्रान्तसीमन्तिनीमानसम् पवनकन्यकाः कृत्रिमचमरधारिण्यः पुत्तलिकास्तासामुड्डमर उत्कटो योऽसौ चामरानिलः तेन विनोद्यमानानि आश्चर्यपूर्वकमाह्लाद्यमानानि सुरतश्रान्तानां संभोगखेदवतीनां सीमन्तिनीनां मानसानि यत्र तत्तथोक्तम् । पुनः कथंभूतम् । इतस्ततः पयोधरपुरंध्रिकास्तनकलशविधीयमानमज्जनावसरम् इतस्ततो यत्र तत्र पयोधरपुरंध्रिकाणां कृत्रिममेघपुत्तलिकानां स्तनकलशैर्विधीयमानः क्रियमाणो मज्जनावसरो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । शैशिर्यनिर्जितनीहारमहीधरम् शैशिर्येण शीतत्वेन निर्जितो नीहारमहीधरो हिमाचलो येन यन्त्रधारागृहेण तत्तथोक्तम् ॥

अपि च विशेषव्यावर्णनं करोति—हस्ते स्पृष्टेत्यादि । तत्र कुत्र । यत्र यन्त्रधारागृहे यन्त्रस्त्री कृत्रिमस्त्री चन्दनस्यन्दधाराः गन्धसाराश्च्योतच्छटाः शिशिराः विकिरति विक्षिपति । चित्रमाश्चर्यमेतत् । हस्ते स्पृष्टा सती नखान्तैः कामाङ्कुशप्रान्तैः चन्दनस्यन्दधाराः

श्रोण्यां काञ्चीगुणाग्रैस्त्रिवलिषु च पुनर्नाभिरन्ध्रेण धीरा
यन्त्रस्त्री यत्र चित्रं विकिरति शिशिराश्चन्दनस्यन्दधाराः ॥ ३७५ ॥

तत्र यन्त्रधारागृहे, शिरीषकुसुमदामसंदानितकुन्तलकलापाभिः विचकिलमुकुलपरिकल्पितहारयष्टिभिः पाटलीप्रसवसुरभितधम्मिल्लमध्याभिः कर्णपुरमरुबकोद्भेदसुन्दरगण्डमण्डलाभिः मृणालवलयालंकृतकलाचीदेशाभिः अमन्दचन्दनस्यन्ददुर्दिनस्तनतटाभिः निबिडजलक्रीडामाञ्जिष्ठदृष्टिभिः वल्लभ-

---

विकिरति, कुचकलशतटे स्तनकलशमूले स्पृष्टा सती चूचुकप्रक्रमेण कुचाग्रावसरेण चन्दनस्यन्दधाराः विकिरति, वक्त्रे स्पृष्टा सती नेत्रान्तराभ्यां लोचनमध्याभ्यां चन्दनस्यन्दधाराः विकिरति, शिरसि मस्तके स्पृष्टा सती अवतंसार्पितेन कर्णपूरेण कुवलयेन चन्दनस्यन्दधाराः विकिरति, श्रोण्यां कट्यां स्पृष्टा सती काञ्चीगुणाग्रैः कटिमेखलादोरकप्रान्तैः चन्दनस्यन्दधाराः विकिरति, त्रिवलिषु उदररेखासु स्पृष्टा सती पुनश्च पुनरपि नाभिरन्ध्रेण तुन्दिकाछिद्रेण चन्दनस्यन्दधाराः विकिरति। यन्त्रस्त्री कथंभूता। धीरा अनाविला निर्मला। दीपकसमुच्चयालंकारः ॥

किं कुर्वाणोऽहम्। प्रियतमाभिः सह संक्रीडमानः। कथंभूताभिः प्रियतमाभिः। शिरीषकुसुमदामसंदामितकुन्तलकलापाभिः शिरीषकुसुमदामभिः शिरीषपुष्पमालाभिः संदानिताः ग्रथिताः कुन्तलकलापा केशहस्ताः याभिस्तास्तथोक्तास्ताभिः। उक्तं च—'शिरीषस्तु कपीतनः भण्डिलो मृदुपुष्पश्च भण्डीरः शङ्खिनीफलः शुकतरुश्यामकक्लकश्रुप्रियः भडीवेति (?) यावत्। पुनः कथंभूताभिः। विचकिलमुकुलपरिकल्पितहारयष्टिभिः विचकिलो मोगरकस्तस्य मुकुलैः कलिकाभिः परिकल्पिता रचिता हारयष्टयो मुक्ताफलमाला याभिस्तास्तथोक्तास्ताभिः। पुनः कथंभूताभिः। पाटलीप्रसवसुरभितधम्मिल्लमध्याभिः पाटली वसन्तदूती तस्याः प्रसवैः सुरभितः धम्मिल्लः संयताः कचास्तस्य मध्यो गर्भो याभिस्तास्तथा ताभिः। पुनः कथंभूताभिः। कर्णपूरमरुबकोद्भेदसुन्दरगण्डमण्डलाभिः कर्णपूरस्य संबन्धी योऽसौ मरुबकः पत्रपुष्पविशेषः तस्योद्भेदैर्मञ्जरीभिः सुन्दराणि गण्डमण्डलानि यासां ताः तथा ताभिः। पुनः कथंभूताभिः। मृणालवलयालंकृतकलाचीदेशाभिः मृणालानां वलयैः कटकैः अलंकृताः कलाचीदेशाः प्रकोष्ठभागा याभिस्तास्तथा ताभिः। पुनः कथंभूताभिः। अमन्दचन्दनस्यन्ददुर्दिनस्तनतटाभिः अमन्दः प्रचुरतरो योऽसौ चन्दनस्यन्दः गन्धसारद्रवस्तेन दुर्दिनानि विलिप्तानि स्तनतटानि यासां तास्तथा ताभिः। पुनः कथंभूताभिः। निबिडजलक्रीडामाञ्जिष्ठदृष्टिभिः निबिडा गाढा या जलक्रीडा तया माञ्जिष्ठाः पाटला दृष्टयो यासां तास्तथा ताभिः। पुनः कथंभूताभिः। वल्लभलोकहस्तयन्त्रोदस्तजलजडांशुकव्यक्तनिम्नोन्नतप्रदेशाभिः वल्लभलोकस्य प्रियजनस्य हस्तस्य संबन्धि यत् यन्त्रं जलो-

लोकहस्तयन्त्रोदस्तजलजडांशुकव्यक्तनिम्नोन्नतप्रदेशाभिः अमर्यादालापविलासहासोल्लासाभिरामाभिः प्रियतमाभिः सह संक्रीडमानः

विवशबिसिनीकन्दच्छेदैर्मृणालविभूषणै-
र्मलयजरसस्यन्दार्द्रार्द्रैरशोकदलोच्चयैः ।
युवतिहृदयैर्हारोत्तारस्तनैश्च विलासिनां
समधिकरतिर्जातः कामं निदाघसमागमः ॥ ३७६ ॥

भास्वद्भास्वति दाहवाहिमरुति ज्वालोल्बणाशाकृति
शुष्यद्भूभृति दीप्यमानवियति प्रेङ्खन्मुखाम्भोद्युति ।

---

त्क्षेपयन्त्रं तेन उदस्तमुत्क्षिप्तं यज्जलं तेन जडानि आर्द्राणि यान्यंशुकानि तेषु व्यक्ताः स्फुटीभूता निम्नोन्नतप्रदेशा जघनस्तनादिस्थानानि यासां तास्तथोक्तास्ताभिः । पुनः कथंभूताभिः । अमर्यादालापविलासहासोल्लासाभिरामाभिः अमर्यादाः प्रचुरा ये आलापाः परस्परभाषणानि तथा अमर्यादा ये विलासा लोचनोत्क्षेपास्तथा अमर्यादा ये हासा चकारवचनानि मुखविकासा वा तेषामुल्लासैः प्रादुर्भावैरभिरामा अतिमनोहरा याः प्रियतमास्ताभिः ॥

कथंभूतः सन्नहं घर्मदिनेषु मध्याह्नसमयानतिवाहयामास । इत्यमुना प्रकारेण वैतालिकालापोल्लास्यमानमानसः वैतालिकानां बोधकराणां आलापैः उल्लास्यमानं आह्लाद्यमानं मानसं यस्य स तथोक्तः । इतीति किम्—विवश बिसिनीत्यादि । निदाघसमागमो ग्रीष्मकालागमो विलासिनां कामिनां कामं यथेष्टं समधिकरतिर्जातः सम्यक्प्रकारेण अधिकरतिदायको बभूव । कैः कृत्वा निदाघसमागमः समधिकरतिर्जातः । विवशबिसिनीकन्दच्छेदैः विवशा अवशात्मानो ये बिसिनीनां कन्दच्छेदा मूलखण्डानि तैः । उक्तं च—'विवशः स्यादवश्यात्मानिष्टपुष्टविनिश्चयः[1] ।' पुनः कैः कृत्वा । मृणालविभूषणैः मृणालानामुत्पलानां विभूषणैः । पुनश्च कैः कृत्वा । अशोकदलोच्चयैः अशोकपल्लवशय्याभिः । कथंभूतैरशोकदलोच्चयैः । मलयजरसस्यन्दार्द्रार्द्रैः मलयजरसस्यन्दमानद्रवस्य स्यन्दः स्रवस्तदुपलक्षिता या आर्द्रा जलक्लिन्नवस्त्रं तया आर्द्राः क्लिन्ना ये अशोकदलोच्चयास्तैः । पुनश्च कैः कृत्वा । युवतिहृदयैः वनितानां हृदयालिङ्गनैः । कथंभूतैः युवतिहृदयैः । हारोत्तारस्तनैः हारैः उत्तराः उत्कृष्टोज्ज्वलाः स्तना येषु तानि तथा तैः । समुच्चयदीपकालंकारः ॥

भास्वदित्यादि । अस्मिन् ग्रीष्मे एतस्मिन् घर्मकाले देशान्तरं गच्छन् पुमान् मृतिं पञ्चत्वं गच्छति । कथंभूते ग्रीष्मे । भास्वद्भास्वति तेजस्वी भास्वान् श्रीसूर्यो यस्मिन् ग्रीष्मे स भास्वद्भास्वान् तस्मिन् । पुनः कथंभूते । दाहवाहिमरुति दाहवाही

---

१ 'मतिश्च यः' इति हैमः.

संशुष्यत्सरिति क्वथत्तनुमति स्वान्तोद्भवोर्जाहृति
ग्रीष्मेऽस्मिन्महति क्षयामयचिति प्राञ्चन्मृतिं गच्छति ॥ ३७७ ॥

कृतकिसलयशय्याः प्रान्तचूतप्रतानाः
स्तबकरचितकुड्यास्तत्प्रसूनोपहाराः ।
जलसरणिसमीरासारसाराः प्रियाणां
कुचकलशविलासैर्निर्विशोद्यानभूमीः ॥ ३७८ ॥

विकचविचकिलालीकीर्णलोलालकानां
कुरवकमुकुलस्रक्तारहारस्तनीनाम् ।

---

संतापकारी मरुत् यत्र स तथा तस्मिन् । पुनः कथंभूते । ज्वालोल्वणाशाकृति ज्वालावत् अर्चिवत् उल्वणास्तीव्रा आशा दिशः करोतीति ज्वालोल्वणाशाकृत् तस्मिन् । पुनः कथंभूते । शुष्यद्भूभृति शुष्यन्तो दह्यमानाः भूभृतः पर्वता यस्मिन् स तस्मिन् । पुनः कथंभूते । दीप्यमानवियति दीप्यमानं जाज्वल्यमानं वियद्विष्णुपदं यस्मिन् स तस्मिन् । पुनः कथंभूते । प्रेङ्खन्मुखाम्भोद्युति प्रेङ्खन्ती चलन्ती मुखाम्भसः मुखप्रस्वेदजलस्य द्युतिः दीप्तिर्यत्र स तथा तस्मिन् । पुनः कथंभूते । संशुष्यत्सरिति सम्यक्प्रकारेण शुष्यन्त्यः सरितो यत्र तस्मिन् । पुनः कथंभूते । क्वथत्तनुमति क्वथन्तः क्वाथीभवन्तस्तनुमन्तः प्राणिनो यस्मिन् स तस्मिन् । पुनः कथंभूते । स्वान्तोद्भवोर्जाहृति स्वान्तोद्भवस्य कन्दर्पस्य ऊर्जा बलं हरतीति स तस्मिन् । ग्रीष्मे कामबलं न भवतीत्यर्थः । पुनः कथंभूते । महति गुरुतरे । ज्येष्ठाषाढीये इत्यर्थः । पुनः कथंभूते । क्षयामयचिति क्षयामयं यक्ष्माणं राजरोगं चिनोति पुष्णातीति स तस्मिन् । जात्यलंकारः ॥

कृतकिसलयेत्यादि । हे राजन्, त्वं उद्यानभूमीर्वनभूमीः निर्विश अनुभव । कैः कृत्वा । प्रियाणां वल्लभस्त्रीणां कुचकलशविलासैः स्तनघटालिङ्गनैः । कथंभूता उद्यानभूमीः । कृतकिसलयशय्याः कृताः किसलयैः तरुपल्लवैः शय्याः शयनीयानि यासु तास्तथोक्तास्ताः । पुनः कथंभूताः । प्रान्तचूतप्रतानाः प्रान्तेषु चूतानां प्रतानाः समूहा यासु तथा ताः । पुनः कथंभूताः । स्तबकरचितकुड्याः स्तबकाः पुष्पगुच्छास्तै रचिता निर्मिताः कुड्या भित्तयो यासु तास्तथा ताः । पुनः कथंभूताः । तत्प्रसूनोपहाराः तेषामुद्यानानां प्रसूनानि तेषामुपहाराः प्रकरा यासु तास्तथा ताः । पुनः कथंभूताः । जलसरणिसमीरासारसाराः जलसरणयः कृत्रिमजलनद्यस्तासां समीरासारैर्वायुसमूहैः साराः मनोहरास्तास्तथा ताः । समुच्चयालंकारः ॥

विकचेत्यादि । हे नृप, योषितां किमपि अपूर्वं कषायं कषाययुक्तं वक्त्रं चुम्बास्वादय । कथंभूतानां योषिताम् । विकचविचकिलालीकीर्णलोलालकानाम् विकचानि विचकि-

दरजरठदलाग्रैः पल्लवैश्चूतजातै-
नृप किमपि कषायं योषितां चुम्ब वक्त्रम् ॥ ३७९ ॥

अलककिसलयानां भ्रूलताश्लाघिनीनां
नयनमधुलिहानां चारुगण्डस्थलीनाम् ।
कुचकुसुमचयानां स्त्रीवनश्रेणिकाना-
मवनिषु कुरु केलीः किं नृपान्यैर्वनान्तैः ॥ ३८० ॥

लसदलकतरङ्गाः कान्तनेत्रारविन्दाः
प्रचलभुजलतान्ताः पीनवक्षोजकोकाः ।
अतनुजघनकूलाश्चारुलावण्यवार-
स्तव नृप जलकेलिं कुर्वतः स्त्रीसरस्यः ॥ ३८१ ॥

---

स्तानि मोगरकपुष्पाणि तेषां आल्य आवल्यस्ताभिः कीर्णा व्याप्ता लोला अलका यासां तास्तथोक्तास्तासाम् । पुनः कथंभूतानाम् । कुरवकमुकुलस्रक्तारहारस्तनीनाम् कुरवकाः शोणाम्लानवृक्षास्तेषां मुकुलानां स्रजो मालास्तथा तारा उज्ज्वला हारास्तैरुपलक्षिताः स्तनाः यासां तास्तथा तासाम् । कैः कृत्वा योषितां वक्त्रं कषायं जातमिति चेत् । चूतजातैः पल्लवैः आम्रोद्भवैः प्रवालैः । कथंभूतैः पल्लवैः । दरजरठदलाग्रैः दरमीषज्जरठानि कठिनानि दलानां अग्राणि येषां ते तथा तैः । समुच्चयालंकारः ॥

**अलककिसलयानामित्यादि** । हे नृप, त्वं स्त्रीवनश्रेणिकानामवनिषु केलिं कुरु । अन्यैर्वनान्तैरपरैर्वनमध्यैः किम् । न किमपि । कथंभूतानां स्त्रीवनश्रेणिकानाम् अलककिसलयानां अलकास्त एव किसलयानि यासां तासाम् । पुनः कथंभूतानाम् । भ्रूलताश्लाघिनीनाम् भ्रुव एव लतास्ताभिः श्लाघा स्तुतिर्विद्यते यासां तास्तासाम् । पुनः कथंभूतानाम् । नयनमधुलिहानाम् मधु पुष्पमकरन्दं लिहन्ति आस्वादयन्तीति मधुलिहा भ्रमराः । 'नाम्युपधाप्रीकृगृज्ञः कः ।' नयनानि एव मधुलिहा यासां तास्तासाम् । पुनः कथंभूतानाम् । चारुगण्डस्थलीनाम् चार्व्यो अतिमनोहरा गण्डस्थल्यः कपोला यासु तथा तासाम् । पुनः कथंभूतानाम् । कुचकुसुमचयानां कुचा एव कुसुमचयाः पुष्पप्रकरा यासु तास्तथा तासाम् । रूपकसमुच्चयाक्षेपालंकारः ॥

**लसदलकेत्यादि** । हे नृप, स्त्रीसरस्यः वनितासरोवराणि तव भवतो जलकेलिं कुर्वतो विदधातु । कथंभूताः स्त्रीसरस्यः । लसदलकतरङ्गाः लसन्तः उल्लसन्तोऽलका एव तरङ्गा यासां ताः । पुनः कथंभूताः । कान्तनेत्रारविन्दाः कान्तानि मनोहराणि नेत्राणि अरविन्दानि यासु ताः । पुनः कथंभूताः । प्रचलभुजलतान्ताः प्रचला उल्लसन्तो भुजलतान्ता यासु ताः । पुनः कथंभूताः । पीनवक्षोजकोकाः पीनाः पीवरा नातिस्थूला नातिदीर्घा वर्तुलाकाराः परस्परसंलग्नाः उन्नविभाजो वक्षोजा

ऊरुव्यासवशेन मन्दितरया रुद्धा नितम्बस्थलै-
र्नाभीकन्दरदेशवारिवलनव्यालोलफेनावलिः ।
बाहूत्पीडनसंगलल्लहरिका पीनस्तनोत्तम्भिता
जङ्घादघ्नजलापि खेलदबला कूलंकषा वाहिनी ॥ ३८२ ॥
गम्भीरनाभीवलभिप्रवेशादल्पोदकाभूत्तटिनी मुहुर्या ।
स्त्रीणां पुनः सातिभृता निकामं प्रियापराधस्रवदश्रुपूरैः ॥ ३८३ ॥

---

एव कोका यासु ताः । पुनः कथंभूताः । अतनुजघनकूलाः अतनूनि महान्ति जघनान्येव कूलानि तटानि यासां ताः । पुनः कथंभूताः । चारुलावण्यवारः चारूणि लावण्यानि कान्तयो वारीणि जलानि यासु ताः । रूपकालंकारः ॥

**ऊरुव्यासवशेनेत्यादि** । हे राजन्, खेलदवला खेलन्ती रममाणा अबला जङ्घादघ्नजला । जङ्घादघ्नजला सा कूलंकषा वाहिनी कथमिति विरुद्धं परिह्रियते । यतः कूलंकषा स्मरमन्दिरपीडावती तत एव जङ्घादघ्नजला जानुपर्यन्तप्राप्तशुक्रा इति सुस्थम् । कथंभूता खेलदबला । ऊरुव्यासवशेन मन्दितरया ऊर्वोः सक्थ्नोः व्यासः परस्परसंमेलनं तस्य वशेन परवशत्वेन मन्दितरया मन्दवेगा । पुनश्च कथंभूता नितम्बस्थलैः रुद्धा नितम्बा एव स्थलानि उच्चतया तैः रुद्धा अवष्टब्धा । पुनः कथंभूता । नाभीकन्दरदेशवारिवलनव्यालोलफेनावलिः नाभ्येव कन्दरदेशो गुहास्थानं तत्र वारिवलनेन प्रस्वेदजलव्याप्त्या व्यालोला विशेषेण चपला फेनावलिः शुक्लडिण्डीरपिण्डराजिर्यस्यां सा । पुनः कथंभूता । बाहूत्पीडनसंगलल्लहरिका बाह्वोर्भुजयोरुत्पीडनेन गाढमालिङ्गनेन संगलन्त्यः संमुखमागच्छन्त्यो लहरिकास्त्वक्संकोचेक्षणवीचयो यस्यां सा । पुनः कथंभूता । पीनस्तनोत्तम्भिता पीनौ पूर्वोक्तलक्षणौ यौ स्तनौ ताभ्यामुत्तम्भिता अवष्टब्धा सा तथोक्ता । रूपकविरोधालंकारः ॥

**गम्भीरनाभीत्यादि** । या स्त्रीणां तटिनी त्रिवलीलक्षणा नदी गम्भीरनाभीवलभिप्रवेशात् अगाधतुन्दिकातलाधारवंशपञ्जरसंचारात् अल्पोदका अभूत् । प्रस्वेदजलरहिता बभूवेत्यर्थः । सा तटिनी प्रियापराधस्रवदश्रुपूरैः प्रियस्य अपराधः प्रियापराधः भर्तृदोषः तस्मात् स्रवन्ति क्षरन्ति यानि अश्रूणि तेषां पूरैः निकामं पुनः पश्चात् अतिभृता अभूत् । रूपकालंकारः ॥

---

१. यद्यपि सर्वेषु पुस्तकेषु 'मन्दिरतया' इत्येवोपलभ्यते, तथापि सटीकपुस्तके टीकायां व्याख्योपक्रमे तकारोपरि प्रथमत्वबोधकसंख्याया रेफोपरि द्वितीयत्वबोधकसंख्यायाः केनचिच्छोधकेन कृतायाः 'मन्दवेगा' इति पर्यायस्य च दर्शनेन पाठस्तथा कल्पितः.

अलकेक्षणवदनकुचैरुन्मज्जन्त्याः क्रमेण कान्तायाः ।
जम्बालकुवलयाम्बुजपुलिनश्रियमाश्रिता सिन्धुः ॥ ३८४ ॥

अहनि परिणतार्धे नाथ सीमन्तिनीनां
पुरुषरतनियोगव्यग्रकाञ्चीगुणानाम् ।
शिथिलयति कपोले मण्डनं स्वेदबिन्दु-
र्निबिडकुचनिकुञ्जात्स्यन्दते वारिपूरः ॥ ३८५ ॥

उद्वेल्लन्ति कपोलपालिषु कुचस्तम्बेषु मन्दास्पदाः
स्फायन्ते वलिवाहिनीषु पृथवो नाभीदरश्रेणिषु ।
ग्रीष्मेऽपि स्मरकेलिलालसधियां स्त्रीणां श्रमाम्भःकणाः
ख्यान्ति प्रावृष एव संपदममी नीवीलतोल्लासिनः ॥ ३८६ ॥

---

**अलकेक्षणेत्यादि** । सिन्धुर्नदी भर्तुर्दृष्टिलक्षणा कान्तायाः स्त्रियः अलकेक्षणवदन-कुचैः अलकाया........................................जम्वालकुवलयाम्बु-जपुलिनश्रियं आश्रिता वभूव । जम्वालानि शैवलानि । उक्तं च—'शैवले कर्दमे चैव जम्वालमिति चोच्यते' । कुवलयं च उत्पलम्, अम्बुजं च कमलम्, पुलिनं च तोयोत्थि-तस्थलम्, जम्बालकुवलयाम्बुजपुलिनानि । 'तोयोत्थितं तत्पुलिनम्' इति वचनात् । तेषां श्रीः शोभा तां जम्बालकुवलयाम्बुजपुलिनश्रियं आश्रिता प्राप्ता । यथासंख्यालंकारः ॥

**अहनीत्यादि**। हे नाथ हे राजन्, अहनि दिवसे परिणतार्धे मध्याह्नवेलायां स्वेद-विन्दुः प्रस्वेदजलं सीमन्तिनीनां कपोले मण्डनं पत्रवल्लीं शिथिलयति श्लथं करोति । निविडकुचनिकुञ्जात् निविडौ परस्परसंलग्नौ यौ कुचौ तयोर्निकुञ्जं मध्यस्थानं निविडकुच-निकुञ्जं तस्मात् । उक्तं च—'निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे ।' स्थाने इति विशेषः । वारिपूरो जलप्रवाहः स्यन्दते क्षरति । कथंभूतानां सीमन्तिनीनाम् । पुरुषर-तनियोगव्यग्रकाञ्चीगुणानाम् । 'उपरि स्त्री अधः पुरुषः इति रीत्या यत्सुरतं तत्पुरुषरत-मुच्यते विपरीतरतम्' इति वचनात्। तस्य नियोगो निर्विशेषो योगो नियोगो व्यापारस्तत्र व्यग्रो व्याकुलः । 'व्यग्रे च प्रगुणाकुले' इति वचनात् । काञ्चीगुणो कटिमेखला यासां तास्तथोक्तास्तासाम् । शृङ्गाररसप्रधानं रूपकमिदम् ॥

**उद्वेल्लन्तीत्यादि** । हे राजन्, स्त्रीणां श्रमाम्भःकणाः सुरतश्रमसंजातजलकणाः ग्रीष्मेऽपि उष्णकालेऽपि प्रावृष एव वर्षर्तोरेव संपदं शोभां अमी प्रत्यक्षीभूताः ख्यान्ति कथयन्ति । सूचयन्तीत्यर्थः । कथंभूतानां स्त्रीणाम् । स्मरकेलिलालसधियाम् स्मरकेलिषु कंदर्पक्रीडासु लालसा अत्याकाङ्क्षा धीर्बुद्धिर्यासां तास्तथा तासाम् । श्रमाम्भः-कणाः किं कुर्वन्ति । कपोलपालिषु गण्डस्थलवारिवारणेषु उद्वेल्लन्ति उत्पतन्ति । उक्तं

मन्दानिलेषु कदलीदलमण्डपेषु
हारेषु यन्त्रगृहकेलिषु चन्दनेषु ।
वद्धस्पृहान्ननु दुनोति कथं स कालः
कान्तासु चार्पितपयोधरमण्डलासु ॥ ३८७ ॥

इति वैतालिकालापोल्लास्यमानमानसः सकललोकलोचनघूर्णनेषु घर्मदिनेषु मदिरासमागमानिव मध्याह्नसमयानतिवाहयामास ।

अकुर्वन्मनसः प्रीतिं यः स्त्रीषु विहितादरः ।
अन्यार्थं भारवोढेव स परं क्लेशभाजनः ॥ ३८८ ॥

---

च विद्यानन्देन—'चलने चलति प्रेङ्खति विकम्पते वेपते च वेल्लति च लङ्गति रङ्गति वल्गति दोलयति स्यन्दते स्फुरति ॥' कथंभूताः श्रमाम्भःकणाः । कुचस्तम्बेषु स्तनप्रकाण्डेषु मन्दास्पदा मन्दस्यन्दाः । पुनश्च किं कुर्वन्ति श्रमाम्भःकणाः । वलिवाहिनीषु त्रिवलीनदीषु स्फायन्ते स्फारीभवन्ति वृद्धिं गच्छन्ति । कथंभूताः । नाभीदरश्रेणिषु नाभिविवरसमूहेषु पृथवः । पुनः कथंभूताः । नीवीलतोल्लासिनः नीवी कटीवस्त्रबन्धनं सैव लता वल्ली तामुल्लासयन्तीत्येवंशीलाः । उल्लसनं कुर्वन्तीत्यर्थः । रूपकोपमालंकारः ॥

**मन्दानिलेष्वित्यादि** । हे राजन्, स कालो ग्रीष्मकालो नन्वहो कथं केन प्रकारेण नरान् दुनोति संतापयति । कथंभूतान् नरान् । वद्धस्पृहान् साकाङ्क्षान् । केषु सत्सु दुनोति । मन्दानिलेषु अतीव्रवातेषु सत्सु । तथा कदलीदलमण्डपेषु अंशुमत्फलपर्णगृहेषु सत्सु । तथा हारेषु तथा यन्त्रगृहकेलिषु यन्त्रधारामन्दिरक्रीडासु सतीषु । तथा चन्दनेषु हरिचन्दनद्रवेषु सत्सु । तथा कान्तासु सतीषु । कथंभूतासु कान्तासु । अर्पितपयोधरमण्डलासु । न कथमपि दुनोतीत्यर्थः । समुच्चयालंकारः ॥

कथंभूतेषु घर्मदिनेषु । सकललोकलोचनघूर्णनेषु सर्वलोकलोचननिद्रोत्पादकेषु । कथंभूतान् मध्याह्नसमयान् । मदिरासमागमानिव यथा मदिरासमागमाः सकललोकलोचनानां घूर्णनं कुर्वन्ति ॥

**अकुर्वन्नित्यादि** । यः पुमान् स्त्रीषु वनितासु विषये मनसः प्रीतिं हर्षमकुर्वन् स्त्रीषु विहितादरो न भवति कृतादरो न स्यात् । सः पुमान् परं केवलं क्लेशभाजनो भवति । क इव । अन्यार्थं भारवोढेव यथा भारवोढा पुमान् अन्यार्थं अपरेषां निमित्तं भारं वहति स्वयं तु क्लेशं सहते तत्समानो ज्ञातव्यः । उपमालंकारः ॥

---

१. मूलटीकयोरुभयोरपि 'भाजनः' इति पुंस्त्वनिर्देशः 'पात्रामत्रे च भाजनम्' इति क्लीबनिर्देशविरुद्धः.

कदाचिद्वियल्लक्ष्मीकुन्तलकलापकान्तिभिः सुरसरिन्नीलिकाविलासहासैः त्रिदिवस्त्रीनेत्राञ्जनविराजिभिः अमृतकरकुरङ्गलोचनच्छायैः तपनतुरगदूर्वाङ्कुरस्थलसृष्टिभिः स्वर्देवताभिषेकमरकतमयकलशमण्डलावलोकैः विद्याधरपुराभिसारिकाविजृम्भणतिमिरवृत्तिभिः सैंहिकेयसैन्यसमसाहसव्यवसायैः खेचरीचरणचाराचरितमेचकमणिकुट्टिमाभोगभङ्गिभिः गगनचरमिथुनरतिकेलितमालकाननकमनीयैः अमरविमानमहानीलाधिष्ठानलिम्पिभिः अम्बरसरः-

---

कदाचित् कस्मिंश्चिदवसरे अम्भोधरैर्मेघैः कृत्वा प्रसवोन्मुखकामिनीकुचचूचुकाभासि नभसि सति प्रसवे प्रसूतौ उन्मुखा अवसरन्ती या कामिनी स्त्री तस्याः कुचचूचुकवत् कृष्णवर्णतया आभा शोभा यस्य नभसस्तत्तथोक्तं तस्मिन् । ईदृग्विधे नभसि सति वर्षर्तुश्रियं वर्षाकाललक्ष्मीं अनुभवन् भुञ्जानो यावत् यावत्कालं अहं यशोधरः सप्रमोदं सहर्षं आसांचक्रे तिष्ठामि स्म तावत्कालं संधिविग्रही यशोधरस्य महान् दूतः इति विज्ञाप्य इति विज्ञापनं कृत्वा दूतं शासनहरं प्रावेशयत् प्रवेशितवान् । इति क्रियाकारकसंबन्धः । कथंभूतैरम्भोधरैः । वियल्लक्ष्मीकुन्तलकलापकान्तिभिः वियल्लक्ष्म्याः कुन्तलकलापः केशसमूहस्तद्वत् कान्तिः कृष्णत्वं येषां ते तथा तैः । पुनः कथंभूतैः । सुरसरिन्नीलिकाविलासहासैः सुरसरिदाकाशगङ्गा तस्या नीलिका शैवलं तस्या विलासैर्हासैरुल्लासप्रसरैः । पुनः कथंभूतैः । त्रिदिवस्त्रीनेत्राञ्जनविराजिभिः त्रिदिवस्त्रीणां नेत्राणां अञ्जनवत् विराजिभिः विराजनशीलैः । पुनः कथंभूतैः । अमृतकरकुरङ्गलोचनच्छायैः अमृतकरकुरङ्गस्य लोचनयोरिव आसमन्तात् छाया कान्तिर्येषां ते तथा तैः । पुनः कथंभूतैः । तपनतुरगदूर्वाङ्कुरस्थलसृष्टिभिः तपनस्य श्रीसूर्यस्य तुरगास्तेषां दूर्वाङ्कुरा हरिताङ्कुरास्तेषां स्थलसृष्टयो येषु ते तथा तैः । पुनः कथंभूतैः । स्वर्देवताभिषेकमरकतमयकलशमण्डलावलोकैः स्वर्देवता स्वर्गदेवता तस्या अभिषेकाय ये मरकतमयकलशा हरिन्मणिमयघटास्तेषां मण्डलः समूहस्तद्वदवलोकः शोभा येषां ते तथा तैः । पुनः कथंभूतैः । विद्याधरपुराभिसारिकाविजृम्भणतिमिरवृत्तिभिः विद्याधरपुराणां संबन्धिन्यो या अभिसारिकाः कामुकस्त्रियः । 'कान्तार्थिनी तु या याति संकेतं साभिसारिका' इति वचनात् । तासां विजृम्भणं प्रसरणं तन्निमित्तं तिमिरस्येव अन्धकारस्येव वृत्तिर्येषां ते तथा तैः । पुनः कथंभूतैः । सैंहकेयसैन्यसमसाहसव्यवसायैः सैंहिकेयो विधुंतुदस्तस्य सैन्यसमः साहसव्यवसाय उद्यमप्रवृत्तिर्येषां ते तथा तैः । पुनः कथंभूतैः । खेचरीचरणचाराचरितमेचकमणिकुट्टिमाभोगभङ्गिभिः खेचरीचरणानां चारः संचरणं तस्मै आचरिता मेचकमणीनां कृष्णरत्नानां कुट्टिमाभोगवत् बद्धभूमिविस्तारवत् भङ्गी रचना येषां ते तथा तैः । पुनः कथंभूतैः । गगनचरमिथुनरतिकेलितमालकाननकमनीयैः गगनचरमिथुनानां देवविद्याधरस्त्रीपुरुषयुगलानां रतिकेलये संभोगक्रीडानिमित्तं तमाल-

प्रसरत्पङ्कपेशलप्रकाशैः व्योमगजगण्डमण्डनमदमनोहारिभिः विडम्बितगारुडोपलशैलशिखरशोभैः उपहसितशितिकण्ठकण्ठद्युतिभिः संकर्षणवसनवानातानसुन्दरैः द्युसदनदीर्घिकाविकासितकुवलयवनविलसद्भिः अनङ्गनारण्यप्ररूढतापिच्छगुच्छगहनावगाहिरामैः अवहेलितहरिदेहदीप्तिसंपत्तिभिः शिखण्डिताण्डवप्रारम्भपूर्वरङ्गैः अनङ्गनगपल्लवोल्लासव्यसनिभिः प्रोषितपुरंध्रिकाश्वासनप्रथमदूतैः चातककुलकेलिकारिभिः कलहंसनिर्वासघोषणाभि-

---

काननवत् कमनीया ये ते तथा तैः। पुनः कथंभूतैः। अमरविमानमहानीलाधिष्ठानलि[1]म्पिभिः अमरविमानानां संबन्धि यत् महानीलाधिष्ठानं कृष्णरत्नपटलं लिम्पन्ति तिरस्कुर्वन्तीत्येवंशीलास्ते तथा तैः। पुनः कथंभूतैः। अम्बरसरःप्रसरत्पङ्कपेशलप्रकाशैः अम्बरसरसं आकाशसरोवरस्य प्रसरत् व्याप्नुवत् यत्पङ्कं कर्दमस्तद्वत् पेशलः प्रकाशो दीप्तिर्येषां ते तथातैः। पुनः कथंभूतैः। व्योमगजगण्डमण्डनमदमनोहारिभिः व्योमाकाशं तदेव गजो हस्ती तस्य गण्डौ कटौ तयोर्मण्डनं भूषणं यो मदस्तद्वत् मनो हरन्तीत्येवंशीला ये ते तथा तैः। पुनः कथंभूतैः। विडम्बितगारुडोपलशैलशिखरशोभैः विडम्बिता तिरस्कृता गारुडोपलशैलस्य नीलपर्वतस्य शिखरस्य शोभा यैस्ते तथा तैः। [पुनः कथंभूतैः। उपहसितशितिकण्ठकण्ठद्युतिभिः] ........................................................................................पुनः कथंभूतैः। संकर्षणवसनवानातानसुन्दरैः संकर्षणस्य बलभद्रस्य यद्वसनं तस्य वानातानवत् वननतननवत् सुन्दरैः। पुनः कथंभूतैः। द्युसदनदीर्घिकाविकासितकुवलयवनविलसद्भिः द्युसदनदीर्घिकायां विकासितं यत् कुवलयं नीलोत्पलं तद्वत् विलसन्त्युल्लसन्तीत्येवंशीलास्तैः। पुनः कथंभूतैः। अनङ्गनारण्यप्ररूढतापिच्छगुच्छगहनावगाहिरामैः अनङ्गनमाकाशं तदेवारण्यं तत्र प्ररूढास्तापिच्छाः काहलिकवृक्षास्तेषां गुच्छाः पुष्पलम्बयः तेषां गहनानि वनानि तद्वत् अवगाहिरामैः व्यापनमनोहरैः। पुनः कथंभूतैः। अवहेलितहरिदेहदीप्तिसंपत्तिभिः अवहेलिता तिरस्कृता हरेर्नारायणस्य देहस्य दीप्तिसंपत्तिः कृष्णकान्तिसंपत् यैस्ते तथा तैः। पुनः कथंभूतैः। शिखण्डिताण्डवप्रारम्भपूर्वरङ्गैः शिखण्डिनां मयूराणां ताण्डवप्रारम्भे नृत्यपूर्वकाले पूर्वरङ्गैः प्रथमरङ्गसदृशैः। पुनः कथंभूतैः। अनङ्गनगपल्लवोल्लासव्यसनिभिः अनङ्गः कंदर्पः स एव नगो वृक्षः तस्य पल्लवानामुल्लासे व्यसनं निर्बन्धो विद्यते येषां तैः। पुनः कथंभूतैः। प्रोषितपुरंध्रिकाश्वासनप्रथमदूतैः प्रोषितपुरंध्रिकाणां विरहिणीनां स्त्रीणां आश्वासने धीरत्वदाने प्रथमदूतैः पूर्वसंदेशहरैः। पुनः कथंभूतैः। चातककुलकेलिकारिभिः चातकानां वप्पीहानां कुलानि तेषां केलिं क्रीडां कारयन्तीत्येवंशीलास्ते तथा

---

१. मूलटीकयोरुपलभ्यमानः 'लिम्पिभिः' इति प्रयोगो नुमप्राप्त्या चिन्त्यः।

नवपटहैः कदलीदलश्यामलितदिग्भित्तिभिरम्भोधरैः प्रसवोन्मुखकामिनी-कुचचूचुकाभासि नभसि, नीलनेत्रवितानान्तरालावलम्बितनिरन्तरहारहारिणि समन्तात्पतति धारासारसलिले, वसुमतीतरुस्तनंधयधात्र्यामिव पयः-पूर्णपयोधराभोगसुभगायां दिवि, चिरतरातपसंतापदुःस्थितायाः क्षितेर्यन्त्र-धारागारलीलामिव बिभ्रति गगनमण्डले, विततसितपताकाडम्बरेष्विव शरन्निर्झरनीरेषु गिरिषु, मुक्ताफलजालप्रसाधितेष्विव स्यन्दमानवारिसुन्दर-

---

तैः । पुनः कथंभूतैः । कलहंसनिर्वासघोषणाभिनवपटहैः कलहंसानां चञ्चुचरणचक्षूरक्तानां राजहंसानां निर्वास उद्वासस्तस्य घोषणा उच्चैर्घुष्टं तस्या अभिनवपटहाः अपूर्वानकास्ते तथा तैः । पुनः कथंभूतैः । कदलीदलश्यामलितदिग्भित्तिभिः कदलीनां वारणवूसानां दलैः श्यामलिताः कृष्णीकृताः दिग्भित्तयः प्रशस्ता दिशो यैस्ते कदलीदलश्यामलितदिग्भित्त-यस्तैः । पुनश्च कस्मिन् सति वर्षर्तुश्रियमनुभवन् आसांचक्रे । धारासारसलिले धाराणा-मासारो वेगवद्वर्षस्तस्य सलिले जले समन्तात् सर्वतः पतति सति क्षरति सति । कथंभूते धारासारसलिले । नीलनेत्रवितानान्तरालावलम्बितनिरन्तरहारहारिणि नीलनेत्रं कृष्णां-शुकं तस्य वितानं चन्द्रोपकस्तस्यान्तराले अधोभागे अवलम्बिता निरन्तरा अविच्छिन्ना ये हारा मुक्ताफलमालास्तद्वत् हारिणि मनोहरे । पुनश्च कस्यां सत्यां वर्षर्तुश्रियम-नुभवन्नासांचक्रे । दिवि सत्याम् । कथंभूतायां दिवि । पयःपूर्णपयोधराभोगसुभगायाम् पयोभिर्जलैः पूर्णा भृता ये पयोधरा मेघास्तेषामाभोगः परिपूर्णता तेन सुभगा सौभा-ग्यवती सा तथा तस्यां तथोक्तायाम् । पुनः कथंभूतायाम् । वसुमतीतरुस्तनंधयधात्र्यामिव वसुमती पृथ्वी तस्यास्तरव एव स्तनंधयाः पुत्रास्तेषां धात्र्यामिव उपमातरीव । यथा उपमाता पयसा दुग्धेन पूर्णपयोधराभोगसुभगा परिपूर्णस्तनाटोपमनोहरा भवति । पुनश्च कस्मिन् सति वर्षर्तुश्रियमनुभवन्नासांचक्रे । गगनमण्डले सति । गगनमण्डले किं कुर्वति सति । क्षितेः पृथिव्याः यन्त्रधारागारलीलां बिभ्रतीव सति । कथंभूतायाः क्षितेः । चिरतरातपसंतापदुःस्थितायाः चिरतरं दीर्घकालमातपस्य घर्मस्य संतापेन संज्वरेण दुःस्थितायाः दुःखवत्याः । पुनश्च केषु सत्सु वर्षर्तुश्रियमनुभवन्नासांचक्रे । गिरिषु सत्सु । कथंभूतेषु गिरिषु । क्षरन्निर्झरनीरेषु क्षरन्ति उपरिष्टादधः पतन्ति निर्झराणां नीराणि कबन्धानि येभ्यस्ते तथा तेषु । पुनः कथंभूतेषु । विततसितपताकाडम्बरे-ष्विव वितता विस्तृताः पताका ध्वजास्तासामाडम्बरः कटको येषु ते तथा तेषु । इवोपमायाम् । पुनश्च केषु सत्सु वर्षर्तुश्रियमनुभवन्नासांचक्रे । सद्मसु गृहेषु सत्सु । कथंभूतेषु सद्मसु । स्यन्दमानवारिसुन्दरपर्यन्तेषु स्यन्दमानानि क्षरन्ति यानि वारीणि तैः सुन्दराः पर्यन्ता येषां तानि तेषु । पुनः कथंभूतेषु । मुक्ताफलजालप्रसाधितेष्विव मुक्ताफलजालैर्मौक्तिकमालाभिः प्रसाधितेष्विव । पुनश्च कासु सतीषु वर्षर्तुश्रियम-

पर्यन्तेषु सद्मसु, मैरेयातिलङ्घितासु सीमन्तिनीष्विव निर्मर्यादशब्दगमनासु वाहिनीषु, निदाघनिवापजलसरावेष्विव निर्भराम्भःसंभृतेषु सरःसु, समुद्रसलिलसहसेवितौर्वानलज्वालावभासिनीष्विव स्फुरन्तीषु तडित्सु, स्मरपुरंदरार्पितचापव्यापारभार इव निवलाराधनधन्यधनुषि विजिगीषुलोके, किलिञ्चसंचयोचितचञ्चुरोचमानमौकुलिकुलाकुलेषु शाखिशिफोद्गमदेशेषु, नीरन्ध्रशिलिन्ध्रबन्धुरेषु धराभागेषु, लाङ्गलीप्रसवपाटलिमधामनि ककुप्चक्र-

---

नुभवन्नासांचक्रे । वाहिनीषु सतीषु । कथंभूतासु वाहिनीषु । निर्मर्यादशब्दगमनासु निर्मर्यादाः निःसीमानः शब्दाः कोलाहला गमनानि च वेगवद्धावनानि च यासु तास्तथा तासु । पुनः कथंभूतासु । सीमन्तिनीष्विव । कथंभूतासु सीमन्तिनीषु । मैरेयातिलङ्घितासु मैरेयेण मिरानामदेशोत्पन्नगुडमयेन अतिलङ्घिताः मैरेयातिलङ्घितास्तासु । अत्र हेललंकारः । पुनश्च केषु सत्सु । सरःसु सरोवरेषु सत्सु । कथंभूतेषु सरःसु । निर्भराम्भःसंभृतेषु निर्भरं गाढमम्भोभिर्जलैः संभृतेषु परिपूर्णेषु । पुनः कथंभूतेषु । निदाघनिवापजलसरावेष्विव निदाघो ग्रीष्मकालः स तस्य निवापः मृतस्य कारटकं तस्य संबन्धिषु जलसरावेष्विव उदकवर्धमानेष्विव । 'पितृदानं निवापः स्यात्' इति वचनात् । पुनश्च कासु सतीषु । तडित्सु शतह्रदासु सतीषु । कथंभूतासु तडित्सु । जलधरोदरेषु स्फुरन्तीषु चमत्कुर्वतीषु सतीषु । पुनः कथंभूतासु । समुद्रसलिलसहसेवितौर्वानलज्वालावभासिनीष्विव समुद्रसलिलैः सरस्वज्जलैः सहसेविता आस्वादिता या और्वानलज्वाला वडवानलकीला तद्वदाभासन्ते चमत्कुर्वन्तीत्येवंशीलास्तास्विव । पुनश्च कस्मिन् सति । विजिगीषुलोके शत्रूणां विजेतुमिच्छौ लोके सति । कथंभूते विजिगीषुलोके । निवलाराधनधन्यधनुषि निवलानां धनुर्भस्त्रकाणां आराधनेन धन्यानि कृतार्थानि धनूंषि यस्य स निवलाराधनधन्यधनुस्तस्मिन् । पुनः कथंभूते । स्मरपुरंदरार्पितचापव्यापारभार इव स्मरः कंदर्पः स एव पुरंदरस्तेन अर्पितो नियोगीकृतश्चापव्यापारभारो यस्य स तथा तस्मिन् । पुनश्च केषु सत्सु । शाखिशिफोद्गमदेशेषु शाखिनां शिफा अग्राणि तेषां उद्गमदेशेषु उत्पादस्थानेषु । कथंभूतेषु शाखिशिफोद्गमदेशेषु । किलिञ्चसंचयोचितचञ्चुरोचमानमौकुलिकुलाकुलेषु किलिञ्चानां अपेशलानां रम्भाकाष्ठानां संचयेन संग्रहेण उचिता योग्या चञ्चवस्तुण्डाग्राणि ताभी रोचमानाः शोभमाना ये मौकुलयः काकास्तेषां कुलैः समूहैराकुला व्याप्ता ये शाखिशिफोद्गमदेशास्ते तथा तेषु । पुनश्च केषु सत्सु । धराभागेषु भूमिप्रदेशेषु सत्सु । कथंभूतेषु धराभागेषु । नीरन्ध्रशिलीन्ध्रबन्धुरेषु नीरन्ध्राणि अविच्छिन्नानि शिलीन्ध्राणि गोमयच्छत्राकाराणि तैः बन्धुरा ये धराभागास्ते तथा तेषु । पुनश्च कस्मिन् सति । ककुप्चक्रवाले सति दिग्मण्डले सति । कथंभूते ककुप्चक्रवाले । लाङ्गलीप्रसवपाटलिमधामनि लाङ्गलीनां जलपिप्पलीनां

वाले, यूथिकाप्रसूनपरिमलविलासिषु शिलोच्चयशिलान्तरालपरिसरेषु, रत्नाङ्कुररोमाञ्चकञ्चुकिनि विदूरभूधरे, गिरिमल्लिकामुकुलमण्डितशिखण्डेषु गण्डशैलेषु, सुरगोपप्रचारशोणशोचिषि वसुंधरावलये, सर्जार्जुनविजयिषु कुत्कीलकुञ्जेषु, मनोभवभल्लिकाकृतिषु च विजृम्भमाणेषु केतकीकुसुमपत्रेषु,

अपि च

उन्मार्गाम्भसि मेघमन्दनभसि छन्नांशुमत्तेजसि
क्षुभ्यत्स्रोतसि रुद्धपान्थतरसि स्फूर्जत्तडिद्भूयसि ।

---

कलिकानां प्रसवाः पुष्पाणि तेषां पाटलिम्नः श्वेतरक्तत्वस्य धाम स्थानं यत् ककुप्चक्रवालं तथा तस्मिन् । पुनश्च केषु सत्सु । शिलोच्चयशिलान्तरालपरिसरेषु शिलोच्चयानां शिलानां अन्तरालानां मध्यानां परिसराः पर्यन्तप्रदेशाः प्राङ्गणानि तेषु सत्सु । कथंभूतेषु शिलोच्चयशिलान्तरालपरिसरेषु । यूथिकाप्रसूनपरिमलविलासिषु यूथिकानामम्बष्ठानां प्रसूनानां परिमलानां विलासो विद्यते येषां ते तथा तेषु । पुनश्च कस्मिन् सति । वैदूर्यरत्नोत्पत्तिहेतुविदूरभूधरे सति । कथंभूते विदूरभूधरे । रत्नाङ्कुररोमाञ्चकञ्चुकिनि रत्नानामङ्कुरास्तेषां रोमाञ्चकञ्चुको विद्यते यस्य स तथा तस्मिन् । पुनश्च केषु सत्सु । गण्डशैलेषु क्षुद्रपर्वतेषु सत्सु । कथंभूतेषु गण्डशैलेषु । गिरिमल्लिकामुकुलमण्डितशिखण्डेषु गिरिमल्लिकामुकुलैः कुटजकुड्मलैर्मण्डिताः शिखण्डाः शिखराणि येषां गण्डशैलानां ते तथा तेषु । पुनश्च कस्मिन् सति । वसुंधरावलये सति । कथंभूते वसुंधरावलये । सुरगोपप्रचारशोणशोचिषि सुरगोपानां इन्द्रवधूटिकानां कीरविशेषाणां प्रचारेण प्रसरेण शोणाः कोकनदप्रभाः शोची रोचीर्यस्य स तथा तस्मिन् । पुनश्च केषु सत्सु । कुत्कीलकुञ्जेषु कुत्कीलानां पर्वतानां कुञ्जानि लतादिपिहितोदराणि कुत्कीलकुञ्जास्तेषु सत्सु । कथंभूतेषु कुत्कीलकुञ्जेषु । सर्जार्जुनविजयिषु सर्जाश्च असनवृक्षा अर्जुनाश्च मद्यहेतुत्वचो वृक्षास्तैर्विजयन्ते शोभन्ते इत्येवंशीलास्ते तथा तेषु । पुनश्च केषु सत्सु । केतकीकुसुमपत्रेषु सत्सु । कथंभूतेषु केतकीकुसुमपत्रेषु । विजृम्भमाणेषु सत्सु । पुनः कथंभूतेषु । मनोभवभल्लिकाकृतिषु च मनोभवस्य भल्लिका बाणाग्रफलं तस्या आकृतिर्येषां तानि तथा तेषु ॥

अपि च अस्ति कश्चिद्विशेषः । कथंभूतोऽहं वर्षर्तुश्रियमनुभवन्नासांचक्रे । इत्यमुना प्रकारेण अकालजलदवन्दिविनोद्यमानमनाः अकालजलदनाम्ना बन्दिना स्तुतिपाठकेन विनोद्यमानं क्रीड्यमानं मनो यस्य स तथोक्तः । इतीति किम्—

**उन्मार्गाम्भसीत्यादि** । हे नाथ, ईदृग्विधे वर्षाकाले प्रौढां नवयौवनां प्रियां यत्त्वं मुञ्चसि परिहरसि । च अन्यत् रूढवयसि प्रादुर्भूतनवयौवने सति त्वं कथं यासि देशान्तरं गच्छसि । कथंभूते काले । उन्मार्गाम्भसि उन्मार्गाणि नदीनामुभयतटलङ्घीनि

कंदर्पौकसि मत्तकेकिमनसि प्रेमोद्यते चेतसि
काले यासि कथं च रूढवयसि प्रौढां प्रियां मुञ्चसि ॥ ३८९ ॥
उत्कूजच्छिखिनं नटत्करटिनं प्रादुर्भवच्छाखिनं
क्रीडद्भेककुलं पतद्बहुजलं क्षुभ्यद्धरित्रीतलम्।
पुष्यत्काममदं जयज्जनपदं सोत्सर्गसिन्धुस्यदं
दृष्ट्वेमं मिहिरं जगत्प्रियकरं काभ्येति न स्त्री नरम् ॥ ३९० ॥

---

अम्भांसि यस्मिन् काले उन्मार्गाम्भास्तस्मिन्। पुनः कथंभूते। मेघमन्दनभसि मेघैर्मन्दं प्रचुरं नभो यस्मिन् स तथा तस्मिन्। पुनः कथंभूते। छन्नांशुमत्तेजसि छन्नमाच्छादितं अंशुमतः श्रीसूर्यस्य तेजो यस्मिन् स तथा तस्मिन्। पुनः कथंभूते। क्षुभ्यत्स्रोतसि क्षुभ्यन्ति सम्यक् चलन्ति उत्पतन्ति स्रोतांसि जलप्रवाहा यस्मिन् तथा तस्मिन्। पुनः कथंभूते। रुद्धपान्थतरसि रुद्धमवष्टब्धं पान्थानां तरो वेगो यस्मिन् स तथा तस्मिन्। पुनः कथंभूते। स्फूर्जत्तडिद्भूयसि स्फूर्जन्त्यो अप्रतिहतव्यापारास्तडितस्ताभिर्भूयान् स्फूर्जत्तडिद्भूयान् तस्मिन्। पुनः कथंभूते। कंदर्पौकसि कंदर्पस्य ओको गृहं कंदर्पौकस्तस्मिन्। पुनः कथंभूते। मत्तकेकिमनसि मत्तानि उत्कटानि केकिनां मयूराणां मनांसि चित्तानि यस्मिन् काले स तथा तस्मिन्। पुनः कथंभूते सति। भो पथिक, तव चेतसि प्रेमोद्यते सति सौहार्दं गते सति। समुच्चयालंकारः॥

उत्कूजदित्यादि। इमं मिहिरं मेघं दृष्ट्वा का स्त्री नरं पुरुषं न अभ्येति गच्छति। अपि तु सर्वापि स्त्री पुरुषगमनं करोति इत्यर्थः। कथंभूतं मिहिरम्। उत्कूजच्छिखिनम् उत्कूजन्ति शब्दं कुर्वन्ति केकाध्वनिं विदधति शिखिनो मयूरा यत्र स तथा तम्। पुनः कथंभूतम्। नटत्करटिनम् नटन्ति नृत्यं कुर्वन्ति करटिनो यत्र स तथा तम्। पुनः कथंभूतम्। प्रादुर्भवच्छाखिनं प्रादुर्भवन्ति प्रकटीभवन्ति शाखिनो यत्र स तथा तम्। पुनः कथंभूतम्। क्रीडद्भेककुलम् क्रीडन्ति पर्यटन्ति भेकानां कुलानि यत्र स तथा तम्। पुनः कथंभूतम्। पतद्बहुजलम् पतन्ति निर्गलन्ति बहूनि जलानि यत्र स तथा तम्। पुनः कथंभूतम्। [क्षुभ्यद्धरित्रीतलम्.....................................पुनः कथंभूतम्।] पुष्यत्काममदम् पुष्यति पुष्टिं प्राप्नोति कामस्य कंदर्पस्य मदो दर्पो यत्र स तथा तम्। पुनः कथंभूतम्। जयज्जनपदम् जयन्ति उत्कर्षं प्राप्नुवन्ति जनपदा देशा यत्र स तथा तम्। पुनः कथंभूतम्। सोत्सर्गसिन्धुस्यदम् सोत्सर्गः सोत्साहः सिन्धूनां नदीनां स्यदो जवो यत्र स तथा तम्। पुनः कथंभूतम्। जगत्प्रियकरम् जगतां सर्वलोकानां प्रियं हितं करोतीति जगत्प्रियकरस्तम्। आक्षेपालंकारः॥

नवजलकणसेकाद्भूमिसौरभ्यसारः
प्रविकसितकदम्बामोदमन्दप्रचारः ।
जनपदयुवतीनां मानसोल्लासनायुः
प्रथमजलदवायुः प्रीतये स्तान्नृपस्य ॥ ३९१ ॥

कुर्वाणाः प्रचलाकिनां कलरवैरुत्तालनृत्तक्रियां
न्यस्यन्तो निचुलेषु कन्दलदलोल्लासावकाशश्रियः ।
एते चातकपोतपेयनिपतत्पाथःकणश्रेणयो
वाता वान्ति निदाघलङ्घनघनोल्लाघाः प्रदीर्घागमाः ॥ ३९२॥

स्फुटितकुटजराजिर्मल्लिकोल्लासहारी
नवनिचुलविलासः कन्दलानन्दकारी ।

---

नवजलकणसेकादित्यादि । प्रथमजलदवायुः पूर्वमेघमारुतः नृपस्य यशोधरस्य प्रीतये हर्षाय स्ताद्भवतु । कथंभूतः प्रथमजलदवायुः । नवजलकणसेकात् नूतनोदकबिन्दुक्षरणात् भूमिसौरभ्यसारः भूमेः सौरभ्येण सौगन्ध्येन सारो मनोहरः । पुनः कथंभूतः । प्रविकसितकदम्बामोदमन्दप्रचारः प्रविकसिताः पुष्पिता ये कदम्बास्तेषामामोदेन मन्दः अनुत्सुकः प्रचारः प्रवृत्तिर्यस्य स तथोक्तः । पुनः कथंभूतः । जनपदयुवतीनां सर्वदेशस्त्रीणां मानसोल्लासनायुः मानसस्य हृदयस्योल्लासने आयुर्जीवितव्यं यस्य । जात्यलंकारः ॥

कुर्वाणा इत्यादि । हे राजन्, एते स्पर्शनेन्द्रियस्य प्रत्यक्षीभूता वाता मारुता वान्ति प्रवर्तन्ते । किं कुर्वाणा वाताः । प्रचलाकिनां मयूराणां कलरवैर्मधुरशब्दैः सह उत्तालनृत्तक्रियां उत्सुकनटनचेष्टां कुर्वाणाः विदधानाः । पुनः किं कुर्वाणाः । निचुलेषु वालकदम्बेषु कन्दलदलोल्लासावकाशश्रियो न्यस्यन्तः कन्दलान्यङ्कुराणि दलानि पर्णानि तेषां उल्लासस्य उल्लसनस्य प्रादुर्भावस्य वर्धनस्य अवकाशस्य संमितैः श्रियो लक्ष्म्यस्ता न्यस्यन्त आरोपयन्तः । पुनः कथंभूताः । चातकपोतपेयनिपतत्पाथःकणश्रेणयः चातकपोतानां बप्पीहवालकानां पेयाः पातव्या निपतन्तः क्षरन्तो निर्गलन्तः पाथःकणानां जलबिन्दूनां श्रेणयः समूहा येभ्यो वातेभ्यस्ते तथोक्ताः । पुनः कथंभूताः । निदाघलङ्घनघनोल्लाघाः निदाघस्य उष्णर्तोर्लङ्घने अतिक्रमणे विनाशे घनः प्रचुरः उल्लाघो नैपुण्यं प्रादुर्भावो येषु ते तथोक्ताः । उक्तं च—'अरुक् शुचिस्तथा दृष्टो निपुणश्चोल्लाघ इष्यते' । पुनः कथंभूताः । प्रदीर्घागमाः प्रदीर्घो दूरव्यापी आगम आगमनं येषां ते प्रदीर्घागमाः । जात्यलंकारः ॥

स्फुटितकुटजराजिरित्यादि । घनसमीरः सरति प्रवर्तते । कथंभूतो घनस-

सरति घनसमीरः सीकरासारधारी
कृतसमधिककान्तिः केतकीकाननानाम् ॥ ३९३ ॥
प्रोत्तालयन्करटिनां करपुष्कराणि
रन्ध्रोद्धुरध्वनितकीचककाननान्तः ।
उद्गापयन्मधुकरीर्नवनीपलग्ना
वातः प्रवाति शिखिताण्डवपूर्वरङ्गः ॥ ३९४ ॥
दधदिव हिमरम्यैः सीकरैरुत्प्रबोधं
तपतपनवितापान्मूर्च्छितस्य स्मरस्य ।
वियदचलधराणामङ्गनिर्वाणहेतु-
र्जलदविजयजन्मा जृम्भते वायुरेषः ॥ ३९५ ॥

---

मीरः । स्फुटितकुटजराजिः स्फुटिता विकासं प्राप्ताः कुटजानां इन्द्रतरूणां राजयो यत्र स तथोक्तः । पुनः कथंभूतः । मल्लिकोल्लासहारी मल्लिकानां [1]मुक्तवधानां उल्लासं हरतीत्येवंशीलः स तथा । पुनः कथंभूतः । नवनिचुलविलासः······················। पुनः कथंभूतः । कन्दलानन्दकारी······················ । पुनः कथंभूतः । सीकरासारधारी सीकराणां आसारं समूहं धरतीत्येवंशीलः स तथा । पुनः कथंभूतः । केतकीकाननानां कृतसमधिककान्तिः । विकाशकारीत्यर्थः । जात्यलंकारः ॥

**प्रोत्तालयन्नित्यादि** । वातः प्रवाति प्रवर्तते । किं कुर्वन् वातः । करटिनां करपुष्कराणि शुण्डाग्राणि प्रोत्तालयन् त्वरितानि कुर्वन् । कथंभूतो वायुः । रन्ध्रोद्धुरध्वनितकीचककाननान्तः रन्ध्रेषु उद्धुरं ध्वनितं कीचकानां सच्छिद्रवंशानां काननानां अन्तं मध्यं यत्र येन वा स तथोक्तः । पुनश्च किं कुर्वन् । नवनीपलग्ना नवकदम्बानामुपरि उपविष्टा मधुकरी भ्रमरभार्याः उद्गापयन् उच्चैर्गानं कारयन् । कथंभूतो वातः । शिखिताण्डवपूर्वरङ्गः शिखिनां ताण्डवस्य पूर्वरङ्गो नृत्यप्रारम्भः । रूपकालंकारः ॥

**दधदित्यादि** । हे राजन्, एष वायुर्जृम्भते प्रसरति । किं कुर्वन् । तपतपनवितापात् ग्रीष्मकालसूर्यविशेषतापात् मूर्च्छितस्य प्रलयंगतस्य स्मरस्य हिमरम्यैः शीतलैः सीकरैरुत्प्रबोधमुज्जीवनं दधदिव कुर्वन्निव । वायुः कथंभूतः । वियदचलधराणामङ्गनिर्वाणहेतुः वियच्चाकाशमचलाश्च धराश्च धरा पृथ्वी च वियदचलधरास्तासां अङ्गस्य शरीरस्य निर्वाणहेतुः सौख्यकारणम् । पुनः कथंभूतः । जलदविजयजन्मा जलदानां विजये प्रकर्षे जन्म उत्पत्तिर्यस्य स तथोक्तः । उत्प्रेक्षालंकारः ॥

---

1. 'मल्लिको हंसभेदे स्यात्' इति हैमः.

घनमलिनं कृतनिनदं पतदशनिशरं प्रचण्डसुरचापम् ।
करिकुलमिव संनद्धं वीक्ष्य नभो नो भयं कस्य ॥ ३९६ ॥

कक्ष्येव गगनकरिणः काञ्चीव नभःश्रियो वियद्देव्याः ।
मणिमालेव विराजति यष्टिरियं शक्रचापस्य ॥ ३९७ ॥

जलधिजलैः सह पीता ज्वाला इव वाडवस्य घनजठरात् ।
निर्गच्छन्त्यः प्राप्ताः परिणतिमेतास्तडिल्लेखाः ॥ ३९८ ॥

विचकिलमुकुलश्रीः कुन्तलेषु स्थितानां
स्तनतटलुठितानां हारलीला च येषाम् ।
नवजलधरधाराबिन्दवस्ते पतन्त-
स्तव दधतु विनोदं योषितां केलिकाराः ॥ ३९९ ॥

---

**घनमलिनमित्यादि** । नभो वीक्ष्य दृष्ट्वा कस्य पुरुषस्य भयं न भवति । अपि तु सर्वस्यापि भयं भवतीत्यर्थः । कथंभूतं नभः । करिकुलं संनद्धमिव गृहीतसंनाहमिव । पुनः कथंभूतम् । घनमलिनम् घनैर्मेघैर्मलिनं कृष्णवर्णम् । पुनः कथंभूतम् । कृतनिनदं विहितगर्जनम् । पुनः कथंभूतम् । पतदशनिशरम् पतन्तः अशनयो वज्राण्येव शरा बाणा यस्मात् । पुनः कथंभूतम् । प्रचण्डसुरचापम् प्रचण्डमुत्कटं सुरचापं यत्र तत्तथोक्तम् । श्लेषोपमाक्षेपालंकारः ॥

**कक्ष्येत्यादि** । इयं प्रत्यक्षीभूता शक्रचापस्येन्द्रधनुषो यष्टिः दण्डः विराजति । कथंभूता यष्टिः । गगनकरिणः कक्ष्येव वरत्रेव । पुनः कथंभूता । नभःश्रियः काञ्चीव सिञ्जिनीव । पुनः कथंभूता । वियद्देव्या आकाशदेवतायाः मणिमालेव । उपमालंकारः ॥

**जलधिजलैरित्यादि** । एताः प्रत्यक्षीभूतास्तडिल्लेखा विद्युद्राजयः घनजठरात् निर्गच्छन्त्यः प्रादुर्भवन्त्यः । शोभन्ते इति शेषः । कथंभूतास्तडिल्लेखाः । जलधिजलैः सह पीता आस्वादिता वाडवस्य ज्वाला अर्चिषः परिणतिं प्राप्ता इव । उत्प्रेक्षालंकारः ॥

**विचकिलमुकुलश्रीरित्यादि** । हे राजन्, ते जगत्प्रसिद्धाः नवजलधरधाराबिन्दवः नवीनमेघोदकच्छटानां जलकणाः पतन्तः सन्तस्तव भवतो विनोदं हर्षं दधतु कुर्वन्तु । ते के बिन्दवः । येषां बिन्दूनां योषितां कुन्तलेषु स्थितानां विचकिलमुकुलश्रीर्मोगरकपुष्पकुड्मलशोभा वर्तते । पुनश्च ते के । येषां बिन्दूनां योषितां स्तनतटेषु लुठितानां हारलीला हारशोभा वर्तते । कथंभूतास्ते नवजलधरधाराबिन्दवः । योषितां केलिकाराः क्रीडाविधायिनः । उपमालंकारः ॥

आशारुधि मदप्राये कमलानन्दनद्विषि ।
घनागमे च कामे च चित्रं यद्भुवनोत्सवः ॥ ४०० ॥

किं च ।

रामाः कामप्रकामाः सुकविकृतिकथादोहदा वाग्विवादाः
सौधोत्सङ्गाः सभोगास्तरुणतरुदलोल्लासकान्ता दिगन्ताः ।
यस्मिंश्चासारवारिस्रवदनणुकणश्रेणिसाराः समीराः
सोऽयं मोदाय राजन्न भवति समयः कस्य पर्जन्यजन्यः ॥ ४०१ ॥

इत्यकालजलदवन्दिविनोद्यमानमनाः क्रीडाचलमेखलानिलयिनि दिग्वलयविलोकविलासनाम्नि धाम्नि समं सेवासमागतसमस्तसामन्तसमाजेन

---

आशारुधीत्यादि । घनागमे च अन्यत् कामे च यत् भुवनोत्सवो लोकानां महोत्सवो वर्तते तच्चित्रं आश्चर्यमेतत् । कथंभूते घनागमे । आशारुधि दिग्मण्डलानां रोधके । पुनः कथंभूते । मदप्राये हर्षोत्पादके अहंकारप्राये वा । पुनः कथंभूते । कमलानन्दनद्विषि कमलानन्दनस्य श्रीसूर्यस्य द्विषि शत्रुप्राये । अथवा कमलिनीतर्जके । कामे कथंभूते । आशारुधि तृष्णोत्पादके । पुनः कथंभूते । मदप्राये रेतःप्रचुरे । पुनः कथंभूते । कमलानन्दनद्विषि लक्ष्मीसमृद्धिद्वेषिणि । श्लेषोपमालंकारः ॥

किं च । रामा इत्यादि । हे राजन्, स जगत्प्रसिद्धः अयं प्रत्यक्षीभूतः पर्जन्यजन्यः मेघोत्पादकः समयः कालः कस्य पुरुषस्य मोदाय हर्षाय न भवति । अपि तु सर्वस्यापि मोदाय भवतीत्यर्थः । कथंभूतः स पर्जन्यजन्यः समयः । यस्मिन् मेघसमये रामाः स्त्रियः कामप्रकामाः कंदर्पपरिपूर्णा भवन्ति । यस्मिन् मेघसमये वाग्विवादाः.......... ...सुकविकृतिकथादोहदा भवन्ति सुकवीनां वा जिनसेनगुणभद्रपुष्पदन्तादीनां कृतयः काव्यानि तासु याः कथा रामायणादिचरित्राणि तासु दोहदा मनोरथा वर्तन्ते । यस्मिन् मेघसमये सौधोत्सङ्गाः राजमन्दिरोपरितनभूमयः सभोगाः इष्टस्रग्वनितादिसहिता भवन्ति । यस्मिन् मेघसमये दिगन्ता दिग्मण्डलानि तरुणतरुदलोल्लासकान्ताः तरुणाः प्रत्यग्रा ये तरवो वृक्षास्तेषां दलानि तेषामुल्लासैः प्रादुर्भावैः कान्ता मनोहरा भवन्ति । यस्मिन् मेघसमये समीराः स्पर्शनाः आसारवारिस्रवदनणुकणश्रेणिसाराः आसारो वेगवद्वर्षस्तस्य वारीणि तेभ्यः स्रवन्तः क्षरन्तः प्रसरन्तोऽनणवः स्थूला ये कणा जलचूर्णानि तेषां श्रेणिभिः साराः समग्राः ॥

वर्षर्तुश्रियं अनुभवन् क्वस्मिन् आसांचक्रे स्थितिं चकार । धाम्नि गृहे । कथंभूते धाम्नि । क्रीडाचलमेखलानिलयिनि क्रीडाचलः क्रीडापर्वतस्तस्य मेखला तटं तस्यां निलीयते तिष्ठतीत्येवंशीलं यद्धाम तत्तथा तस्मिन् । पुनः कथंभूते । दिग्वलयविलोकविलासनाम्नि

प्रवीरपुरुषपरिषत्परिवारितः पुष्करावर्तप्रमुखमेघमाननीयां वर्षर्तुश्रियं यावदहमनुभवन्सप्रमोदमासांचक्रे, तावत्संधिविग्रही 'देव, पञ्चालमण्डलपतेरचलस्य दुकूलनामा दूतः समागतः, तिष्ठति च प्रतीहारभूमौ' इति विज्ञाप्य प्रावेशयत् । उपावेशयच्च यथानिबन्धमाचरितोपचारं तदुचिते देशे । 'दूत, प्रदर्श्यतामसौ प्रभवे ते प्रभुप्रहितं प्राभृतम् । शासनहर, समर्प्यतां शासनम् ।' उभौ तथा कुरुतः । संधिविग्रही दूतदर्शनात्प्रत्यभिज्ञाय तन्नगरनिवासिना तापसव्यञ्जनेन जाबालनाम्ना 'अयं हि राजा गजवलप्रधानत्वादचिरादेव

---

दिग्वलयविलोकविलास इति नामाभिधानं यस्य धाम्नस्तत्तथा तस्मिन् । अहं कथमासांचक्रे । समं सार्धम् । केन समम् । सेवासमागतसमस्तसामन्तसमाजेन सेवायां पर्युपासनायां समागता उपढौकिता ये समस्ताः सामन्ता देशपतयो राजानस्तेषां समाजः समूहस्तेन तथोक्तेन । कथंभूतोऽहम् । प्रवीरपुरुषपरिषत्परिवारितः प्रवीराः प्रकर्षेण वीराः सहस्रभटलक्षभटकोटिभटा ये पुरुषाः पतयस्तेषां परिषत् सभा तया परिवारितो वेष्टितः । कथंभूतां वर्षर्तुश्रियम् । पुष्करावर्तप्रमुखमेघमाननीयाम् पुष्करावर्तनामा मेघविशेषः स प्रमुखः आदिर्येषां द्रोणमेघावर्तमेघसंवर्तमेघानां ते पुष्करावर्तप्रमुखास्ते च ते मेघा जलमुचस्तैर्माननीया पूजनीया पुष्करावर्तप्रमुखमेघमाननीया ताम् । तथा चोक्तम्—'मेघाश्चतुर्विधास्तेषां द्रोणाह्वः प्रथमो मतः । आवर्तपुष्करावर्तस्तुर्यः संवर्तकस्तथा ॥' कथं आसांचक्रे । सप्रमोदम् सहर्षं हर्षसहितं यथा भवत्येवम् ।..........

..............................................................

..............इतीति किम् । हे देव यशोधरमहाराज, पञ्चालमण्डलपतेः द्रौपदीसमुत्पत्तिस्थानदेशस्वामिनोऽचलस्य अचलनाम्नो नरेन्द्रस्य दुकूलनामा दूतः समागतो वर्तते । न केवलं समागतः, अपि तु प्रतिहारभूमौ सिंहद्वारे तिष्ठति च । न केवलं दूतं प्रावेशयेत्, उपावेशयच्च स्थापयामास । क्व उपावेशयत् । तदुचिते देशे । कथमुपावेशयत् । यथानिबन्धं राजादेशं यथा भवत्येवम् । कथंभूतं दूतम् । आचरितोपचारम् आचरित उपचारः पादपतनादिकं येन दुकूलेन स आचरितोपचारस्तम् । संधिविग्रही प्राह—हे दूत, असौ प्रभवे यशोधरमहाराजाय ते प्रभुप्रहितं तव स्वामिना प्रेषितं प्राभृतं सारं वस्तु प्रदर्श्यतां प्रकटीक्रियताम् । हे शासनहर हे लेखसमानायक, शासनं लेखः समर्प्यतां दीयताम् । उभौ दूतशासनहारौ तथा कुरुतः संधिविग्रहिणो वचनं तथैव चक्रतुः । अतीतकालसमीपवर्ती वर्तमानोऽतीतवद्भवति । संधिविग्रही यशोधरप्रधानदूतस्तं दुकूलं नाम दूतं एवं वक्ष्यमाणप्रकारेण अवादीज्जगाद । किं कृत्वा । पूर्वं दूतदर्शनात् इति प्रत्यभिज्ञाय इति स्मृत्वा । किं स्मृत्वा । तन्नगरनिवासिना अचलनगरनिवासिना तापसव्यञ्जनेन तापसवेषधारकेण जावालनाम्ना हैरिकेण यत्सूचितं तत् स्मृत्वा ।

भवद्भिः सह विजिघृक्षुव्यापारो वर्तते। तदत्र यदुचितं तदाचरितव्यम्' इति, प्रहितं गोलकार्थं निर्वर्ण्य च, पुरस्तान्निवेशितं प्रादेशनं शासनं च, 'अये, विग्रहाग्रहग्रहिल एव स महीपालः प्राभृततन्त्रमेतत्पत्रं च प्राहिणोत्। तथा-ह्यनयोर्मण्डलाग्रमुद्राङ्कितो वेष्टनचतुष्टयनिष्टङ्कितश्च बहिःप्रकाशः संनिवेशः। तदलमनेन विषमविषदोषकालुष्यवितर्ककर्कशावेशेनोपायनेन, शत्रुयशःप्रकाशपिशुनेन चानेन विलोकितेन लेखेन। श्रूयते हि किल—मणिकरण्डकविन्यस्तवपुषा कृत्रिमेणाशीविषविषधरेण धिषणो दुर्धर्षम्, देवा-

---

इतीति किम्। अयं अचलनामको राजा हि निश्चयेन भवद्भिः सह विजिघृक्षुव्यापारो वर्तते विग्रहं कर्तुमिच्छति। कस्मात् (कदा)। अचिरादेव शीघ्रमेव। कस्मात्। गजवलप्रधानत्वात् हस्तिसैन्यवहुलत्वात्। तत्तस्मात् कारणात् अत्र अस्मिन् दूते पञ्चालपतौ वा यत् उचितं तद् आचरितव्यम्। न केवलं जावालकथितं प्रत्यभिज्ञाय, अपि तु प्रहितं गोलकार्थं लोहगोलकहेतुं निर्वर्ण्य पर्यालोच्य च। न केवलं गोलकार्थं निर्वर्ण्य अवादीत्, किं तु पुरस्तादग्रतः निवेशितमुपढौकितं प्रादेशनं प्राभृतं शासनं च लेखं च निर्वर्ण्य। अये क्रोधे विषादे च। खेदं कृत्वा ब्रूते। संधिविग्रही किं ब्रूते—स महीपालः अचलनामक एतत्प्रत्यक्षीभूतं प्राभृततन्त्रं प्रधानं प्राभृतं पत्रं च यत् प्राहिणोत् प्रेषितवान् तेनैव मया ज्ञायते विग्रहाग्रहग्रहिल एव संग्रामकरणनिर्वन्धेन ग्रथिल एव वर्तते। तथाहि अनयोर्लेखप्राभृतयोर्मध्ये लेखः कीदृशो वर्तते। मण्डलाग्रमुद्राङ्कितः खड्गमुद्रया सहितः। पुनः कथंभूतो लेखः। वेष्टनचतुष्टयनिष्टङ्कितश्च चतुर्भिर्वेष्टनैरुपन्यस्तः। वेष्टित इत्यर्थः। चतुरङ्गसैन्येन त्वामहं वेष्टयामीत्यभिप्रायः। खड्गेन च शिरश्छेदं करिष्यामि इत्यभिप्रायः। पुनः कथंभूतो लेखः। वहिःप्रकाशः वाह्ये अर्थसूचकः। पुनः कथंभूतो लेखः। संनिवेशः सन् विद्यमानो वेशः स्थितिर्यस्य स संनिवेशः। संधिविग्रही किं कृत्वा पूर्वमवादीत्। इति ईदृशमर्थमनुध्याय चिन्तयित्वा। इतीति किम्। तत्तस्मात् कारणात् अनेन उपायनेन प्राभृतेन अलं पूर्णम्। कथंभूतेन उपायनेन। विषमविषदोषकालुष्यवितर्ककर्कशावेशेन विषमं अप्रीतिकरं यद्विषं हालाहलं तस्य दोषः तेन कालुष्यवितर्ककर्कशः कलुषताविचारकठिनः आवेशोऽभिप्रायो यस्मिन्नुपायने तेनालम्। अनेन प्रत्यक्षीभूतेन लेखेन विलोकितेन वाचितेनापि अलम्। कथंभूतेन लेखेन। शत्रुयशःप्रकाशपिशुनेन शत्रोरचलमहाराजस्य यशसः पुण्यगुणानुकीर्तनस्य प्रकाशपिशुनेन उद्भावकथनेन। हि यस्मात् कारणात्। किलेति लोकोक्तावरुचौ वा। श्रूयते आकर्ण्यते। धिषणोनाम राजा आशीविषविषधरेण दंष्ट्राविषसर्पेण दुर्धर्षं नाम राजानं जघान हतवान्। कथंभूतेन आशीविषविषधरेण। मणिकरण्डकविन्यस्तवपुषा मणिकरण्डके विन्यस्तमारोपितं वपुः शरीरं येन स तथा तेन। पुनः कथंभूतेन। कृत्रिमेण विज्ञानोत्पादितेन। तथा श्रूयते—कणपो नाम राजा कृपाणनाम

ङ्गवस्त्रवासनिषेकेण च स्पर्शविषेण कणपः कृपाणं राजानं जघान' इत्यनुध्याय, 'को हि नाम धीमाञ्शस्त्रव्यापारसमाधौ द्विषद्व्याधौ मृदुनोपायेन भिषज्येत्' इति च विचिन्त्य ससौष्ठवं तं दूतमेवमवादीत्—

'नासोद्वासनमार्गमुण्डनशिखामाल्लूरबन्धक्रमः
कण्ठे शीर्णशरावदामकलनं कात्रेयकारोहणम् ।
दूतान्यश्च न ते निकारपरुषः कोऽप्यत्र कार्यो विधि-
स्तत्स्वस्थो वद वाचिकं निजपतेर्लेखस्त्वयं तिष्ठतु' ॥ ४०२ ॥

अपि च—को नु खलु विचारचतुरचेताः पर्याप्तशौर्यस्रोता वा

---

राजानं स्पर्शविषं तत् देवाङ्गवस्त्रवासनिषेकः परिमलमोचनं यस्य यस्मिन् वा स्पर्शविषे तत् देवाङ्गवस्त्रवासनिषेकं तेन जघान हतवान्। पुनश्च किं कृत्वा पूर्वं संधिविग्रही दूतमवादीत्। इति च विचिन्त्य । इतीति किम् । हि यस्मात् कारणात् । नामेति संभावनायाम् । को धीमान् द्विषद्व्याधौ शत्रुव्याधौ मृदुना कोमलेन लेपादिना उपायेन भिषज्येत् प्रतिकुर्यात् । चिकित्सेत् इत्यर्थः । कथंभूते द्विषद्व्याधौ । शस्त्रव्यापारसमाधौ शस्त्रव्यापारेण शस्त्रपातेन समाधिरुपशमो यस्य द्विषद्व्याधेः स तथा तस्मिन् । संधिविग्रही कथमवादीत् । ससौष्ठवम् व्यक्तवचनं यथा भवत्येवमवादीदित्यर्थः ॥

**नासोद्वासनेत्यादि** । हे दूत, अन्यः कोऽपि विधिः निकारपरुषः परिभवकर्कशः ते तवात्र न कार्यः । तत्तस्मात् कारणात् स्वस्थः निःशङ्कः सन् निजपतेः वाचिकं संदेशं वद कथय। अयं लेखस्तु तिष्ठतु आस्ताम्। चेदन्यो विधिर्न कार्यः। तर्हि को विधिः कार्यः। एकस्तावत् नासोद्वासनमार्गमुण्डनशिखामाल्लूरबन्धक्रमः नासोद्वासनं नासिकाच्छेदनम्, मार्गमुण्डनं च क्षुरप्रेण पट्टिकारक्षणपूर्वकं मुण्डनं वपनम्, शिखामाल्लूरबन्धश्च शिखानां चूडानां बिल्वफलबन्धनम्, एतेषां त्रयाणां कर्मणां क्रम अनुक्रमस्तथोक्तः कण्ठे ग्रीवायां शीर्णशरावदामकलनं शीर्णानां शटितानां शरावाणां मृत्तिकाकपालानां दाम्नो मालायाः कलनं बन्धनं ते च भविष्यन्ति । तथा कात्रेयकारोहणं तव करणीयम् । अन्यश्च निकारपरुषो विधिरस्माभिर्न कर्तव्यः । समुच्चयालंकारः ॥

कदाचिदिति पूर्वोक्तं ग्राह्यम्। कदाचित् वीराणां सुभटानां वचांसि वचनानि आकर्णयांचकार। आकर्णितवानित्यर्थः। कथंभूतानां वीराणाम्। इति अमुना प्रकारेण संधिविग्रहिणः यशोधरस्य मुख्यदूतस्यैतद्वचनात् तथा तेनैव प्रकारेण विदितदूतहृदयानां विज्ञातदूताभिप्रायाणाम्। इतीति किम्। अपि च पुनरर्थे। कः पुमान्। नु इति वितर्के। खलु वाक्या-

---

१. 'देवाङ्गवस्त्रवासनिषेकेण जघान। कथंभूतेन देवाङ्गवस्त्रवासनिषेकेण। स्पर्शविषेशेण' इत्येवं योजनोचिता. २. मूले तु 'आकर्णयांबभूव' इत्युपलभ्यते.

यथार्थवादोचिते दूते विकुर्वीत। यतो दूतोदितसूत्राणि खलु महीपतीनां व्यवहारतन्त्राणि प्रवर्तन्ते, दूतायत्तप्रभवाश्च संधिविग्रहयानासनसंश्रयद्वैधीभावाः। पर्याप्तमथवात्र पर्यनुयोगानुसारेण। विदित एव तवेङ्गिताकाराभ्यां भवद्भर्तुरभिप्रायः। देवश्चैष यदियन्ति दिनानि तस्मिन्समाचरितबहुचापलेऽप्यचले गजोन्मीलनवृत्तिं बिभरांबभूव किल। तत्र तदीयाम्नायजन्मभिर्भूमिपतिभिश्चिराय पुराचरितातीतपरमेश्वरचरणाराधनानिबन्धनम्। इदानीं च यदि स्वयमेव देवस्य प्रतापानलज्वालासु शलभशालिनीं श्रियमाश्रयितुमिच्छति, तदासौ सिंहसटाचामरैरिव विलसितुम् आशीविष-

---

लंकारे निश्चये वा। विचारचतुरचेताः विचारेण पर्यालोचनेन चतुरं विचक्षणं चेतो मनो यस्य स तथाभूतो दूते विकुर्वीत वितथी कुर्यात्। न केवलं विचारचतुरचेताः, अपि तु पर्याप्तं परिपूर्णं शौर्यस्य स्रोतः प्रवाहो यस्य स तथा। परिपूर्णसुभटतासहित इत्यर्थः। कथंभूते दूते। यथार्थवादोचिते यथार्थवादेन सत्यवचनेन उचितो योग्यः स तथा तस्मिन्। को विकुर्वीत। अपि तु न कोऽपि। यतो यस्मात् कारणात् दूतोदितसूत्राणि दूतैरुदितानि सूत्राणि सूचनवचनानि येषु व्यवहारतन्त्रेषु तानि व्यवहारतन्त्राणि व्यवहारप्रवर्तनानि खलु महीपतीनां प्रवर्तन्ते। संधिविग्रहयानासनसंश्रयद्वैधीभावाः दूतायत्तप्रभवाः दूताधीनोत्पत्तयो भवन्ति। संधिश्च मेलापकः, विग्रहश्च संग्रामः, यानं च सेनयाभिगमनम्, आसनं च दुर्गसंवेष्टनस्थितिः, संश्रयश्च दुर्गाश्रयविधानम्, द्वैधीभावश्च संधिविग्रहद्वयम्, ते तथा। अथ वा पर्यनुयोगानुसारेण शत्रुवचनपृच्छाकरणेन अत्र पर्याप्तं परिपूर्णम्। किमिति पर्याप्तम्। यतो विदित एव मया ज्ञात एव। काभ्यां ज्ञातः। तवेङ्गिताकाराभ्याम् इङ्गितं च अन्यथाकृतिः, आकारश्च नेत्रवक्त्रविकारादिलक्षणः इङ्गिताकारौ ताभ्यां भवद्भर्तुरभिप्रायश्छन्दः मया ज्ञात एव। देवश्च यशोधरमहाराज एष तव प्रत्यक्षीभूतः यत् इयन्ति एतत्परिमाणानि दिनानि तस्मिन् अचले तव राजनि। कथंभूते। समाचरितबहुचापलेऽपि संविहितबह्वपराधेऽपि गजोन्मीलनवृत्तिं अवधीरणां बिभरांबभूव धारितवान्। किल हेतौ। तत्र तस्यां गजोन्मीलनवृत्तौ तदीयाम्नायजन्मभिरचलस्य आम्नाये वंशे जन्म येषां ते तदीयाम्नायजन्मानस्तैः भूमिपतिभिरचलपूर्वैश्च नृपतिभिश्चिराय दीर्घकालं पुरा आचरितं कृतं अतीतपरमेश्वरस्य यशोर्घयशोबन्धुरादेर्नरेन्द्रस्य चरणाराधना चरणकमलसेवा निबन्धनं कारणम्। इदानीं च यदि चेत् स्वयमेव देवस्य यशोधरमहाराजस्य प्रतापानलज्वालासु शलभशालिनीं पतङ्गवत् शोभाशीलां श्रियं राज्यलक्ष्मीं आश्रयितुमिच्छति, तदा तस्मिन् काले असौ अचलः सिंहसटाचामरैः विलसितुं

---

१. 'रागेण' सटीकपुस्तकपाठः.

विषधरशिरोमणिभिरिव मण्डनं कर्तुम् मदान्धसिन्धुरदन्तवलयमिव नखैरुल्लेखितुम् प्रलयकालानलमिव पाणिपल्लवेन निवारयितुम् मकराकरमिव बाहुभ्यां तरितुम् गगनमिव फालेन लङ्घयितुम् मन्दरमिव करतलेन तोलयितुम् महेश्वरपरशुमिवादर्शतां नेतुम् आदिवराहदंष्ट्रामुक्ताफलमिव चाभरणायाक्रष्टुमभिलषति। यतो निजराष्ट्रकण्टकोत्पाटनदुर्ललितबाहुबलः संप्रत्यद्यापि न जानात्यसावचलः परमेश्वरस्य विक्रमविलसितानि, यान्येवं स्वयं विनोदत्याश्चर्यशौर्यसंरम्भपुलकितवपुर्निजानुजव्याजस्फुटितविदारितहिरण्यकशिपुः सुरपतिर्वीरक्षत्रियकथावतारेषु। तथा हि—

वैकुण्ठः कुलकीर्तनं कलमभूर्दर्भप्रगल्भाङ्गुलि-
र्न स्त्री नैव पुमानुमापतिरयं चन्द्रो निशासेवकः।

---

चमरवीजनानि कारयितुमिवाभिलषति। आशीविषविषधरशिरोमणिभिर्दंष्ट्राविषसर्पफणारत्नैर्मण्डनं भूषणं कर्तुमिवाभिलषति। मदान्धगन्धसिन्धुरदन्तवलयं मदोन्मत्तगन्धेभरदनमण्डलं नखैरुल्लेखितुमुत्पाटयितुमिवाभिलषति। प्रलयकालानलं कल्पान्तकालवैश्वानरं पाणिपल्लवेन करकिसलयेन निवारयितुमिवाभिलषति। मकराकरं महासमुद्रं बाहुभ्यां तरितुं तरितं कर्तुमिवाभिलषति। गगनं फालेन प्लुत्यगमनेन लङ्घयितुमिवाभिलषति। मन्दरं करतलेन तोलयितुं कलयितुमिवाभिलषति। महेश्वरपरशुं महादेवकुठारं आदर्शतां दर्पणतां नेतुं प्रापयितुमिवाभिलषति। आदिवराहदंष्ट्रामुक्ताफलं मौक्तिकमाभरणाय आक्रष्टुमाकर्षणं कर्तुमिवाभिलषति। यतो यस्मात् कारणात् निजराष्ट्रकण्टकोत्पाटनदुर्ललितबाहुबलः स्वकीयराष्ट्रक्षुद्रशत्रुनिर्मूलननिर्वीर्यभुजबलस्तव स्वामी अचलः संप्रति वर्तमानकाले परमेश्वरस्य श्रीयशोधरमहाराजस्य विक्रमविलसितानि पराक्रमस्फुरितानि असौ अद्यापि इदानीमपि न जानाति, यानि श्रीयशोधरमहाराजविक्रमविलसितानि एवममुना प्रकारेण पुरपतिर्देवेन्द्रः स्वयं निजश्रीमुखेन विनोदति प्रशंसति। केषु विनोदति। वीरक्षत्रियकथावतारेषु संग्रामादनिवर्तकराजपुत्रवार्ताप्रस्तावेषु। कथंभूतः सुरपतिः। आश्चर्यशौर्यसंरम्भपुलकितवपुः आश्चर्यं त्रैलोक्ये चमत्कारकं यच्छौर्यं सौभव्यं तस्य संरम्भेण आरम्भेण पुलकितं रोमाञ्चकञ्चुकितं वपुः शरीरं यस्य स तथोक्तः। पुनः कथंभूतः सुरपतिः। निजानुजव्याजस्फुटितविदारितहिरण्यकशिपुः निजानुजेन श्रीनारायणेन व्याजेन छलेन स्फुटितेन स्तम्भनिर्गमनेन विदारितो नखैर्द्विधाकृतो हिरण्यकशिपुनामा दैत्यविशेषः प्रह्लादजनकः स तथोक्तः॥

तथा हि। तदेव निरूपयति—वैकुण्ठ इत्यादि। अरे दूत, यस्य यशोधरमहारा-

---

१. मूले तु नोपलभ्यते,

हेलिः केलिसरोजबन्धुरनिलः क्रीडाश्रमे चाटुमा-
न्यस्येत्थं गणनामरेषु विजयी तस्याहवे कोऽपरः ॥ ४०३ ॥

अपि च ।

याः पूर्वं रणरङ्गसंगमभुवो यस्यासिधारापयः-
पातप्रेतसपत्नसंततिशिरःश्रेणिश्रिताः क्षीणताम् ।
याताः क्लृप्तकपालिभूषणभरारम्भाः पुनस्ता मुहु-
र्जायन्तां त्वदनीककीकसजुषः पूर्वश्रियोऽस्याहवे' ॥ ४०४ ॥

इति संधिविग्रहिणः, तथैतद्वचनाद्विदितदूतहृदयानाम् अपरिमितकोपप्रसरावधीरिताप्तपुरुषालापार्गलानाम् ससंरम्भमन्योन्यसंघट्टत्रुटत्कोटीरकोटिघ-

---

जस्य इत्थममुना प्रकारेण अमरेषु देवेषु गणना मान्यता वर्तते, तस्य यशोधरस्य आहवे संग्रामे कः पुमान् अपरो अन्यो विजयी जयवान् वर्तते । इत्थं कथमिति चेत्—वैकुण्ठः श्रीनारायणः कुलकीर्तनं भट्टो वर्तते । कमलभूर्ब्रह्मा दर्भप्रगल्भाङ्गुलिः । पुरोहितो वर्तत इत्यर्थः । उमापतिः न स्त्री नैव पुमान् । नपुंसक इत्यर्थः । अयं चन्द्रो निशासेवको रात्रौ सेवां करोति । हेलिः श्रीसूर्यः केलिसरोजबन्धुर्वर्तते क्रीडाकमलविकाशको भवति । अनिलो वायुदेवता क्रीडाश्रमे वनितानां रमणखेदे चाटुमान् प्रियं कृत्वा स्तुतिं करोति खेदं विनाशयति । अतिशयालंकारः ॥

अपि च । याः पूर्वमित्यादि । याः रणरङ्गसंगमभुवः संग्रामाङ्गणसंगमभूमयः पूर्वं पूर्वस्मिन् काले यस्य यशोधरस्य असिधारापयःपातप्रेतसपत्नसंततिशिरःश्रेणिश्रिताः असेः खड्गस्य धारा अग्रभागः तस्यां यत्पयो जलं तस्य पातः तत्र निमज्जनं प्रेतानां मृतानां सपत्नानां शत्रूणां संततयः समूहास्तासां शिरःश्रेणयो मस्तकानां आवलयस्ताभिः श्रिताः संयुक्ता जातास्ता रणरङ्गसंगमभुवः क्षीणतां शून्यतां याताः रिक्ता बभूवुः । कस्मात् शून्यतां याताः तत्कारणगर्भितं विशेषणमाह—कथंभूता रणरङ्गसंगमभुवः । मुहुः पुनरपि अस्य यशोधरस्य आहवे संग्रामे तदनीककीकसजुषः अचलसेनामृतानां वीराणां कीकसजुषः अस्थिमज्ञः सत्यः पूर्वश्रियः शिरःश्रेणिश्रिता जायन्तां भवन्तु । हेत्वलंकारः ॥

न केवलं संधिविग्रहिणो वचांस्याकर्णयांबभूव, तथा तेनैव प्रकारेण संधिविग्रहिणो वचनाकर्णनप्रकारेण वीराणां वचांस्याकर्णयांबभूवाहमाकर्णितवान् । कथंभूतानां वीराणाम् । एतद्वचनात् संधिविग्रहिवचनात् विदितदूतहृदयानां विदितं ज्ञातं दूतस्य दुकूलनाम्नः हृदयमभिप्रायो यैस्ते तथा तेषाम् । पुनः कथंभूतानां वीराणाम् । अपरिमितकोपप्रसराव-

---

१. 'तदनीक' स्यात्.

टितमाणिक्यनिकरकीर्णतया स्वकीयावलेपानलस्फुलिङ्गज्वलितमिव कुट्टिमतलं कुर्वताम् इतस्ततः समुच्छलितापतन्मुक्ताफलप्रकराभिरारसनहारयष्टिभिरागामिजन्यजयसमयावसरसुरसुन्दरीकरविकीर्णकुसुमवर्षमिव प्रकाशयतां वीराणां चान्योन्यालापालोकनव्याजेन वचांस्याकर्णयांबभूव । तथा हि—तत्र तावत्कोदण्डमार्तण्डः साटोपं सपत्नवंशविनाशपिशुनभ्रुकुटिभङ्गनिर्भरभालस्वेदजलेन ज्यां मार्जयन् हस्तग्राहं तं दूतमेवमभाषिष्ट—

'श्रीपदं मित्रपक्षाणां खरदण्डं च विद्विषाम् ।
देवस्यास्य पदाम्भोजद्वयं शिरसि धार्यताम् ॥ ४०५ ॥

---

धीरिताप्तपुरुषालापार्गलानाम् अपरिमितोऽपर्यन्तो योऽसौ कोपप्रसरः क्रोधव्याप्तिस्तेन अवधीरितमवगणितं आप्तपुरुषालापार्गला गुरुवचनानां निषेधवचनपरिघा यैस्ते तथा तेषाम् । किं कुर्वतां वीराणाम् । ससंरम्भं सक्रोधं अन्योन्यसंघट्टत्रुटत्कोटीरकोटिघटितमाणिक्यनिकरकीर्णतया स्वकीयावलेपानलस्फुलिङ्गज्वलितमिव कुट्टिमतलं कुर्वताम् ससंरम्भमन्योन्यं संघट्टेन संचलनेन त्रुटन्ति छिन्नानि भवन्ति यानि कोटीरकोटिघटितमाणिक्यानि तेषां निकरः समूहः तस्य कीर्णतया विक्षिप्ततया स्वकीयो निजो योऽसाववलेपो मदः कोपो वा स एवानलस्तस्य स्फुलिङ्गास्तैर्ज्वलितमिव कुट्टिमतलं बद्धभूमिं कुर्वतां विदधताम् । पुनश्च किं कारयतां वीराणाम् । इतस्ततः समुच्छलितापतन्मुक्ताफलप्रकराभिरारसनहारयष्टिभिरागामिजन्यजयसमयावसरसुरसुन्दरीकरविकीर्णकुसुमवर्षमिव प्रकाशयताम् इतस्ततो यत्र तत्र समुच्छलिता उत्पतिता आपतन्त आगच्छन्तो मुक्ताफलप्रकरा यासां तास्तथा ताभिः ईदग्विधाभिरारसनहारयष्टिभिः आरसना आगुल्फलम्बा या हारयष्टयस्ताभिः कृत्वा आगामी आगमिष्यन् योऽसौ जन्यजयसमयः संग्रामजयसमयस्तस्यावसरेषु सुरसुन्दरीकरैः विकीर्णो विक्षिप्तो योऽसौ कुसुमवर्षः वर्तते तं प्रकाशयतामिव । केन कृत्वा वीराणां वचांस्याकर्णयांबभूव । अन्योन्यालापालोकनव्याजेन अन्योन्यस्य परस्परस्य ये वीराणामालापा आभाषणानि तेषां आलोकनव्याजेन विलोकनमिषेण । तथा हि तान्येव वचांसि निरूपयति—तत्र तेषु वीरेषु मध्ये तावत्पूर्वमेवानुक्रमेण कोदण्डमार्तण्डो नाम सुभटः साटोपं साडम्बरं यथा भवत्येवं तं दूतं संदेशहरं हस्तग्राहं हस्तेन गृहीत्वा । हस्तार्थग्रहचनिवृतां (?) कार्थे णमू । एवं वक्ष्यमाणप्रकारेण अभाषिष्ट भाषते स्म । कोदण्डमार्तण्डः किं कुर्वन् । सपत्नवंशविनाशपिशुनभ्रुकुटिभङ्गनिर्भरभालस्वेदजलेन ज्यां मार्जयन् सपत्नानां शत्रूणां वंशस्य विनाशो मोटनं तेन पिशुनभ्रुकुटिभङ्गं यथा स्यात्तथा निर्भरं गाढं यद्भालं ललाटं अलिकम् । अलिकं गोधिरिति यावत् । तस्य स्वेदजलेन प्रस्वेदोदकेन ज्यां धनुषः प्रत्यञ्चां चापसिञ्जिनीं मार्जयन् शोधयन् । उल्लासयन्नित्यर्थः ॥

**श्रीपदमित्यादि ।** हे दुकूल, अस्य देवस्य पदाम्भोजद्वयं शिरसि धार्यतां

नो चेत्कोदण्डमार्तण्डकाण्डखण्डितमस्तकः।
यास्यत्याजौ स ते स्वामी रुण्डताण्डवडम्बरम्' ॥ ४०६ ॥

परशुपराक्रमः सावर्ष्यं पाणिना परश्वधं निर्नेनिजानस्तथैव—

'हठविलुठितमौलिः पादपीठोपकण्ठे
न भवति शठवृत्त्या मत्पतेर्यः सपत्नः।
जयजरठितमूर्तिर्मामकस्तस्य तूर्णं
रणशिरसि कुठारः कण्ठपीठीं छिनत्ति' ॥ ४०७ ॥

मुद्गरप्रहारः सावष्टम्भं करतलेन मुद्गरमुत्सञ्जयन्—'अहो दूत, निवेदयेयं मद्वचनं तस्य सकलदुराचारलोकहेठस्य प्रक्षरल्लक्ष्मीसमागमोत्कण्ठस्य।

---

ध्रियताम्। कथंभूतं पदाम्भोजद्वयम्। मित्रपक्षाणां सुहृदां श्रीपदं लक्ष्मीमन्दिरम्, विद्विषां शत्रूणां खरदण्डं खरस्तीव्रो दण्डो यत्र तत् खरदण्डं च। नो चेत् यद्यचलः शिरसि न धारयिष्यति तर्हि स जगत्प्रसिद्धस्ते तव स्वामी अचल आजौ संग्रामे रुण्डताण्डवडम्बरं यास्यति कवन्धबाहुदण्डनर्तनाटोपं प्राप्स्यति। कथंभूतः सन्। कोदण्डमार्तण्डकाण्डखण्डितमस्तकः कोदण्डमार्तण्डनाम सुभटस्य काण्डेन वाणेन खण्डितमस्तकः छिन्नोत्तमाङ्गः सन्। वीररसप्रधानो जात्यलंकारः ॥

परशुपराक्रमः परशुपराक्रमनामा सुभटः सावर्ष्यं सासूयं तथैव तेनैव कोदण्डमार्तण्डप्रकारेण हस्तग्राहं हस्तग्रहणपूर्वकं दुकूलनामानं दूतं अभाषिष्ट। पाणिना परश्वधं कुठारं निर्नेनिजानः परिमार्जयन्। किं अभाषिष्ट इत्याह—**हठविलुठितेत्यादि**। यः सपत्नः मत्पतेर्यशोधरस्य पादपीठोपकण्ठे सिंहासनसमीपे शठवृत्त्या हठविलुठितमौलिर्भूमौ नमितमस्तको न भवति, तस्य सपत्नस्य मामको मदीयः कुठारः रणशिरसि संग्राममस्तके कण्ठपीठीं प्रशस्तां ग्रीवां छिनत्ति द्विधा करोति। कथंभूतो मम कुठारः। जयजरठितमूर्तिः जयेन संग्रामविजयेन जरठिता कठिना मूर्तिः स्वरूपं यस्य स तथोक्तः। जात्यलंकारः ॥

मुद्गरप्रहारः सुभटः सावष्टम्भं सक्रोधं यथा भवत्येवं करतलेन मुद्गरं लोहघनं उत्सञ्जयन् उल्लासयन् एवमभाषिष्ट। एवं कथमिति चेत्—अहो दूत, तस्य अचलस्येदमेतत् मद्वचनं निवेदय त्वं कथय। कथंभूतस्याचलस्य। सकलदुराचारलोकहेठस्य सकलदुराचारलोकानां पापाचारजनानां हेठस्य। पुनः कथंभूतस्य प्रक्षरल्लक्ष्मीसमागमोत्कण्ठस्य प्रक्षरन्ती प्रणश्यन्ती लक्ष्मीसमागमस्योत्कठा वाञ्छा यस्य स तथोक्तस्तस्य। किं निवे-

---

१. मूले टीकायां च 'सावज्ञं' इति स्यात्.

कपटभटविभीषाचेष्टितैर्नो बिभीयां
तदलमिह मुधोर्जावर्जनस्फूर्जितेन।
यदि सुभटघटायां त्वं पटिष्ठप्रतिष्ठः
सपदि मम रणाग्रे मुद्गरस्याग्रतः स्याः' ॥ ४०८ ॥

करवालवीरः सक्रोधः करेण करवालं तरलयन्—'अध्वग, साध्ववधार्यताम्।

अखर्वगर्वदुर्वारवीर्यपर्यस्तमानसः।
मदीयस्वामिसेवासु यः कोऽपि हतसाहसः॥ ४०९ ॥

विपक्षपक्षक्षयपक्षदीक्षः कौक्षेयको मामक एष तस्य।
रक्षांसि वक्षःक्षतजैः क्षरद्भिः प्रतीक्षतेऽक्षुण्णतया रणेषु' ॥ ४१० ॥

(युग्मम्)

---

दयामीति चेत्—कपटभटेत्यादि। अहो दुकूल मन्त्रिन्, कपटभटविभीषाचेष्टितैः मिथ्यासुभटघातकक्रियाभिः नो विभीयां अहं मुद्गरप्रहारो न बिभेमि। तत्तस्मात् कारणात् इह अस्मिन् मुद्गरप्रहारे मुधोर्जावर्जनस्फूर्जितेन मुधा अन्तर्गड्डुना ऊर्जाया बलस्य आवर्जनस्फूर्जितेन आदरस्फुरणेन अलं पूर्णम्। यदि चेत् सुभटघटायां सुभटानां समूहे त्वं भवानचलः यदि पटिष्ठप्रतिष्ठः अतिशयेन पटुतरशोभो वर्तसे, तर्हि सपदि शीघ्रं मम मुद्गरस्य लोहघनस्य अग्रतो मुखे रणाग्रे स्यास्त्वं भव। वीररसप्रधानो जात्यलंकारः॥

करवालवीरः सुभटः सक्रोधः करेण करवालं खड्गं तरलयन् कम्पयन् अभाषिष्ट—हे अध्वग हे दुकूल, साधु सावधानतया अवधार्यतां श्रूयताम्—अखर्वगर्वेत्यादि। हे दूत, मदीयस्वामिसेवासु यशोधरचरणाराधनेषु यः कोऽपि पुमान् हतसाहसो भग्नोद्यमः। यः कथंभूतः। अखर्वगर्वदुर्वारवीर्यपर्यस्तमानसः अखर्वो गुरुतरो योऽसौ गर्वः दुर्वारं च तद्वीर्यं ताभ्यां पर्यस्तं पतितं मानसं चित्तं यस्य स तथोक्तः। तस्य पुरुषस्य एष प्रत्यक्षीभूतो मामको मदीयो कौक्षेयकः खड्गो वक्षःक्षतजैः हृदयरुधिरैः क्षरद्भिः प्रवहद्भिः रणेषु अक्षुण्णतया परिपूर्णतया रक्षांसि राक्षसान् प्रतीक्षते पूजयति। प्रीणातीत्यर्थः। कथंभूतः कौक्षेयकः। विपक्षपक्षक्षयदक्षदीक्षः विपक्षाणां शत्रूणां पक्षक्षये कुलक्षये दक्षा समर्था दीक्षा व्रतधारणं यस्य स तथोक्तः। वीररसप्रधानो जात्यलंकारः॥

---

१. मूलपुस्तके तु 'एवं' इत्युपलभ्यते.

नाराचवैरोचनः सावेगं नाराचपञ्जरमवलोकमानः—

'पथिक कथय नाथस्यात्मनस्त्वं सभाया-
मसमसमररङ्गे राक्षसोत्तालतालम्।
यदि तव विशिखाग्रैश्छिन्नमुण्डं न रुण्डं
नटनपटु विदध्यां तत्कृशानुं विशामि' ॥ ४११ ॥

चक्रविक्रमः साक्षेपं चक्रं परिक्रमयन्—'अहो वेदवैवधिक, शीघ्रमेवं प्रशाधि पञ्चालाधिपतिम्—

दुर्गं मार्गय याहि वा जलनिधेरुत्तीर्य पारं परं
पातालं विश खेचराश्रयवशस्त्वं वा भव क्षिप्रतः।
नो चेद्वैरिकरीन्द्रकुम्भदलनव्यासक्तरक्तं मुहु-
र्मुक्तं चक्रमकालचक्रमिव ते मूर्ध्नि प्रपाति ध्रुवम्' ॥ ४१२ ॥

---

नाराचवैरोचनः सुभटः सावेगं सक्रोधं नाराचपञ्जरं लोहबाणभस्त्रमवलोकमानोऽभाषिष्ट। किं अभाषिष्ट—हे पथिक हे दुकूल दूत, कथय निरूपय। कस्य। आत्मनो नाथस्य त्वं कथय। सभायां सभामध्ये। किं कथय। असमसमररङ्गे अद्वितीयसंग्रामभूमौ विषमसंग्रामभूमौ वा यदि चेत् तव अचलस्य रुण्डं कबन्धं शिरोरहितकायं नटनपटु नृत्यचतुरं न विदध्याम् अहं न करोमि, तर्त्तर्हि कृशानुं वैश्वानरं विशामि दहनप्रवेशं करोमि। कथंभूतं तव रुण्डम्। विशिखाग्रैर्मम नाराचमुखैश्छिन्नमुण्डं पतितमस्तकम्। कथंभूतं रुण्डम्। राक्षसोत्तालतालम्। राक्षसानां उत्ताला द्रुता ताला करताडनक्रियामानम्। जात्यलंकारः॥

चक्रविक्रमो वीरः साक्षेपं सनिर्भर्त्सनं चक्रं परिक्रमयन् भ्रमिलं भ्रामयन् अभाषिष्ट—अहो वेदवैवधिक अविज्ञातवेदार्थस्वरूपत्वात् अहो वेदभारवाहक जडब्राह्मण, शीघ्रमाशु एवं अमुना प्रकारेण पञ्चालाधिपतिम् अचलं प्रशाधि त्वं शिक्षय कथय। किं प्रशाधि—दुर्गमित्यादि। हे अचल, त्वं दुर्गं मार्गय निजरक्षार्थं पर्वतजलवनादिकं विषमस्थानं विलोकय। वा अथवा जलनिधेः समुद्रस्य परं पारं तीरं उत्तीर्य उल्लङ्घ्य याहि त्वं गच्छ। वा अथवा पातालं रसातलं विश प्रवेशं कुरु। वा अथवा क्षिप्रतः शीघ्रं खेचराश्रयवशः विद्याधरलोकपराधीनस्त्वं भवान् भव संजायस्व। चेद्यदि त्वं एवं नो करिष्यसि तर्हि मम चक्रं अकालचक्रमिव ते तव मूर्ध्नि मस्तके ध्रुवमिति निश्चयेन प्रपाति प्रपतिष्यति। 'भविष्यति गम्यादयः' इन् शब्दो भविष्यदर्थे। कथंभूतं चक्रम्। वैरिकरीन्द्रकुम्भदलनव्यासक्तरक्तम् वैरिणां करीन्द्राणां कुम्भदलनेन शिरःपिण्डखण्डनेन

कुन्तप्रतापः सकोपं कुन्तमुत्तोलयन्—'द्विजापसद, सविशेषं निशम्यताम्। यः कोऽपि दौरात्म्याद्देवसेवासूयहृदयः

ऋजुः सुवंशोऽपि मदीय एष कुन्तः शकुन्तान्तकतर्पणाय।
निर्भिद्य वक्षःपिठरप्रतिष्ठां तस्यासृजाजन्यभुवं बिभर्ति' ॥ ४१३ ॥

लाङ्गलगरलः सोल्लुण्ठालापं लाङ्गलमुदानयमानः—'हे धीराः, कृतं भवतां समरसंरम्भेण। यस्मादिदमेकमेव

त्रुटदतनुशिरान्ताः कीर्णकृत्तिप्रतानाः
क्षरदविरलरक्तस्फारधारासहस्राः।
स्फुटदटनिकठोरष्टाकृतास्थीः समीके
मम रिपुहृदयालीर्लाङ्गलं लेलिखीति' ॥ ४१४ ॥

---

व्यासक्तं लग्नं रक्तं रुधिरं यत्र चक्रे तत्तथोक्तम्। पुनः कथंभूतं चक्रम्। मुहुर्मुक्तं वारंवारं प्रेरितम्। वीररसप्रधानो जात्यलंकारः। उपमा वा ॥

कुन्तप्रतापनामा वीरोऽभाषिष्ट। कथम्। सकोपं यथा भवत्येवम्। किं कुर्वन्। कुन्तं प्रासमुत्तोलयन् कम्पयन्। किं अभाषिष्ट—हे द्विजापसद पतितब्राह्मण, सविशेषं सावधानतया निशम्यतां श्रूयताम्। यः कोऽपि यः कश्चिन्नृपो दौरात्म्यात् दुष्टस्वभावत्वात् देवसेवासूयहृदयः देवस्य यशोधरस्य सेवायां असूयहृदयः सक्रोधमनाः। ऋजुरित्यादि। ऋजुः सरलोऽपि सुवंशोऽपि शोभनवंशतरूत्पन्नोऽपि मदीयो मम संबन्धी एष प्रत्यक्षीभूतः कुन्तः प्रासः प्राप्तः सन् शकुन्तान्तकतर्पणाय शकुन्तानां गृध्रादिपक्षिणां अन्तकस्य च यमस्य तर्पणाय प्रीणनाय तस्य पुरुषस्य असृजा रुधिरेण जन्यभुवं संग्रामभूमिं बिभर्ति पूरयति। किं कृत्वा। पूर्वं वक्षःपिठरप्रतिष्ठां निर्भिद्य वक्षो जीवस्थानं तदेव पिठरं भाण्डं तस्य प्रतिष्ठां शोभां भक्षणम्(भङ्क्त्वा)। रूपकालंकारः ॥

लाङ्गलगरलसुभटः सोल्लुण्ठालापं सदर्पभाषणं यथा भवत्येवं लाङ्गलं हलं उदानयमानः भ्रामयन् अभाषिष्ट। किमभाषिष्ट—हे धीरा हे सुभटाः स्वामिभक्ताः, भवतां युष्माकं समरसंरम्भेण संग्रामारम्भेण कृतं पर्याप्तम्। यस्मात् कारणादिदमेतल्लाङ्गलमेकमेव। त्रुटदित्यादि। समीके संग्रामे रिपुहृदयालीः शत्रुहृदयपङ्क्तीर्मम लाङ्गलं लेलिखीति भृशं खेदयति। कथंभूताः रिपुहृदयालीः। त्रुटदतनुशिरान्ताः त्रुटन्तः अतनवो महान्तः शिराणां स्नसानां अन्ताः प्रान्ता यासां तास्तथोक्तास्ताः। पुनः कथंभूताः। कीर्णकृत्तिप्रतानाः कीर्णा विक्षिप्ताः कृत्तीनां चर्मणां प्रताना विस्तारा यासां ता-

---

१. 'त्यक्तोऽपि' इति पुस्तकद्वये पाठः.

कणयकोणपः सामर्षं विहस्य—'अये दूत, सादरं श्रूयताम्। यद्यसौ तव प्रभुरसत्समसंभावनया देवसेवायां नानुकूलवृत्तिस्तदा नूनमेषः

हस्त्यश्वरथपदातिव्यत्यासनवातघूर्णितक्षोणिः।
यमपिशितकवलकरणिं कणयः कायं करिष्यते तस्य' ॥ ४१५ ॥

त्रिशूलभैरवः सासूयं त्रिशूलं वल्गयन्—'दूत, ब्रूहि मद्वचनादेवमचलम्—

इदं त्रिशूलं तिसृभिः शिखाभिर्मार्गत्रयं वक्षसि ते विधाय।
पातालमर्त्यत्रिदिवावतारां कर्ता रणे कीर्तिमिमां मदीयाम्' ॥ ४१६ ॥

---

स्तथा ताः। पुनः कथंभूताः। क्षरदविरलरक्तस्फारधारासहस्राः क्षरन्तो वर्षन्तः अविरला अविच्छिन्ना रक्तस्य स्फाराः स्थूला धाराणां छटानां सहस्राणि यासां तास्तथा ताः। पुनः कथंभूताः। स्फुटदटनिकठोरष्ठाकृतास्थीः स्फुटन्ति शतखण्डीभवन्ति अटनिवत् धनुःकोटिवत् कठोराणि स्तब्धानि ष्ठाकृतैरुपलक्षितानि ष्ठाशब्दसहितानि अस्थीनि यासां तास्तथा ताः। उपमालंकारः॥

कणयकोणपो नाम वीरः सामर्षं सक्रोधं विहस्य अभाषिष्ट। किं अभाषिष्ट—अये दूत। 'अये क्रोधविषादयोः' इति वचनात्। हे दूत, सादरं सावधानतया श्रूयतां त्वया आकर्ण्यताम्। मद्वचनं कर्मतापन्नमिति शेषः। यदि चेत् असौ विप्रकर्षे स्थितस्तव प्रभुः असत्समसंभावनया अस्माभिः समानसंघटनया। यथाहं कणयकोणपो नाम यशोधरस्य सेवको वर्ते तथा अचलोऽपि देवस्य सेवको वर्तते इत्यर्थः। देवसेवायां श्रीयशोधरमहाराजसेवायां अनुकूलवृत्तिर्हितवृत्तिर्न भवति, तदा तस्मिन् काले नूनं निश्चयेन एष प्रत्यक्षीभूतो मम कणयः भूषणनिबन्धनायुधविशेषः तस्य पुरुषस्य कायं शरीरं यमपिशितकवलकरणिं यमस्य पिशितकवलो मांसग्रासः करणिं करणं करिष्यते विधास्यति। 'नञ्यन्याक्रोशे' इति योगविभागान्नञं विनापि आक्रोशे गम्यमाने अनिप्रत्ययः पदरुजपादे सप्ताशीतं सूत्रं वर्तते। कणयः कथंभूतः। हस्त्यश्वरथपदातिव्यत्यासनवातघूर्णितक्षोणिः हस्तिनश्च अश्वाश्च रथाश्च पदातयश्च तेषां व्यत्यासनेन परस्परक्षेपणेन समुत्पन्नो योऽसौ वातो व्यत्यासनवातस्तेन घूर्णिता भ्रामिता क्षोणिः पृथिवी येन कणयेन स तथोक्तः। जात्यलंकारः॥

त्रिशूलभैरवो वीरः सासूयं सक्रोधं त्रिशूलं वल्गयन् अभाषिष्ट। किमभाषिष्ट—अहो दुकूल दूत, मद्वचनात् अचलं प्रत्येवं ब्रूहि—इदमित्यादि। इदं प्रत्यक्षीभूतं मम त्रिशूलं ते तव वक्षसि हृदये तिसृभिस्त्रिभिः शिखाभिर्मार्गत्रयं विधाय कृत्वा इमां मदीयां कीर्तिं रणे पातालमर्त्यत्रिदिवावतारां कर्ता करिष्यति। पातालं च मर्त्यं च त्रिदिवश्च पातालमर्त्यत्रिदिवास्तेष्ववतारो यस्या मम कीर्तेः सा तथा ताम्। यथासंख्यालंकारः॥

**असिधेनुधनंजयः** सेर्ष्यमसिमातृमुष्टौ पञ्चशाखं निधाय—'अहो ब्रह्मबन्धो, ममाप्येष एव सर्गो यस्मादज्ञातात्मस्थितेरराते र्न शस्त्रपातादन्यत्र प्रायश्चेतनमस्ति । ततः

वष्टि वष्टोत्तरं योऽत्र दौष्ठ्यावष्टम्भचेष्टनः ।
तडत्तडिति तस्यैषा शस्त्री त्रोटयते शिरः' ॥ ४१७ ॥

**प्रासप्रसरः** ससौष्ठवं प्रासं परिवर्तयन्—'पर्याप्तमत्रालापपरम्परया । तद्विप्र, एवमुच्यतां स दुर्नयायतनम्—

सूत्कारवित्रासितदिक्करीन्द्रः प्रासो मदीयः समराङ्गणेषु ।
सकङ्कटं त्वां च हयं च भित्त्वा यास्यत्ययं दूत इवाहिलोके' ॥४१८॥

---

असिधेनुधनंजयो नाम वीरः सेर्ष्यं सक्रोधं यथा भवत्येवं असिमातृमुष्टौ छुरिकामुष्टौ पञ्चशाखं करं निधाय कृत्वा अभाषिष्ट । किमभाषिष्ट—अहो ब्रह्मबन्धो द्विजाधम दूत, ममापि एष एव सर्ग इयमेव सृष्टिः अचलस्य विध्वंसलक्षणं कर्तव्यम् । कस्मात्कारणात् । यस्मात् अज्ञातात्मस्थितेः अविज्ञातस्वकीयमर्यादस्य अरातेः शत्रोः शस्त्रपातादन्यत्र शस्त्रपातं विना अन्यत् प्रायश्चेतनं पापशोधनं नास्ति । ततस्तस्मात् कारणात् । **वष्टीत्यादि** । ते तव यः शत्रुः अत्र अस्मिन् संसारे दौष्ठ्यावष्टम्भचेष्टनः दुष्टत्वाधारक्रियः सन् । वेष्टनं वेष्टम् । हिंसनमित्यर्थः । तदुत्तरं वष्टोत्तरं संग्रामकरणोत्तरं वष्टि वाञ्छति कथयति तस्य पुरुषस्य एषा प्रत्यक्षीभूता शस्त्री असिमाता क्षुरिका शिरो मस्तकं त्रोटयते । कथम् । तडत्तडिति तडतडायमानशब्देन । जात्यलंकारः ॥

प्रासप्रसरो वीरः ससौष्ठवं पटुतया प्रासं भल्लं परिवर्तयन् उच्छालयन् अभाषिष्ट । किमभाषिष्ट—अत्र अस्यां सभायां आलापपरम्परया मुहुर्भाषणेन पर्याप्तं पूर्णम् । तत्तस्मात् कारणात् हे विप्र ब्राह्मण, सः जगत्प्रसिद्धः दुर्नयायतनं पूर्णपापायतनं अन्यायमन्दिरप्रायः अचलो नाम राजा कर्मतापन्नस्त्वया एवमुच्यतां कथ्यताम्—**सूत्कारेत्यादि** । हे दूत, अयं मदीयो मामकः प्रासो भल्लः समराङ्गणेषु संग्रामभूमिषु सकङ्कटं ससंनाहं त्वां अचलं हयं च तवाश्वं भित्त्वा विदार्य अहिलोके पाताले यास्यति व्रजिष्यति । क इव । दूत इव शासनहर इव । पाताललोकजनाय वार्तां ज्ञापयितुं दूत इव यास्यति । कथंभूतः प्रासः । सूत्कारवित्रासितदिक्करीन्द्रः.........................
............ । उपमालंकारः ॥

गदाविद्याधरः सगर्वं गदामुत्तम्भयन्—

'दूतैवं विनिवेदयात्मविभवे द्वित्रैर्दिनैर्मत्प्रभुं
पश्यागत्य यदि श्रियस्तव मता नो चेदियं दास्यति।
भ्रान्त्यावृत्तिविजृम्भितानिलबलोत्तालीकृताशागजा
मूर्धानं झटिति स्फुटद्दलकलं त्वत्कं मदीया गदा'॥ ४१९॥

असमसाहसः सदर्पोद्रेकम् 'द्विजाते, तं वदैवमासन्नशुचमसदाग्रहरुचम्—

तुलारणे द्वन्द्वरणे दिवारणे निशारणे कूटरणे परत्र वा।
यदि प्रवीरस्त्वमिहैधि मे पुरो न गर्जितैः शौर्यकलेषु कीर्तयः'॥४२०॥

---

गदाविद्याधरो नाम वीरः सगर्वं साहंकारं यथा भवत्येवं गदां यष्ट्यायुधविशेषं उत्तम्भयन् ऊर्ध्वीकुर्वन् अभाषिष्ट। किमभाषिष्ट—**दूतैवमित्यादि**। हे दूत हे वचोहर दुकूल, आत्मविभवे निजस्वामिने अचलाय राज्ञे एवममुना प्रकारेण विनिवेदय कथय त्वम्। एवं कथमिति चेत्—तवाचलस्य श्रियो यदि मता अभीष्टा वर्तन्ते, तर्हि द्वित्रैर्द्वाभ्यां त्रिभिर्वा दिनैर्दिवसैर्मत्प्रभुं श्रीयशोधरमहाराजं आगत्य पश्य। नो चेत् यदि नागत्य पश्यसि, तर्हि इयं मदीया गदा त्वत्कं त्वदीयं मूर्धानं मस्तकं दास्यति स्फोटयिष्यति। कथम्। झटिति शीघ्रम्। पुनश्च कथम्। स्फुटन्ति दलानां खण्डानां कला शेषा यस्मिन् कर्मणि तत् स्फुटद्दलकलम्। कथंभूता गदा। भ्रान्त्यावृत्तिविजृम्भितानिलबलोत्तालीकृताशागजा भ्रान्तेर्भ्रमणस्य आवृत्तिः पुनः पुनर्भ्रमणं तया विजृम्भितः प्रसृतो योऽसावनिलो वातस्तस्य बलेन उत्तालीकृताः पलायितुं उत्सुकीकृता आशागजा दिग्गजेन्द्रा यया गदया सा तथोक्ता। अतिशयालंकारः॥

असमसाहसो नाम वीरः सदर्पोद्रेकं समदाधिक्यं यथा भवत्येवं अभाषिष्ट। किमभाषिष्ट—हे द्विजाते हे ब्राह्मण। श्लेषे तु द्वाभ्यां पुरुषाभ्यां जातिर्जन्म यस्य सः द्विजातिस्तस्य संबोधनं हे द्विजात इत्यर्थः। तं अचलं एवं त्वं वद। कथंभूतं तम्। आसन्नशुचं समीपशोकम्। पुनः कथंभूतं तम्। असदाग्रहरुचं असमीचीनहठमानसम्। एवं कथमिति चेत्—**तुलारण इत्यादि**। हे अचल, तुलारणे बाहुयुद्धे, द्वन्द्वरणे मल्लसंग्रामे, दिवारणे दिवससंग्रामे, निशारणे रात्रिसंग्रामे, कूटरणे मायायुद्धे, परत्र वा अन्यत्र कुत्रापि धनुर्वेदखड्गादिसंग्रामे यदि चेत् त्वं भवान् प्रवीरः प्रकृष्टः सुभटो वर्तसे, तर्हि इह अस्मिन् संग्रामे मे मम पुरोऽग्रतः एधि भव। शौर्यकलेषु सौभट्यमनोहरेषु पुरुषेषु गर्जितैः कृत्वा उन्नतशब्दैः कृत्वा कीर्तयो यशांसि न भवन्ति। अर्थान्तरन्यासालंकारः॥

चतुरङ्गमल्लः सभीमरभसमात्मानं निर्वर्ण्य 'अहो द्विजवंशपांसन, किमेतत्कदाचिदपि तव स्वामी नाश्रौषीत् यथाजातजगत्त्रयप्रतिमल्लश्चतुरङ्गमल्लः । तथा हि ।

दोर्दण्डसंघट्टनतस्तुरङ्गान्पत्तीन्पुनः पादतलप्रहारैः ।
उरःस्थलस्थामविधेर्गजेन्द्रान्रथानथैकोऽपि निहन्ति युद्धे' ॥ ४२१ ॥

एवमपरेऽपि रूढावलेपोत्तरङ्गभङ्गीभर्मिसंभारभरितभारभज्यमानभोगायतनवृत्तयो यथास्वकीयाङ्काहंकारं शक्तिकार्तिकेय–शङ्कुशार्दूल–शतक्रतुविक्रम–शूरशिरोमणि–परबलप्रलयानल–प्रकटकन्दलादित्य–कपटकैटभाराति–सपत्नपुरधूमकेतु–सुभटघटाप्राकार–समरसिंहप्रभावप्रभृतयस्तस्य व्यलीकैश्वर्यपर्यायपर्यस्तमर्यादस्य नृपयज्ञामन्त्रणाय संदिदिशुः ।

---

चतुरङ्गमल्लो नाम वीरः सभीमरभसं भीमवेगसंयुक्तं यथा भवत्येवं आत्मानं निजकायं निर्वर्ण्य दृष्ट्वा अभाषिष्ट—अहो द्विजवंशपांसन अहो ब्राह्मणकुलमालिन्यकारिन्, तव स्वामी एतत् इदं किं कदाचिदपि कस्मिंश्चिदवसरे प्रघट्टके न अश्रौषीत् न आकर्णितवान् । किं न आकर्णितवान् । यथा उदाहरणे चतुरङ्गमल्लो नाम वीरः अजातजगत्त्रयप्रतिमल्लो न जातो जगत्त्रये प्रतिमल्लो यस्य स तथोक्तः वर्तते । तदेव चतुरङ्गमल्लत्वं वर्णयति—तथा हि । दोर्दण्डेति । दोर्दण्डसंघट्टनतो बाहुदण्डघट्टनत एकोऽपि तुरङ्गान् निहन्ति, पादतलप्रहारैः पुनः पत्तीन् पदातीन् पुरुषान् निहन्ति, उरःस्थलस्थामविधेः वक्षःस्थलबलविधानात् गजेन्द्रान् गजपतीन् निहन्ति । अथ अनन्तरं रथान् एकोऽपि सन् युद्धे संग्रामे निहन्ति । क्रियाकारकद्वयदीपकालंकारः ॥

एवमपरेऽपि वीराः तस्य अचलस्य नृपयज्ञामन्त्रणाय संग्रामाह्वानाय संदिदिशुः संदेशं ददुः । कथंभूता अपरेऽपि वीराः । रूढावलेपोत्तरङ्गभङ्गीभर्मिसंभारभरितभारभज्यमानभोगायतनवृत्तयः रूढः प्रसिद्धो योऽसाववलेपो गर्वस्तेन उत्तरङ्गभङ्गी उत्कटरचना तस्या भर्मिसंभारो मायाडम्बरस्तस्य भरितभारेण भज्यमानाः स्वयमेव भङ्गमाप्नुवन्तो भोगायतनस्य शरीरस्य वृत्तिर्येषां वीराणां ते तथोक्ताः । कथम् । यथास्वकीयाङ्काहंकारं निजाङ्कनगर्वं यथा भवत्येवं संदिदिशुः । के ते अपरे वीराः । शक्तिकार्तिकेयः सर्वलोहमयी शक्तिरायुधविशेषस्तस्यां कार्तिकेयो रुद्रनन्दनः शक्तिकार्तिकेयश्च, शङ्कुशार्दूलश्च, शतक्रतुविक्रमश्च, शूरशिरोमणिश्च, परबलप्रलयानलश्च, प्रकटकन्दलादित्यश्च, कपटकैटभारातिश्च, सपत्नपुरधूमकेतुश्च, सुभटघटाप्राकारश्च, समरसिंहप्रभावश्च, ते प्रभृतयो मुख्या येषां भीष्मादीनां ते तथोक्ताः । तस्याचलस्य कथंभूतस्य । व्यलीकैश्वर्यपर्यायपर्यस्तमर्यादस्य व्यलीकमन्तर्गडुर्यदैश्वर्यं तस्य पर्यायः संगतिः तेन पर्यस्ता लुप्ता मर्यादा येन स तथा तस्य ॥

सेनापतिस्तत्रावसरे पुनरेवमीहांचक्रे—'अहो धीराः,

अजातोचितवृत्तीनां पुंसां किं गलगर्जितैः।
शूराणां कातराणां च रणे व्यक्तिर्भविष्यति॥ ४२२॥

तद्यथाभागमुपसंहृतसंरम्भाः प्रत्यावृत्तवाक्पारुष्यप्रारम्भास्तिष्ठन्तु। अहो स्वामिप्रतापवर्धनाग्रहिन्संधिविग्रहिन्, भवतोऽप्यलमावेगेन। लेखमेनमवधार्य लिख्यतां प्रतिलेखः। प्राभृतमिदमवलोक्य बध्यतां प्रतिप्राभृतम्। विधीयतां चास्य त्रयस्य यथार्हमर्हणा। यस्मादुद्यतेष्वपि शस्त्रेषु दूतमुखा वै राजानः। तेषामन्तावसायिनोऽप्यनवमान्याः, किं पुनरन्ये। अपि च।

स्वासिद्धिः परवृद्धिर्वा न दूतगलगर्जितैः।
अवधव्याजकर्माणस्ते जल्पन्ति यथेष्टतः'॥ ४२३॥

---

सेनापतिः प्रतापवर्धनो नाम चमूपतिस्तत्रावसरे तस्मिन् प्रस्तावे पुनः पुनरपि एवं वक्ष्यमाणप्रचारेण ईहांचक्रे चेष्टितवान्। एवं कथमिति चेत्—अहो धीराः। अजातेत्यादि। अजातोचितवृत्तीनां अजाता अनुत्पन्ना उचिता वृत्तिरात्मयोग्या प्रवृत्तिर्येषां ते तथा तेषाम् ईदृग्विधानां पुंसां गलगर्जितैः कण्ठशब्दितैः किम्। न किमपि। किं तु शूराणां कातराणां च भीतमूर्तीनां रणे व्यक्तिः स्फुटं भविष्यति जनिष्यते। आक्षेपालंकारः॥

तत्तस्मात् कारणात् यथाभागं यथैकदेशं भवन्तः तिष्ठन्तु। कथंभूताः सन्तो भवन्तः तिष्ठन्तु। उपसंहृतसंरम्भाः परित्यक्तकोपाः सन्तः। पुनश्च कथंभूताः भवन्तः। प्रत्यावृत्तवाक्पारुष्यप्रारम्भाः प्रत्यावृत्तः संभूतः वाक्पारुष्यस्य रूक्षतायाः प्रारम्भो यैस्ते तथोक्ताः। अहो स्वामिप्रतापवर्धनाग्रहिन् यशोधरमहाराजप्रतापवर्धने आग्रहो विद्यते यस्य स तथा तस्य संबोधनं हे तथोक्त, हे संधिविग्रहिन् प्रधानदूत, भवतोऽपि तवापि आवेगेन उत्सुकतया अलं पूर्णम्। एनं अचलस्य लेखम् (लिखितं) अक्षरविन्यासं अवधार्य हृदयमानीय प्रतिलेखो लिख्यताम्। इदं प्राभृतं सारमवलोक्य दृष्ट्वा प्रतिप्राभृतं बध्यतां प्रत्युपढौकनिका बद्धा क्रियताम्। विधीयतां क्रियतां च अस्य त्रयस्य दूतलेखप्राभृतत्रितयस्य यथार्हं यथायोग्यं अर्हणा पूजा विरच्यताम्। यस्मात् कारणात् उद्यतेष्वपि उद्यमं प्राप्तेष्वपि शस्त्रेषु दूतमुखा दूतवक्त्रा वै निश्चयेन राजानो भवन्ति। तेषां दूतानां अन्तावसायिनो भृत्या अपि अनवमान्याः न अपमाननीया भवन्ति। किं पुनरन्ये दूता अपमाननीया भवन्ति। अपि तु न भवन्तीत्यर्थः॥

अपि चास्ति कश्चिद्विशेषः। स्वासिद्धिरित्यादि। स्वासिद्धिः स्वस्य अप्रासिर-

संधिविग्रही 'यथाज्ञापयति सेनापतिः' इत्यवधार्य च यथादिष्टम्, 'सेनापते, लिखितोऽयं लेखः। श्रूयताम्—स्वस्ति। समस्तमहासामन्तशिखण्डमण्डनीभवच्चरणकमलः कमलाकरसरोजसेव्यमानपादपल्लवः पल्लवपाण्ड्यचोलचेरमहर्म्यनिर्माणप्रकाश्यमानदिग्विजयवाहिनीप्रचारः चारचक्षुःसहस्रसाक्षात्कृतसकलभूपालमण्डलः मण्डलाग्रधाराजलनिमग्ननिखिलारातिसंतानः संताननमेरुमन्दारपारिजातवनदेवतागीतोदाहरणगुणप्रपञ्चः पञ्चमो

---

चलादेरसिद्धिः, परवृद्धिर्वा परस्य यशोधरादेः वृद्धिर्वा। अथ वा यशोधरस्य असिद्धिः, परस्य अचलस्य वृद्धिर्वा। दूतगलगर्जितैर्न भवति। यतस्ते दूता अवधव्याजकर्माणः अवधं शस्त्रव्यापाररहितं व्याजकर्म मध्यस्थक्रिया येषां ते तथोक्ताः यथेष्टतः यथेष्टं जल्पन्ति ब्रुवन्ति। न तु युध्यन्ते न तु विग्रहं कुर्वन्ति यान्ति॥

संधिविग्रही रामस्य हनूमानिव दूतः ब्रूते—यथाज्ञापयति सेनापतिर्यथा आदेशं ददाति प्रतापवर्धनसेनापतिः। तथैव मया संधिविग्रहिणा क्रियत इत्यर्थः। अवधार्य च सम्यग्विचार्य च अवधानं कृत्वा। किं अवधार्य। यथादिष्टं सेनापतिना यथा आज्ञातम्। सेनापते प्रतापवर्धन राजन्, लिखितोऽयं लेखः। त्वया श्रूयताम्। स्वस्ति। कल्याणमङ्गलशब्दोऽयम्। श्रीयशोधरमहाराजः अचलमहीपतिं आदिशति। कथंभूतः श्रीयशोधरमहाराजः। समस्तमहासामन्तशिखण्डमण्डनीभवच्चरणकमलः समस्तानां महासामन्तानां देशाधिपतीनां शिखण्डानां मस्तकानां मण्डनीभवत् भूषणीभवत् चरणकमलं यस्य स तथोक्तः। पुनः कथंभूतः। कमलाकरसरोजसेव्यमानपादपल्लवः कमलाया लक्ष्म्याः करस्य पाणेः संबन्धि यत् सरोजं तेन सेव्यमानं पादपल्लवं यस्य स तथोक्तः। पुनः कथंभूतः। पल्लवपाण्ड्यचोलचेरमहर्म्यनिर्माणप्रकाश्यमानदिग्विजयवाहिनीप्रचारः पल्लवश्च देशविशेषः, पाण्ड्यश्च नीवृद्विशेषः, चोलश्च विषयविशेषः, चेरमश्च[1] जनपदविशेषः, तेषु हर्म्यनिर्माणेन आवासकरणेन प्रकाश्यमानः प्रकटीक्रियमाणो दिग्विजयसंबन्धिन्या वाहिन्याः सेनायाः प्रचारः प्रवर्तनं यस्य स तथोक्तः। पुनः कथंभूतः। चारचक्षुःसहस्रसाक्षात्कृतसकलभूपालमण्डलः चाराः प्रणिधयस्त एव चक्षूंषि तेषां सहस्रेण साक्षात्कृतानि प्रत्यक्षतया दृष्टानि सकलभूपालानां मण्डलानि येन स तथोक्तः। पुनः कथंभूतः। मण्डलाग्रधाराजलनिमग्ननिखिलारातिसंतानः मण्डलाग्रस्य खड्गस्य धाराजले छटापानीये निमग्ना ब्रुडिता निखिलानां अरातीनां संताना यस्य स तथोक्तः। पुनः कथंभूतः। संताननमेरुमन्दारपारिजातवनदेवतागीतोदाहरणगुणप्रपञ्चः संतानश्च कल्पवृक्षविशेषः, नमेरुश्च सुरतरुभेदः, मन्दारश्च अमरागविशेषः, पारिजातश्च नाकानोकहस्तेषां वनानि तेषां या देवतास्तासां गीते गम्भीरानन्दे उदाहरणं दृष्टान्तवचनं

---

1. सटीकपुस्तकटीकायां 'चेरल' इति पाठः.

लोकपालः पद्मावतीपुरपरमेश्वरः कनकगिरिनाथः शिप्रासरिज्जलकेलिकुञ्जरः समुद्रमुद्राङ्कितशासनः कैलासलाञ्छनः अवन्तिसीमन्तिनीकुचकुम्भमदनाङ्कुशः प्रत्यक्षमकरध्वजः याचकचिन्तामणिः कनककङ्कणवर्षः सत्यपरमेष्ठी परलोककलत्रपुत्रकः कविकामधेनुः धर्मरत्नावतंसः नीतिलतावलम्बनतरुः द्विष्टकैटभारातिः आहवचतुर्भुजः परहितमहाव्रतः अहितकुलकालानलःप्रतिपन्नजीवितः पराक्रमालंकारः समरससहस्रबाहुः प्रतापतपनोदयः चातुरीचतु-

---

गुणप्रपञ्चस्य गुणविस्तरस्य यस्य स तथोक्तः। पुनः कथंभूतः। पञ्चमो लोकपालः मध्यमलोकप्रतिपालकः। पुनः कथंभूतः। पद्मावतीपुरपरमेश्वरः उज्जयिनीपुरीपरमप्रभुः। पुनः कथंभूतः। कनकगिरिनाथः सुवर्णगिरिनामपर्वतोपरि वसति यत् नगरं तत् कनकगिरिरित्युच्यते, उज्जयिन्याः समीपे गव्यूतिद्वयं गत्वा कनकगिरिः प्राप्यते, तस्य नाथः स्वामी। पुनः कथंभूतः। शिप्रासरिज्जलकेलिकुञ्जरः उज्जयिन्याः समीपे शिप्रानाम नदी सरिद्वर्तते, तस्या जलकेलौ जलक्रीडाकरणे कुञ्जरः। पुनः कथंभूतः। समुद्रमुद्राङ्कितशासनः समुद्राकारेण या मुद्रा अङ्गुलीयोर्मिस्तयाङ्कितं चिह्नितं शासनमादेशलेखो यस्य स तथोक्तः। पुनः कथंभूतः। कैलासलाञ्छनः कैलासपर्वतो लाञ्छनं लेखोपरि यस्य स तथोक्तः। पुनः कथंभूतः। अवन्तिसीमन्तिनीकुचकुम्भमदनाङ्कुशः अवन्तिसीमन्तिनी तस्याः कुचकुम्भयोः मदनाङ्कुशोऽनकः(?)..................स तथोक्तः। पुनः कथंभूतः। प्रत्यक्षमकरध्वजः प्रत्यक्षं साक्षात् मकरध्वजः कामदेवः। पुनः कथंभूतः। याचकचिन्तामणिः याचकानामर्थिनां चिन्तामणिः। पुनः कथंभूतः। कनककङ्कणवर्षः कनककङ्कणानि वर्षतीति स तथा। पुनः कथंभूतः। सत्यपरमेष्ठी सत्यवचनप्रतिपालने परमेष्ठी ऋषभदेवः। पुनः कथंभूतः। परलोककलत्रपुत्रकः परलोकानामपरपुरुषाणां यानि कलत्राणि तेषां पुत्रको बालकः। पुनः कथंभूतः। कविकामधेनुः कवीनां कामधेनुः। नित्यमेव मनोरथपूरक इत्यर्थः। पुनः कथंभूतः। धर्मरत्नावतंसः धर्म एव रत्नं तदेवावतंसः शिरोरत्नं यस्य स तथा। पुनः कथंभूतः। नीतिलतावलम्बनतरुः नीतिलतायाः न्यायवल्ल्या अवलम्बने आधारे तरुर्महावृक्षः। पुनः कथंभूतः। द्विष्टकैटभारातिः द्विष्टानां शत्रूणां कैटभारातिः श्रीनारायणः। पुनः कथंभूतः। आहवचतुर्भुजः आहवे संग्रामे चत्वारो भुजा बाहवो यस्य स तथा। पुनः कथंभूतः। परहितमहाव्रतः परहितं प्रजालोकहितं महाव्रतं प्रतिज्ञा यस्य स तथा। पुनः कथंभूतः। अहितकुलकालानलः अहितानां शत्रूणां कुलस्य वंशस्य कालानलः संवर्तकधनंजयः। पुनः कथंभूतः। प्रतिपन्नजीवितः प्रतिपन्नं यदङ्गीकृतं तदेव जीवितमायुर्यस्य स तथोक्तः। पुनः कथंभूतः। पराक्रमालंकारः पराक्रमो बलं अलंकारो मण्डनं यस्य स तथा। पुनः कथंभूतः। समरसहस्रबाहुः समरे सहस्रं बाहवो यस्य स तथा। पुनः कथंभूतः। प्रतापतपनोदयः प्रताप एव तपनः तस्य उदय

मुखः विवेकरत्नाकरः सरस्वतीकेलिविलासहंसः सरसोक्तिवल्लभः कन्दुकविनोदविद्याधरो मदकरिक्रीडाखण्डलः स्यन्दनप्रचारगरुडाग्रजः पदातिवैनतेयो गीतगन्धर्वचक्रवर्ती वाद्यविद्यावृहस्पतिः नृत्तवृत्तान्तभरतः समस्तायुधसर्वज्ञः शरणागतमनोरथसिद्धिः अनाथनाथः त्यागभार्गवः द्रोहद्रुमवनकुठारः कलिङ्गकुरङ्गकेसरी अश्मकवंशवैश्वानरः शकशलभशमीगर्भः क्रथकैशिककृशानुः अहिच्छत्रक्षत्रियशिरोमणिः पञ्चालचापलप्रलयकालः केरलकुलकुलिशपातः यवनकुजवज्रानलः चैद्यसुन्दरीविनोदकन्दलः मागधवधू-

---

उदयाचलः । पुनः कथंभूतः । चातुरीचतुर्मुखः चातुर्यां चतुर्मुखो ब्रह्मा । पुनः कथंभूतः । विवेकरत्नाकरः विवेकरत्नानामाकरः खनिः । पुनः कथंभूतः । सरस्वतीकेलिविलासहंसः सरस्वतीक्रीडाविलासे हंसः क्रीडामरालः । पुनः कथंभूतः । सरसोक्तिवल्लभः सरसोक्तयो वल्लभाः प्रिया यस्य । पुनः कथंभूतः । कन्दुकविनोदविद्याधरः कन्दुकविनोदे गेन्दुकक्रीडायां विद्याधरो वियच्चरप्रायः । पुनः कथंभूतः । मदकरिक्रीडाखण्डलः मदकरिणां क्रीडाखण्डल इन्द्रः । पुनः कथंभूतः । स्यन्दनप्रचारगरुडाग्रजः स्यन्दनप्रचारे रथक्रीडायां गरुडाग्रजो अनूरुसारथिः । पुनः कथंभूतः । पदातिवैनतेयः·············
··································वाद्यविद्यायां ततविततघनसुषिरवादित्रविद्यायां वृहस्पतिः । पुनः कथंभूतः । नृत्तवृत्तान्तभरतः नर्तनशास्त्रे नटाचार्यः । पुनः कथंभूतः । समस्तायुधसर्वज्ञः समस्तेषु आयुधेषु सर्वज्ञो वीतरागः । पुनः कथंभूतः । शरणागतमनोरथसिद्धिः शरणागतानामाश्रितानां मनोरथसिद्धिर्मनोरथपूरणः । पुनः कथंभूतः । अनाथनाथः अनाथानां स्वामी । पुनः कथंभूतः । त्यागभार्गवः दातृत्वेन परशुरामः । पुनः कथंभूतः । द्रोहद्रुमवनकुठारः द्रोहद्रुमवने कुठारः कुठान् वृक्षान् इयर्तीति कुठारः परशुः । पुनः कथंभूतः । कलिङ्गकुरङ्गकेसरी कलिङ्गो नाम दन्तपुरनृपः स एव कुरङ्गस्तस्य केसरी । पुनः कथंभूतः । अश्मकवंशवैश्वानरः अश्मको नाम देशस्तत्स्वाम्यपि अश्मकः स एव वंशो वेणुवृक्षः तस्य भस्मीकरणे वैश्वानरः । पुनः कथंभूतः । शकशलभशमीगर्भः शको नाम तुरुष्कदेशस्तस्य स्वाम्यपि शकः स एव शलभः पतङ्गस्तस्य भस्मीकरणे शमीगर्भोऽग्निः । पुनः कथंभूतः क्रथकैशिककृशानुः क्रथकैशिको विराटदेशस्तस्य स्वाम्यपि क्रथकैशिकस्तस्य भस्मीकरणे कृशानुरग्निः । पुनः कथंभूतः । अहिच्छत्रक्षत्रियशिरोमणिः अहिच्छत्रो नाम देशस्तत्र नगरमपि अहिच्छत्रं पार्श्वनाथातिशयक्षेत्रं तत्र ये क्षत्रिया राजानस्तेषां शिरोमणिः शिरोरत्नम् । पुनः कथंभूतः । पञ्चालचापलप्रलयकालः पञ्चालो नाम देशस्तस्य स्वामी अचलनरेन्द्रस्तस्य चापलं चपलत्वं तद्विनाशने प्रलयकालः । पुनः कथंभूतः । केरलकुलकुलिशपातः केरलो नाम दक्षिणपथदेशस्तस्य स्वाम्यपि केरलस्तस्य कुले वंशे कुलिशपातो वज्रपातः । पुनः कथंभूतः । यवन-

विलासदर्पणः काञ्चिकामिनीकुचकलशकिसलयः माहिष्मतीयुवतिरतिकुसुमचापः कौशाम्वीनितम्बिनीबिम्बाधरमण्डनः दशार्णवर्णिनीकर्णपूरः पाटलिपुत्रपण्याङ्गनाभुजङ्गः वलभिरम्भोरुविभ्रमभ्रमरः पौरवपुरंध्रीरोध्रतिलकः सततवसुवितरणप्रीणितद्विजसमाजः श्रीयशोधरमहाजः सकलप्रशस्तिसहितमचलमहीपतिमादिशति । श्रेयोऽन्यत् । कार्यं चैतदेव—यदुत विजयवर्धनः सेनापतिर्भवन्तमेवमामन्त्रयते—

---

कुजवज्रानलः यवनो नाम खुरासानदेशस्तस्य स्वाम्यपि यवनः स एव कुजो वृक्षस्तस्य दाहने ज्वालने वज्रानलः पविपावकः । पुनः कथंभूतः । चैद्यसुन्दरीविनोदकन्दलः चैद्यो नाम डाहालदेशस्तस्य सुन्दर्यः कमनीयकामिन्यस्तासां विनोदे क्रीडारणे कन्दलो युद्धं यस्य स तथोक्तः । पुनः कथंभूतः । मागधवधूविलासदर्पणः मगधानां राजा स ..................मागधवधूनां राजगृहस्त्रीणां विलासदर्पणो नेत्रशोभावलोकनादर्शः । पुनः कथंभूतः । काञ्चिकामिनीकुचकलशकिसलयः काञ्चिनाम दक्षिणसमुद्रतटदेशस्तस्याः कामिनीनां कुचकलशेषु किसलयः पल्लवः । आरोपितकर इत्यर्थः । पुनः कथंभूतः । माहिष्मतीयुवतिरतिकुसुमचापः माहिष्मतीनाम नगरी यमुनपुरदिशि पत्तनं तस्या युवतयः ता एव रतयः तासु कुसुमचापः कामदेवः । पुनः कथंभूतः । कौशाम्वीनितम्विनीविम्वाधरमण्डनः कौशाम्वी नाम नगरी वत्सदेशे गोपाचलात् गव्यूतिचतुश्चत्वारिंशति वर्तते, तस्या नितम्विन्यस्तासां विम्वाधराणां मण्डनो विभूषणप्रायः । पुनः कथंभूतः । दशार्णवर्णिनीकर्णपूरः दशार्णे नाम नगरं गोपाचलात् गव्यूतिचत्वारिंशति वर्तते, तस्य वर्णिनीनां स्त्रीणां कर्णपूरः कर्णावतंसः । पुनः कथंभूतः । पाटलिपुत्रपण्याङ्गनाभुजङ्गः पाटलिपुत्रं नाम नगरं तैरभुक्तपुरदिशि वर्तते, तस्य पण्याङ्गना वेश्याः तासां भुजङ्गः कामुकः । पुनः कथंभूतः । वलभिरम्भोरुविभ्रमभ्रमरः वलभिनाम नगरं गोपाचलदिशि वर्तते, तस्य रम्भोरवः स्त्रियस्तासां विभ्रमेषु भ्रूभङ्गेषु भ्रमरः भ्रमन् रौतीति भ्रमरः । पुनः कथंभूतः । पौरवपुरंध्रीरोध्रतिलकः पौरवपुरं नाम अयोध्या नाम नगरं तस्य पुरंध्रीणां रोध्रतिलकः गन्धद्रव्यविशेषः । पुनः कथंभूतः । सततवसुवितरणप्रीणितद्विजसमाजः सततं वसुवितरणेन धनदानेन प्रीणितः प्रीतिमानीतस्तर्पितो द्विजसमाजो ब्राह्मणसमूहो येन स तथा श्रीयशोधरमहाराजो यथोक्तविशेषणविशिष्टः । कथंभूतं अचलमहीपतिम् । सकलप्रशस्तिसहितं परिपूर्णप्रसिद्धिसहितं अचलमहीपतिमादिशति । श्रेयः कल्याणं अन्यत् अपरं वर्तते । कार्यं च कर्तव्यं च एतत् इदं एव ईदृशं वर्तते । एवं कथं इति चेत्—उत अहो विजयवर्धनो नाम सेनापतिः भवन्तम्

पश्यागत्य जगत्पतिं यदि वदे स्यात्ते तदानुग्रहः
कुर्यास्त्वं मृगचेष्टितं यदि तदा क्षोणिः समुद्रावधि ।
संग्रामे भव संमुखो यदि तदा क्षेमः कुतस्ते पुन-
स्तत्पञ्चालपते किमत्र भवतः संदिश्यतां शासने ॥ ४२४ ॥

कदाचिदवतीर्णायां परितोषितविजिगीषुपरिषदि शरदि सरसकाश्मीरकेसरोत्तंसमांसलेषु कीरकामिनीकुरलकुन्तलेषु, गर्भाविर्भवत्कणिशमञ्जरीसौरभोदारेषु कलमकेदारेषु, कुलकलत्रेष्विव समर्यादगतिषु महावाहिनी-

---

एवमुना प्रकारेण आमन्त्रयते । एवं कथमिति चेत्—पश्येत्यादि । जगत्पतिं श्रीयशोधरं आगत्य पश्य उपढौकय सेवस्व । यदि चेत् अहं 'वदे' कथयामि । अत्र 'वद'-धातुरात्मनेपदी वर्तते । 'ज्ञानयत्नच्छन्दनेषु वदः' इति रुचादिपाठात् भासनेऽपि वक्तव्यम् । यथा सभायां वदते दीप्यमानो वदतीत्यर्थः । अहं दीप्यमानसभायां यदि वदे तर्हि त्वं आगत्य सेवस्व । तथा च पञ्जिकाकारो जिनदेवः । वदेरुपोक्तावात्मनेपदम् । हे अचल, तदा तस्मिन् आगमनदर्शनकाले ते तव अनुग्रह उपकारः स्यात् भवेत् । यदि चेत् त्वं मृगचेष्टितं पलायनं कुर्याः पुरुषेण तदा तस्मिन् काले समुद्रावधि आसमुद्रं क्षोणी मेदिनी मन्यते वर्तते । क्व त्वं पलायसे इत्यर्थः । यदि चेत् संग्रामे समरे संमुखो भवसि त्वं तदा ते तव पुनः पुनरपि क्षेमः कल्याणं कुतः । न कुतोऽपि इत्यर्थः । तत्तस्मात् कारणात् हे पञ्चालपते अचलमहाराज, अत्र अस्मिन् शासने लेखे तव भवतः किं संदिश्यताम् । किं संदेशो दीयत इत्यर्थः । आक्षेपालंकारः ॥

कदाचित् कस्मिंश्चिदवसरे शरदि शरत्काले अवतीर्णायां सत्याम् । कथंभूतायां शरदि । परितोषितविजिगीषुपरिषदि परितोषिता हर्षं प्रापिता विजिगीषूणां नरेन्द्राणां परिषत् सभा यस्यां सा तथा तस्याम् । तं विजयवर्धनसेनापतिं तस्य प्रसिद्धस्य पञ्चालपतेरचलमहाराजस्य प्रतापनोदनाय प्रतापविध्वंसनार्थं अहं प्राहिणवं प्रस्थापितवान् । कथंभूतोऽहम् । इत्यमुना प्रकारेण चापेटिकपेटिकप्रकटितकटकप्रयाणप्रस्तावः चापेटिका वन्दिनः तेषां पेटिकः समूहस्तेन प्रकटितः स्फुटीकृतो विज्ञापितः कटकस्य सैन्यस्य प्रयाणप्रस्तावो दिग्विजयावसरो यस्य मम स तथोक्तः । इतीति किम् । हे राजन्, शरत् आगता । केषु सत्सु । कीरकामिनीकुरलकुन्तलेषु सत्सु कीरो नाम देशस्तस्य कामिन्यस्तासां कुरलकुन्तलेषु केशहस्तेषु । कथंभूतेषु कुरलकुन्तलेषु । सरसकाश्मीरकेसरोत्तंसमांसलेषु सरसं प्रत्यग्रं यत् काश्मीरकेसरं बाह्लीकुङ्कुमं तत्र उत्तंसेन मुकुटेन मांसलाः स्थूलाः मनोज्ञास्ते तथा तेषु । पुनश्च केषु सत्सु शरदागता । कलमकेदारेषु सुगन्धशालिक्षेत्रेषु सत्सु । कथंभूतेषु कलमकेदारेषु । गर्भाविर्भवत्कणिशमञ्जरीसौरभोदारेषु गर्भेषु आविर्भवन्तो ये कणिशास्तेषां मञ्जरीणां सौरभं सौगन्ध्यं तेन उदारेषु अतिमनोहरेषु । पुनश्च केषु सत्सु शरदागता । महा-

प्रवाहेषु, भवद्गुणेष्विव निर्मलावकाशेषु सरःसु, नृपतिकोदण्डमण्डलेष्विव प्रवृत्तप्रचारेषु पथिषु, प्रचण्डमार्तण्डातपभीतेष्विव निरन्तरसस्यांशुकपिहित-पृष्ठेषु विश्वंभराभागेषु, सलिलधरसङ्गसंक्रान्तश्यामभावेष्विव हरितकान्तिषु शैलशिखरेषु, विघटितघनकपाटसंपुटास्विव प्रकटासु दिक्षु, विजृम्भमाणेषु जितसरस्वतीहासप्रकाशेषु काशेषु, विजयमानेषु प्रकाशितकमलबन्धुजीवेषु वन्धुजीवेषु, विलसत्सु मकरन्दमधून्मादितकोकनदेषु कोकनदेषु, सप्रीतिषु

---

वाहिनीप्रवाहेषु सत्सु महावाहिनीनां महानदीनां पूरेषु सत्सु । कथंभूतेषु महावाहिनीप्रवाहेषु । समर्यादगतिषु समर्यादा ससीमा गतिर्गमनं येषां ते तथा तेषु । केष्विव । कुलकलत्रेष्विव कुलवतीस्त्रीष्विव । पुनश्च केषु सत्सु शरदागता । सरःसु सरोवरेषु सत्सु । कथंभूतेषु सरःसु । निर्मलावकाशेषु अकश्मलप्रवेशेषु सत्सु । केष्विव । भवद्गुणेष्विव यथा भवद्गुणा निर्मलावकाशा भवन्ति । पुनश्च केषु सत्सु शरदागता । पथिषु मार्गेषु सत्सु कथंभूतेषु पथिषु । प्रवृत्तप्रचारेषु प्रवृत्तः संजातः प्रचारो गमनं येषु तथा तेषु । केष्विव । नृपतिकोदण्डमण्डलेष्विव यथा नृपतीनां कोदण्डमण्डलानि धनुर्वलयानि प्रवृत्तप्रचाराणि भवन्ति। पुनश्च केषु सत्सु शरदागता। विश्वंभराभागेषु भूमिभागेषु सत्सु। कथंभूतेषु विश्वंभराभागेषु। निरन्तरसस्यांशुकपिहितपृष्ठेषु निरन्तरमविच्छिन्नं सस्यांशुकैर्धान्यवस्त्रैः पिहितमाच्छादितं पृष्ठं येषां ते तथा तेषु । केष्विव । प्रचण्डमार्तण्डातपभीतेष्विव यथा प्रचण्डमार्तण्डातपभीताः पिहितपृष्ठा भवन्ति । पुनश्च केषु सत्सु शरदागता । शैलशिखरेषु सत्सु । कथंभूतेषु शैलशिखरेषु । हरितकान्तिषु नीलवर्णेषु । केष्विव । सलिलधरसङ्गसंक्रान्तश्यामभावेष्विव सलिलधराणां मेघानां सङ्गेन संगत्या संक्रान्तः प्रविष्टः श्यामभावः श्यामलं येषु ते तथा तेषु । पुनश्च कासु सतीषु । दिक्षु सतीषु । कथंभूतासु दिक्षु । प्रकटासु प्रव्यक्तासु । कास्विव । विघटितघनकपाटसंपुटास्विव विघटितो दूरीकृतो घनकपाटः संपुटो यासां तास्तथा तासु । पुनश्च केषु सत्सु । काशेषु विजृम्भमाणेषु सत्सु। कथंभूतेषु काशेषु। जितसरस्वतीहासप्रकाशेषु जितः तिरस्कृतः सरस्वत्या हासप्रकाशः द्योतो यैस्ते तथा तेषु । पुनः केषु सत्सु । वन्धुजीवेषु विजयमानेषु जयवत्सु सत्सु । कथंभूतेषु वन्धुजीवेषु । प्रकाशितकमलवन्धुजीवेषु प्रकाशितः प्रकटीकृतः कमलवन्धोः श्रीसूर्यस्य जीवः स्वरूपं येषु ते तथा तेषु । रक्तेष्विवेत्यर्थः । पुनश्च केषु सत्सु । कोकनदेषु रक्तकमलेषु सत्सु । कथंभूतेषु कोकनदेषु । विलसत्सु शोभायमानेषु मकरन्दमधून्मादितकोकनदेषु मकरन्दः पुष्परसः स एव मधु मद्यं तेन उन्मादिताः उन्मत्तीकृता ये कोकाश्चक्रवाकास्तैरुपलक्षिता नदा ह्रदा येषां तानि तथा तेषु । पुनश्च केषु सत्सु । कुवलयेषु भूमिभागेषु सत्सु । कथंभूतेषु कुवलयेषु । सप्रीतिषु प्रीतिवत्सु परिमलोल्लासितकुवलयेषु परिमलोल्लासितानि विकासं प्राप्तानि कुवलयानि उत्पलानि येषु तानि तेषु । पुनश्च केषु

परिमलोल्लासितकुवलयेषु कुवलयेषु, संप्रमोदेषु संपादितकुमुदवनेषु कुमुदवनेषु, विराजमानेषु विधुदीधितिसंदिग्धशुचिपक्षेषु शुचिपक्षेषु, अभिनवोल्लिखितेन्दुमणिदर्पण इवातीव प्रसन्नरोचिषि चन्द्रमण्डले, पञ्चमलोकपालपरिकल्पितयात्रावसर इव संहृतवति शरासनमाखण्डले, राजहंसोत्सवसंपादनपर इव जलदकलुषतां मुक्तवति गगने, पयोधरविरहदुःखित इव विरसस्वरतामनुसृतवति प्रचलाकिलोके, त्वदरातिजन इव मन्दमुदि चातककुले, त्वत्कटकसुभटानीक इव रणरसोद्वृत्तहृदि नन्दिसंदोहे,

---

सत्सु । कुमुदवनेषु श्वेतोत्पलखण्डेषु सत्सु । कथंभूतेषु कुमुदवनेषु । सप्रमोदेषु विकाशेषु संपादितकुमुदवनेषु संपादितमुत्पादितं कोः पृथिव्याः मुदो हर्षस्य अवनं रक्षणं येषु कैरवेषु तानि तेषु । पुनश्च केषु सत्सु । शुचिपक्षेषु सत्सु । किं कुर्वाणेषु शुचिपक्षेषु । विराजमानेषु शोभमानेषु विधुदीधितिसंदिग्धशुचिपक्षेषु विधोश्चन्द्रस्य दीधितिभिः किरणैः संदिग्धाः संदेहं प्रापिताः शुचिपक्षाः शुक्लगरुत्मन्तो येषां ते तथा तेषु । पुनश्च कस्मिन्सति शरदागता । चन्द्रमण्डले चन्द्रबिम्बे सति । कथंभूते चन्द्रमण्डले । अतीव प्रसन्नरोचिषि अतीवातिशयेन प्रसन्ना निर्मला रोचिः प्रभा यस्य तत्तस्मिन् । कथंभूतेष्विव । अभिनवोल्लिखितेन्दुमणिदर्पण इव अभिनवः प्रत्यग्र उल्लिखित उत्कीर्णे घटितं इन्दुमणेश्चन्द्रकान्तरत्नस्य दर्पणे इव । पुनश्च कस्मिन् सति । आखण्डले इन्द्रे सति । किं कुर्वति सति आखण्डले । शरासनं चापं संहृतवति सति संकोचितवति सति । कस्मिन्निव । उत्प्रेक्षते—पञ्चमलोकपालपरिकल्पितयात्रावसर इव पञ्चमलोकपालेन श्रीयशोधरमहाराजेन परिकल्पिता प्रारब्धा या यात्रा तस्या अवसरे समये इव । एतावता वर्षाकालो गतो दिग्विजयावसरो वर्तते । पुनश्च कस्मिन्सति । गगने सति । किं कृतवति सति गगने । जलदकलुषतां मेघकालुष्यं मुक्तवति सति । कथंभूते । उत्प्रेक्षते—राजहंसोत्सवसंपादनपरे इव राजहंसानां श्वेतगरुतां उत्सवसंपादनं जननं तस्मिन् परं तत्परं तस्मिन् । पुनश्च कस्मिन् सति । प्रचलाकिलोके मयूरजने सति । किं कृतवति सति प्रचलाकिलोके । विरसस्वरतां अनुसृतवति आश्रितवति सति । कथंभूते । उत्प्रेक्षते—पयोधरविरहदुःखिते इव मेघवियोगेन दुःखं प्राप्ते इव । पुनश्च कस्मिन् सति । चातककुले बपीहवृन्दे सति । कथंभूते चातककुले । मन्दमुदि हर्षरहिते । कस्मिन् इव । त्वदरातिकुले इव तव शत्रुलोके इव । पुनश्च कस्मिन् सति । नन्दिसंदोहे वृषभसमूहे सति । कथंभूते नन्दिसंदोहे । रणरसोद्वृत्तहृदि रणरसेन संग्रामानुरागेण उद्वृत्तं वितं हृच्चित्तं यस्य स तथा तस्मिन् । कस्मिन्निव । त्वत्कटकसुभटानीके इव तत्र कटके सैन्ये सुभटानीके इव त्वत्सैन्यसुभटसमूहे इव ।

अनभ्रा शुभ्रचन्द्रार्का विपङ्कानिम्ननिम्नगा।
विजयाय जिगीषूणां शरदेषा समागता ॥ ४२५ ॥
विलसत्सरोजनयना प्रसन्नचन्द्रानना विघनरागा।
हंसप्रचारसुभगा स्त्रीव शरत्तव मुदं कुरुतात् ॥ ४२६ ॥
कुमुदं करोति वर्धयति कुवलयं विस्तृणोति मित्राशाः।
भवतः श्रीरिव शरदियमुल्लासितसत्पथद्विजेन्द्रा च ॥ ४२७ ॥
विघटितघनकपाटदिशि निभृतपुरंदरचापमण्डले
कमलामोदसुहृदि संतर्पितहंसविलासिनीकुले।

---

**अनभ्रेत्यादि**। एषा प्रत्यक्षीभूता शरत्। कथंभूता। अनभ्रा अभ्रपटलरहिता। पुनः कथंभूता। शुभ्रचन्द्रार्का उज्ज्वलचन्द्रसूर्या। विपङ्का कर्दमरहिता। अनिम्ननिम्नगा अगम्भीरनदिका। किमर्थमागता। जिगीषूणां जेतुमिच्छूनां विजयाय जयनिमित्तम्। जातिर्हेतुर्वालंकारः॥

**विलसदित्यादि**। हे राजन्, शरद्धनात्ययकालस्तव मुदं कुरुतात् करोतु। कथंभूता शरत्। विलसत्सरोजनयना उल्लसत्कमललोचना। पुनः कथंभूता। प्रसन्नचन्द्रानना प्रसन्नो निर्मलश्चन्द्र एव आननं मुखं यस्याः सा तथा। पुनः कथंभूता। विघनरागा विनष्टो घनस्य मेघस्य रागो यस्याः सा तथा। पुनः कथंभूता। हंसप्रचारसुभगा हंसानां प्रचारेण सुभगा। पुनः कथंभूता। स्त्रीव स्त्रीसदृशा। कथंभूता स्त्री। विलसन्ती शोभमाने सरोजवत् कमलवत् नयने यस्याः स्त्रियः सा तथा। पुनः कथंभूता। निर्मलपरिपूर्णचन्द्रवदना। पुनः कथंभूता। विशेषेण घनः प्रचुरो रागो यस्याः सा। पुनः कथंभूता। नूपुरगमनेन सुभगा। श्लेषोपमालंकारः॥

**कुमुदमित्यादि**। हे राजन्, इयं शरत् वर्तते। किं किं करोति। कुमुदं करोति श्वेतोत्पलं विकासयति। पुनश्च किं करोति। कुवलयमुत्पलवनं वर्धयति स्फारीकरोति। मित्राशाः मित्रे (पुत्रं) सूर्ये आशाश्च दिशो विस्तृणोति विस्तारयति। कथंभूता शरत्। उल्लासितसत्पथद्विजेन्द्रा उल्लासितः सत्पथे आकाशे द्विजेन्द्रश्चन्द्रमा यया सा तथा। अपरं कथंभूता शरत्। भवतः श्रीरिव। भवतः श्रीः किं करोति। कुमुदं करोति कोः पृथिव्याः मुदं हर्षं करोति। कुवलयं पृथ्वीमण्डलं वर्धयति। मित्राणां सुहृदां आशा वाञ्छा विस्तृणोति। कथंभूता। उल्लासिता आनन्दं प्रापिता सत्पथाः धर्ममार्गपरा द्विजेन्द्रा उत्तमब्राह्मणा यया सा। श्लेषोपमालंकारः। समुच्चयश्च॥

**विघटितेत्यादि**। हे राजन्, कार्तिके कृत्तिकानक्षत्रोपलक्षितपूर्णिमादिनमासे कस्य पुरुषस्य केलिर्न भवति। अपि तु सर्वस्यापि भवत्येव। कथंभूते कार्तिके। विघटितघनकपाटदिशि विघटितानि दूरीकृतानि घनकपाटानि मेघाररराणि दिशां हरितां येन स तथा तस्मिन्। पुनः कथंभूते। निभृतपुरंदरचापमण्डले निभृतं दूरीकृतं

अभिनवकलमकणिशपरिमलिनि विकासितकाशकान्तिके
कुङ्कुमकुसुमसुभगभुवि भवति न केलिः कस्य कार्तिके ॥४२८

प्रतपति रविर्निर्मर्यादं भवानिव सांप्रतं
विधुरपि बुध प्रीतिं धत्ते प्रवृद्धसुधारसः।
अरिकरिकुलक्रीडाध्वंसे हरिध्वनितोद्धुरं
त्वमपि च गुणारोपाच्चापं प्रपञ्चय भूपते ॥ ४२९ ॥

जडमपि सलिलं धत्ते खरदण्डं यत्र विगतविजिगीषुः।
अजडविजिगीषुचेतास्तत्र कथं नो दधीत खरदण्डम् ॥ ४३० ॥

---

पुरंदरचापमण्डलमिन्द्रधनुर्वलयं यत्र स तथा तस्मिन्। पुनः कथंभूते। कमलामोदसुहृदि कमलानां पद्मानां आमोदः परिमलस्तेनोपलक्षितः सुहृत् सूर्यो यत्र स तथा तस्मिन् (अथवा कमलानामामोददाने सुहृदुपकारस्तस्मिन्)। पुनः कथंभूते। संतर्पितहंसविलासिनीकुले संतर्पितं प्रीणितं हंसविलासिनीनां वरटानां कुलं येन स तस्मिन्। पुनः कथंभूते। अभिनवकलमकणिशपरिमलिनि अभिनवः प्रत्यग्रः कलमकणिशानां राजभोजनशालिमञ्जरीणां परिमलं सौगन्ध्यं विद्यते यस्य स तस्मिन्। पुनः कथंभूते। विकासितकाशकान्तिके विकासिता काशानां तृणविशेषपुष्पाणां कान्तिर्येन स तस्मिन्। पुनः कथंभूते। कुङ्कुमकुसुमसुभगभुवि कुङ्कुमानां काश्मीरजन्मकेसराणां कुसुमैः सुभगा मनोहरा भूर्यत्र स तथा तस्मिन्। रूपकाक्षेपालंकारः ॥

**प्रतपतीत्यादि**। हे भूपते, रविः सूर्यः प्रतपति प्रकर्षेण तापं करोति। कथम्। निर्मर्यादं निरवधि यथा भवत्येवम्। कदा प्रतपति। सांप्रतं शरदि। कइव। भवानिव त्वं यथा प्रतपसि। हे बुध, विधुरपि प्रीतिं धत्ते प्रीणयति। कथंभूतो विधुः। प्रवृद्धसुधारसः प्राप्तामृतरसः। हे भूपते, त्वमपि चापं प्रपञ्चय विस्तारय। कस्मात्। गुणारोपात् शिञ्जिन्यारोपणात्। कथम्। अरिकरिकुलक्रीडाध्वंसे हरिध्वनितोद्धुरं अरीणां करिणस्तेषां कुलं तस्य क्रीडाध्वंसे केलिध्वंसनिमित्तम्। निमित्तात् कर्मणि सप्तमी वाच्या। हरिध्वनितोद्धुरं सिंहनादोत्कटं यथा भवत्येवम्। अवसरोपमालंकारः ॥

**जडमित्यादि**। यत्र यस्यां शरदि सलिलं खरदण्डं कमलं धत्ते। कथंभूतं सलिलम्। जडमपि अज्ञानमपि। पुनः कथंभूतम्। विगतविजिगीषुः विजिगीषारहितम्। तत्र तस्यां शरदि अजडविजिगीषुचेताः अज्ञानरहितविजिगीषासंयुक्तमनाः कथं केन प्रकारेण खरदण्डं तीक्ष्णदण्डं नो दधीत न दध्यात् न धरति। अपि तु दधीतैव। श्लेषाक्षेपालंकारः ॥

इति चापेटिकपेटिकप्रकटितकटकप्रयाणप्रस्तावस्तं विजयवर्धनसेनापतिं तस्य पञ्चालपतेः प्रतापनोदनाय प्राहिणवम् ।

कदाचित्तुषारगिरिनिर्झरनीहारनिष्पन्दिनि गन्धमादनवनविभ्राजितभूर्जवल्कलोन्माथमन्थरे मानसहंसविलासिनीशिखण्डमण्डलविडम्बिनि नेपालशैलमेखलामृगनाभिसौरभनिर्भरे कुलूतकुलकामिनीकपोललावण्यचामिनि लम्पाकपुरपुरंध्रिकाधरमाधुर्यपश्यतोहरे पाकपाण्डिमोड्डमरपुण्ड्रकाण्डकारिणि प्रालेयलवोल्लासपल्लवितनवयवाङ्कुरे कोशकारश्यामिकापरि-

---

कदाचित् कस्मिंश्चिदवसरे निशि रात्रौ प्रत्यक्षतार्क्ष्यनामा हैरिकश्च प्रविश्य आगत्य मां प्रति एवं वक्ष्यमाणलक्षणोपलक्षितप्रकारेण व्यजिज्ञपत् विज्ञापितवान् । कथंभूतायां निशि । प्रौढप्रदोषायां प्रौढः प्रचण्डतरः परिणतः प्रदोषो रजनीमुखं यस्यां निशि सा तथा तस्याम् । पूर्वरात्रे इत्यर्थः । कस्मिन् सति व्यजिज्ञपत् । हैमने मरुति हेमन्ते भवो हैमनस्तस्मिन् हैमने । 'हेमन्तस्यापि णि' इति तकारलोपः । मरुति वाते । शीतवाते इत्यर्थः । परिसर्पति प्रसरति । कुतः प्रसरति सति । देवदिशः । उत्तरदिग्मण्डलात् । कथंभूते हैमने मरुति । तुषारगिरिनिर्झरनीहारनिष्पन्दिनि तुषारगिरिर्हिमाचलपर्वतस्तस्य ये निर्झरा जलझरणानि तेषां नीहारं शीतं निष्पन्दयति स तथा तस्मिन् । इति क्रियाकारकसंवन्धः । पुनः कथंभूते । गन्धमादनवनविभ्राजितभूर्जवल्कलोन्माथमन्थरे गन्धमादनं नाम वनं हिमाचलोपकण्ठे वर्तते तत्र विभ्राजन्ते शोभन्ते इत्येवंशीला ये भूर्जवल्कलाः भूर्जवृक्षत्वचः तेषामुन्माथमुत्कम्पनं तेन मन्थरः स तथा तस्मिन् । पुनः कथंभूते । मानसहंसविलासिनीशिखण्डमण्डलविडम्बिनि...... ........................................................... । पुनः कथंभूते । नेपालशैलमेखलामृगनाभिसौरभनिर्भरे नेपालो नाम शैलस्तस्य मेखला वनभूमिस्तत्र या मृगनाभिः कस्तूरिका तस्याः सौरभेण निर्भरः गाढभूतो यः स तथा तस्मिन् । पुनः कथंभूते । कुलूतकुलकामिनीकपोललावण्यचामिनि कुलूतो नाम मरवादेशस्तत्र याः कुलकामिन्यस्तासां कपोललावण्यं गण्डस्थलोदकं चामति पिवतीत्येवंशीलः स तथा तस्मिन् । पुनः कथंभूते । लम्पाकपुरपुरंध्रिकाधरमाधुर्यपश्यतोहरे लम्पाकपुरपुरंध्रिकास्तासामधरमाधुर्यस्य पश्यतोहरश्चोरस्तस्मिन् । पुनः कथंभूते । पाकपाण्डिमोड्डमरपुण्ड्रकाण्डकारिणि पाकेन पाचनतया यः पाण्डिमा उज्ज्वलत्वं तेनोड्डमरा उत्कटा ये पुण्ड्रकाण्डाः श्वेतेक्षुपर्वाणि तान् करोतीत्येवंशीलः स तथा तस्मिन् । पुनः कथंभूते । प्रालेयलवोल्लासपल्लवितनवयवाङ्कुरे प्रालेयं सिहिका तस्य लवा अग्रजलकणास्तेषामुल्लासेन पल्लविता नवा यवाङ्कुराः सितशूकोद्भेदा येन स तथा तस्मिन् । पुनः कथंभूते । कोशकारश्यामिकापरिणामप्रणयिनि कोशकाराः कृष्णेक्षवस्तेषां श्यामिकां परिणामं कृष्ण-

णामप्रणयिनि शिशिरसीकरासारतरङ्गिततरुणतरुकिसलयाग्रभागे रल्लकरोमनिष्पन्नकम्बललोकलीलाविलासिनि शेफालिफुल्लाह्लादलालसे क्रौञ्चकुलकरालकेकारवस्फारिणि नीरन्ध्ररोध्ररजःप्रसरपाण्डुरितदिङ्मुखे कुन्दकन्दलानन्दिनि लवलीलतारामरामणीयकनिकेतने कमलिनीदलदहनहिमवाहिनि जाह्नवीजलमज्जनजातजडभावे तरणितीरिणीजलकेलिव्यसनिनि सरस्वतीसलिलोदवासतापसे नवयौवनाङ्गनास्तनकलशोष्मनिषेवणादेशिनि प्रियागुरुधूपधूमोद्गमनिवातवलभिगर्भे घनघुसृणरसरागद्विगुणरमणीमनसि बहल-

---

सपर्यायं प्रणयति करोतीति स तथा तस्मिन्। पुनः कथंभूते। शिशिरसीकरासारतरङ्गिततरुणतरुकिसलयाग्रभागे शिशिराः शीतला ये सीकरास्तेषामासारः समूहस्तेन तरङ्गिताः कम्पनशीला ये तरुणतरूणां किसलया अग्रभागा यत्र स तथा तस्मिन्। पुनः कथंभूते। रल्लकरोमनिष्पन्नकम्बललोकलीलाविलासिनि रल्लका मृगविशेषास्तेषां रोमनिष्पन्ना ये कम्बलास्तैरुपलक्षिता ये लोका महाशूद्रास्तेषां लीलाविलासो विदग्धचेष्टितक्रीडा यस्मिन् मरुति स तथा तस्मिन्। पुनः कथंभूते। शेफालिफुल्लाह्लादलालसे शेफालिफुल्लानि तेषामाह्लादलालसा आनन्दकाङ्क्षा यत्र स तथा तस्मिन्। पुनः कथंभूते क्रौञ्चकुलकरालकेकारवस्फारिणि क्रौञ्चा उत्क्रोशपक्षिणस्तेषां कुलानां समूहानां ये करालकेकारवा उन्नतशब्दास्तान् स्फारयति प्रचुरीकरोतीत्येवंशीलः स तस्मिन्। पुनः कथंभूते। नीरन्ध्ररोध्ररजःप्रसरपाण्डुरितदिङ्मुखे नीरन्ध्रं अविच्छिन्नं यत् रोध्ररजः रोध्रवृक्षपुष्पपरागः तस्य प्रसरेण व्याप्त्या पाण्डुरितानि शुक्लीकृतानि दिङ्मुखानि येन तस्मिन्। पुनः कथंभूते। कुन्दकन्दलानन्दिनि कुन्दानां माध्यपुष्पाणां कन्दलानि पल्लवानि आनन्दयति प्रीणयतीत्येवंशीलः स तस्मिन्। पुनः कथंभूते। लवलीलतारामरामणीयकनिकेतने लवलीलतानां चन्दनशाखानां आरामस्य रामणीयकं तस्य निकेतनं मन्दिरं तस्मिन्। पुनः कथंभूते। कमलिनीदलदहनहिमवाहिनि कमलिनीनां दलानि पत्राणि तेषां दहनप्रायं यद्धिमं तद्वहतीत्येवंशीलस्तस्मिन्। पुनः कथंभूते। जाह्नवीजलमज्जनजातजडभावे जाह्नवीजलमज्जनेन जात उत्पन्नो जडभावो मन्दोद्यमो यस्मिन् स तथा तस्मिन्। पुनः कथंभूते। तरणितीरिणीजलकेलिव्यसनिनि तरणितीरिणी यमुना नदी तस्याः जलकेलौ व्यसनं आग्रहो विद्यते यस्य स तस्मिन्। पुनः कथंभूते। सरस्वतीसलिलोदवासतापसे सरस्वती नाम नदी तस्याः सलिलं तत्र य उदवासः उदवासो नाम तपस्तद्विधस्तापसः स तस्मिन्। पुनः कथंभूते। नवयौवनाङ्गनास्तनकलशोष्मनिषेवणादेशिनि नवयौवनाङ्गनानां योऽसौ स्तनकलशोष्मा कुचकुम्भोष्णत्वं तस्य निषेवणमालिङ्गनं तत् आदिशति प्रयोजयतीत्येवंशीलः स तस्मिन्। पुनः कथंभूते। प्रियागुरुधूपधूमोद्गमनिवातवलभिगर्भे प्रियो हृदयेष्टोऽगुरुधूपः तस्य धूमस्योद्गमः निवातवलभिगर्भश्च यत्र स तस्मिन्। पुनः कथंभूते। घनघुसृणरसरागद्विगुणरमणीमनसि घनः

प्रावारपरिचयप्रसाधिनि प्रवर्धितप्रवृद्धधूमध्वजाराधनानुबन्धे समस्तसत्त्वरोमाञ्चकञ्चुकाचारिणि मलयमेखलालतानर्तनकुतूहलित इव देवदिशः परिसर्पति हैमने मरुति,

नलिनीवनदैन्यदुःखित इव मन्दद्युति मार्तण्डमण्डले, शीतपातभयसंकुचितेष्विव लघुषु, दिवसेषु जाड्यजातजडजानुष्विव मन्दप्रयाणदीर्घासु रात्रिषु, सरत्सुधासारसंतर्पितनिलिम्पलोक इव क्षीणतेजसि तुषारकिरणे,

इक्षूल्लासिनि सस्यशालिनि खरं शेफालितोत्फुल्लिनि
क्रौञ्चोन्मादिनि कुन्दनन्दिनि घनाश्लेषाङ्गनापादिनि।

---

प्रचुरो योऽसौ घुसृणरसस्तस्य रागेण द्विगुणानि रमणीनां मनांसि यस्मिन्। पुनः कथंभूते। बहलप्रावारपरिचयप्रसाधिनि बहलो विस्तीर्णतरो योऽसौ प्रावारो हिमानिलनिवारणवस्त्रम्। 'द्वौ प्रावारोत्तरासङ्गौ—हिमानिलनिवारणे'। तस्य परिचयस्तं प्रसाधयति कारयतीत्येवंशीलः स तस्मिन्। पुनः कथंभूते। प्रवर्धितप्रवृद्धधूमध्वजाराधनानुबन्धे प्रवर्धितप्रवृद्धः प्रज्वलितो योऽसौ धूमध्वजोऽग्निस्तस्याराधने सेवायां अनुबन्धः प्रवृत्तानुवर्तनं यत्र स तस्मिन्। पुनः कथंभूते। समस्तसत्त्वरोमाञ्चकञ्चुकाचारिणि समस्तानां सत्त्वानां रोमाञ्चकञ्चुकं रोमहर्षणं आचारयति इत्येवंशीलः स तस्मिन्। देवदिशः उत्तरदिशः सकाशात् किमर्थं परिसर्पति हैमनो मरुत् इत्याह। उत्प्रेक्षते—मलयमेखलालतानर्तनकुतूहलित इव मलयमेखला मलयाचलतटी तस्या या लताः चन्दनशाखास्तासां नर्तनं गात्रविक्षेपः तस्मिन् कुतूहलितः संजातमनोरथः तस्मिन्। इवोत्प्रेक्षायाम्॥

पुनश्च कस्मिन् सति प्रत्यक्षतार्क्ष्यनामा हैरिको मां प्रति एवं व्यजिज्ञपत्। मार्तण्डमण्डले सूर्यबिम्बे सति। कथंभूते मार्तण्डमण्डले। मन्दद्युति मन्दा अतीव्रा द्युत् दीप्तिर्यस्य स मन्दद्युत् तस्मिन्। अल्पतेजसीत्यर्थः। पुनः कथंभूते। उत्प्रेक्षते—नलिनीवनदैन्यदुःखिते इव नलिनीनां वनं तस्य यत् दैन्यं शीतदाहदुःखं तेन दुःखितो दुःखं प्राप्तो नलिनीवनदैन्यदुःखितस्तस्मिन्। इवशब्द उत्प्रेक्षाद्योतकः। केषु सत्सु दिवसेषु। लघुषु ह्रस्वेषु। पुनः कथंभूते। उत्प्रेक्षते—शीतपातभयसंकुचितेष्विव शीतपातात् शीतागमात् यद्भयं त्रासस्तस्मात् संकुचिताः संकोचं प्राप्तास्तेषु। कासु सतीषु। रात्रिषु सतीषु। कथंभूतासु रात्रिषु। मन्दप्रयाणदीर्घासु मन्दप्रयाणेन दीर्घा आयतास्तासु। पुनः कथंभूतासु। उत्प्रेक्षते—जाड्यजातजडजानुष्विव जाड्येन शीतेन जाते जडे मन्दे जानुनी अष्ठीवन्तौ यासां तासु। पुनश्च कस्मिन् सति। तुषारकिरणे सति। कथंभूते। क्षीणतेजसि। अपरं कथंभूते। उत्प्रेक्षते—सरत्सुधासारसंतर्पितनिलिम्पलोके इव सरन्ती निर्गलन्ती या सुधामृतं तस्या आसारः समूहस्तेन संतर्पितः सम्यक्प्रीणितो निलिम्पलोकोऽमरसमूहो येन स तथा तस्मिन्। पुनश्च कस्मिन् सति। वन्दिवृन्दारकवृन्दे प्रधानस्तुतिपाठकसमूहे इत्येवं पठति सति। इतीति किम्। इक्षूल्लासिनीत्यादि। हे कामिनि हे प्रिये; कः

भास्वन्मन्दिनि वातवाहिनि हिमासारावसन्नाङ्गिनि
काले कामिनि दीर्घरात्रिघटिनि प्राटेत्कृती कोऽध्वनि ॥४३१॥

यैः पूर्वं गाढकण्ठग्रहवलितभुजाभोगनिर्भुग्नवक्त्रैः
स्त्रीणां पीनस्तनाग्रस्थपुटितहृदयैर्वासगेहे प्रसुप्तम् ।
तैरद्य त्वद्द्विषद्भिः समरुति शिशिरेऽशायि शैलावकाशे
वक्रग्रावोपधानैरुरसि च निहिताष्ठीवदष्ठीलबन्धैः ॥ ४३२ ॥

---

कृती विद्वान् तृतीये ईदृग्विधे काले शीतकाले अध्वनि मार्गे प्राटेत् प्रगच्छेत् । अपि तु न कश्चित् प्राटेदित्यर्थः । कथंभूते काले । इक्षूल्लासिनि इक्षून् उल्लासयति पाचयतीत्येवंशीलः स तस्मिन् । पुनः कथंभूते । सस्यशालिनि सस्यैर्मुद्गमयुष्टयवचणकगोधूमादिभिः शालते इत्येवंशीलः स तस्मिन् । 'शाल श्लाघायाम्' इति धातोः प्रयोगात् । पुनः कथंभूते । खरमतिशयेन शेफालितां अतिशीतामुत्फुल्लयतीत्येवंशीलः स तथा तस्मिन् । पुनः कथंभूते । क्रौञ्चोन्मादिनि क्रौञ्चानुत्क्रोशपक्षिण उन्मादयति मत्तान्करोतीत्येवंशीलः स तस्मिन् । पुनः कथंभूते । कुन्दनन्दिनि कुन्दान् माघ्यपुष्पविशेषान् नन्दयतीत्येवंशीलः स तस्मिन् । पुनः कथंभूते । घनाश्लेषाङ्गनापादिनि घनाश्लेषा गाढालिङ्गना अङ्गना स्त्रीरापादयति निकारयतीति स तस्मिन् । पुनः कथंभूते । भास्वन्मन्दिनि भास्वन्तं मन्दयति अतीव्रं कारयतीति स तस्मिन् । पुनः कथंभूते । वातवाहिनि वातं वाहयति प्रवर्तयतीत्येवंशीलः स तस्मिन् । पुनः कथंभूते । हिमासारावसन्नाङ्गिनि हिमासारेण शिशिरसमूहेन अवसन्ना गतिभङ्गसहिता अङ्गिनो यस्मिन् स तस्मिन् । पुनः कथंभूते । दीर्घरात्रिघटिनि दीर्घा रात्रयः त्रिंशद्घटिकाप्रमाणा रात्री रजनी घटयति करोतीत्येवंशीलः स तस्मिन् । समुच्चयाक्षेपालंकारः ॥

यैरित्यादि । हे राजन्, यैस्त्वद्द्विषद्भिर्वासगेहे धवलगेहे चित्रशालायां पूर्वं प्रसुप्तं निद्रितम् । कथंभूतैस्त्वद्द्विषद्भिः । गाढकण्ठग्रहवलितभुजाभोगनिर्भुग्नवक्त्रैः । स्त्रीणामिति पदं गाढादिना च पदेन संबन्धनीयम् । तेनायमर्थः—स्त्रीणां गाढं दृढं यथा योऽसौ कण्ठग्रहो बाहुना ग्रीवाग्रहणं तस्मिन् वलितः कुण्डलीकृतो योऽसौ भुजाभोगो दोर्दण्डमण्डलं तेन निर्भुग्नं वक्रीकृतं वक्त्रं येषां ते तथोक्तास्तैः । पुनः कथंभूतैः । स्त्रीणां पीनस्तनाग्रस्थपुटितहृदयैः पीनस्तनाग्राभ्यामुन्नतकुचचूचुकाभ्यां स्थपुटितं निम्नोन्नतीकृतं हृदयं येषां द्विषतां ते तथा तैः । तैस्त्वद्द्विषद्भिः अद्यास्मिन् शिशिरे शैलावकाशे पर्वतप्रदेशे अशायि शयितम् । कथंभूते शैलावकाशे । समरुति शीतवातसहिते । कथंभूतैस्त्वद्द्विषद्भिः । वक्रग्रावोपधानैः वक्रा विषमा ये ग्रावाणः पाषाणास्तेषां उपधाने शीर्षे येषां ते तथा तैः । पुनः कथंभूतैः । उरसि निहिताष्ठीवदष्ठीलबन्धैः उरसि विनिहितौ अष्ठीवतोर्जानुनोरष्ठीलबन्धो यैस्ते तथा तैः । परिवृत्तिरलंकारः ॥

यैर्नीताः सौधमध्ये घनघुसृणरसालिप्तगात्रैः प्रकामं
कान्तावक्षोजकुञ्जार्जनविजयिभुजैर्दीर्घयामास्त्रियामाः।
विध्यातासन्नवह्निप्रसरितभसितापाण्डवः पिण्डशेषा-
स्ते हेमन्ते नयन्ते तव नृप रिपवः शर्वरीं पर्वतेषु ॥ ४३३ ॥

अपि च।

कुर्वन्तः कामिनीनामधरकिसलये सौकुमार्यप्रमाथं
विन्यस्यन्तः कपोले सरसनखपदोल्लासभङ्गांस्तरङ्गान्।
रोमाञ्चोदञ्चदक्षाः स्तनकलशयुगे प्रीणितक्रौञ्चकान्ताः
प्रालेयासारसान्द्रीकृतकमलवना हैमना वान्ति वाताः ॥ ४३४ ॥

---

यैर्नीता इत्यादि। हे नृप, यैस्तव रिपुभिः त्रियामा रात्रयः सौधमध्ये निवातप्रासादगर्भे नीता अतिक्रमिताः। कथंभूतै रिपुभिः। घनघुसृणरसालिप्तगात्रैः घनः प्रचुरो योऽसौ घुसृणरसः कश्मीरजन्मपीतनवद्रवस्तेनालिप्तं अङ्गं येषां ते तथा तैः। कथम्। प्रकामं यथेष्टम्। अपरं कथंभूतैर्यैस्तव रिपुभिः। कान्तावक्षोजकुञ्जार्जनविजयिभुजैः कान्तानां यौ वक्षोजौ तयोः कुञ्जार्जनं मध्यप्रदेशस्वीकारस्तेन विजयिनौ जयवन्तौ भुजौ येषां ते तथा तैः। कथंभूतास्त्रियामा। दीर्घयामाः............प्रहराः। ते तव रिपवो हेमन्ते शीतकाले पर्वतेषु शर्वरीं रात्रिं नयन्ते निर्गमयन्ति। कथंभूतास्ते रिपवः। विध्यातासन्नवह्निप्रसरितभसितापाण्डवः विध्यातः क्षीणतां नीत आसन्नो निकटतरो योऽसौ वह्निरग्निस्तस्य प्रसरितं व्याप्तं यत् भसितं भस्म तेन पाण्डव उज्ज्वलवर्णाः। अपरं कथंभूताः। पिण्डशेषाः उर्वरितशरीराः। मांसवस्त्रादिरहिता इत्यर्थः। अयमपि परिवृत्तिर्नामालंकारः॥

अपि च अस्ति कश्चिद्विशेषः। कुर्वन्त इत्यादि। यत्रेतिपदं वक्ष्यमाणवृत्तप्रोक्तं अत्रापि ग्राह्यम्। तेनायमर्थः—यत्र यस्मिन् काले हैमना हेमन्ते भवा वाता वान्ति प्रवर्तन्ते। 'हेमन्तस्यापि णि(?)' इति तकारलोपः। वाताः किं कुर्वन्तः। कामिनीनां अधरकिसलये सौकुमार्यप्रमाथं कोमलतालोपं कार्कश्यजननं कुर्वन्तो विदधतः। पुनः कथंभूताः। कामिनीनां कपोले तरङ्गान् वलिरेखा विन्यस्यन्तः स्थापयन्तः। कथंभूतान् तरङ्गान्। सरसनखपदोल्लासभङ्गान् सरसानि तत्कालदत्तानि यानि नखपदानि नखक्षतानि तेषां उल्लासेन उल्लसनेन भङ्गो येषां ते तथा तान्। कथंभूता वाताः। स्त्रीणां स्तनकलशयुगे रोमाञ्चोदञ्चदक्षाः रोमाञ्चो रोमहर्षणं तस्योदञ्चः प्रादुर्भावस्तत्र दक्षाश्चतुराः। पुनः कथंभूताः। प्रीणितक्रौञ्चकान्ताः प्रीणिता हर्षं प्रापिताः क्रौञ्चानामुत्क्रोशपक्षिणां कान्ताः यैस्ते तथोक्ताः। पुनः कथंभूताः। प्रालेयासारसान्द्रीकृतकमलवनाः प्रालेयं मिहिका तस्यासारेण समूहेन सान्द्रीकृतानि क्लेदीकृतानि कमलवनानि यैस्ते तथोक्ताः। रूपकालंकारः॥

यत्रैतत्स्वयमेव कामिषु निशि स्त्रीणां घनालिङ्गनं
यत्रायं स्मरकेलिकामितसमायामस्त्रियामागमः।
यत्रार्द्रार्द्रकफालिभिः परिचितः सद्यःस्रुतोऽसौ रसः
प्रीत्यै कस्य न स क्षितीश्वरपते प्रालेयकालोऽधुना ॥ ४३५॥

इति पठति बन्दिवृन्दारकवृन्दे, प्रविश्य प्रौढप्रदोषायां निशि प्रत्यक्षतार्क्ष्यनामा हैरिको मामेवं व्यजिज्ञपत्—'देव, विजयवर्धनसेनापतिविजयेन वर्धसे। पुनश्च

शुण्डालैर्घनघस्मरैरजगवैरिन्द्रायुधस्पर्धिभिः
कुन्तैः कैतकपत्रपद्धतिधरैः खड्गैस्तडिड्डम्बरैः।

---

यत्रैतदित्यादि। हे क्षितीश्वरपते राजाधिराज, स प्रालेयकालः शीतकालः अधुना कस्य पुरुषस्य प्रीत्यै न भवति हर्षाय न स्यात्, अपि तु सर्वस्य स्यात्। स कः। यत्र यस्मिन् प्रालेयकाले निशि रात्रौ एतत्प्रत्यक्षीभूतं स्त्रीणां घनालिङ्गनं कामिषु स्वयमेव भवति अयाचितं स्यात्। यत्र अयं प्रत्यक्षीभूतः त्रियामागमो वर्तते। कथंभूतस्त्रियामागमः। स्मरकेलिकामितसमायामः स्मरकेलीनां कामितसमो वाञ्छितसदृश आयामो दैर्घ्यं यस्य स तथोक्तः। यत्र असौ प्रत्यक्षीभूतः सद्यःस्रुतः तत्कालगलितो रस इक्षुरसो वर्तते। कथंभूतो रसः। आर्द्रार्द्रकफालिभिः परिचितः आर्द्रं सरसं यत् आर्द्रकं शृङ्गवेरं तस्य फालयः खण्डानि आर्द्रार्द्रकफालयस्ताभिः परिचित आर्द्रसरसं उपविष्टम्। समुच्चयालंकारः॥

हे देव, विजयवर्धनसेनापतिविजयेन त्वं वर्धसे। कस्मात्त्वं वर्धसे। यस्मात् कारणात् अन्यतरेद्युरेव अन्यतरस्मिन्नेव दिवसे अह्नि। 'पूर्वान्यान्यतरेतराधरोत्तरेभ्य एद्युस्' इति सूत्रेण एद्युस्प्रत्ययः। अभ्यह्नं दिवसे न तु रात्रौ संग्रामस्तुमुलः अज्ञातात्मपरजनः रौद्रस्ततः समभवत् सम्यग्बभूव।

शुण्डालैरित्यादि। कथंभूतः संग्रामः। पर्जन्यकालक्रियः वर्षाकालसदृशः। कैः कृत्वा संग्रामः समभवत्। शुण्डालैर्गजैः। कथंभूतैः शुण्डालैः। घनघस्मरैः कालमेघतिरस्कारकारिभिः। न केवलं शुण्डालैः, अजगवैरिन्द्रायुधस्पर्धिभिः इन्द्रचापसदृशैः। न केवलं तैः, अपि तु कुन्तैर्भल्लकैस्तोमरायुधैः। कथंभूतैः कुन्तैः। कैतकपत्रपद्धतिधरैः केतक्या इमानि कैतकानि तानि पत्राणि तेषां पद्धतिं मार्गमुपधां धरन्तीति ते तथा तैः। पुनः

क्षत्रच्छत्रशिलीन्ध्ररुद्धवसुधाबन्धः शरोग्रागमः
संग्रामस्तुमुलस्ततः समभवत्पर्जन्यकालक्रियः ॥ ४३६ ॥

यस्मादन्यतरेद्युरेव दिवसे, रक्तचन्दनचितचण्डिकालपनमनोहारिणि सति पूर्वगिरिशिखरशेखरे सूरे, भवत्सु च सर्वसंनाहावहबहलकोलाहलेषु प्रतिबलेषु, सैन्यकमुख्योद्देशेनेश्वरनिर्दिश्यमानाभिधानेषु, वस्तुवस्त्रास्त्रकवचवाहनेषु, तारतरं स्वनत्सु मुखरितनिखिलाशामुखेषु शङ्खेषु, ध्मायमानासु प्रतिशब्दनादितदिगन्तरगिरिगुहामण्डलासु काहलासु, ध्वनत्सु क्षोभिता-

---

खड्गैः। कथंभूतैः। तडिड्डम्बरैस्तडितां इव डम्बर आटोपो येषां ते तथा तैः। क्षत्रच्छत्रशिलीन्ध्ररुद्धवसुधाबन्धः क्षत्राः सामन्तास्तेषां छत्राणि तान्येव शिलीन्ध्राणि चौरच्छत्राणि तै रुद्धो व्याप्तो वसुधायाः बन्धो मण्डलं यस्मिन् स तथोक्तः। अपरं कथंभूतः संग्रामः। शरोग्रागमः शराणामुग्र आगमो यत्र स तथोक्तः। बाणजालवर्षे इत्यर्थः। कस्मिन् सति संग्रामोऽभवदित्याह—सूरे श्रीसूर्ये सति विद्यमाने सति। कथंभूते सूरे रक्तचन्दनचितचण्डिकालपनमनोहारिणि रक्तचन्दनेन कुचन्दनेन चितं यत् चण्डिकालपनं भवानीमुखं तद्वत् मनो हरतीति एवंशीलः तस्मिन्। पुनः कथंभूते सूरे। पूर्वगिरिशिखरशेखरे पूर्वगिरिरुदयाचलस्तस्य शिखर.............................मुत्कण्ठं तस्मिन्। पुनश्च केषु सत्सु संग्रामः समभवत्। प्रतिबलेषु भवत्सु संजायमानेषु। कथंभूतेषु। सर्वसंनाहावहबहलकोलाहलेषु सर्वसंनाहावहः सर्वेषां प्रहारकारो बहलः कोलाहलो येषु प्रतिबलेषु तानि तेषु। पुनश्च केषु सत्सु। सैन्यकमुख्योद्देशेन सैन्यकमुख्यानामुद्देश आदेशः नामग्रहणपूर्वकं योऽसावादेशस्तेन कृत्वा ईश्वरेण सेनापतिना निर्दिश्यमानानि कथ्यमानानि अभिधानानि सुभटानां नामानि येषु तानि सैन्यकमुख्योद्देशेनेश्वरनिर्दिश्यमानानि तेषु ईदृग्विधेषु। पुनश्च केषु सत्सु वस्तुवस्त्रास्त्रकवचवाहनेषु अमुकस्यामुकं वस्तु दातव्यम्, अमुकस्य वस्त्रं दातव्यम्, अमुकस्य अस्त्राणि दातव्यानि, अमुकस्य कवचानि कूर्पासकाः दातव्यानि, वाहनानि अश्वादीनि दातव्यानि तेषु। पुनश्च केषु सत्सु। शङ्खेषु वादित्रविशेषेषु। किंकुर्वत्सु शङ्खेषु। तारतरमत्युच्चैर्यथा भवत्येवं स्वनत्सु शब्दं कुर्वाणेषु। पुनः कथंभूतेषु शङ्खेषु। यथोक्तविशेषणविशिष्टेषु मुखरितनिखिलाशामुखेषु मुखरितानि वाचालीकृतानि निखिलानां पूर्वदक्षिणापरोत्तरदिक्कोणाकाशपाताललक्षणानामाशानां दिशां मुखानि मण्डलानि वदनानि यैस्ते तथा तेषु। कासु सतीषु। काहलासु धत्तूरपुष्पाकारमुखभेरीषु ध्मायमानासु......................................................। कथंभूतासु। प्रतिशब्दनादितदिगन्तरगिरिगुहामण्डलासु प्रतिशब्देन प्रतिध्वनिना नादितानि ग्रस्तानि दिगन्तराणां गिरीणां गुहानां मण्डलानि समूहा याभिस्तास्तासु। पुनश्च केषु सत्सु। दुन्दुभिषु भेरीषु ध्वन-

म्भोनिधिनाभिषु दुन्दुभिषु, शब्दायमानेषु सुरसुन्दरीश्रवणारुष्करेषु पुष्करेषु, प्रहतासु वित्रासितसैन्यसामजचिक्कासु ढक्कासु, वाद्यमानेषु सिद्धवधूबोधप्रघर्षकेषु महानकेषु, सर्जितासु विजृम्भितभुजगभामिनीसंरम्भासु भम्भासु, प्रगुणितेषु भयोत्तम्भितामरकरिकर्णतालेषु तालेषु, प्रोच्चालितासु रणरसोत्साहितसुभटघटासु करटासु, विलसन्तीषु विलम्बलयप्रमोदितकदनदेवतावक्षःस्थलासु त्रिविलासु, प्रवर्तितेषु निरन्तरध्वानप्रवर्तिताहवचरराक्षसीकेषु डमरुकेषु, स्फारितासु प्रदीर्घकूजितजर्जरितवीरलक्ष्मीनिकेतनि-

---

त्सु । किं कुर्वत्सु दुन्दुभिषु । क्षोभिताम्भोनिधिनाभिषु क्षोभिता संचालिता अम्भोनिधीनां नाभयो यैर्दुन्दुभिभिस्तेषु । पुनश्च केषु सत्सु । पुष्करेषु मर्दलेषु । किं कुर्वाणेषु पुष्करेषु । सुरसुन्दरीश्रवणारुष्करेषु सुरसुन्दरीणां श्रवणानां अरुष्कराणि व्याध्युत्पादकानि व्रणकराणि वा तेषु शब्दायमानेषु । पुनश्च कासु सतीषु ढक्कासु ढोल्लवादित्रेषु । कथंभूतासु । प्रहतासु कोणाघातैस्ताडितासु । पुनः कथंभूतासु । वित्रासितसैन्यसामजचिक्कासु वित्रासिता भयं प्रापिता सैन्यसामजानां चिक्का कलभा याभिर्ढक्काभिस्तासु । पुनश्च केषु सत्सु । महानकेषु महापटहेषु । किं क्रियमाणेषु । वाद्यमानेषु शब्दान् कार्यमाणेषु । पुनः कथंभूतासु । सिद्धवधूबोधप्रघर्षकेषु सिद्धवधूनां देवविशेषवनितानां बोधस्य चेतनायाः प्रघर्षका विनाशकास्ते तथा तेषु । पुनश्च कासु सतीसु । भम्भासु वराङ्गासु शुषिरवादित्रविशेषेषु । रीरीतिनिष्पादिकेषु(कासु) हुडुकाख्वि(ख्यि)त्यर्थः । कथंभूतासु भम्भासु । सर्जितासु प्रगुणितासु । पुनः कथंभूतासु । विजृम्भितभुजगभामिनीसंरम्भासु विजृम्भितो भुजगभामिनीनां पातालकन्यानां संरम्भः क्रोधो याभिस्तासु । अपरं केषु सत्सु । तालेषु वंशवादित्रेषु । कथंभूतेषु । प्रगुणितेषु सर्जितेषु । पुनः कथंभूतेषु । भयोत्तम्भितामरकरिकर्णतालेषु भयेन उत्तम्भिता टहरिता अमरकरिभिर्देवगजैः कर्णतालाः श्रवणतालपत्राणि यैस्ते तेषु । पुनश्च कासु सतीषु । करटासु वादित्रविशेषेषु । कथंभूतासु । प्रोत्तालितासु प्रचुरशब्दासु । अपरं कथंभूतासु । रणरसोत्साहितसुभटघटासु रणरसेन उत्साहिता उद्यमं प्रापिता सुभटघटा रचना याभिस्तास्तासु । पुनश्च कासु सतीषु । त्रिविलासु राजकिटकिटीषु अवनद्धवादित्रेषु । किं कुर्वतीषु त्रिविलासु । विलसन्तीषु उल्लसन्तीषु । पुनः कथंभूतासु । विलम्बलयप्रमोदितकदनदेवतावक्षःस्थलासु विलम्बलयेन द्रुतमध्येतरशब्देन साम्येन प्रमोदितानि हर्षं प्रापितानि कदनदेवतानां संग्रामदेवतानां वक्षःस्थलानि याभिस्तास्तासु । पुनश्च केषु सत्सु । डमरुकेषु ढक्कावादित्रेषु । कथंभूतेषु । प्रवर्तितेषु विजृम्भितेषु । कथंभूतेषु डमरुकेषु । निरन्तरध्वानप्रवर्तिताहवचरराक्षसीकेषु निरन्तरध्वानैः प्रवर्तिता अवतारिता आहवचरराक्षस्यः संग्रामवर्तिरक्षोभार्या यैस्ते तथा तेषु । पुनश्च कासु सतीषु । रुञ्जासु वादित्रविशेषेषु ।

कुञ्जासु रुञ्जासु, जयन्तीषु विद्विष्टकटकचेष्टितलुण्टासु जयघण्टासु, गायत्सु वेणुवीणाझल्लरीध्वनिसमानतानेषु गायनेषु, उदाहरत्सु मन्त्राशीर्वादनिपुणोच्चारणेषु ब्राह्मणेषु, पठत्सु समरोत्सुकवीरपुरुषहृदयानन्दिषु बन्दिषु, त्वरमाणेषु संपादितदधिदूर्वाचन्दनेषु नृपतिनन्दनेषु, प्रचलत्सु बुद्बुदार्धचन्द्रादर्शनिबिडगुडोड्डमरडामरितभुवनाभोगेषु नागेषु, प्रधावमानेषु प्रवेगखुरखरमुखारब्धमेदिनीवादनविराजिषु वाजिषु, संचरत्सु चक्रधाराभरा-

---

कथंभूतासु। स्फारितासु प्रचुरीकृतासु। पुनः कथंभूतासु। प्रदीर्घकूजितजर्जरितवीरलक्ष्मीनिकेतनिकुञ्जासु प्रदीर्घकूजितैरायतशब्दैः जर्जरितानि वधरीकृतानि वीरलक्ष्मीनां निकेतनिकुञ्जानि गृहमध्यप्रदेशा याभिः रुञ्जाभिस्तासु। पुनश्च कासु सतीषु। जयघण्टासु स्थालिकासु कंसपात्रीषु। कथंभूतासु। जयन्तीषु जयं कुर्वतीषु। पुनः कथंभूतासु। विद्विष्टकटकचेष्टितलुण्टासु। विद्विष्टस्य शत्रोः प्रस्तावादचलस्य यत् कटकं सैन्यं तस्य चेष्टितं प्रवर्तनं तल्लुटन्ति लोपयन्ति तास्तासु। पुनश्च केषु सत्सु। गायनेषु गन्धर्वेषु सत्सु। किं कुर्वत्सु गायनेषु। गानं कुर्वत्सु। संग्रामः समभवत् इति क्रियासंबन्धः। कथंभूतेषु गायनेषु। वेणुवीणाझल्लरीध्वनिसमानतानेषु वेणवश्च वंशवीणाश्च वल्लकाः झल्लर्यश्च राजगृहधृतनालिकापरिज्ञानार्थं घटिकादिवादित्राणि तासां ध्वनीनां समानस्तानो गानविशेषो येषु ते तथा तेषु। पुनश्च केषु सत्सु। ब्राह्मणेषु सत्सु। किं कुर्वत्सु। उदाहरत्सु पठत्सु। पुनः कथंभूतेषु। मन्त्राशीर्वादनिपुणोच्चारणेषु मन्त्रस्य वेदस्य ये आशीर्वादास्तेषां निपुणोच्चारणं उदात्तानुदात्तस्वरितस्वरपूर्वकपठनं येषु ते तथा तेषु। पुनश्च केषु सत्सु। बन्दिषु वाग्जीवेषु भट्टेषु। किं कुर्वत्सु बन्दिषु। पठत्सु षट्पदादिपाठानुच्चारयत्सु। कथंभूतेषु। समरोत्सुकवीरपुरुषहृदयानन्दिषु सह मरेण वर्तत इति समरः संग्रामस्तत्रोत्सुका उत्ताला ये वीरपुरुषाः सुभटमानवास्तेषां हृदयानि चित्तानि आनन्दयतीत्येवंशीलास्तेषु। पुनश्च केषु सत्सु। नृपतिनन्दनेषु सत्सु। किं कुर्वाणेषु। त्वरमाणेषु। पुनः कथंभूतेषु। संपादितदधिदूर्वाचन्दनेषु संपादितानि तिलकीकृतानि दधिदूर्वाचन्दनानि येषां ते तथा तेषु। पुनश्च केषु सत्सु। नागेषु सत्सु। किं कुर्वत्सु नागेषु। प्रचलत्सु चपलगतिं कुर्वत्सु। पुनः कथंभूतेषु। बुद्बुदार्धचन्द्रादर्शनिबिडगुडोड्डमरडामरितभुवनाभोगेषु बुद्बुदाश्च सुवर्णादिमयजलस्फोटका अर्धचन्द्राश्च सुवर्णादिघटिता अष्टमीचन्द्रा आदर्शाश्च दर्पणास्तैर्निबिडा जटिता गुडा गजप्रक्षरास्तेषामुड्डमरेणोल्वणभयेन डामरितो भयं प्रापितो भुवनाभोगो जगद्विस्तारो यैस्ते तथा तेषु। पुनश्च केषु सत्सु। वाजिषु सत्सु। किं कुर्वाणेषु वाजिषु। प्रधावमानेषु शीघ्रगतिं कुर्वाणेषु। पुनः कथंभूतेषु। प्रवेगखुरखरमुखारब्धमेदिनीवादनविराजिषु प्रवेगेण उत्सुकतया प्रमुक्ता ये खुराः शफास्तेषां खराणि कर्कशानि यानि मुखानि अग्राणि लोहकण्टकसदृशानि तैरारब्धं मण्डितं मेदिन्याः पृथिव्याः यद्वादनं वादित्रं तेन विराजन्ते इत्येवंशीलास्तथा तेषु। पुनश्च केषु सत्सु। स्यन्दनेषु रथेषु। किं

भुग्नभोगिवदनेषु स्यन्दनेषु, प्रसर्पत्सु संग्रामानुरागनिर्भरक्रमाक्रान्तिषु पदातिषु, हर्षमानेषु चापलालनोत्सारितसुरविमानसंबाधेषु योधेषु, संनिदधानासु तुमुलकोलाहलालोकनोन्मत्तगतिषु नभश्चरसमितिषु, आसीदत्सु गगनगतिवेगश्रमश्वासस्फुरिताधरेषु विद्याधरेषु, नटति कृतकलहदोहदाह्लादनादे नारदे, संजायमाने नवीनवरवरणोत्कण्ठितमनसि देवदारिकासदसि, समुच्छलति विधूसरितामरीकुन्तलभोगे परागे,

---

कुर्वत्सु स्यन्दनेषु। संचरत्सु प्रवेशं कुर्वत्सु। पुनः कथंभूतेषु। चक्रधाराभराभुग्नभोगिवदनेषु चक्राणां धारा अग्राणि तासां भरा भारास्तैराभुग्नानि कुटिलीकृतानि भोगिनो शेषनागस्य वदनानि सहस्रमुखानि यैस्ते तथा तेषु। पुनश्च केषु सत्सु। पदातिषु सत्सु। किं कुर्वत्सु पदातिषु। प्रसर्पत्सु प्रधावत्सु। पुनः कथंभूतेषु। संग्रामानुरागनिर्भरक्रमाक्रान्तिषु संग्रामानुरागेण समरप्रीत्या निर्भरं गाढं क्रमाणामाक्रान्तयो व्याप्तयो येषां ते तथा तेषु। पुनश्च केषु सत्सु योधेषु सत्सु। किं कुर्वाणेषु। हर्षमानेषु। कथंभूतेषु। चापलालनोत्सारितसुरविमानसंबाधेषु चापानां लालनेन मार्जनेनोत्सारिता दूरीकृता सुरविमानानां कौतुकागतदेवव्योमयानानां संबाधा संकीर्णता यैस्ते तेषु। पुनश्च कासु सतीषु। नभश्चरसमितिषु देवसमूहेषु। किं कुर्वत्सु। संनिंदधानासु समीपतरं ढौकमानासु। पुनः कथंभूतेषु। तुमुलकोलाहलालोकनोन्मत्तगतिषु तुमुलः अज्ञातात्मपरजनो योऽसौ कोलाहलस्तेनालोकनेन निरीक्षणेनोन्मत्ता प्रमादवती गतिर्यासां तास्तथा तासु। पुनश्च केषु सत्सु। विद्याधरेषु। किं कुर्वत्सु। आसीदत्सु आसनीभवत्सु। कथंभूतेषु। गगनगतिवेगश्रमश्वासस्फुरिताधरेषु गगनगतिवेगेन गगने गमनोत्सुकतया श्रमश्वासः खेदोच्छ्वासस्तेन स्फुरिताः कम्पिता अधरा येषां ते तथा तेषु। पुनश्च कस्मिन् सति। नारदे कलहप्रिये सति। किं कुर्वति सति नारदे। नटति हर्षेण नर्तनं कुर्वति सति। पुनः कथंभूते नारदे। कृतकलहदोहदाह्लादनादे कृतो विहितः कलहदोहदेन युद्धमनोरथेन आह्लादनाद आनन्दशब्दो येन स तथा तस्मिन्। तथा चोक्तम्—'कलहप्पिया कदाचिय धम्मरया वासुदेवसमकाला। भव्वा वियणि रयगई हिंसादोसेण गच्छन्ति॥' ननु तत्र मुनिव्रततीर्थे विष्णोरसंभवात् कुतो नारद आगत इत्याह—सत्यं कुतश्चिद्विहायागतो भविष्यति। पुनश्च कस्मिन् सति। देवदारिकासदसि दिव्यवेश्यासमूहे। किं कुर्वाणे देवदारिकासदसि। संजायमाने उत्पद्यमाने सति। कथंभूते। नवीनवरवरणोत्कण्ठितमनसि नवीनानां वराणां वरणे स्वीकारे उत्कण्ठितानि सुमनोरथानि मनांसि यस्मिन् तत्तथा तस्मिन्। पुनश्च कस्मिन् सति। परागे धूल्याम्। किं कुर्वति परागे। समुच्छलति। कथंभूते परागे। विधूसरितामरीकुन्तलाभोगे विशेषेण धूसरिता ईषत्पाण्डुरीकृता अमरीणां कुन्तलानां आभोगाः परिपूर्णता येन परागेण स तथा तस्मिन्॥

क्रोधावेशप्रधावोद्भटसुभटघटाविर्भवन्मूलबन्ध-
स्तूर्णत्वङ्गत्तुरङ्गाननपवनवशावेशविस्तारसारः ।
आसीदत्स्यन्दनाग्रध्वजनिभृतभरः पर्यटत्कुञ्जरेन्द्र-
स्फारव्यापारकर्णाहतिविततशिखः पांसुरूर्ध्वं व्यधावीत् ॥ ४३७ ॥
तिरस्कृत्यैवैतद्भुवनमखिलं जातरभसः
कथं स्वर्गस्त्रीणाम्मलिनितमुखः पांसुरभवत् ।
इति प्राप्तामर्षैः सुभटहृदयावाप्तजननैः
स मूलोच्छिन्नोऽभूत्तदनु रुधिरै रागिरुचिभिः ॥ ४३८ ॥

यत्र च ।

आकृष्टोन्मुक्तमौर्वीव्यतिकरविनमद्व्यस्यदिष्वासनिर्य-
ट्टंकारस्फारसारत्रसदवशसुरश्रेणिशीर्णप्रचारः ।

---

क्रोधावेशेत्यादि । हे राजन्, पांसुरूर्ध्वं गगने व्यधावीत् उच्छलितः । कथंभूतः पांसुः । क्रोधावेशप्रधावोद्भटसुभटघटाविर्भवन्मूलबन्धः क्रोधावेशेन कोपसंक्रमणेन प्रधावोद्भटाः शीघ्रगतिमहाडम्बरा ये सुभटास्तेषां घटाभ्यो घटनाभ्य आविर्भवन् प्रकटीभवन् मूलबन्धः प्रथमोत्थानं यस्य पांसोः स तथोक्तः । पुनः कथंभूतः । तूर्णत्वङ्गत्तुरङ्गाननपवनवशावेशविस्तारसारः तूर्णं शीघ्रं त्वङ्गन्तश्चलन्तो ये तुरङ्गास्तेषामाननानां पवनवशावेशेन उच्छ्वासवातेन विस्तारसारः । अपरं कथंभूतः । आसीदत्स्यन्दनाग्रध्वजनिभृतभरः आसीदन्त आगच्छन्तो ये स्यन्दनाग्रध्वजा रथोपरिबद्धपताकास्तैर्निभृतो निश्चलः प्रेरितुमशक्यो भरः समूहो यस्य पांसोः स तथोक्तः । पुनः कथंभूतः । पर्यटत्कुञ्जरेन्द्रस्फारव्यापारकर्णाहतिविततशिखः पर्यटन्तो गच्छन्तो ये कुञ्जरेन्द्रा गजनाथास्तेषां स्फारव्यापारा प्रचुरप्रवृत्तिर्या कर्णाहतिः श्रवणताडनं तया वितता विस्तीर्णा शिखा अग्राणि यस्य पांसोः स तथोक्तः । अर्थव्यक्तिरयं गुणः ॥

तिरस्कृत्यैवैतदित्यादि । हे राजन्, तदनु तदनन्तरं स पांसुः रुधिरैः कृत्वा मूलोच्छिन्नोऽभूत् मूलादपि छेदितो बभूव । कथंभूतै रुधिरैः । रागिरुचिभिः । पुनः कथंभूतैः । इत्येतस्मात् कारणात् प्राप्तामर्षैः प्राप्तक्रोधैः । कथंभूतैः । सुभटहृदयावाप्तजननैः सुभटानां हृदयेभ्योऽवाप्तं प्राप्तं जननं जन्म यैस्तानि तैः । इतीति किम् । पांसुः स्वर्गस्त्रीणां कथं मलिनितमुखोऽभवद्बभूव । किं कृत्वा । पूर्वं एतदखिलं भवनं मृत्युलोकं तिरस्कृत्यैव । अधःकृत्वैव । 'एवे चानियोगे' इति वचनात् न पूर्वलोपः । कथंभूतः पांसुः । जातरभसः । संजातवेगः । हेतुरयमलंकारः ॥

यत्र च यस्मिन् संग्रामे । आकृष्टेत्यादि । अयं प्रत्यक्षीभूतः पातङ्गः स्यन्दनः खे आ-

योधैर्युद्धप्रबन्धादनवरतशरासारशीर्यत्तुरङ्गः
पातङ्गः स्यन्दनोऽयं द्रवदरुणमदः खे सखेदं प्रयाति ॥ ४३९ ॥
चक्रोत्कृत्तकठोरकण्ठविगलत्कीलालधारोद्धुर-
स्कन्धाबद्धसिराकरालकरणै रुण्डैर्भवत्ताण्डवैः ।
युद्धस्पर्धविवृद्धबुद्धिविधृतव्यापारघोरादरै-
स्तद्देव द्विषतां मुहुः पुनरभूत्सैन्यं सदैन्यं तव ॥ ४४० ॥
अपि च यत्र
सद्यश्छिन्नविकीर्णलग्नगरणप्रोत्तालमुक्तस्वर-
प्रत्यारब्धनियुद्धरुण्डरभसैर्जाताप्सरःसंगमैः ।

---

काशे सखेदं प्रयाति । कथंभूतः स्यन्दनः । आकृष्टोन्मुक्तमौर्वीव्यतिकरविनमद्व्यस्यदिष्वासनिर्यट्टंकारस्फारसारत्रसदवशसुरश्रेणिशीर्णप्रचारः आकृष्टा कर्णान्तमानीता सा चासौ उन्मुक्ता ऊर्ध्वमुक्ता सा चासौ मौर्वी प्रत्यञ्चा तस्या व्यतिकरेण प्रघट्टकेन विनमन्नम्रीभवन् व्यस्यन् बाणान् मुञ्चन् स चासौ इष्वासो धनुस्तस्मान्निर्यन्तो निर्गच्छन्तो ये टंकाराः शब्दास्तेषां स्फारः प्रचुरतरो योऽसौ सारो बलं तस्मात्त्रसन्त्यो बिभ्यत्योऽवशाः परवशा ये सुराणां श्रेणयः समूहास्तैः शीर्णो मन्दीकृतो भग्नो वा प्रचारो व्यापारो यस्य स्यन्दनस्य स तथोक्तः । पुनः कथंभूतः स्यन्दनः । योधैः सुभटैर्युद्धप्रबन्धात्संग्रामप्रबन्धात् अनवरतशरासारशीर्यत्तुरङ्गः अनवरतैः शरासारैर्बाणवृष्टिभिः शीर्यन्तः शतखण्डीभवन्तस्तुरङ्गा यस्य स तथा । पुनः कथंभूतः । द्रवदरुणमदः द्रवन् नश्यन् अरुणस्य सूर्यस्य सारथेः मदोऽहंकारो यत्र स तथोक्तः । गौडीया रीतिः । अतिशयालंकारः ॥

**चक्रोत्कृत्तेत्यादि** । हे देव हे राजन्, तव भवतो द्विषतां शत्रूणां तत्सैन्यं तद्बलं मुहुर्वारंवारं सदैन्यमकिंचित्करं पुनरभूत् पुनरपि संजातम् । कैः कृत्वा सदैन्यमभूत् । रुण्डैः कबन्धैः । कथंभूतै रुण्डैः । चक्रोत्कृत्तकठोरकण्ठविगलत्कीलालधारोद्धुरस्कन्धाबद्धसिराकरालकरणैः चक्रैर्लोहभ्रमिलैः उत्कृत्तारिछन्नाः कठोराः कर्कशा ये कण्ठाः गलाः तेभ्यो विगलन्ति निर्गलन्ति यानि कीलालानि तेषां धाराभिः प्रवाहैः उद्धुरा उत्कटा ये स्कन्धाः ग्रीवाप्रदेशास्तत्र आबद्धाः स्थिता याः सिरा असृग्धारानाडिकास्ताभिः करालानि करणानि अङ्गहारा येषां रुण्डानां तानि तथोक्तानि तैः । पुनः कथंभूतै रुण्डैः । भवत्ताण्डवैः संजायमाननर्तनैः । पुनः कथंभूतैः । युद्धस्पर्धविवृद्धबुद्धिविधृतव्यापारघोरादरैः युद्धस्य यः स्पर्धः क्रोधस्तेन विवृद्धा या बुद्धिस्तस्यां विधृत आरोपितो योऽसौ व्यापारो नियोगस्तेन घोरो रौद्र आदर एकाग्रता येषां रुण्डानां तानि तैः । अत्र रौद्रोऽयं रसः । गौडीया रीतिः । जातिरलंकारः ॥

अपि च तथा च । यत्र इत्ययं शब्दोऽव्यये वर्तते । तेनायमर्थः—यत्र यस्मिन्

भर्तुः कार्यविधायिधैर्यधृतिभिर्धीरै रणप्राङ्गणे
स्वर्गे च त्रिदशस्तुतिव्यतिकराद्रोमाञ्चितैः स्थीयते ॥ ४४१ ॥

तत्र द्विपुष्करकरनालासरालवेतालकुलनिपीयमानशोणितासवे महाहवे देव, स्वयमेव विजयवर्धनसेनापतिना स्खलितबलोऽचलः कृतमृगायितमतिर्विहितरणरङ्गापसृतिर्विघटितविद्विष्टकरटिघटैर्भवदनीकसुभटैर्धृतः समानीतश्च स्वकीयसैन्यजन्यजयाकर्णनोदञ्चद्रोमाञ्चस्फुटद्वीरवधूहस्तकटकं विजयकटकम्।

---

रणप्राङ्गणे धीरैः सुभटैः स्थीयते निश्चलीभूयते। कथंभूतैः धीरैः। सद्यश्छिन्नविकीर्णलग्नगरणप्रोत्तालमुक्तस्वरप्रत्यारब्धनियुद्धरुण्डरभसैः सद्यस्तत्कालं छित्त्वा द्विधाकृता विकीर्णा यत्र तत्र पतिता लग्ना रुधिरतया पुनरपि मिलिता ये गरणा गलनालानि तैः प्रोत्ताला उत्सुका मुक्ताः कृता ये स्वराः शब्दास्तैः सह प्रत्यारब्धानि पुनरपि मण्डितानि नियुद्धानि वा बाहुरणास्तैरुपलक्षितानि यानि रुण्डानि कबन्धानि। उक्तं च—'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्'। तेषां रभसो वेगो येषु धीरेषु ते तथा तैः। अपरं कथंभूतैर्धीरैः। जाताप्सरःसंगमैः जात उत्पन्नोऽप्सरोभिः संगमो येषां ते तथा तैः। पुनः कथंभूतैः। भर्तुः कार्यविधायिधैर्यधृतिभिः भर्तुः स्वामिनः कार्यविधायिनी कर्तव्यकारिणी धैर्यधृतिर्धीरत्वसंतोषो येषां ते तथा तैः। पुनः कथंभूतैः। रोमाञ्चितैः ऊर्ध्वीभूतरोमकैः। कस्मात्। त्रिदशस्तुतिव्यतिकरात् देवानां स्तवप्रघट्टकात्। कस्मिन् रोमाञ्चितैः। स्वर्गे च स्वर्गलोके। चकारात् इह संग्रामकाले पूर्ववत्। रौद्ररसप्रधाना गौडीया रीतिः। समुच्चयालंकारः॥

हे देव हे राजन्, असावचलस्तत्र महाहवे विजयवर्धनसेनापतिना तव सेनान्या स्वयमेव स्खलितबलो भग्नसामर्थ्यः कृतमृगायितमतिः पलायितुमनाः सन् विहितरणरङ्गापसृतिश्च सन् कृतसंग्रामघट्टनविघट्टनः सन् भवदनीकसुभटैः तव सेनासुभटैर्धृतो बद्धः। न केवलं धृतः, विजयकटकं तव सतां समानीतश्च। कथंभूते तत्र महाहवे। द्विपुष्करकरनालासरालवेतालकुलनिपीयमानशोणितासवे द्विपुष्कराः संग्राममृतहस्तिनस्तेषां करनालैः शुण्डादण्डनालैरसरालवेतालकुलैः दीर्घमृतकशरीराविष्टव्यन्तरविशेषसमूहैः निपीयमानः शोणितासवो यत्र स तथा तस्मिन्। कथंभूतैर्भवदनीकसुभटैः विघटितविद्विष्टकरटिघटैः विघटिता पलायनं कारिता विद्विष्टानां करटिघटा यैस्ते तथा तैः। कथंभूतं तव कटकम्। स्वकीयसैन्यजन्यजयाकर्णनोदञ्चद्रोमाञ्चस्फुटद्वीरवधूहस्तकटकं स्वकीयस्य सैन्यजन्यजयः संग्रामोत्थजयस्तस्याकर्णनेन उदञ्चत् उल्लसन् योऽसौ रोमाञ्चस्तेन स्फुटन्ति शतखण्डीभवन्ति वीरवधूनां हस्तानां कटका वलयानि यस्मिन् विजयकटके तत्तथोक्तम्॥

कदाचित्कामिनीनां मदिरामोदमेदुरमुखमरुत्संवादिसौरभासु विदलन्तीषु बकुलकलिकासु, दशनच्छदोद्देशदंशप्रकाशपेशलासु विकसन्तीषु कङ्केल्लिवल्लरीषु, सुरतश्रमसंजातजलजालकलिपिषु विलसन्तीषु माकन्दमञ्जरीषु, दीर्घापाङ्गभङ्गिसुभगेषु स्फुटत्सु मल्लिकामुकुलेषु, कलगलालप्तिलीलेषु समुच्छलत्सु पिकपाककुलकोलाहलेषु, चिकुररुचिरुचिरचञ्चरीकचरणचापलचलितविकचविचकिलगलन्मकरन्दस्यन्दसार्द्रासु भवन्तीषु वनवसुधासु, विकटकुचाभोगशोभारम्भिषु विराजत्सु माधवीकुसुमस्तबकेषु, कपोलकान्तिमाधुर्यस्पर्धिषु प्रबोधत्सु मधूकपुष्पेषु, मृगमदरसच्छुरितैकदे-

---

कदाचित् कस्मिंश्चिदवसरे, मधौ वसन्ते ऋतौ मकरध्वजं कन्दर्पं आराधयामास आराधितवानहम् । कासु सतीषु । बकुलकलिकासु बकुलतरुमुकुलेषु सत्सु । कथंभूतासु । मदिरामोदमेदुरमुखमरुत्संवादिसौरभासु.................................. । किं कुर्वन्तीषु । विदलन्तीषु विकसन्तीषु । पुनः कासु सतीषु । कङ्केल्लिवल्लरीषु अशोकतरुमञ्जरीषु सतीषु । कथंभूतासु । दशनच्छदोद्देशदंशप्रकाशपेशलासु दन्तच्छदस्योद्देशः प्रदेशस्तत्र योऽसौ दंशो दन्तच्छदस्तद्वत् प्रकाशः शोभा तेन पेशला मनोहरास्तासु । किं कुर्वन्तीषु । विकसन्तीषु स्फुटन्तीषु । पुनः कासु सतीषु । माकन्दमञ्जरीषु आम्रवल्लरीषु सतीषु । कथंभूतासु । सुरतश्रमसंजातजलजालकलिपिषु सुरतश्रमेण संजातं यज्जलजालकं स्वेदवृन्दं तद्वल्लिपिरवयवो यासां तास्तासु । किं कुर्वन्तीषु । विलसन्तीषु उल्लसन्तीषु । पुनः केषु सत्सु । मल्लिकामुकुलेषु नलिकवेलिकुड्मलेषु सत्सु । कथंभूतेषु । दीर्घापाङ्गभङ्गिसुभगेषु दीर्घा आयता ये अपाङ्गा लोचनप्रान्तास्तेषां भङ्गी रचना तया सुभगानि तेषु । किं कुर्वत्सु । स्फुटत्सु विकसत्सु । पुनश्च केषु सत्सु । पिकपाककुलकोलाहलेषु पिकपाकाः पुंस्कोकिलास्तेषां कुलानि तेषां कोलाहलास्ते तथा तेषु सत्सु । कथंभूतेषु । कलगलालप्तिलीलेषु कला मधुरा या गलालप्तयः कण्ठकूजितानि तासां लीला शोभा येषु । किं कुर्वत्सु । समुच्छलत्सु उत्पद्यमानेषु । पुनश्च कासु सतीषु । वनवसुधासु सतीषु । कथंभूतासु । चिकुररुचिरुचिरचञ्चरीकचरणचापलचलितविकचविचकिलगलन्मकरन्दस्यन्दसार्द्रासु चिकुराः केशास्तेषां रुचिः दीप्तिस्तद्वत् रुचिरा मनोहरा ये चञ्चरीका भ्रमरास्तेषां चरणानां यच्चापलं तेन चलितानि विकचानि विकसितानि विचकिलानि मुक्तबन्धपुष्पाणि तेभ्यो गलन् निर्गलन् योऽसौ मकरन्दस्तस्य स्यन्देन स्रवणेन सार्द्राः सरसास्तासु । किं कुर्वन्तीषु । भवन्तीषु संजायमानासु । पुनश्च केषु सत्सु । माधवीकुसुमस्तबकेषु वसन्तवल्लीपुष्पगुच्छेषु सत्सु । उक्तं च—'माधवी मधुशर्करा । वासन्ती कुट्टनी हला' । कथंभूतेषु । विकटकुचाभोगशोभारम्भिषु विकटा उद्घटिता ये कुचाभोगास्तेषां शोभामारम्भन्ते इत्येवंशीलास्तेषु । किं कुर्वत्सु । विराजत्सु शोभमानेषु । पुनश्च केषु सत्सु । मधूकपुष्पेषु बन्धुजीवकुसुमेषु सत्सु । कथंभूतेषु । कपोलकान्तिमाधुर्यस्पर्धिषु क-

शार्धचन्द्राभिनयनवनखनिवेशप्रश्रयेषु चकासत्सु पलाशप्रसवकुड्मलेषु, घनघुसृणरसारुणितनाभिकुहरकान्तिष्ववतरत्सु कर्णिकारप्रसूनेषु, विभ्रमोद्भटभ्रूप्रभावनिर्भरेण धनुषा संनह्यति वशीकृतजगत्त्रये कुसुमचापे, मलयोपशल्यवल्लीपल्लवोल्लासिनि माल्यवल्लतालतान्तामोदमांसले किष्किन्धस्कन्धसंबन्धसिन्धुरोद्धुरकरप्रचारस्खलितरंहसि दर्दुरदरीसरःसरोजमकरन्दमधुस्वादमन्दसंचारे कावेरीसरित्तरङ्गसीकरासारहारिणि केरलाङ्गनालकनृत्ता-

---

पोलानां कान्तयस्तासां माधुर्यं मनोहरत्वं स्पर्धन्ते तिरस्कुर्वन्तीत्येवंशीलानि तानि तेषु। किं कुर्वत्सु। प्रबोधत्सु विकसत्सु। पुनश्च केषु सत्सु। पलाशप्रसवकुड्मलेषु पलाशानां किंशुकानां प्रसवाः पुष्पाणि तेषां कुड्मलानि तेषु सत्सु। कथंभूतेषु। मृगमदरसच्छुरितैकदेशार्धचन्द्राभिनयनवनखनिवेशप्रश्रयेषु मृगमदरसः कस्तूरिकाद्रवस्तेन छुरितः कर्बुरित एकदेश एकपार्श्वो यस्य अर्धचन्द्रस्य तस्य अभिनयो व्यञ्जकत्वं तेषां नवनखनिवेशानां प्रत्यग्रकामाङ्कुशक्षतानां प्रश्रयः सादृश्यं येषां तानि तथोक्तानि तेषु। किं कुर्वत्सु। चकासत्सु शोभमानेषु। पुनश्च केषु सत्सु। कर्णिकारप्रसूनेषु द्रुमोत्पलपुष्पेषु सत्सु। कथंभूतेषु। घनघुसृणरसारुणितनाभिकुहरकान्तिषु घनः प्रचुरः स चासौ घुसृणरसस्तेन अरुणितमव्यक्तरागीकृतं यत् नाभिकुहरं तस्य कान्तिः सादृश्यं येषां तानि तथा तेषु। किं कुर्वत्सु। अवतरत्सु प्रादुर्भवत्सु। पुनश्च कस्मिन् सति। कुसुमचापे धनुषा संनह्यति सति। कथंभूते कुसुमचापे। वशीकृतजगत्त्रये आत्माधीनविहितत्रैलोक्ये। कथंभूतेन धनुषा। विभ्रमोद्भटभ्रूप्रभावनिर्भरेण विभ्रमेण अपाङ्गनर्तनेन उद्भटा उन्नता या भ्रूस्तस्याः प्रभावेण निर्भरं गाढं सदृशमित्यर्थस्तेन तथोक्तेन। पुनश्च कस्मिन् सति। समीरे सति। कथंभूते समीरे। मलयोपशल्यवल्लीपल्लवोल्लासिनि मलयश्चन्दनाचलस्तस्य उपशल्ये समीपे या वल्लयस्तासां पल्लवास्तान् उल्लासयतीत्येवंशीलः स तथा तस्मिन्। पुनः कथंभूते समीरे। माल्यवल्लतालतान्तामोदमांसले माल्यवान् दक्षिणदिक्पर्वतस्तस्य लतास्तासां लतान्तानि पुष्पाणि तेषामामोदस्तेन मांसलः परिपुष्टस्तस्मिन्। पुनः कथंभूते। किष्किन्धस्कन्धसंबन्धसिन्धुरोद्धुरकरप्रचारस्खलितरंहसि किष्किन्धः सुग्रीवपर्वतस्तस्य स्कन्धा मूलास्तेषां संबन्धयो वृक्षप्रकाण्डास्तैः सह संबन्ध आश्रयो येषां ते तथोक्तास्ते च ते सिन्धुरास्तेषामुद्धुरा ये करास्तेषां प्रचारेण चेष्टया स्खलितमवष्टब्धं रंहो यस्य स तथोक्तस्तस्मिन्। पुनः कथंभूते। दर्दुरदरीसरःसरोजमकरन्दमधुस्वादमन्दसंचारे दर्दुरो नाम दक्षिणदिग्वर्ती मण्डूकपर्वतस्तस्य दरीषु गुहासु यानि सरांसि तेषु यानि सरोजानि तेषां मकरन्दमधूनां पुष्परसमधूनां स्वादस्तेन मन्दः संचारो यस्य स तथा तस्मिन्। पुनः कथंभूते। कावेरीसरित्तरङ्गसीकरासारहारिणि कावेरी नाम दक्षिणदिग्वर्तिनी सरित् नदी तस्यास्तरङ्गास्तेषां सीकरासारं जलकणसमूहं हरतीत्येवंशीलः स तथा तस्मिन्। पुनः कथंभूते। केरलाङ्गनाल-

चरणचतुरे परिसरति भागीरथीपथिक इव दक्षिणास्या दिशः समीरे, किंनरीगणगीतोन्मादितकुरङ्गेषु कुलशैलमेखलोत्सङ्गेषु, रतिरसोत्कण्ठा-जरठचाटुकाराभ्यासिनीषु चारणावासविलासिनीषु, प्रियतमप्रसादनोपदे-शविनोददोहदोत्सुकासु गन्धर्वनगराभिसारिकासु, सहचरीचरणचर्चोपचार-प्रणयिनि विद्याधरपुरलोके, पौलोमीकपोलफलकोचितचित्रचातुर्येण विनो-दयत्यैरावणमदं पुरंदरे, लक्ष्मीकुचकुम्भशोभारम्भेण संभावयति वनमाला-

---

कनृत्ताचरणचतुरे केरलो नाम दक्षिणदिग्वर्ती विषयविशेषस्तस्य अङ्गनास्तासां अ-लकास्तेषां नृत्ताचरणं नर्तनविधानं तत्र चतुरः स तथा तस्मिन् । समीरे किं कुर्वति । दक्षिणस्या दिशो दक्षिणायाः ककुभः सकाशात् परिसरति आगच्छति सति । पुनः कथंभूते । उत्प्रेक्षते—भागीरथीपथिक इव गङ्गातीर्थयात्रिको यथा । पुनश्च केषु सत्सु । कुलशैलमेखलोत्सङ्गेषु कुलशैलानां हिमवदादीनां मेखलानां कटिनीनामुत्सङ्गेषु उपर्यङ्कभू-मिषु । कथंभूतेषु । किंनरीगणगीतोन्मादितकुरङ्गेषु किंनरीणां गणास्तेषां गीतानि तैरुन्मादिता हर्षं प्रापिताः कुरङ्गा येषु ते तथा तेषु । पुनश्च कासु सतीषु । चारणा-वासविलासिनीषु चारणानां वाग्जीवनानां आवासास्तेषां विलासिनीषु । कथंभूतासु । रतिरसोत्कण्ठाजरठचाटुकाराभ्यासिनीषु रतिरसस्योत्कण्ठा वाञ्छा तया जरठाः कर्कशा ये चाटुकारा मिथ्यास्तुतयस्तेषामभ्यासः पुनः पुनरनुशीलनं वर्तते यासां ता-स्तथा तासु । पुनश्च कासु सतीसु । गन्धर्वनगराभिसारिकासु गन्धर्वाः कलवाचो गाय-कास्तेषां नगराणां अभिसारिका वल्लभजनं प्रति प्रस्थिताः स्त्रियस्तासु । उक्तं च—'या दूतिकागमनकालमपारयन्ती सोढुं स्मरज्वरभयार्तिपिपासितेव । निर्याति वल्लभ-जनाधरपानलोभात्सा कथ्यते कविवरैरभिसारिकेति ॥' कथंभूतासु । प्रियतमप्रसादनो-पदेशविनोददोहदोत्सुकासु प्रियतमस्य प्रसादनस्य उपदेशः शिक्षा तस्य विनोददो-हदेषु क्रीडामनोरथेषु उत्सुका उत्तालास्तासु । पुनश्च कस्मिन् सति । विद्याधरपुरलोके सति विद्याधराणां पुरलोकस्तस्मिन् सति । कथंभूते सति । सहचरीचरणचर्चोपचारप्रण-यिनि सहचरीणां चरणानां चर्चा तस्या उपचारो व्यवहारः तस्मिन् प्रणयो विद्यते यस्य स तथा तस्मिन् । पुनश्च कस्मिन् सति । पुरंदरे सति । किं कुर्वति । ऐरावणमदं विनोदयति उच्छलति सति । केन कृत्वा । पौलोमीकपोलफलकोचितचित्रचातुर्येण पौलोमी शची तस्याः कपोलफलकौ तयोरुचितं यच्चित्रं आलेख्यं तस्य चातुर्येण । पुनश्च कस्मिन् सति । मुकुन्दे सति । किं कुर्वति सति । वनमालाप्रसूनकिञ्जल्कं वनमा-लाया वृन्दारिकावनस्य यानि प्रसूनानि तेषां किञ्जल्कः केसरस्तं सभावयति सति । केन कृत्वा । लक्ष्मीकुचकुम्भशोभारम्भेण लक्ष्मीः निजभार्या तस्याः कुचौ तावेव कुम्भौ

प्रसूनकिञ्जल्कं मुकुन्दे, गिरिसुताधरदशनदंशनव्यथापायवैदग्ध्येन विधुरयति सुधासूतिकलां शंकरे, भुजङ्गीशिखण्डमण्डनाडम्बरेण क्रीडायति निजफणामणीन्भुजंगनाथे,

अपि च ।

हंसो यत्र मृणालिनीकिसलयैर्गण्डूषतोयैर्गजः
कोकश्चुम्बनचेष्टितैः परिपतन्पारापतः कूजितैः ।
एणः शृङ्गविघर्षणैर्मृगपतिर्गाढं पुनः श्लेषणैः
शृङ्गारप्रसरप्रसादिहृदयः स्वां स्वां प्रियां सेवते ॥ ४४२ ॥
यत्राशोकतरुः पुरंध्रिचरणस्पर्शप्रवृद्धस्पृहः
कान्तावक्त्रमधूनि वाञ्छति पुनर्यस्मिन्नयं केसरः ।

---

तयोः शोभारम्भो मण्डनविधिस्तेन । पुनश्च कस्मिन् सति । शंकरे सति । किं कुर्वति । सुधासूतिकलां निजमस्तकस्थितचन्द्रकलां विधुरयति निश्चोतयति सति । केन कृत्वा । गिरिसुताधरदशनदंशनव्यथापायवैदग्ध्येन गिरिसुतायाः पार्वत्या अधरस्य दशनदंशनस्य दन्तचर्वणस्य या व्यथा तस्या अपायवैदग्ध्यं विनाशचातुर्यं तेन । पुनश्च कस्मिन् सति । भुजंगनाथे शेषनागे सति । किं कुर्वति । निजफणामणीनिव क्रीडायति विहारयति सति । केन कृत्वा । भुजङ्गीशिखण्डमण्डनाडम्बरेण भुजङ्गी देवी पद्मावती तस्याः शिखण्डो मस्तकं तस्य मण्डनाडम्बरो भूषणाटोपस्तेन ॥

अपि च तथा च कृतश्रवणामृतनिषक्तीः कृताः श्रवणानां अमृतनिषक्तयः पीयूषवर्षणानि याभिः सूक्तिभिस्तास्तथा ताः । इतीति किम्—**हंसो यत्रेत्यादि** । यत्र वसन्तसमये हंसः प्रियां सेवते । कैः कृत्वा । मृणालिनीकिसलयैः । यत्र वसन्ते गजः प्रियां सेवते । कैः कृत्वा । गण्डूषतोयैः कुल्लकजलैः । यत्र वसन्ते कोकः प्रियां सेवते । कैः कृत्वा । चुम्बनचेष्टितैः । यत्र वसन्ते पारापतः कलरवः प्रियां सेवते । कैः कृत्वा । कूजितैः । पारापतः किं कुर्वन् । परिपतन् संमुखमागच्छन् । यत्रैणः प्रियां सेवते । कैः कृत्वा । शृङ्गविघर्षणैः शृङ्गाभ्यां विविधलेखनैः । यत्र मृगपतिः प्रियां सेवते । कैः कृत्वा । गाढं पुनःश्लेषणैः पूर्वोक्ता गुणाः तैः । कथंभूतः । शृङ्गारप्रसरप्रसादिहृदयः शृङ्गारप्रसरेण रागव्याप्त्या प्रसादि प्रसन्नं हृदयं यस्य स तथोक्तः । कथंभूतां प्रियाम् । स्वां स्वां............ । समुच्चयालंकारः ॥

**यत्राशोकतरुरित्यादि** । हे क्षोणीश, स जगत्प्रसिद्ध एष प्रत्यक्षीभूतो भवतस्तव परामुत्कृष्टां प्रीतिं हर्षं पुष्यतु पुष्टिं नयतु । स कः । यत्र वसन्ते अशोकतरुः पुरंध्रिचरणस्पर्शप्रवृद्धस्पृहो वर्तते पुरंध्रीणां चरणस्पर्शे पादताडने प्रवृद्धा स्पृहा

यत्रायं विरहश्च पञ्चमरुचिश्चेतोभवस्कारणः
　　स क्षोणीश वसन्त एष भवतः प्रीतिं परां पुष्यतु ॥ ४४३ ॥
भूतः कोकिलकामिनीकलरवैः कान्तप्रसूनान्तरः
　　पुन्नागः शुकसुन्दरीकृतरतिर्यत्रोल्लसत्पल्लवः ।
पुष्यत्स्मेरदलाधरः कुरुबकः क्रीडद्द्विरेफाङ्गनः
　　सुच्छायच्छदमाधवीपरिचितः सोऽयं वसन्तोत्सवः ॥ ४४४ ॥
उत्फुल्लवल्लिवलनोल्लसदङ्गसङ्ग-
　　संजातकान्ततनवस्तरवोऽपि यत्र ।
पुष्पोद्गमादिव वदन्ति विलासिलोका-
　　न्मानं विमुच्य कुरुत स्मरसेवितानि ॥ ४४५ ॥
ब्रह्मा कथं कथमपि प्ररुणद्धि चेतः
　　शक्ताः स्खलन्न मुनयोऽपि मनो निरोद्धुम् ।

---

यस्य स तथा । यस्मिन् वसन्ते अयं केसरो वकुलवृक्षः कान्तावक्त्रमधूनि पुनर्वाञ्छति । यत्र वसन्ते अयं विरहवृक्षः पञ्चमरुचिः पञ्चमरागाभिलाषी वर्तते । कथंभूतो विरहवृक्षः । चेतोभवस्कारणः कामाग्निसहकारी । जात्यलंकारः ॥

**भूत इत्यादि ।** हे राजन्, सोऽयं वसन्तोत्सवो वर्तते । स कः । यत्र भूतः कोकिलकामिनीकलरवैः कान्तप्रसूनान्तरः मनोहरपुष्पमध्यः । यत्र पुन्नागस्तुङ्गतरुः पुरुषवृक्षः शुकसुन्दरीकृतरतिः वर्तते शुकसुन्दरीभिः कृता रतिर्यत्र सः । कथंभूतः पुन्नागः । उल्लसत्पल्लवः प्रादुर्भवत्प्रवालः । यत्र कुरुवकः । आम्लानतरुः पुष्यत्स्मेरदलाधरः विकसदीषत्स्फुटत्पर्णविम्बोष्ठः । कथंभूतः कुरुवकः । क्रीडद्द्विरेफाङ्गनः क्रीडन्तो रममाणा द्विरेफाणां भ्रमराणां अङ्गना अलिन्यो यत्र वसन्तोत्सवे । कथंभूतः । सुच्छायच्छदमाधवीपरिचितः सुच्छायाः कान्तिमन्तश्छदाः पर्णानि यासां ताः सुच्छायच्छदास्ताश्च माधव्यो वसन्तवल्लयस्ताभिः परिचितः संयुक्तः । हेत्वलंकारः ॥

**उत्फुल्लवल्लीत्यादि ।** हे राजन्, यत्र वसन्ते तरवो विलासिलोकान् कामुकजनान् वदन्तीव सूचयन्तीव । कथंभूतास्तरवः । पुष्पोद्गमात् पुष्पप्रादुर्भावात् संजातकान्ततनवः उत्फुल्लवल्लिवलनोल्लसदङ्गसङ्गसंजातकान्ततनवः उत्फुल्ला या वल्लयस्तासां वलनेन वेष्टनेन उल्लसन्ति उत्कण्टकितानि भवन्ति यानि अङ्गानि तेषां सङ्गेन संजाताः सम्युत्पन्नाः कान्तास्तनवो येषां ते तथा । तरवः किं वदन्ति । मानं विमुच्य स्मरसेवितानि कामसेवनानि कुरुत विदधत यूयम् । उत्प्रेक्षालंकारः ॥

**ब्रह्मा कथमित्यादि ।** हे राजन्, वसन्ते स्मरे स्मयविजृम्भितबाणवृत्तौ स्मयेन

यत्र स्मरे स्मयविजृम्भितबाणवृत्ता-
वुन्मादितत्रिभुवनोदरवर्तिलोके ॥ ४४६ ॥

तद्देव, आदीयतां वासन्तो नेपथ्यविधिः। भवन्ति चात्र श्लोकाः—

कनककमलगर्भस्पर्धिसौन्दर्यसारे
युवतिजनविनोदव्याप्तहंसावतारे।
परिसरतु तवाङ्गे कुङ्कुमोद्वर्तनश्री-
ररुणकिरणकान्तिः कायवत्काञ्चनाद्रेः ॥ ४४७ ॥

त्वं देव देहेऽभिनवे दधानो गोरोचनापिञ्जरिते दुकूले।
आभासि नीरेजरजोरुणायाः श्रिया समानस्त्रिदशापगायाः ॥ ४४८ ॥

---

विजृम्भिता वाणवृत्तिर्यस्य स तथा तस्मिन्। पुनः कथंभूते स्मरे। उन्मादितत्रिभुवनोदरवर्तिलोके उन्मादिता त्रिभुवनोदरवर्तिनः लोका येन स तथा तस्मिन्। यत्र वसन्ते ब्रह्मा सृष्टिकर्ता कथमपि महता कष्टेन चेतः प्ररुणद्धि संवृणोति। यत्र वसन्ते मुनयो स्खलत् विघटमानं संयमात् दूरीभवत् मनो निरोद्धुं न शक्ता वर्तन्ते। अतिशयालंकारः॥

तत्तस्मात् कारणात् हे देव हे राजन्, वासन्तो नेपथ्यविधिराभरणविधानमादीयतां गृह्यताम्। भवन्ति चात्र श्लोकाः अत्र अस्मिन् नेपथ्यविधाने श्लोकाश्च भवन्ति।

कनककमलेत्यादि। हे राजन्, तव अङ्गे कुङ्कुमोद्वर्तनश्रीः काश्मीरजन्मकेसरद्रवविलेपनशोभा परिसरतु। कथंभूते तवाङ्गे। कनककमलगर्भस्पर्धिसौन्दर्यसारे कनककमलगर्भेण सह स्पर्धत उपमां धरति यत्सौन्दर्यं सुन्दरत्वं तद्रूत्सारं तत्तथोक्तम्। पुनः कथंभूते तवाङ्गे। युवतिजनविनोदव्याप्तहंसावतारे युवतीनां जनः समूहस्तस्य विनोदव्याप्तः क्रीडाविस्तारः स एव हंसस्तस्यावतारः प्रवेशो यस्मिन् तत्तथोक्तं तस्मिन्। कुङ्कुमोद्वर्तनश्रीः किंवत्। काञ्चनाद्रेर्मेरुपर्वतस्य कायवत् शरीर इव। यथा काञ्चनाद्रिकाये अरुणकिरणकान्तिः श्रीसूर्यतेजः परिसरति। रूपकोपमालंकारः॥

त्वमित्यादि। हे देव, त्वं गोरोचनापिञ्जरिते गोरोचनया पीतरक्तीकृते अभिनवे द्वे दुकूले परिधानसंव्याने दुह्येतेऽक्षुमाया आकृष्यते इति दुकूलं क्षौमवस्त्रं देहे शरीरे दधानो धरन् आभासि। कथभूतस्त्वम्। त्रिदशापगायाः श्रिया शोभया समानः। कथंभूतायास्त्रिदशापगायाः। नीरेजरजोरुणायाः कमलपरागेण अव्यक्तरागायाः। उपमालंकारः॥

यः श्रीनिरीक्षितसपक्षरुचिप्रपञ्चः
　कीर्तिः स्वयंवरणपुष्पशराभिरामः ।
वक्षःस्थले तव नृपापततात्स हारः
　कैलासदेश इव देवनदीप्रवाहः ॥ ४४९ ॥

लक्ष्मीलोचनकज्जलोचितरुचौ विद्यावधूचूचक-
　श्लाघ्यश्यामगुणे मधुव्रतगुलच्छायापहासिद्युति ।
राजन्नीलमणिप्ररोहसुभगाभासे प्रसूनोचय-
　स्त्वन्मौलावसिताम्बुदान्तरचरच्चन्द्रच्छविः शोभताम् ॥ ४५० ॥

यः श्रीकण्ठग्रहणसुभगो वीरलक्ष्मीविलासः
　कीर्तिप्रादुर्भवनवसतिः कल्पवृक्षावतारः ।

---

**यः श्रीरित्यादि** । हे नृप, स हारस्तव वक्षःस्थले आपततात् आगच्छतात् । स कः । यो हारः श्रीनिरीक्षितसपक्षरुचिप्रपञ्चः श्रीनिरीक्षितं लक्ष्मीविलोकितं तस्य सपक्षः तिरस्कारको रुचेर्दीप्तेः प्रपञ्चो यस्य स तथोक्तः । पुनः कथंभूतो हारः । कीर्तिस्वयंवरणपुष्पशराभिरामः कीर्तिसंबन्धी योऽसौ स्वयंवरणपुष्पशरः स्वयंवरपुष्पमाला तद्वदभिरामो मनोहरः । अपरं कथंभूतो हारः । कैलासदेशे हराचलपर्वते देवनदीप्रवाह इव । उपमालंकारः ॥

**लक्ष्मीलोचनेत्यादि** । हे राजन्, त्वन्मौलौ तव मूर्ध्नि प्रसूनोचयः शोभतां राजतु । कथंभूते त्वन्मौलौ । लक्ष्मीलोचनकज्जलोचितरुचौ लक्ष्म्याः संबन्धि लोचनकज्जलं मषी तद्वदुचिता रुचिर्यत्र स तथा तस्मिन् । पुनः कथंभूते । विद्यावधूचूचकश्लाघ्यश्यामगुणे विद्यावधू विद्याधरी तस्याश्चूचुकं स्तनाग्रं तद्वत् श्लाघ्यः प्रशंसनीयः श्यामगुणो यत्र मौलौ स तथा तस्मिन् । पुनः कथंभूते । मधुव्रतकुलच्छायापहासिद्युति मधुव्रतकुलस्य छाया कृष्णकान्तिः ताम् अपहसति तिरस्करोतीत्येवंशीलो मधुव्रतकुलच्छायापहासिनी द्युतिः कान्तिर्यस्य स तथा तस्मिन् । पुनः कथंभूते । नीलमणिप्ररोहसुभगाभासे नीलमणीनां कृष्णरत्नानां प्ररोहास्तद्वत् सुभगो मनोहर आभासो दीप्तिर्यस्य स तथा तस्मिन् । कथंभूतः प्रसूनोचयः । असिताम्बुदान्तरचरच्चन्द्रच्छविः असिताम्बुदः कालमेघस्तस्य अन्तरस्मिन् चरन् पर्यटन् योऽसौ चन्द्रः पूर्णिमाशशाङ्कस्तद्वच्छविः शोभा यस्य स तथोक्तः । उपमालंकारः ॥

**यः श्रीकण्ठेत्यादि** । हे राजन्, सः अयं तव रत्नभूषाभिरामो हस्तः विजयताम् । कथंभूतो हस्तः । श्रीकण्ठग्रहणसुभगः.................. । पुनः कथंभूतः । वीरलक्ष्मीविलासः वीरलक्ष्म्याः विलासो विस्तारो यस्मिन् स तथा । पुनः कथंभूतः । कीर्ति-

पृथ्वीभारोद्धरणसमये शेषसंकल्पमूर्तिः
सोऽयं हस्तस्तव विजयतां रत्नभूषाभिरामः ॥ ४५१ ॥

दोले वा श्रीसरस्वत्योः प्रचेतःपाशपेशले ।
तव भूषयतो भूप श्रुती माणिक्यकुण्डले ॥ ४५२ ॥

भुजशिखरे हरिचन्दनलिखिता तव पत्रपद्धतिर्देव ।
मकरध्वजविजयोत्थितविचित्रकेतुश्रियं धत्ते ॥ ४५३ ॥

तव देव निटिलदेशे चन्दनरसनिर्मितच्छविस्तिलकः ।
धत्तेऽष्टमीन्दुमध्यस्थितगुरुशोभाश्रयां लक्ष्मीम् ॥ ४५४ ॥

प्रतिबिम्बमपि वहन्ते यस्याः शिरसा महीश्वराः सा स्तात् ।
मुद्रा तव देव करे समुद्रमुद्राङ्कितक्षितीशस्य ॥ ४५५ ॥

---

प्रादुर्भवनवसतिः कीर्तेः प्रादुर्भवनं तस्य वसतिः । पुनः कथंभूतः । कल्पवृक्षावतारः बाहुमिषेण कल्पवृक्षः । पुनः कथंभूतः । पृथ्वीभारोद्धरणसमये शेषसंकल्पमूर्तिः भूमिभारोच्चलनावसरे शेषस्य संकल्पमूर्तिः द्वितीयमूर्तिः । रूपकालंकारः ॥

**दोले इत्यादि** । हे भूप, तव श्रुती कर्णौ कर्मतापन्नौ द्वे माणिक्ये कुण्डले कर्तृभूते भूषयतो मण्डयतः । कथंभूते तव श्रुती । श्रीसरस्वत्योः दोले वा द्वे प्रेङ्खे वा पुनः कथंभूते श्रुती । प्रचेतःपाशपेशले प्रचेतसो वरुणस्य पाशवत् पेशले । उपमालंकारः ॥

**भुजशिखरे इत्यादि** । तव भुजशिखरे भुजांशे हरिचन्दनलिखिता पत्रपद्धतिः परमोत्तमचन्दनलिखिता पत्रवेलिपङ्क्तिः । मकरध्वजविजयोत्थितविचित्रकेतुश्रियं धत्ते मकरध्वजस्य विजये जगद्वशीकरणे उत्थितो विचित्रोऽनेकवर्णो योऽसौ केतुः ध्वजस्तस्य श्रियं शोभां धत्ते धरति । उपमालंकारः ॥

**तव देवेत्यादि** । हे देव, तव निटिलदेशे ललाटपट्टकप्रदेशे तिलको लक्ष्मीं शोभां धत्ते । कथंभूतस्तिलकः । चन्दनरसनिर्मितच्छविः चन्दनरसेन निर्मिता छविः दीप्तिर्येन स तथोक्तः । कथंभूतां लक्ष्मीम् । अष्टमीन्दुमध्यस्थितगुरुशोभाश्रयाम् अष्टमीन्दुस्तस्य मध्यस्थितो योऽसौ गुरुः बृहस्पतिस्तस्य शोभायाः आश्रयो यस्या लक्ष्म्याः सा तथा ताम् । उपमालंकारः ॥

**प्रतिबिम्बमित्यादि** । हे देव, तव करे सा मुद्रा स्तात्भवतु । सा का । यस्याः मुद्रायाः अङ्गुलीयस्य प्रतिबिम्बमपि महीश्वरा राजानः शिरसा वहन्ते धारयन्ति । कथंभूतस्य तव । समुद्रमुद्राङ्कितक्षितीशस्य समुद्रमुद्रया अङ्किताः क्षितीशा येन स तथा तस्य । अतिशयालंकारः ॥

कामस्त्वं रतिसंगमे, सुरपतिः स्वर्गाङ्गनानन्दने,
भोगीन्द्रश्च भुजङ्गिकागमविधौ, लक्ष्मीप्रमोदे हरिः ।
वाग्देवीनयनोत्पलोत्सवरसप्राप्तौ सुधादीधिति-
र्जातः संप्रति भूषणोचितवपुर्भूपालचूडामणे ॥ ४५६ ॥

इतश्च स्मरमहोत्सवोल्लासरसवशविलासिनीजनोच्चार्यमाणमङ्गलपरम्परेऽन्तःपुरे

नवकिसलयपूगीपादपस्तम्भशोभाः
सिततरुफलकान्ताशोकवल्लिप्रतानाः ।
मणिकुसुमदुकूलोल्लोचकेतुप्रकान्ता-
स्तव नृपवर दोलाः कुर्वतां कामितानि ॥ ४५७ ॥

---

**कामस्त्वमित्यादि** । हे भूपालचूडामणे सर्वभूपालानां शिरोरत्न, संप्रति भूषणोचितवपुस्त्वं जातः संपन्नः । कथंभूतस्त्वम् । रतिसंगमे कामः । पुनः कथंभूतः । स्वर्गाङ्गनानन्दने सुरपतिः । पुनः कथंभूतः । भुजङ्गिकाः कामपीडिताः स्त्रियस्तासामागमविधौ आकर्षणविधाने भोगीन्द्रः कामदेवः । यथा भुजङ्गीनां नागकन्यानां चित्ताह्लादने भोगीन्द्रः शेषनागो भवति । पुनः कथंभूतः । लक्ष्मीप्रमोदे लक्ष्म्या हर्षजनने हरिः । पुनः कथंभूतः । वाग्देवीनयनोत्पलोत्सवरसप्राप्तौ सुधादीधितिः वाग्देवी सरस्वती तस्या नयनानि तान्येवोत्पलानि तेषामुत्सवरसप्राप्तौ आनन्दरसप्राप्त्यर्थं सुधादीधितिश्चन्द्रः । रूपकालंकारः ॥

इतश्च अस्मिन् प्रदेशे अन्तःपुरे शुद्धान्ते हे नृपवर, दोलाः प्रेङ्खास्तव भवतः कामितानि मनोरथान् कुर्वतां पूरयन्तु । कथंभूते अन्तःपुरे । स्मरमहोत्सवोल्लासरसवशविलासिनीजनोच्चार्यमाणमङ्गलपरम्परे..............................................................................विलासिनीजनास्तैरुच्चार्यमाणा पठ्यमाना मङ्गलपरम्परा धनधवलमङ्गलश्रेणिर्यत्र तत्तथोक्तं तस्मिन् । कथंभूता दोलाः । नवकिसलयपूगीपादपस्तम्भशोभाः नवानि प्रत्यग्राणि किसलयानि कुम्पलानि येषां पूगीपादपानां क्रमुकवृक्षाणां तेषां स्तम्भशोभा स्थूणिकाशोभा यासां तास्तथोक्ताः । पुनः कथंभूताः । सिततरुफलकान्ताशोकवल्लिप्रतानाः सिततरूणां कर्पूरवृक्षाणां फलकानि षट्टका अन्तेषु प्रान्तेषु यासामशोकवल्लीनां तासां प्रतानो रज्जुबन्धनं तस्य रचना यासां ताः । पुनः कथंभूताः । मणिकुसुमदुकूलोल्लोचकेतुप्रकान्ताः मणिकुसुमै रत्नपुष्पैरुपलक्षितानि यानि दुकूलानि पट्टकूलानि तेषामुल्लोचकेतवश्चन्द्रोपकध्वजास्तैः प्रकान्ताः प्रकर्षेण मनोहराः । समुच्चयालंकारः ॥

वक्त्रं वक्त्रमुपैति यत्र नयने नेत्रप्रतिस्पर्धिनी
वक्षः पीनपयोधराग्रकलनात्सोल्लासलीलान्तरम् ।
हस्तौ हस्तसमीपवृत्तिवलितौ जङ्घे च जङ्घाश्रिते
दोलान्दोलनमङ्गनार्पितभरं तत्कस्य न प्रीतये ॥ ४५८ ॥

इत्यनेकावसरसूक्तविशारदान्मदनमकरन्दानन्दितनिखिलजनात्मनो बन्दिनः कृतश्रवणामृतनिषक्तीः सूक्तीर्निशमयन्मधौ मकरध्वजमाराधयामास ।

कदाचित्

खड्गे खड्गतनुस्थितिर्धनुषि च प्राप्ता धनुःसंहतिं
बाणे बाणवपुर्भुजे भुजमयी गात्रे तनुत्राकृतिः ।
संग्रामेऽग्रजयाय चिन्तितविधौ चिन्तामणिर्भूभुजां
या सा स्यादपराजिता तव मुहुर्जैत्राय धात्रीपते ॥ ४५९ ॥

---

वक्त्रमित्यादि । हे राजन्, तज्जगत्प्रसिद्धं दोलान्दोलनं प्रेङ्खनं कस्य पुरुषस्य प्रीतये न भवति । अपि तु सर्वस्यापि प्रीतये भवति । कथंभूतं दोलान्दोलनम् । अङ्गनार्पितभरं अङ्गनाभिरर्पितो भरोऽतिशयो यत्र तत्तथोक्तम् । तत्किम् । यत्र दोलान्दोलने वक्त्रं मुखं वक्त्रमुपैति मुखेन सह मिलति । यत्र नयने नेत्रप्रतिस्पर्धिनी लोचनविलोकनशीले । यत्र वक्षः स्तनप्रदेशः पीनपयोधराग्रकलनात् उन्नतस्तनशिखरसंघट्टनात् सोल्लासलीलान्तरं वर्तते आनन्दावस्थामध्यप्रदेशं भवति । यत्र हस्तौ हस्तसमीपवृत्तिवलितौ वर्तेते हस्तयोः समीपयोः वृत्तिर्वर्तनं तस्यां वलितौ ग्रहणवन्तौ वर्तेते । यत्र जङ्घे प्रसृते जङ्घाश्रिते प्रसिते मिलिते वर्तेते । समुच्चयालंकारः ॥

कदाचित् कस्मिंश्चिदवसरे कोदण्डविद्यां धनुर्वेदं उपासांचक्रे सेवितवानहं अभ्यासांचकार । किं कृत्वा पूर्वम् । महानवमीं निर्वर्त्य निष्पाद्य । कथंभूतां महानवमीम् । इत्यमुना प्रकारेण विजयजैत्रायुधमागधाववोधितलक्ष्मीं विजयजैत्रायुधो नाम मागधो भट्टः तेन अवबोधिता ज्ञापिता लक्ष्मीः शोभा यस्या महानवम्याः सा तथा ताम् । इतीति किम्—खड्गे इत्यादि । हे धात्रीपते, सा अपराजिता नाम देवी तव मुहुर्जैत्राय जयनाय स्यात् भवेत् । सा का । या अपराजिता भूभुजां खड्गे खड्गतनुस्थितिः खड्गे तनोः स्थितिर्यस्याः सा तथोक्ता । खड्गरूपेण तिष्ठतीत्यर्थः । या अपराजिता च अन्यत् भूभुजां धनुषि धनुःसंहतिं प्राप्ता धनुराकारं गता । या बाणे बाणवपुः शरशरीरा वर्तते । या भूभुजां भुजमयी । दोर्दण्डरूपेण तिष्ठतीत्यर्थः । या भूभुजां गात्रे तनुत्राकृतिः कवचाकारेण तिष्ठति । या संग्रामे अग्रजयाय उत्तमजयनिमित्तं वर्तते । कथंभूता । चिन्तितविधौ वाञ्छितप्रदाने चिन्तामणिर्वर्तते । दीपकसमुच्चयालंकारः ॥

तारा: कुन्तलमौक्तिकानि परुषप्रालेयरश्मी दृशौ
वासः स्वर्गसरिद्दिशो भुजलताः काञ्ची पयोराशयः ।
देहो देवगिरिः फणीन्द्रमणयो जाताः पदालंकृति-
र्यस्याः साद्भुतशक्तिरस्तु भवतो भूत्यै चिरायाम्बिका ॥ ४६० ॥

स्वर्गेभमेण्ठशितिकण्ठपयोजपीठ-
वैकुण्ठपाठजठरस्तवनोचिताङ्घ्रिः ।
या चावनीचरमरुच्चरखेचरार्च्या
सा वः श्रियं प्रतनुतादपराजितेयम् ॥ ४६१ ॥

इति विजयजैत्रायुधमागधावबोधितलक्ष्मीं महानवमीं निर्वर्त्य ।

तथा—

हंसावलीद्विगुणकेतुसितांशुकश्रीः
पद्मावतंसरमणीरमणीयसारः ।

---

**तारा इत्यादि** । हे धात्रीपते, सा अम्बिका आम्रा देवी । कूष्माण्डिनीति यावत् । भवतः चिराय भूत्यै अस्तु । कथंभूताम्बिका । अद्भुतशक्तिः अद्भुता विस्मयकारिणी शक्तिः सामर्थ्यं यस्याः सा तथा । सा का । यस्याः अम्बिकायाः ताराः कुन्तलमौक्तिकानि वर्तन्ते । यस्याः परुषप्रालेयरश्मी सूर्याचन्द्रमसौ दृशौ द्वे लोचने वर्तेते । यस्याः स्वर्गसरिद्वासो वर्तते । यस्याः दिशो दश ककुभो भुजलताः सन्ति । यस्याः पयोराशयः काञ्ची कटिमेखला वर्तन्ते । यस्याः देहः देवगिरिः मेरुर्वर्तते । यस्याः फणीन्द्रमणयः शेषशिरोरत्नानि पदालंकृतिश्चरणाभरणं जाताः । रूपकातिशयसमुच्चयालंकारः ॥

**स्वर्गेभेत्यादि** । हे राजन्, सा इयं अपराजिता वो युष्माकं श्रियं प्रतनुतात् विस्तारयतु । सा का । या स्वर्गेभमेण्ठशितिकण्ठपयोजपीठवैकुण्ठपाठजठरस्तवनोचिताङ्घ्रिः स्वर्गेभमेण्ठश्च देवेन्द्रः, शितिकण्ठश्च श्रीमहादेवः, पयोजपीठश्च ब्रह्मा, वैकुण्ठश्च श्रीनारायणः, तेषां पाठस्य पाठनस्य जठरे मध्ये यत् स्तवनं तस्मिन्नुचितौ योग्यौ अङ्घ्री पादौ यस्याः सा तथा । पुनर्या कथंभूता । चान्यत् अवनीचरमरुच्चरखेचरार्च्या अवनीचरा भूमिगोचराः, मरुच्चरा देवाः, खेचरा विद्याधराः, तेषां अर्च्या पूजनीया । अतिशयसमुच्चयालंकारः ॥

पुनश्च किं कृत्वा पूर्वं कोदण्डविद्यामुपासांचक्रे । तथा तेनैव महानवमीप्रकारेण दीपोत्सवश्रियं दीपोत्सवपर्वलक्ष्मीं अनुभूय भुक्त्वा च । कथंभूतां दीपोत्सवश्रियम् । इत्यमुना प्रकारेण सूनासूक्तेन वाग्जीवनविशेषेण सूचितो ज्ञापितोऽवसरः प्रस्तावो यस्याः सा ताम् । इतीति किम्—**हंसावलीत्यादि** । हे महीश, दीपोत्सवस्तव मुदं तनोतु । कथंभूतो

प्रासादसारितसुधाद्युतिदीप्तदिक्को
दीपोत्सवस्तव तनोतु मुदं महीश ॥ ४६२ ॥

द्यूतोन्मादितकामिनीजितधृतप्राणेशचाटूत्कटः
क्रीडद्वारविलासिनीजनभवद्भूषाविकल्पोद्भटः ।
आतोद्यध्वनिमङ्गलारवभरव्याजृम्भिताशामुखः
प्रीतिं पूर्णमनोरथस्य भवतः पुष्यात्प्रदीपोत्सवः ॥ ४६३ ॥

आभान्त्यखर्वशिखराग्रविटङ्कपालि-
दीपावलीद्युतिधृतः पुरसौधबन्धाः ।
प्रत्यङ्गसंगतमहौषधिदीप्तदेहा-
स्त्वां सेवितुं कुलनगा इव दत्तयात्राः ॥ ४६४ ॥

---

दीपोत्सवः । हंसावलीद्विगुणकेतुसितांशुकश्रीः हंसानां या आवलिस्तया द्विगुणानि यानि केतूनां सितांशुकानि तेषां श्रीर्यस्मिन् स तथोक्तः । पुनः कथंभूतः । पद्मावतंसरमणीरमणीयसारः पद्मानि अवतंसानि यासां रमणीनां ताः पद्मावतंसाः ताश्च ता रमण्यस्ताभी रमणीयः सारो द्रव्यं यस्मिन् स तथोक्तः । पुनः कथंभूतः । प्रासादसारितसुधाद्युतिदीप्तदिक्कः प्रासादेषु तमङ्गेषु सारिता पङ्क्तिता या सुधा चूर्णं तस्या द्युतिस्तया दीप्ता दीप्तिमत्यो दिशो यस्मिन् स तथोक्तः । नदीरुदन्तात् शेषाद्वा बहुव्रीहौ कः । जातिः ॥

**द्यूतोन्मादितेत्यादि** । हे महीश, स प्रदीपोत्सवो भवतः प्रीतिं पुष्यात् । कथंभूतस्य भवतः । पूर्णमनोरथस्य । कथंभूतः । प्रदीपोत्सवः द्यूतोन्मादितकामिनीजितधृतप्राणेशचाटूत्कटः द्यूतोन्मादिताः मानोन्नतिं प्राप्ता याः कामिन्यस्ताभिः पूर्वं जिताः पश्चाद्धृताः वस्त्रहस्तादौ गृहीता ये प्राणेशा निजनिजपतयस्तेषां चाटुभिः मिथ्यास्तुतिभिः उत्कट उत्कर्षं प्राप्तः स तथा । पुनः कथंभूतः । क्रीडद्वारविलासिनीजनभवद्भूषाविकल्पोद्भटः क्रीडन्तो ये वारविलासिनीजनास्तेषु भवन्तः संजायमानाः ये भूषाविकल्पाः शृङ्गारविशेषास्तैः उद्भट उन्मत्तः । पुनः कथंभूतः । आतोद्यध्वनिमङ्गलारवभरव्याजृम्भिताशामुखः आतोद्या नाम ये ध्वनयस्तेषां मङ्गलरवास्तेषां भरः समूहस्तेन व्याजृम्भितानि व्याप्तानि आशामुखानि यत्र सा तथा । हास्यरसप्रधानो जात्यलंकारः ॥

**आभान्तीत्यादि** । हे राजन्, पुरसौधबन्धाः नगरसंबन्धिनो राजसदनसमूहाः आभान्ति । कथंभूताः पुरसौधबन्धाः । अखर्वशिखराग्रविटङ्कपालिदीपावलिद्युतिधृतः अखर्वाणि उन्नतानि शिखराणि येषां तानि च तानि अग्रविटङ्कानि वरण्डकास्तेषां पालिषु भित्तिभागेषु या दीपावल्यस्तासां द्युतिं धरन्तीति ते तथोक्ताः । पुनः कथंभूताः । त्वां भवन्तं सेवितुमुपासितुं दत्तयात्रा कृतविहाराः कुलनगा इव । कथंभूताः

इति सूनासूक्तसूचितावसरां दीपोत्सवश्रियं चानुभूय ।

यावन्ति भुवि शस्त्राणि तेषां श्रेष्ठतरं धनुः ।
धनुषां गोचरे तानि न तेषां गोचरो धनुः ॥ ४६५ ॥

इत्यायुधसिद्धान्तमध्यासादितसिंहनादाद्धनुर्वेदादुपश्रुत्य समाश्रितशराभ्यासभूमिः ।

कूर्मः पातालमूलं श्रयति फणिपतिः पिण्डते न्यञ्चदङ्गः
खर्वन्त्युर्वीध्ररन्ध्राण्यपि दधति ककुप्सिन्धुराः साध्वसानि ।
गाधन्तेऽम्भोधयोऽपि क्षितितलविरसद्वीचयस्ते महीश
ज्यारोपासङ्गसीदद्धनुरटनिभरभ्रस्यभूगोलकाले ॥ ४६६ ॥

---

कुलनगाः। प्रत्यङ्गसंगतमहौषधिदीप्तदेहाः प्रत्यङ्गेषु प्रतिशरीरेषु संगता मिलिता या महौषध्यो ज्योतिष्मत्यादिवल्लयस्ताभिर्दीप्ता दीप्तिमन्तो देहा येषां ते तथोक्ताः। उत्प्रेक्षालंकारः॥

पुनः कथंभूतः सन् कोदण्डविद्यामुपासांचक्रे। समाश्रितशराभ्यासभूमिः समाश्रिता शराभ्यासस्य खुरलिकाया भूमिः स्थानं येन मया सोऽहं तथोक्तः। किं कृत्वा पूर्वम्। इत्यमुना प्रकारेण आयुधसिद्धान्तमध्यासादितसिंहनादात् आयुधसिद्धान्तस्य शस्त्रविद्यायाः मध्ये आसादितः प्राप्तः सिंहनादो गर्जना येन स तथोक्तस्तस्मात् नामकात् ईदृग्विधात् धनुर्वेदाद्धनुर्वेदोपाध्यायात् उपश्रुत्य समीपे आकर्ण्य। इतीति किम्—**यावन्तीत्यादि**। यावन्ति यावत्परिमाणानि भुवि भुवने शस्त्राणि वर्तन्ते तेषां शस्त्राणां श्रेष्ठतरमतिशयेन श्लाघ्यं धनुर्वर्तते। धनुषां गोचरे गम्यतायां तानि शस्त्राणि वर्तन्ते। तेषां शस्त्राणां गोचरविषये न धनुर्वर्तते। जात्यलंकारः॥

पुनः किं कुर्वन् कोदण्डविद्यामुपासांचक्रे। इत्यमुना प्रकारेण मार्गणमल्लस्य एतन्नामकस्य वाग्जीविनो भट्टस्य वृत्तानि शृण्वन् आकर्णयन्। इतीति किम्—**कूर्म इत्यादि**। हे महीश, ते तव ज्यारोपासङ्गसीदद्धनुरटनिभरभ्रस्यभूगोलकाले ज्यायाः प्रत्यञ्चाया आरोपश्चढायनं तस्याः सङ्गः संगतिस्तेन सीदन्ती विशीर्यमाणा या धनुषश्चापस्य अटनिरग्रभागस्तस्या भरेण भारेण अतिशयेन भ्रस्य अधःपाती योऽसौ भूगोलः भूमण्डलं तस्य कालोऽवसरः स तस्मिन्। कूर्मः कूर्मराजः पातालस्य पृथिव्या आधारं मूलं श्रयति गच्छति। फणिपतिः कूर्मराजोपरिस्थितः शेषनागः पिण्डते संकुचति। कथंभूतः फणिपतिः। न्यञ्चदङ्गः नीचैर्भवत्फणामण्डलसहस्रः। उर्वीध्ररन्ध्राण्यपि पर्वतछिद्राण्यपि खर्वन्ति ह्रस्वीभवन्ति। ककुप्सिन्धुराः साध्वसानि भयानि दधति धरन्ति। अम्भोधयोऽपि गाधन्ते। लोडनं कुर्वन्तीत्यर्थः। कथंभूता अम्भोधयः। क्षितितलविरसद्वीचयः क्षितितले विरसन्त्यः शतखण्डीभवन्त्यो वीचयः कल्लोलाः येषां ते तथोक्ताः। अतिशयालंकारः॥

आनन्ददुन्दुभिरिव त्रिदशालयानां
देवद्रुहां हृदयनिर्दलनाभिघोषः ।
दूतः समाह्वयविधौ धरणीश्वराणां
चापस्य ते ध्वनिरयं जयतादुदारः ॥ ४६७ ॥

वामे करे किमु धनुः किमु दक्षिणे वा
बाणावलीं सृजति कोऽत्र करोऽथवैताम् ।
इत्थं क्रियाश्रममवेक्ष्य तवाद्भुतार्थं
शस्त्रप्रपञ्चखुरुलीं खलु कः करोतु ॥ ४६८ ॥

मौर्वीशरव्यान्तरलग्नमूर्तिः शरावली देव भवत्प्रयुक्ता ।
चापेन योग्या जगतीं प्रमातुं प्रसारितं सूत्रमिवावभाति ॥ ४६९ ॥

लक्ष्यं दृष्टिपथव्यतीतविषयं पुङ्खानुपुङ्खक्रमा-
द्भित्त्वास्मात्परतः प्रसर्पति गुणस्यूतेव बाणावली ।

---

आनन्ददुन्दुभिरित्यादि । हे राजन्, अयं ते चापस्य ध्वनिर्जयतात् । कथंभूतो ध्वनिः । उदारोऽत्युन्नतः । पुनः कथंभूतः । त्रिदशालयानां स्वर्गाणामानन्ददुन्दुभिरिव हर्षपट इव । पुनः कथंभूतः । देवद्रुहां असुराणां हृदयनिर्दलनाभिघोषः हृदयानां निर्दलने भङ्गे अभिघोषः शब्दो यस्य । अथवा हृदयभङ्गशब्द इव । पुनः कथंभूतः । धरणीश्वराणां समाह्वयविधौ आह्वानविधाने दूतो वचोहरः रूपकोपमालंकारः ॥

वामे करे इत्यादि । हे राजन्, इत्थममुना प्रकारेण तव अद्भुतार्थं आश्चर्यकारकं क्रियाश्रमं बाणाभ्यासं अवेक्ष्य दृष्ट्वा शस्त्रप्रपञ्चखुरुलीं आयुधविस्ताराभ्यासं खलु निश्चयेन कः पुमान् करोतु विदधातु । न कश्चित्करोत्वित्यर्थः । इत्थं कथमिति चेत्— उ इति संबाधने । धनुः चापं वामेकरे सव्यहस्ते किं वर्तते । वा दक्षिणे करे अपसव्यहस्ते किमु वर्तते । अथवा एतां बाणावलीं अत्र खुरुल्यां कः करः को हस्तः सृजति करोति । तव हस्तलाघवेन न कश्चिद्वेत्ति । आक्षेपालंकारः ॥

मौर्वीत्यादि । हे देव, भवत्प्रयुक्ता शरावली अवभाति शोभते । कथंभूता अवभाति । जगतीं प्रमातुं मापितुं प्रसारितं सूत्रमिव । कथंभूता शरावली । मौर्वीशरव्यान्तरलग्नमूर्तिः मौर्वी च ज्या, शरव्यं च वेध्यम्, तयोरन्तरे लग्ना मूर्तिः यस्याः सा तथोक्ता । पुनः कथंभूता । चापेन योग्या अभ्यस्ता । उपमालंकारः ॥

लक्ष्यमित्यादि । हे राजन्, भवतस्तव एवममुना प्रकारेण चापविजृम्भितानि धनुश्चेष्टितानि वर्तन्ते । कस्मिन् । सद्गुण्ययोग्याविधौ सद्भिर्विद्वद्भिः गण्यो गणनीयो योऽसौ

एवं चापविजृम्भितानि भवतः सद्गुण्ययोग्याविधौ
धानुर्धर्यगुणं विमुञ्चति मुहुर्धन्वी न बाणं पुनः ॥ ४७० ॥
कोदण्डाञ्चनचातुरीं रचयतः प्राक्पृष्ठपक्षद्वय-
प्रोर्ध्वाधोविषयेषु ते निरवधीन्दृष्ट्वा शरांल्लक्ष्यगान् ।
इत्थं नाथ वदन्ति देववनिताः क्षोणीश्वरोऽयं हले
किं प्रत्यङ्गविनिर्मितेक्षणभुजः किं वेन्द्रजालक्रियः ॥ ४७१ ॥
त्वं कर्णः कालपृष्ठे भवसि बलिरिपुस्त्वं पुनः साधु शार्ङ्गे
गाण्डीवेऽग्रस्त्वमिन्द्रः क्षितिरमण हरस्त्वं पिनाके च साक्षात् ।

---

योग्याविधिरभ्यास आसमन्तात् विधानं सद्गुण्ययोग्याविधिस्तस्मिन् धनुर्वेदिभिः प्रशंसनीये अभ्यासविधाने सति । धन्वी धनुर्धरो मुहुर्वारंवारं धानुर्धर्यगुणं विमुञ्चति परिहरति । न पुनर्न च बाणं विमुञ्चति । एवं कथमिति चेत्—लक्ष्यं वेध्यं तावत् दृष्टिपथव्यतीतविषयं वर्तते लोचनयोरगोचरं वर्तते । बाणावली लक्ष्यं भित्त्वा अस्मात् लक्ष्यात् परतः प्रसर्पति दूरतो गच्छति । कस्मात् । पुङ्खानुपुङ्खक्रमात् बाणानां पुङ्खान् अनुकूल्य (?) क्रमात् । कथंभूता बाणावली । गुणस्यूतेव दरवकेण प्रोतेव । उपमालंकारः ॥

**कोदण्डेत्यादि** । हे नाथ राजन्, ते तव निरवधीन् बहून् शरान् लक्ष्यगान् वेध्यप्राप्तान् दृष्ट्वा देववनिताः अन्तरिक्षस्थिता देवाङ्गना इत्थममुना प्रकारेण वदन्ति जल्पन्ति । इत्थं कथमिति चेत्—हे हले हे सखि, अयं क्षोणीश्वरो यशोधरः किं प्रत्यङ्गविनिर्मितेक्षणभुजो वर्तते ईक्षणे च भुजौ च ईक्षणभुजाः प्रत्यङ्गमङ्गमङ्गं प्रति प्रत्यङ्गं निर्मिताः सृष्टा ईक्षणभुजा यस्य स तथोक्तः । वाथ वा किं इन्द्रजालक्रियो वर्तते इन्द्रजालस्य क्रिया यस्य स तथा तेन । किं कुर्वतः । प्राक् मुखस्याग्रे पृष्ठभागे पक्षद्वये च वामदक्षिणभागयोः प्रोर्ध्वे चान्तरिक्षे अधश्च पाताले तेषां विषयाः । सर्वा दिश इत्यर्थः । तेषु प्राक्पृष्ठपक्षद्वयप्रोर्ध्वाधोविषयेषु कोदण्डाञ्चनचातुरीं कोदण्डस्य धनुषः अञ्चनमाकर्षणं तस्य चातुरी वैलक्षण्यं तां धनुराकर्षणचतुरत्वं रचयतो विदधतः । संशयालंकारः ॥

**त्वं कर्ण इत्यादि** । हे क्षितिरमण, त्वं भवान् कालपृष्ठे कर्णधनुषि साक्षात् प्रत्यक्षः कर्णः अग्रकौन्तेयो भवसि । हे क्षितिरमण, शार्ङ्गे विष्णुचापे त्वं पुनः बलिरिपुः नारायणो भवसि । हे क्षितिरमण गाण्डीवे त्वं अग्र इन्द्रोऽर्जुनो भवसि । हे क्षितिरमण, पिनाके च रुद्रधनुषि त्वं साक्षात् प्रत्यक्षः हरः श्रीमहादेवो भवसि । एवंविधस्य तव गाङ्गेयद्रोणरामार्जुननलनहुषक्ष्मापसाम्ये सति गाङ्गेयश्च भीष्मः, द्रोणश्च, रामः परशुरामः सीतापतिर्वा, अर्जुनश्च, नलश्च दमयन्तीपतिः, नहुषश्च राघवनृपविशेषः, ते क्ष्मापा राजानस्तेषां साम्यं सादृश्यं तस्मिन् । किं श्लाघनीयं प्रशंसा वर्तते । अपि तु न

बालास्त्रप्रायचापाञ्चनचतुरविधेस्तस्य किं श्लाघनीयं
गाङ्गेयद्रोणरामार्जुननलनहुषक्ष्मापसाम्ये तव स्यात् ॥ ४७२ ॥

इति मार्गणमल्लस्य वाग्जीविनो वृत्तानि शृण्वन्कोदण्डविद्यामुपासांचक्रे ॥

कदाचित्संध्योपासनोत्सुकवैखानसमनसि प्रतिदिवानेहसि
अन्योन्यविषयभावं पश्यत यातेऽद्य शशिनि तपने च।
अरुणमणिकुण्डलश्रियमम्बरलक्ष्मीर्बिभर्तीव ॥ ४७३ ॥

अपि चाखण्डलशुण्डालगण्डमण्डलीमण्डनमदमलिनरुचि, शिशिरकरकुरङ्गेक्षणच्छाये, जाह्नवीजलजम्बालमञ्जरीजालजयिनि, पुरंदरपुरपुरंध्रीपयोधराभोगसंगतमृगमदपत्रभङ्गसुभगे, किंपुरुषकामिनीकुचचूचुकपटल-

---

श्लाघ्यमेतत्। कथंभूतस्य तव। बालास्त्रप्रायचापाञ्चनचतुरविधेः बालानां शिशूनां अस्त्रं धनुस्तत्प्रायाणि तत्सदृशानि यानि चापानि तेषामञ्चनमाकर्षणं तद्वत् चतुरो विचक्षणो विधिर्विधानं यस्य स तथा तस्य। रूपकोपमाक्षेपालंकारः ॥

कदाचित्किस्मिंश्चिदवसरे कविकुरङ्गकण्ठीरवनामा सहाध्यायी सहपठितवान् माण्डलिको मित्रं प्रविश्य प्रवेशं कृत्वा समीपमागत्य इमानि प्रत्यक्षीभूतानि चन्द्रोदयवर्णनानि शशाङ्कोदयवर्णनकराणि वृत्तानि श्लोकानि अधिजगे अपठत् पपाठ। कस्मिन् प्रस्तावे अधिजगे। प्रतिदिवानेहसि प्रतिदिवसस्तस्य अनेहसि काले सति। सायंकाले इत्यर्थः। कथंभूते प्रतिदिवानेहसि। संध्याया उपासनं संध्यावन्दनं तत्र उत्सुकानि उत्तालानि अपरकार्यपराङ्मुखानि वैखानसानां तपस्विनां मनांसि चित्तानि यस्मिन् स तथा तस्मिन्। पुनः कस्मिन् सति अधिजगे। तमसि अन्धकारे विजृम्भमाणे प्रसरति। कथंभूते तमसि। अन्योन्येति। अद्य इदानीं पश्यत अवलोकयत। शशिनि चन्द्रे तपने च भास्करे अन्योन्यविषयभावं परस्परगम्यत्वं याते प्राप्ते सति अम्बरलक्ष्मीः अरुणमणिकुण्डलश्रियं रक्तमाणिक्यताटङ्कशोभां बिभर्तीव धरतीव वर्तते। उपमालंकारः ॥

अपि च तथा च। कथंभूते तमसि। आखण्डलशुण्डालगण्डमण्डलीमण्डनमदमलिनरुचि आखण्डल इन्द्रस्तस्य शुण्डालो हस्ती तस्य गण्डमण्डली कपोलस्थली तस्या मण्डनं शोभाकरो योऽसौ मदस्तद्वत् मलिना कृष्णवर्णा रुक् दीप्तिर्यस्य तमसस्तत्तथोक्तं तस्मिन्। पुनः कथंभूते तमसि। शिशिरकरकुरङ्गेक्षणच्छाये शिशिरकरश्चन्द्रस्तस्य कुरङ्गस्तस्य ईक्षणयोर्नयनयोरिव छाया कान्तिर्यस्य तत्तथोक्तं तस्मिन्। पुनः कथंभूते तमसि। जाह्नवीजलजम्बालमञ्जरीजालजयिनि जाह्नवीजलस्य यज्जम्बालं शैवलं तस्य मञ्जर्यो वल्लर्यस्तासां जालानि जयतीत्येवंशीलं तत्तथा तस्मिन्। पुनः कथंभूते तमसि। पुरंदरपुरपुरंध्रीपयोधराभोगसंगतमृगमदपत्रभङ्गसुभगे पुरंदरस्य यत्पुरं तस्य संबन्धिन्यो

श्यामसंपदि, प्रत्यङ्गमम्बरतलाद्दिक्करटिपांशुप्रमाथपांसुले, दिग्देवतानिकेतननीलोपलकलशप्रकाशभासिनि, दिक्कन्यकालकवल्लरीविलासप्रसरे, दिक्पालपुरप्रासादप्रचलाकिनीकुलकलापकेलिकले, दिगन्तरकान्तारमधुकरीनिकरश्यामले, प्रत्यन्तरालमाशावलयतटिनीतटतमालदलद्योतकान्ते, शिखरान्तरचरच्छबरसीमन्तिनीचिकुरचयरोचिषि, निकुञ्जकुञ्जरकायकान्तिकाले, गिरीशगलगरलकल्माषत्विषि, सानुसारसारङ्गाङ्गनापाङ्गकृष्णे,

---

याः पुरंध्र्योऽमराङ्गनास्तासां पयोधराभोगास्तेषु संगतः संलग्नो योऽसौ मृगमदस्तस्य पत्रभङ्गाः पत्रवल्लयस्तद्वत् सुभगं तत्तथा तस्मिन् । पुनः कथंभूते तमसि । किंपुरुषकामिनीकुचचूचुकपटलश्यामसंपदि किंपुरुषा अश्वमुखा देवास्तेषां कामिन्यस्तासां कुचचूचुकानि तेषां पटलवत् श्यामा संपत् शोभा यस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते । प्रत्यङ्गमम्बरतलाद्दिक्करटिपांशुप्रमाथपांसुले प्रत्यङ्गं प्रत्यवयवं अम्बरतलात् आकाशमण्डलात् दिक्करटिनां योऽसौ पांशुप्रमाथः रजस्ताडनं तद्वत् पांसुलं रजोबहुलं तस्मिन् । पुनः कथंभूते । दिग्देवतानिकेतननीलोपलकलशप्रकाशभासिनि दिग्देवतानां दिक्कन्यकानां निकेतनानि मन्दिराणि तेषु ये नीलोपलकलशा इन्द्रनीलमाणिक्यकुम्भास्तेषां प्रकाशस्तद्वत् भासते इत्येवंशीलं तत्तथा तस्मिन् । पुनः कथंभूते दिक्कन्यकालकवल्लरीविलासप्रसरे दिक्कन्यकानां अलकवल्लर्यस्तासां विलासवत् प्रसरवत् प्रसरो यस्य तत्तथा तस्मिन् । पुनः कथंभूते । दिक्पालपुरप्रासादप्रचलाकिनीकुलकलापकेलिकले दिक्पालपुराणां ये प्रासादा गृहास्तेषां प्रचलाकिनीकुलानि मयूरीसमूहाः तेषां कलापकेलीनां पक्षक्रीडानां कला शोभा विद्यते यस्य तत्तथा तस्मिन् । पुनः कथंभूते दिगन्तरकान्तारमधुकरीनिकरश्यामले दिगन्तरेषु यानि कान्ताराणि तेषां मधुकर्यस्तासां निकरास्तद्वत् श्यामलं तस्मिन् । पुनः कथंभूते । प्रत्यन्तरालमाशावलयतटिनीतटतमालदलद्योतकान्ते प्रत्यन्तराले प्रत्याकाशमाशावलयात् यास्तटिन्यो नद्यस्तासां तटेषु ये तमालास्तेषां दलानि तेषां द्योतवत् प्रकाशवत् कान्तं मनोहरं तस्मिन् । पुनः कथंभूते । शिखरान्तरचरच्छबरसीमन्तिनीचिकुरचयरोचिषि शिखरान्तरेषु पर्वतेषु चरन्त्यो याः शबरसीमन्तिन्योऽरण्यधीवरवध्वस्तासां चिकुरास्तेषां चयस्तद्वत् रोचिः शोभा यस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते । निकुञ्जकुञ्जरकायकान्तिकाले निकुञ्जा लतादिपिहितोदरास्तेषां कुञ्जरास्तेषां कायकान्तिस्तद्वत् कालं कृष्णं तस्मिन् । पुनः कथंभूते । गिरीशगलगरलकल्माषत्विषि गिरीशः श्रीमहादेवस्तस्य गलः कण्ठस्तत्र यद्गरलं विषं तद्वत् कल्माषा कृष्णा त्विट् दीप्तिर्यस्य तत्तथा तस्मिन् । पुनः कथंभूते । सानुसारसारङ्गाङ्गनापाङ्गकृष्णे सानुसारास्तटगता ये सारङ्गास्तेषां अङ्गनास्त्रियस्तासां अपाङ्गा नेत्रप्रान्तास्तद्वत् कृष्णं कालवर्णं तस्मिन् । पुनः कथं-

प्रतिप्रदेशमचलचक्रवालादभिसारिकाविजृम्भणान्धपटप्रतानतरले, धराधरिणीधम्मिल्लधामधाविनि, महीमहिलामौलिमेचकमणिमहोमान्ये, पार्थिवपतिपस्त्यप्रान्तप्रचारिचीनांशुकध्वजाडम्बरविडम्बिनि, स्मरेक्षुकोदण्डपलाशपेशले, प्रतिप्रतीकमिलाचक्राद्विजद्विजिह्वाश्रमहोमधूमोद्गमस्पर्धिनि, विरहवेगागतभुजङ्गीश्वासानिलमलीमसे, भोगिनगरोपवनपल्लवोल्लासलीलापहासिनि, लेलिहानानिलावलेहजिह्वाजिह्मकालुष्ये, कालियाहिप्रभाप्रभावपा-

---

भूते। प्रतिप्रदेशमचलचक्रवालादभिसारिकाविजृम्भणान्धपटप्रतानतरले प्रतिप्रदेशं स्थाने स्थाने अचलचक्रवालात् मानुषोत्तरपर्वतमध्यात् या अभिसारिकाः कान्तार्थिन्यः स्त्रियः। 'कान्तार्थिनी तु या याति संकेतं साभिसारिका' इत्यभिधानात्। परपुरुषलम्पटाः स्त्रियस्तासां विजृम्भणे प्रसरे योऽसौ अन्धपटः कृष्णवस्त्रं तस्य प्रतानो विस्तारस्तद्वत्तरलं चपलं तस्मिन्। पुनः कथंभूते। धराधरिणीधम्मिल्लधामधाविनि धरा पृथिवी सैव अधरिणी अधरो विद्यते यस्याः सा अधरिणी स्त्री तस्या धम्मिल्लः संयताः कचास्तस्य धाम प्रभा तद्वत् धावतीत्येवंशीलं तस्मिन्। पुनः कथंभूते। महीमहिलामौलिमेचकमणिमहोमान्ये महीमहिलायाः पृथिवीस्त्रियो मौलिस्तस्य मेचकमणिः कृष्णरत्नं तस्य महस्तेजस्तद्वन्मान्य तथा तस्मिन्। पुनः कथंभूते। पार्थिवपतिपस्त्यप्रान्तप्रचारिचीनांशुकध्वजाडम्बरविडम्बिनि पार्थिवानां पतिश्चक्रवर्ती तस्य पस्त्यप्रान्तप्रचारी चीनांशुकध्वजस्तस्याडम्बरस्तं विडम्बयतीत्येवंशीलं तस्मिन्। पुनः कथंभूते। स्मरेक्षुकोदण्डपलाशपेशले ........................................................................................................................................................................................।

पुनः कथंभूते। प्रतिप्रतीकमिलाचक्राद्विजद्विजिह्वाश्रममहोमधूमोद्गमस्पर्धिनि प्रतिप्रतीकं अवयवं प्रति इलाचक्रात् पृथ्वीमण्डलात् द्विजद्विजिह्वाश्रमे द्विजदन्तशुक्रगृहे योऽसौ होमधूमस्तस्योद्गमः प्रादुर्भावस्तं स्पर्धते इत्येवंशीलं तत्तथा तस्मिन्। पुनः कथंभूते। विरहवेगागतभुजङ्गीश्वासानिलमलीमसे विरहो विप्रलम्भस्तस्य वेग उत्सुकत्वं तमागता प्राप्ता या भुजङ्गी नागकन्या तस्याः श्वासानिलस्तद्वन्मलीमसं तस्मिन्। पुनः कथंभूते। भोगिनगरोपवनपल्लवोल्लासलीलापहासिनि भोगिनां नागदेवानां यन्नगरं तस्योपवनानि आक्रीडवनानि तस्य यानि पल्लवानि प्रवालानि तेषां उल्लासलीलां अपहसतीत्येवंशीलं तस्मिन्। पुनः कथंभूते। लेलिहानानिलावलेहजिह्वाजिह्मकालुष्ये लेलिहाना नागास्तेषां अनिलावलेहा मरुदास्वादिनी या जिह्वा तद्वज्जिह्मं गुरुतरं कालुष्यं यस्मिन्। पुनः कथंभूते। कालियाहिप्रभाप्रभावपाटवस्फुटि कालियाहिः नारायणनाम तस्य प्रभास्तस्याः प्रभावपाटवं माहात्म्यपटुत्वं स्फोटयति तिरस्करोतीत्येवंशीलं तस्मिन्।

टवस्फुटि, प्रत्यवयवं पातालमूलाच्च तापिच्छगुलुच्छोत्तंस इवान्तरिक्षलक्ष्म्याः, सैंहिकेयसंचर इव नक्षत्रक्षेत्रस्य, नीलिकोपदेह इव त्रिदिवदीर्घिकायाः, कज्जलद्रवोपद्रव इव नभश्चरविमानानाम्, कवचोपचय इव भूभृत्कटकस्य, जलधरजवनिकागम इव कन्दरपरिसराणाम्, इन्द्रनीलनिचोलक इव भुवनवलभीमण्डलस्य, महामोहरसप्रसर्प इव कीटककुटीरकाणाम्, परिषत्पूर इव ककुबाभोगस्य, कालिन्दीतरङ्गसंगम इव विश्वंभराभागानाम्, रेरिहाणनिवहविहार इव वनस्थलीदेशस्य, शबरसैन्यसंगम इव काननविषयाणाम्, असुरसमाजसंपर्क इव धराध्ररन्ध्रस्थानस्य, कुवलयाकर इव निम्नावनीतलानाम्, चञ्चरीकपरिचय इव प्रफुल्लितारामस्य, कृष्णकलापपरिग्रह इव जलनिधीनाम्, काचकपाटपुटोपगम इव च सकललोकविलोकनव्यापारस्य,

---

प्रत्यवयवं प्रतिप्रतीकं पातालमूलात् पातालतलात् । चकार उक्तसमुच्चयार्थः । अन्तरिक्षलक्ष्म्या गगनश्रियस्तापिच्छगुलुञ्छोत्तंसे इव कालस्कन्धवृक्षगुलुञ्छस्य कर्णपूरे इव । पुनः कथंभूते । नक्षत्रक्षेत्रस्य आकाशस्य सैंहिकेयसंचर इव राहुसेनव्याधाविव । पुनः कथंभूते । नीलिकोपदेह इव त्रिदिवदीर्घिकाया जम्बालोपचये इव । पुनः कथंभूते । नभश्चरविमानानां कज्जलद्रवोपद्रव इव मषीरसविलेपने इव । पुनः कथंभूते । भूभृत्कटकस्य पर्वतकटिन्याः कवचोपचय इव वाणवारवृद्धिरिव । पुनः कथंभूते । कन्दरपरिसराणां गुहापर्यन्तानां जलधरजवनिकागमे तिरस्करिणीसमागमे इव । उक्तं च—'प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा । काण्डपटा पर्यविका परिकरः पर्यङ्कषा च ॥'······इत्यनेकार्थान्तरम् । पुनः कथंभूते । भुवनवलभीमण्डलस्य जगत्पटलाधारवंशपञ्जरस्य इन्द्रनीलनिचोलके इव कृष्णमाणिक्यप्रच्छदपटे इव । पुनः कथंभूते । कीटककुटीरकाणां दरिद्रगृहाणां महामोहप्रसर्पे इव अज्ञातरसविजृम्भणे इव । पुनः कथंभूते । ककुबाभोगस्य दिङ्मण्डलस्य परिषत्पूर इव कर्दमप्रवाहे इव । पुनः कथंभूते । विश्वंभराभागानां पृथिवीदेवदेशानां कालिन्दीतरङ्गसंगमे इव······················ । पुनः कथंभूते । वनस्थलीदेशस्य रेरिहाणनिवहविहार इव रेरिहाणानां महिषाणां निवहास्तेषां विहारे पर्यटने इव । पुनः कथंभूते । काननविषयाणां गोचराणां शबरसैन्यसंगमे इव धाटीमेलापके इव । पुनः कथंभूते । धराध्ररन्ध्रस्थानस्य पर्वतच्छिद्रप्रवेशस्य असुरसमाजसंपर्के इव । पुनः कथंभूते । निम्नावनीतलानां नीचभूमीनां कुवलयाकरे इव इन्दीवरसमूहे इव । पुनः कथंभूते । प्रफुल्लितारामस्य विकसितवल्लीवनस्य । चञ्चरीकपरिचय इव भ्रमरागमे इव । पुनः कथंभूते । जलनिधीनां कृष्णकलापपरिग्रह इव नारायणसमूहस्वीकारे इव । पुनः कथंभूते । सकललोकविलोकनव्यापारस्य सकलानां लोकानां विलोकनस्य व्यापारस्य काचकपाटपुटो-

दुर्जनजनचेष्टितमिव समस्तमुच्चमवचं च वस्तु समतां नयति, विजृम्भमाणे तमसि,

विलीन इव, अपहृत इव अदृश्यतोपगत इव, देशान्तरनीत इव, निमग्न इव, संहृत इव, प्रजापतिपाणिपुटपिहित इव, च क्षणमात्रं जाते जगति सति,

यैवाशेषजगच्छिरोमणिभुवां धाम्नामभूदास्पदं
तस्या एव दिशो मलीमसरुचिप्रायं तमस्तायते ।
आपाण्डु प्रथमं ततः सुरनदीसंभेदरेखानिभं
पश्चादातसपुष्पकान्ति तदनु श्रीकण्ठकण्ठद्युति ॥ ४७४ ॥

---

पगम इव काचस्य चक्षूरोगविशेषस्य कपाटपुटस्य प्रच्छादनस्य उपगमे संबन्ध इव । तमसि किं कुर्वति । समस्तं समग्रमुच्चं अवचं च नीचं वस्तु पदार्थं समतां तुल्यतां नयति प्रापयति । कमिव । दुर्जनजनचेष्टितमिव यथा दुर्जनजनानां चेष्टितं खलसमूहव्यापारं उच्चनीचं समतां नयति ।

पुनश्च कस्मिन् सति कविकुरङ्गकण्ठीरवनामा सहाध्यायी वृत्तानि अधिजगे । जगति पृथ्वीमण्डले क्षणमात्रं स्तोककालं जाते सति उत्पन्ने सति । कथंभूते । विलीने विद्रुते इव । पुनः कथंभूते । अपहृते इव मुषिते इव । पुनः कथंभूते । अदृश्यतोपगते इव अन्तर्धिंप्राप्ते इव । पुनः कथंभूते । देशान्तरनीते इव अपरस्थाने प्रापिते इव । पुनः कथंभूते । निमग्न इव । पुनः कथंभूते । संहृते इव प्रलयं गते इव । पुनः कथंभूते । प्रजापतिपाणिपुटपिहिते इव प्रजापतिपाणिपुटेन पिहिते छुपिते इव ।

कस्मिन् सति अविकुरङ्गकण्ठीरवनामा वृत्तानि अधिजगे । इत्यमुना प्रकारेण चारणानां वचनान्यपि आकर्णयति । कथंभूतानां चारणानाम् । चेतःप्रसत्तिकारणानां हृदयप्रसन्नताहेतूनाम् । इतीति किम्—

यैवाशेषेत्यादि । यैव दिक् धाम्नां तेजसां आस्पदमभूत् । कथंभूतानां धाम्नाम् । अशेषजगच्छिरोमणिभुवां अशेषस्य सर्वस्य जगतः शिरोमणिः श्रीसूर्यस्तस्मात् तस्मिन् वा भवन्तीति यानि धामानि तानि अशेषजगच्छिरोमणिभूतानि तेषां तथोक्तानाम् । तस्या एव दिशस्तेजस्विन्यास्तमस्तायते विस्तरति । कथंभूतं तमः । मलीमसरुचिप्रायं मलिनतेजःसदृशम् । कथंभूतं तमः । प्रथमं पूर्वं आपाण्डु ईषद्गौरम् । ततस्तदनन्तरं कथंभूतम् । सुरनदीसंभेदरेखानिभं सुरनद्याः 'संभेदः सिन्धुसंगमः' इत्यभिधानात् या रेखा मनाग्मलिनता तया निभं सदृशं नीलवर्णः । तदनु तत्पश्चात् । कथंभूतं तमः आतसपुष्पकान्ति अतसीपुष्पसदृशनीलवर्णम् । तदनु ततः पश्चात्कथंभूतं तमः । श्रीकण्ठकण्ठद्युति अतिकृष्णमित्यर्थः । उपमालंकारः ॥

रविरहनि रजन्यामिन्दुरेष प्रतापी
तदपि न तिमिराणां संततेर्मूलनाशः ।
अनियतगतिसर्गे वैरिवर्गे प्रयुक्तं
किमिव भवतु पुंसस्तुङ्गधाम्नोऽपि धाम ॥ ४७५ ॥

इति चेतःप्रसत्तिकारणानां चारणानां वचनान्याकर्णयति, वारुणीमुखमण्डनरागाधिष्ठिते प्रतिष्ठिते चाहनि,

विद्विष्टदृष्टिहरणं लवणं कृशानौ
नीराज्य राज्यविकटं स्फुटतादपास्तम् ।
राजंस्तवावतरणाश्रयणं च भक्तं
प्रीणातु पुण्यजनमध्वनि बद्धपूजम् ॥ ४७६ ॥

---

**रविरित्यादि** । अहनि दिवसे एष प्रत्यक्षीभूतो रविः प्रतापी वार्तयापि भयावहो वर्तते । रजन्यां इन्दुः प्रतापी कान्तिमान् वर्तते । तदपि तथापि तिमिराणामन्धकाराणां संततेः कुलस्य मूलनाशो न भवति । अनियतगतिसर्गे अनिश्चितप्रवृत्तौ वैरिवर्गे प्रयुक्तं धाम तुङ्गधाम्नोऽपि पुंसः उन्नततेजसोऽपि पुरुषस्य प्रयुक्तमारोपितं किमिव कीदृशं भवतु कीदृशं भविष्यति । अपि तु न कीदृशमेव । आक्षेपालंकारः ॥

पुनश्च कस्मिन् सति कविकुरङ्गकण्ठीरवो वृत्तानि अधिजगे । अहनि दिवसे प्रतिष्ठिते अस्तं प्राप्ते सति । कथंभूते अहनि । वारुणीमुखमण्डनरागाधिष्ठिते वारुणी पश्चिमा दिक् तस्या मुखमण्डनं तस्य रागे अधिष्ठितं अधिकृत्य स्थितं तस्मिन् ।

कस्मिन् सति । कविकुरङ्गकण्ठीरवो वृत्तान्यधिजगे । मयि राजनि इति ईदृशानि वृत्तानि आकर्णयति सति । कथंभूते मयि । विनिवर्तितापराह्णसंध्यावन्दने विनिवर्तितं निष्पादितं अपराह्णस्य संध्यावन्दनं येन मया स तथा तस्मिन् । पुनः कथंभूते मयि । चन्द्रालोकनकुतूहलितलोचने चन्द्रालोकने शशाङ्कदर्शने कुतूहलिते कौतुकं प्राप्ते लोचने द्वे नयने यस्य स तस्मिन् । इतीति किम्—**विद्विष्टदृष्टिहरणमित्यादि** । हे राज्यविकट राज्यं विकटं करालं उन्नतं पृथु विस्तीर्णं रम्यं मनोहरं च यस्य स राज्यविकटस्तस्य संबोधनं हे तथोक्त, लवणमक्षीबं नीराज्य तवोपरि उत्तार्य कृशानौ वैश्वानरे अपास्तं क्षिप्तं स्फुटतात् तटतटायताम् । कथंभूतं लवणम् । विद्विष्टदृष्टिहरणं विद्विष्टानां दृष्टिदोषविनाशकम् । हे राजन्, भक्तं भक्तपिण्डिका पुण्यजनं राक्षसं प्रीणातु तर्पयतु । कथंभूतं भक्तम् । तव भवतोऽवतरणाश्रयणं उत्तारणसंबन्धि । पुनः कथंभूतम् । अध्वनि बद्धपूजं अध्वनि मार्गे निबद्धा आरोपिता धृता पूजा अर्चा यस्य भक्तस्य तत्तथोक्तम् । समुच्चयालंकारः ॥

नीराजनार्जनविधौ विधिवत्प्रयुक्ता
दीपावली सकलमङ्गलहेतुभूता ।
नक्षत्रपङ्क्तिरिव मेरुमहीधरस्य
पर्यन्तवृत्तिरुदयाय तवेयमस्तु ॥ ४७७ ॥

श्रीः श्रेयांसि सरस्वती सुखकथाः स्वर्गौकसः स्वःश्रियं
नागा नागबलं ग्रहा ग्रहगुणं रत्नानि रत्नाकराः ।
ये चान्येऽपि समस्तमङ्गलविधौ देवाः सतां संमता-
स्ते सर्वेऽपि दिशन्तु भूप भवतः संध्यास्ववन्ध्याः क्रियाः ॥ ४७८ ॥

इत्याकर्णयति विनिर्वर्तितापराह्णसंध्यावन्दने चन्द्रालोकनकुतूहलितलोचने मयि सति, प्रविश्य **कविकुरङ्गकण्ठीरव**नामा सहाध्यायी चन्द्रोदयवर्णनानीमानि वृत्तान्यधिजगे—

---

**नीराजनेत्यादि** । हे राजन्, नीराजनार्चनविधौ आरार्तिकोत्तारणविधौ इयं प्रत्यक्षीभूता दीपावली दीपकश्रेणिस्तव भवतः पर्यन्तवृत्तिः सती प्रान्ते वर्तमाना सती उदयाय राज्याभ्युदयनिमित्तं अस्तु भवतु । कथंभूता दीपावली । विधिवत् शास्त्रोक्तप्रकारेण प्रयुक्ता कृता सती सकलमङ्गलहेतुभूता सकलानि च तानि मङ्गलानि तेषां हेतुभूता कारणभूता भवति । पुनः कथंभूता दीपावली । मेरुमहीधरस्य मेरुपर्वतस्य नक्षत्रपङ्क्तिः पर्यन्तवर्तिनी भवति । अव्ययोपमालंकारः ॥

**श्रीः श्रेयांसीत्यादि** । हे भूप, भवतस्तव सर्वेऽपि ते देवाः संध्यासु अवन्ध्याः सफलाः क्रिया आचरणानि दिशन्तु कुर्वन्तु वदतु । ते के । ये देवाः समस्तमङ्गलविधौ सर्वकल्याणविधाने सतां विद्वज्जनानां संमता अभीष्टाः । न केवलं ते, अन्येऽपि च अपरेऽपि च अर्हदादयो देवाः ते के । तत्र तावत् श्रीः देवता श्रेयांसि कल्याणानि दिशतु । सरस्वती वाग्देवता सुखकथाः सुखानां कथा त्रिवर्गकथनानि दिशतु । स्वर्गौकसः स्वर्गस्थिता देवा..........................................................................
..........................................................................................................
ग्रहगुणं दिशतु । आदित्यस्य प्रतापो गुणः, सोमस्य सौम्यो गुणः, मङ्गलस्य पृथ्वीक्षोभगुणः, बुधस्य बुद्धिगुणः, बृहस्पतेः वैदुष्यगुणः, शुक्रस्य नीतिगुणः, शनेः शत्रूपरि क्रूरदृष्टिगुणः, राहोः एकपादपीडनं गुणः, केतोः शत्रुविषय उद्वासनगुणः, एवं ज्ञातव्यम् । रत्नाकराः समुद्राः रत्नानि पञ्चविधमाणिक्यानि दिशन्तु । समुच्चयालंकारः ॥

आहुर्नेत्रोत्थमत्रेः सुतममृतनिधेर्यं हरेर्नर्मबन्धुं
मित्रं पुष्पायुधस्य त्रिपुरविजयिनो मौलिभूषाविधानम् ।
वृत्तिक्षेत्रं सुराणां यदुकुलतिलकं बान्धवं कैरवाणां
स प्रीतिं वस्तनोतु द्विजरजनिपतिश्चन्द्रमाः सर्वकालम् ॥ ४७९ ॥

उदयशिखरे शेफालीनां प्रसूनचयच्छवि-
र्गगनसरसि छायां बिभ्रद्बिसाङ्कुरशालिनीम् ।
सुरपतिवधूहासोल्लासश्रियं(?)श्रयदाकृतिः
प्रथमसमये चन्द्रोद्द्योतस्तवास्तु मुदे सदा ॥ ४८० ॥

उत्कल्लोलो जलधिरजडं नीरनीरेजमेत-
न्मारः स्फारः प्रमदहृदयोदारचाराश्चकोराः ।

---

कविकुरङ्गकण्ठीरवः कानि नृत्तानि अधिजगे इत्याह—आहुरित्यादि । हे राजन्, स चन्द्रमा वो युष्माकं सर्वकालं सदैव प्रीतिं तनोतु हर्षं विस्तारयतु । स कः । यं चन्द्रमसं अत्रेर्हारीतगुरोर्ऋषेर्नेत्रोत्थं नेत्रमलोत्पन्नमाहुर्ब्रुवन्ति । अमृतनिधेः क्षीरसागरस्य सुतमाहुः । हरेः श्रीनारायणस्य नर्मबन्धुं मैथुनकमाहुः । पुष्पायुधस्य मित्रं सखायमाहुः । त्रिपुरविजयिनः श्रीमहादेवस्य मौलिभूषाविधानं मस्तकाभरणकरणमाहुः । सुराणां वृत्तिक्षेत्रं जीवनसस्याधिकरणमाहुः । तेषाममृताशनत्वात् । यदुकुलतिलकं यादवनरेन्द्रवंशविशेषकमाहुः । यादवाः किल बुधकुले समुत्पन्नास्तस्य पितृत्वात् । कैरवाणां कुमुदानां बान्धवमाहुः । कथंभूतश्चन्द्रमाः । द्विजरजनिपतिः द्विजानां ब्राह्मणानां पतिः, रजन्या रात्रेश्च पतिः । रूपकदीपकालंकारः ॥

उदयशिखर इत्यादि । हे राजन्, चन्द्रोद्द्योतः शशाङ्कातपस्तव सदा मुदे अस्तु । कथंभूतः चन्द्रोद्द्योतः । प्रथमसमये उद्गमनकाले उदयशिखरे शेफालीनां निर्गुण्डीनां प्रसूनचयच्छविः पुष्पसमूहसदृशः । तथा गगनसरसि बिसाङ्कुरशालिनीं पद्मिनीकन्दोद्भेदशोभिनीं छायां वर्णं बिभ्रत् धरत् । पुनः कथंभूतः । सुरपतिवधूहासोल्लासश्रियं श्रयदाकृतिः सुरपतेः वधूनां शचीमहादेवीप्रभृतीनां हासस्योल्लासो हसनस्य प्रादुर्भावस्तस्य श्रियं शोभां श्रयन्ती आकृतिः मूर्तिर्यस्य स तथोक्तः । अत्रालुक्समासः । उपमालंकारः ॥

उत्कल्लोल इत्यादि । हे राजन्, स एष चन्द्रः समुद्रनवनीतं जयति । कथंभूत-

---

१. 'च्छविश्रय–' इति पाठो भवेत्. २. अत्र चालुग्विधानवचनानुपलम्भेन स्वेच्छयैवालुक्करणं ग्रन्थकर्तुः प्रमादः, अत एवोपरि 'च्छविश्रय–' इति पाठः पाठ्यश्च.

सौधोत्सङ्गाः सपदि विहितक्षीरपूराभिषङ्गा
यस्योल्लासे स जयति जनानन्दनश्चन्द्र एषः ॥ ४८१ ॥

हारैस्तारोत्तरलरुचिभिर्दुग्धमुग्धैः कटाक्षै-
र्हासोल्लासश्रयिभिरधरैः कैरवांसैर्वतंसैः ।
यस्य स्त्रीणां स्तनतटभरैश्चन्दनस्यन्दसारै-
र्द्योतः सान्द्रीभवति स विधुर्वस्तनोतु प्रियाणि ॥ ४८२ ॥

हरति स्मितं प्रियाणामपाङ्गकान्तिं विलुम्पति नितान्तम् ।
अधिकरुचिः स्तनयुगले तथापि चन्द्रो मुदे जगतः ॥ ४८३ ॥

वृद्धिर्वार्धेर्विजयसमयः पुष्पकोदण्डपाणेः
क्रीडानीडं रतिरसविधेः प्राणितं पञ्चमस्य ।

---

श्चन्द्रः जनानन्दनः । स कः । यस्य चन्द्रस्य उल्लासे प्रादुर्भावे जलधिः समुद्रः उत्कल्लोलः ऊर्ध्वगतकल्लोलवान् भवति ।...................................................................... । यस्योल्लासे चकोराः जीवंजीवाः प्रमदहृदयोदारचारा प्रमदहृदयेनानन्दितमनसा उदारचारा मनोहरवृत्तयो भवन्ति । यस्योल्लासे सौधोत्सङ्गाः राजसदनोपरितनभागाः सपदि शीघ्रं विहितक्षीरपूराभिषङ्गाः विहितः कृतः क्षीरपूरस्य दुग्धप्रवाहस्य अभिषङ्गः संगतिर्यैस्ते तथोक्ताः । दीपकालंकारः ॥

हारैरित्यादि । हे राजन्, स विधुर्वो युष्माकं प्रियाणि पुण्यकर्माणि मनीषितानि वा तनोतु । स कः । यस्य विधोर्द्योतः प्रभा सान्द्रीभवति वृद्धिं गच्छति । कैः कृत्वा । स्त्रीणां हारैः । कथंभूतैर्हारैः । तारोत्तरलरुचिभिः तारा निर्मला उत्तरला उत्कर्षेण भास्वरा रुचयो येषां ते तथा तैः । पुनः कैः कृत्वा । स्त्रीणां कटाक्षैः । कथंभूतैः कटाक्षैः । दुग्धमुग्धैः दुग्धवत् मुग्धा मनोहरास्ते तथा तैः । पुनः कैः कृत्वा । स्त्रीणामधरैः । कथंभूतैरधरैः । हासोल्लासश्रयिभिः हासस्य स्मितस्योल्लासः प्रादुर्भावः तं श्रयन्ति इत्येवंशीलास्तैः । पुनः कैः कृत्वा । स्त्रीणां वतंसैः । कथंभूतैर्वतंसैः । कैरवांसैः कैरवाणि श्वेतोत्पलान्येव अंसः स्कन्धो येषां ते तथा तैः । पुनः कैः कृत्वा । स्त्रीणां स्तनतटभरैः । कथंभूतैः स्तनतटभरैः । चन्दनस्यन्दसारैः चन्दनस्य स्यन्देन क्षरणेन साराः मनोहरास्तैः । समुच्चयालंकारः ॥

हरति स्मितमित्यादि । हे राजन्, चन्द्रः प्रियाणां स्मितं हरति । अथ अपाङ्गकान्तिं विलुम्पति । कथम् । नितान्तम् । स्तनयुगले अधिकरुचिः तथापि जगतः मुदे भवति । उपमैव ॥

वृद्धिरित्यादि । हे देव, अयं चन्द्रोदयः कथंभूतः । वार्धेः वृद्धिः वृद्धिकरः । पुनः पुष्पकोदण्डपाणेः कन्दर्पस्य विजयसमयः । पुनः रतिरसविधेः क्रीडानीडम् । रतिरसस्यावास

स्त्रीणां लीलावगमनिगमः कामिनां केलिहेतुः
स्रोतःसूतिर्निजमणिभुवां देव चन्द्रोदयोऽयम् ॥ ४८४ ॥

नेत्रैः कज्जलपांसुलैः कुवलयैः कर्णावतंसोदयैः
कस्तूरीतिलकैः कपोलफलकैर्लोलालकैर्भालकैः ।
स्त्रीणां नीलमणिप्रकाशवशगैर्वक्षोजवक्रैस्तम-
श्चन्द्रोद्द्योतभयेन विद्रुतमिदं दत्तावकाशीकृतम् ॥ ४८५ ॥

चरणनखमयूखैरङ्कुरस्थामवस्थां
हसितकिरणजालैः पल्लवोल्लासरम्याम् ।
प्रसवसमययोग्यामङ्गनानामपाङ्गै
रजनिकरतरुश्रीर्नीयते प्राप्तभूमिः ॥ ४८६ ॥

---

इत्यर्थः । पुनः पञ्चमस्य प्राणितं जीवितप्रायः । पुनः स्त्रीणां लीलावगमनिगमः लीलानां विदग्धचेष्टानां अवगमस्य परिज्ञानस्य निगमः शास्त्रम् । उक्तं च—'हेला विलासविब्वोकलीलाललितविभ्रमाः । स्त्रीणां शृङ्गारचेष्टाः स्युर्हावपर्यायवाचकाः ॥' पुनः कामिनीनां केलिहेतुः निमित्तः । पुनः निजमणिभुवां चन्द्रकान्तरत्नभूमीनां स्रोतःसूतिः प्रवाहोत्पत्तिः । रूपकालंकारः ॥

नेत्रैरित्यादि । हे राजन्, इदं तमः चन्द्रोद्द्योतभयेन विदूरेण विद्रुतं पलायितं स्त्रीणां नेत्रैः दत्तावकाशीकृतं शरणमागतं रक्षितम् । कथंभूतैर्नेत्रैः । तत्कारणगर्भितं विशेषणमाह—कज्जलपांसुलैरञ्जनमलिनैः । न केवलं नेत्रै रक्षितम् । कुवलयैः कथंभूतैः । कर्णावतंसोदयैः कर्णावतंसेषु कर्णपूरेषु उदयो येषां तानि तैः । न केवलं तैः । कपोलफलकैः गण्डस्थलपट्टकैः । कथंभूतैः । कस्तूरीतिलकैः कस्तूर्यास्तिलकः पत्रवल्ली येषु तानि तैः । तथा भालकैर्ललाटपटैः । कथंभूतैः । लोलालकैः । तथा वक्षोजवक्रैः स्तनचूचुकैः । कथंभूतैः । नीलमणिप्रकाशवशगैः नीलमणीनां प्रकाश उद्द्योतस्तस्य वशगैः श्यामवर्णैः । हेतुरलंकारः ॥

चरणनखमयूखैरित्यादि । हे राजन्, रजनिकरतरुश्रीः कर्मतापन्ना प्राप्तभूमिः सती । भूमिं विना तरुर्नोत्पद्यते । यतः अङ्गनानां चरणनखमयूखैः अङ्कुरस्थामङ्कुरसंबन्धिनीमवस्थां दशां नीयते प्राप्यते । तथाङ्गनानां हसितकिरणजालैः पल्लवोल्लासरम्यां प्रवालोत्पत्तिमनोहरां अवस्थां नीयते । तथाङ्गनानां अपाङ्गैः प्रसवसमययोग्यां प्रसूनकालोचितां अवस्थां नीयते । रूपकालंकारः ॥

यस्योदयेषु माद्यति सरित्पतिर्नीरसो जडप्रकृतिः ।
सरसधियः स्मरगुरवस्तत्र कथं सुकृतिनो न माद्यन्ति ॥ ४८७ ॥
सर इव विलीननीलिकमम्बरमाभाति तरुणशशिकिरणम् ।
नीरन्ध्ररोध्रधूलीविधूसरं दृश्यते च दिक्चक्रम् ॥ ४८८ ॥
अभिनवयवाङ्कुरा इव कान्तानां कुन्तलेषु शशिकिरणाः ।
कर्पूरपरागरुचो भवन्ति च स्तनतटेषु विलुठन्तः ॥ ४८९ ॥

कदाचित्—

---

**यस्योदयेष्वित्यादि** । हे राजन्, यस्य चन्द्रस्योदयेषु सुकृती सरित्पतिर्माद्यति उद्वेलति । कथंभूतः सरित्पतिः । नीरसः क्षारः । पुनः जडप्रकृतिः जलभृतः । तत्र तेषु चन्द्रोदयेषु सुकृतिनः पुण्यवन्तः कथं केन प्रकारेण न माद्यन्ति न हर्षं प्राप्नुवन्ति । अपि तु माद्यन्त्येव । कथंभूताः सुकृतिनः । सरसधियः । पुनः कथंभूताः । स्मरगुरवः स्मरेण गुरवो महान्तः । श्लेषाक्षेपालंकारः ॥

**सर इवेत्यादि** । हे राजन्, अम्बरं तरुणशशिकिरणं आभाति शोभते । किमिव । सर इव सरोवरमिव । कथंभूतं सरः । विलीननीलिकं जलशैवालजलरहितम् । चान्यत् दिक्चक्रं दृश्यते विलोक्यते । कथंभूतं दृश्यते । नीरन्ध्ररोध्रधूलीविधूसरं नीरन्ध्रं निरन्तरं रोध्रस्य धूलीभिः लोध्ररजोभिः विशेषेण धूसरं पाण्डुरम् । उपमालंकारः ॥

**अभिनवेत्यादि** । हे राजन्, शशिकिरणाः कान्तानां कुन्तलेषु विलुठन्तोऽभिनवयवाङ्कुरा नवीनसितशूकोद्भेदा इव भवन्ति दृश्यन्ते । कान्तानां स्तनतटेषु विलुठन्तः शशिकिरणाः कर्पूरपरागरुचो घनसारधूलिकान्तयो भवन्ति संजायते । उपमालंकारः ॥

कदाचित् कस्मिंश्चिद्दिवसरे एणेक्षणानां मृगलोचनानां स्त्रीणां स्मरज्वरं अन्येनैव अपूर्वेणैव केनचित् अनिर्वचनीयेन कर्मणा व्यापारेण अचिकित्सं चिकित्सितवानहम् । कथम् । मुहुर्वारंवारम् । कथंभूतेन कर्मणा । आतुरजनहृदयविदितप्रतीकारशर्मणा आतुरजनस्य हृदयेन मनसा विदितं ज्ञातं प्रतीकारस्य चिकित्सायाः शर्म सौख्यं यस्मिन् कर्मणि तत्तथोक्तं तेन । कथंभूतं स्मरज्वरम् । अलङ्घनोपचारं लङ्घनरहितव्यवहारम् । पुनः कथंभूतम् । अनौषधोपयोगोदाहरं औषधरहितस्योपयोगस्य आस्वादनस्य उदाहरः कथा यस्य स्मरज्वरस्य तथा तम् । कथंभूतानामेणेक्षणानाम् । अतीवातिशयेन रणरणकेन अरतिजनकोत्कण्ठया रीणानां श्रान्तानाम् । कथंभूतोऽहम् । अवसरसुभाषितभाषाकोविदैः अवसरोचितशोभनवृत्तभाषणविशारदैः संभालितवल्लभापराधविधिः संभालितो वल्लभायाः वल्लभानां वा अपराधविधिः स्खलितविधिर्यैन दोषविधानं येन स संभालितवल्लभापराधविधिः । कथंभूतैरवसरसुभाषितभाषाकोविदैः । इत्यमुना प्रकारेण विप्रलब्धपुरंध्रीदशावेदनविशारदैः विप्रलब्धानां वियुक्तानां पुरंध्रीणां सुन्दरीणां दशायाः अवस्थायाः आवेदने कथने विशारदाश्चतुरास्तैस्तथोक्तैः । तथा चोक्तम्—'अहरहरनुरागाद्दूतिकां प्रेष्य पूर्वं सरभसमभिधाय कापि

शुष्कं कुन्तलकुड्मलैर्मुकुलितं कर्णावतंसोत्पलैः
कीर्णं केलिजलेरुहैर्विगलितं गण्डस्थलीचन्दनैः ।
तत्तत्पल्लवपेशलैश्च शयनैराम्लानमामूलत-
स्तन्व्यास्त्वद्विरहेण सांप्रतमियं भ्रातर्दशा वर्तते ॥ ४९० ॥

कण्ठे मौक्तिकदामभिः प्रदलितं दीनं करे कन्दलै-
र्वक्षोजैः क्वथितं मृणालवलयैः क्लिष्टं कपोले दलैः ।
अन्यत्किं कथयामि यत्परिजनैर्याश्चन्दनानां छटाः
कीर्यन्ते त्वरयैव ताः प्रदधते शोषं तदङ्गोष्मणा ॥ ४९१ ॥

तवागसास्याः सुतनोरवस्था विमुच्यतामेकमिदं तु वच्मि ।
श्वासोष्मणा बाष्पपयःप्रवाहः प्राप्नोति नैवाधरचुम्बनानि ॥ ४९२ ॥

---

संकेतकं वा । न मिलति खलु यस्या वल्लभो दैवयोगात्कथयति भरतस्तां नायिकां विप्रलब्धाम् ॥' इतीति किम्—

शुष्कमित्यादि । हे भ्रातः हे राजन्, तन्व्या मध्यक्षामायाः स्त्रियस्त्वद्विरहेण भवद्वियोगेन सांप्रतमिदानीं इयं प्रत्यक्षीभूता दशा वर्तते । इयं का । कुन्तलकुड्मलैः केशकलापस्थितेषद्विकसितपुष्पैः शुष्कं मलिनम् । कर्णावतंसोत्पलैः कर्णपूरीकृतदोवरकैर्मुकुलितं संकुचितम् । हे भ्रातः, केलिजलेरुहैः क्रीडाकमलैः कीर्णं विक्षिप्तम् । गण्डस्थलीचन्दनैः कपोलस्थलविलिप्तचन्दनद्रवैः विगलितं प्रस्वेदेन धौतम् । शयनैः शय्याभिराम्लानं शुष्कम् । कस्मात् । आमूलतो मूलादारभ्य । कथंभूतैः शयनैः । तत्तत्पल्लवपेशलैः तानि च तानि प्रसिद्धानि पल्लवानि तैः पेशलानि तथोक्तानि तैः । समुच्चयालंकारः ॥

कण्ठ इत्यादि । हे राजन्, ते मौक्तिकदामभिः कण्ठे प्रदलितं चूर्णीबभूव । स्फुटितमित्यर्थः । करे कन्दलैर्नवाङ्कुरैर्दीनं म्लानीं प्राप । वक्षोजैः कृत्वा मृणालवलयैः पद्मिनीकन्दसमूहैः क्वथितं क्वाथीबभूव । कपोले दलैः पत्रैः क्लिष्टं उपतापं प्राप । हे सखे, अन्यदपरमपि तव किं कथयामि यत्परिजनैः याश्चन्दनानां छटा धाराः शरीरे कीर्यन्ते ताश्चन्दनच्छटास्त्वरयैव तदङ्गोष्मणा तस्याः शरीरघर्मेण शोषं प्रदधते कुर्वते । समुच्चयालंकारः ॥

तवागसेत्यादि । हे मित्र, तव आगसापराधेन अस्यास्तव प्रियायाः सुतनोः शोभनशरीरायाः अवस्था दुःखदशा किमुच्यतां किमुच्यते । इदं तु प्रत्यक्षीभूतं एकं अद्वितीयं दुःखरूपं अहं वच्मि कथयामि । अस्याः श्वासोष्मणा बाष्पपयःप्रवाहः अश्रुजलपूरः अधरचुम्बनानि नैव प्राप्नोति । मध्ये एव शुष्यतीत्यर्थः । हेत्वलंकारः ॥

उद्वेल्लद्भुजमूलमङ्गुलिकुलव्यत्यस्तहस्तद्वयं
लीलोल्लासितलोचनं विचलितभ्रूविभ्रमत्कुन्तलम्।
साचिप्राञ्चिमुखं स्तनोन्नतिवशाद्व्यस्यद्वलीमण्डलं
किंचित्स्फारनितम्बमङ्गवलितं साकूतमेणीदृशः॥ ४९३॥

तस्याः स्मरज्वरभरात्त्वयि पान्थ दूरे
किंचिन्न वस्तु रुचिमेति यतः सखीभिः।
बिम्बाधरे धृतमपैति मृणालनालं
हस्ते च शुष्यति कृतं नलिनीप्रवालम्॥ ४९४॥

त्वत्प्रस्थितीक्षतिरतेः पथिकः प्रियायाः
प्रम्लानपल्लवदशो दशनच्छदोऽभूत्।

---

**उद्वेल्लदित्यादि।** हे मित्र, किंचिदनिर्वचनीयं एणीदृशो मृगलोचनायाः साकूतं साभिप्रायं स्वरूपं वर्तते। कीदृशम्। उद्वेल्लद्भुजमूलम् उद्वेल्लदुत्कम्पमानं भुजमूलं यस्मिन् साकूते स्वरूपे तत्तथोक्तम्। उक्तं च—'वेल्लितं प्रेङ्खिताधूतवलिताकम्पिता धुते। प्रेङ्खोलितस्तरलितो लुठितान्दोलितावपि॥' पुनः कथंभूतं स्वरूपम्। अङ्गुलिकुलव्यत्यस्तहस्तद्वयम् अङ्गुलीनां कुलं समूहस्तेन व्यत्यस्तं अन्योन्यसंहतिं प्राप्तं हस्तद्वयं यत्र तत्तथोक्तम्। पुनः कथंभूतम्। लीलोल्लासितलोचनम्। लीलया विदग्धचेष्टयोल्लासिते लोचने यत्र तत्तथोक्तम्। पुनः कथंभूतम्। विचलितभ्रूविभ्रमत्कुन्तलम् विचिलिताः पुरस्तादागता व्याघुटिता भ्रुवोर्विषये विभ्रमन्तो विविधं चलन्तः कुन्तला यत्र तत्तथोक्तम्। पुनः कथंभूतम्। साचिप्राञ्चिमुखम् साचि तिर्यक् प्राञ्चि गमनशीलं मुखं यत्र तत्तथोक्तम्। पुनः कथंभूतम्। व्यस्यद्वलीमण्डलम् व्यस्यत् विघटमानं वलीनां उदररेखाणां मण्डलं समूहो यत्र तत्तथोक्तम्। कस्मात्। स्तनोन्नतिवशात् स्तनयोरुन्नतिरुच्चत्वं तस्य वशात्। पुनः कथंभूतम्। स्फारनितम्बम् स्फारः पृथुतरो नितम्बः स्त्रीकटिपश्चाद्भागो यस्मिन् तत्तथोक्तम्। पुनः कथंभूतम्। अङ्गवलितम् शरीरावयवानां वलितं संकुचितं यत्र तत्तथोक्तम्। समुच्चयालंकारः॥

**तस्या इत्यादि।** हे पान्थ हे राजन्, त्वयि भवति सति तस्यास्तव प्रियायाः स्मरज्वरभरात् किंचिद्वस्तु रुचिं स्वादं नैति। यतो बिम्बाधरे सखीभिः धृतं मृणालनालं अपैति अपगच्छति। उत्सारितत्वात्। नलिनीप्रवालं पद्मिनीपल्लवं हस्ते कृतं सत् शुष्यति च शोषं प्राप्नोति च। समुच्चयालंकारः॥

**त्वत्प्रस्थितीत्यादि।** हे पथिक, प्रियायाः दशनच्छदः प्रम्लानपल्लवदशः शुष्कप्रवालसदृशोऽभूत्। कथंभूतायाः प्रियायाः। त्वत्प्रस्थितिक्षतरतेस्त्वत्प्रवासेन विनष्टरुचेः। हे

आपाकपाण्डुरदलोत्तरतः कपोलः
शुष्यत्सरःप्रतिनिभं नयनद्वयं च ॥ ४९५ ॥
ग्रीष्मस्थलानिलमितं श्वसितं नितान्त-
मुद्यानसारिणिसमश्रुतिरश्रुपूरः ।
आनर्तितस्तनतटास्तव कान्त कोपा-
त्कण्ठे च मारुतलवाः सरवाः प्रियायाः ॥ ४९६ ॥
भ्रातस्त्वद्विरहेण संज्वरभरादस्याः सरःसंगमे
पाथःक्काथविधेर्यदद्भुतमभूदेतत्तदाकर्ण्यताम् ।
उड्डीनं मुहुरण्डजैस्तिमिकुलैस्तीरे स्थितं दूरतः
शीर्णं शैवलिमञ्जरीभिरभितः क्षीणं क्षणाच्चाम्बुजैः ॥ ४९७ ॥
तव सुभग वियोगात्पञ्चषैरप्यहोभि-
र्मनसिजशरदीर्घाः श्वासधाराः सुदत्याः ।

---

पथिक, तव प्रियायाः कपोल आपाकपाण्डुरदलोत्तरतः पक्वपत्रवत् । शुष्को जातः । नयन-द्वयं च शुष्यत्सरःप्रतिनिभं शुष्यत्सरोवरसदृशं अभूत् । उपमादीपकालंकारः । समु-च्चयश्च ॥

**ग्रीष्मस्थलेत्यादि** । हे कान्त हे राजन्, तव प्रियायाः श्वसितं श्वासः ग्रीष्मस्थलानि-लमितम् । ज्येष्ठावाटीयमरुस्थलवालुकोच्चयसंजातवातसदृशमुष्णं संजातमित्यर्थः । हे कान्त, तव प्रियाया अश्रुपूरः नितान्तमत्यन्तं उद्यानसारिणिसमश्रुतिः उद्यानं कृत्रिमवनं तस्य सेचनसंबन्धिनी या सारिणिः कृत्रिमनदी तया समा श्रुतिः प्रवाहो यस्याश्रुपूरस्य स तथा । हे कान्त हे रूपकामदेव, तव प्रियायाः कोपात् मारुतलवाः कण्ठे सरवाः । कथंभूता वर्तन्ते । आनर्तितस्तनतटा आकम्पितकुचप्रदेशाः । उपमासमुच्चयालंकारः ॥

**भ्रातस्त्वद्विरहेणेत्यादि** । हे भ्रातः हे सखे, अस्यास्तव प्रियायाः संज्वरभरात् सं-तापातिशयात् सरःसंगमे सरोवरमध्यमज्जने सति पाथःक्काथविरोधरतिपाकविधानात् यद-भूत् तदेतदद्भुतमाश्चर्यं आकर्ण्यताम् । अण्डजैः पक्षिभिर्मुहुरुड्डीनं विहायसि गमनं कृतम् । ति-मिकुलैः दूरतो विप्रकृष्टात् तीरे स्थितम् । शैवलिमञ्जरीभिः अभितः समन्ताच्छीर्णं शतख-ण्डीबभूव । अम्बुजैश्च क्षणात् मुहूर्तात् क्षीणं म्लानिमाजग्मे । अतिशयसमुच्चयालंकारः ॥

**तव सुभगेत्यादि** । हे सुभग हे प्रियदर्शन, तव वियोगात् सुदत्याः प्रियायाः पञ्चषै-रहोभिः पञ्चभिर्वा षड्भिर्वा अहोभिः । 'वृत्तौ वाक्यसंख्याने' इत्यनेनेह डप्रत्ययः । पञ्चषैर-होभिर्निष्पन्ना मनसिजशरदीर्घा मनसिजस्तस्य शरस्तद्वत् दीर्घाः श्वासधाराः श्वाससंततयः

स्मरविजयपताकास्पर्धिनी वक्त्रकान्ति-
स्तनुरतनुधनुर्ज्यातानवं चातनोति ॥ ४९८ ॥
नाभीह्रदः स्खलति बाष्पसमागमेऽस्याः
प्रायो वलित्रयमिदं दलदलन्तरालम् ।
आवृत्तिवेपथुभरेण मुहुर्मुहुः स्या-
दुत्तारहारतरलं स्तनमण्डलं च ॥ ४९९ ॥
धन्यस्त्वं नयनाम्बुपूर विरहव्याजाद्बहिर्यन्मुहुः
प्रादुर्भूय विलासिनीषु लभसे संभोगकेलिक्रमम् ।
नेत्रे कज्जलितः कपोलफलके चित्रः सरागोऽधरे
वक्षोजे कृतसंगमस्त्रिवलिषु श्लिष्टश्च नाभिं व्रजन् ॥ ५०० ॥
नीलोत्पलं निपतदम्बुलवाम्बुदश्रि
नीहारधूसरदलद्युति चन्द्रबिम्बम् ।

---

संजाताः । पञ्चषैरेवाहोभिर्वक्त्रकान्तिः । कीदृशी संजाता । स्मरविजयपताकास्पर्धिनी स्मरस्तस्य विजयपताका त्रैलोक्यविजये सति या लब्धा पताका ध्वजा तस्याः स्पर्धिनी अनुकारिणी अनुवादिनीसदृशी । शुक्ला संजातेत्यर्थः । चान्यत् सुदत्यास्तनुः पञ्चषैरप्यहोभिः अतनुधनुर्ज्यातानवं अतनुः कन्दर्पस्तस्य धनुस्तस्य ज्या तद्वत्तानवं तनुत्वं आतनोति विस्तारयति । समुच्चयोपमालंकारः ॥

**नाभीह्रद इत्यादि** । हे सुभग, आवृत्तिवेपथुभरेण अस्यास्तव प्रियाया नाभीह्रदः स्खलति उत्पटति । कस्मिन् सति । बाष्पसमागमे अश्रुजलसमागमे सति । अस्या इदं प्रत्यक्षीभूतं वलित्रयं उदररेखानदीत्रितयं प्रायो बाहुल्येन दलदन्तरालं स्फुटन्मध्याय वति(?) । अश्रुजलेन उत्पटतीत्यर्थः । अस्यास्तव प्रियायाः स्तनमण्डलं च मुहुर्मुहुः उत्तारहारतरलं अत्युज्ज्वलमुक्ताफलमालाचपलं भवति । रूपकसमुच्चयालंकारः ॥

**धन्यस्त्वमित्यादि** । हे नयनाम्बुपूर प्रियायाः लोचनाश्रुजलप्रवाह, त्वं धन्यः पुण्यवान् । यत् यस्मात् कारणात् हृदयमध्यस्थितः सन् विरहव्याजात् मुहुर्बहिः प्रादुर्भूय विलासिनीषु स्त्रीषु संभोगकेलिक्रमं सुरतक्रीडानुक्रमं त्वं लभसे । किं कुर्वन् । नाभिं व्रजन् मध्यप्रदेशं गच्छन् । तमेव संभोगकेलिक्रमं दर्शयति—त्वं लोचनजलमिषेण नेत्रे लोचनद्वये कज्जलितः श्यामवर्णः संजातोऽसि । कपोलफलके गण्डस्थलपट्टके चित्रः पञ्चवर्णः संजातोऽसि । अधरे अधरोष्ठे सरागो रागवान् संजातोऽसि । वक्षोजे कृतसंगमः कृतालिङ्गनः संजातोऽसि । त्रिवलिषु रेखात्रयेषु श्लिष्टः आलिङ्गितः । रूपकसमुच्चयालंकारः ॥

**नीलोत्पलमित्यादि** । हे राजन्, तव विप्रियेण वियोगदुःखेन सुदत्यास्तव प्रियायाः

बिम्बीफलं च सुदृशस्तव विप्रियेण
विद्राणविद्रुमलतानवपल्लवाभम् ॥ ५०१ ॥
क्वेदं कार्श्यं क्व च मनसिजस्फारबाणप्रहारः
क्वायं तापः क्व च निरवधिर्बाष्पपूरप्रचारः ।
क्वैषा मूर्च्छा क्व च कुचपटप्रेङ्खणश्वासकल्पः
क्वासौ लज्जा क्व च मृगदृशश्चित्रमेष प्रजल्पः ॥ ५०२ ॥
बन्धुप्रार्थनतस्त्वयि स्मृतिनिशावेशात्तया मुग्धया
दत्तश्चक्षुषि यावकः कृतमिदं बिम्बाधरे कज्जलम् ।
कण्ठे काञ्चिगुणोऽर्पितः परिहितो हारो नितम्बस्थले
केयूरं चरणे धृतं विरचितं हस्ते च हिञ्जीरकम् ॥ ५०३ ॥

---

नीलोत्पलं नेत्रयुगलम् । कीदृशं जातम् । निपतदम्बुलवाम्बुदश्रि निपतन्तोऽम्बुलवा यस्मात् अम्बुदान्मेघात् स निपतदम्बुलवाम्बुदस्तस्य श्रीः शोभा यस्य नीलोत्पलस्य तत्तथोक्तम् । तथा चन्द्रविम्बं मुखम् । कीदृशं जातम् । नीहारधूसरदलद्युति नीहारेण हिमेन धूसरा तव विरहेण पाण्डुरा दलद्युतिर्यस्य तत्तथोक्तम् । हे सुभग, बिम्बीफलं ओष्ठः । कथंभूतं जातम् । विद्राणविद्रुमलतानवपल्लवाभम् विद्राणं मलिनं विद्रुमलताया यन्नवपल्लवं तस्योपमासा(स्य भा तत्सा)दृश्यं यस्य बिम्बीफलस्य तत्तथोक्तम् वचनमात्रेयं युक्तिः । कवलोपमारूपस्य कवलालंकारः । अन्यैरपि वचनमात्रोक्तिः कृता । कमलवनाम्भसि कमलं कमले कमलेऽपि च कुवलये कनकलता सापि कुमारसुभगेत्युच्यते(?) ॥

क्वेदमित्यादि । हे राजन्, मृगदृशः इदं कार्श्यं क्व वर्तते । क्व च मनसिजस्फारबाणप्रहारो वर्तते । स्फारः प्रचुरतरो बाणप्रहारः शरनिष्ठुरपातो यस्य मनसिज तथोक्तः । अयं प्रत्यक्षीभूतः तापः क्व वर्तते । क्व च बाष्पपूरप्रचारः अश्रुप्रवाहप्रतीकारः । कथंभूतो बाष्पपूरप्रचारः । निरवधिरुभयतटप्रलोपकः । एषा प्रत्यक्षीभूता मूर्च्छा अचैतन्यं नष्टचेष्टता क्व वर्तते । क्व च कुचपटप्रेङ्खणः कञ्चुकम्पनकारी श्वासकल्पः श्वासविधानं वर्तते । असौ प्रत्यक्षीभूता लज्जा मन्दाक्षं क्व वर्तते । क्व च एष प्रजल्पो निर्लज्जतया प्रलपनं क्व वा । एतत्सर्वं चित्रं वर्तते । विषमोपमालंकारः ॥

बन्धुप्रार्थनत इत्यादि । हे राजन् हे सखे, तया बन्धुप्रार्थनतो यावकोऽलक्तको दत्तः अर्पितः । कस्मिन् । चक्षुषि । कथंभूतया तया । मुग्धया अविज्ञातयथावत्स्वरूपया कोमलाङ्गया । कस्माद्दत्तः । किं तव विलोकनतोऽयं चक्षुषि को दीयतां तत्कारणगर्भितं विशेषणमाह—त्वयि विषये स्मृतिनिशावेशात् या स्मृतिः सैव निशा तस्या आवेशात् प्रवेशात् यो यावकः पादयोर्दीयते स चक्षुषि दत्त इत्यर्थः । अपरं किं कृतं तया । इदं प्रत्यक्षीभूतं

रम्भास्तम्भौ ह्रदतटभुवौ प्रोल्लसन्नालमूलं
कन्दद्वन्द्वं किसलयमदः प्रस्फुटत्कुड्मलश्रि।
नीलाब्जे चातनुदलचयोदञ्चिते देह एव
प्रायस्तापस्तदपि च सखे कोऽप्यपूर्वस्तरुण्याः॥ ५०४॥

निद्रा सपत्नीव न दृष्टिमार्गमायाति तस्याः क्षणदाक्षणेऽपि।
सखीजने चोपनतेऽप्युपान्ते शून्यस्थिताया इव चेष्टितानि॥ ५०५॥

कामस्यैतत्परमिह रहो यन्मनःप्रातिकूल्यं
तस्मादेष ज्वलति नितरामङ्गमाधुर्यहेतुः।
कामं कान्तास्तदनु रसिकाः प्रीतये कस्य न स्यु-
स्तत्रास्वादः क इव हि सखे या न पक्का मृणाल्यः॥ ५०६॥

---

कज्जलं नेत्राञ्जनं बिम्बाधरे कृतम्। तथा काञ्चीगुणो मेखलागुणः कण्ठे अर्पितः। पुनश्च किं कृतम्। हारो नितम्बस्थले परिहितः। पुनः किं कृतम्। केयूरं चरणे धृतम्। झिञ्जीरकं नूपुरं च हस्ते विरचितम्। समुच्चयालंकारः॥

रम्भास्तम्भावित्यादि। हे सखे हे मित्र, तरुण्यास्तव प्रियायाः कोऽपि अनिर्वचनीयोऽपूर्वः तापस्तदपि वर्तते। कथम्। प्रायो बाहुल्येन। तदपि किम्। रम्भास्तम्भौ ऊरू ह्रदतटभुवौ नाभितटसंजातौ यद्यपि वर्तेते, तथापि तापो न गतः। कन्दद्वन्द्वं स्तनयुगलम्। कथंभूतम्। प्रोल्लसन्नालमूलं शोभायमानवलित्रयम्। अदः एतत् किसलयं चरणपल्लवम्। कथंभूतम्। प्रस्फुटत्कुड्मलश्रि प्रस्फुटन्ती विकसन्ती कुड्मलश्रीः स्मितमुकुलशोभा यत्र चरणपल्लवे तत्तथोक्तम्। नीलाब्जे च नीलोत्पले। लोचनयोर्वचनमिदम्। कथंभूते नीलाब्जे। अतनुदलचयोदञ्चिते अतनु महान् दलचयः पत्रसमूहस्तेन उदञ्चिते उपरिधृते ययोर्नीलाब्जयोस्ते तथोक्ते। अलकजालस्य वचनमिदम्। एतत्सर्वं तरुण्या देह एव च सुप्तै(?) वर्तते। तथापि तापो न गतः। उपमारूपकसमुच्चयालंकारः॥

निद्रेत्यादि। हे राजन्, तस्या निद्रा स्वापो दृष्टिमार्गं लोचनगोचरं नायाति केव। सपत्नीव कृतसापत्न्यकेव। अमूढा अतिविचित्रापरनामद्वया यथा सपत्नी दृशोर्गोचरं नागच्छति। कस्मिन् काले। क्षणदाक्षणेऽपि रात्र्यवसरे। आस्तां तावत् दिवसक्षणे। तस्याः सखीजने आलीसमूहे उपान्ते उपनते आगतेऽपि सति शून्यस्थिताया इव ग्रहगृहीताया इव चेष्टितानि कर्तव्यानि वर्तन्ते। उपमालंकारः॥

कामस्येत्यादि। हे सखे, कामस्य एतत् परं निश्चयेन इह अस्मिन् संसारे रहो गोप्यतत्त्वं वर्तते। एतत् किम्। यत् मनःप्रातिकूल्यं चित्तवाञ्छितस्य वैपरीत्यं तस्मात् मनःप्रातिकूल्यात्। किं भवति। एष प्रत्यक्षीभूतः कामो नितरामतिशयेन ज्वलति उद्दीपीभवति। कामः कथंभूतः। अङ्गमाधुर्यहेतुः अङ्गस्य शरीरस्य माधुर्यहेतुः सुकुमारताकारणम्। तदनु

बाष्पोद्गतिः प्रविरला नयनान्तराले
नासान्तरे च मरुतः स्तिमितप्रचारः।
तापः प्रशाम्यति सुधाचमनादिवाङ्गे
कान्तागमे विरहिणीषु मृगीक्षणासु ॥ ५०७ ॥

प्रेमप्रदानसलिलं नयनाम्बुधाराः
श्वासाः समागमनसंकथनाग्रदूताः।
मौनं पुनर्भवति केलिकृतौ सचाटु
कान्ते नते कलहितासु विलासिनीषु ॥ ५०८ ॥

नेत्रान्तर्गतबाष्पबिन्दु विवशश्वासानिलान्दोलितं
मन्दस्पन्दरदच्छदं प्रविदलन्मानग्रहग्रन्थि च।

---

तत्पश्चात् कामज्वलनादनन्तरं कान्ताः स्त्रियः कामं यथेष्टं रसिका रागवल्लो भवन्ति। रागवल्यः सत्यः कस्य पुरुषस्य प्रीतये प्रेम्णे न स्युर्न भवेयुः। अपि तु सर्वस्यापि प्रीतये भवेयुरित्यर्थः। हे सखे, तत्रत्यासु रसिकासु स्त्रीषु विषये क इव कीदृशः आस्वादो वर्तते। याः पक्का मृणाल्यः पाकमागता गोस्तन्यो न भवन्ति। कथम्। हि। स्फुटमिति शेषः। हेतूपमालंकारः॥

**बाष्पोद्गतिरित्यादि**। हे सखे, विरहिणीषु विप्रलब्धासु मृगीक्षणासु स्त्रीषु कान्तागमे भर्तुर्मेलापके। किं भवति, तल्लक्षणमाह—नयनान्तराले लोचनयोर्मध्ये बाष्पोद्गतिः अश्रुजलप्रादुर्भावः प्रविरला अल्पा भवति। नासान्तरे नासिकामध्ये मरुतो वायवः स्तिमितप्रचाराः स्तोका भवन्ति शनैरागच्छन्ति। अङ्गे शरीरे तापः प्रशाम्यति उपशमं याति। कस्मात्। सुधाचमनादिव अमृतपानादिव। उपमासमुच्चयालंकारः॥

**प्रेमप्रदानेत्यादि**। हे राजन्, कलहितासु कोपं प्रापितासु विलासिनीषु कान्ते भर्तरि नते नम्रीभूते सति। किं भवति। नयनाम्बुधारा प्रेमधाराः प्रेमप्रदानसलिलं स्नेहार्पणजलं भवति। 'हे भर्तः, अहं ते तुभ्यं प्रेमाणं दास्यामि' इति प्रतिज्ञाय हस्ते उदकपातो भवति, यथा ब्राह्मणेभ्य उदकधारापूर्वं किमपि दीयत इति भावः। श्वासाः समागमनसंकथनं समागमनस्य यत्संकथनं समीचीनवचनं 'समागच्छन्तु स्वामिनः' इति वचनस्याग्रदूताः पूर्वदूता भवन्ति। पुनः पश्चात् केलिकृतौ संभोगक्रीडायां मौनं भवति न निर्भर्त्सयन्ति। कथम्। सचाटु मिथ्यास्तुतिहतं यथा भवत्येवम्। रूपकालंकारः॥

**नेत्रान्तरित्यादि**। हे सखे, आलिङ्ग्य कान्तास्यं नेत्रान्तर्गतबाष्पबिन्दु नेत्रयोरन्तर्गता मध्यस्थिता बाष्पस्य आनन्दाश्रुजलस्य बिन्दवो यत्र तत्तथोक्तम्। पुनः कथंभूतम्। विवशश्वासानिलान्दोलितम्। विवशाः परवशाः स्ववशा वा ये श्वासास्तेषां अनिलेन आन्दोलितं कम्पितम्। पुनः कथंभूतम्। मन्दस्पन्दरच्छदम् मन्दो मनाक् स्पन्दश्चलनं विस्फुरणं रद-

त्रुट्यत्तापदशं स्वदोषविगमाद्भूयः प्रसीदन्मन-
श्चुम्ब्यालिङ्ग्य निषेधवाग्विधिकरं कान्तास्यमाकोपितम् ॥५०९॥

सरलमलकजालं नेत्रयोर्नाञ्जनश्री-
रधरदलमरागं पत्रशून्यः कपोलः ।
श्रवसि च न वतंसः कामिनीनां रतान्ते
तदपि वदनदेशे कान्तिरन्यैव काचित् ॥ ५१० ॥

अलकवलयवासैर्नाकुलं भालमेत-
द्दशनवसनकान्तिर्नाङ्कितालक्तकेन ।
उरसि न कुचमुद्रा नाङ्गदाङ्कश्च कण्ठे
प्रणयकुपितकान्तासंगमे कामुकानाम् ॥ ५११ ॥

इति विप्रलब्धपुरंध्रीदशावेदनविशारदैरवसरसुभाषितभाषाकोविदैः संभालितवल्लभापराधविधिरन्येनैव केनचिदातुरजनहृदयविदितप्रतीकारशर्मणा कर्मणा मुहुरलङ्घनोपचारमनौषधोपयोगोदाहारमतीव रणरणकरीणानामेणेक्षणानां स्मरज्वरमचिकित्सम् ॥

---

च्छद ओष्ठे यस्मिन् कान्तास्ये तत्तथोक्तम् । पुनः कथंभूतम् । प्रविदलन्मानग्रहग्रन्थि मानोऽभिमानः स एव ग्रहः पिशाचस्तस्य ग्रन्थिर्बन्धनविशेषः मानग्रहग्रन्थिः प्रविदलत् शतखण्डीभवत् मानग्रहग्रन्थि यस्मिन् कान्तास्ये तत्तथोक्तम् । पुनः कथंभूतम् । त्रुट्यत्तापदशम् त्रुट्यन्ती शतखण्डीभवन्ती तापस्य दशा अवस्था यस्मिन् तत्तथोक्तम् ।..............
..................................................। पुनः कथंभूतम् । आकोपितं ईषत्कोपसहितम् । रूपकालंकारः ॥

सरलमित्यादि । हे राजन्, कामिनीनां रतान्ते संभोगक्रीडापर्यन्ते तदपि तथापि वदनदेशे मुखमण्डले काचिदपूर्वा अन्यैव अनिर्वचनीया कान्तिर्भवति । तदपि किम् । यद्यपि अलकजालं सरलं वर्तते वक्रतां मुञ्चति । नेत्रयोरञ्जनश्रीर्मषेः शोभा न वर्तते । अधरदलम् अरागं पीताधरत्वात् । कपोलः पत्रशून्यो भग्नपत्रावलीकः । श्रवसि कर्णे वतंसः कर्णपूरो न वर्तते । समुच्चयालंकारः ॥

अलकेत्यादि । हे राजन्, प्रणयकुपितकान्तासंगमे प्रेमक्रुद्धस्त्रीसंयोगे कामुकानां कामिनां यत् भालं ललाटपट्टः अलकवलयवासैराकुलं न वर्तते न भवति । दशनवसनकान्तिः ओष्ठशोभा अलक्तकेन अङ्किता सहिता न भवति । उरसि वक्षसि कुचमुद्रा स्तनपदं न वर्तते । कण्ठे ग्रीवायां अङ्गदाङ्कः बाहुरक्षपदं न भवति । दीपकालंकारः ॥

उन्मीलद्भुजगेन्द्रसद्मसुभगान्याविर्भवद्भूपति-
श्रीचिह्नानि जिनेक्षणागतसुरश्रेणीविमानानि च ।
पूजावर्जनसज्जदुन्दुभिरवोद्यावप्रमोदोदया-
दित्थं त्रीण्यपि यस्य जन्मनि जगन्त्यासन्स वोऽव्याज्जिनः ॥ ५१२
लोकवित्त्वे कवित्वे वा यदि चातुर्यचञ्चवः ।
सोमदेवकवेः सूक्तीः समभ्यस्यन्तु साधवः ॥ ५१३ ॥

इति सकलतार्किकलोकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योनवद्यगद्यपद्य-विद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महाकाव्ये राजलक्ष्मीविनोदनो नाम तृतीय आश्वासः समाप्तः ।

---

**उन्मीलदित्यादि** । स जगत्प्रसिद्धो जिनः श्रीमद्भगवदर्हत्सर्वज्ञवीतरागः वो युष्मान् अव्यात् रक्षतु । स कः । यस्य तीर्थंकरस्य परमदेवस्य जन्मनि जन्मकल्याणे··· पूजावर्जनसज्जदुन्दुभयः पटहास्तेषां रवाणां उद्याव उत्सवस्तस्य प्रमोदोदयः प्रादुर्भावस्तस्मात् इत्थं उक्तप्रकारेण त्रीण्यपि जगन्ति लोकाः आसन् बभूवुः । कथंभूतानि जगन्ति । उन्मीलद्भुजगेन्द्रसद्मसुभगानि उन्मीलन्ति पातालात् प्रादुर्भवन्ति यानि भुजगेन्द्रसद्मानि तैः सुभगानि । पुनः कथंभूतानि जगन्ति । आविर्भवद्भूपतिश्रीचिह्नानि आविर्भवन्ति मर्त्यलोके प्रादुर्भवन्ति यानि भूपतीनां चक्रवर्त्यादिनरेन्द्राणां श्रीणां लक्ष्मीणां चिह्नानि ध्वजच्छत्रचामरचन्द्रोपकादीनि येषु जगत्सु तानि तथोक्तानि। पुनः कथंभूतानि जगन्ति । जिनेक्षणागतसुरश्रेणीविमानानि जिनस्य वृषभादेरीक्षणमवलोकनं तदर्थमागता उपनता या सुरश्रेण्यः सुरसमूहास्तासां विमानानि येषु जगत्सु तानि तथोक्तानि । अतिशयसमुच्चयालंकारः ॥

**लोकवित्त्वे इत्यादि** । साधवो विद्वांसो यदि चेत् लोकवित्त्वे लोकव्यवहारपरिज्ञाने वा अथ वा कवित्वे कवीश्वरत्वे चातुर्यचञ्चवः चातुर्यनिपुणाः प्रवीणा वर्तन्ते । तर्हि श्रीसोमदेवाचार्यस्य सूक्तीः सुवचनानि समभ्यस्यन्तु अनुशीलयन्त्विति भद्रम् । समुच्चयालंकारः ॥

इति सकलतार्किकलोकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योनवद्यगद्यपद्यविद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महाकाव्ये राजलक्ष्मीविनोदनो नाम तृतीय आश्वासः समाप्त इति । अस्य व्याख्या पूर्ववत् ज्ञातव्या ॥

इति श्रीपद्मनन्दिदेवेन्द्रकीर्तिविद्यानन्दिमल्लिभूषणाम्नायेन भट्टारकश्रीमल्लिभूषणगुरुपरमाभीष्टगुरुभ्रात्रा गुर्जरदेशसिंहासनभट्टारकश्रीलक्ष्मीचन्द्रकाभिमतेन मालवदेशभट्टारकश्रीसिंहनन्दिप्रार्थनया यतिश्रीसिद्धान्तसागरव्याख्याकृतिनिमित्तं नवनवतिमहामहावादिस्याद्वादलब्धविजयेन तर्कव्याकरणच्छन्दोऽलंकारसिद्धान्तसाहित्यादिशास्त्रनिपुणमतिना प्राकृतव्याकरणाद्यनेकशास्त्रचञ्चुना सूरिश्रीश्रुतसागरेण विरचितायां यशस्तिलकचन्द्रिकाभिधानायां यशोधरमहाराजचरितचम्पूमहाकाव्यटीकायां यशोधरमहाराजराजलक्ष्मीविनोदवर्णनं नाम तृतीयाश्वासचन्द्रिका परिसमाप्ता इति शुभम् ॥

निर्णयसागरेऽङ्कितानि विक्रेयसंस्कृतनूतनपुस्तकानि ।

## तत्त्वप्रदीपिका—चित्सुखी ।

श्रीमच्चित्सुखाचार्यमुनिविरचिता । परमहंसप्रत्यग्रूपभगवत्प्रणीतया नयनप्रसादिनीसमाख्यया व्याख्यया सहिता ।

मूल्यं ३ रु., मार्ग. ६ आ.

---

## ब्रह्मसूत्रशाङ्करभाष्यम् ।

श्रीमदप्पयदीक्षितविरचितपरिमलोपबृंहितश्रीमदमलानन्दसरस्वती-प्रणीतकल्पतरुव्याख्यायुतश्रीमद्वाचस्पतिमिश्रकृत-भामतीव्याख्याविलसितम् ।

( चतुःसूत्रीभागः । )

मूल्यं १॥ रु., मार्ग. ३ आ.

---

## शास्त्रदीपिका ।

सर्वतन्त्रस्वतन्त्रश्रीमत्पार्थसारथिमिश्रप्रणीता ।

( प्रथमस्तर्कपादः । )

प्रत्यधिकरणविभक्तजैमिनीयन्यायमालायुतः ।

[illegible]कृष्णप्रणीतयुक्तिस्नेहप्रपूरणी-सिद्धान्तचन्द्रिकायुत-[illegible]सिद्धान्तचन्द्रिकागूढार्थविवरणा[illegible]

मूल्यं १॥ रु., मार्ग., ३ आ.

निर्णयसागरयन्त्राल[illegible]
तुकाराम ज[illegible]
काळबादे[illegible]